# THE MAHÁBHÁRATA,

## AN EPIC POEM,

WRITTEN BY

THE CELEBRATED VEDA VYÁSA RISHI.



## VOL. I.

CONTAINING

PART I.—THE ÁDI PARVA.
II.—THE SABHA' PARVA.
III.—THE VANA PARVA.

EDITED BY

THE LEARNED PANDITS ATTACHED TO THE ESTABLISHMENT OF THE EDUCATION COMMITTEE.

PRINTED UNDER THE AUTHORITY OF THE COMMITTEE OF PUBLIC INSTRUCTION.

Calcutta:

PRINTED AT THE EDUCATION COMMITTEE'S PRESS, CIRCULAR ROAD.

1834.



# श्रीमहाभारतं



श्रीमन्महर्षिवेदव्यासविरचिता

श्रीमन्महाभारतसंहिता।



आदि सभा वन पर्व्वघटितः।



प्रथमखण्डः।



साधारणविद्यावृद्ध्यर्थकश्रीयुक्तसमाजाधिपतीनामनुमत्यनुसारेण

तत्सम्बन्धीयपण्डितैः संशोधितः।



कलिकाताराजधान्यां।

एडुकेशनाख्यमुद्रायन्त्रालये।

मुद्रितः



शकाब्दाः १७५६।

# श्रीमहाभारतं

## ॥ आदिपर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्। देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्।

लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये। शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे।

सुखासीनानभ्यगच्छद्ब्रह्मर्षीन् संशितव्रतान्। विनयावनतो भूत्वा कदाचित् सूतनन्दनः।

तमाश्रममनुप्राप्तं नैमिषारण्यवासिनां। चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः।

अभिवाद्य मुनींस्तांस्तु सर्व्वानेव कृताञ्जलिः। अपृच्छत् स तपोवृद्धिं सद्भिश्चैवाभिपूजितः।

अथ तेषूपविष्टेषु सर्व्वेष्वेव तपस्विषु। निर्दिष्टमासनं भेजे विनयाल्लोमहर्षणिः। ५

सुखासीनं ततस्तन्तु विश्रान्तमुपलक्ष्य च। अथापृच्छदृषिस्तत्र कश्चित्प्रस्तावयन् कथाः।

कुत आगम्यते सौते क्व चायं विहृतस्त्वया। कालः कमलपत्राक्ष शंसैतत्पृच्छतो मम।

एवं पृष्टोऽब्रवीत्सम्यग्यथावल्लौमहर्षणिः। वाक्यं वचनसम्पन्नस्तेषाञ्च चरिताश्रयं।

तस्मिन्सदसि विस्तीर्णे मुनीनां भावितात्मनां ॥ सौतिरुवाच ॥ जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः।

समीपे पार्थिवेन्द्रस्य सम्यक् पारीक्षितस्य च। कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः। १०

कथिताश्चापि विधिवद्या वैशम्पायनेन वै। श्रुत्वाहं ता विचित्रार्था महाभारतसंश्रिताः।

बहूनि सम्परिक्रम्य तीर्थान्यायतनानि च। समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितं।

गतवानस्मि तं देशं युद्धं यत्राभवत्पुरा। कुरूणां पाण्डवानाञ्च सर्व्वेषाञ्च महीक्षितां।

दिदृक्षुरागतस्तस्मात्समीपं भवतामिह। आयुष्मन्तः सर्व्व एव ब्रह्मभूता हि मे मताः।

अस्मिन् यज्ञे महाभागाः सूर्य्यपावकवर्च्चसः। कृताभिषेकाः शुचयः कृतजप्याहुताग्नयः। भवन्त आसने स्वस्था ब्रवीमि किमहं द्विजाः। ११

पुराणसंश्रिताः पुण्याः कथा धर्म्मार्थसंश्रिताः। इति वृत्तं नरेन्द्राणामृषीणाञ्च महात्मनां।
॥ ऋषय ऊचुः॥ द्वैपायनेन यत् प्रोक्तं पुराणं परमर्षिणा। सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितं।
तस्याख्यानवरिष्ठस्य विचित्रपदपर्व्वणः। सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च।
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुतां। संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहितां।
जनमेजयस्य यां राज्ञो वैशम्पायन उक्तवान्। यथावत् स ऋषिस्तुष्ट्या सत्रे द्वैपायनाज्ञया। २०
वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुतकर्म्मणः। संहितां श्रोतुमिच्छामः पुण्यां पापभयापहां।
॥ सौतिरुवाच॥ आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतं। ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनं।
असच्च सदसच्चैव यद्विश्वं सदसत्परं। परावराणां स्रष्टारं पुराणं परमव्ययं।
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिं। नमस्कृत्य हृषीकेशं चराचरगुरुं हरिं।
महर्षेः पूजितस्येह सर्व्वलोकैर्महात्मनः। प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्म्मणः। २५
आचख्युः कवयः केचित् सम्प्रत्याचक्षते परे। आख्यास्यन्ति तथैवान्ये इतिहासमिमं भुवि।
इदन्तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितं। विस्तरैश्च समासैश्च धार्य्यते यद्द्विजातिभिः।
अलंकृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः। छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियं।
निष्प्रभेऽस्मिन्निरालोके सर्व्वतस्तमसावृते। बृहदण्डमभूदेकं प्रजानां बीजमव्ययं।
युगस्यादौ निमित्तं तन्महद्दिव्यं प्रचक्षते। यस्मिंस्संश्रूयते सत्यं ज्योतिर्ब्रह्म सनातनं। ३०
अद्भुतं चाप्यचिन्त्यञ्च सर्व्वत्र समतां गतं। अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकं।
यस्मात्पितामहो जज्ञे प्रभुरेकः प्रजापतिः। ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ।
प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्त वै। ततः प्रजानां पतयः प्राभवन्नेकविंशतिः।
पुरुषश्चाप्रमेयात्मा यं सर्व्वे ऋषयो विदुः। विश्वेदेवास्तथादित्या वसवोऽथाश्विनावपि।
यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा। ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः। ३५
राजर्षयश्च बहवः सर्व्वैः समुदिता गुणैः। आपो द्यौः पृथिवी वायुरन्तरीक्षं दिशस्तथा।
संवत्सरर्त्तवो मासाः पक्षाहोरात्रयः क्रमात्। यच्चान्यदपि तत्सर्व्वं संभूतं लोकसाक्षिकं।
यदिदं दृश्यते किञ्चिद्भूतं स्थावरजङ्गमं। पुनः संक्षिप्यते सर्व्वं जगत्प्राप्ते युगक्षये।
यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु।
एवमेतदनाद्यन्तं भूतसंहारकारकं। अनादिनिधनं लोके चक्रं सम्परिवर्त्तते। ४०
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च। त्रयस्त्रिंशच्च देवानां सृष्टिः संक्षेपलक्षणा।
दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः। सविता स ऋचीकोऽर्को भानुराशावहो रविः।
पुरा विवस्वतः सर्व्वे मह्यस्तेषां तथावरः। देवभ्राट् तनयस्तस्य सुभ्राडिति ततः स्मृतः।
सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः। दशज्योतिः शतज्योतिः सहस्रज्योतिरेव च।
दश पुत्रसहस्राणि दशज्योतेर्महात्मनः। ततो दशगुणाश्चान्ये शतज्योतेरिहात्मजाः। ४५

भूयस्ततो दशगुणाः सहस्रज्योतिषः सुताः। तेभ्योऽयं कुरुवंशश्च यदूनां भरतस्य च।
ययातीक्ष्वाकुवंशश्च राजर्षीणाञ्च सर्व्वशः। सम्भूता बहवो वंशा भूतसर्गाः सविस्तराः।
भूतस्थानानि सर्व्वाणि रहस्यं त्रिविधञ्च यत्। वेदा योगः सविज्ञानो धर्म्मोऽर्थः काम एव च।
धर्म्मकामार्थयुक्तानि शास्त्राणि विविधानि च। लोकयात्राविधानञ्च सर्व्वं तद्दृष्टवानृषिः।
इतिहासाः सवैयाख्या विविधाः श्रुतयोऽपि च। इह सर्व्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणं। ४०
विस्तीर्य्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्। इष्टं हि विदुषां लोके समासव्यासधारणं।
मन्वादि भारतं केचिदास्तीकादि तथापरे। तथोपरिचराद्यन्ये विप्राः सम्यगधीयते।
विविधं संहिताज्ञानं दीपयन्ति मनीषिणः। व्याख्यातुं कुशलाः केचिद्ग्रन्थान् धारयितुं परे।
तपसा ब्रह्मचर्य्येण व्यस्य वेदं सनातनं। इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः।
पराशरात्मजो विद्वान् ब्रह्मर्षिः संशितव्रतः। तदाख्यानवरिष्ठं स कृत्वा द्वैपायनः प्रभुः। ४५
कथमध्यापयानीह शिष्यानित्यन्वचिन्तयत्। तस्य तच्चिन्तितं ज्ञात्वा ऋषेर्द्वैपायनस्य च।
तत्राजगाम भगवान् ब्रह्मा लोकगुरुः स्वयं। प्रीत्यर्थं तस्य चैवर्षेर्लोकानां हितकाम्यया।
त दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः। आसनं कल्पयामास सर्व्वैर्मुनिगणैर्वृतः।
हिरण्यगर्भमासीनं तस्मिंस्तु परमासने। परिवृत्यासनाभ्याशे वासवेयः स्थितोऽभवत्।
अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना। निषसादासनाभ्याशे प्रीयमाणः शुचिस्मितः। ५०
उवाच स महातेजा ब्रह्माणं परमेष्ठिनं। कृतं मयेदं भगवन् काव्यं परमपूजितं।
ब्रह्मन्वेदरहस्यञ्च यच्चान्यत् स्थापितं मया। सांगोपनिषदाञ्चैव वेदानां विस्तरक्रियाः।
इतिहासपुराणानामुन्मेषं निर्म्मितञ्च यत्। भूतं भव्यं भविष्यञ्च त्रिविधं कालसंज्ञितं।
जरामृत्युभयव्याधिभावाभावविनिश्चयः। विविधस्य च धर्म्मस्य ह्याश्रमाणाञ्च लक्षणं।
चातुर्व्वर्ण्यविधानञ्च पुराणानाञ्च कृत्स्नशः। तपसो ब्रह्मचर्य्यस्य पृथिव्याश्चन्द्रसूर्य्ययोः। ५५
ग्रहनक्षत्रताराणां प्रमाणञ्च युगैः सह। ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च।
न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा। हेतुनैव समं जन्म दिव्यमानुषसंज्ञितं।
तीर्थानाञ्चैव पुण्यानां देशानाञ्चैव कीर्त्तनं। नदीनां पर्व्वतानाञ्च वनानां सागरस्य च।
पुराणां चैव दिव्यानां कल्पानां युद्धकौशलं। वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः।
यच्चापि सर्व्वगं वस्तु तच्चैव प्रतिपादितं। परं न लेखकः कश्चिदेतस्य भुवि विद्यते। ६०
॥ ब्रह्मोवाच ॥ तपोविशिष्टादपि वै विशिष्टात् मुनिसञ्चयात्। मन्ये श्रेष्ठतरं त्वां वै रहस्यज्ञानवेदनात्।
जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीं। त्वया च काव्यमित्युक्तं तस्मात्काव्यं भविष्यति।
अस्य काव्यस्य कवयो न समर्था विशेषणे। विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः।
काव्यस्य लेखनार्थाय गणेशः स्मर्य्यतां मुने ॥ सौतिरुवाच ॥ एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनं।
ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः। स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः। ६५

तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः । पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ ।
लेखको भारतस्यास्य भव त्वं गणनायक । मयैव प्रोच्यमानस्य मनसा कल्पितस्य च ।
श्रुत्वैतत्प्राह विघ्नेशो यदि मे लेखनी क्षणं । लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहं ।
व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख क्वचित् । ओमित्युक्त्वा गणेशोऽपि बभूव किल लेखकः ।
ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् । यस्मिन्प्रतिज्ञया प्राह मुनिर्द्वैपायनस्त्विदं । ८०
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च । अहं वेद्मि शुको वेत्ति सञ्जयो वेत्ति वा न वा ।
तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने । भेत्तुं न शक्यतेऽर्थस्य गूढत्वात्प्रश्रितस्य च ।
सर्व्वज्ञोऽपि गणेशो यत् क्षणमास्ते विचारयन् । तावच्चकार व्यासोऽपि श्लोकानन्यान्बहूनपि ।
अज्ञानतिमिरान्धस्य लोकस्य तु विचेष्टतः । ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकं ।
धर्म्मार्थकाममोक्षार्थैः समासव्यासकीर्त्तनैः । तथा भारतसूर्य्येण नृणां विनिहतं तमः । ८५
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः । नृबुद्धिकैरवाणाञ्च कृतमेतत्प्रकाशनं ।
इतिहासप्रदीपेन मोहावरणघातिना । लोकगर्भगृहं कृत्स्नं यथावत्संप्रकाशितं ।
संग्रहाध्यायबीजो वै पौलोमास्तीकमूलवान् । सम्भवस्कन्धविस्तारः सभारण्यविटङ्कवान् ।
अरणीपर्व्वरूपाढ्यो विराटोद्योगसारवान् । भीष्मपर्व्वमहाशाखो द्रोणपर्व्वपलाशवान् ।
कर्णपर्व्वसितैः पुष्पैः शल्यपर्व्वसुगन्धिभिः । स्त्रीपर्व्वैषीकविश्रामः शान्तिपर्व्वमहाफलः । ९०
अश्वमेधामृतरसस्त्वाश्रमस्थानसंश्रयः । मौषलः श्रुतिसंक्षेपः शिष्टद्विजनिषेवितः ।
सर्व्वेषां कविमुख्यानामुपजीव्यो भविष्यति । पर्ज्जन्य इव भूतानामक्षयो भारतद्रुमः ।
॥ सूत उवाच ॥ तस्य वृक्षस्य वक्ष्यामि शश्वत्पुष्पफलोदयं । स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि ।
मातुर्नियोगाद्धर्म्मात्मा गांगेयस्य च धीमतः । क्षेत्रे विचित्रवीर्य्यस्य कृष्णद्वैपायनः पुरा । त्रीनग्नीनिव कौरव्यान् जनयामास वीर्य्यवान् ।
उत्पाद्य धृतराष्ट्रञ्च पाण्डुं विदुरमेव च । जगाम तपसे धीमान् पुनरेवाश्रमं प्रति । ९५
तेषु जातेषु वृद्धेषु गतेषु परमां गतिं । अब्रवीद्भारतं लोके मानुषेऽस्मिन्महानृषिः ।
जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः । शशास शिष्यमासीनं वैशम्पायनमन्तिके ।
स सदस्यैः सहासीनः श्रावयामास भारतं । कर्म्मान्तरेषु यज्ञस्य चोद्यमानः पुनःपुनः ।
विस्तरं कुरुवंशस्य गांधार्य्या धर्म्मशीलतां । क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यक् द्वैपायनोऽब्रवीत् ।
वासुदेवस्य माहात्म्यं पाण्डवानाञ्च सत्यतां । दुर्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः । १००
चतुर्व्विंशतिसाहस्रीं चक्रे भारतसंहितां । उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ।
ततोऽध्यर्द्धशतं भूयः संक्षेपं कृतवानृषिः । अनुक्रमणिकाध्यायं वृत्तान्तानां सपर्व्वणां ।
इदं द्वैपायनः पूर्व्वं पुत्रमध्यापयत् शुकं । ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ विभुः ।
षष्टिं शतसहस्राणि चकारान्यां स संहितां । त्रिंशच्छतसहस्रञ्च देवलोके प्रतिष्ठितं ।

पितृलोके पञ्चदश प्रोक्तं गन्धर्वेषु चतुर्दश । एकं शतसहस्रन्तु मानुषेषु प्रतिष्ठितं । १०५

नारदोऽश्रावयद्देवानसितो देवलः पितॄन् । गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ।

अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान् । शिष्यो व्यासस्य धर्मात्मा सर्ववेदविदाम्वरः । एकं शतसहस्रन्तु मयोक्तं वै निबोधत ।

दुर्योधनो मन्युमयो महाद्रुमः स्कन्धः कर्णः शकुनिस्तस्य शाखाः । दुःशासनः फलपुष्पे समृद्धे मूलं राजा धृतराष्ट्रोऽमनीषी ।

युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः । माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ।

पाण्डुर्जित्वा बहून् देशान् बुद्ध्या विक्रमणेन च । अरण्ये मृगयाशीलो न्यवसन्मुनिभिः सह । ११०

मृगव्यवायनिधनात् कृच्छ्रां प्राप स आपदं । जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ।

मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति । धर्मस्य वायोः शक्रस्य देवयोश्च तथाऽश्विनोः ।

तापसैः सह संवृद्धा मातृभ्यां परिरक्षिताः । मेध्यारण्येषु पुण्येषु महतामाश्रमेषु च ।

ऋषिभिर्यत्तदा नीता धार्त्तराष्ट्रान्प्रति स्वयं । शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः ।

पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः । पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः । ११५

तांस्तैर्निवेदितान् दृष्ट्वा पाण्डवान् कौरवास्तदा । शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशं ।

आहुः केचिन्न तस्यैते तस्यैत इति चापरे । यदा चिरमृतः पाण्डुः कथन्तस्येति चापरे ।

स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम सन्ततिं । उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ।

तस्मिन्नुपरते शब्दे दिशः सर्वा निनादयन् । अन्तर्हितानां भूतानां निःस्वनस्तुमुलोऽभवत् ।

पुष्पवृष्टिः शुभा गन्धाः शङ्खदुन्दुभिनिस्वनाः । आसन् प्रवेशे पार्थानां तदद्भुतमिवाभवत् । १२०

तत्प्रीत्या चैव सर्वेषां पौराणां हर्षसम्भवः । शब्द आसीन्महांस्तत्र दिवस्पृक्कीर्त्तिवर्द्धनः ।

तेऽधीत्य निखिलान्वेदाञ्छास्त्राणि विविधानि च । न्यवसन्पाण्डवास्तत्र पूजिता अकुतोभयाः ।

युधिष्ठिरस्य शौचेन प्रीताः प्रकृतयोऽभवन् । धृत्या च भीमसेनस्य विक्रमेणार्जुनस्य च ।

गुरुशुश्रूषया कुन्त्या यमयोर्विनयेन च । तुतोष लोकः सकलस्तेषां शौर्यगुणेन च ।

समवाये ततो राज्ञां कन्यां भर्त्तृस्वयम्वरां । प्राप्तवानर्जुनः कृष्णां कृत्वा कर्म सुदुष्करं । १२५

ततः प्रभृति लोकेऽस्मिन्पूज्यः सर्वधनुष्मतां । आदित्य इव दुःप्रेक्ष्यः समरेष्वपि चाभवत् ।

स सर्वान्पार्थिवाञ्जित्वा सर्वांश्च महतो गणान् । आजहारार्जुनो राज्ञो राजसूयं महाक्रतुं ।

अन्नवान् दक्षिणावांश्च सर्वैः समुदितो गुणैः । युधिष्ठिरेण सम्प्राप्तो राजसूयो महाक्रतुः ।

सुनयाद्वासुदेवस्य भीमार्जुनबलेन च । घातयित्वा जरासन्धं चैद्यञ्च बलगर्वितम् ।

दुर्योधनं समागच्छन्नर्हणानि ततस्ततः । मणिकाञ्चनरत्नानि गोहस्त्यश्वधनानि च । १३०

विचित्राणि च वासांसि प्रावारावरणानि च । कम्बलाजिनरत्नानि राङ्कवास्तरणानि च ।

समृद्धान्तां तथा दृष्ट्वा पाण्डवानां तदा श्रियं । ईर्ष्यासमुत्थः सुमहांस्तस्य मन्युरजायत ।

विमानप्रतिमान्तत्र मयेन सुकृतां सभां । पाण्डवानामुपहृतां स दृष्ट्वा पर्य्यतप्यत ।

तत्रावहसितश्चासीत्प्रस्कन्दन्निव सम्भ्रमात् । प्रत्यक्षं वासुदेवस्य भीमेनानभिजातवत् ।

स भोगान् विविधान् भुञ्जन् रत्नानि विविधानि च । कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः । १३५
अन्वजानात्ततो द्यूतं धृतराष्ट्रः सुतप्रियः । तच्छ्रुत्वा वासुदेवस्य कोपः समभवन्महान् ।
नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत । द्यूतादीननयान् घोरान् विविधांश्चाप्युपैक्षत ।
निरस्य विदुरं भीष्मं द्रोणं शारद्वतं कृपं । विग्रहे तुमुले तस्मिन् दहन् क्षत्रं परस्परं ।
जयत्सु पाण्डुपुत्रेषु श्रुत्वा सुमहदप्रियं । दुर्य्योधनमतं ज्ञात्वा कर्णस्य शकुनेस्तथा ।
धृतराष्ट्रश्चिरं ध्यात्वा सञ्जयं वाक्यमब्रवीत् । शृणु सञ्जय सर्व्वं मे न चासूयितुमर्हसि । १४०
श्रुतवानसि मेधावी बुद्धिमान् प्राज्ञसम्मतः । न विग्रहे मम मतिर्न च प्रीये कुलक्षये ।
न मे विशेषः पुत्रेषु स्वेषु पाण्डुसुतेषु वा । वृद्धं मामभ्यसूयन्ति पुत्रा मन्युपरायणाः ।
अहं त्वचक्षुः कार्पण्यात्पुत्रप्रीत्या सहामि तत् । मुह्यन्तं चानुमुह्यामि दुर्य्योधनमचेतनं ।
राजसूये श्रियं दृष्ट्वा पाण्डवस्य महौजसः । तच्चावहसनं प्राप्य सभारोहणदर्शने ।
अमर्षणः स्वयं जेतुमशक्तः पाण्डवान् रणे । निरुत्साहश्च संप्राप्तुं सुश्रियं क्षत्रियोऽपि सन् । १४५
गान्धारराजसहितश्छद्मद्यूतममन्त्रयत् । तत्र यद्यद्यथा ज्ञातं मया सञ्जय तच्छृणु ।
श्रुत्वा तु मम वाक्यानि बुद्धियुक्तानि तत्त्वतः । ततो ज्ञास्यसि मां सौते प्रज्ञाचक्षुषमित्युत ।
यदाश्रौषं धनुरायम्य चित्रं विद्धं लक्ष्यं पातितं वै पृथिव्यां । कृष्णां हृतां प्रेक्षतां सर्व्वराज्ञां तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं द्वारकायां सुभद्रां प्रसह्योढां माधवीमर्जुनेन । इन्द्रप्रस्थं वृष्णिवीरौ च यातौ तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं देवराजं प्रवृष्टं शरैर्दिव्यैर्वारितं चार्जुनेन । अग्निं तदा तर्पितं खाण्डवे च तदा नाशंसे विजयाय सञ्जय । १५०
यदाश्रौषं जातुषाद्वेश्मनस्तान्मुक्तान्पार्थान्पञ्च कुन्त्या समेतान् । युक्तञ्चैषां विदुरं स्वार्थसिद्धौ तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं द्रौपदीं रङ्गमध्ये लक्ष्यं भित्त्वा निर्जितामर्जुनेन । शूरान्पञ्चालान्पाण्डवेयांश्च युक्तांस्तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं मागधानां वरिष्ठं जरासन्धं क्षत्रमध्ये ज्वलन्तं । दोर्भ्यां हतं भीमसेनेन गत्वा तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं दिग्जये पाण्डुपुत्रैर्वशीकृतान् भूमिपालान् प्रसह्य । महाक्रतुं राजसूयं कृतञ्च तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं द्रौपदीमश्रुकण्ठीं सभां नीतां दुःखितामेकवस्त्रां । रजस्वलां नाथवतीमनाथवत्तदा नाशंसे विजयाय सञ्जय । १५५
यदाश्रौषं वाससां तत्र राशिं समाक्षिपत्कितवो मन्दबुद्धिः । दुःशासनो गतवान्नैव चान्तं तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं हृतराज्यं युधिष्ठिरं पराजितं सौबलेनाक्षवत्यां । अन्वागतं भ्रातृभिरप्रमेयैस्तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं विविधास्तत्र चेष्टा धर्म्मात्मनां प्रस्थितानां वनाय । ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं स्नातकानां सहस्रैरन्वागतं धर्म्मराजं वनस्थं । भिक्षाभुजां ब्राह्मणानां महात्मनां तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषमर्जुनं देवदेवं किरातरूपं त्र्यम्बकं तोष्य युद्धे । अवाप्तवन्तं पाशुपतं महास्त्रं तदा नाशंसे विजयाय सञ्जय । १६०
यदाश्रौषं त्रिदिवस्थं धनञ्जयं शक्रात्साक्षाद्दिव्यमस्त्रं यथावत् । अधीयानं शंसितं सत्यसन्धं तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं कालकेयास्ततस्ते पौलोमानो वरदानाच्च दृप्ताः । देवैरजेया निर्जिताश्चार्जुनेन तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषमसुराणां वधार्थे किरीटिनं यान्तममित्रकर्षणं । कृतार्थं चाप्यागतं शक्रलोकात्तदा नाशंसे विजयाय सञ्जय ।
यदाश्रौषं वैश्रवणेन सार्द्धं समागतं भीममन्यांश्च पार्थान् । तस्मिन्देशे मानुषाणामगम्ये तदा नाशंसे विजयाय सञ्जय ।

यदाश्रौषं घोषयात्रागतानां बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन। स्वेषां सुतानां कर्णबुद्धौ रतानां तदा नाशंसे विजयाय सञ्जय।१६५

यदाश्रौषं यक्षरूपेण धर्मं समागतं धर्मराजेन सूत। प्रश्नान् कांश्चिद्विब्रुवाणञ्च सम्यक् तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं न विदुर्मामकास्तान् प्रच्छन्नरूपान्वसतः पाण्डवेयान्। विराटराष्ट्रे सह कृष्णया तांस्तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं मामकानां वरिष्ठान् धनञ्जयेनैकरथेन भग्नान्। विराटराष्ट्रे वसता महात्मना तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं सत्कृतां मत्स्यराज्ञा सुतां दत्तामुत्तरामर्जुनाय। तां चार्जुनः प्रत्यगृह्णात्सुतार्थे तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं निर्जितस्याधनस्य प्रव्राजितस्य स्वजनात्प्रच्युतस्य। अक्षौहिणीः सप्त युधिष्ठिरस्य तदा नाशंसे विजयाय सञ्जय।१७०

यदाश्रौषं माधवं वासुदेवं सर्वात्मना पाण्डवार्थे निविष्टं। यस्येमां गां विक्रममेकमाहुस्तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं नरनारायणौ तौ कृष्णार्जुनौ वदतो नारदस्य। अहं द्रष्टा ब्रह्मलोके च सम्यक् तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं लोकहिताय कृष्णं शमार्थिनमुपयातं कुरूणां। शमं कुर्वाणमकृतार्थञ्च यातं तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं कर्णदुर्योधनाभ्यां बुद्धिं कृतां निग्रहे केशवस्य। तं चात्मानं बहुधा दर्शयानं तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं वासुदेवे प्रयाते रथस्यैकामग्रतस्तिष्ठमानां। आर्त्तां पृथां सान्त्वितां केशवेन तदा नाशंसे विजयाय सञ्जय। १७५

यदाश्रौषं मन्त्रिणं वासुदेवं तथा भीष्मं शान्तनवञ्च तेषां। भारद्वाजञ्चाशिषोऽनुब्रुवाणं तदा नाशंसे विजयाय सञ्जय।

यदा कर्णो भीष्ममुवाच वाक्यं नाहं योत्स्ये युध्यमाने त्वयीति। हित्वा सेनामपचक्राम चापि तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं वासुदेवार्जुनौ तौ तथा धनुर्गाण्डिवमप्रमेयं। त्रीण्युग्रवीर्याणि समागतानि तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं कश्मलेनाभिपन्ने रथोपस्थे सीदमानेऽर्जुने वै। कृष्णं लोकान् दर्शयानं शरीरे तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं भीष्ममभित्रकर्षणं निघ्नन्तमाजावयुतं रथानां। नैषां कश्चिद्वध्यते ख्यातरूपस्तदा नाशंसे विजयाय सञ्जय। १८०

यदाश्रौषं चापगेयेन संख्ये स्वयं मृत्युं विहितं धार्म्मिकेण। तच्चाकार्षुः पाण्डवेयाः प्रहृष्टास्तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं भीष्ममत्यन्तशूरं हतं पार्थेनाहवेष्वप्रधृष्यं। शिखण्डिनं पुरतः स्थापयित्वा तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं शरतल्पे शयानं वृद्धं वीरं सादितं चित्रपुङ्खैः। भीष्मं कृत्वा सोमकानल्पशेषांस्तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं शान्तनवे शयाने पानीयार्थे चोदितेनार्जुनेन। भूमिं भित्त्वा तर्पितं तत्र भीष्मं तदा नाशंसे विजयाय सञ्जय।

यदा वायुः शक्रसूर्यौ च युक्तौ कौन्तेयानामनुलोमा जयाय। नित्यं चास्मान् श्वापदा भीषयन्ति तदा नाशंसे विजयाय सञ्जय।१८५

यदा द्रोणो विविधानस्त्रमार्गान्निदर्शयन् समरे चित्रयोधी। न पाण्डवान् श्रेष्ठतरान्निहन्ति तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं चास्मदीयान्महारथान् व्यवस्थितानर्जुनस्यान्तकाय। संशप्तकान्निहतानर्जुनेन तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं व्यूहमभेद्यमन्यैर्भारद्वाजेनात्तशस्त्रेण गुप्तं। भित्त्वा सौभद्रं वीरमेकं प्रविष्टं तदा नाशंसे विजयाय सञ्जय।

यदाभिमन्युं परिवार्य बालं सर्वे हत्वा हृष्टरूपा बभूवुः। महारथाः पार्थमशक्नुवन्तस्तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषमभिमन्युं निहत्य हर्षान्मूढान् क्रोशतो धार्त्तराष्ट्रान्। क्रोधादुक्तं सैन्धवे चार्ज्जुनेन तदा नाशंसे विजयाय सञ्जय।१९०

यदाश्रौषं सैन्धवार्थे प्रतिज्ञां प्रतिज्ञातां तद्वधायार्ज्जुनेन। सत्यां तीर्णां शत्रुमध्ये च तेन तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं श्रान्तहये धनञ्जये मुक्त्वा हयान् पाययित्वोपवृत्तान्। पुनर्युक्त्वा वासुदेवं प्रयातं तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं वाहनेष्वक्षमेषु रथोपस्थे तिष्ठता पाण्डवेन। सर्वान् योधान् वारितानर्जुनेन तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं नागबलैः सुदुःसहं द्रोणानीकं युयुधानं प्रमथ्य। यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ तदा नाशंसे विजयाय सञ्जय।

यदाश्रौषं कर्णमासाद्य मुक्तं वधाद्भीमं कुत्सयित्वा वचोभिः। धनुःकोट्यातुद्य कर्णेन वीरं तदा नाशंसे विजयाय सञ्जय। १९५
यदाश्रौषं द्रोणः कृतवर्म्मा कृपश्च कर्णो द्रौणिर्मद्रराजश्च शूरः। अमर्षयन्सैन्धवं वध्यमानं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं देवराजेन दत्तां दिव्यां शक्तिं व्यंसितां माधवेन। घटोत्कचे राक्षसे घोररूपे तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं कर्णघटोत्कचाभ्यां युद्धे मुक्तां सूतपुत्रेण शक्तिं। यया वध्यः समरे सव्यसाची तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं द्रोणमाचार्य्यमेकं धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मं। रथोपस्थे प्रायगतं विशस्तं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं द्रौणिना द्वैरथस्थं माद्रीसुतं नकुलं लोकमध्ये। समं युद्धे मण्डलशश्चरन्तं तदा नाशंसे विजयाय सञ्जय। २००
यदा द्रोणे निहते द्रोणपुत्रो नारायणं दिव्यमस्त्रं विकुर्व्वन्। नैषामन्तं गतवान् पाण्डवानां तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं भीमसेनेन पीतं रक्तं भ्रातुर्युधि दुःशासनस्य। निवारितं नान्यतमेन भीमं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं कर्णमत्यन्तशूरं हतं पार्थेनाहवेष्वप्रधृष्यं। तस्मिन् भ्रातृणां विग्रहे देवगुह्ये तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं द्रोणपुत्रञ्च शूरं दुःशासनं कृतवर्म्माणमुग्रं। युधिष्ठिरं धर्म्मराजं जयन्तं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं निहतं मद्रराजं रणे शूरं धर्म्मराजेन सूत। सदा संग्रामे स्पर्द्धते यस्तु कृष्णं तदा नाशंसे विजयाय सञ्जय। २०५
यदाश्रौषं कलहद्यूतमूलं मायाबलं सौबलं पाण्डवेन। हतं संग्रामे सहदेवेन पापं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं श्रान्तमेकं शयानं ह्रदं गत्वा स्तम्भयित्वा तदम्भः। दुर्य्योधनं विरथं भग्नशक्तिं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं पाण्डवांस्तिष्ठमानान् गत्वा ह्रदे वासुदेवेन सार्द्धं। अमर्षणं धर्षयतः सुतं मे तदा नाशंसे विजयायसञ्जय।
यदाश्रौषं विविधांश्चित्रमार्गान् गदायुद्धे मण्डलशश्चरन्तं। मिथ्याहतं वासुदेवस्य बुद्ध्या तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं द्रोणपुत्रादिभिस्तैर्हतान्पाञ्चालान्द्रौपदेयांश्च सुप्तान्। कृतं वीभत्समयशस्यञ्च कर्म्म तदा नाशंसे विजयाय सञ्जय।२१०
यदाश्रौषं भीमसेनानुयातेनाश्वत्थाम्ना परमास्त्रं प्रयुक्तं। क्रुद्धेनैषीकमवधीयेन गर्भं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं ब्रह्मशिरोऽर्जुनेन स्वस्तीत्युक्त्वाऽस्त्रमस्त्रेण शान्तं। अश्वत्थाम्ना मणिरत्नञ्च दत्तं तदा नाशंसे विजयाय सञ्जय।
यदाश्रौषं द्रोणपुत्रेण गर्भे वैराट्या वै पात्यमाने महास्त्रैः। द्वैपायनः केशवो द्रोणपुत्रं परस्परेणाभिशापैः शशाप ।
शोच्या गान्धारी पुत्रपौत्रैर्विहीना तथा बन्धुभिः पितृभिर्भ्रातृभिश्च। कृतं कार्य्यं दुष्करं पाण्डवेयैः प्राप्तं राज्यमसपत्नं पुनस्तैः।
कष्टं युद्धे दशशेषाः श्रुता मे त्रयोऽस्माकं पाण्डवानाञ्च सप्त। द्व्यूना विंशतिराहताऽक्षौहिणीनां तस्मिन् संग्रामे भैरवे क्षत्रियाणां। २१५
तमस्त्वतीव विस्तीर्णं मोह आविशतीव मां। संज्ञां नोपलभे सूत मनो विह्वलतीव मे।
॥ सौतिरुवाच॥ इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहुदुःखितः। मूर्च्छितः पुनराश्वस्तः सञ्जयं वाक्यमब्रवीत्।
॥ धृतराष्ट्रउवाच ॥ सञ्जयैवं गते प्राणांस्त्यक्तुमिच्छामि मा चिरं। स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे।
॥ सौतिरुवाच ॥ तं तथा वादिनं दीनं विलपन्तं महीपतिं। निश्वसन्तं यथा नागं मुह्यमानं पुनःपुनः।
गावल्गणिरिदं धीमान्महार्थं वाक्यमब्रवीत्॥ सञ्जय उवाच॥ श्रुतवानसि वै राजन्महोत्साहान्महाबलान्। २२०

द्वैपायनस्य वदतो नारदस्य च धीमतः। महत्सु राजवंशेषु गुणैः समुदितेषु च।
जातान् दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः। धर्म्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वा सुदक्षिणैः।
अस्मिंल्लोके यशः प्राप्य ततः कालवशं गतान्। शैब्यं महारथं वीरं सृञ्जयं जयतांवरं।
सुहोत्रं रन्तिदेवञ्च काक्षीवन्तं महाद्युतिं। वाह्लीकं दमनञ्चैव शर्य्यातिमजितं नलं।

विश्वामित्रममित्रघ्नमम्बरीषं महाबलं। मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेवच। २२०
रामं दाशरथिञ्चैव शशविन्दुं भगीरथं। कृतवीर्य्यं महाभागं तथैव जनमेजयं।
ययातिं शुभकर्म्माणं देवैर्य्यो याजितः स्वयं।
चैत्ययूपाङ्किता भूमिर्य्यस्येयं सवनाकरा। इति राज्ञां चतुर्विंशं नारदेन सुरर्षिणा।
पुत्रशोकाभितप्ताय पुरा शैव्याय कीर्त्तितं। तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः।
महारथा महात्मानः सर्व्वैः समुदिता गुणैः। पुरुः कुरुर्यदुः शूरो विश्वगश्वो महाद्युतिः। २२५
अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः। विजयो वीतिहोत्रोऽङ्गो भवः श्वेतो बृहद्गुरुः।
उशीनरः शतरथः कंको दुलिदुहो द्रुमः। दम्भोद्भवः परो वेनः सगरः संकृतिर्निमिः।
अजेयः परशुः पुण्ड्रः शम्भुर्देवा वृधोऽनघः। देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः।
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः। सत्यव्रतः शान्तभयः सुमित्रः सुबलः प्रभुः।
जानुजंघो ऽनरण्योऽर्कः प्रियभृत्यः शुचिव्रतः। बलबन्धुर्निरामर्द्दः केतुशृङ्गो बृहद्बलः। २३०
धृष्टकेतु र्बृहत्केतु र्दीप्तकेतु र्निरामयः। अविक्षिच्चपलोधूर्त्तः कृतबन्धुर्दृढेषुधिः।
महापुराणसम्भाव्यः प्रत्यङ्गः परहाश्रुतिः। एते चान्ये च राजानः शतशोऽथ सहस्रशः।
श्रूयन्ते शतशश्चान्ये संख्याताश्चैव पद्मशः। हित्वा सुविपुलान् भोगान् बुद्धिमन्तोमहाबलाः।
राजानो निधनं प्राप्तास्तव पुत्रा इव प्रभो। येषां दिव्यानि कर्म्माणि विक्रमस्त्याग एवच।
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयार्जवं। विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः। २३५
सर्व्वर्द्धिगुण सम्पन्ना स्तेचापि निधनं गताः। तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना।
लुब्धा दुर्वृत्तभूयिष्ठा नताञ्छोचितुमर्हसि। श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः।
येषां शास्त्रानुगा बुद्धिर्नते मुह्यन्ति भारत। निग्रहानुग्रहौ चापि विदितौ ते नराधिप।
नात्यन्तमेवानुवृत्तिः कार्य्या ते पुत्ररक्षणे। भवितव्यं तथा तच्च नानुशोचितुमर्हसि।
दैवं प्रज्ञाविशेषेण को निवर्त्तितुमर्हति। विधातृविहितं मार्गं न कश्चिदतिवर्त्तते। कालमूलमिदं सर्व्वं भावाभावौ सुखासुखे। २४०
कालः सृजति भूतानि कालः संहरते प्रजाः। निर्दहति प्रजाः कालः कालः शमयते पुनः।
कालोहि कुरुते भावान्सर्व्वलोके शुभाशुभान्। कालः संक्षिपते सर्व्वाः प्रजा विसृजते पुनः।
कालः सुप्तेषु जागर्त्ति कालोहि दुरतिक्रमः। कालः सर्व्वेषु भूतेषु चरत्यविधृतः समः।
अतीतानागता भावा ये च वर्त्तन्ति सांप्रतं। तान् कालनिर्म्मितान् बुद्धा न संज्ञां हातुमर्हसि।
॥ सौतिरुवाच ॥ इत्येवं पुत्रशोकार्त्तं धृतराष्ट्रं जनेश्वरं। आश्वास्य स्वस्थमकरोत्सूतो गावल्गणिस्तदा। २४५
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्। विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः।
भारताध्ययनं पुण्यमपि पादमधीयतः। श्रद्दधानस्य पूयन्ते सर्व्वपापान्यशेषतः।
देवा देवर्षयोह्यत्र तथा ब्रह्मर्षयोऽमलाः। कीर्त्त्यन्ते शुभकर्म्माण स्तथा यक्षा महोरगाः।
भगवान् वासुदेवश्च कीर्त्त्यतेऽत्र सनातनः। सहि सत्यमृतञ्चैव पवित्रं पुण्यमेवच।

शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनं। यस्य दिव्यानि कर्म्माणि कथयन्ति मनीषिणः। २५०
असच्च सदसच्चैव यस्माद्विश्वं प्रवर्त्तते। सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः।
अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकं। अव्यक्तादि परं यच्च स एव परिगीयते।
यत्तद्यतिवरा मुक्ता ध्यानयोगबलान्विताः। प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितं।
श्रद्दधानः सदायुक्तः सदाधर्म्मपरायणः। आसेवन्निममध्यायं नरः पापात्प्रमुच्यते।
अनुक्रमणिकाध्यायं भारतस्येममादितः। आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति। २५५
उभे सन्ध्ये जपन् किञ्चित्सद्यो मुच्येत किल्बिषात्। अनुक्रमण्यायावत्स्यादह्ना रात्र्या च सञ्चितं।
भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च। नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा।
आरण्यकं च वेदेभ्य औषधिभ्योऽमृतं यथा। ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदां।
यथैतानीतिहासानां तथाभारतमुच्यते। यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः। अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति। २६०
कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते। भ्रूणहत्यादिकं चापि पापं हन्यादसंशयं।
य इमं शुचिरध्यायं पठेत्पर्वणि पर्वणि। अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः।
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः। स दीर्घमायुः कीर्त्तिञ्च स्वर्गतिं चाप्नुयान्नरः।
एकतश्चतुरो वेदान् भारतं चैतदेकतः। पुरा किल सुरैः सर्व्वैः समेत्य तुलया धृतं।
चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन्महाभारतमुच्यते। २६५
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकं। महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते। निरुक्तमस्य यो वेद सर्व्व पापैः प्रमुच्यते।
तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः।
प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः।
इतिश्री महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्व्वण्यनुक्रमणिकाध्यायः प्रथमः ॥ १ ॥
ऋषय ऊचुः। समन्तपञ्चकमिति यदुक्तं सूतनन्दन। एतत्सर्व्वं यथातत्त्वं श्रोतुमिच्छामहे वयं। २७०
सौतिरुवाच। शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः। समन्तपञ्चकाख्यञ्च श्रोतुमर्हथ सत्तमाः।
त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः। असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः।
स सर्व्वं क्षत्रमुत्साद्य स्ववीर्य्येणानलद्युतिः। समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान्।
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः। पितॄन्सन्तर्पयामास रुधिरेणेति नः श्रुतं।
अथर्चीकादयोऽभ्येत्य पितरो राममब्रुवन्। राम राम महाभाग प्रीताः स्म तव भार्गव। २७५
अनया पितृभक्त्या च विक्रमेण तव प्रभो। वरं वृणीष्व भद्रं ते यमिच्छसि महाद्युते।
॥ राम उवाच ॥ यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि। यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया।
अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः। ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः।
एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन्। तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह।

तेषां समीपे यो देशो ह्रदानां रुधिराम्भसां। समन्तपञ्चकमिति पुण्यं तत्परिकीर्त्तितं। २८०
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते। तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः।
अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत्। समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः।
तस्मिन्परमधर्म्मिष्ठे देशे भूदोषवर्जिते। अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया।
समेत्य तं द्विजास्ताश्च तत्रैव निधनं गताः। एतन्नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः।
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्त्तितः। तदेतत्कथितं सर्व्वं मया ब्राह्मणसत्तमाः। २८५
यथा देशः स विख्यातस्त्रिषु लोकेषु सुव्रताः॥ ऋषय ऊचुः॥ अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन। एतदिच्छामहे श्रोतुं सर्व्वमेव यथा तथं।
अक्षौहिण्याःपरीमाणं नराश्वरथदन्तिनां। यथावच्चैव नो ब्रूहि सर्व्वं हि विदितं तव।
॥ सौतिरुवाच॥ एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते।
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते। २९०
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः। स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः।
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी। अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः।
अक्षौहिण्याःप्रसंख्याता रथानां द्विजसत्तमाः। संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः।
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः। गजानाञ्च परीमाणमेतदेव विनिर्द्दिशेत्।
ज्ञेयंशतसहस्रन्तु सहस्राणि नवैव तु। नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः। २९५
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च। दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया।
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः। यथा कथितवानस्मि विस्तरेण तपोधनाः।
एतया संख्यया ह्यासन् कुरुपाण्डवसेनयोः। अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डिताष्टादशैव तु।
समेतास्तत्र वै देशे तत्रैव निधनं गताः। कौरवान् कारणं कृत्वा कालेनाद्भुतकर्म्मणा।
अहानि युयुधे भीष्मो दशैव परमास्त्रवित्। अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीं। ३००
अहनी युयुधे द्वे तु कर्णः परबलार्द्दनः। शल्योऽर्द्धदिवसञ्चैव गदायुद्धमतः परं। दुर्य्योधनस्य भीमस्य दिनार्द्धमभवत्तयोः।
तस्यैव दिवसस्यान्ते द्रौणिहार्दिक्यगौतमाः। प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलं।
यत्तु शौनकसत्रे ते भारताख्यानमुत्तमं। जनमेजयस्य तत्सत्रे व्यासशिष्येण धीमता।
कथितं विस्तरार्थञ्च यशोवीर्य्यं महीक्षितां। पौष्यं तत्र च पौलोममास्तीकं चादितः स्मृतं।
विचित्रार्थपदाख्यानमनेकसमयान्वितं। प्रतिपन्नं नरैःप्राज्ञैर्वैराग्यमिव मोक्षिभिः। ३०५
आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितं। इतिहासः प्रधानार्थः श्रेष्ठःसर्व्वागमेष्वयं।
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते। आहारमनपाश्रित्य शरीरस्येव धारणं।
तदेतद्भारतं नाम कविभिस्तूपजीव्यते। उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः।
इतिहासोत्तमेऽस्मिंस्तु अर्पिता बुद्धिरुत्तमा। स्वरव्यञ्जनयोः कृत्स्ना लोकवेदाश्रयेव वाक्।

तस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः । सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च । ११०
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः । पर्वानुक्रमणीपूर्व्वं द्वितीयःपर्व्वसंग्रहः।
पौष्यं पौलोममास्तीकमादिवंशावतारणं । ततः सम्भवपर्वोक्तमद्भुतं रोमहर्षणं ।
दाहोजतुगृहस्यात्र हैडिम्बं पर्व चोच्यते । ततोवकवधः पर्व पर्वचैत्ररथं ततः ।
ततः स्वयम्बरोदेव्याः पाञ्चाल्याः पर्व चोच्यते । चात्रधर्मेण निर्जित्य ततोवैवाहिकं स्मृतं ।
विदुरागमनं पर्व राज्यलाभस्तथैव च । अर्जुनस्य वने वासः सुभद्राहरणं ततः । ११५
सुभद्राहरणादूर्द्ध्वं ज्ञेयं हरणहारिकं । ततः खाण्डवदाहाख्यं तत्रैव मयदर्शनं ।
सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः परं । जरासन्धबधः पर्वपर्व्वदिग्विजयं तथा ।
पर्वदिग्विजयादूर्द्ध्वं राजसूयिकमुच्यते । ततश्चार्घाभिहरणं शिशुपालवधस्ततः ।
द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परं । ततश्चारण्यकं पर्व किर्म्मीरवध एव च ।
अर्ज्जुनस्याभिगमनं पर्व ज्ञेयमतः परं । ईश्वरार्जुनयोर्युद्धं पर्वकैरातसंज्ञितं । १२०
इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परं । नलोपाख्यानमपि च धार्म्मिकं करुणोदयं ।
तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः । जटासुरवधः पर्व यक्षयुद्धमतः परं ।
निवातकवचैर्युद्धं पर्व चाजगरं ततः । मार्कण्डेयसमस्या च पर्वानन्तरमुच्यते ।
संवादश्च ततः पर्व द्रौपदीसत्यभामयोः । घोषयात्रा ततः पर्व मृगस्वप्नोद्भवस्ततः ।
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैवच । द्रौपदीहरणं पर्व जयद्रथविमोचणं । १२५
पतिव्रताया माहात्म्यं सावित्र्याश्चैवमद्भुतं । रामोपाख्यानमत्रैव पर्व ज्ञेयमतः परं ।
कुण्डलाहरणं पर्व ततः परमिहोच्यते । आरणेयं ततः पर्व वैराटं तदनन्तरं । पाण्डवानां प्रवेशश्च समयस्य च पालनं ।
कीचकानां वधः पर्व पर्वगोग्रहणं ततः । अभिमन्योश्च वैराट्यापर्व वैवाहिकं स्मृतं ।
उद्योगपर्व विज्ञेयमत ऊर्द्ध्वं महाद्भुतं । ततः सञ्जययानाख्यं पर्व ज्ञेयमतः परं ।
प्रजागरस्तथा पर्व धृतराष्ट्रस्य चिन्तया । पर्व सानत्सुजातं वै गुह्यमध्यात्मदर्शनं । १३०
यानसन्धिस्ततः पर्व्व भगवद्यानमेव च । मातलीयमुपाख्यानं चरितं गालवस्य च ।
सावित्रं वामदेवञ्च वैन्योपाख्यानमेव च । जामदग्न्यमुपाख्यानं पर्व्व षोडशराजकं ।
सभाप्रवेशः कृष्णस्य विदुलापुत्रशासनं । उद्योगः सैन्यनिर्य्यानं श्वेतोपाख्यानमेव च ।
ज्ञेयं विवादपर्व्वात्र कर्णस्यापि महात्मनः । निर्य्याणञ्च ततः पर्व्व कुरुपाण्डवसेनयोः ।
रथातिरथसंख्याच पर्व्वोक्तं तदनन्तरं । उलूकदूतागमनं पर्व्वामर्षविवर्द्धनं । १३५
अम्बोपाख्यानमत्रैव पर्व्व ज्ञेयमतः परं । भीष्माभिषेचनं पर्व्व ततश्चाद्भुतमुच्यते ।
जम्बूखण्डविनिर्म्माणं पर्व्वोक्तं तदनन्तरं । भूमिपर्व्व ततः प्रोक्तं द्वीपविस्तारकीर्त्तनं ।
पर्व्वोक्तं भगवद्गीतापर्व्व भीष्मवधस्ततः । द्रोणाभिषेचनं पर्व्व संसप्तकवधस्ततः ।
अभिमन्युवधः पर्व्व प्रतिज्ञापर्व्वचोच्यते । जयद्रथवधः पर्व घटोत्कचवधस्ततः ।

ततोद्रोणवधः पर्व्व विज्ञेयं लोमहर्षणं । मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते । २४५
कर्णपर्व ततोज्ञेयं शल्यपर्व ततः परं । ह्रदप्रवेशनं पर्व गदायुद्धमतः परं ।
सारस्वतं ततः पर्व तीर्थवंशानुकीर्त्तनं । अत ऊर्द्ध्वं सुबीभत्सं पर्व सौप्तिकमुच्यते ।
ऐषीकं पर्व चोद्दिष्टमतऊर्द्ध्वं सुदारुणं । जलप्रदानिकं पर्व स्त्रीविलापस्ततःपरं ।
श्राद्धपर्व ततोज्ञेयं कुरूणामौर्द्ध्वदेहिकं । चार्व्वाकस्य वधः पर्व रक्षसोब्रह्मरूपिणः ।
आभिषेचनिकं पर्व धर्म्मराजस्य धीमतः । प्रविभागो गृहाणाञ्च पर्वोक्तं तदनन्तरं । २५०
शान्तिपर्व ततो यत्र राजधर्म्मानुशासनं । आपद्धर्म्मश्च पर्वोक्तं मोक्षधर्म्मस्ततः परं ।
शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनं । प्रादुर्भावश्च दुर्वासःसंवादश्चैव मायया ।
ततः पर्व्व परिज्ञेयमानुशासनिकं परं । स्वर्गारोहणिकञ्चैव ततो भीष्मस्य धीमतः ।
ततोऽश्वमेधिकं पर्व्व सर्व्वपापप्रणाशनं । अनुगीता ततः पर्व्व ज्ञेयमध्यात्मवाचकं ।
पर्व्वचाश्रमवासाख्यं पुत्रदर्शनमेव च । नारदागमनं पर्व्व ततः परमिहोच्यते । २५५
मौसलं पर्व्व चोद्दिष्टं ततो घोरं सुदारुणं । महाप्रस्थानिकं पर्व्व स्वर्गारोहणिकं ततः ।
हरिवंशस्ततः पर्व्व पुराणं खिलसंज्ञितं । विष्णुपर्व्व शिशोश्चर्य्या विष्णोःकंसवधस्तथा ।
भविष्यं पर्व्व चाप्युक्तं खिलेष्वेवाद्भुतं महत् । एतत्पर्व्वशतं पूर्णं व्यासेनोक्तं महात्मना ।
यथावत्सूतपुत्रेण लोमहर्षणिना ततः । उक्तानि नैमिषारण्ये पर्व्वाण्यष्टादशैव तु ।
समासो भारतस्यायमत्रोक्तः पर्व्वसंग्रहः । पौष्यं पौलोममास्तीकमादिवंशावतारणं । २६०
सम्भवोजतुवेश्माख्यं हिडिम्बबकयोर्वधः । तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयम्बरः ।
क्षात्रधर्म्मेण निर्जित्य ततो वैवाहिकं स्मृतं । विदुरागमनञ्चैव राज्यलम्भस्तथैव च ।
वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः । हरणाहरणञ्चैव दहनं खाण्डवस्य च ।
मयस्य दर्शनञ्चैव आदिपर्वणि कथ्यते । पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितं ।
पौलोमे भृगुवंशस्य विस्तारः परिकीर्त्तितः । आस्तीके सर्वनागानां गरुडस्य च सम्भवः । २६५
क्षीरोदमथनञ्चैव जन्मोच्चैःश्रवसस्तथा । यजतः सर्पसत्रेण राज्ञः पारीक्षितस्य च ।
कथेयमभिनिर्वृत्ता भरतानां महात्मनां । विविधा सम्भवा राज्ञामुक्ताः सम्भवपर्वणि ।
अन्येषाञ्चैव शूराणामृषेर्द्वैपायनस्य च । अंशावतारणं चात्र देवानां परिकीर्त्तितं ।
दैत्यानां दानवानाञ्च यक्षाणाञ्च महौजसां । नागानामथसर्पाणां गन्धर्वाणां पतत्त्रिणां ।
अन्येषाञ्चैव भूतानां विविधानां समुद्भवः । महर्षेराश्रमपदे कण्वस्य च तपस्विनः । २७०
शकुन्तलायां दुष्मन्ताद्भरतश्चापि जज्ञिवान् । यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलं ।
वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनां । शान्तनोर्वेश्मनि पुनस्तेषांचारोहणं दिवि ।
तेजोंऽशानाञ्च सम्पातो भीष्मस्याप्यत्र सम्भवः । राज्यान्निवर्त्तनं तस्य ब्रह्मचर्य्यव्रते स्थितिः ।
प्रतिज्ञापालनञ्चैव रक्षा चित्राङ्गदस्य च । हते चित्राङ्गदे चैव रक्षाभ्रातुर्य्यवीयसः ।

विचित्रवीर्य्यस्य तथा राज्ये सम्प्रतिपादनं। धर्म्मस्य नृषु सम्भूतिरणीमाण्डव्यशापजा। ३७५
कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा। धृतराष्ट्रस्य पाण्डोश्च पाण्डवानाञ्च सम्भवः।
वारणावतयात्रायां मन्त्रो दुर्य्योधनस्य च। कूटस्य धार्त्तराष्ट्रेण प्रेषणं पाण्डवान्प्रति।
हितोपदेशश्च पथि धर्म्मराजस्य धीमतः। विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया।
विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया। निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि।
पुरोचनस्य चात्रैव दहनं संप्रकीर्त्तितं। पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनं। ३८०
तत्रैव च हिडिम्बस्य वधो भीमान्महाबलात्। घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्त्तिता।
महर्षेर्दर्शनञ्चैव व्यासस्यामिततेजसः। तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने।
अज्ञातचर्य्यया वासो यत्र तेषां प्रकीर्त्तितः। वकस्य निधनञ्चैव नागराणाञ्च विस्मयः।
सम्भवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव हि। ब्राह्मणात्समुपश्रुत्य व्यासवाक्यप्रचोदिताः।
द्रौपदीं प्रार्थयन्तस्ते स्वयम्वरदिदृक्षया। पाञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः। ३८५
अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा। सख्यं कृत्वा ततस्तेन तस्मादेव च शुश्रुवे।
तापत्यमथ वाशिष्ठमौर्व्वञ्चाख्यानमुत्तमं। भ्रातृभिः सहितः सर्व्वैः पाञ्चालानभितो ययौ।
पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनञ्जयः। द्रौपदीं लब्धवानत्र मध्ये सर्व्वमहीक्षितां।
भीमसेनार्जुनौ यत्र संरब्धान्पृथिवीपतीन्। शल्यकर्णौ च तरसा जितवन्तौ महामृधे।
दृष्ट्वा तयोश्च तद्वीर्य्यमप्रमेयममानुषं। शङ्कमानौ पाण्डवांस्तौ रामकृष्णौ महामती। ३९०
जग्मतुस्तैः समागन्तुं शालां भार्गववेश्मनि। पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च।
पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते। द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः।
क्षत्तुश्च धार्त्तराष्ट्रेण प्रेषणं पाण्डवान्प्रति। विदुरस्य च सम्प्राप्तिर्दर्शनं केशवस्य च।
खाण्डवप्रस्थवासश्च तथा राज्यार्द्धशासनं। नारदस्याज्ञया चैव द्रौपद्याः समयक्रिया।
सुन्दोपसुन्दयोस्तद्वदाख्यानं परिकीर्त्तितं। अनन्तरञ्च द्रौपद्या सहासीनं युधिष्ठिरं। ३९५
अनुप्रविश्य विप्रार्थे फाल्गुनो गृह्य चायुधं। मोक्षयित्वा गृहं गत्वा विप्रार्थं कृतनिश्चयः।
समयं पालयन्वीरो वनं यत्र जगाम ह। पार्थस्य वनवासे च उलूप्या पथि सङ्गमः।
पुण्यतीर्थानुसंयानं वभ्रुवाहनजन्म च। तत्रैव मोक्षयामास पञ्च सोऽप्सरसः शुभाः।
शापाद्ग्राहत्वमापन्ना ब्राह्मणस्य तपस्विनः। प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः।
द्वारकायां सुभद्रा च कामयानेन कामिनी। वासुदेवस्यानुमते प्राप्ता चैव किरीटिना। ४००
गृहीत्वा हरणं प्राप्ते कृष्णे देवकिनन्दने। अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः।
द्रौपद्यास्तनयानाञ्च सम्भवोऽनु प्रकीर्त्तितः। विहारार्थञ्च गतयोः कृष्णयोर्यमुनामनु।
सम्प्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनं। मयस्य मोक्षो ज्वलनाद्भुजङ्गस्य च मोक्षणं।
महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भवः।

इत्येतदादिपर्व्वोक्तं प्रथमम्बहुविस्तरं। अध्यायानां शते द्वे तु संख्याते परमर्षिणा। सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा। ४०५
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च। श्लोकाश्च चतुरशीतिर्मुनिनोक्ता महात्मना।
द्वितीयन्तु सभापर्व्व बहुवृत्तान्तमुच्यते। सभाक्रिया पाण्डवानां किङ्कराणाञ्च दर्शनं।
लोकपालसभाख्यानं नारदाद्देवदर्शिनः। राजसूयस्य चारम्भो जरासन्धवधस्तथा।
गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोचनं। तथा दिग्विजयोऽपैव पाण्डवानां प्रकीर्त्तितः।
राज्ञामागमनञ्चैव सार्हणानां महाक्रतौ। राजसूयेऽर्घसंवादे शिशुपालवधस्तथा। ४१०
यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च। दुर्य्योधनस्यावहासो भीमेन च सभातले।
यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत्। यत्र धर्म्मसुतं द्यूते शकुनिः कितवोऽजयत्।
यत्र द्यूतार्णवे मग्नां द्रौपदीं नौरिवार्णवात्। धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखितां।
तारयामास तां तीर्णां ज्ञात्वा दुर्य्योधनो नृपः। पुनरेव ततो द्यूते समाह्वयत पाण्डवान्।
जित्वा स वनवासाय प्रेषयामास तांस्ततः। एतत्सर्व्वं सभापर्व्व समाख्यातं महात्मना। ४१५
अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया। श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च।
श्लोकाश्चैकादश ज्ञेयाः पर्व्वण्यस्मिन् द्विजोत्तमाः। अतः परं तृतीयन्तु ज्ञेयमारण्यकं महत्।
वनवासं प्रयातेषु पाण्डवेषु महात्मसु। पौरानुगमनञ्चैव धर्म्मपुत्रस्य धीमतः।
अन्नौषधीनाञ्च कृते पाण्डवेन महात्मना। द्विजानां भरणार्थञ्च कृतमाराधनं रवेः।
धौम्योपदेशात्तिग्मांशुप्रसादादन्नसम्भवः। हितञ्च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात्। ४२०
त्यक्तस्य पाण्डुपुत्राणां समीपगमनं तथा। पुनरागमनञ्चैव धृतराष्ट्रस्य शासनात्।
कर्णप्रोत्साहनाच्चैव धार्त्तराष्ट्रस्य दुर्म्मतेः। वनस्थान्पाण्डवान्हन्तुं मन्त्रो दुर्य्योधनस्य च।
तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतं। निर्य्याणप्रतिषेधश्च सुरभ्याख्यानमेव च।
मैत्रेयागमनं चात्र राज्ञश्चैवानुशासनं। शापोत्सर्गश्च तेनैव राज्ञो दुर्य्योधनस्य च।
किर्म्मीरस्य वधश्चात्र भीमसेनेन संयुगे। वृष्णीनामागमश्चात्र पाञ्चालानाञ्च सर्व्वशः। ४२५
श्रुत्वा शकुनिना द्यूते निकृत्या निर्ज्जितांश्च तान्। क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना।
परिदेवनञ्च पाञ्चाल्या वासुदेवस्य सन्निधौ। आश्वासनञ्च कृष्णेन दुःखार्त्तायाः प्रकीर्त्तितं।
तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा। सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीं।
नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव हि। प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः।
धर्म्मराजस्य चात्रैव संवादः कृष्णया सह। संवादश्च तथा राज्ञा भीमस्यापि प्रकीर्त्तितः। ४३०
समीपं पाण्डुपुत्राणां व्यासस्यागमनं तथा। प्रतिस्मृत्याथ विद्याया दानं राज्ञो महर्षिणा।
गमनं काम्यके चापि व्यासे प्रतिगते ततः। अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः।
महादेवेन युद्धञ्च किरातवपुषा सह। दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च।
महेन्द्रलोकगमनमस्त्रार्थे च किरीटिनः। यत्र चिन्ता समुत्पन्ना धृतराष्ट्रस्य भूयसी।

दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः। युधिष्ठिरस्य चार्त्तस्य व्यसनं परिदेवनं। ४३५
नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयं। दमयन्त्याः स्थितिर्यत्र नलस्य चरितं तथा।
तथाक्षहृदयप्राप्तिस्तस्मादेव महर्षितः। लोमशस्यागमस्तत्र स्वर्गात्पाण्डुसुतान्प्रति।
वनवासगतानाञ्च पाण्डवानां महात्मनां। स्वर्गप्रवृत्तिराख्याता लोमशेनार्ज्जुनस्य वै।
सन्देशादर्जुनस्यात्र तीर्थाभिगमनक्रिया। तीर्थानाञ्च फलप्राप्तिः पुण्यत्वञ्चापि कीर्त्तितं।
पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा। तीर्थयात्रा च तत्रैव पाण्डवानां महात्मनां। ४४०
कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। तथा यज्ञविभूतिश्च गयस्यात्र प्रकीर्त्तिता।
आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणं। लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा।
ऋष्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः। जामदग्न्यस्य रामस्य चरितं भूरितेजसः।
कार्त्तवीर्य्यवधो यत्र हैहयानाञ्च वर्ण्यते। प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः।
सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः। शर्य्यातियज्ञे नासत्यौ कृतवान्सोमपीथिनौ। ४४५
ताभ्याञ्च यत्र स मुनिर्यौवनं प्रतिपादितः। मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैव प्रकीर्त्तितं।
जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः। पुत्रार्थमयजद्राजा लेभे पुत्रशतञ्च सः।
ततः श्येनकपोतीयमुपाख्यानमनुत्तमं। इन्द्राग्नी यत्र धर्म्मश्चाप्यजिज्ञासञ्छिबिं नृपः।
अष्टावक्रीयमत्रैव विवादो यत्र वन्दिना। अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत्।
नैयायिकानां मुख्येन वरुणस्यात्मजेन च। पराजितो यत्र वन्दी विवादेन महात्मना। ४५०
विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः। यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः। गन्धमादनयात्रा च वासो नारायणाश्रमे।
नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने। व्रजन्पथि महाबाहुर्दृष्टवान्पवनात्मजं।
कदलीषण्डमध्यस्थं हनूमन्तं महाबलं। यत्र सौगन्धिकार्थेऽसौ नलिनीं तामधर्षयत्।
यत्रास्य युद्धमभवत्सुमहद्राक्षसैः सह। यक्षैश्चैव महावीर्य्यैर्मणिमत्प्रमुखैस्तदा।
जटासुरस्य च वधो राक्षसस्य वृकोदरात्। वृषपर्व्वणो राजर्षेस्ततोऽभिगमनं स्मृतं। ४५५
आर्ष्टिषेणाश्रमे चैषां गमनं वास एव च। प्रोत्साहनञ्च पाञ्चाल्या भीमस्यात्र महात्मनः।
कैलासारोहणं प्रोक्तं यत्र यक्षैर्बलोत्कटैः। युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह।
समागमश्च पाण्डूनां यत्र वैश्रवणेन च। समागमश्चार्जुनस्य तत्रैव भ्रातृभिः सह।
अवाप्य दिव्यान्यस्त्राणि गुर्व्वर्थं सव्यसाचिना। निवातकवचैर्युद्धं हिरण्यपुरवासिभिः।
निवातकवचैर्घोरैर्दानवैः सुरशत्रुभिः। पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः। ४६०
वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता। अस्त्रसन्दर्शनारम्भो धर्म्मराजस्य सन्निधौ।
पार्थस्य प्रतिषेधश्च नारदेन सुरर्षिणा। अवरोहणं पुनश्चैव पाण्डूनां गन्धमादनात्।
भीमस्य ग्रहणं चात्र पर्वताभोगवर्ष्मणा। भुजगेन्द्रेण बलिना तस्मिन् सुगहने वने।
अमोक्षयद्यत्र चैनं प्रश्नानुक्त्वा युधिष्ठिरः। काम्यकागमनं चैव पुनस्तेषां महात्मनां।

तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान्पुरुषर्षभान्। वासुदेवस्यागमनमत्रैव परिकीर्त्तितं। ४६५
मार्कण्डेयसमास्यायामुपाख्यानानि सर्व्वशः। पृथोर्व्वैन्यस्य यत्रोक्तमाख्यानं परमर्षिणा।
संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः। मत्स्योपाख्यानमत्रैव प्रोच्यते तदनन्तरं।
मार्कण्डेयसमास्या च पुराणं परिकीर्त्त्यते। ऐन्द्रद्युम्नमुपाख्यानं धौन्धुमारन्तथैव च।
पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतं। द्रौपद्याः कीर्त्तितश्चात्र संवादः सत्यभामया।
पुनर्द्वैतवनञ्चैव पाण्डवाः समुपागताः। घोषयात्रा च गन्धर्व्वैर्यत्र बद्धः सुयोधनः। ४७०
ह्रियमाणस्तु मन्दात्मा मोक्षितोऽसौ किरीटिना। धर्म्मराजस्य चात्रैव मृगस्वप्ननिदर्शनं।
काम्यके काननश्रेष्ठे पुनर्गमनमुच्यते। व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरं।
दुर्व्वाससोऽप्युपाख्यानमत्रैव परिकीर्त्तितं। जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात्।
यत्रैनमन्वयाद्भीमो वायुवेगसमो जवे। चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः।
रामायणमुपाख्यानमत्रैव बहुविस्तरं। यत्र रामेण विक्रम्य निहतो रावणो युधि। ४७५
सावित्र्याश्चाप्युपाख्यानमत्रैव परिकीर्त्तितं। कर्णस्य परिमोचोऽत्र कुण्डलाभ्यां पुरन्दरात्।
यत्रास्य शक्तिं तुष्टोऽस्यावदादेकबधाय च। आरणेयमुपाख्यानं यत्र धर्म्मोऽन्वशात्सुतं।
जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशं। एतदारण्यकं पर्व्व तृतीयं परिकीर्त्तितं।
अत्राध्यायशते द्वे तु संख्यया परिकीर्त्तिते। एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्त्तिताः।
एकादश सहस्राणि श्लोकानां षट्शतानि च। चतुःषष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन्प्रकीर्त्तिताः। ४८०
अतः परं निबोधेदं वैराटं पर्व्व विस्तरं। विराटनगरे गत्वा श्मशाने विपुलां शमीं।
दृष्ट्वा सन्निदधुस्तत्र पाण्डवा ह्यायुधान्युत। यत्र प्रविश्य नगरं छद्मना न्यवसंस्तु ते।
पाञ्चालीं प्रार्थयानस्य कामोपहतचेतसः। दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात्।
पाण्डवान्वेषणार्थञ्च राज्ञो दुर्य्योधनस्य च। चराः प्रस्थापिताश्चात्र निपुणाः सर्व्वतो दिशं।
न च प्रवृत्तिस्तैर्लब्धा पाण्डवानां महात्मनां। गोग्रहश्च विराटस्य त्रिगर्त्तैः प्रथमं कृतः। ४८५
यत्रास्य युद्धं सुमहत्तैरासील्लोमहर्षणं। ह्रियमाणश्च यत्रासौ भीमसेनेन मोक्षितः।
गोधनञ्च विराटस्य मोक्षितं यत्र पाण्डवैः। अनन्तरञ्च कुरुभिस्तस्य गोग्रहणं कृतं।
समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि। प्रत्याहृतं गोधनञ्च विक्रमेण किरीटिना।
विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः। अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनं।
चतुर्थमेतद्विपुलं वैराटं पर्व्व वर्णितं। अत्रापि परिसंख्याता अध्यायाः परमर्षिणा। ४९०
सप्तषष्टिरथो पूर्णा श्लोकानामपि मे शृणु। श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु।
उक्तानि वेदविदुषा पर्व्वण्यस्मिन्महर्षिणा। उद्योगपर्व्व विज्ञेयं पञ्चमं शृण्वतः परं।
उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया। दुर्य्योधनोऽर्जुनश्चैव वासुदेवमुपस्थितौ।
साहाय्यमस्मिन्समरे भवान्नौ कर्त्तुमर्हति। इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः।

अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ । अक्षौहिणीं वा सैन्यस्य कस्य किं वा ददाम्यहं । ४९५
वव्रे दुर्य्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः । अयुध्यमानं सचिवं वव्रे कृष्णं धनञ्जयः ।
मद्रराजञ्च राजानमायान्तं पाण्डवान्प्रति । उपहारैर्व्वञ्चयित्वा वर्त्मन्येव सुयोधनः ।
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम । शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ।
शान्तिपूर्व्वं चाकथयद्यत्रेन्द्रविजयं नृपः । पुरोहितप्रेषणञ्च पाण्डवैः कौरवान्प्रति ।
वैचित्रवीर्य्यस्य वचः समादाय पुरोधसः । तथेन्द्रविजयञ्चापि यानञ्चैव पुरोधसः । ५००
सञ्जयं प्रेषयामास शमार्थी पाण्डवान्प्रति । यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् ।
श्रुत्वा च पाण्डवान्यत्र वासुदेवपुरोगमान् । प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया ।
विदुरो यत्र वाक्यानि विचित्राणि हितानि च । श्रावयामास राजानं धृतराष्ट्रं मनीषिणं ।
तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमं । मनस्तापान्वितो राजा श्रावितः शोकलालसः ।
प्रभाते राजसमितौ सञ्जयो यत्र वा विभोः । ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्ज्जुनस्य च । ५०५
यत्र कृष्णो दयापन्नः सन्धिमिच्छन्महामतिः । स्वयमागाच्छमं कर्त्तुं नगरं नागसाह्वयं ।
प्रत्याख्यानञ्च कृष्णस्य राज्ञा दुर्य्योधनेन वै । शमार्थे याचमानस्य पक्षयोरुभयोर्हितं ।
दम्भोद्भवस्य चाख्यानमत्रैव परिकीर्त्तितं । वरान्वेषणमत्रैव मातलेश्च महात्मनः ।
महर्षेश्चापि चरितं कथितं गालवस्य वै । विदुलायाश्च पुत्रस्य प्रोक्तं चाप्यनुशासनं ।
कर्ण दुर्य्योधनादीनां दुष्टं विज्ञाय मन्त्रितं । योगेश्वरत्वं कृष्णेन यत्र राज्ञां प्रदर्शितं । ५१०
रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः । उपायपूर्व्वं शौटीर्य्यात्प्रत्याख्यातश्च तेन सः ।
आगम्य हास्तिनपुरादुपप्लव्यमरिन्दमः । पाण्डवानां यथावृत्तं सर्व्वमाख्यातवान् हरिः ।
ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितं । सांग्रामिकं ततः सर्व्वं सज्जं चक्रुः परन्तपाः ।
ततो युद्धाय निर्य्याता नराश्वरथदन्तिनः । नगराद्धास्तिनपुराद्बलसंख्यानमेव च ।
यत्र राज्ञा ह्युलूकस्य प्रेषणं पाण्डवान्प्रति । श्वोभाविनि महायुद्धे दौत्येन कृतवान् प्रभुः । ५१५
रथातिरथसंख्यानमम्बोपाख्यानमेव च । एतत्सुबहुवृत्तान्तं पञ्चमं पर्व्व भारते ।
उद्योगपर्व्व निर्द्दिष्टं सन्धिविग्रहमिश्रितं । अध्यायानां शतं प्रोक्तं षडशीतिर्महर्षिणा ।
श्लोकानां षट्सहस्राणि तावन्त्येव शतानि च । श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना ।
व्यासेनोदारमतिना पर्व्वण्यस्मिंस्तपोधनाः । अतः परं विचित्रार्थं भीष्मपर्व्व प्रचक्षते ।
जम्बूखण्डविनिर्म्माणं यत्रोक्तं सञ्जयेन ह । यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परं । ५२०
यत्र युद्धमभूद्घोरं दशाहानि सुदारुणं । कश्मलं यत्र पार्थस्य वासुदेवो महामतिः ।
मोहजं नाशयामास हेतुभिर्म्मोक्षदर्शिभिः । समीक्ष्याधोक्षजः क्षिप्रं युधिष्ठिरहिते रतः ।
रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः । प्रतोदपाणिराधावद्भीष्मं हन्तुं व्यपेतभीः ।
वाक्यप्रतोदाभिहतो यत्र कृष्णेन पाण्डवः । गाण्डीवधन्वा समरे सर्व्वशस्त्रभृतां वरः ।

शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः। विनिघ्नन्निशितैर्वाणैरथाद्भीष्ममपातयत्। ५२५
शरतल्पगतश्चैव भीष्मो यत्र बभूव ह। षष्ठमेतत्समाख्यातं भारते पर्व्व विस्तृतं।
अध्यायानां शतं प्रोक्तं तथासप्त दशापरे। पञ्चश्लोकसहस्राणि संख्ययाऽष्टौ शतानि च।
श्लोकाश्च चतुरशीतिरस्मिन्पर्व्वणि कीर्त्तिताः। व्यासेन वेदविदुषा संख्याता भीष्मपर्व्वणि।
द्रोणपर्व्व ततश्चित्रं बहुवृत्तान्तमुच्यते। सैनापत्येऽभिषिक्तोऽथ यत्राचार्य्यः प्रतापवान्।
दुर्य्योधनस्य प्रीत्यर्थं प्रतिजज्ञे महास्त्रवित्। ग्रहणं धर्म्मराजस्य पाण्डुपुत्रस्य धीमतः। यत्र संशप्तकाः पार्थमप
निन्यूरणाजिरात्। ५३०
भगदत्तो महाराजो यत्र शक्रसमो युधि। सुप्रतीकेन नागेन स हि शान्तः किरीटिना।
यत्राभिमन्युं बहवो जघ्नुरेकं महारथाः। जयद्रथमुखा बालं शूरमप्राप्तयौवनं।
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे। अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः।
यत्र भीमो महाबाहुः सात्यकिश्च महारथः। अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया। प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि।
संशप्तकावशेषञ्च कृतं निःशेषमाहवे। अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्य्यवान्। ५३५
सौमदत्तिर्व्विराटश्च द्रुपदश्च महारथः। घटोत्कचादयश्चान्ये निहता द्रोणपर्व्वणि।
अश्वत्थामाऽपि चात्रैव द्रोणे युधि निपातिते। अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः।
आग्नेयं कीर्त्यते यत्र रुद्रमाहात्म्यमुत्तमं। व्यासस्य चाप्यागमनं माहात्म्यं कृष्णपार्थयोः।
सप्तमं भारते पर्व्व महदेतदुदाहृतं। यत्र ते पृथिवीपालाः प्रायशो निधनं गताः।
द्रोणपर्व्वणि ये शूरा निर्द्दिष्टाः पुरुषर्षभाः। अत्राध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः। ५४०
अष्टौश्लोकसहस्राणि तथानवशतानि च। श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना। पाराशर्य्येणमुनिनासञ्चिन्त्य द्रोणपर्व्वणि।
अतः परं कर्णपर्व्वप्रोच्यते परमाद्भुतं। सारथ्ये विनियोगश्च मद्रराजस्य धीमतः।
आख्यातं यत्र पौराणं त्रिपुरस्य निपातनं। प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः। हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितं।
वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना। दण्डसेनस्य च ततो दण्डस्य च वधस्तथा।
द्वैरथे यत्र कर्णेन धर्म्मराजो युधिष्ठिरः। संशयं गमितो युद्धे मिषतां सर्व्वधन्विनां। ५४५
अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः। यत्रैवानुनयः प्रोक्तो माधवेनार्ज्जुनस्य हि।
प्रतिज्ञापूर्व्वकञ्चापि वक्षो दुःशासनस्य च। भित्त्वा वृकोदरो रक्तं पीतवान्यत्र संयुगे।
द्वैरथे यत्र पार्थेन हतः कर्णो महारथः। अष्टमं पर्व्व निर्द्दिष्टमेतद्भारतचिन्तकैः।
एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्व्वणि। चत्वार्य्येव सहस्राणि नव श्लोकशतानि च।
चतुःषष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन्प्रकीर्त्तिताः। अतः परं विचित्रार्थं शल्यपर्व्व प्रकीर्त्तितं। ५५०
हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत्। वृत्तानि रथयुद्धानि कीर्त्त्यन्ते यत्र भागशः।
विनाशः कुरुमुख्यानां शल्यपर्व्वणि कीर्त्यते। शल्यस्य निधनं चात्र धर्म्मराजान्महात्मनः।
शकुनेश्च वधोऽत्रैव सहदेवेन संयुगे। सैन्ये च हतभूयिष्ठे किञ्चिच्छिष्टे सुयोधनः।

ह्रदं प्रविश्य यत्रासौ संस्तभ्यापोव्यवस्थितः। प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः।
क्षेपयुक्तैर्वचोभिश्च धर्म्मराजस्य धीमतः। ह्रदात्समुत्थितो यत्र धार्त्तराष्ट्रोऽत्यमर्षणः। ५५५
भीमेन गदया युद्धं यत्रासौ कृतवान्सह। समवाये च युद्धस्य रामस्यागमनं स्मृतं।
सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्त्तिता। गदायुद्धञ्च तुमुलमत्रैव परिकीर्त्तितं।
दुर्य्योधनस्य राज्ञोऽथ यत्र भीमेन संयुगे। ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया।
नवमं पर्व्व निर्द्दिष्टमेतदद्भुतमर्थवत्। एकोनषष्टिरध्यायाः पर्व्वण्यत्र प्रकीर्त्तिताः।
संख्याता बहुवृत्तान्ताः श्लोकसंख्याऽत्र कथ्यते। त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा। ५६०
मुनिना सम्प्रणीतानि कौरवाणां यशोभृता। अतः परं प्रवक्ष्यामि सौप्तिकं पर्व दारुणं।
भग्नोरुं यत्र राजानं दुर्य्योधनममर्षणं। अपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः। कृतवर्म्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितं।
समेत्य ददृशुर्भूमौ पतितं रणमूर्द्धनि। प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः।
अहत्वा सर्व्वपाञ्चालान् धृष्टद्युम्नपुरोगमान्। पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनं।
यत्रैव मुक्त्वा राजानमपक्रम्य त्रयोरथाः। सूर्य्यास्तमनवेलायामासेदुस्ते महद्वनं। ५६५
न्यग्रोधस्याथ महतो यत्राधस्ताद्व्यवस्थिताः। ततः काकान् बहून् रात्रौ दृष्ट्वोलूकेन हिंसितान्।
द्रौणिः क्रोधसमाविष्टः पितुर्वधमनुस्मरन्। पाञ्चालानां प्रसुप्तानां वधं प्रति मनो दधे।
गत्वा च शिविरद्वारि दुर्द्दर्शं तत्र राक्षसं। घोररूपमपश्यत्स दिवमावृत्य धिष्ठितं।
तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च। द्रौणिर्यत्र विरूपाक्षं रुद्रमाराध्य सत्वरः।
प्रसुप्तान्निशि विश्वस्तान्धृष्टद्युम्नपुरोगमान्। पाञ्चालान् सपरीवारान्द्रौपदेयांश्च सर्व्वशः। कृतवर्म्मणा च सहितः कृपेण च
विजघ्निवान्। ५७०
यत्रामुच्यन्त ते पार्थाः पञ्च कृष्णबलाश्रयात्। सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः।
पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः। धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः।
द्रौपदीपुत्रशोकार्त्ता पितृभ्रातृवधार्द्दिता। कृतानशनसङ्कल्पा यत्र भर्त्तॄनुपाविशत्।
द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः। प्रियं तस्याश्चिकीर्षन्वै गदामादाय वीर्य्यवान्। अन्वधावत् सुसंक्रुद्धो भारद्वाज
गुरोः सुतं।
भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः। अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत्। ५७५
मैवमित्यब्रवीत्कृष्णः शमयंस्तस्य तद्वचः। यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः।
द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा। द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः।
मणिं तथा समादाय द्रोणपुत्रान्महारथात्। पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः।
एतद्वै दशमं पर्व्व सौप्तिकं समुदाहृतं। अष्टादशास्मिन्नध्यायाः पर्व्वण्युक्ता महात्मना।
श्लोकानां कथितान्यत्र शतान्यष्टौ प्रसंख्यया। श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना। ५८०
सौप्तिकैषीकसंबद्धे पर्व्वण्युत्तमतेजसा। अत ऊर्द्ध्वमिदं प्राहुः स्त्रीपर्व्व करुणोदयं।

पुत्रशोकाभिसन्तप्तः प्रज्ञाचक्षुर्नराधिपः। कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढां। भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्जह।

तथा शोकाभितप्तस्य धृतराष्ट्रस्य धीमतः। संसारगहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः।

विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतं। धृतराष्ट्रस्य चात्रैव कौरवायोधनं तथा। सान्तःपुरस्य गमनं शोकार्त्तस्य प्रकीर्त्तितं।

विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः। क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः। ८५

यत्र तान् क्षत्रियाः शूरान् संग्रामेष्वनिवर्त्तिनः। पुत्रान् भ्रातॄन् पितॄंश्चैव ददृशुर्निहतान् रणे।

पुत्रपौत्रवधार्त्तायास्तथाऽत्रैव प्रकीर्त्तिताः। गान्धार्य्याश्चापि कृष्णेन क्रोधोपशमनक्रिया।

यत्र राजा महाप्राज्ञः सर्व्वधर्म्मभृतां वरः। राज्ञां तानि शरीराणि दाहयामास शास्त्रतः।

तोयकर्म्मणि चारब्धे राज्ञामुदकदानिके। गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः।

सूतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा। एतदेकादशं पर्व्व शोकवैक्लव्यकारकं। ९०

प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्त्तकं। सप्तविंशतिरध्यायाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः।

श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता। संख्यया भारताख्यानमुक्तं व्यासेन धीमता।

अतः परं शान्तिपर्व्व द्वादशं बुद्धिवर्द्धनं। यत्र निर्व्वेदमापन्नो धर्म्मराजो युधिष्ठिरः। घातयित्वा पितॄन् भ्रातॄन् पुत्रान् सम्बन्धि मातुलान्।

शान्तिपर्व्वणि धर्म्माश्च व्याख्याताः शारतल्पिकाः। राजभिर्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः।

आपद्धर्म्माश्च तत्रैव कालहेतुप्रदर्शिनः। यान्बुद्ध्वा पुरुषः सम्यक् सर्व्वज्ञत्वमवाप्नुयात्। ९५

मोक्षधर्म्माश्च कथिता विचित्रा बहुविस्तराः। द्वादशं पर्व्व निर्द्दिष्टमेतत्प्राज्ञजनप्रियं।

अत्र पर्व्वणि विज्ञेयमध्यायानां शतत्रयं। त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः।

चतुर्द्दशसहस्राणि तथा सप्तशतानि च। सप्त श्लोकास्तथैवात्र पञ्चविंशति संख्यया।

अत ऊर्द्ध्वञ्च विज्ञेयमनुशासनमुत्तमं। यत्र प्रकृतिमापन्नः श्रुत्वा धर्म्मविनिश्चयं। भीष्माद्भागीरथीपुत्रात्कुरुराजो युधिष्ठिरः।

व्यवहारोऽत्र कार्त्स्न्येन धर्म्मार्थीयः प्रकीर्त्तितः। विविधानाञ्च दानानां फलयोगाः प्रकीर्त्तिताः। १००

तथापात्रविशेषाश्च दानानाञ्च परो विधिः। आचारविधियोगश्च सत्यस्य च परा गतिः।

महाभाग्यं गवाञ्चैव ब्राह्मणानां तथैव च। रहस्यञ्चैव धर्म्माणां देशकालोपसंहितं।

एतत्सुबहुवृत्तान्तमुत्तमं चानुशासनं। भीष्मस्यात्रैव सम्प्राप्तिः स्वर्गस्य परिकीर्त्तिता।

एतत्त्रयोदशं पर्व्व धर्म्मनिश्चयकारकं। अध्यायानां शतन्त्वत्र षट्चत्वारिंशदेव तु।

श्लोकानान्तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया। ततोऽश्वमेधिकं नाम पर्व्व प्रोक्तं चतुर्द्दशं। १०५

तत्संवर्त्तमरुत्तीयं यत्राख्यानमनुत्तमं। सुवर्णकोषसम्प्राप्तिर्जन्म चोक्तं परीक्षितः। दग्धस्यास्त्राग्निना पूर्व्वं कृष्णात्सञ्जीवनं पुनः।

चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः। तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः।

चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनञ्जयः। संग्रामे बभ्रुवाहेण संशयं चात्र दर्शितं।

अश्वमेधे महायज्ञे नकुलाख्यानमेव च। इत्याश्वमेधिकं पर्व्व प्रोक्तमेतन्महाद्भुतं।

अध्यायानां शतञ्चैव त्रयोऽध्यायाश्च कीर्त्तिताः। त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च। विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना। ११०

ततस्त्वाश्रमवासाख्यं पर्व पञ्चदशं स्मृतं । यत्र राज्यं समुत्सृज्य गान्धार्य्यासहितो नृपः । धृतराष्ट्रोऽश्रमपदं विदुरश्च जगाम ह ।
यं दृष्ट्वा प्रस्थितं साध्वी पृथाऽप्यनुययौ तदा । पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता ।
यत्र राजा हतान्पुत्रान्पौत्रानन्यांश्च पार्थिवान् । लोकान्तरगतान् वीरानपश्यत्पुनरागतान् ।
ऋषेः प्रसादात्कृष्णस्य दृष्ट्वाश्चर्य्यमनुत्तमं । त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः ।
यत्र धर्म्मं समाश्रित्य विदुरः सुगतिं गतः । सञ्जयश्च महामात्यो विद्वान्गावल्गणिर्व्वशी । ३१५
ददर्श नारदं यत्र धर्म्मराजो युधिष्ठिरः । नारदाच्चैव शुश्राव वृष्णीनां कदनं महत् ।
एतदाश्रमवासाख्यं पर्व्वोक्तं सुमहाद्भुतं । द्विचत्वारिंशदध्यायाः पर्व्वैतदभिसंख्यया ।
सहस्रमेकं श्लोकानां पञ्चश्लोकशतानि च । षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ।
अतः परं निबोधेदं मौषलं पर्व्व दारुणं । यत्रते पुरुषव्याघ्राः शस्त्रस्पर्शसहा युधि । ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः ।
आपानेपानकलिता दैवेनाभिप्रचोदिताः । एरकारूपिभिर्व्वज्रैर्निजघ्नुरितरेतरं । ३२०
यत्र सर्व्वक्षयं कृत्वा तावुभौ रामकेशवौ । नातिचक्रमतुः कालं प्राप्तं सर्व्वहरं महत् ।
यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृतां । दृष्ट्वा विषादमगमत्परां चार्त्तिं नरर्षभः ।
स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः । ददर्श यदुवीराणामापाने वैशसं महत् ।
शरीरं वासुदेवस्य रामस्य च महात्मनः । संस्कारं लम्भयामास वृष्णीनां च प्रधानतः ।
स वृद्धबालमादाय द्वारवत्यास्ततोजनं । ददर्शापदि कष्टायां गाण्डीवस्य पराभवं । ३२५
सर्व्वेषाञ्चैवदिव्यानामस्त्राणामप्रसन्नतां । नाशं वृष्णिकलत्राणां प्रभावाणामनित्यतां ।
दृष्ट्वा निर्व्वेदमापन्नो व्यासवाक्यप्रचोदितः । धर्म्मराजं समासाद्य सन्न्यासं समरोचयत् ।
इत्येतन्मौषलं पर्व्व षोडशं परिकीर्त्तितं । अध्यायाष्टौ समाख्याताः श्लोकानाञ्च शतत्रयं । श्लोकानां विंशतिश्चैव संख्याता तत्त्व
दर्शिना ।
महाप्रास्थानिकं तस्मादूर्द्ध्वं सप्तदशं स्मृतं । यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः ।
द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः । यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरं । ३३०
यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने । ददौ सम्पूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमं ।
यत्रभ्रातॄन्निपतितान्द्रौपदीं च युधिष्ठिरः । दृष्ट्वा हित्वा जगामैव सर्व्वाननवलोकयन् ।
एतत्सप्तदशं पर्व्व महाप्रास्थानिकं स्मृतं । यत्राध्यायास्त्रयः प्रोक्ताः श्लोकानाञ्च शतत्रयं । विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्व
दर्शिना ।
स्वर्गं पर्व्वततोज्ञेयं दिव्यं यत्तदमानुषं । प्राप्तं दैवरथं स्वर्गान्नेष्टवान्यत्र धर्म्मराट् । आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना ।
तामस्याविचलां ज्ञात्वा स्थितिं धर्म्मे महात्मनः । स्वरूपं यत्र तत्त्यक्त्वा धर्म्मेणासौ समन्वितः । ३३५
स्वर्गं प्राप्तः स च तथा यातनां विपुलां भृशं । देवदूतेन नरकं यत्र व्याजेन दर्शितं ।
शुश्राव यत्र धर्म्मात्मा भ्रातॄणां करुणागिरः । निदेशे वर्त्तमानानांदेशे तत्रैव वर्त्ततां ।
अनुदर्शितश्च धर्म्मेण देवराज्ञा च पाण्डवः । आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषं ।

स्वधर्म्मनिर्जितं स्थानं स्वर्गं प्राप्य स धर्म्मराट्। मुमुदे पूजितः सर्व्वैः सेन्द्रैः सुरगणैः सह।

एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता। अध्यायाः पञ्च संख्याताः पर्व्वण्यस्मिन्महात्मना। १४०

श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः। नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा।

अष्टादशैवमुक्तानि पर्व्वाण्येतान्यशेषतः। खिलेषु हरिवंशश्च भविष्यच्च प्रकीर्त्तितं।

दशश्लोकसहस्राणि विंशत्श्लोकशतानि च। खिलेषु हरिवंशे च संख्यातानि महर्षिणा।

एतत्सर्व्वं समाख्यातं भारते पर्व्व संग्रहः। अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया। तन्महादारुणं युद्धमहान्यष्टादशाभवत्।

योविद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः। नचाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः। १४५

अर्थशास्त्रमिदं प्रोक्तं धर्म्मशास्त्रमिदं महत्। कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना।

श्रुत्वा त्विदमुपाख्यानं श्रव्यमन्यन्नरोचते। पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव।

इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः। पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः।

अस्याख्यानस्य विषये पुराणं वर्त्तते द्विजाः। अन्तरीक्षस्य विषये प्रजा इव चतुर्विधाः।

क्रियागुणानां सर्व्वेषामिदमाख्यानमाश्रयः। इन्द्रियाणां समस्तानां चित्रा इव मनःक्रिया। १५०

अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते। आहारमनपाश्रित्य शरीरस्येव धारणं।

इदं कविवरैः सर्व्वैराख्यानमुपजीव्यते। उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः।

अस्य काव्यस्य कवयो न समर्था विशेषणे। साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः।

धर्म्मे मति र्भवतु वः सततोत्थितानां स ह्येक एव परलोकगतस्य बन्धुः। अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवाप्तभावमुपयान्ति नच स्थिरत्वं।

द्वैपायनौष्ठपुटनिःसृतमप्रमेयं पुण्यं पवित्रमथपापहरं शिवञ्च। योभारतं समधिगच्छति वाच्यमानं किं तस्य पुष्करजलैरभिषेचनेन। १५५

यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन्। महाभारतमाख्याय सन्ध्यां मुच्यति पश्चिमां।

यद्रात्रौ कुरुते पापं कर्म्मणा मनसा गिरा। महाभारतमाख्याय पूर्व्वां सन्ध्यां प्रमुच्यते।

यो गोशतं कनकशृङ्गमयं ददाति विप्राय वेदविदुषे च बहुश्रुताय। पुण्याञ्च भारतकथां शृणुयाच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव।

आख्यानं तदिदमनुत्तमं महार्थं विज्ञेयं महदिह पर्व्व संग्रहेण। श्रुत्वादौ भवति नृणां सुखावगाहं विस्तीर्णं लवणजलं यथाप्लवेन।

इतिश्री महाभरते आदिपर्व्वणि पर्व्व संग्रहः समाप्तः। २। १६०

---

## अथ पौष्यपर्व्व। ३।

॥ सौतिरुवाच ॥ जनमेजयः पारिक्षितः सहभ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते।

तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति। तेषु तत्सत्रमुपासीनेष्वागच्छत्सारमेयः।

स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत्।

तं माता रोरूयमाणमुवाच। किं रोदिषि केनास्यभिहत इति।

स एवमुक्तो मातरं प्रत्युवाच। जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति। ६६५

तं माता प्रत्युवाच। व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति।

स तां पुनरुवाच। नापराध्यामि किञ्चिन्नावेक्षे हवींषि नावलिह इति।

तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्त्ता तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते।

स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति।

न किञ्चिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टन्त्वां भयमागमिष्यतीति। ६७०

जनमेजय एवमुक्तो देवशुन्या सरमया। भृशं संभ्रान्तो विषण्णश्चासीत्।

स तस्मिन्सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति।

स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित्स्वविषये आश्रममपश्यत्।

तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवानाम तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम।

तस्य तं पुत्रमभिगम्य जनमेजयः पारीक्षितः पौरोहित्याय वव्रे। ६७५

स नमस्कृत्य तमृषिमुवाच। भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति।

स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्य्यसम्भृतो मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ जातः।

समर्थोऽयं भवतः सर्व्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्यां।

अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कञ्चिदर्थमभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति।

तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच। भगवंस्तत्तथा भविष्यतीति। ६८०

स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच। मयाऽयं वृत उपाध्यायो यदयं ब्रूयात्तत्कार्य्यमविचारयद्भिर्भवद्भिरिति।

तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः स तथा भ्रातॄन्सन्दिश्य तक्षशिलां
प्रत्यभिप्रतस्थे तञ्च देशं वशे स्थापयामास।

एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदस्तस्य शिष्यास्त्रयो बभूवुः उपमन्युरारुणिर्वेदश्चेति।

स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति। ६८५

स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशकत्।

स क्लिश्यमानोऽपश्यदुपायं भवत्वेवं करिष्यामीति।

स तत्र संविवेश केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ।

ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् क्व आरुणिः पाञ्चाल्यो गत इति।

ते तं प्रत्यूचुर्भगवंस्त्वयैव प्रेषितोगच्छ केदारखण्डं बधानेति। स एवमुक्तस्तान् शिष्यान्प्रत्युवाच तस्मात्तत्र सर्व्वे गच्छामो यत्र स गत इति। ६९०

स तत्र गत्वा तस्याह्वानाय शब्दञ्चकार। भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति।

स तच्छ्रुत्वारुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डादुत्थायोपाध्यायमुपतस्थे ।

प्रोवाच चैनमयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य्य केदारखण्डं भवन्तमुपस्थितः ।

तदभिवादये भगवन्तमाज्ञापयतु भवान्कमर्थं करवाणीति ।

स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान्केदारखण्डं विदार्य्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान् भविष्यतीत्युपाध्यायेनानुगृहीतः । ६९५

यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि । सर्व्वे एव ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्राणीति ।

स एवमुक्त उपाध्यायेनेष्टं देशं जगाम अथापरः शिष्यस्तस्यैवायोदधौम्यस्योपमन्युर्नाम ।

तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ।

स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढमिति । ७००

स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच ।

मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति । स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत् ।

स तस्मादुपाध्यायः सर्व्वमेव भैक्ष्यमगृह्णात् । स तथेत्युक्तः पुनररक्षद्गाः अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो सर्व्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति ।

स एवमुक्त उपाध्यायं प्रत्युवाच भगवते निवेद्य पूर्व्वमपरं चरामि तेन वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच । ७०५

नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्त्तमानो लुब्धोऽसीति ।

स तथेत्युक्त्वा गा अरक्षत् रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ।

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच वत्सोपमन्यो अहं ते सर्व्वं भैक्ष्यं गृह्णामि नचान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति ।

स एवमुक्तस्तमुपाध्यायं प्रत्युवाच भो एतासां गवां पयसा वृत्तिं कल्पयामीति तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति ।

स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे । ७१०

तमुपाध्यायः पीवानमेव दृष्ट्वोवाच वत्सोपमन्यो भैक्ष्यं नाश्नासि नचान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति ।

स एवमुक्त उपाध्यायं प्रत्युवाच भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान्पिबन्त उद्गिरन्ति ।

तमुपाध्यायः प्रत्युवाच एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्त्तमानः फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य पुनररक्षद्गाः ।

तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति नचान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्त्तो ऽर्कपत्राण्यभक्षयत् । ७१४

स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ततः सोऽन्धोऽपि चंक्रम्यमाणः कूपे पपात।

अथ तस्मिन्ननागच्छति सूर्य्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् नायात्युपमन्युः त ऊचुर्वनं गतो गारक्षितुमिति तानाह उपाध्यायः।

मयोपमन्युः सर्व्वतः प्रतिषिद्धः स नियतं कुपितस्ततोनागच्छति चिरं ततोऽन्विष्य इत्येवमुक्त्वा शिष्यैः सार्द्धमरण्यं गत्वा तस्याह्वा नाय शब्दं चकार भो उपमन्यो क्वासि वत्सैहीति।

स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन् कूपे पतितोऽहमिति तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन् कूपे पतित इति।

स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वाऽन्धीभूतोऽस्म्यतः कूपे पतित इति। ७२०

तमुपाध्यायः प्रत्युवाच। अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्त्ताराविति स एवमुक्त उपाध्यायेनोपमन्युरश्विनौ स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिर्ऋग्भिः।

प्रपूर्व्वगौ पूर्व्वजौ चित्रभानू गिरा वाशंसामि तपसा ह्यनन्तौ दिव्यौ सुपर्णौ विरजौ विमानावधिक्षियन्तौ भुवनानि विश्वा।

हिरण्मयौ शकुनी साम्परायौ नासत्यदस्रौ सुनसौ वै जयन्तौ। शुक्लं वयन्तौ तरसा सुवेमावधिव्ययन्तावसितं विवस्वतः।

ग्रस्तां सुपर्णस्य बलेन वर्त्तिकाममुञ्चतामश्विनौ सौभगाय। तावत्सुवृत्तावनमन्त मायया वसत्तमा गा अरुणाउदाऽवहन्।

षष्टिश्च गावस्त्रिशतास्च धेनव एकं वत्सं सुवते तं दुहन्ति। नानागोष्ठाविहिता एकदोहनास्तावश्विनौ दुहतो घर्म्ममुक्थ्यं। ७२५

एकां नाभिं सप्तशता अराः श्रिता प्रधिष्वन्या विंशतिरर्पिता अराः। अनेमिचक्रं परिवर्त्ततेऽजरं मायाऽश्विनौ समनक्ति चर्षणी।

एकं चक्रं वर्त्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणं। यस्मिन्देवा अधिविश्वेविषक्तास्तावश्विनौ मुञ्चतो मा विषीदतं।

अश्विनाविन्दुममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी। हित्वा गिरिमश्विनौ गा मुदा चरन्तौ तद्दृष्टि मह्ना प्रस्थितौ वलस्य।

युवां दिशोजनयथो दशाग्रे समानं मूर्द्ध्नि रथयातं वियन्ति। तासां यातमृषयोऽनु प्रयान्ति देवामनुष्याः क्षितिमाचरन्ति।

युवांवर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्ते भुवनानि विश्वा। ते भानवोऽप्यनुसृतास्चरन्ति देवामनुष्याः क्षितिमाचरन्ति। ७३०

तौ नासत्यावश्विनौ वां महेऽहं स्रजंच यां बिभ्रथः पुष्करस्य। तौ नासत्यावमृतावृतावृधावृते देवास्तत्प्रपदे न सूते।

मुखेन गर्भं लभेतां युवानौ गतासुरेतत्प्रपदे न सूते। सद्योजातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चथो जीवसे गाः।

इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एषतेऽपूपोऽशानैनमिति।

सएवमुक्तः प्रत्युवाच नानृतपूर्व्वमूचतुर्भगवन्तौ। नत्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति।

ततस्तमश्विनावूचतुः आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे त्वमपि तथैव कुरुष्व यथाकृतमुपाध्यायेनेति। ७३५

सएवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमेनमुपयोक्तुमिति।

तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति।

स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत् आचचक्षे च तस्य प्रीतिमांश्चाभूत् आह चैनं
यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति ।

सर्व्वे च ते वेदाः प्रतिभास्यन्ति सर्व्वाणि च धर्म्मशास्त्राणीति एषा तस्यापि परीक्षोपमन्योः ।

अथापरः शिष्यस्तस्यैवायोदधौम्यस्य वेदोनाम तमुपाध्यायः समादिदेश वत्स वेद इहास्यतां तावन्मम गृहे कञ्चित्कालं
शुश्रूषुणा च भवितव्यं श्रेयस्ते भविष्यतीति ।          ७४०

स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् गौरिव नित्यं गुरुषु धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः
सर्व्वत्राप्रतिकूलस्तस्य महता कालेन गुरुः परितोषं जगाम ।

तत्परितोषाच्च श्रेयः सर्व्वज्ञतां चावाप एष तस्यापि परीक्षा वेदस्य ।

स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत ।

तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः स शिष्यान्न किञ्चिदुवाच कर्म्म वा क्रियतां गुरुशुश्रूषा वेति ।

दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष ।          ७४५

अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्य वरयित्वोपाध्यायं चक्रतुः ।

स कदाचिद्याज्यकार्य्येणाभिप्रस्थित उतङ्कनामानं शिष्यं नियोजयामास ।

भो यत्किञ्चिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीयमाणं भवता क्रियमाणमिति स एवं प्रतिसन्दिश्योतङ्कं वेदः प्रवासं
जगाम ।

अथोतङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसतिस्म स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः ।

उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियतामेषा विषीदतीति ।          ७५०

एवमुक्तस्ताः स्त्रियः प्रत्युवाच न मया स्त्रीणां वचनादिदमकार्य्यं करणीयं न ह्यहमुपाध्यायेन सन्दिष्टोऽकार्य्यमपि त्वया
कार्य्यमिति ।

तस्य पुनरुपाध्यायः कालान्तरेण गृहमाजगाम तस्मात्प्रवासात् स तु तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमानभूत् ।

उवाच चैनं वत्सोतङ्क किन्ते प्रियं करवाणीति धर्म्मतो हि शुश्रूषितोऽस्मि भवता तेन प्रीतिः परस्परेण नौ सम्वृद्धा तदनुजाने
भवन्तं सर्व्वानेव कामानवाप्स्यसि गम्यतामिति ।

स एवमुक्तः प्रत्युवाच किन्ते प्रियं करवाणीति एवमाहुः ।

यश्चाधर्म्मेण वै ब्रूयाद्यश्चाधर्म्मेण पृच्छति तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ।          ७५५

सोऽहमनुज्ञातो भवता इच्छामीष्टं गुर्व्वर्थमुपहर्त्तुमिति तेनैवमुक्त उपाध्यायः प्रत्युवाच वत्सोतङ्क उष्यतां तावदिति ।

स कदाचिदुपाध्यायमाहोतङ्कः आज्ञापयतु भवान् किं ते प्रियमुपहरामि गुर्व्वर्थमिति ।

तमुपाध्यायः प्रत्युवाच वत्सोतङ्क बहुशो मां चोदयसि गुर्व्वर्थमुपाहरामीति तद्गच्छैनां प्रविश्योपाध्यायानीं पृच्छ किमुपहरा
मीति एषा यद्ब्रवीति तदुपाहरस्वेति स एवमुक्त उपाध्यायेनोपाध्यायानीमपृच्छत् भगवत्युपाध्यायेनास्म्यनुज्ञातो
गृहं गन्तुमिच्छामीष्टं ते गुर्व्वर्थमुपहृत्यानृणो गन्तुमिति ।

तदाज्ञापयतु भवती किमुपहरामि गुर्व्वर्थमिति सैवमुक्तोपाध्यायानी तमुतङ्कं प्रत्युवाच गच्छ पौष्यं प्रति राजानं कुण्डले
भिक्षितुं तस्य क्षत्रियया पिनद्धे ।

तेनानीयमाने चतुर्थेऽहनि पुण्यकं भविता ताभ्यामाबद्धाभ्यां शोभमाना ब्राह्मणान्परिवेष्टुमिच्छामि तत्सम्पादयस्व एवं हि कुर्व्वतः श्रेयोभविताऽन्यथा कुतः श्रेय इति। ७६०

स एवमुक्तस्तया प्रातिष्ठतोतङ्कः स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तमधिरूढञ्च पुरुषमतिप्रमाणमेव स पुरुष उतङ्कमभ्यभाषत।

भो उतङ्कैतत्पुरीषमस्य ऋषभस्य भक्षयस्वेति स एवमुक्तो नैच्छत्।

तमाह पुरुषो भूयोभक्षयस्वोतङ्क माविचारयोपाध्यायेनापि ते भक्षितं पूर्व्वमिति।

स एवमुक्तो वाढमित्युक्ता तदा तदृषभस्य मूत्रं पुरीषञ्च भक्षयित्वोतङ्कः स संभ्रमादुत्थित एवापोऽपस्पृश्य प्रतस्थे।

यत्र स क्षत्रियः पौष्यस्तमुपेत्यासीनमपश्यदुतङ्कं स उतङ्कस्तमुपेत्याशीर्भिरभिनंद्योवाच।

अर्थी भवन्तमुपागतोऽस्मीति स एनमभिवाद्योवाच भगवन्पौष्यः खल्वहं किङ्करवाणीति। ७६५

स तमुवाच गुर्व्वर्थं कुण्डलयोरर्थेनाभ्यागतोऽस्मीति ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति।

तं प्रत्युवाच पौष्यः प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत्।

स पौष्यं पुनरुवाच न युक्तं भवताहमनृतेनोपचरितुं नहि तेऽन्तःपुरे क्षत्रिया सन्निहिता नैनां पश्यामि।

स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योतङ्कं प्रत्युवाच नियतं भवानुच्छिष्टः स्मर न ताव्वत् हि सा क्षत्रिया उच्छिष्टेनाशुचिना शक्या द्रष्टुं पतिव्रतात्वात् सैषा नाशुचेर्दर्शनमुपैतीति। ७७०

अथैवमुक्त उतङ्कः स्मृत्वोवाचास्ति खलु मयोत्थितेनोपस्पृष्टं शीघ्रं गच्छता चेति तं पौष्यः प्रत्युवाच एष ते व्यतिक्रमो नोत्थितेनोपस्पृष्टं भवतीति शीघ्रं गच्छताचेति।

अथोतङ्कस्तं तथेत्युक्ता प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिःपीत्वा द्विःपरिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश।

ततस्तां क्षत्रियामपश्यत् सा च दृष्ट्वैवोतङ्कं प्रत्युत्थायाभिवाद्योवाच स्वागतं ते भगवन्नाज्ञापय किङ्करवाणीति।

स तामुवाचैते कुण्डले गुर्व्वर्थं मे भिक्षिते दातुमर्हसीति सा प्रीता तेन तस्य सद्भावेन पात्रोयमनतिक्रमणीयश्चेति मत्वा ते कुण्डलेऽवमुच्यास्मै प्रायच्छदाह चैनमेते कुण्डले तक्षको नागराजः सुभृशं प्रार्थयत्यप्रमत्तो नेतुमर्हसीति।

स एवमुक्तस्तां क्षत्रियां प्रत्युवाच भवती सुनिर्वृत्ता भव न मां शक्तस्तक्षको नागराजो धर्षयितुमिति। ७७५

स एवमुक्ता तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् आह चैनं भोः पौष्य प्रीतोऽस्मीति तमुतङ्कं पौष्यः प्रत्युवाच।

भगवंश्चिरेण पात्रमासाद्यते भवांश्च गुणवानतिथिस्तदिच्छे श्राद्धं कर्त्तुं क्रियतां क्षण इति।

तमुतङ्कः प्रत्युवाच कृतक्षण एवास्मि शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतं भवतेति स तथेत्युक्ता यथोपपन्नेनान्नेनैनं भोजयामास।

अथोतङ्कः सकेशं शीतमन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच यस्मान्मे अशुच्यन्नं ददासि तस्मादन्धो भविष्यसीति।

तं पौष्यः प्रत्युवाच यस्मात्त्वमप्यदुष्टमन्नं दूषयसि तस्मात्त्वमनपत्योभविष्यसीति तमुतङ्कः प्रत्युवाच। ७८०

न युक्तं भवतान्नमशुचि दत्वा प्रतिशापं दातुं तस्मादन्नमेव प्रत्यक्षीकुरु ततः पौष्यस्तदन्नमशुचि दृष्ट्वा तस्याशुचिभावमपरोक्षयामास।

अथ तदन्नं मुक्तकेश्याप्रियया यत्तमनुष्णं सकेशं चाशुच्येतदिति मत्वा तमृषिमुतङ्कं प्रसादयामास।

भगवन्नेतदज्ञानादन्नं सकेशमुपाहृतं शीतं तत्क्षामये भवन्तं न भवेयमन्ध इति तमुतङ्कः प्रत्युवाच।

न मृषा ब्रवीमि भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसीति ममापि शापो भवता दत्तो न भवेदिति।

तं पौष्यः प्रत्युवाच नाहं शक्तः शापं प्रत्यादातुं नहि मे मन्युरद्याप्युपशमङ्गच्छति किञ्चैतद्भवता न ज्ञायते यथा। ७८५

नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः। तदुभयमेतद्विपरीतं क्षत्रियस्य वाङ्नवनीतं हृदयं तीक्ष्णधारमिति।

तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथाकर्त्तुं गम्यतामिति तमुतङ्कः प्रत्युवाच भवताहमन्नस्याशुचिभावमा
लक्ष्य प्रत्यनुनीतः प्राक्ते ऽभिहितं।

यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति। दुष्टे चान्ने नैव मम शापो भविष्यतीति।

साधयामस्तावदित्युक्त्वा प्रातिष्ठतोतङ्कः ते कुण्डले गृहीत्वा सोऽपश्यदथ पथि नग्नं क्षपणकमागच्छन्तं मुहुर्मुहुर्दृश्य
मानमदृश्यमानञ्च।

अथोतङ्कस्ते कुण्डले सन्न्यस्य भूमावुदकार्थं प्रचक्रमे एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा
प्राद्रवत्। ७९०

तमुतङ्कोऽभिसृत्य कृतोदककार्य्यः शुचिः प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात्।

तस्य तक्षको दृढमासन्नः स तं जग्राह गृहीतमात्रः स तद्रूपं विहाय तक्षकस्वरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं
प्रविवेश।

प्रविश्य च नागलोकं स्वभवनमगच्छत् अथोतङ्कस्तस्याः क्षत्रियाया वचः स्मृत्वा तं तक्षकमन्वगच्छत्।

स तद्बिलं दण्डकाष्ठेन चखान न चाशकत् तं क्लिश्यमानमिन्द्रोऽपश्यत्स वज्रं प्रेषयामास।

गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्वेति। अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत्। ७९५

तमुतङ्कोऽनुविवेश तेनैव बिलेन प्रविश्य च तं नागलोकमपर्य्यन्तमनेकविधप्रासादहर्म्यवलभीनिर्य्यूहशतसङ्कुलमुच्चावचक्रीडाश्चर्य्य
स्थानाकीर्णमपश्यत्।

स तत्र नागांस्तानस्तुवदेभिः श्लोकैः ये ऐरावतराजानः सर्पाः समितिशोभनाः। क्षरन्त इव जीमूताः सविद्युत्पवनेरिताः।

सुरूपा बहुरूपाश्च तथाकल्माषकुण्डलाः। आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः।

बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे। तत्रस्थानपि संस्तौमि महतः पन्नगानहं।

इच्छेत्कोऽर्क्कांशुसेनायां चर्त्तुमैरावतं विना। शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः। सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रोऽय
मेजति। ८००

ये चैनमुपसर्पन्ति ये च दूरपथङ्गताः। अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः।

यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्पुरा। तं नागराजमस्तौषं कुण्डलार्थाय तक्षकं।

तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ। कुरुक्षेत्रे च वसतां नदीमिक्षुमतीमनु।

जघन्यजस्तक्षकस्य श्रुतसेनेति यः सुतः। अवसद्यो महद्युम्नि प्रार्थयन्नागमुख्यतां। करवाणि सदा चाहं नमस्तस्मै महात्मने।

एवं स्तुत्वा स विप्रर्षिरुतङ्को भुजगोत्तमान्। नैव ते कुण्डले लेभे ततश्चिन्तामुपागमत्। ८०५

एवं स्तुवन्नपि नागान् यदा ते कुण्डले नालभत्तदाऽपश्यत् स्त्रियौ तन्त्रे अधिरोप्य सुवेमे पटं वयन्त्यौ तस्मिंस्तन्त्रे कृष्णाः
सिताश्च तन्तवश्चक्रं चापश्यत् द्वादशारं षड्भिः कुमारैः परिवर्त्त्यमानं पुरुषं चापश्यदश्वञ्च दर्शनीयं।

स तान् सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः।

त्रीण्यर्पितान्यत्र शतानि मध्ये षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन्। चक्रे चतुर्व्विंशतिपर्व्वयोगे षड्वै कुमाराः परिवर्त्तयन्ति।
तन्त्रञ्चेदं विश्वरूपे युवत्यौ वयतस्तन्तून् सततं वर्त्तयन्त्यौ कृष्णान्सितांश्चैव विवर्त्तयन्त्यौ भूतान्यजस्रं भुवनानि चैव।
वज्रस्य भर्त्ता भुवनस्य गोप्ता वृत्रस्य हन्ता नमुचेर्न्निहन्ता। कृष्णे वसानो वसनेमहात्मा सत्यानृते योविविनक्तिलोके। ८१०
यो वाजिनं गर्भमपां पुराणं वैश्वानरं वाहनमभ्युपैति। नमोऽस्तु तस्मै जगदीश्वराय लोकत्रयेशाय पुरन्दराय।

ततः स एनं पुरुषः प्राह प्रीतोऽस्मि तेऽहमनेन स्तोत्रेण किन्ते प्रियं करवाणीति स तमुवाच।

नागा मे वशमीयुरिति स चैनं पुरुषः पुनरुवाच एतमश्वमपाने धमस्वेति।

ततोऽश्वस्यापानमधमत्ततोऽश्वाद्धम्यमानात्सर्व्वस्रोतोभ्यः पावकार्च्चिषः सधूमा निष्पेतुः।

ताभिर्नागलोक उपधूपितेऽथ संभ्रान्तस्तक्षकोऽग्नेस्तेजोभयाद्विषण्णः कुण्डले गृहीत्वा सहसा भवनान्निष्क्रम्योतङ्कमुवाच। ८१५

इमे कुण्डले गृह्णातु भवानिति स ते प्रतिजग्राहोतङ्कः प्रतिगृह्य च कुण्डलेऽचिन्तयत्।

अद्य तत्पुण्यकमुपाध्यायान्या दूरं चाहमभ्यागतः स कथं सम्भावयेयमिति तत एनं चिन्तयानमेव सपुरुष उवाच।

उतङ्क एनमेवाश्वमधिरोह त्वां क्षणेनैवोपाध्यायकुलं प्रापयिष्यतीति।

स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलं उपाध्यायानी च स्नाता केशानावापयन्त्युपविष्टोतङ्को नागच्छतीति
शापायास्य मनोदधे।

अथैतस्मिन्नन्तरे स उतङ्कः प्रविश्योपाध्यायगृहं उपाध्यायानीमभ्यवादयत् तेचास्यै कुण्डले प्रायच्छत्सा चैनं प्रत्युवाच। ८२०

उतङ्क देशकालेऽभ्यागतः स्वागतं ते वत्स त्वमनागसि मया न शप्तः श्रेयस्तवोपस्थितं सिद्धिमाप्नुहीति।

अथोतङ्क उपाध्यायमभ्यवादयत् तमुपाध्यायः प्रत्युवाच वत्सोतङ्क स्वागतं ते किं चिरं कृतमिति।

तमुतङ्क उपाध्यायं प्रत्युवाच भोस्तक्षकेण मे नागराजेन विघ्नः कृतोऽस्मिन्कर्म्मणि तेनास्मि नागलोकं गतः।

तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ तस्मिंश्च कृष्णाः सिताश्च तन्तवः किं तत्।

तत्र च मया चक्रं दृष्टं द्वादशारं षट्चैनं कुमाराः परिवर्त्तयन्ति तदपि किं पुरुषश्चापि मया दृष्टः स चापि कः अश्वश्चा
तिप्रमाणो दृष्टः स चापि कः। ८२५

पथि गच्छता च मया वृषभो दृष्टस्तञ्च पुरुषोऽधिरूढस्तेनास्मि सोपचारमुक्तः उतङ्कास्य वृषभस्य पुरीषं भक्षय उपाध्याये
नापि ते भक्षितमिति।

ततस्तस्य वचनान्मया तद्वृषभस्य पुरीषमुपयुक्तं स चापि कः तदेतद्भवतोपदिष्टमिच्छेयं श्रोतुं किं तदिति।

स तेनैवमुक्त उपाध्यायः प्रत्युवाच ये ते स्त्रियौ धाता विधाता च ये च ते कृष्णाः सितास्तन्तवस्ते रात्र्यहनी यदपि तच्चक्रं
द्वादशारं षड्वैकुमाराः परिवर्त्तयन्ति तेऽपि षडृतवः सम्वत्सरश्चक्रं।

यः पुरुषः स पर्जन्यः योऽश्वः सोऽग्निः य ऋषभस्त्वया पथि गच्छता दृष्टः स ऐरावतो नागराट्।

यश्चैनमधिरूढः पुरुषः स चेन्द्रः यदपि ते भक्षितं तस्य ऋषभस्य पुरीषं तदमृतं तेन खल्वसि तस्मिन्नागभवने न व्यापन्नस्त्वं। ८३०

स हि भगवानिन्द्रो मम सखा तदनुग्रहादिदमनुपदं कृतवान् तस्मात् कुण्डले गृहीत्वा पुनरागतोऽसि।
तत्सौम्य गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसीति स उपाध्यायेनानुज्ञातो भगवानुतङ्कः क्रुद्धस्तक्षकं प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे।

स हास्तिनपुरं प्राप्य न चिराद्विप्रसत्तमः। समागच्छत राजानमुतङ्को जनमेजयम्।
पुरा तक्षशिलासंस्थं निवृत्तमपराजितम्। सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम्।
तस्मै जयाशिषः पूर्व्वं यथान्यायं प्रयुज्य सः। उवाचैनं वचः काले शब्दसम्पन्नया गिरा। ८३६
॥ उतङ्क उवाच ॥ अन्यस्मिन् करणीये तु कार्य्ये पार्थिवसत्तम। बाल्यादिवान्यदेव त्वं कुरुषे नृपसत्तम।
॥ सौतिरुवाच ॥ एवमुक्तस्तु विप्रेण स राजा जनमेजयः। अर्च्चयित्वा यथान्यायं प्रत्युवाच द्विजोत्तमम्।
॥ जनमेजय उवाच ॥ आसां प्रजानां परिपालनेन स्वं क्षत्रधर्म्मं परिपालयामि। प्रब्रूहि मे किं करणीयमद्य येनासि कार्य्येण समागतस्त्वम्।
॥ सौतिरुवाच ॥ स एवमुक्तस्तु नृपोत्तमेन द्विजोत्तमः पुण्यकृतां वरिष्ठः। उवाच राजानमदीनसत्त्वं स्वमेव कार्य्यं नृपते कुरुष्व।
॥ उतङ्क उवाच ॥ तक्षकेण महीन्द्रेन्द्र येन ते हिंसितः पिता। तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने। ८४०
कार्य्यकालं हि मन्येऽहं विधिदृष्टस्य कर्म्मणः। तद्गच्छापचितिं राजन् पितुस्तस्य महात्मनः।
तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना। पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः।
बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः। अकार्य्यं कृतवान् पापो योऽदशत् पितरं तव।
राजर्षिवंशगोप्तारममरप्रतिमं नृपम्। यियासुं काश्यपञ्चैव न्यवर्त्तयत पापकृत्।
होतुमर्हसि तं पापं ज्वलिते हव्यवाहने। सर्पसत्रे महाराज त्वरितं तद्विधीयताम्। ८४५
एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि। मम प्रियञ्च सुमहत् कृतं राजन् भविष्यति।
कर्म्मणः पृथिवीपाल मम येन दुरात्मना। विघ्नः कृतो महाराज गुर्व्वर्थं चरतोऽनघ।
॥ सौतिरुवाच ॥ एतच्छ्रुत्वा तु नृपतिस्तक्षकाय चुकोप ह। उतङ्कवाक्यहविषा दीप्तोऽग्निर्हविषा यथा।
अपृच्छच्च तदा राजा मन्त्रिणस्तान् सुदुःखितः। उतङ्कस्यैव सान्निध्ये पितुः स्वर्गगतिं प्रति।
तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत्। यदैव वृत्तं पितरमुतङ्कादशृणोत्तदा। ८५०
इति श्रीमहाभारते आदिपर्व्वणि पौष्याख्यानं समाप्तं तृतीयोऽध्यायः। ३।

---

## अथ पौलोमपर्व्व। ४।

लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे।
पौराणिकः पुराणे कृतश्रमः स कृताञ्जलिस्तानुवाच किं भवन्तः श्रोतुमिच्छन्ति किमहं ब्रुवाणीति।
तमृषय ऊचुः परमं लौमहर्षणे वक्ष्यामस्त्वां नः प्रतिवक्ष्यसि वचः शुश्रूषतां कथायोगं नः कथायोगे।
तत्र भगवान् कुलपतिस्तु शौनकोऽग्निशरणमध्यास्ते।
योऽसौ दिव्याः कथा वेद देवतासुरसंश्रिताः। मनुष्योरगगन्धर्व्वकथा वेद च सर्व्वशः। ८५५

स चाप्यस्मिन्मखे सौते विद्वान्कुलपतिर्द्विजः। दक्षो धृतव्रतो धीमाञ्छास्त्रे चारण्यके गुरुः।
सत्यवादी शमपरस्तपस्वी नियतव्रतः। सर्व्वेषामेव नो मान्यः स तावत्प्रतिपाल्यतां।
तस्मिन्नध्यासति गुरावासनं परमर्च्चितं। ततो वक्ष्यसि यत्त्वां स प्रक्ष्यति द्विजसत्तमः।
॥ सौतिरुवाच ॥ एवमस्तु गुरौ तस्मिन्नुपविष्टे महात्मनि। तेन पृष्टः कथाः पुण्या वक्ष्यामि विविधाश्रयाः।
सोऽथ विप्रर्षभः सर्व्वं कृत्वा कार्य्यं यथाविधि। देवान्वाग्भिः पितॄनद्भिस्तर्पयित्वाजगाम ह। ८६०
यत्र ब्रह्मर्षयः सिद्धाः सुखासीना धृतव्रताः। यज्ञायतनमाश्रित्य सूतपुत्रपुरःसराः।
ऋत्विक्ष्वथ सदस्येषु स वै गृहपतिस्तदा। उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदं।
इति आदिपर्व्वणि कथाप्रवेशोनाम चतुर्थोऽध्यायः ॥ ४ ॥

---

॥ शौनकउवाच ॥ पुराणमखिलं तात पितातेऽधीतवान्पुरा। कच्चित्त्वमपि तत्सर्व्वमधीषे लौमहर्षणे।
पुराणे हि कथा दिव्या आदिवंशाश्च धीमतां। कथ्यन्ते ये पुराऽस्माभिः श्रुतपूर्व्वाः पितुस्तव।
तत्र वंशमहं पूर्व्वं श्रोतुमिच्छामि भार्गवं। कथयस्व कथामेतां कल्याः स्म श्रवणे तव। ८६५
॥ सूत उवाच ॥ यदधीतं पुरा सम्यक् द्विजश्रेष्ठैर्महात्मभिः। वैशम्पायनविप्राग्र्यैस्तैश्चापि कथितं यथा।
यदधीतञ्च पित्रा मे सम्यक्चैव ततो मया। तावच्छृणुष्व यो देवैः सेन्द्रैः सर्षिमरुद्गणैः।
पूजितः प्रवरो वंशो भार्गवो भृगुनन्दन। इमं वंशमहं पूर्व्वं भार्गवन्ते महामुने।
निगदामि यथायुक्तं पुराणाश्रयसंयुतं। भृगुर्महर्षिर्भगवान्ब्रह्मणा वै स्वयम्भुवा।
वरुणस्य क्रतौ जातः पावकादिति नः श्रुतं। भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः। ८७०
च्यवनस्य च दायादः प्रमतिर्नाम धार्म्मिकः। प्रमतेरप्यभूत्पुत्रो घृताच्यां रुरुरित्युत।
रुरोरपि सुतो जज्ञे शुनको वेदपारगः। प्रमद्वरायां धर्म्मात्मा तव पूर्व्वपितामहः।
तपस्वी च यशस्वी च श्रुतवान्ब्रह्मवित्तमः। धार्म्मिकः सत्यवादी च नियतो नियताशनः।
॥ शौनकउवाच ॥ सूतपुत्र यथा तस्य भार्गवस्य महात्मनः। च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः।
॥ सौतिरुवाच ॥ भृगोः सुदयिता भार्य्या पुलोमेत्यभिविश्रुता। तस्यां समभवद्गर्भो भृगुवीर्य्यसमुद्भवः। ८७५
तस्मिन्गर्भेऽथ संभूते पुलोमायां भृगूद्वह। समये समशीलिन्यां धर्म्मपत्न्यां यशस्विनः।
अभिषेकाय निष्क्रान्ते भृगौ धर्म्मभृतांवरे। आश्रमं तस्य रक्षोऽथ पुलोमाऽभ्याजगाम ह।
तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्य्यामनिन्दितां। हृच्छयेन समाविष्टो विचेताः समपद्यत।
अभ्यागतन्तु तद्रक्षः पुलोमा चारुदर्शना। न्यमन्त्रयत वन्येन फलमूलादिना तदा।
तान्तु रक्षस्तदा ब्रह्मण्हृच्छयेनाभिपीडितं। दृष्ट्वा हृष्टमभूद्राजन् जिहीर्षुस्तामनिन्दितां। ८८०
जातमित्यब्रवीत्कार्य्यं जिहीर्षुर्मुदितः शुभां। सा हि पूर्व्वं वृता तेन पुलोम्ना तु शुचिस्मिता।
तान्तु प्रादात्पिता पश्चाद्भृगवे शास्त्रवत्तदा। तस्य तत्किल्बिषं नित्यं हृदि वर्त्तति भार्गव।
इदमन्तरमित्येवं हर्त्तुं चक्रे मनस्तदा। अथाग्निशरणेऽपश्यज्ज्वलन्तं जातवेदसं।

तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा । शंस मे कस्य भार्य्येयमग्ने पृष्टे ऋतेन वै ।

मुखं त्वमसि देवानां वद पावक पृच्छते । मया हीयं वृता पूर्व्वं भार्य्यार्थे वरवर्णिनी । ८८५

पश्चादिमां पिता प्रादाद्भृगवेऽनृतकारिणे । सेयं यदि वरारोहा भृगोर्भार्य्या रहोगता ।

तथा सत्यं समाख्याहि जिहीर्षाम्याश्रमादिमां । स मन्युस्तत्र हृदयं प्रदहन्निव तिष्ठति । मत्पूर्व्वभार्य्यां यदिमां भृगुराप सुमध्यमां ।

॥ सौतिरुवाच ॥ एवं रक्षस्तमामन्त्र्य ज्वलितं जातवेदसं । शङ्कमानं भृगोर्भार्य्यां पुनः पुनरपृच्छत ।

त्वमग्ने सर्व्वभूतानामन्तश्चरसि नित्यदा । साक्षिवत्पुण्यपापेषु सत्यं ब्रूहि कवे वचः ।

मत्पूर्व्वाऽपहृता भार्य्या भृगुणाऽनृतकारिणा । सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि । ८९०

श्रुत्वा त्वत्तो भृगोर्भार्य्यां हरिष्याम्याश्रमादिमां । जातवेदः पश्यतस्ते वद सत्यां गिरं मम ।

॥ सूतउवाच ॥ तस्यैतद्वचनं श्रुत्वा सप्तार्च्चिर्दुःखितोऽभवत् । भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ।

॥ अग्निरुवाच ॥ त्वया वृता पुलोमेयं पूर्व्वं दानवनन्दन । किं त्वियं विधिना पूर्व्वं मन्त्रवन्न वृता त्वया ।

पित्रा तु भृगवे दत्ता पुलोमेयं यशस्विनी । प्रदत्तानतुवै तुभ्यं वरलोभान्महायशाः ।

अथेमां वेददृष्टेन कर्म्मणा विधिपूर्व्वकं । भार्य्यामृषिर्भृगुः प्राप मां पुरस्कृत्य दानव । ८९५

सेयमित्यवगच्छामि नानृतं वक्तुमुत्सहे । नानृतं हि सदा लोके पूज्यते दानवोत्तम ।

इत्यादिपर्व्वणि पौलोमे पञ्चमोऽध्यायः ॥ ५ ॥

अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार तां । ब्रह्मन्वराहरूपेण मनोमारुतरंहसा ।

ततः स गर्भो निवसन् कुक्षौ भृगुकुलोद्वह । रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् ।

तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्च्चसं । तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य तां ।

सा तमादाय सुश्रोणी ससार भृगुनन्दन । च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता । ९००

तां ददर्श स्वयं ब्रह्मा सर्व्वलोकपितामहः । रुदतीं बाष्पपूर्णाक्षीं भृगोर्भार्य्यामनिन्दितां ।

सान्त्वयामास भगवान्वधूं ब्रह्मा पितामहः । अश्रुबिन्दूद्भवा तस्याः प्रावर्त्तत महानदी ।

अनुवर्त्माश्रिता तस्या भृगोः पत्न्यास्तपस्विनः । तस्यामार्गं सृतवतीं दृष्ट्वा तु सरितं तदा ।

नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः । बधूसरेति भगवांश्च्यवनस्याश्रमं प्रति ।

स एवं च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान् । तं ददर्श पिता तत्र च्यवनं तां च भाविनीं । स पुलोमां ततो भार्य्यां पप्रच्छ कुपितो भृगुः । ९०५

भृगुरुवाच ॥ केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षते । न हि त्वां वेद तद्रक्षो मद्भार्य्यां चारुहासिनि ।

तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा । बिभेति को न शापान्मे कस्य चायं व्यतिक्रमः ।

पुलोमोवाच ॥ अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता । ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ।

साऽहं तव सुतस्यास्य तेजसा परिमोक्षिता । भस्मीभूतं तु तद्रक्षो मामुत्सृज्य पपात वै ।

सूत उवाच ॥ इति श्रुत्वा पुलोमाया भृगुः परममन्युमान् । शशापाग्निमतिक्रुद्धः सर्व्वभक्षो भविष्यसि । ९१०

इत्यादिपर्व्वणि पौलोमेऽग्निशापः षष्ठोऽध्यायः । ॥ ६ ॥

सौतिरुवाच । शप्तस्तु भृगुणा वह्निः क्रुद्धो वाक्यमथाब्रवीत् । किमिदं साहसं ब्रह्मन् कृतवानसि मां प्रति ।
धर्मे प्रयतमानस्य सत्यञ्च वदतः समम् । पृष्टो यदब्रुवं सत्यं व्यभिचारोऽत्र को मम ।
पृष्टो हि साक्षी यः साक्ष्यं जानानोऽप्यन्यथा वदेत् । स पूर्व्वानात्मनः सप्त कुले हन्यात्तथापरान् ।
यश्च कार्य्यार्थतत्त्वज्ञो जानानोऽपि न भाषते । सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ।
शक्तोऽहमपि शप्तुं त्वां मान्यास्तु ब्राह्मणा मम । जानतोऽपि च ते ब्रह्मन् कथयिष्ये निबोध तत् । ९१५
योगेन बहुधात्मानं कृत्वा तिष्ठामि मूर्त्तिषु । अग्निहोत्रेषु सत्रेषु क्रियासु च मखेषु च ।
वेदोक्तेन विधानेन मयि यद्धूयते हविः । देवताः पितरश्चैव तेन तृप्ता भवन्ति वै ।
आपो देवगणाः सर्व्वे आपः पितृगणास्तथा । दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ।
देवताः पितरस्तस्मात्पितरश्चापि देवताः । एकीभूताश्च पूज्यन्ते पृथक्त्वेन च पर्व्वसु ।
देवताः पितरश्चैव भुञ्जते मयि यद्धुतम् । देवतानां पितॄणाञ्च मुखमेतदहं स्मृतम् । ९२०
अमावास्यां हि पितरः पौर्णमास्यां हि देवताः । मन्मुखेनैव हूयन्ते भुञ्जते च हुतं हविः । सर्व्वभक्षः कथं तेषां भविष्यामि मुखं त्वहम् ।
॥ सौतिरुवाच ॥ चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः । द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च ।
निरोङ्कारवषट्काराः स्वधास्वाहाविवर्जिताः । विनाऽग्निना प्रजाः सर्व्वास्तत आसन् सुदुःखिताः ।
अथर्षयः समुद्विग्ना देवान् गत्वाऽब्रुवन्वचः । अग्निनाशात्क्रियाभ्रंशाद्भ्रान्ता लोकास्त्रयोऽनघाः ।
विदध्वमत्र यत्कार्य्यं न स्यात्कालात्ययो यथा । अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य तु । ९२५
अग्नेरावेदयञ्छापं क्रियासंहारमेव च । भृगुणा वै महाभाग शप्तोऽग्निः कारणान्तरे ।
कथं देवमुखो भूत्वा यज्ञभागाग्रभुक्तथा । हुतभुक् सर्व्वलोकेषु सर्व्वभक्षत्वमेष्यति ।
श्रुत्वा तु तद्वचस्तेषामग्निमाहूय विश्वकृत् । उवाच वचनं श्लक्ष्णं भूतभावनमव्ययं ।
लोकानामिह सर्व्वेषां त्वं कर्त्ता चान्त एव च । त्वं धारयसि लोकांस्त्रीन् क्रियाणाञ्च प्रवर्त्तकः ।
स तथा कुरु लोकेश नोच्छिद्येरन्यथा क्रियाः । कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशन । ९३०
त्वं पवित्रं सदा लोके सर्व्वभूतगतिश्च ह । न त्वं सर्व्वशरीरेण सर्व्वभक्षत्वमेष्यसि ।
अपाने ह्यर्च्चिषो यास्ते सर्व्वं भोक्ष्यन्ति ताः शिखिन् । क्रव्यादा च तनुर्या ते सा सर्व्वं भक्षयिष्यति । यथा सूर्य्यांशुभिः स्पृष्टं सर्व्वं शुचि विभाव्यते ।
तथा त्वदर्च्चिर्निर्दग्धं सर्व्वं शुचि भविष्यति । त्वमग्ने परमं तेजः स्वप्रभावाद्विनिर्गतं ।
स्वतेजसैव तं शापं कुरु सत्यमृषेर्व्विभो । देवानां चात्मनो भागं गृहाण त्वं मुखे हुतं ।
॥ सौतिरुवाच ॥ एवमस्त्विति तं वह्निः प्रत्युवाच पितामहं । जगाम शासनं कर्त्तुं देवस्य परमेष्ठिनः । ९३५
देवर्षयश्च मुदितास्ततो जग्मुर्यथागतं । ऋषयश्च यथापूर्व्वं क्रियाः सर्व्वाः प्रचक्रिरे ।
दिवि देवा मुमुदिरे भूतसङ्घाश्च लौकिकाः । अग्निश्च परमां प्रीतिमवाप हतकल्मषः ।
एवं स भगवाञ्छापं लेभेऽग्निर्भृगुतः पुरा । एवमेष पुरावृत्त इतिहासोऽग्निशापजः । पुलोमस्य विनाशोऽयं च्यवनस्य च सम्भवः ।
इत्यादि पर्व्वणि पौलोमे सप्तमोऽध्यायः ॥ ७ ॥

॥ सूत उवाच ॥ स चापि च्यवनो ब्रह्मन् भार्गवोऽजनयत्सुतं। सुकन्यायां महात्मानं प्रमतिं दीप्ततेजसं।
प्रमतिस्तु रुरुं नाम घृताच्यां समजीजनत्। रुरुः प्रमद्वरायान्तु शुनकं समजीजनत्। ९४०
तस्य ब्रह्मन् रुरोः सर्व्वं चरितं भूरितेजसः। विस्तरेण प्रवक्ष्यामि तच्छृणु त्वमशेषतः।
ऋषिरासीन्महान्पूर्व्वं तपोविद्यासमन्वितः। स्थूलकेश इति ख्यातः सर्व्वभूतहिते रतः।
एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान्। गन्धर्व्वराजो विप्रर्षे विश्वावसुरिति स्मृतः।
अप्सरा मेनका तस्य तं गर्भं भृगुनन्दन। उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति।
उत्सृज्य चैव तं गर्भं नद्यास्तीरे जगाम सा। अप्सरा मेनका ब्रह्मन्निर्दया निरपत्रपा। ९४५
कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया। तान्ददर्श समुत्सृष्टां नदीतीरे महानृषिः।
स्थूलकेशः स तेजस्वी विजने बन्धुवर्ज्जितां। स तां दृष्ट्वा तदा कन्यां स्थूलकेशो महाद्विजः।
जग्राह च मुनिश्रेष्ठः कृपाविष्टः पुपोष च। ववृधे सा वरारोहा तस्याश्रमपदे शुभे।
जातकाद्याः क्रियाश्चास्या विधिपूर्व्वं यथाक्रमं। स्थूलकेशो महाभागश्चकार सुमहानृषिः।
प्रमदाभ्यो वरा सा तु सत्त्वरूपगुणान्विता। ततः प्रमद्वरेत्यस्या नाम चक्रे महानृषिः। ९५०
तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वरां। बभूव किल धर्म्मात्मा मदनोपहतस्तदा।
पितरं सखिभिः सोऽथ श्रावयामास भार्गवं। प्रमतिश्चाभ्ययाचत्तां स्थूलकेशं यशस्विनं।
ततः प्रादात्पिता कन्यां रुरवे तां प्रमद्वरां। विवाहं स्थापयित्वाऽग्रे नक्षत्रे भगदैवते।
ततः कतिपयाहस्य विवाहे समुपस्थिते। सखीभिः क्रीडती सार्द्धं सा कन्या वरवर्णिनी।
नापश्यत्संप्रसुप्तं वै भुजङ्गं तिर्य्यगायतं। पदा चैनं समाक्रामन्मुमूर्षुः कालचोदिता। ९५५
स तस्याः संप्रमत्तायाश्चोदितः कालधर्म्मणा। विषोपलिप्तान्दशनान्भृशमङ्गे न्यपातयत्।
सा दष्टा तेन सर्प्पेण पपात सहसा भुवि। विवर्णा विगतश्रीका भ्रष्टाभरणचेतना।
निरानन्दकरी तेषां बन्धूनां मुक्तमूर्द्धजा। व्यसुरप्रेक्षणीया सा प्रेक्षणीयतमाऽभवत्।
प्रसुप्तेवाभवच्चापि भुवि सर्प्पविषार्द्दिता। भूयो मनोहरतरा बभूव तनुमध्यमा।
ददर्श तां पिता चैव ये चैवान्ये तपस्विनः। विचेष्टमानां पतितां भूतले पद्मवर्च्चसं। ९६०
ततः सर्व्वे द्विजवराः समाजग्मुः कृपान्विताः। स्वस्त्यात्रेयो महाजानुः कुशिकः शङ्खमेखलः।
उद्दालकः कठश्चैव श्वेतश्चैव महायशाः। भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः।
प्रमतिः सह पुत्रेण तथाऽन्ये वनवासिनः। तां ते कन्यां व्यसुं दृष्ट्वा भुजङ्गस्य विषार्द्दितां। रुरुदुः कृपयाविष्टा रुरुस्त्वार्त्तो बहिर्ययौ।

इत्यादिपर्व्वणि पौलोमेऽष्टमोऽध्यायः॥ ८॥

॥ सौतिरुवाच ॥ तेषु तत्रोपविष्टेषु ब्राह्मणेषु महात्मसु। रुरुश्चुक्रोश गहनं वनं गत्वाऽतिदुःखितः।
शोकेनाभिहतः सोऽथ विलपन् करुणं बहु। अब्रवीद्वचनं शोचन् प्रियां स्मृत्वा प्रमद्वरां। शेते सा भुवि तन्वङ्गी मम शोकविवर्द्धिनी। ९६५

बान्धवानाञ्च सर्व्वेषां किं नु दुःखमतः परं । यदि दत्तं तपस्तप्तं गुरवो वा मया यदि ।
सम्यगाराधितास्तेन सञ्जीवतु मम प्रिया । यथा च जन्मप्रभृति यतात्माऽहं धृतव्रतः ।
प्रमद्वरा तथाऽद्यैषा समुत्तिष्ठतु भाविनी । एवं लालप्यतस्तस्यभार्य्यार्थे दुःखितस्य च ।
देवदूतस्तदाऽभ्येत्य वाक्यमाह रुरुं वने ॥ देवदूत उवाच ॥ अभिधत्सेह यद्वाक्यं रुरो दुःखेन तन्मृषा ।
यतो मर्त्यस्य धर्मात्मन्नायुरस्ति गतायुषः । गतायुरेषा कृपणा गन्धर्व्वाप्सरसोः सुता । १७०
तस्माच्छोके मनस्तात माकृथास्त्वं कथञ्चन । उपायश्चात्र विहितः पूर्व्वं देवैर्महात्मभिः ।
तं यदीच्छसि कर्त्तुं त्वं प्राप्स्यसीह प्रमद्वरां ॥ रुरुरुवाच ॥ क उपायः कृतो देवैर्ब्रूहि तत्त्वेन खेचर ।
करिष्येऽहं तथा श्रुत्वा त्रातुमर्हति मां भवान् ॥ देवदूत उवाच ॥ आयुषोऽर्द्धं प्रयच्छ त्वं कन्यायै भृगुनन्दन ।
एवमुत्थास्यति रुरो तव भार्य्या प्रमद्वरा ॥ रुरुरुवाच ॥ आयुषोऽर्द्धं प्रयच्छामि कन्यायै खेचरोत्तम ।
शृङ्गाररूपाभरणा समुत्तिष्ठतु मे प्रिया ॥ सूत उवाच ॥ ततो गन्धर्व्वराजश्च देवदूतश्च सत्तमौ । १७५
धर्म्मराजमुपेत्येदं वचनं प्रत्यभाषतां । धर्म्मराजायुषोऽर्द्धेन रुरोर्भार्य्या प्रमद्वरा ।
समुत्तिष्ठतु कल्याणी मृतैवं यदि मन्यसे ॥ धर्म्मराज उवाच ॥ प्रमद्वरां रुरोर्भार्य्यां देवदूत यदीच्छसि ।
उत्तिष्ठत्वायुषोऽर्द्धेन रुरोरेव समन्विता ॥ सौतिरुवाच ॥ एवमुक्ते ततः कन्या सोदतिष्ठत्प्रमद्वरा ।
रुरोस्तस्यायुषोऽर्द्धेन सुप्तेव वरवर्णिनी । एतद्दृष्टं भविष्ये हि रुरोरुत्तमतेजसः ।
आयुषोऽतिप्रवृद्धस्य भार्य्यार्थेऽर्द्धमलुप्यत । तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा । १८०
विवाहं तौ च रेमाते परस्परहितैषिणौ । स लब्ध्वा दुर्लभां भार्य्यां पद्मकिञ्जल्कसुप्रभां ।
व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः । स दृष्ट्वा जिह्मगान्सर्व्वांस्तीव्रकोपसमन्वितः ।
अभिहन्ति यथासत्त्वं गृह्य प्रहरणं सदा । स कदाचिद्वनं विप्रो रुरुरभ्यागमन्महत् ।
शयानं तत्र चापश्यत् डुण्डुभं वयसाऽन्वितं । तत उद्यम्य दण्डं स कालदण्डोपमं तदा ।
जिघांसुः कुपितो विप्रस्तमुवाचाथ डुण्डुभः । नापराध्यामि ते किञ्चिदहमद्य तपोधन । १८५
संरम्भाच्च किमर्थं मामभिहंसि रुषान्वितः ॥ इत्यादिपर्व्वणि पौलोमे नवमोऽध्यायः ॥ ९ ॥

॥ रुरुरुवाच ॥ मम प्राणसमा भार्य्या दष्टासीद्भुजगेन ह । तत्र मे समयो घोर आत्मनोरगवै कृतः ।
भुजङ्गं वै सदा हन्यां यं यं पश्येयमित्युत । ततोऽहं त्वां जिघांसामि जीवितेनाद्य मोक्ष्यसे ।
॥ डुण्डुभ उवाच ॥ अन्ये ते भुजगा ब्रह्मन् ये दशन्तीह मानवान् । डुण्डुभानहिगन्धेन न त्वं हिंसितुमर्हसि ।
एकानर्थान्पृथगर्थानेकदुःखान्पृथक्सुखान् । डुण्डुभान्धर्म्मविद्भूत्वा न त्वं हिंसितुमर्हसि । १९०
॥ सौतिरुवाच ॥ इति श्रुत्वा वचस्तस्य भुजगस्य रुरुस्तदा । नावधीद्भयसंविग्नमृषिं मत्वाऽथ डुण्डुभं ।
उवाच चैनं भगवान् रुरुः संशमयन्निव । कामं मां भुजग ब्रूहि कोऽसीमां विक्रियां गतः ।
॥ डुण्डुभ उवाच ॥ अहं पुरा रुरो नाम्ना ऋषिरासं सहस्रपात् । सोऽहं शापेन विप्रस्य भुजगत्वमुपागतः ।
॥ रुरुरुवाच ॥ किमर्थं शप्तवान् क्रुद्धो द्विजस्त्वां भुजगोत्तम । कियन्तं चैव कालं ते वपुरेतद्भविष्यति ।
इत्यादि पर्व्वणि पौलोमे दशमोऽध्यायः ॥ १० ॥

॥ डुण्डुभउवाच ॥ सखा बभूव मे पूर्व्वं खगमो नाम वै द्विजः। भृशं संशितवाक् सोऽथ तपोबलसमन्वितः। ९९५
स मया क्रीडता बाल्ये कृत्वा तार्णं भुजङ्गमं। अग्निहोत्रे प्रसक्तस्तु भीषितः प्रमुमोह वै।
लब्ध्वा स च पुनः संज्ञां मामुवाच तपोधनः। निर्द्दहन्निव कोपेन सत्यवाक्संशितव्रतः।
यथावीर्य्यस्त्वया सर्पः कृतोऽयं मद्विभीषया। तथावीर्य्यो भुजङ्गस्त्वं मम शापाद्भविष्यसि।
तस्याहं तपसोवीर्य्यं जानानस्तं तपोधन। भृशमुद्विग्नहृदयस्तमवोचमहं तदा।
प्रणतः सम्भ्रमाच्चैव प्राञ्जलिः पुरतः स्थितः। सखेति हसतेदन्ते नर्म्मार्थं वै कृतं मया। १०००
क्षन्तुमर्हसि मे ब्रह्मन् शापोऽयं विनिवर्त्त्यतां। सोऽथ मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसं।
मुहुरुष्णं विनिश्वस्य सुसंभ्रान्तस्तपोधनः। नानृतं वै मयाप्रोक्तं भवितेदं कथञ्चन।
यत्तु वक्ष्यामि ते वाक्यं शृणु तन्मे तपोधन। श्रुत्वा च हृदि ते वाक्यमिदमस्तु सदाऽनघ।
उत्पत्स्यति रुरुर्नाम प्रमतेरात्मजः शुचिः। तं दृष्ट्वा शापमोक्षस्ते भविता नचिरादिव।
स त्वं रुरुरिति ख्यातः प्रमतेरात्मजोऽपि च। स्वं रूपं प्रतिपद्याहमद्य वक्ष्यामि ते हितं। १००५
स डौण्डुभं परित्यज्य रूपं विप्रर्षभस्तदा। स्वरूपं भास्वरं भूयः प्रतिपेदे महायशाः।
इदं चोवाच वचनं रुरुमप्रतिमौजसं। अहिंसा परमोधर्म्मः सर्व्वप्राणभृताम्बर।
तस्मात्प्राणभृतः सर्व्वान्नहिंस्याद्ब्राह्मणः क्वचित्। ब्राह्मणः सौम्य एवेह भवतीति परा श्रुतिः।
वेदवेदाङ्गविन्नाम सर्व्वभूताभयप्रदः। अहिंसा सत्यवचनं क्षमा चेति विनिश्चितं।
ब्राह्मणस्य परो धर्म्मो वेदानां धारणाऽपि च। क्षत्रियस्य हि योधर्म्मः स हि नेष्येत वै तव। १०१०
दण्डधारणमुग्रत्वं प्रजानां परिपालनं। तदिदं क्षत्रियस्यासीत्कर्म्म वै शृणु मे रुरो।
जनमेजयस्य यज्ञेऽस्मिन्सर्प्पाणां हिंसनं पुरा। परित्राणञ्च भीतानां सर्प्पाणां ब्राह्मणादपि।
तपोवीर्य्यबलोपेताद्वेदवेदाङ्गपारगात्। आस्तीकाद्द्विजमुख्याद्वै सर्प्पसत्रे द्विजोत्तम।
इत्यादिपर्व्वणि पौलोमे एकादशोऽध्यायः ॥ ११ ॥
॥ रुरुरुवाच ॥ कथं हिंसितवान्सर्प्पान्स राजा जनमेजयः। सर्प्पा वा हिंसितास्तत्र किमर्थं द्विजसत्तम।
किमर्थं मोचिताश्चैव पन्नगास्तेन धीमता। आस्तीकेन द्विजश्रेष्ठ श्रोतुमिच्छाम्यशेषतः। १०१५
॥ ऋषिरुवाच ॥ श्रोष्यसि त्वं रुरो सर्व्वमास्तीकचरितं महत्। ब्राह्मणानां कथयतामित्युक्त्वाऽन्तरधीयत।
॥ सौतिरुवाच ॥ रुरुश्चापि वनं सर्व्वं पर्य्यधावत्समन्ततः। तमृषिं नष्टमन्विच्छन्संश्रान्तो न्यपतद्भुवि।
स मोहं परमं गत्वा नष्टसंज्ञ इवाभवत्। तदृषेर्व्वचनं तथ्यं चिन्तयानः पुनः पुनः।
लब्धसंज्ञो रुरुश्चायात्तदाचख्यौ पितुस्तदा। पिता चास्य तदाख्यानं पृष्टः सर्व्वं न्यवेदयत्।
इत्यादिपर्व्वणि सर्प्पसत्रप्रस्तावनापौलोमं समाप्तं द्वादशोऽध्यायः ॥ १२ ॥

## अथास्तीकपर्व्व।

॥ शौनकउवाच ॥ किमर्थं राजशार्दूलः स राजा जनमेजयः। सर्प्पसत्रेण सर्प्पाणां गतोऽन्तं तद्वदस्व मे। १०२०
निखिलेन यथा तत्त्वं सौते सर्व्वमशेषतः। आस्तीकश्च द्विजश्रेष्ठः किमर्थं जपतां वरः। मोक्षयामास भुजगान्प्रदीप्ताद्वसुरेतसः।

कस्य पुत्रः स राजासीत्सर्प्पसत्रं य आहरत्। स च द्विजातिप्रवरः कस्य पुत्रोऽभिधत्स्व मे।

॥ सौतिरुवाच ॥ महदाख्यानमास्तीकं यथैतत्प्रोच्यते द्विज। सर्व्वमेतदशेषेण शृणु मे वदताम्वर।

॥ शौनक उवाच ॥ श्रोतुमिच्छाम्यशेषेण कथामेतां मनोरमां। आस्तीकस्य पुराणर्षेर्ब्राह्मणस्य यशस्विनः।

॥ सौतिरुवाच ॥ इतिहासमिमं विप्राः पुराणं परिचक्षते। कृष्णद्वैपायनप्रोक्तं नैमिषारण्यवासिषु। १०२५

पूर्व्वं प्रचोदितः सूतः पिता मे लोमहर्षणः। शिष्यो व्यासस्य मेधावी ब्राह्मणेष्विदमुक्तवान्।

तस्मादहमुपश्रुत्य प्रवक्ष्यामि यथातथं। इदमास्तीकमाख्यानं तुभ्यं शौनक पृच्छते।

कथयिष्याम्यशेषेण सर्व्वपापप्रणाशनं। आस्तीकस्य पिता ह्यासीत्प्रजापतिसमः प्रभुः।

ब्रह्मचारी यताहारस्तपस्युग्रे रतः सदा। जरत्कारुरिति ख्यात ऊर्द्ध्वरेता महातपाः।

यायावराणां प्रवरो धर्म्मज्ञः संशितव्रतः। स कदाचिन्महाभागस्तपोबलसमन्वितः। १०३०

चचार पृथिवीं सर्व्वां यत्र सायंगृहो मुनिः। तीर्थेषु च समाप्लावं कुर्व्वन्नटति सर्व्वशः।

चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः। वायुभक्षो निराहारः शुष्यन्ननिमिषो मुनिः।

इतस्ततः परिचरन्दीप्तपावकसप्रभः। अटमानः कदाचित्स्वान् स ददर्श पितामहान्।

लम्बमानान्महागर्त्ते पादैरूर्द्ध्वैरवाङ्मुखान्। तानब्रवीत्स दृष्ट्वैव जरत्कारुः पितामहान्।

के भवन्तोऽवलम्बन्ते गर्त्ते ह्यस्मिन्नधोमुखाः। वीरणस्तम्बके लग्नाः सर्व्वतः परिभक्षिते। मूषिकेण निगूढेन
गर्त्तेऽस्मिन्नित्यवासिना। १०३५

॥ पितर ऊचुः ॥ यायावरा नाम वयमृषयः संशितव्रताः। सन्तानप्रक्षयाद्ब्रह्मन्नधो गच्छाम मेदिनीं।

अस्माकं सन्ततिस्त्वेको जरत्कारुरिति स्मृतः। मन्दभाग्योऽल्पभाग्यानां तप एकं समास्थितः।

न स पुत्रान् जनयितुं दारान्मूढश्चिकीर्षति। तेन लम्बामहे गर्त्ते सन्तानस्य क्षयादिह।

अनाथास्तेन नाथेन यथा दुष्कृतिनस्तथा। कस्त्वं बन्धुरिवास्माकमनुशोचसि सत्तम।

ज्ञातुमिच्छामहे ब्रह्मन् कोभवानिह नः स्थितः। किमर्थञ्चैव नः शोच्याननुशोचसि सत्तम। १०४०

॥ जरत्कारुरुवाच ॥ मम पूर्व्वे भवन्तो वै पितरः सपितामहाः। ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयं।

॥ पितर ऊचुः ॥ यतस्व यत्नवांस्तात सन्तानाय कुलस्य नः। आत्मनोऽर्थेऽस्मदर्थे च धर्म्म इत्येव वा विभो।

न हि धर्म्मफलैस्तात न तपोभिः सुसञ्चितैः। तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति वै।

तद्दारग्रहणे यत्नं सन्तत्याञ्च मनः कुरु। पुत्रकास्मन्नियोगात्त्वमेतन्नः परमं हितं।

॥ जरत्कारुरुवाच ॥ न दारान्वै करिष्येऽहं न धनं जीवितार्थतः। भवतान्तु हितार्थाय करिष्ये दारसंग्रहं। १०४५

समयेन च कर्त्ताऽहमनेन विधिपूर्व्वकं। तथा यद्युपलप्स्यामि करिष्ये नान्यथाह्यहं।

सनाम्नी या भवित्री मे दित्सिता चैव बन्धुभिः। भैक्ष्यवत्तामहं कन्यामुपयंस्ये विधानतः।

दरिद्राय हि भार्य्यां को मे दास्यति विशेषतः। प्रतिग्रहीष्ये भिक्षान्तु यदि कश्चित्प्रदास्यति।

एवं दारक्रियाहेतोः प्रयतिष्ये पितामहाः। अनेन विधिना शश्वन्न करिष्येऽहमन्यथा।

तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै। शाश्वतं स्थानमासाद्य मोदन्तां पितरो मम। १०५०

इत्यादिपर्व्वण्यास्तीके त्रयोदशोऽध्यायः ॥ १३ ॥

॥ सौतिरुवाच ॥ ततो निवेशाय तदा स विप्रः संशितव्रतः। महीं चचार दारार्थी न च दारानविन्दत।
स कदाचिद्वनं गत्वा विप्रः पितृवचः स्मरन्। चुक्रोश कन्याभिक्षार्थी तिस्रो वाचः शनैरिव।
तं वासुकिः प्रत्यगृह्णादुद्यम्य भगिनीं तदा। न स तां प्रतिजग्राह न सनाम्नीति चिन्तयन्।
सनाम्नीं चोद्यतां भार्य्यां गृह्णीयामिति तस्य हि। मनो निविष्टमभवज्जरत्कारोर्महात्मनः।
॥ तमुवाच महाप्राज्ञो जरत्कारुर्महातपाः। किंनाम्नी भगिनीयं ते ब्रूहि सत्यं भुजङ्गम। १०५५
॥ वासुकिरुवाच ॥ जरत्कारो जरत्कारुः स्वसेयमनुजा मम। प्रतिगृह्णीष्व भार्य्यार्थे मया दत्ता सुमध्यमा। त्वदर्थं रक्षिता पूर्व्वं प्रतीच्छेमां द्विजोत्तम।
एवमुक्त्वा ततः प्रादाद्भार्य्यार्थे वरवर्णिनीम्। स च तां प्रतिजग्राह विधिदृष्टेन कर्म्मणा।

इत्यादिपर्व्वणि आस्तीके चतुर्दशोऽध्यायः ॥ १४ ॥

सौतिरुवाच। मात्रा हि भुजगाः शप्ताः पूर्व्वं ब्रह्मविदाम्बर। जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः।
तस्य शापस्य शान्त्यर्थं प्रददौ पन्नगोत्तमः। स्वसारमृषये तस्मै सुव्रताय महात्मने।
स च तां प्रतिजग्राह विधिदृष्टेन कर्म्मणा। आस्तीको नाम पुत्रश्च तस्यां जज्ञे महामनाः। १०६०
तपस्वी च महात्मा च वेदवेदाङ्गपारगः। समः सर्व्वस्य लोकस्य पितृमातृभयापहः।
अथ दीर्घस्य कालस्य पाण्डवेयो नराधिपः। आजहार महायज्ञं सर्पसत्रमिति श्रुतिः।
तस्मिन् प्रवृत्ते सत्रे तु सर्पाणामन्तकाय वै। मोचयामास तान्नागानास्तीकः सुमहातपाः।
भ्रातॄंश्च मातुलांश्चैव तथैवान्यान् स पन्नगान्। पितॄंश्च तारयामास सन्तत्या तपसा तथा।
व्रतैश्च विविधैर्ब्रह्मन् स्वाध्यायैश्चानृणोऽभवत्। देवांश्च तर्पयामास यज्ञैर्विविधदक्षिणैः। १०६५
ऋषींश्च ब्रह्मचर्य्येण सन्तत्या च पितामहान्। अपहृत्य गुरुं भारं पितॄणां संशितव्रतः।
जरत्कारुर्गतः स्वर्गं सहितः स्वैः पितामहैः। आस्तीकञ्च सुतं प्राप्य धर्म्मञ्चानुत्तमं मुनिः।
जरत्कारुः सुमहता कालेन स्वर्गमीयिवान्। एतदाख्यानमास्तीकं यथावत्कथितं मया। प्रब्रूहि भृगुशार्दूल किमन्यत्कथयामि ते।

इत्यादिपर्व्वणि आस्तीके पञ्चदशोऽध्यायः ॥ १५ ॥

शौनक उवाच ॥ सौते त्वं कथयस्वेमां विस्तरेण कथां पुनः। आस्तीकस्य कवेः साधोः शुश्रूषा परमा हि नः।
मधुरं कथ्यते सौम्य श्लक्ष्णाक्षरपदं त्वया। प्रीयामहे भृशं तात पितेवेदं प्रभाषसे। १०७०
अस्मच्छुश्रूषणे नित्यं पिता हि निरतस्तव। आचष्टैतद्यथाख्यानं पिता ते त्वं तथा वद।
॥ सौतिरुवाच ॥ आयुष्मन्निदमाख्यानमास्तीकं कथयामि ते। यथाश्रुतं कथयतः सकाशाद्वै पितुर्म्मया।
पुरा देवयुगे ब्रह्मन् प्रजापतिसुते शुभे। आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघ।
ते भार्य्ये कश्यपस्यास्तां कद्रूश्च विनता च ह। प्रादात्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः।
कश्यपो धर्म्मपत्नीभ्यां मुदा परमया युतः। वरातिसर्गं श्रुत्वैवं कश्यपादुत्तमञ्च ते। १०७५
हर्षादभ्यधिकां प्रीतिं प्रापतुः स्म वरस्त्रियौ। वव्रे कद्रूः सुतान्नागान् सहस्रं तुल्यवर्चसः।

द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले। तेजसा वपुषा चैव विक्रमेणाधिकौ च तौ।
तस्यै भर्त्ता वरं प्रादादत्यर्थं पुत्रमीप्सितं। एवमस्त्विति तं चाह कश्यपं विनता तदा।
यथावत्प्रार्थितं लब्ध्वा वरं तुष्टाऽभवत्तदा। कृतकृत्यातु विनता लब्ध्वा वीर्य्याधिकौ सुतौ।
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यवर्चसां। धार्य्यौ प्रयत्नतो गर्भावित्युक्त्वा स महातपाः। १०८०
ते भार्य्ये वरसन्तुष्टे कश्यपो वनमाविशत्।
॥ सौतिरुवाच ॥ कालेन महता कद्रूरण्डानां दशतीर्दश। जनयामास विप्रेन्द्र द्वे चाण्डे विनता तदा।
तयोरण्डानि निदधुः प्रहृष्टाः परिचारिकाः। सोपस्वेदेषु भाण्डेषु पञ्चवर्षशतानि च।
ततः पञ्चशते काले कद्रूपुत्रा विनिःसृताः। अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत।
ततः पुत्रार्थिनी देवी व्रीडिता च तपस्विनी। अण्डं बिभेद विनता तत्र पुत्रमपश्यत। १०८५
पूर्वार्द्धकायसम्पन्नमितरेणाप्रकाशता। स पुत्रः क्रोधसंरब्धः शशापैनामिति श्रुतिः।
योऽहमेवं कृतो मातस्त्वया लोभपरीतया। शरीरेणासमग्रेण तस्माद्दासी भविष्यसि।
पञ्चवर्षशतान्यस्या यया विस्पर्द्धसे सह। एष च त्वां सुतो मातर्द्दासीत्वान्मोचयिष्यति।
यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात्। न करिष्यस्यनङ्गं वा व्यङ्गं वापि यशस्विनं।
प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया। विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परः। १०९०
एवं शप्त्वा ततः पुत्रो विनतामन्तरीक्षगः। अरुणो दृश्यते ब्रह्मन् प्रभातसमये सदा।
आदित्यरथमध्यास्ते सारथ्यं समकल्पयत्। गरुडोऽपि यथाकालं जज्ञे पन्नगभोजनः।
स जातमात्रो विनतां परित्यज्य खमाविशत्। आदास्यन्नात्मनोभोज्यमन्नं विहितमस्य यत्। विधात्रा भृगुशार्दूल क्षुधितः
पतगेश्वरः।
इत्यादिपर्व्वणि आस्तीके षोडशोऽध्यायः ॥१६॥
॥ सूतउवाच ॥ एतस्मिन्नेव कालेतु भगिन्यौ ते तपोधन। अपश्यतां समायातमुच्चैःश्रवसमन्तिकात्।
यन्तं देवगणाः सर्व्वे हृष्टरूपमपूजयन्। मथ्यमानेऽमृते जातमश्वरत्नमनुत्तमं। १०९५
अमोघबलमश्वानामुत्तमं जगतां वरं। श्रीमन्तमजरं दिव्यं सर्व्वलक्षणपूजितं।
॥ शौनक उवाच ॥ कथं तदमृतं देवैर्म्मथितं क्व च शंस मे। यत्र जज्ञे महावीर्य्यः सोऽश्वराजो महाद्युतिः।
॥ सौतिरुवाच ॥ ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमं। आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः।
कनकाभरणं चित्रं देवगन्धर्व्वसेवितं। अप्रमेयमनाधृष्यमधर्म्मबहुलैर्जनैः।
व्यालैराचरितं घोरैर्द्दिव्यौषधिविदीपितं। नाकमावृत्य तिष्ठन्तमुच्छ्रयेण महागिरिं। ११००
अगम्यं मनसाऽप्यन्यैर्नदीवृक्षसमन्वितं। नानापतगसङ्घैश्च नादितं सुमनोहरैः।
तस्य शृङ्गमुपारुह्य बहुरत्नाचितं शुभं। अनन्तकल्पमुद्विद्धं सुराः सर्व्वे महौजसः।
ते मन्त्रयितुमारब्धास्तत्रासीना दिवौकसः। अमृताय समागम्य तपोनियमसंयुताः।
तत्र नारायणो देवो ब्रह्माणमिदमब्रवीत्। चिन्तयत्सु सुरेष्वेवं मन्त्रयत्सु च सर्व्वशः।
देवैरसुरसङ्घैश्च मथ्यतां कलशोदधिः। भविष्यत्यमृतं तत्र मथ्यमाने महोदधौ। १११०

सर्व्वौषधीः समावाप्य सर्व्वरत्नानि चैव ह। मथ्नध्वमुदधिं देवा वेत्स्यध्वममृतं ततः।

इत्यादिपर्व्वणि अमृतमन्थने सप्तदशोऽध्यायः॥ १७ ॥

॥ सौतिरुवाच॥ ततोऽभ्रशिखराकारैर्गिरिशृङ्गैरलङ्कृतं। मन्दरं पर्व्वतवरं लताजालसमाकुलं।
नानाविहगसङ्घुष्टं नानादंष्ट्रिसमाकुलं। किन्नरैरप्सरोभिश्च देवैरपि च सेवितं।
एकादशसहस्राणि योजनानां समुच्छ्रितं। अधोभूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितं।
तमुद्धर्त्तुमशक्ता वै सर्व्वे देवगणास्तदा। विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन्। १११५
भवन्तावत्र कुर्व्वातां बुद्धिं नैःश्रेयसीं परां। मन्दरोद्धरणे यत्नः क्रियताञ्च हिताय नः।
॥ सौतिरुवाच ॥ तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव। अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः।
ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः। नारायणेन चाप्युक्तस्तस्मिन् कर्म्मणि वीर्य्यवान्।
अथ पर्व्वतराजानं तमनन्तो महाबलः। उज्जहार बलाद्ब्रह्मन् सवनं सवनौकसं।
ततस्तेन सुराः सार्द्धं समुद्रमुपतस्थिरे। तमूचुरमृतस्यार्थे निर्म्मथिष्यामहे जलं। ११२०
अपाम्पतिरथोवाच ममाप्यंशो भवेत्ततः। सोढाऽस्मि विपुलं मर्द्दं मन्दरभ्रमणादिति।
ऊचुश्च कूर्म्मराजानमकूपारे सुरासुराः। अधिष्ठानं गिरेरस्य भवान्भवितुमर्हति।
कूर्म्मेण तु तथेत्युक्ता पृष्ठमस्य समर्प्पितं। तं शैलं तस्य पृष्ठस्थं वज्रेणेन्द्रोन्यपीडयत्।
मन्थानं मन्दरं कृत्वा तथा नेत्रञ्च वासुकिं। देवामथितुमारब्धाः समुद्रं निधिमम्भसां।
अमृतार्थे पुरा ब्रह्मंस्तथैवासुरदानवाः। एकमन्तमुपाश्लिष्टा नागराजो महासुराः। ११२५
विबुधाः सहिताः सर्व्वे यतः पुच्छं ततः स्थिताः। अनन्तो भगवान्देवो यतो नारायणस्ततः। शिर उत्क्षिप्य नागस्य पुनः पुनरवाक्षिपत्।
वासुकेरथ नागस्य सहसा क्षिप्यतः सुरैः। सधूमाः सार्च्चिषो वाता निष्पेतुरसकृन्मुखात्।
ते धूमसङ्घाः सम्भूता मेघसङ्घाः सविद्युतः। अभ्यवर्षन्सुरगणान् श्रमसन्तापकर्षितान्।
तस्माच्च गिरिकूटाग्रात्प्रच्युताः पुष्पवृष्टयः। सुरासुरगणान्सर्व्वान्समन्तात्समवाकिरन्।
बभूवात्र महानादो महामेघरवोपमः। उदधेर्म्मथ्यमानस्य मन्दरेण सुरासुरैः। ११३०
तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा। विलयं समुपाजग्मुः शतशो लवणाम्भसि।
वारुणानि च भूतानि विविधानि महीधरः। पातालतलवासीनि विलयं समुपानयत्।
तस्मिंश्च भ्राम्यमाणेऽद्रौ सङ्घृष्यन्तः परस्परं। न्यपतन्पतगोपेताः पर्व्वताग्रान्महाद्रुमाः।
तेषां सङ्घर्षजश्चाग्निरर्च्चिर्भिः प्रज्वलन्मुहुः। विद्युद्भिरिव नीलाभ्रमावृणोन्मन्दरं गिरिं।
ददाह कुञ्जरांस्तत्र सिंहांश्चैव विनिर्गतान्। विगतासूनि सर्व्वाणि सत्वानि विविधानि च। ११३५
तमग्निममरश्रेष्ठः प्रदहन्तमितस्ततः। वारिणा मेघजेनेन्द्रः शमयामास सर्व्वशः।
ततो नानाविधास्तत्र सुस्रुवुः सागराम्भसि। महाद्रुमाणां निर्य्यासा बहवश्चौषधीरसाः।
तेषाममृतवीर्य्याणां रसानां पयसैव च। अमरत्वं सुरा जग्मुः काञ्चनस्य च निःस्रवात्।

ततस्तस्य समुद्रस्य तज्जातमुदकं पयः। रसोत्तमैर्विमिश्रञ्च ततः क्षीरादभूद्घृतं।

ततो ब्रह्माणमासीनं देवा वरदमब्रुवन्। श्रान्ताः स्म सुभृशं ब्रह्मन्नोद्भवत्यमृतञ्च तत्। ११७०

विना नारायणं देवं सर्व्वेऽन्ये देवदानवाः। चिरारब्धमिदञ्चापि सागरस्यापि मन्थनं।

ततो नारायणं देवं ब्रह्मा वचनमब्रवीत्। विधत्स्वैषां बलं विष्णो भवानत्र परायणं।

॥ विष्णुरुवाच ॥ बलं ददामि सर्व्वेषां कर्म्मैतद्ये समास्थिताः। क्षोभ्यतां कलशः सर्व्वैर्मन्दरः परिवर्त्त्यतां।

॥ सूतउवाच ॥ नारायणवचः श्रुत्वा बलिनस्ते महोदधेः। तत्पयः सहिता भूयश्चक्रिरे भृशमाकुलं।

ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात्। प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः। ११७५

श्रीरनन्तरमुत्पन्ना घृतात्पाण्डरवासिनी। सुरादेवी समुत्पन्ना तुरगः पाण्डरस्तथा।

कौस्तुभस्तु मणिर्दिव्य उत्पन्नो घृतसम्भवः। मरीचिविकचः श्रीमान्नारायण उरोगतः।

श्रीः सुरा चैव सोमश्च तुरगश्च मनोजवः। यतो देवास्ततो जग्मुरादित्यपथमाश्रिताः।

धन्वन्तरिस्ततो देवो वपुष्मानुदतिष्ठत। श्वेतं कमण्डलुं बिभ्रदमृतं यत्र तिष्ठति।

एतदत्यद्भुतं दृष्ट्वा दानवानां समुत्थितः। अमृतार्थे महान्नादो ममेदमिति जल्पतां। ११८०

श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततः परं। ऐरावणो महानागोऽभवद्वज्रभृता धृतः।

अतिनिर्म्मथनादेव कालकूटस्ततः परः। जगदावृत्य सहसा सधूमोऽग्निरिव ज्वलन्।

त्रैलोक्यं मोहितं यस्य गन्धमाघ्राय तद्विषं। प्राग्रसल्लोकरक्षार्थं ब्रह्मणो वचनाच्छिवः।

दधार भगवान् कण्ठे मन्त्रमूर्त्तिर्महेश्वरः। तदा प्रभृति देवस्तु नीलकण्ठ इति श्रुतिः।

एतत्तदद्भुतं दृष्ट्वा निराशा दानवाः स्थिताः। अमृतार्थे च लक्ष्म्यर्थे महान्तं वैरमाश्रिताः। ११८५

ततोनारायणोमायां मोहिनीं समुपाश्रितः। स्त्रीरूपमद्भुतं कृत्वा दानवानभिसंश्रितः।

ततस्तदमृतं तस्यै ददुस्ते मूढचेतसः। स्त्रियै दानवदैतेयाः सर्व्वे तद्गतमानसाः।

इत्यादिपर्व्वण्यमृतमन्थने अष्टादशोऽध्यायः॥ १८ ॥

॥ सौतिरुवाच ॥ अथावरणमुख्यानि नानाप्रहरणानि च। प्रगृह्याभ्यद्रवन्देवान्सहिता दैत्यदानवाः।

ततस्तदमृतं देवो विष्णुरादाय वीर्य्यवान्। जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः।

ततो देवगणाःसर्व्वे पपुस्तदमृतं तदा। विष्णोःसकाशात्संप्राप्य सम्भ्रमे तुमुले सति। ११९०

ततः पिबत्सु तत्कालं देवेष्वमृतमीप्सितं। राहुर्विबुधरूपेण दानवः प्रापिबत्तदा।

तस्य कण्ठमनुप्राप्ते दानवस्यामृते तदा। आख्यातं चन्द्रसूर्य्याभ्यां सुराणां हितकाम्यया।

ततो भगवता तस्य शिरःछिन्नमलङ्कृतं। चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा।

तच्छैलशृङ्गप्रतिमं दानवस्य शिरोमहत्। चक्रच्छिन्नं समुत्पत्य ननादातिभयङ्करं।

तत्कबन्धं पपातास्य विस्फुरद्धरणीतले। सपर्व्वतवनद्वीपां दैत्यस्याकम्पयन्महीं। ११९५

ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै। शाश्वतश्चन्द्रसूर्य्याभ्यां ग्रसत्यद्यापि चैव तौ।

विहाय भगवांश्चापि स्त्रीरूपमतुलं हरिः। नानाप्रहरणैर्भीमैर्दानवान्समकम्पयत्।

ततः प्रवृत्तः संग्रामः समीपे लवणाम्भसः। सुराणामसुराणाञ्च सर्व्वघोरतरो महान्।
प्रासाश्च विपुलास्तीक्ष्णा न्यपतन्त सहस्रशः। तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि च।
ततोऽसुराश्चक्रभिन्ना वमन्तो रुधिरं बहु। असिशक्तिगदारुग्णा निपेतुर्धरणीतले। ११७०
छिन्नानि पट्टिशैश्चैव शिरांसि युधि दारुणैः। तप्तकाञ्चनजालानि निपेतुरनिशं तदा।
रुधिरेणानुलिप्ताङ्गा निहताश्च महासुराः। अद्रीणामिव कूटानि धातुरक्तानि शेरते।
हाहाकारः समभवत्तत्र तत्र सहस्रशः। अन्योन्यं छिन्दतां शस्त्रैरादित्ये लोहितायति।
परिघैरायसैस्तीक्ष्णैः सन्निकर्षे च मुष्टिभिः। निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत्।
छिन्धि भिन्धि प्रधाव त्वं पातयाभिसरेति च। व्यश्रूयन्त महाघोराः शब्दास्तत्र समन्ततः। ११७५
एवं सुतुमुले युद्धे वर्त्तमाने महाभये। नरनारायणौ देवौ समाजग्मतुराहवम्।
तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि। चिन्तयामास तच्चक्रं विष्णुर्दानवसूदनम्।
ततोऽम्बराच्चिन्तितमात्रमागतं महाप्रभं चक्रममित्रतापनम्। विभावसोस्तुल्यमकुण्ठमण्डलं सुदर्शनं संयति भीमदर्शनम्।
तदागतं ज्वलितहुताशनप्रभं भयङ्करं करिकरबाहुरच्युतः। मुमोच वै प्रबलवदुग्रवेगवान्महाप्रभं परनगरावदारणम्।
तदन्तकज्वलनसमानवर्चसं पुनः पुनर्न्यपतत वेगवत्तदा। विदारयद्दितिदनुजान्सहस्रशः करेरितं पुरुषवरेण संयुगे। ११८०
दहत् क्वचिज्ज्वलन इवावलेलिहत्प्रसह्य तानसुरगणान्न्यकृन्तत। प्रवेरितं वियति मुहुः क्षितौ तथा पपौ रणे रुधिरमथो पिशाचवत्।
तथाऽसुरा गिरिभिरदीनचेतसो मुहुर्मुहुः सुरगणमर्दयंस्तदा। महाबला विगलितमेघवर्चसः सहस्रशो गगनमभिप्रपद्य ह।
अथाम्बराद्भयजननाः प्रपेदिरे सपादपा बहुविधमेघरूपिणः। महाद्रयः परिगलितायसानवः परस्परं द्रुतमभिहत्य सस्वनाः।
ततो मही प्रविचलिता सकानना महाद्रिपाताभिहता समन्ततः। परस्परं भृशमभिगर्जतां मुहू रणाजिरे भृशमभिसम्प्रवर्त्तिते।
नरस्ततो वरकनकाग्रभूषणैर्महेषुभिर्गगनपथं समावृणोत्। विदारयन्गिरिशिखराणि पत्रिभिर्महाभयेऽसुरगणविग्रहे तदा। ११८५
ततो महीं लवणजलञ्च सागरं महासुराः प्रविविशुरर्दिताः सुरैः। वियद्गतं ज्वलितहुताशनप्रभं सुदर्शनं परिकुपितं निशम्य ते।
ततः सुरैर्विजयमवाप्य मन्दरः स्वमेव देशं गमितः सुपूजितः। विनाद्य खं दिवमपि चैव सर्व्वशस्ततो गताः सलिलधरा यथागतम्।
ततोऽमृतं सुनिहितमेव चक्रिरे सुराः परां मुदमभिगम्य पुष्कलाम्। ददौ च तं निधिममृतस्य रक्षितुं किरीटिने बलभिदथामरैः सह।
इत्यादि पर्व्वण्यमृतमन्थनं समाप्तं एकोनविंशोऽध्यायः॥ १९॥
॥ सौतिरुवाच॥ एतत्ते कथितं सर्व्वममृतं मथितं यथा। यत्र सोऽश्वः समुत्पन्नः श्रीमानतुलविक्रमः।
यं निशम्य तदा कद्रूर्विनतामिदमब्रवीत्। उच्चैःश्रवा हि किंवर्णो भद्रे प्रब्रूहि माचिरम्। ११९०
॥ विनतोवाच॥ श्वेत एवाश्वराजोऽयं किं वा त्वं मन्यसे शुभे। ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे।

॥ कद्रूरुवाच ॥ कृष्णवालमहं मन्ये हयमेनं शुचिस्मिते । एहि सार्द्धं मया दीव्य दासीभावाय भामिनि ।

॥ सौतिरुवाच ॥ एवं ते समयं कृत्वा दासीभावाय वै मिथः । जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ।

ततः पुत्रसहस्रन्तु कद्रूर्जिह्मं चिकीर्षती । आज्ञापयामास तदा वाला भूत्वाऽञ्जनप्रभाः ।

आविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा । नावपद्यन्त ये वाक्यं तान् शशाप भुजङ्गमान् । ११९५

सर्प्पसत्रे वर्त्तमाने पावको वः प्रधक्ष्यति । जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः ।

शापमेनन्तु शुश्राव स्वयमेव पितामहः । अतिक्रूरं समुत्सृष्टं कद्र्वा दैवादतीव हि ।

सार्द्धं देवगणैः सर्व्वैर्व्वाचं तामन्वमोदत । बहुत्वं प्रेक्ष्य सर्प्पाणां प्रजानां हितकाम्यया।

तिग्मवीर्य्यविषा ह्येते दन्दशूका महाबलाः । तेषां तीक्ष्णविषत्वाद्धि प्रजानाञ्च हिताय च ।

युक्तं मात्रा कृतं तेषां परपीडोपसर्प्पिणां । अन्येषामपि सत्त्वानां नित्यं दोषपरास्तु ये । १२००

तेषां प्राणान्तिको दण्डो दैवेन विनिपात्यते । एवं सम्भाष्य देवस्तु पूज्य कद्रूञ्च तां तदा ।

आहूय कश्यपं देव इदं वचनमब्रवीत् । यदेते दन्दशूकाश्च सर्प्पा जातास्त्वयाऽनघ ।

विषोल्वणा महाभोगा मात्रा शप्ताः परन्तप । तत्र मन्युस्त्वया तात न कर्त्तव्यः कथञ्चन ।

दृष्टं पुरातनं ह्येतद्यज्ञे सर्प्पविनाशनं । इत्युक्त्वा सृष्टिकृद्देवस्तं प्रसाद्य प्रजापतिं । प्रादाद्विषहरीं विद्यां कश्यपाय महात्मने।

इत्यादिपर्व्वणि सौपर्णे विंशोऽध्यायः ॥ २० ॥

॥ सौतिरुवाच ॥ ततो रजन्यां व्युष्टायां प्रभातेऽभ्युदिते रवौ । कद्रूश्च विनता चैव भगिन्यौ ते तपोधन । १२०५

अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा । जग्मतुस्तुरगं द्रष्टुमुच्चैःश्रवसमन्तिकात् ।

ददृशातेऽथ ते तत्र समुद्रं निधिमम्भसां । महान्तमुदकागाधं क्षोभ्यमाणं महास्वनं ।

तिमिङ्गिलझषाकीर्णं मकरैरावृतं तथा । सत्त्वैश्च बहुसाहस्रैर्नानारूपैः समावृतं ।

भीषणैर्विकृतैरन्यैर्घोरैर्जलचरैस्तथा । उग्रैर्नित्यमनाधृष्यं कूर्म्मग्राहसमाकुलं ।

आकरं सर्व्वरत्नानामालयं वरुणस्य च । नागानामालयं रम्यमुत्तमं सरितां पतिं । १२१०

पातालज्वलनावासमसुराणाञ्च बान्धवं । भयङ्करञ्च सत्त्वानां पयसां निधिमव्ययं।

शुभं दिव्यममर्त्यानाममृतस्याकरं परं । अप्रमेयमचिन्त्यञ्च सुपुण्यजलमद्भुतं ।

घोरं जलचरारावरौद्रं भैरवनिःस्वनं । गम्भीरावर्त्तकलिलं सर्व्वभूतभयङ्करं ।

वेलादोलानिलचलं क्षोभोद्वेगसमुच्छ्रितं । वीचीहस्तैः प्रचलितैर्नृत्यन्तमिव सर्व्वतः ।

चन्द्रवृद्धिक्षयवशादुद्वृत्तोर्म्मिसमाकुलं । पाञ्चजन्यस्य जननं रत्नाकरमनुत्तमं । १२१५

गां विन्दता भगवता गोविन्देनामितौजसा । वराहरूपिणा चान्तर्विक्षोभितजलाविलं ।

ब्रह्मर्षिणा व्रतवता वर्षाणां शतमत्रिणा । अनासादितगाधञ्च पातालतलमव्ययं ।

अध्यात्मयोगनिद्राञ्च पद्मनाभस्य सेवतः । युगादिकालशयनं विष्णोरमिततेजसः ।

वज्रपातनसन्त्रस्तमैनाकस्याभयप्रदं । डिम्बाहवार्द्दितानाञ्च असुराणां परायणं ।

वडवामुखदीप्ताग्नेस्तोयहव्यप्रदं शिवं । अगाधपारं विस्तीर्णमप्रमेयं सरित्पतिं । १२२०

महानदीभिर्ब्बह्वीभिः स्पर्द्धयेव सहस्रशः। अभिसार्य्यमाणमनिशं ददृशाते महार्णवं। आपूर्य्यमाणमत्यर्थं नृत्यमानमिवोर्म्मिभिः।
गम्भीरं तिमिमकरोग्रसंकुलं तं गर्ज्जन्तं जलचररावरौद्रनादैः। विस्तीर्णं ददृशतुरम्बरप्रकाशं तेऽगाधं निधिमुरुमम्भसामनन्तं।

इत्यादिपर्व्वणि सौपर्णे एकविंशतितमोऽध्यायः॥ २१ ॥

॥ सौतिरुवाच ॥ नागाश्च संविदं कृत्वा कर्त्तव्यमिति तद्वचः। निःस्नेहा वै दहेन्माता असम्प्राप्तमनोरथा।
प्रसन्ना मोचयेदस्मांस्तस्माच्छापाच्च भामिनी। कृष्णं पुच्छं करिष्यामस्तुरगस्य न संशयः।
तथा हि गत्वा ते तस्य पुच्छे वाला इति स्मृताः। एतस्मिन्नन्तरे ते तु सपत्न्यौ पणिते तदा। १११५
ततस्ते पणितं कृत्वा भगिन्यौ द्विजसत्तम। जग्मतुः परम प्रीत्या परं पारं महोदधेः।
कद्रूश्च विनता चैव दाक्षायण्यौ विहायसा। आलोकयन्त्यावक्षोभ्यं समुद्रं निधिमम्भसां।
वायुनाऽतीव सहसा क्षोभ्यमाणं महास्वनं। तिमिङ्गिलसमाकीर्णं मकरैरावृतं तथा।
संयुतं बहुसाहस्रैः सत्त्वैर्न्नानाविधैरपि। घोरैर्घोरमनाधृष्यं गम्भीरमतिभैरवं।
आकरं सर्व्वरत्नानामालयं वरुणस्य च। नागानामालयञ्चापि सुरम्यं सरितां पतिं। ११२०
पातालज्वलनावासमसुराणां तथालयं। भयङ्कराणां सत्त्वानां पयसो निधिमव्ययं।
शुभं दिव्यममर्त्त्यानाममृतस्याकरं परं। अप्रमेयमचिन्त्यञ्च सुपुण्यजलसंमितं।
महानदीभिर्ब्बह्वीभिस्तत्र तत्र सहस्रशः। आपूर्य्यमाणमत्यर्थं नृत्यन्तमिव चोर्म्मिभिः।
इत्येवं तरलतरोर्म्मिसंकुलं तं गम्भीरं विकसितमम्बरप्रकाशं। पातालज्वलनशिखाविदीपिताङ्गं गर्ज्जन्तं द्रुतमभिजग्मतुस्ततस्ते।

इत्यादिपर्व्वणि सौपर्णे समुद्रदर्शनं नाम द्वाविंशतितमोऽध्यायः॥ २२ ॥

॥ सूतउवाच ॥ तं समुद्रमतिक्रम्य कद्रूर्व्विनतया सह। न्यपतत्तुरगाभ्याशे नचिरादिव शीघ्रगा। ११२५
ततस्ते तं हयश्रेष्ठं ददृशाते महाजवं। शशाङ्ककिरणप्रख्यं कालवालमुभे तदा।
निशम्य च बहून्वालान् कृष्णान्पुच्छसमाश्रितान्। विषण्णरूपां विनतां कद्रूर्द्दास्ये न्ययोजयत्।
ततः सा विनता तस्मिन्पणितेन पराजिता। अभवद्दुःखसन्तप्ता दासीभावं समास्थिता।
एतस्मिन्नन्तरे चापि गरुडः काल आगते। विना मात्रा महातेजा विदार्य्याण्डमजायत।
महासत्त्वबलोपेतः सर्व्वा विद्योतयन्दिशः। कामरूपः कामगमः कामवीर्य्यो विहङ्गमः। ११३०
अग्निराशिरिवोद्भासन्समिद्धोऽतिभयङ्करः। विद्युद्विस्पष्टपिङ्गाक्षो युगान्ताग्निसमप्रभः।
प्रवृद्धः सहसा पक्षी महाकायो नभोगतः। घोरो घोरस्वनो रौद्रो वह्निरौर्व्व इवापरः।
तं दृष्ट्वा शरणं जग्मुर्द्देवाः सर्व्वे विभावसुं। प्रणिपत्याब्रुवंश्चैनमासीनं विश्वरूपिणं।
अग्ने मा त्वं प्रवर्द्धिष्ठाः कच्चिन्नो न दिधक्षसि। असौ हि राशिः सुमहान्समिद्धस्तव सर्प्पति।
॥ अग्निरुवाच ॥ नैतदेवं यथा यूयं मन्यध्वमसुरार्द्दनाः। गरुडो बलवानेष मम तुल्यश्च तेजसा। ११३५
जातः परमतेजस्वी विनतानन्दवर्द्धनः। तेजोराशिमिमं दृष्ट्वा युष्मान्मोहः समाविशत्।
नागक्षयकरश्चैव काश्यपेयो महाबलः। देवानाञ्च हिते युक्तस्त्वहितो दैत्यरक्षसां।
न भीः कार्य्या कथं चात्र पश्यध्वं सहिता मम। एवमुक्तास्तदा गत्वा गरुडं वाग्भिरस्तुवन्।

ते दूरादभ्युपेत्यैनं देवाः सर्षिगणास्तदा ॥ देवा ऊचुः ॥ त्वमृषिस्त्वं महाभागस्त्वं देवः पतगेश्वरः। त्वं प्रभुस्तपनः सूर्य्यः पर
मेष्ठी प्रजापतिः।

त्वमिन्द्रस्त्वं हयमुखस्त्वं शरस्त्वं जगत्पतिः। त्वं मुखं पद्मजो विप्रस्त्वमग्निः पवनस्तथा। १२५०

त्वं हि धाता विधाता च त्वं विष्णुः सुरसत्तम। त्वं महानभिभूः शश्वदमृतं त्वं महद्यशः।

त्वं प्रभास्त्वमभिप्रेतं त्वं नस्त्राणमनुत्तमं। बलोर्म्मिमान्साधुरदीनसत्त्वः समृद्धिमान् दुर्व्विषहस्त्वमेव। त्वत्तः सृतं सर्व्वमहीनकी
र्त्तेह्यनागतं चोपगतं च सर्व्वं।

त्वमुत्तमः सर्व्वमिदं चराचरं गभस्तिभिर्भानुरिवावभाससे। समाक्षिपन्भानुमतः प्रभां मुहुस्त्वमन्तकः सर्व्वमिदं ध्रुवाध्रुवं।

दिवाकरः परिकुपितो यथा दहेत्प्रजास्तथा दहसि हुताशनप्रभ। भयङ्करः प्रलयइवाग्निरुत्थितो विनाशयन्युगपरिवर्त्त
नान्तकृत्।

खगेश्वरं शरणमुपागता वयं महौजसं ज्वलनसमानवर्चसं। तडित्प्रभं वितिमिरमभ्रगोचरं महाबलं गरुडमुपेत्य खेचरं। १२५५

परावरं वरदमजय्यविक्रमं तवौजसा सर्व्वमिदं प्रतापितं। जगत्प्रभो तप्तसुवर्णवर्चसा त्वं पाहि सर्व्वांश्च सुरान्महात्मनः।

भयान्विता नभसि विमानगामिनो विमानिता विपथगतिं प्रयान्ति ते। ऋषेः सुतस्त्वमसि दयावतः प्रभो महात्मनः खगवर
कश्यपस्य ह।

स माक्रुधः कुरु जगतो दयां परां त्वमीश्वरः प्रशममुपैहि पाहि नः। महाशनिस्फुरितसमस्वनेन ते दिशोऽम्बरं त्रिदिवमियञ्च
मेदिनी।

चलन्ति नः खग हृदयानि चानिशं निगृह्यतां वपुरिदमग्निसन्निभं। तव द्युतिं कुपितकृतान्तसन्निभां निशम्य नश्चलति मनोऽव्यव
स्थितं। प्रसीद नः पतगपते प्रयाचतां शिवश्च नो भव भगवन् सुखावहः।

एवं स्तुतः सुपर्णस्तु देवैः सर्षिगणैस्तदा। तेजसः प्रतिसंहारमात्मनः स चकार ह। १२६०

॥ इत्यादिपर्व्वणि सौपर्णे स्तुतौ त्रयोविंशोतितमोऽध्यायः ॥ २३ ॥

स श्रुत्वाऽथात्मनो देहं सुपर्णः प्रेक्ष्य च स्वयं। शरीरप्रतिसंहारमात्मनः संप्रचक्रमे।

॥ सुपर्ण उवाच ॥ न मे सर्वाणि भूतानि विभियुर्देहदर्शनात्। भीमरूपात्समुद्विग्नास्तस्मात्तेजस्तु संहरे।

॥ सौतिरुवाच ॥ ततः कामगमः पक्षी कामवीर्यो विहङ्गमः। अरुणं चात्मनः पृष्ठमारोप्य स पितुर्गृहात्।

मातुरन्तिकमागच्छत्परं तीरं महोदधेः। तत्रारुणश्च निक्षिप्तो दिशं पूर्वां महाद्युतिः। सूर्य्यस्तेजोभिरत्युग्रैर्लोकान्दग्धुमना यदा।

॥ रुरुरुवाच ॥ किमर्थं भगवान्सूर्य्यो लोकान् दग्धुमनास्तदा। किमस्यापहृतं देवैर्येनेमं मन्युराविशत्। १२६५

॥ प्रमतिरुवाच ॥ चन्द्रादित्याभ्यां यदा राहुराख्यातो ह्यमृतं पिवन्। वैरानुवन्धं कृतवांश्चन्द्रादित्ये तदाऽनघ।

वध्यमाने ग्रहेणाथ आदित्ये मन्युराविशत्। सुरार्थाय समुत्पन्नो रोषो राहोस्तु मां प्रति।

बह्वनर्थकरं पापमेकोऽहं समवाप्नुयां। सहाय एव कार्य्येषु नच कृच्छ्रेषु दृश्यते।

पश्यन्ति ग्रस्यमानं मां सहन्ते वै दिवौकसः। तस्माल्लोकविनाशार्थं ह्यवतिष्ठे न संशयः।

एवं कृतमतिः सूर्य्यो ह्यस्तमभ्यगमद्गिरिं। तस्माल्लोकविनाशाय संतापयत भास्करः। १२७०

ततो देवानुपागम्य प्रोचुरेनं महर्षयः। अद्यार्द्धरात्रसमये सर्वलोकभयावहः। उत्पत्स्यते महान्दाहस्त्रैलोक्यस्य विनाशनः।

ततो देवाः सर्षिगणा उपगम्य पितामहं । अब्रुवन् किमिवेहाद्य महद्दाहकृतं भयं ।
न तावद्दृश्यते सूर्य्यः क्षयोऽयं प्रतिभाति च । उदिते भगवन् भानौ कथमेतद्भविष्यति ।
॥ पितामह उवाच ॥ एष लोकविनाशाय रविरुद्यन्तुमुद्यतः । दृश्यन्नेव हि लोकान् स भस्मराशीकरिष्यति ॥
तस्य प्रतिविधानञ्च विहितं पूर्वमेव हि । कश्यपस्य सुतो धीमानरुणेत्यभिविश्रुतः । १२७५
महाकायो महातेजाः स स्थास्यति पुरो रवेः । करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति । लोकानां स्वस्ति चैवं स्यादृषीणाञ्च दिवौकसां ।
॥ प्रमतिरुवाच ॥ ततः पितामहाज्ञातः सर्वं चक्रे तदाऽरुणः । उदितश्चैव सविता ह्यरुणेन समावृतः ।
एतत्ते सर्वमाख्यातं यत्सूर्यं मन्युराविशत् । अरुणश्च यथैवास्य सारथ्यमकरोत्प्रभुः । भूय एवापरं प्रश्नं शृणु पूर्वमुदाहृतं ।
॥ इत्यादिपर्वणि सौपर्णे चतुर्व्विंशतितमोऽध्यायः ॥ २४ ॥
॥ सौतिरुवाच ॥ ततः कामगमः पक्षी महावीर्य्यो महाबलः । मातुरन्तिकमागच्छत्परं पारं महोदधेः ।
यत्र सा विनता तस्मिन्पणितेन पराजिता । अतीव दुःखसन्तप्ता दासीभावमुपागता । १२८०
ततः कदाचिद्विनतां प्रणतां पुत्रसन्निधौ । काल आहूय वचनं कद्रूरिदमभाषत ।
नागानामालयं भद्रे सुरम्यं चारुदर्शनं । समुद्रकुक्षावेकान्ते तत्र मां विनते नय ।
ततः सुपर्णमाता तामवहत्सर्पमातरं । पन्नगान्गरुडश्चापि मातुर्व्वचनचोदितः
स सूर्य्यमभितो याति वैनतेयो विहङ्गमः । सूर्य्यरश्मिप्रतप्ताश्च मूर्च्छिताः पन्नगाभवन् ।
तदवस्थान्सुतान् दृष्ट्वा कद्रूः शक्रमथास्तुवत् । नमस्ते सर्व्वदेवेश नमस्ते बलसूदन । १२८५
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते । सर्प्पाणां सूर्य्यतप्तानां वारिणा त्वं प्लवो भव ।
त्वमेव परमं त्राणमस्माकममरोत्तम । ईशो ह्यसि पयः स्रष्टुं त्वमनल्पं पुरन्दर ।
त्वमेव वायुस्त्वं मेघस्त्वमग्निर्व्विद्युतोऽम्बरे । त्वमभ्रगणविक्षेप्ता त्वामेवाहुर्महाघनं ।
त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः । स्रष्टा त्वमेव लोकानां संहर्त्ता चापराजितः ।
त्वं ज्योतिः सर्व्वभूतानां त्वमादित्यो विभावसुः । त्वं महद्भूतमाश्चर्य्यं त्वं राजा त्वं सुरोत्तमः । १२९०
त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणं । त्वं सर्व्वममृतं देव त्वं सोमः परमार्च्चितः ।
त्वं मुहूर्त्तस्तिथिश्च त्वं लवस्त्वं पुनः क्षणः । शुक्लस्त्वं बहुलश्चैव कला काष्ठा त्रुटिस्तथा । संवत्सरर्त्तवो मासा रजन्यश्च दिनानि च ।
त्वमुत्तमा सगिरिवना वसुन्धरा सभास्करं वितिमिरमम्बरं तथा । महोदधिः सतिमितिमिङ्गिलस्तथा महोर्म्मिमान् बहुमकरो झषाकुलः ।
महायशा स्त्वमिति सदाऽभिपूज्यसे मनीषिभिर्मुदितमना महर्षिभिः । अभिष्टुतः पिबसि च सोममध्वरे वषट्कृतान्यपि च हवींषि भूतये ।
त्वं विप्रैः सततमिहेज्यसे फलार्थं वेदाङ्गेष्वतुलबलौघ गीयसे च । त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा वेदाङ्गान्यभिगमयन्ति सर्व्वयत्नैः ।
इत्यादिपर्व्वण्यास्तीके सौपर्णे पञ्चविंशतितमोऽध्यायः ॥ २५ ॥ १२९५

॥ सौतिरुवाच ॥ एवं स्तुतस्तदा कद्र्वा भगवान् हरिवाहनः। नीलजीमूतसङ्घातैः सर्व्वमम्बरमावृणोत्।
मेघानाज्ञापयामास वर्षध्वममृतं शुभं। ते मेघा मुमुचुस्तोयं प्रभूतं विद्युदुज्ज्वलाः।
परस्परमिवात्यर्थं गर्ज्जन्तः सततं दिवि। संवर्त्तितमिवाकाशं जलदैः सुमहाद्भुतैः।
सृजद्भिरतुलं तोयमजस्रं सुमहारवैः। सम्प्रनृत्तमिवाकाशं धारोर्म्मिभिरनेकशः।
मेघस्तनितनिर्घोषैर्विद्युत्पवनकम्पितैः। तैर्मेघैः सततासारं वर्षद्भिरनिशन्तदा। ११००
नष्टचन्द्रार्ककिरणमम्बरं समपद्यत। नागानामुत्तमो हर्षस्तदा वर्षति वासवे।
आपूर्य्यत मही चापि सलिलेन समन्ततः। रसातलमनुप्राप्तं शीतलं विमलं जलं।
तदा भूरभवच्छन्ना जलोर्म्मिभिरनेकशः। रामणीयकमागच्छन्मात्रा सह भुजङ्गमाः।
इत्यादिपर्व्वणि सौपर्णे षड्विंशतितमोऽध्यायः॥ २६ ॥
॥ सौतिरुवाच ॥ सम्प्रहृष्टास्ततो नागा जलधाराप्लुतास्तदा। सुपर्णेनोह्यमानास्ते जग्मुस्तं द्वीपमाशु वै।
तं द्वीपं मकरावासं विहितं विश्वकर्म्मणा। तत्र ते लवणं घोरं ददृशुः पूर्व्वमागताः। ११०५
सुपर्णसहिताः सर्पाः काननञ्च मनोरमं। सागराम्बुपरिक्षिप्तं पक्षिसङ्घनिनादितं।
विचित्रफलपुष्पाभिर्व्वनराजीभिरावृतं। भवनैरावृतं रम्यैस्तथा पद्माकरैरपि।
प्रसन्नसलिलैश्चापि ह्रदैर्द्दिव्यैर्विभूषितं। दिव्यगन्धवहैः पुण्यैर्मारुतैरुपवीजितं।
उत्पतद्भिरिवाकाशं वृक्षैर्मलयजैरपि। शोभितं पुष्पवर्षाणि मुञ्चद्भिर्मारुतोद्धुतैः।
वायुविक्षिप्तकुसुमैस्तथाऽन्यैरपि पादपैः। किरद्भिरिव तत्रस्थान्नागान्पुष्पाम्बुवृष्टिभिः। १११०
मनःसंहर्षणं दिव्यं गन्धर्व्वाप्सरसां प्रियं। मत्तभ्रमरसंघुष्टं मनोज्ञाकृतिदर्शनं।
रमणीयं शिवं पुण्यं सर्व्वैर्ज्जनमनोहरैः। नानापक्षिरुतं रम्यं कद्रूपुत्रप्रहर्षणं।
तत्ते वनं समासाद्य विजह्रुः पन्नगास्तदा। अब्रुवंश्च महावीर्य्यं सुपर्णं पतगेश्वरं।
वहास्मानपरं द्वीपं सुरम्यं विमलोदकं। त्वं हि देशान्बहून् रम्यान्व्रजन्पश्यसि खेचर।
स विचिन्त्याब्रवीत्पक्षी मातरं विनतां तदा। किं कारणं मया मातः कर्त्तव्यं सर्प्पभाषितं। १११५
॥ विनतोवाच ॥ दासीभूताऽस्मि दुर्भागात्सपत्न्याः पतगोत्तम। पणं वितथमास्थाय सर्प्पैरुपधिना कृतं।
तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः। उवाच वचनं सर्प्पांस्तेन दुःखेन दुःखितः।
किमाहृत्य विदित्वा वा किम्वा कृत्वेह पौरुषं। दास्याद्वो विप्रमुच्येयं तथ्यं वदत लेलिहाः।
॥ सौतिरुवाच ॥ श्रुत्वा तमब्रुवन्सर्प्पा आहरामृतमोजसा। ततो दास्याद्विप्रमोक्षो भविता तव खेचर।
इत्यादिपर्व्वणि सौपर्णे सप्तविंशतितमोऽध्यायः॥ २७ ॥
॥ सौतिरुवाच ॥ इत्युक्तो गरुडः सर्प्पैस्ततो मातरमब्रवीत्। गच्छाम्यमृतमाहर्त्तुं भक्ष्यमिच्छामि वेदितुं। ११२०
॥ विनतोवाच ॥ समुद्रकुक्षावेकान्ते निषादालयमुत्तमं। निषादानां सहस्राणि तान्भुक्त्वाऽमृतमानय।
नच ते ब्राह्मणं हन्तुं कार्य्या वुद्धिः कथञ्चन। अवध्यः सर्व्वभूतानां ब्राह्मणो ह्यनलोपमः।
अग्निरर्क्को विषं शस्त्रं विप्रो भवति कोपितः। गुरुर्हि सर्व्वभूतानां ब्राह्मणः परिकीर्त्तितः। एवमादिभिरूपैस्तु सतां वै ब्राह्मणो मतः।

स ते तात न हन्तव्यः संक्रुद्धेनापि सर्व्वथा। ब्राह्मणानामभिद्रोहो न कर्त्तव्यः कथञ्चन।
न ह्येवमग्निर्नादित्यो भस्म कुर्य्यात्तथाऽनघ। यथा कुर्य्यादभिक्रुद्धो ब्राह्मणः संशितव्रतः। १३२५
तदेतैर्विविधैर्लिङ्गैस्त्वं विद्धास्तं द्विजोत्तमं। भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः पिता गुरुः।
॥ गरुड़उवाच ॥ किंरूपो ब्राह्मणो मातः किंशीलः किंपराक्रमः। किं स्विदग्निनिभो भाति किं स्वित्सौम्यप्रदर्शनः।
यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः। तन्मे कारणतो मातः पृच्छतो वक्तुमर्हसि।
॥ विनतोवाच ॥ यस्ते कण्ठमनुप्राप्तो निगीर्णं वडिशं यथा। दहेदङ्गारवत्पुत्र तं विद्या ब्राह्मणर्षभं।
विप्रस्त्वया न हन्तव्यः संक्रुद्धेनापि सर्व्वदा। प्रोवाच चैनं विनता पुत्रहार्द्दादिदं वचः। १३३०
जठरे न च जीर्य्येद्यस्तं जानीहि द्विजोत्तमं। पुनः प्रोवाच विनता पुत्रहार्द्दादिदं वचः।
जानन्त्यप्यतुलं वीर्य्यमाशीर्व्वादपरायणा। प्रीता परमदुःखार्त्ता नागैर्विप्रकृता सती।
॥ विनतोवाच ॥ पक्षौ ते मारुतः पातु चन्द्रसूर्य्यौ च पृष्ठतः। शिरश्च पातु वह्निस्ते वसवः सर्व्वतस्तनुं।
अहञ्च ते सदा पुत्र शान्तिस्वस्तिपरायणा। इहासीना भविष्यामि स्वस्तिकारे रता सदा।
अरिष्टं व्रज पन्थानं पुत्र कार्य्यार्थसिद्धये॥ सौतिरुवाच॥ ततः स मातुर्व्वचनं निशम्य वितत्य पक्षौ नभ उत्पपात। ततो निषा
दानबलवानुपागतो बुभुक्षितः काल इवान्तकोऽपरः। १३३५
स तान्निषादानुपसंहरंस्तदा रजः समुद्धूय नभःस्पृशं महत्। समुद्रकुक्षौ च विशोषयन्पयः समीपजान्भूधरजान् विचालयन्।
ततः स चक्रे महदाननं तदा निषादमार्गं प्रतिरुध्य पक्षिराट्। ततो निषादास्त्वरिताः प्रवव्रजुर्यतो मुखं तस्य भुजङ्गभोजिनः।
तदाननं विवृतमतिप्रमाणवत्समभ्ययुर्गगनमिवार्द्दिताः खगाः। सहस्रशः पवनरजोविमोहिता यथाऽनिलप्रचलितपादपे वने।
ततः खगो वदनममित्रतापनः समाहरत्परिचपलो महाबलः। निषूदयन्बहुविधमत्स्यजीविनो बुभुक्षितो गगनचरेश्वरस्तदा।
इत्यादिपर्व्वणि सौपर्णे अष्टाविंशोऽध्यायः॥ २८॥
॥ सौतिरुवाच ॥ तस्य कण्ठमनुप्राप्तो ब्राह्मणः सह भार्य्यया। दहन्दीप्त इवाङ्गारस्तमुवाचान्तरीक्षगः। १३४०
द्विजोत्तम विनिर्गच्छ तूर्णमास्यादपावृतात्। न हि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा।
ब्रुवाणमेवं गरुडं ब्राह्मणः प्रत्यभाषत। निषादी मम भार्य्येयं निर्गच्छतु मया सह।
॥ गरुड उवाच ॥ एतामपि निषादीं त्वं परिगृह्याशु निष्पत। तूर्णं सम्भावयात्मानमजीर्णं मम तेजसा।
॥ सौतिरुवाच ॥ ततः स विप्रो निष्क्रान्तो निषादीसहितस्तदा। वर्द्धयित्वा च गरुडमिष्टं देशं जगाम ह।
सहभार्य्ये विनिष्क्रान्ते तस्मिन् विप्रे च पक्षिराट्। वितत्य पक्षावाकाशमुत्पपात मनोजवः। १३४५
ततोऽपश्यत्स पितरं पृष्टश्चाख्यातवान्पितुः। यथान्यायममेयात्मा तञ्चोवाच महानृषिः।
॥ कश्यप उवाच ॥ कच्चिद्वः कुशलं नित्यं भोजने बहुलं सुत। कच्चिच्च मानुषे लोके तवान्नं विद्यते बहु।
॥ गरुड़उवाच ॥ माता मे कुशला शश्वत्तथा भ्राता तथा ह्यहं। न हि मे कुशलं तात भोजने बहुले सदा।
अहं हि सर्पैः प्रहितः सोममाहर्त्तुमुत्तमं। मातुर्दास्यविमोक्षार्थमाहरिष्ये तमद्य वै।
माता चाच समादिष्टा निषादान्भक्षयेति ह। न च मे तृप्तिरभवद्भक्षयित्वा सहस्रशः। १३५०

तस्मादाहारमपरं भगवन्प्रदिशस्व मे । यद्भुक्त्वाऽमृतमाहर्तुं समर्थः स्यामहं प्रभो । क्षुत्पिपासा विघातार्थं भक्ष्यमाख्यातु मे भवान् ।

॥ कश्यपउवाच ॥ इदं सरो महापुण्यं देवलोकेऽपि विश्रुतं । यत्र कूर्म्मो गजं हस्ती सदा कर्षत्यवाङ्मुखः ।

तयोर्जन्मान्तरे वैरं सम्प्रवक्ष्याम्यशेषतः । तन्मे तत्त्वं निबोधस्व यत्प्रमाणौ च तावुभौ ।

आसीद्विभावसुर्नाम महर्षिः कोपनो भृशं । भ्राता तस्यानुजश्चासीत्सुप्रतीको महातपाः ।

स नेच्छति धनं भ्राता सहैकस्थं महामुनिः । विभागं कीर्त्तयत्येव सुप्रतीको हि नित्यशः ।　१२५५

अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः । विभागं बहवो मोहात्कर्त्तुमिच्छन्ति नित्यशः ।

ततो विभक्तास्त्वन्योन्यं विरुध्यन्तेऽर्थमोहिताः । ततः स्वार्थपरान्मूढान्पृथग्भूतान् स्वकैर्धनैः ।

विदित्वा भेदयन्त्येतानमित्रा मित्ररूपिणः । विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ ।

भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्त्तते । तस्माद्विभागं भ्रातॄणां न प्रशंसन्ति साधवः ।

गुरुशास्त्रेऽनिबद्धानामन्योन्येनाभिशङ्किनां । नियन्तुं नहि शक्यस्त्वं भेदतो धनमिच्छसि ।　१२६०

यस्मात्तस्मात्सुप्रतीक हस्तित्वं समवाप्स्यसि । शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत् ।

त्वमप्यन्तर्ज्जलचरः कच्छपः संभविष्यसि । एवमन्योन्यशापात्तौ सुप्रतीकविभावसू ।

गजकच्छपतां प्राप्तावर्थार्थं मूढचेतसौ । रोषदोषानुषङ्गेण तिर्य्यग्योनिगतावुभौ ।

परस्परद्वेषरतौ प्रमाणबलदर्पितौ । सरस्यस्मिन्महाकायौ पूर्व्ववैरानुसारिणौ ।

तयोरन्यतरः श्रीमान्समुपैति महागजः । यस्य बृंहितशब्देन कूर्म्मोऽप्यन्तर्ज्जलेशयः ।　१२६५

उत्थितोऽसौ महाकायः कृत्स्नं विक्षोभयन्सरः । यं दृष्ट्वा वेष्टितकरः पतत्येष गजो जलं ।

दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्य्यवान् । विक्षोभयंस्ततो नागः सरो बहुझषाकुलं ।

कूर्म्मोऽप्यभ्युद्यतशिरा युद्धायाभ्येति वीर्य्यवान् । षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः ।

कूर्म्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः । तावुभौ युद्धसम्मत्तौ परस्परवधैषिणौ ।

उपयुज्याशु कर्म्मेदं साधयेप्सितमात्मनः । महाभ्रघनसङ्काशं तं भुक्त्वाऽमृतमानय ।　१२७०

महागिरिसमप्रख्यं घोररूपञ्च हस्तिनं । सौतिरुवाच । इत्युक्त्वा गरुडं सोऽथ माङ्गल्यमकरोत्तदा ।

युध्यतः सह देवैस्ते शुभं भवतु मङ्गलं । पूर्णकुम्भो द्विजा गावो यच्चान्यत्किञ्चिदुत्तमं ।

शुभं स्वस्त्ययनं चापि भविष्यति तवाण्डज । युध्यमानस्य संग्रामे देवैः सार्द्धं महाबल ।

ऋचोयजूंषि सामानि पवित्राणि हवींषि च । रहस्यानि च सर्व्वाणि सर्व्वे वेदाश्च ते बलं ।

इत्युक्तो गरुडः पित्रा गतस्तं ह्रदमन्तिकात् । अपश्यन्निर्म्मलजलं नानापक्षिसमाकुलं ।　१२७५

स तत्स्मृत्वा पितुर्वाक्यं भीमवेगोऽन्तरीक्षगः । नखेन गजमेकेन कूर्म्ममेकेन चाक्षिपत् ।

समुत्पपात चाकाशं तत उच्चैर्विहङ्गमः । सोऽलम्बं तीर्थमासाद्य देववृक्षानुपागमत् ।

ते भीताः समकम्पन्त तस्य पक्षानिलाहताः । न नो भञ्ज्यादिति तदा दिव्याः कनकशाखिनः ।

प्रचलाङ्गान्स्तान् दृष्ट्वा मनोरथफलद्रुमान् । अन्यानतुलरूपाङ्गानुपचक्राम खेचरः ।

काञ्चनै राजतैश्चैव फलैर्वैदूर्य्यशाखिनः। सागराम्बुपरिक्षिप्तान्भ्राजमानान्महाद्रुमान्। १३८०
तमुवाच खगश्रेष्ठं तत्र रौहिणपादपः। अतिप्रवृद्धः सुमहानापतन्तं मनोजवं।
यैषा मम महाशाखा शतयोजनमायता। एतामास्थाय शाखां त्वं खादेमौ गजकच्छपौ।
ततो द्रुमं पतगसहस्रसेवितं महीधरप्रतिमवपुः प्रकम्पयन्। खगोत्तमो द्रुतमभिपत्य वेगवान्बभञ्ज तामविरलपत्रसञ्चयां।
इत्यादिपर्व्वणि सौपर्णे ऊनत्रिंशोऽध्यायः॥ २९॥
॥सौतिरुवाच॥ स्पृष्टमात्रा तु पद्भ्यां सा गरुडेन बलीयसा। अभज्यत तरोः शाखा भग्नां चैनामधारयत्।
तां भग्नां स महाशाखां स्मयमानो विलोकयन्। अथात्र लम्बतोऽपश्यद्वालखिल्यानधोमुखान्। १३८५
ऋषयोऽत्र लम्बन्ते न हन्यामिति तानृषीन्। तपोरतान् लम्बमानान् ब्रह्मर्षीनभिवीक्ष्य सः।
हन्यादेतान्सम्पतन्ती शाखेत्यथ विचिन्त्य सः। नखैर्दृढतरं वीरः संगृह्य गजकच्छपौ।
स तद्विनाशसन्त्रासादभिपत्य खगाधिपः। शाखामास्येन जग्राह तेषामेवान्ववेक्षया।
अतिदैवन्तु तत्तस्य कर्म्म दृष्ट्वा महर्षयः। विस्मयोत्कम्पहृदया नाम चक्रुर्महाखगे।
गुरुं भारं समासाद्योड्डीन एष विहङ्गमः। गरुडस्तु खगश्रेष्ठस्तस्मात्पन्नगभोजनः। १३९०
ततः शनैः पर्य्यपतत्पक्षैः शैलान्प्रकम्पयन्। एवं सोऽभ्यपतद्देशान्बहून्सगजकच्छपः।
दयार्थं वालखिल्यानां न च स्थानमविन्दत। स गत्वा पर्व्वतश्रेष्ठं गन्धमादनमञ्जसा।
ददर्श कश्यपं तत्र पितरं तपसि स्थितं। ददर्श तं पिता चापि दिव्यरूपं विहङ्गमं।
तेजोवीर्य्यबलोपेतं मनोमारुतरंहसं। शैलशृङ्गप्रतीकाशं ब्रह्मदण्डमिवोद्यतं।
अचिन्त्यमनभिध्येयं सर्व्वभूतभयङ्करं। महावीर्य्यधरं रौद्रं साक्षादग्निमिवोद्यतं। १३९५
अप्रधृष्यमजेयञ्च देवदानवराक्षसैः। भेत्तारं गिरिशृङ्गाणां समुद्रजलशोषणं।
लोकसंलोडनं घोरं कृतान्तसमदर्शनं। तमागतमभिप्रेक्ष्य भगवान्कश्यपस्तदा। विदित्वा चास्य सङ्कल्पमिदं वचनमब्रवीत्।
॥कश्यप उवाच॥ पुत्र मा साहसं कार्षीर्मा सद्यो लप्स्यसे व्यथां। मा त्वां दहेयुः संक्रुद्धा वालखिल्या मरीचिपाः।
॥सौतिरुवाच॥ ततः प्रसादयामास कश्यपः पुत्रकारणात्। वालखिल्यान्महाभागांस्तपसा हतकल्मषान्।
॥ कश्यप उवाच॥ प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः। चिकीर्षति महत्कर्म्म तदनुज्ञातुमर्हथ। १४००
॥सौतिरुवाच॥ एवमुक्ता भगवता मुनयस्ते समभ्ययुः। मुक्त्वा शाखां गिरिं पुण्यं हिमवन्तं तपोऽर्थिनः।
ततस्तेष्वपयातेषु पितरं विनतासुतः। शाखाव्याक्षिप्तवदनः पर्य्यपृच्छत कश्यपं।
भगवन् क्व विमुञ्चामि तरोः शाखामिमामहं। वर्जितं मानुषैर्देशमाख्यातु भगवान्मम।
ततो निःपुरुषं शैलं हिमसंरुद्धकन्दरं। अगम्यं मनसाऽप्यन्यैस्तस्याचख्यौ स कश्यपः।
तं पर्वतं महाकुक्षिमुद्दिश्य स महाखगः। जवेनाभ्यपतत्तार्क्ष्यः सशाखागजकच्छपः। १४०५
न तां वध्री परिणहेच्छतचर्म्मा महातनुं। शाखिनो महतीं शाखां यां प्रगृह्य ययौ खगः।
स ततः शतसाहस्रं योजनान्तरमागतः। कालेन नातिमहता गरुडः पतगेश्वरः।
स तं गत्वा क्षणेनैव पर्वतं वचनात्पितुः। अमुञ्चन्महतीं शाखां सस्वनं तत्र खेचरः।

पक्षानिलहतश्चास्य प्राकम्पत स शैलराट् । मुमोच पुष्पवर्षञ्च समागलितपादपः ।

शृङ्गाणि च व्यशीर्य्यन्त गिरेस्तस्य समन्ततः । मणिकाञ्चनचित्राणि शोभयन्ति महागिरिं । १४१०

शाखिनो बहवश्चापि शाखयाऽभिहतास्तया । काञ्चनैः कुसुमैर्भान्ति विद्युत्वन्त इवाम्बुदाः ।

ते हेमविकचा भूमौ युताः पर्व्वतधातुभिः । व्यराजन्शाखिनस्तत्र सूर्य्यांशुप्रतिरञ्जिताः ।

ततस्तस्य गिरेः शृङ्गमास्थाय स खगोत्तमः । भक्षयामास गरुडस्तावुभौ गजकच्छपौ ।

तावुभौ भक्षयित्वातु स तार्क्ष्यः कूर्म्मकुञ्जरौ । ततः पर्व्वतकूटाग्रादुत्पपात महाजवः ।

प्रावर्त्तन्ताथ देवानामुत्पाता भयशंसिनः । इन्द्रस्य वज्रं दयितं प्रजज्वाल भयात्ततः । १४१५

सधूमा न्यपतत्सार्च्चिर्दिवोल्का नभसश्च्युता । तथावसूनां रुद्राणामादित्यानाञ्च सर्व्वशः ।

साध्यानां मरुताञ्चैव ये चान्ये देवतागणाः । स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत् ।

अभूतपूर्व्वं संग्रामे तदा देवासुरेऽपि च । ववुर्व्वाताः सनिर्घाताः पेतुरुल्काः सहस्रशः ।

निरभ्रमेव चाकाशं प्रजगर्ज्ज महास्वनं । देवानामपि यो देवः सोऽप्यवर्षत शोणितं ।

मम्लुर्माल्यानि देवानां नेशुस्तेजांसि चैव हि । उत्पातमेघा रौद्राश्च ववृषुः शोणितं बहु । १४२०

रजांसि मुकुटान्येषामुत्थितानि व्यधर्षयन् । ततस्त्राससमुद्विग्नः सह देवैः शतक्रतुः । उत्पातान्दारुणान्पश्यन्नित्युवाच बृहस्पतिं ।

॥ इन्द्रउवाच ॥ किमर्थं भगवन् घोरा उत्पाताः सहसोत्थिताः । न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ।

॥ बृहस्पतिरुवाच ॥ तवापराधाद्देवेन्द्र प्रमादाच्च शतक्रतो । तपसा वालिखिल्यानां महर्षीणां महात्मनां ।

कश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः । हर्त्तुं सोममभिप्राप्तो बलवान्कामरूपधृक् ।

समर्थो बलिनां श्रेष्ठो हर्त्तुं सोमं विहङ्गमः । सर्व्वं सम्भावयाम्यस्मिन्नसाध्यमपि साधयेत् । १४२५

॥ सौतिरुवाच ॥ श्रुत्वैतद्वचनं शक्रः प्रोवाचामृतरक्षिणः । महावीर्य्यबलः पक्षी हर्त्तुं सोममिहोद्यतः ।

युष्मान्सम्बोधयाम्येष यथा न स हरेद्बलात् । अतुलं हि बलं तस्य बृहस्पतिरुवाच ह ।

तच्छ्रुत्वा विबुधा वाक्यं विस्मिता यत्नमास्थिताः । परिवार्य्यामृतं तस्थुर्वज्री चेन्द्रः प्रतापवान् ।

धारयन्तो विचित्राणि काञ्चनानि मनस्विनः । कवचानि महार्हाणि वैदूर्य्यविकृतानि च ।

चर्म्माण्यपि च गात्रेषु भानुमन्ति दृढानि च । विविधानि च शस्त्राणि घोररूपाण्यनेकशः । १४३०

शिततीक्ष्णाग्रधाराणि समुद्यम्य सुरोत्तमाः । सविस्फुलिङ्गज्वालानि सधूमानि च सर्व्वशः ।

चक्राणि परिघांश्चैव त्रिशूलानि परश्वधान् । शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्म्मलान् । स्वदेहरूपाण्यादाय गदाश्चोग्र प्रदर्शनाः ।

तैः शस्त्रैर्भानुमद्भिस्ते दिव्याभरणभूषिताः । भानुमन्तः सुरगणा स्तस्थुर्विगतकल्मषाः ।

अनुपमबलवीर्य्यतेजसो धृतमनसः परिरक्षणेऽमृतस्य । असुरपुरविदारणाः सुरा ज्वलनसमिद्धवपुःप्रकाशिनः ।

इति समरवरं सुराःस्थितास्ते परिघसहस्रशतैः समाकुलं । विगलितमिव चाम्बरान्तरं तपनमरीचिविकाशितं बभासे । १४३५

इत्यादिपर्व्वणि सौपर्णे त्रिंशोऽध्यायः ॥ ३० ॥

॥ शौनक उवाच ॥ कोऽपराधो महेन्द्रस्य कः प्रमादश्च सूतज । तपसा वालिखिल्यानां संभूतो गरुडः कथं ।
कश्यपस्य द्विजातेश्च कथं वै पक्षिराट् सुतः । अधृष्यः सर्व्वभूतानामवध्यश्चाभवत्कथं ।
कथञ्च कामचारी स कामवीर्य्यश्च खेचरः । एतदिच्छाम्यहं श्रोतुं पुराणे यदि पठ्यते ।
॥ सौतिरुवाच ॥ विषयोऽयं पुराणस्य यन्मां त्वं परिपृच्छसि । शृणु मे वदतः सर्व्वमेतत्संक्षेपतो द्विज ।
यजतः पुत्रकामस्य कश्यपस्य प्रजापतेः । साहाय्यमृषयो देवा गन्धर्व्वाश्च ददुः किल । १४४०
तत्रेध्मानयने शक्रो नियुक्तः कश्यपेन ह । मुनयो वालिखिल्याश्च ये चान्ये देवतागणाः ।
शक्रस्तु वीर्य्यसदृशमिध्मभारं गिरिप्रभं । समुद्यम्यानयामास नातिकृच्छ्रादिव प्रभुः ।
अथापश्यदृषीन् ह्रस्वानङ्गुष्ठोदरवर्ष्मणः । पलाशवर्त्तिकामेकां वहतः संहतान् पथि ।
प्रलीनान्स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् । क्लिश्यमानान्मन्दबलान् गोष्पदे संप्लुतोदके ।
तांश्च सर्व्वान् स्मयाविष्टो वीर्य्योन्मत्तः पुरन्दरः । अवहस्याभ्यगाच्छीघ्रं लङ्घयित्वाऽवमन्य च । १४४५
तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः । आरेभिरे महत्कर्म्म तदा शक्रभयङ्करं ।
जुहुवुस्ते सुतपसो विधिवज्जातवेदसं । मन्त्रैरुच्चावचैर्व्विप्रा येन कामेन तच्छृणु ।
कामवीर्य्यः कामगमो देवराजभयप्रदः । इन्द्रोऽन्यः सर्व्वदेवानां भवेदिति यतव्रताः ।
इन्द्राच्छतगुणः शौर्य्ये वीर्य्ये चैव मनोजवः । तपसो नः फलेनाद्य दारुणः सम्भवत्विति ।
तद्बुद्ध्वा भृशसन्तप्तो देवराजः शतक्रतुः । जगाम शरणं तत्र कश्यपं संशितव्रतं । १४५०
तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः । वालिखिल्यानुपागम्य कर्म्मसिद्धिमपृच्छत ।
एवमस्त्विति तञ्चापि प्रत्यूचुः सत्यवादिनः । तान् कश्यप उवाचेदं सान्त्वपूर्व्वं प्रजापतिः ।
अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः । इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः ।
न मिथ्या ब्रह्मणो वाक्यं कर्त्तुमर्हथ सत्तमाः । भवतां हि न मिथ्याऽयं सङ्कल्पो वै चिकीर्षितः ।
भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान् । प्रसादः क्रियतामस्य देवराजस्य याचतः । १४५५
एवमुक्ताः कश्यपेन वालिखिल्यास्तपोधनाः । प्रत्यूचुरभिसम्पूज्य मुनिश्रेष्ठं प्रजापतिं ।
वालिखिल्या ऊचुः । इन्द्रार्थोऽयं समारम्भः सर्व्वेषां नः प्रजापते । अपत्यार्थं समारम्भो भवतश्चायमीप्सितः ।
तदिदं सफलं कर्म्म त्वयैव प्रतिगृह्यतां । तथा चैवं विधत्स्वात्र यथा श्रेयोऽनुपश्यसि ॥ सौतिरुवाच ॥
एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा । विनता नाम कल्याणी पुत्रकामा यशस्विनी ।
तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः । उपचक्राम भर्त्तारं तामुवाचाथ कश्यपः । १४६०
आरम्भः सफलो देवि भविता यस्त्वयेप्सितः । जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ ।
तपसा वालिखिल्यानां मम सङ्कल्पजौ तथा । भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ ।
उवाच चैनां भगवान् कश्यपः पुनरेव ह । धार्य्यतामप्रमादेन गर्भोऽयं सुमहोदयः ।
एतौ सर्व्वपतत्रीणामिन्द्रत्वं कारयिष्यतः । लोकसम्भावितौ वीरौ कामरूपौ विहङ्गमौ ।
शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः । त्वत्सहायौ महावीर्य्यौ भ्रातरौ ते भविष्यतः । १४६५

नैताभ्यां भविता दोषः सकाशात्ते पुरन्दर। व्येतु ते शक्र सन्तापस्त्वमेवेन्द्रो भविष्यसि।
न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः। न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः।
एवमुक्तो जगामेन्द्रो निर्व्विशङ्कस्त्रिविष्टपं। विनता चापि सिद्धार्था बभूव मुदिता तथा।
जनयामास पुत्रौ द्वावरुणं गरुडं तथा। विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः।
पतत्रीणाञ्च गरुडमिन्द्रत्वेनाभ्यषिञ्चत। तस्यैतत्कर्म्म सुमहच्छ्रूयतां भृगुनन्दन। १४७०
इत्यादिपर्व्वणि सौपर्णे एकत्रिंशोऽध्यायः॥ ३१॥
॥ सौतिरुवाच॥ ततस्तस्मिन् द्विजश्रेष्ठ समुदीर्णे तथाविधे। गरुडः पक्षिराट् तूर्णं सम्प्राप्तो विबुधान् प्रति।
तं दृष्ट्वाऽतिबलञ्चैव प्राकम्पन्त सुरास्ततः। परस्परञ्च प्रत्यघ्नन् सर्व्वप्रहरणान्युत।
तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः। भौमनः सुमहावीर्य्यः सोमस्य परिरक्षिता।
स तेन पतगेन्द्रेण पक्षतुण्डनखक्षतः। मुहूर्त्तमतुलं युद्धं कृत्वा विनिहतो युधि।
रजश्चोद्धूय सुमहत्पक्षवातेन खेचरः। कृत्वा लोकान्निरालोकांस्तेन देवानवाकिरत्। १४७५
तेनावकीर्णा रजसा देवा मोहमुपागमन्। न चैव ददृशुश्छन्ना रजसाऽमृतरक्षिणः।
एवं संलोडयामास गरुडस्त्रिदिवालयं। पक्षतुण्डप्रहारैस्तु देवान्स विददार ह।
ततो देवः सहस्राक्षस्तूर्णं वायुमचोदयत्। विक्षिपेमां रजोवृष्टिं तवेदं कर्म्म मारुत।
अथ वायुरपोवाह तद्रजस्तरसा बली। ततो वितिमिरे जाते देवाः शकुनिमार्द्दयन्।
ननाद चोच्चैः स बलवान्महामेघ इवाम्बरे। वध्यमानः सुरगणैः सर्व्वभूतानि भीषयन्। १४८०
उत्पपात महावीर्य्यः पक्षिराट् परवीरहा। समुत्पत्यान्तरीक्षस्थं देवानामुपरि स्थितं।
वर्म्मिणो विबुधाः सर्व्वे नानाशस्त्रैरवाकिरन्। पट्टिशैः परिघैः शूलैर्गदाभिश्च सवासवाः।
क्षुरप्रैर्ज्वलितैश्चापि चक्रैरादित्यरूपिभिः। नानाशस्त्रविसर्गैश्च वध्यमानः समन्ततः।
कुर्व्वन्सुतुमुलं युद्धं पक्षिराट् न व्यकम्पत। निर्द्दहन्निव चाकाशे वैनतेयः प्रतापवान्। पक्षाभ्यामुरसा चैव समन्ताद्व्याक्षिपत्सुरान्।
ते विक्षिप्तास्ततो देवा दुद्रुवुर्गरुडार्द्दिताः। नखतुण्डक्षताश्चैव सुस्रुवुः शोणितं बहु। १४८५
साध्याः प्राचीं सगन्धर्व्वा वसवो दक्षिणां दिशं। प्रजग्मुः सहिता रुद्रैः पतगेन्द्रप्रधर्षिताः।
दिशं प्रतीचीमादित्या नासत्यावुत्तरां दिशं। मुहुर्मुहुः प्रेक्षमाणा युध्यमाना महौजसः।
अश्वक्रन्देन वीरेण रेणुकेन च पक्षिराट्। क्रथनेन च शूरेण तपनेन च खेचरः।
उलूकश्वसनाभ्याञ्च निमेषेण च पक्षिराट्। प्ररुजेन च संग्रामं चकार पुलिनेन च।
तान्पक्षनखतुण्डाग्रैरभिनद्विनतासुतः। युगान्तकाले संक्रुद्धः पिनाकीव परन्तपः। १४९०
महाबला महोत्साहास्तेन ते बहुधा क्षताः। रेजुरभ्रघनप्रख्या रुधिरौघप्रवर्षिणः।
तान् कृत्वा पतगश्रेष्ठः सर्व्वानुत्क्रान्तजीवितान्। अतिक्रान्तोऽमृतस्यार्थे सर्व्वतोऽग्निमपश्यत।
आवृण्वानं महाज्वालमर्च्चिर्भिः सर्व्वतोऽम्बरे। दहन्तमिव तीक्ष्णांशुं चण्डवायुसमीरितं।

ततो नवत्या नवतीर्मुखानां कृत्वा महात्मा गरुडस्तरस्वी। नदीः समापीय मुखैस्ततस्तैः सुशीघ्रमागम्य पुनर्जवेन।
ज्वलन्तमग्निं तममित्रतापनः समास्तरत्पत्ररथो नदीभिः। ततः प्रचक्रे वपुरन्यदल्पं प्रवेष्टुकामोऽग्निमभिप्रशाम्य। १४९५

इत्यादिपर्व्वणि सौपर्णे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ सौतिरुवाच ॥ जाम्बूनदमयो भूत्वा मरीचिनिकरोज्ज्वलः। प्रविवेश बलात्पक्षी वारिवेग इवार्णवं।
स चक्रं क्षुरपर्य्यन्तमपश्यदमृतान्तिके। परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयं।
ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणां। घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्म्मितं। तस्यान्तरं स दृष्ट्वैव पर्य्यवर्त्तत खेचरः
आरान्तरेणावपतत्संक्षिप्याङ्गं क्षणेन ह।
अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती। विद्युज्जिह्वौ महावीर्य्यौ दीप्तास्यौ दीप्तलोचनौ।
चक्षुर्विषौ महाघोरौ नित्यं क्रुद्धौ तरस्विनौ। रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ। १५००
सदा संरब्धनयनौ सदा चानिमिषेक्षणौ। तयोरेकोऽपि यं पश्येत्स तूर्णं भस्मसाद्भवेत्।
तयोश्चक्षूंषि रजसा सुपर्णः सहसाऽऽवृणोत्। ताभ्यामदृष्टरूपोऽसौ सर्व्वतः समताडयत्।
तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरीक्षगः। आच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः।
समुत्पाट्याऽमृतं तत्र वैनतेयस्ततो बली। उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्य्यवान्।
अपीत्वैवामृतं पक्षी परिगृह्याशु निःसृतः। अगच्छदपरिश्रान्त आवार्य्यार्कप्रभां ततः। १५०५
विष्णुना च तदाकाशे वैनतेयः समेयिवान्। तस्य नारायणस्तुष्टस्तेनालौल्येन कर्म्मणा।
तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरं। स वव्रे तव तिष्ठेयमुपरीत्यन्तरीक्षगः।
उवाच चैनं भूयोऽपि नारायणमिदं वचः। अजरश्चामरश्च स्याममृतेन विनाऽप्यहं।
एवमस्त्विति तं विष्णुरुवाच विनतासुतं। प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत्।
भवतेऽपि वरन्दद्यां वृणोतु भगवानपि। तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलं। १५१०
ध्वजञ्च चक्रे भगवानुपरि स्थास्यतीति तं। एवमस्त्विति तं देवमुक्त्वा नारायणं खगः।
वव्राज तरसा वेगाद्वायुं स्पर्द्धन्महाजवः। तं व्रजन्तं खगश्रेष्ठं वज्रेणेन्द्रोऽभ्यताडयत्।
हरन्तममृतं रोषाद्गरुडं पक्षिणां वरं। तमुवाचेन्द्रमाक्रन्दे गरुडः पततां वरः।
प्रहसन् श्लक्ष्णया वाचा तथा वज्रसमाहतः। ऋषेर्म्मानं करिष्यामि वज्रं यस्यास्थिसम्भवं।
वज्रस्य च करिष्यामि तवैव च शतक्रतो। एतत्पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे। १५१५
न च वज्रनिपातेन रुजा मेऽस्तीह काचन। एवमुक्त्वा ततः पत्रमुत्ससर्ज्ज स पक्षिराट्।
तदुत्सृष्टमभिप्रेक्ष्य तस्य पर्णमनुत्तमं। हृष्टानि सर्व्वभूतानि नाम चक्रुर्गरुत्मतः।
सुरूपं पत्रमालक्ष्य सुपर्णोऽयं भवत्विति। तद्दृष्ट्वा महदाश्चर्य्यं सहस्राक्षः पुरन्दरः।
खगो महदिदं भूतमिति मत्वाऽभ्यभाषत। शक्र उवाच। बलं विज्ञातुमिच्छामि यत्ते परमनुत्तमं। सख्यञ्चानन्तमिच्छामि त्वया
सह खगोत्तम।

इत्यादिपर्व्वणि सौपर्णे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ गरुड उवाच ॥ सख्यं मेऽस्तु त्वया देव यथेच्छसि पुरन्दर । बलन्तु मम जानीहि महच्चासह्यमेव च । १५२०
कामं नैतत्प्रशंसन्ति सन्तः स्वबलसंस्तवं । गुणसङ्कीर्त्तनं चापि स्वयमेव शतक्रतो ।
सखेति कृत्वा तु सखे पृष्टो वक्ष्याम्यहं त्वया । न ह्यात्मस्तवसंयुक्तं वक्तव्यमनिमित्ततः ।
सपर्व्वतवनामुर्व्वीं ससागरजलामिमां । वहे पक्षेण वै शक्र त्वामप्यत्रावलम्बिनं ।
सर्व्वान्संपीडितांश्चापि लोकान्सस्थाणुजङ्गमान् । वहेयमपरिश्रान्तो विद्धीदं मे महद्बलं ।
॥ सौतिरुवाच ॥ इत्युक्तवचनं वीरं किरीटी श्रीमतांवरः । आह शौनक देवेन्द्रः सर्व्वलोकहितः प्रभुः । १५२५
एवमेव यथात्थ त्वं सर्व्वं सम्भाव्यते त्वयि । संगृह्यतामिदानीं मे सख्यमत्यन्तमुत्तमं ।
न कार्य्यं यदि सोमेन मम सोमः प्रदीयतां । अस्मांस्ते हि प्रबाधेयुर्य्येभ्यो दद्याद्भवानिमं ।
॥ गरुड उवाच ॥ किञ्चित्कारणमुद्दिश्य सोमोऽयं नीयते मया । न दास्यामि समादातुं सोमं कस्मैचिदप्यहं ।
यत्रेमन्तु सहस्राक्ष निक्षिपेयमहं स्वयं । त्वमादाय ततस्तूर्णं हरेथास्त्रिदिवेश्वर ।
॥ शक्र उवाच ॥ वाक्येनानेन तुष्टोऽहं यत्त्वयोक्तमिहाण्डज । यमिच्छसि वरं मत्तस्तं गृहाण खगोत्तम । १५३०
॥ सौतिरुवाच ॥ इत्युक्तः प्रत्युवाचेदं कद्रूपुत्राननुस्मरन् । स्मृत्वा चैवोपधिकृतं मातुर्दास्यनिमित्ततः ।
ईशोऽहमपि सर्व्वस्य करिष्यामि तु तेऽर्थितां । भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः ।
तथेत्युक्त्वाऽन्वगच्छत्तं ततो दानवसूदनः । देवदेवं महात्मानं योगिनामीश्वरं हरिं ।
स चान्वमोदत्तं चार्थं यथोक्तं गरुडेन वै । इदं भूयोवचः प्राह भगवांस्त्रिदशेश्वरः ।
हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तं । आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिकं । १५३५
अथ सर्पानुवाचेदं सर्व्वान्परमहृष्टवत् । इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः ।
स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः । भवद्भिरिदमासीनैर्यदुक्तं तद्वचस्तदा ।
अदासी चैव मातेयमद्यप्रभृति चास्तु मे । यथोक्तं भवतामेतद्वचो मे प्रतिपादितं ।
ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत । शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः ।
अथागतास्तमुद्देशं सर्पाः सोमार्थिनस्तदा । स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः । १५४०
यत्रैतदमृतं चापि स्थापितं कुशसंस्तरे । तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतञ्च तत् ।
सोमस्थानमिदं चेति दर्भांस्ते लिलिहुस्तदा । ततो द्विधा कृता जिह्वा सर्पाणां तेन कर्म्मणा ।
अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः । एवं तदमृतं तेन हृतमाहृतमेव च । द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना ।
ततः सुपर्णः परमप्रहर्षवान् विहृत्य मात्रा सह तत्र कानने । भुजङ्गभक्षः परमार्च्चितः खगैरहीनकीर्त्तिर्विनतामनन्दयत् ।
इमाङ्कथां यः शृणुयान्नरः सदा पठेत वा द्विजजनमुख्यसंसदि । असंशयं त्रिदिवमियात्स पुण्यभाङ्महात्मनः पतगपतेः
प्रकीर्त्तनात् । १५४५

इत्यादिपर्व्वणि आस्तीके चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ सौपर्णं समाप्तं ॥

॥ शौनक उवाच ॥ भुजङ्गमानां शापस्य मात्रा चैव सुतेन च । विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन ।
वरप्रदानं भर्त्रा च कद्रूविनतयोस्तथा । नामनी चैव ते प्रोक्ते पक्षिणोर्वैनतेययोः ।

पन्नगानान्तु नामानि न कीर्त्तयसि सूतज । प्राधान्येनापि नामानि श्रोतुमिच्छामहे वयं ।
॥ सौतिरुवाच ॥ बहुत्वान्नामधेयानां पन्नगानां तपोधन । न कीर्त्तयिष्ये सर्व्वेषां प्राधान्येन तु मे शृणु ।
शेषः प्रथमतो जातो वासुकिस्तदनन्तरं । ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ ।　१५५०
कालियो मणिनागश्च नागश्चापूरणस्तथा । नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः ।
नीलानीलौ तथा नागौ कल्माषशबलौ तथा । आर्य्यकश्चोग्रकश्चैव नागः कलशपोतकः ।
सुरामुखो दधिमुखस्तथा विमलपिण्डकः । आप्तः करोटकश्चैव शङ्खो वालिशिखस्तथा ।
निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा । बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः ।
कम्बलाश्वतरौ चापि नागः कालीयकस्तथा । वृत्तसम्वर्त्तकौ नागौ द्वौ च पद्माविति श्रुतौ ।　१५५५
नागः शङ्खमुखश्चैव तथा कुष्माण्डकोऽपरः । क्षेमकश्च तथा नागो नागः पिण्डारकस्तथा ।
करवीरः पुष्पदंष्ट्रो बिल्वको बिल्वपाण्डुरः । मूषकादः शङ्खशिराः पूर्णभद्रो हरिद्रकः ।
अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा । कौरव्यो धृतराष्ट्रश्च शङ्खपिण्डश्च वीर्य्यवान् ।
विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्य्यवान् । हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः ।
कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः । कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा ।　१५६०
कर्द्दमश्च महानागो नागश्च बहुमूलकः । कर्कराकर्करौ नागौ कुण्डोदरमहोदरौ ।
एते प्राधान्यतो नागाः कीर्त्तिता द्विजसत्तम । बहुत्वान्नामधेयानामितरे नानुकीर्त्तिताः ।
एतेषां प्रसवो यश्च प्रसवस्य च सन्ततिः । असंख्येति मत्वा तान्न ब्रवीमि तपोधन ।
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च । अशक्यान्येव संख्यातुं पन्नगानां तपोधन ।
इत्यादिपर्व्वणि आस्तीके पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ शौनक उवाच ॥ आख्याता भुजगास्तात वीर्य्यवन्तो दुरासदाः । शापं तं तेऽभिविज्ञाय कृतवन्तः किमुत्तरं ।　१५६५
॥ सूत उवाच ॥ तेषान्तु भगवाञ्छेषः कद्रूं त्यक्त्वा महायशाः । उग्रं तपः समातस्थे वायुभक्षो यतव्रतः ।
गन्धमादनमासाद्य बदर्य्याञ्च तपोरतः । गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ।
तेषु तेषु च पुण्येषु तीर्थेष्वायतनेषु च । एकान्तशीली नियतः सततं विजितेन्द्रियः ।
तप्यमानं तपो घोरं तं ददर्श पितामहः । संशुष्कमांसत्वक्स्नायुं जटाचीरधरं मुनिं ।
तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः । किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ।　१५७०
त्वं हि तीव्रेण तपसा प्रजास्तापयसेऽनघ । ब्रूहि कामञ्च मे शेष यस्ते हृदि व्यवस्थितः ॥ शेष उवाच ॥ सोदर्य्या मम
सर्व्वे हि भ्रातरो मन्दचेतसः । सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यतां ।
अभ्यसूयन्ति सततं परस्परममित्रवत् । ततोऽहं तप आतिष्ठं नैतान्पश्येयमित्युत ।
न मर्षयन्ति ससुतां सततं विनतां च ते । अस्माकं चापरो भ्राता वैनतेयोऽन्तरीक्षगः ।
तञ्च द्विषन्ति सततं स चापि बलवत्तरः । वरप्रदानात्स पितुः कश्यपस्य महात्मनः ।

सोऽहं तपःसमास्थाय मोक्ष्यामीदं कलेवरं। कथं मे प्रेत्यभावेऽपि न तैः स्यात्सह सङ्गमः। १५७५

तमेवं वादिनं शेषं पितामह उवाच ह। जानामि शेष सर्व्वेषां भ्रातॄणां ते विचेष्टितं।

मातुश्चाप्यपराधाद्वै भ्रातॄणां ते महद्भयं। कृतोऽत्र परिहारश्च पूर्व्वमेव भुजङ्गम।

भ्रातॄणां तव सर्व्वेषां न शोकं कर्त्तुमर्हसि। वृणीष्व च वरं मत्तः शेष यत्तेऽभिकाङ्क्षितं।

दास्यामि हि वरं तेऽद्य प्रीतिर्म्मे परमा त्वयि। दिष्ट्या बुद्धिश्च ते धर्म्मे निविष्टा पन्नगोत्तम।

भूयो भूयश्च ते बुद्धिर्धर्म्मे भवतु सुस्थिरा। शेषउवाच। एषएव वरो देव काङ्क्षितो मे पितामह। धर्म्मे मे रमतां बुद्धिः शमे तपसि चेश्वर। १५८०

॥ ब्रह्मोवाच ॥ प्रीतोऽस्म्यनेन ते शेष दमेन च शमेन च। त्वया त्विदं वचः कार्य्यं मन्नियोगात्प्रजाहितं।

इमां महीं शैलवनोपपन्नां ससागरग्रामविहारपत्तनां। त्वं शेषसम्यक्चलितां यथावत्संगृह्य तिष्ठस्व यथाऽचला स्यात्।

॥ शेष उवाच ॥ यथाह देवो वरदः प्रजापतिर्म्महीपतिर्भूतपतिर्ज्जगत्पतिः। तथा महीं धारयिताऽस्मि निश्चलां प्रयच्छ तां मे शिरसि प्रजापते।

॥ ब्रह्मोवाच ॥ अधो महीं गच्छ भुजङ्गमोत्तम स्वयं तवैषा विवरं प्रदास्यति। इमां धरां धारयता त्वया हि मे महत्प्रियं शेष कृतं भविष्यति।

॥ सौतिरुवाच ॥ तथेति कृत्वा विवरं प्रविश्य स प्रभुर्भुवो भुजगवराग्रजः स्थितः। बिभर्त्ति देवीं शिरसा महीमिमां समुद्रनेमिं परिगृह्य सर्वतः। १५८५

॥ ब्रह्मोवाच॥ शेषोऽसि नागोत्तमधर्म्मदेवो महीमिमां धारयसे यदेकः। अनन्तभोगैः परिगृह्य सर्वं यथाऽहमेवं बलभिद्यथा वा।

॥ सौतिरुवाच ॥ अधोभूमौ वसत्येवं नागोऽनन्तः प्रतापवान्। धारयन्वसुधामेकः शासनाद्ब्रह्मणो विभुः।

सुपर्णञ्च सहायं वै भगवानमरोत्तमः। प्रादादनन्ताय तदा वैनतेयं पितामहः।

इत्यादिपर्व्वणि आस्तीके षट्त्रिंशोऽध्यायः॥ ३६ ॥

॥ सौतिरुवाच ॥ मातुः सकाशात्तं शापं श्रुत्वा वै पन्नगोत्तमः। वासुकिश्चिन्तयामास शापोऽयं न भवेत्कथं।

ततः स मन्त्रयामास भ्रातृभिः सह सर्व्वशः। ऐरावतप्रभृतिभिः सर्व्वैर्धर्म्मपरायणैः। १५९०

॥ वासुकिरुवाच ॥ अयं शापो यथोद्दिष्टो विदितं वस्तथाऽनघाः। तस्य शापस्य मोक्षार्थं मन्त्रयित्वा यतामहे।

सर्व्वेषामेव शापानां प्रतिघातो हि विद्यते। नतु मात्राऽभिशप्तानां मोक्षः क्वच न विद्यते।

अव्ययस्याप्रमेयस्य सत्यस्य च तथाऽग्रतः। शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः।

नूनं सर्व्वविनाशोऽयमस्माकं समुपागतः। न ह्येतां सोऽव्ययोदेवः शपन्तीं प्रत्यषेधयत्।

तस्मात्संमन्त्रयामोऽद्य भुजङ्गानामनामयं। यथा भवेद्धि सर्व्वेषां मा नः कालोऽत्यगादयं। सर्व्व एव हि नस्तावद्बुद्धिमन्तो विचक्षणाः। अपि मन्त्रयमाणा हि हेतुं पश्याम मोक्षणे। १५९५

यथा नष्टं पुरा देवा गूढमग्निं गुहागतं। यथा स यज्ञो न भवेद्यथा वाऽपि पराभवः। जनमेजयस्य सर्पाणां विनाशकरणाय वै।

॥ सौतिरुवाच ॥ तथेत्युक्त्वा ततः सर्व्वे काद्रवेयाः समागताः। समयं चक्रिरे तत्र मन्त्रबुद्धिविशारदाः।

एके तत्राब्रुवन्नागा वयं भूत्वा द्विजर्षभाः। जनमेजयं तु भिक्षामो यज्ञस्ते न भवेदिति।

अपरे त्वब्रुवन्नागास्तत्र पण्डितमानिनः। मन्त्रिणोऽस्य वयं सर्व्वे भविष्यामः सुसंमताः।
स नः प्रक्ष्यति सर्व्वेषु कार्य्येष्वर्थविनिश्चयं। तत्र बुद्धिं प्रदास्यामो यथा यज्ञो निवर्त्स्यति। १५००
स नो बहुमतान् राजा बुद्ध्वा बुद्धिमतांवरः। यज्ञार्थं प्रक्ष्यति व्यक्तं नेति वक्ष्यामहे वयं।
दर्शयन्तो बहून् दोषान् प्रेत्य चेह च दारुणान्। हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः।
अथवा य उपाध्यायः क्रतोस्तस्य भविष्यति। सर्पसत्रविधानज्ञो राजकार्य्यहिते रतः।
तं गत्वा दशतां कश्चिद्भुजङ्गः स मरिष्यति। तस्मिन्मृते यज्ञकारे क्रतुः स न भविष्यति।
ये चान्ये सर्पसत्रज्ञा भविष्यन्त्यस्य चर्त्विजः। तांश्च सर्व्वान् दशिष्यामः कृतमेवं भविष्यति। १५०५
अपरे त्वब्रुवन्नागा धर्म्मात्मानो दयालवः। अबुद्धिरेषा भवतां ब्रह्महत्या न शोभनं।
सम्यक् सद्धर्म्ममूला वै व्यसने शान्तिरुत्तमा। अधर्म्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत्।
अपरे त्वब्रुवन्नागाः समिद्धं जातवेदसं। वर्षैर्निर्व्वापयिष्यामो मेघा भूत्वा सविद्युतः।
स्रुग्भाण्डं निशि गत्वा च अपरे भुजगोत्तमाः। प्रमत्तानां हरन्त्वाशु विघ्नमेवं भविष्यति।
यज्ञे वा भुजगास्तस्मिन् शतशोऽथ सहस्रशः। जनान् दशन्तु वै सर्व्वानेवं त्रासो भविष्यति। १५१०
अथवा संस्कृतं भोज्यं दूषयन्तु भुजङ्गमाः। स्वेन मूत्रपुरीषेण सर्व्वभोज्यविनाशिना।
अपरे त्वब्रुवंस्तत्र ऋत्विजोऽस्य भवामहे। यज्ञविघ्नं करिष्यामो दीयतां दक्षिणा इति।
वश्यताञ्च गतोऽसौ नः करिष्यति यथेप्सितं। अपरे त्वब्रुवंस्तत्र जले प्रक्रीडितं नृपं।
गृहमानीय बध्नीमः क्रतुरेवं भवेन्न सः। अपरे त्वब्रुवंस्तत्र नागाः पण्डितमानिनः।
दशामस्तं प्रगृह्याशु कृतमेवं भविष्यति। छिन्नं मूलमनर्थानां मृते तस्मिन्भविष्यति। १५१५
एषा नो नैष्ठिकी बुद्धिः सर्व्वेषामीक्षणश्रव। अथ यन्मन्यसे राजन् द्रुतं तत्संविधीयतां।
इत्युक्त्वा समुदैक्षन्त वासुकिं पन्नगोत्तमं। वासुकिश्चापि सञ्चिन्त्य तानुवाच भुजङ्गमान्।
नैषा वो नैष्ठिकी बुद्धिर्मता कर्त्तुं भुजङ्गमाः। सर्व्वेषामेव मे बुद्धिः पन्नगानां न रोचते।
किं तत्र संविधातव्यं भवतां स्याद्धितं तु यत्। श्रेयः प्रसादनं मन्ये कश्यपस्य महात्मनः।
ज्ञातिवर्गस्य सौहार्द्दादात्मनश्च भुजङ्गमाः। नच जानाति मे बुद्धिः किञ्चित्कर्त्तुं वचो हि वः। १५२०
मया हीदं विधातव्यं भवतां यद्धितं भवेत्। अनेनाहं भृशं तप्ये गुणदोषौ मदाश्रयौ।
इत्यादिपर्व्वण्यास्तीके सप्तत्रिंशोऽध्यायः॥ ३७॥

॥ सौतिरुवाच ॥ सर्प्पाणां तु वचः श्रुत्वा सर्व्वेषामिति चेति च। वासुकेश्च वचः श्रुत्वा एलापत्रोऽब्रवीदिदं।
न स यज्ञो न भविता न स राजा तथाविधः। जनमेजयः पाण्डवेयो यतोऽस्माकं महद्भयं।
दैवेनोपहतो राजन् यो भवेदिह पूरुषः। स दैवमेवाश्रयते नान्यत्तत्र परायणं।
तदिदं दैवमस्माकं भयं पन्नगसत्तमाः। दैवमेवाश्रयामोऽत्र शृणुध्वं च वचो मम। १५२५
अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा। मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः।
देवानां पन्नगश्रेष्ठास्तीक्ष्णास्तीक्ष्णा इति प्रभो। पितामहमुपागम्य दुःखार्त्तानां महाद्युते।

॥ देवा ऊचुः ॥ का हि लब्ध्वा प्रियान्पुत्रान् शपेदेवं पितामह। ऋते कद्रूं तीव्ररूपां देवदेव तवाग्रतः।
तथेति च वचस्तस्यास्त्वयाप्युक्तं पितामह। एतदिच्छाम विज्ञातुं कारणं यन्न वारिता।
॥ ब्रह्मोवाच ॥ बहवः पन्नगास्तीक्ष्णा घोररूपा विषोल्बणाः। प्रजानां हितकामोऽहं न च वारितवांस्तदा। १९३०
ये दन्दशूकाः क्षुद्राश्च पापाचारविषोल्बणाः। तेषां विनाशो भविता न तु ये धर्म्मचारिणः।
यन्निमित्तञ्च भविता मोक्षस्तेषां महाभयात्। पन्नगानां निबोधध्वं तस्मिन्काले समागते।
यायावरकुले धीमान्भविष्यति महानृषिः। जरत्कारुरिति ख्यातस्तपस्वी नियतेन्द्रियः।
तस्य पुत्रो जरत्कारोर्भविष्यति तपोधनः। आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा।
तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्म्मिकाः ॥ देवा ऊचुः ॥ स मुनिप्रवरो ब्रह्मन् जरत्कारुर्महातपाः। कस्यां पुत्रं महात्मानं
जनयिष्यति वीर्य्यवान्। १९३५
॥ ब्रह्मोवाच ॥ सनामायां सनामा स कन्यायां द्विजसत्तमः। अपत्यं वीर्य्यसम्पन्नं वीर्य्यवाञ्जनयिष्यति।
वासुकेः सर्प्पराजस्य जरत्कारुः स्वसा किल। स तस्यां भविता पुत्रः शापान्नागांश्च मोक्ष्यति।
॥ एलापत्र उवाच ॥ एवमस्त्विति तं देवाः पितामहमथाब्रुवन्। उक्त्वैवं वचनं देवान् विरिञ्चिस्त्रिदिवं ययौ।
सोऽहमेवं प्रपश्यामि वासुके भगिनी तव। जरत्कारुरिति ख्याता तां तस्मै प्रतिपादय।
भैक्षवद्भिक्षमाणाय नागानां भयशान्तये। ऋषये सुव्रतायैनामेष मोक्षः श्रुतो मया। १९४०
इत्यादिपर्व्वण्यास्तीके अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ सौतिरुवाच ॥ एलापत्रवचः श्रुत्वा ते नागा द्विजसत्तम। सर्व्वे प्रहृष्टमनसः साधु साध्वित्यथाब्रुवन्।
ततः प्रभृति तां कन्यां वासुकिः पर्य्यरक्षत। जरत्कारुं स्वसारं वै परं हर्षमवाप च।
ततो नातिमहान्कालः समतीत इवाभवत्। अथ देवासुराः सर्व्वे ममन्थुर्वरुणालयं।
तत्र नेत्रमभून्नागो वासुकिर्ब्बलिनां वरः। समाप्यैव च तत्कर्म्म पितामहमुपागमन्।
देवा वासुकिना सार्द्धं पितामहमथाब्रुवन्। भगवञ्छापभीतोऽयं वासुकिस्तप्यते भृशं। १९४५
अस्यैतन्मानसं शल्यं समुद्धर्त्तुं त्वमर्हसि। जनन्याः शापजं देव ज्ञातीनां हितमिच्छतः।
हितो ह्ययं सदास्माकं प्रियकारी च नागराट्। प्रसादं कुरु देवेश शमयास्य मनोज्वरं।
॥ ब्रह्मोवाच ॥ मयैव तद्वितीर्णं वै वचनं मनसाऽमराः। एलापत्रेण नागेन यदस्याभिहितं पुरा।
तत्करोत्वेष नागेन्द्रः प्राप्तकालं वचः स्वयं। विनशिष्यन्ति ये पापा न तु ये धर्म्मचारिणः।
उत्पन्नः स जरत्कारुस्तपस्युग्रे रतो द्विजः। तस्यैष भगिनीं काले जरत्कारुं प्रयच्छतु। १९५०
एलापत्रेण यत्प्रोक्तं वचनं भुजगेन ह। पन्नगानां हितं देवास्तत्तथा न तदन्यथा।
॥ सौतिरुवाच ॥ एतच्छ्रुत्वा तु नागेन्द्रः पितामहवचस्तदा। सन्दिश्य पन्नगान्सर्व्वान्वासुकिः शापमोहितः।
स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति। सर्पान्बहून्जरत्कारौ नित्ययुक्तान्समादधत्।
जरत्कारुर्यदा भार्य्यामिच्छेद्वरयितुं प्रभुः। शीघ्रमेत्य तदाख्येयं तन्नः श्रेयो भविष्यति।
इत्यादिपर्व्वण्यास्तीके एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

॥ शौनक उवाच ॥ जरत्कारुरिति ख्यातो यस्त्वया सूतनन्दन । इच्छामि तदहं श्रोतुं ऋषेस्तस्य महात्मनः । १६५५
किं कारणं जरत्कारोर्नामैतत् प्रथितं भुवि । जरत्कारुनिरुक्तिं त्वं यथावद्वक्तुमर्हसि ।
॥ सौतिरुवाच ॥ जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितं । शरीरं कारु तस्यासीत्तत् स धीमाञ्छनैः शनैः ।
क्षपयामास तीव्रेण तपसेत्यत उच्यते । जरत्कारुरिति ब्रह्मन् वासुकेर्भगिनी तथा ।
एवमुक्तस्तु धर्म्मात्मा शौनकः प्राहसत्तदा । उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् ।
॥ शौनक उवाच ॥ उक्तं नाम यथापूर्व्वं सर्व्वं तच्छ्रुतवानहं । यथा तु जातो ह्यास्तीक एतदिच्छामि वेदितुं । तच्छ्रुत्वा वचनं तस्य सूतः प्रोवाच शास्त्रतः ।। १६६०
॥ सौतिरुवाच ॥ सन्दिश्य पन्नगान् सर्व्वान् वासुकिः सुसमाहितः । स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति ।
अथ कालस्य महतः स मुनिः संशितव्रतः । तपस्यभिरतो धीमान् स दारान्नाभ्यकाङ्क्षत ।
स तूर्द्ध्वरेतास्तपसि प्रसक्तः स्वाध्यायवान् वीतभयः कृतात्मा । चचार सर्व्वां पृथिवीं महात्मा न चापि दारान् मनसाप्यकाङ्क्षत ।
ततोऽपरस्मिन् संप्राप्ते काले कस्मिंश्चिदेव तु । परीक्षिन्नाम राजासीद्ब्रह्मन् कौरववंशजः ।
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि । बभूव मृगयाशीलः पुरास्य प्रपितामहः । १६६५
मृगान् विध्यन् वराहांश्च तरक्षून्महिषांस्तथा । अन्यांश्च विविधान् वन्यांश्चचार पृथिवीपतिः ।
स कदाचिन्मृगं विद्ध्वा बाणेनानतपर्व्वणा । पृष्ठतो धनुरादाय ससार गहने वने ।
यथैव भगवान् रुद्रो विद्ध्वा यज्ञमृगं दिवि । अन्वगच्छद्धनुष्पाणिः पर्य्यन्वेषंस्ततस्ततः ।
न हि तेन मृगो विद्धो जीवन् गच्छति वै वने । पूर्व्वरूपन्तु तन्नूनं सोऽगात् स्वर्गगतिं प्रति ।
परीक्षितो नरेन्द्रस्य विद्धो यन्नष्टवान् मृगः । दूरं चापहृतस्तेन मृगेण स महीपतिः । १६७०
परिश्रान्तः पिपासार्त्त आससाद मुनिं वने । गवां प्रचारेष्वासीनं वत्सानां मुखनिःसृतं ।
भूयिष्ठमुपयुञ्जानं फेनमापिबतां पयः । तमभिद्रुत्य वेगेन स राजा संशितव्रतं ।
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः । भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ।
मया विद्धो मृगो नष्टः कच्चित्तं दृष्टवानसि । स मुनिस्तं तु नोवाच किञ्चिन्मौनव्रते स्थितः ।
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् । समुत्क्षिप्य धनुष्कोट्या स चैनं समुदैक्षत । १६७५
न स किञ्चिदुवाचैनं शुभं वा यदि वाऽशुभं । स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतं । दृष्ट्वा जगाम नगरमृषिस्त्वासीत्तथैव सः ।
न हि तं राजशार्दूलं क्षमाशीलो महामुनिः । स्वधर्म्मनिरतं भूपं समाक्षिप्तोऽप्यधर्षयत् ।
न हि तं राजशार्दूलस्तथा धर्म्मपरायणं । जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ।
तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः । शृङ्गी नाम महाक्रोधो दुःप्रसादो महाव्रतः ।
सादरं परमासीनं सर्व्वभूतहिते रतं । ब्रह्माणमुपतस्थे वै काले काले सुसंयतः । १६८०
स तेन समनुज्ञातो ब्रह्मणा गृहमेयिवान् । सख्योक्तः क्रीडमानेन स तत्र हसता किल ।

संरम्भात्कोपनोऽतीव विषकल्पो मुनेः सुतः। उद्दिश्य पितरं तस्य यच्छ्रुत्वा रोषमाहरत्। ऋषिपुत्रेण नर्म्मार्थे कृशेन द्विजसत्तम।

॥ कृशउवाच। तेजस्विनस्तव पिता तथैव च तपस्विनः। शवं स्कन्धेन वहति मा शृङ्गिन्गर्वितो भव।

व्याहरत्स्वृषिपुत्रेषु मा स्म किञ्चिद्वचो वद। अस्मद्विधेषु सिद्धेषु ब्रह्मवित्सु तपस्विषु।

क्व ते पुरुषमानित्वं क्व ते वाचस्तथाविधाः। दर्पजाः पितरं द्रष्टा यस्त्वं शवधरं तथा। ९८५

पिता च तव तत्कर्म्म नानुरूपमिवात्मनः। कृतं मुनिजनश्रेष्ठ येनाहं भृशदुःखितः।

इत्यादिपर्व्वणि आस्तीके चत्वारिंशोऽध्यायः॥ ४० ॥

॥ सौतिरुवाच ॥ एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः। मृतधारं गुरुं श्रुत्वा पर्य्यतप्यत मन्युना। ९९०

स तं कृशमभिप्रेक्ष्य सूनृतां वाचमुत्सृजन्। अपृच्छत्तं कथं तातः स मेऽद्य मृतधारकः।

॥ कृशउवाच॥ राज्ञा परीक्षिता तात मृगयां परिधावता। अवसक्तः पितुस्तेऽद्य मृतः स्कन्धे भुजङ्गमः।

॥ शृङ्ग्युवाच॥ किं मे पित्रा कृतं तस्य राज्ञोऽनिष्टं दुरात्मनः। ब्रूहि तत्कृश तत्त्वेन पश्य मे तपसो बलं। ९९५

॥ कृशउवाच ॥ स राजा मृगयां यातः परीक्षिदभिमन्युजः। ससार मृगमेकाकी विद्ध्वा बाणेन शीघ्रगं।

न चापश्यन्मृगं राजा चरंस्तस्मिन्महावने। पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणं।

तं स्थाणुभूतं तिष्ठन्तं क्षुत्पिपासाश्रमातुरः। पुनः पुनर्मृगं नष्टं पप्रच्छ पितरं तव।

स च मौनव्रतोपेतो नैव तं प्रत्यभाषत। तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासृजत्।

शृङ्गिंस्तव पिता सोऽपि तथैवास्ते यतव्रतः। सोऽपि राजा स्वनगरं प्रस्थितो गजसाह्वयं। १०००

॥ सौतिरुवाच॥ श्रुत्वैवमृषिपुत्रस्तु शवं स्कन्धे प्रतिष्ठितं। कोपसंरक्तनयनः प्रज्वलन्निव मन्युना।

आविष्टः स हि कोपेन शशाप नृपतिं तदा। वार्य्युपस्पृश्य तेजस्वी क्रोधवेगबलात्कृतः।

॥ शृङ्ग्युवाच॥ योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य ह। स्कन्धे मृतं समास्राक्षीत्पन्नगं राजकिल्बिषी।

तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः। आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः।

सप्तरात्रादितो नेता यमस्य सदनं प्रति। द्विजानामवमन्तारं कुरूणामयशस्करं। १००५

॥ सौतिरुवाच॥ इति शप्त्वाऽतिसंक्रुद्धः शृङ्गी पितरमभ्यगात्। आसीनं गोव्रजे तस्मिन्वहन्तं शवपन्नगं।

स तमालक्ष्य पितरं शृङ्गी स्कन्धगतेन वै। शवेन भुजगेनासीद्भूयः क्रोधसमाकुलः।

दुःखाच्चाश्रूणि मुमुचे पितरं चेदमब्रवीत्। श्रुत्वेमां धर्षणां तात तव तेन दुरात्मना।

राज्ञा परीक्षिता कोपादशपं तमहं नृपं। यथाऽर्हति स एवोग्रं शापं कुरुकुलाधमः। सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः।

वैवस्वतस्य सदनं नेता परमदारुणं। तमब्रवीत्पिता ब्रह्मंस्तथाकोपसमन्वितं। १०१०

॥ शमीक उवाच॥ न मे प्रियं कृतं तात नैष धर्म्मस्तपस्विनां। वयं तस्य नरेन्द्रस्य विषये निवसामहे।

न्यायतो रक्षितास्तेन तस्य पापं न रोचये। सर्व्वथा वर्त्तमानस्य राज्ञो ह्यस्मद्विधैः सदा।

क्षन्तव्यं पुत्र धर्म्मो हि हतो हन्ति न संशयः। यदि राजा न संरक्षेत्पीडा नः परमा भवेत्।

न शक्नुयाम चरितुं धर्मं पुत्र यथासुखं। रक्ष्यमाणा वयं तात राजभिर्धर्मदृष्टिभिः।
चरामो विपुलं धर्मं तेषां भागोऽस्ति धर्मतः। सर्व्वथा वर्त्तमानस्य राज्ञः क्षन्तव्यमेव हि। १०१५
परीक्षित्तु विशेषेण यथाऽस्य प्रपितामहः। रक्षत्यस्मांस्तथा राज्ञा रक्षितव्याः प्रजा विभो।
तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना। अजानता कृतं मन्ये व्रतमेतदिदं मम।
अराजके जनपदे दोषा जायन्ते वै सदा। उद्वृत्तं सततं लोकं राजा दण्डेन शास्ति वै।
दण्डात्प्रतिभयं भूयः शान्तिरुत्पद्यते तदा। नोद्विग्नश्चरते धर्मं नोद्विग्नश्चरते क्रियां।
राज्ञा प्रतिष्ठितो धर्म्मो धर्म्मात्स्वर्गः प्रतिष्ठितः। राज्ञो यज्ञक्रियाः सर्व्वा यज्ञाद्देवाः प्रतिष्ठिताः। १०२०
देवाद्वृष्टिः प्रवर्त्तेत वृष्टेरोषधयः स्मृताः। ओषधिभ्यो मनुष्याणां धारयेत्सततं हितं।
मनुष्याणाञ्च यो धाता राजा राज्यकरः पुनः। दशश्रोत्रियसमो राजा इत्येवं मनुरब्रवीत्।
तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना। अजानता कृतं मन्ये व्रतमेतदिदं मम।
कस्मादिदं त्वया बाल्यात्सहसा दुष्कृतं कृतं। न ह्यर्हति नृपः शापमस्मत्तः पुत्र सर्व्वथा।
इत्यादिपर्व्वण्यास्तीके एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ शृङ्ग्युवाच॥ यद्येतत्साहसं तात यदि वा दुष्कृतं कृतं। प्रियं वाप्यप्रियं वा ते वागुक्ता न मृषा भवेत्। १०२५
नैवान्यथेदं भविता पितरेष ब्रवीमि ते। नाहं मृषा ब्रवीम्येव स्वैरेष्वपि कुतः शपन्।
॥ शमीकउवाच॥ जानाम्युग्रप्रभावं त्वां तात सत्यगिरं तथा। नानृतं चोक्तपूर्व्वं ते नैतन्मिथ्या भविष्यति।
पित्रा पुत्रो वयःस्थोऽपि सततं वाच्य एव तु। यथा स्याद्गुणसंयुक्तः प्राप्नुयाच्च महद्यशः।
किं पुनर्ब्बाल एव त्वं तपसा भावितः सदा। वर्द्धते च प्रभवतां कोपोऽतीव महात्मनां।
सोऽहं पश्यामि वक्तव्य त्वयि धर्म्मभृतां वर। पुत्रत्वं बालताञ्चैव तवावेक्ष्य च साहसं। १०३०
स त्वं शमपरो भूत्वा वन्यमाहारमाचरन्। चर क्रोधमिमं हत्वा नैवं धर्मं प्रहास्यसि।
क्रोधोहि धर्मं हरति यतीनां दुःखसञ्चितं। ततो धर्म्मविहीनानां गतिरिष्टा न विद्यते।
शम एव यतीनां हि क्षमिणां सिद्धिकारकः। क्षमावतामयं लोकः परश्चैव क्षमावतां।
तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः। क्षमया प्राप्स्यसे लोकान्ब्रह्मणः समनन्तरान्।
मया तु शममास्थाय यच्छक्यं कर्त्तुमद्य वै। तत्करिष्याम्यहं तात प्रेषयिष्ये नृपाय वै। १०३५
मम पुत्रेण शप्तोऽसि बालेनाकृतबुद्धिना। ममेमां धर्षणां त्वत्तः प्रेक्ष्य राजन्नमर्षिणा।
॥ सौतिरुवाच ॥ एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः। परीक्षिते नृपतये दयापन्नो महातपाः।
संदिश्य कुशलप्रश्नं कार्य्यवृत्तान्तमेव च। शिष्यं गौरमुखं नाम शीलवन्तं समाहितं।
सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्द्धनं। विवेश भवनं राज्ञः पूर्व्वं द्वाःस्थैर्निवेदितः।
पूजितस्तु नरेन्द्रेण द्विजो गौरमुखस्तदा। आचख्यौ च परिश्रान्तो राज्ञः सर्व्वमशेषतः। १०४०
शमीकवचनं घोरं यथोक्तं मन्त्रिसन्निधौ॥ गौरमुखउवाच॥ शमीको नाम राजेन्द्र विषये वर्त्तते तव।
ऋषिः परमधर्म्मात्मा दान्तः शान्तो महातपाः। तस्य त्वया नरव्याघ्र सर्पः प्राणैर्वियोजितः।

अवसक्तो धनुष्कोट्या स्कन्धे मौनान्वितस्य च । क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे ।
तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै । तक्षकः सप्तरात्रेण मृत्युस्तव भविष्यति ।
तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत् । तदन्यथा न शक्यञ्च कर्त्तुं केनचिदप्युत । १०४५
नहि शक्नोति तं यन्तुं पुत्रं कोपसमन्वितं । ततोऽहं प्रेषितस्तेन तव राजन् हितार्थिना ।
॥ सूतउवाच ॥ इति श्रुत्वा वचोघोरं स राजा कुरुनन्दनः । पर्य्यतप्यत तत्पापं कृत्वा राजा महातपाः ।
तञ्च मौनव्रतं श्रुत्वा वने मुनिवरं तदा । भूय एवाभवद्राजा शोकसन्तप्तमानसः ।
अनुक्रोशात्मतां तस्य शमीकस्यावधार्य्य च । पर्य्यतप्यत भूयोऽपि कृत्वा तत्किल्बिषं मुनेः ।
नहि मृत्युं तथा राजा श्रुत्वा वै सोऽन्वतप्यत । अशोचदमरप्रख्यो यथा कृत्वेह कर्म्म तत् । १०५०
ततस्तं प्रेषयामास राजा गौरमुखं तदा । भूयः प्रसादं भगवान् करोत्विह ममेति वै ।
तस्मिंश्च गतमात्रेऽथ राजा गौरमुखे तदा । मन्त्रिभिर्मन्त्रयामास सह संविग्नमानसः ।
संमन्त्र्य मन्त्रिभिश्चैव स तथा मन्त्रतत्त्ववित् । प्रासादं कारयामास एकस्तम्भं सुरक्षितं ।
रक्षाञ्च विदधे तत्र भिषजश्चौषधानि च । ब्राह्मणान्मन्त्रसिद्धांश्च सर्व्वतो वै न्यवेशयत्
राजकार्य्याणि तत्रस्थः सर्व्वाण्येवाकरोच्च सः । मन्त्रिभिः सह धर्म्मज्ञः समन्तात्परिरक्षितः । १०५५
नैनं कश्चिदारूढं लभते राजसत्तमं । वातोऽपि निश्चरंस्तत्र प्रवेशे विनिवार्य्यते ।
प्राप्ते च दिवसे तस्मिन्सप्तमे द्विजसत्तमः । काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुं ।
श्रुतं हि तेन तदभूद्यथा तं राजसत्तमं । तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनं ।
तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरं । तत्र मेऽर्थश्च धर्म्मश्च भवितेति विचिन्तयन् ।
तं ददर्श स नागेन्द्रस्तक्षकः काश्यपं पथि । गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिगः । १०६०
तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुङ्गवं । क्व भवांस्त्वरितो याति किञ्च कार्य्यं चिकीर्षति ।
॥ काश्यपउवाच ॥ नृपं कुरुकुलोत्पन्नं परीक्षितमरिन्दमं । तक्षकः पन्नगश्रेष्ठस्तेजसाऽद्य प्रधक्ष्यति ।
तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसं । पाण्डवानां कुलकरं राजानममितौजसं । गच्छामि त्वरितं सौम्य सद्यः कर्त्तुमपज्वरं ।
॥ तक्षकउवाच ॥ अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिं । निवर्त्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुं ।
॥ काश्यप उवाच ॥ अहं तं नृपतिं गत्वा त्वया दष्टमपज्वरं । करिष्यामीति मे बुद्धिर्विद्याबलसमन्विता । १०६५
॥ इत्यादिपर्व्वण्यास्तीके द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
तक्षकउवाच ॥ यदि दष्टोमयेह त्वं शक्तः किञ्चिच्चिकित्सितुं । ततो वृक्षं मया दष्टमिमं जीवय काश्यप ।
परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च । न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम ।
॥ काश्यपउवाच । दश नागेन्द्र वृक्षं त्वं यद्येतदभिमन्यसे । अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम ।
॥ सौतिरुवाच ॥ एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना । अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः ।
स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना । आशीविषविषोपेतः प्रजज्वाल समन्ततः । १०७०
तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत् । कुरु यत्नं द्विजश्रेष्ठ जीवयैनं वनस्पतिं ।

॥ सौतिरुवाच ॥ भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा। भस्म सर्व्वं समाहृत्य काश्यपो वाक्यमब्रवीत्।
विद्याबलं पन्नगेन्द्र पश्य मेऽद्य वनस्पतौ। अहं सञ्जीवयाम्येनं पश्यतस्ते भुजङ्गम।
ततः स भगवान् विद्वान् काश्यपो द्विजसत्तमः। भस्मराशीकृतं वृक्षं विद्यया समजीवयत्।
अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितं। पलाशिनं शाखिनञ्च तथा विटपिनं पुनः। १७७५
तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना। उवाच तक्षको ब्रह्मन्नेतदत्यद्भुतं त्वयि।
द्विजेन्द्र यद्विषं हन्या मम वा मद्विधस्य वा। कं त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन।
यत्तेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात्। अहमेव प्रदास्यामि तत्ते यद्यपि दुर्ल्लभं।
विप्रशापाभिभूते च क्षीणायुषि नराधिपे। घटमानस्य ते विप्र सिद्धिः संशयिता भवेत्।
ततो यशः प्रदीप्तं ते त्रिषु लोकेषु विश्रुतं। निरंशुरिव घर्म्मांशुरन्तर्द्धानमितो व्रजेत्। १७८०
॥ काश्यप उवाच ॥ धनार्थी याम्यहं तत्र तन्मे देहि भुजङ्गम। ततोऽहं विनिवर्त्तिष्ये स्वापतेयं प्रगृह्य वै।
॥ तक्षक उवाच। यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकं। अहमेव प्रदास्यामि निवर्त्तस्व द्विजोत्तम।
॥ सौतिरुवाच ॥ तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः। प्रदध्यौ सुमहातेजा राजानं प्रति बुद्धिमान्।
दिव्यज्ञानः स तेजस्वी ज्ञात्वा तं नृपतिं तदा। क्षीणायुषं पाण्डवेयमपावर्त्तत काश्यपः।
लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितं। निवृत्ते काश्यपे तस्मिन् समयेन महात्मनि। १७८५
जगाम तक्षकस्तूर्णं नगरं नागसाह्वयं। अथ शुश्राव गच्छन् स तक्षको जगतीपतिं।
मन्त्रागदैर्व्विषहरै रक्ष्यमाणं प्रयत्नतः। सूत उवाच। स चिन्तयामास तदा मायायोगेन पार्थिवः।
मया वञ्चयितव्योऽसावुपायः को भवेदिति। ततस्तापसरूपेण प्राहिणोत् भुजङ्गमान्।
फलदर्भोदकं गृह्य राज्ञे नागोऽथ तक्षकः॥ तक्षक उवाच॥ गच्छध्वं यूयमव्यग्रा राजानं कार्य्यवत्तया।
फलपुष्पोदकं नाम प्रतिग्राहयितुं नृपं॥ सौतिरुवाच॥ ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः। १७९०
उपनिन्युस्तथा राज्ञे दर्भानापः फलानि च। तच्च सर्व्वं स राजेन्द्रः प्रतिजग्राह वीर्य्यवान्।
कृत्वा तेषाञ्च कार्य्याणि गम्यतामित्युवाच तान्। गतेषु तेषु नागेषु तापसच्छद्मरूपिषु।
अमात्यान् सुहृदश्चैव प्रोवाच स नराधिपः। भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्व्वशः।
तापसैरुपनीतानि फलानि सहिता मया। ततो राजा ससचिवः फलान्यादातुमैच्छत।
विधिना सम्प्रयुक्तो वै ऋषिवाक्येन तेन तु। यस्मिन्नेव फले नागस्तमेवाभक्षयत्स्वयं। १७९५
ततो भक्षयतस्तस्य फलात् कृमिरभूदणुः। ह्रस्वकः कृष्णनयनस्ताम्रवर्णोऽथ शौनक।
स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत्। अस्तमभ्येति सविता विषादद्य न मे भयं।
सत्यवागस्तु स मुनिः कृमिर्म्मां दशतामयं। तक्षको नाम भूत्वा वै तथा परिहृतं भवेत्।
ते चैनमन्ववर्त्तन्त मन्त्रिणः कालचोदिताः। एवमुक्त्वा स राजेन्द्रो ग्रीवायां संनिवेश्य ह।
कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः। प्रहसन्नेव भोगेन तक्षकेण त्ववेष्ट्यत। १८००
तस्मात् फलाद्विनिष्क्रम्य तद्राज्ञे निवेदितं। वेष्टयित्वा च वेगेन विनद्य च महास्वनं। अदशत् पृथिवीपालं तक्षकः पन्नगेश्वरः।
इत्यादिपर्व्वण्यास्तीके त्रयश्चत्वारिंशोऽध्यायः॥ ४३ ॥

॥ सूतउवाच ॥ ते तथा मन्त्रिणो दृष्ट्वा भोगेन परिवेष्टितं। विषण्णवदनाः सर्व्वे रुरुदुर्भृशदुःखिताः।

तन्तु नादं ततः श्रुत्वा मन्त्रिणस्ते प्रदुद्रुवुः। अपश्यंश्च तथा यान्तमाकाशे नागमद्भुतं।

सीमन्तमिव कुर्व्वाणं नभसः पद्मवर्चसं। तक्षकं पन्नगश्रेष्ठं भृशं शोकपरायणाः।

ततस्तु ते तद्गृहमग्निना वृतं प्रदीप्यमानं विषजेन भोगिनः। भयात्परित्यज्य दिशः प्रपेदिरे पपात राजाऽशनिताडितो यथा। १७०५

ततो नृपे तक्षकतेजसा हते प्रयुज्य सर्व्वाः परलोकसत्क्रियाः। शुचिर्द्विजो राजपुरोहितस्तदा तथैव ते तस्य नृपस्य मन्त्रिणः।

नृपं शिशुं तस्य सुतं प्रचक्रिरे समेत्य सर्व्वे पुरवासिनो जनाः। नृपं यमाहुस्तममित्रघातिनं कुरुप्रवीरं जनमेजयं जनाः।

सबाल एवार्य्यमतिर्नृपोत्तमः सहैव तैर्मन्त्रिपुरोहितैस्तदा। शशास राज्यं कुरुपुङ्गवाग्रजो यथाऽस्य वीरः प्रपितामहस्तथा।

ततस्तु राजानममित्रतापनं समीक्ष्य ते तस्य नृपस्य मन्त्रिणः। सुवर्णवर्म्माणमुपेत्य काशिपं वपुष्टमार्थं वरयाम्प्रचक्रमुः।

ततः स राजा प्रददौ वपुष्टमां कुरुप्रवीराय परीक्ष्य धर्म्मतः। सचापि तां प्राप्य मुदायुतोऽभवन्न चान्यनारीषु मनो दधे क्वचित्। १७१०

सरःसु फुल्लेषु वनेषु चैव प्रसन्नचेता विजहार वीर्य्यवान्। तथा स राजन्यवरो विजह्रिवान् यथोर्व्वशीं प्राप्य पुरा पुरूरवाः।

वपुष्टमा चापि वरं पतिव्रता प्रतीतरूपा समवाप्य भूपतिं। भावेन रामा रमयाम्बभूव तं विहारकालेष्ववरोधसुन्दरी।

इत्यादि पर्व्वण्यास्तीके चतुश्चत्वारिंशोऽध्यायः॥ ४४ ॥

॥ सूतउवाच। एतस्मिन्नेव कालेतु जरत्कारुर्म्महातपाः। चचार पृथिवीं कृत्स्नां यत्र सायंगृहो मुनिः।

चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः। तीर्थेष्वाप्लवनं कृत्वा पुण्येषु विचचार ह।

वायुभक्षो निराहारः शुष्यन्नहरहर्म्मुनिः। स ददर्श पितॄन्गर्त्ते लम्बमानानधोमुखान्। १७१५

एकतन्त्ववशिष्टं वै वीरणस्तम्बमाश्रितान्। तं तन्तुञ्च शनैराखुमाददानं बिलेशयं।

निराहारान् कृशान् दीनान्गर्त्ते स्वत्राणमिच्छतः। उपसृत्य स तान्दीनान् दीनरूपोऽभ्यभाषत।

के भवन्तोऽवलम्बन्ते वीरणस्तम्बमाश्रिताः। दुर्बलं खादितैर्मूलैराखुना बिलवासिना।

वीरणस्तम्बके मूलं यदप्येकमिह स्थितं। तदप्ययं शनैराखुरादत्ते दशनैः शितैः।

छेत्स्यतेऽल्पावशिष्टत्वादेतदप्यचिरादिव। ततस्तु पतितारोऽत्र गर्त्ते व्यक्तमधोमुखाः। १७२०

तस्य मे दुःखमुत्पन्नं दृष्ट्वा युष्मानधोमुखान्। कृच्छ्रामापदमापन्नान् प्रियं किं करवाणि वः।

तपसोऽस्य चतुर्थेन तृतीयेनाथ वा पुनः। अर्द्धेन वापि निस्तर्त्तुमापदं ब्रूत माचिरं।

अथवाऽपि समग्रेण तरन्तु तपसा मम। भवन्तः सर्व्व एवेह काममेवं विधीयतां।

॥ पितरऊचुः ॥ वृद्धोभवान् ब्रह्मचारी यो नस्त्रातुमिहेच्छसि। नतु विप्राग्र्य तपसा शक्यते तद्व्यपोहितुं।

अस्ति नस्तात तपसः फलं प्रवदतांवर। सन्तानप्रक्षयाद्ब्रह्मन्पताम निरयेऽशुचौ। १७२५

सन्तानं हि परो धर्म्म एवमाह पितामहः। लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै।

येन त्वां नाभिजानीमो लोके विख्यातपौरुषं। वृद्धो भवान्महाभागो यो नः शोच्यान्सुदुःखितान्।

शोचते चैव कारुण्याच्छृणु ये वै वयं द्विज। यायावरा नाम वयमृषयः संशितव्रताः।

लोकात्पुण्यादिह भ्रष्टाः सन्तानप्रक्षयान्मुने। प्रनष्टं नस्तपस्तीव्रं नहि नस्तन्तुरस्ति वै।

अस्ति त्वेकोऽद्य नस्तन्तुः सोऽपि नास्ति यथा तथा । मन्दभाग्योऽल्पभाग्यानां तप एकं समास्थितः । १८३०

जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः । नियतात्मा महात्मा च सुव्रतः सुमहातपाः ।

तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयं । न तस्य भार्य्या पुत्रो वा बान्धवो वाऽस्ति कश्चन ।

तस्माल्लम्बामहे गर्त्ते नष्टसंज्ञा ह्यनाथवत् । स वक्तव्यस्त्वया दृष्ट्वा अस्माकं नाथवत्तया ।

पितरस्तेऽवलम्बन्ते गर्त्ते दीना अधोमुखाः । साधु दारान् कुरुष्वेति प्रजामुत्पादयेति च ।

कुलतन्तुर्हि नः शिष्टस्त्वमेवैकस्तपोधन । यन्तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रितान् । १८३५

एषोऽस्माकं कुलस्तम्ब आस्ते स्वकुलवर्द्धनः । यानि पश्यसि वै ब्रह्मन्मूलानीहास्य वीरुधः ।

एते नस्तन्तवस्तात कालेन परिभक्षिताः । यत्त्वेतत्पश्यसि ब्रह्मन्मूलमस्यार्द्धभक्षितं ।

यत्र लम्बामहे गर्त्ते सोऽप्येकस्तप आस्थितः । यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः । स तं तं पोरतं मन्दं शनैः क्षपयते तुदन् ।

जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसं । नहि नस्तत्तपस्तस्य तारयिष्यति सत्तम ।

छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः । अधः प्रविष्टान्पश्यास्मान्यथा दुष्कृतिनस्तथा । १८४०

अस्मासु पतितेष्वत्र सह सर्व्वैः सबान्धवैः । छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः ।

तपो वाप्यथवा यज्ञो यच्चान्यत्पावनं महत् । तत्सर्व्वमपरं तात न सन्तत्या समं मतं ।

स तात दृष्ट्वा ब्रूयास्त्वं जरत्कारुं तपोधनं । यथा दृष्टमिदं वाच त्वयाख्येयमशेषतः ।

यथा दारान्प्रकुर्य्यात्स पुत्रानुत्पादयेद्यथा । तथा ब्रह्मंस्त्वया वाच्यः सोऽस्माकं नाथवत्तया ।

बान्धवानां हि तस्यैव यथा चात्मकुलं तथा । कथं बन्धुमिवास्माकमनुशोचसि सत्तम । श्रोतुमिच्छाम सर्व्वेषां को भवानिह तिष्ठति । १८४५

इत्यादिपर्व्वण्यास्तीके पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ सौतिरुवाच ॥ एतच्छ्रुत्वा जरत्कारुर्भृशं शोकपरायणः । उवाच तान्पितॄन्दुःखाद्बाष्पसन्दिग्धया गिरा ।

॥ जरत्कारुरुवाच ॥ मम पूर्व्वे भवन्तो वै पितरः सपितामहाः । तद्ब्रूत यन्मया कार्य्यं भवतां प्रियकाम्यया ।

अहमेव जरत्कारुः किल्बिषी भवतां सुतः । ते दण्डं धारयत मे दुष्कृतेरकृतात्मनः ।

॥ पितर ऊचुः । पुत्र दिष्ट्याऽसि संप्राप्त इमं देशं यदृच्छया । किमर्थञ्च त्वया ब्रह्मन्न कृतो दारसंग्रहः ।

॥ जरत्कारुरुवाच । ममायं पितरो नित्यं हृद्यर्थः परिवर्त्तते । ऊर्द्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै । १८५०

न दारान्वै करिष्येऽहमिति मे भावितं मनः । एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः ।

मया निवर्त्तिता बुद्धिर्ब्रह्मचर्य्यात्पितामहाः । करिष्ये वः प्रियं कामं निवेक्ष्येऽहमसंशयं ।

सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन । भविष्यति च या काचिद्भैक्षवत्स्वयमुद्यता ।

प्रतिग्रहीता तामस्मि न भरेयञ्च यामहं । एवंविधमहं कुर्य्यां निवेशं प्राप्नुयां यदि ।

अन्यथा न करिष्येऽहं सत्यमेतत्पितामहाः । तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै । शाश्वताश्चाव्ययाश्चैव तिष्ठन्तु पितरो मम । १८५५

॥ सूतउवाच ॥ एवमुक्त्वा तु सर्पिर्द्धश्चचार पृथिवीं मुनिः। नच स्म लभते भार्य्यां वृद्धोऽयमिति शौनक।
यदा निर्वेदमापन्नः पितृभिश्चोदितस्तथा। तदाऽरण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः।
सत्वरण्यगतः प्राज्ञः पितॄणां हितकाम्यया। उवाच कन्यां याचामि तिस्रो वाचः शनैरिमाः।
यानि भूतानि सन्तीह स्थावराणि चराणि च। अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः।
उग्रे तपसि वर्त्तन्तं पितरश्चोदयन्ति मां। निविशस्वेति दुःखार्त्ताः सन्तानस्य चिकीर्षया। १८६०
निवेशायाखिलां भूमिं कन्याभैक्ष्यं चरामि भोः। दरिद्रो दुःखशीलश्च पितृभिः सन्नियोजितः।
यस्य कन्याऽस्ति भूतस्य ये मयेह प्रकीर्त्तिताः। ते मे कन्यां प्रयच्छन्तु चरतः सर्व्वतो दिशं।
मम कन्या सनाम्नी या भैक्ष्यवच्चोद्यता भवेत्। भरेयञ्चैव यां नाहं तां मे कन्यां प्रयच्छत।
ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः। तामादाय प्रवृत्तिं ते वासुकेः प्रत्यवेदयन्।
तेषां श्रुत्वा स नागेन्द्रस्तां कन्यां समलङ्कृतां। प्रगृह्यारण्यमगमत्समीपं तस्य पन्नगः। १८६५
तत्र तां भैक्ष्यवत्कन्यां प्रादात्तस्मै महात्मने। नागेन्द्रो वासुकिर्ब्रह्मन् स तां प्रत्यग्रहीत।
असनामेति वै मत्वा भरणे चाविचारिते। मोक्षभावे स्थितश्चापि द्वन्द्वभूतः परिग्रहे।
ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन। वासुकिं भरणं चास्या न कुर्य्यामित्युवाच ह।
॥ इत्यादिपर्व्वण्यास्तीके षट्चत्वारिंशोऽध्यायः॥ ४६ ॥

॥ सौतिरुवाच ॥ वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा। सनाम्नी तव कन्येयं स्वसा मे तपसाऽन्विता।
भरिष्यामि च ते भार्य्यां प्रतीच्छेमां द्विजोत्तम। रक्षणञ्च करिष्येऽस्याः सर्व्वशक्त्या तपोधन। त्वदर्थं रक्ष्यते चैषा मया मुनिवरोत्तम। १८७०
॥ ऋषिरुवाच ॥ न भरिष्येऽहमेतां वै एष वै समयः कृतः। अप्रियञ्च न कर्त्तव्यं कृते चैनां त्यजाम्यहं।
॥ सौतिरुवाच ॥ प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति। जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह।
तत्र मन्त्रविदां श्रेष्ठस्तपोवृद्धो महाव्रतः। जग्राह पाणिं धर्म्मात्मा विधिमन्त्रैः पुरस्कृतं।
ततो वासगृहं रम्यं पन्नगेन्द्रस्य सम्मतं। जगाम भार्य्यामादाय स्तूयमानो महर्षिभिः।
शयनं तत्र संक्लृप्तं स्पर्द्ध्यास्तरणसंवृतं। तत्र भार्य्यासहायो वै जरत्कारुरुवास ह। १८७५
स तत्र समयं चक्रे भार्य्यया सह सत्तमः। विप्रियं मे न कर्त्तव्यं नच वाच्यं कदाचन।
त्यजेयं विप्रिये च त्वां कृते वासञ्च ते गृहे। एतद्गृहाण वचनं मया यत्समुदीरितं।
ततः परमसंविग्ना स्वसा नागपतेस्तदा। अतिदुःखान्विता वाक्यं तमुवाचैवमस्त्विति।
तथैव सा च भर्त्तारं दुःखशीलमुपाचरत्। उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी।
ऋतुकाले ततः स्नाता कदाचिद्वासुकेः स्वसा। भर्त्तारं वै यथान्यायमुपतस्थे महामुनिं। १८८०
तत्र तस्याः समभवद्गर्भो ज्वलनसन्निभः। अतीव तेजसा युक्तो वैश्वानरसमद्युतिः।
शुक्लपक्षे यथा सोमो व्यवर्द्धत तथैव सः। ततः कतिपयाहस्य जरत्कारुर्महायशाः।
उत्सङ्गेऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत्। तस्मिंश्च सुप्ते विप्रेन्द्रे सविताऽस्तमियाद्गिरिं।

अङ्कः परिचये मग्नांस्ततः साऽचिन्तयत्तदा। वासुकेर्भगिनी भीता धर्म्मलोपान्मनस्विनी।
किन्नु मे सुकृतं भूयाद्भर्त्तुरुत्थापनं नवा। दुःखशीलो हि धर्म्मात्मा कथं नास्यापराध्नुयां। १८८५
कोपो वा धर्म्मशीलस्य धर्म्मलोपोऽथवा पुनः। धर्म्मलोपो गरीयान्वै स्यादित्यत्राकरोन्मति।
उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति। धर्म्मलोपो भवेदस्य सन्ध्याऽतिक्रमणे ध्रुवं।
इति निश्चित्य मनसा जरत्कारुर्भुजङ्गमा। तमृषिं दीप्ततपसं शयानमनलोपमं।
उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी। उत्तिष्ठ त्वं महाभाग सूर्य्योऽस्तमुपगच्छति।
सन्ध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रत। प्रादुष्कृताग्निहोत्रोऽयं मुहूर्त्तो रम्यदारुणः। १८९०
सन्ध्या प्रवर्त्तते चेयं पश्चिमस्यां दिशि प्रभो। एवमुक्तः स भगवान् जरत्कारुर्महातपाः।
भार्य्यां प्रस्फुरमाणौष्ठ इदं वचनमब्रवीत्। अवमानः प्रयुक्तोऽयं त्वया मम भुजङ्गमे।
समीपे ते न वत्स्यामि गमिष्यामि यथागतं। शक्तिरस्ति न वामोरु मयि सुप्ते विभावसोः।
अस्तं गन्तुं यथाकालमिति मे हृदि वर्त्तते। न चाप्यवमतस्येह वासो रोचेत कस्यचित्।
किं पुनर्द्धर्म्मशीलस्य मम वा मद्विधस्य वा। एवमुक्ता जरत्कारुर्भर्त्त्रा हृदयकम्पनं। १८९५
अब्रवीद्भगिनी तत्र वासुकेः सन्निवेशने। नावमानात्कृतवती तवाहं विप्र बोधनं।
धर्म्मलोपो न ते विप्र स्यादित्येतन्मया कृतं। उवाच भार्य्यामित्युक्तो जरत्कारुर्महातपाः।
ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजङ्गमां। न मे वागनृतं प्राह गमिष्येऽहं भुजङ्गमे।
समयो ह्येष मे पूर्व्वं त्वया सह मिथः कृतः। सुखमस्म्युषितो भद्रे ब्रूयास्त्वं भ्रातरं शुभे।
इतो मयि गते भीरु गतः स भगवानिति। त्वं चापि मयि निष्क्रान्ते न शोकं कर्त्तुमर्हसि। १९००
इत्युक्ता साऽनवद्याङ्गी प्रत्युवाच मुनिं तदा। जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा।
वाष्पगद्गदया वाचा मुखेन परिशुष्यता। कृताञ्जलिर्व्वरारोहा पर्य्यश्रुनयना ततः।
धैर्य्यमालम्ब्य वामोरुर्हृदयेन प्रवेपता। न मामर्हसि धर्म्मज्ञ परित्यक्तुमनागसं।
धर्म्मे स्थितां स्थितो धर्म्मे सदा प्रियहिते रतां। प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम।
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः। मातृशापाभिभूतानां ज्ञातीनां मम सत्तम। १९०५
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते। त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शिवं भवेत्।
संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज। ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये।
इममव्यक्तरूपं मे गर्भमाधाय सत्तम। कथं त्यक्त्वा महात्मा सन्गन्तुमिच्छस्यनागसं।
एवमुक्तस्तु स मुनिर्भार्य्यां वचनमब्रवीत्। यद्युक्तमनुरूपञ्च जरत्कारुं तपोधनः।
अस्त्ययं सुभगे गर्भस्तव वैश्वानरोपमः। ऋषिः परमधर्म्मात्मा वेदवेदाङ्गपारगः। १९१०
एवमुक्त्वा स धर्म्मात्मा जरत्कारुर्महानृषिः। उग्राय तपसे भूयो जगाम कृतनिश्चयः।
इत्यादिपर्व्वण्यास्तीके सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ सौतिरुवाच ॥ गतमात्रं तु भर्त्तारं जरत्कारुरवेदयत्। भ्रातुः सकाशमागम्य यथातथ्यं तपोधन।

ततः स भुजगश्रेष्ठः श्रुत्वा सुमहदप्रियं। उवाच भगिनीं दीनां तदा दीनतरः स्वयं।

॥ वासुकिरुवाच ॥ जानासि भद्रे यत्कार्य्यं प्रदाने कारणञ्च यत्। पन्नगानां हितार्थाय पुत्रस्ते स्यात्ततो यदि।

स सर्पसत्रात्किल नो मोक्षयिष्यति वीर्य्यवान्। एवं पितामहः पूर्व्वमुक्तवांस्तु सुरैः सह। अप्यस्ति गर्भः सुभगे तस्मात्ते मुनिसत्तमात्। न चेच्छाम्यफलं तस्य दारकर्म्म मनीषिणः। १९१५

कामञ्च मम न न्याय्यं प्रष्टुं त्वां कार्य्यमीदृशं। किन्तु कार्य्यगरीयस्त्वात्ततस्त्वाऽहमचूचुदं।

दुर्व्वार्य्यतां विदित्वा च भर्त्तुस्तेऽतितपस्विनः। नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स मां।

आचक्ष्व भद्रे भर्त्तुस्त्वं सर्व्वमेव विचेष्टितं। उद्धरस्व च शल्यं मे घोरं हृदि चिरस्थितं।

जरत्कारुस्ततो वाक्यमित्युक्ता प्रत्यभाषत। आश्वासयन्ती सततं वासुकिं पन्नगेश्वरं।

॥ जरत्कारुरुवाच ॥ पृष्टो मयाऽपत्यहेतोः स महात्मा महातपाः। अस्तीत्युत्तरमुद्दिश्य ममेदं गतवांश्च सः। १९२०

स्वैरेष्वपि न तेनाहं स्मरामि वितथं वचः। उक्तपूर्व्वं कुतो राजन्साम्पराये स वक्ष्यति।

न सन्तापस्त्वया कार्य्यः कार्य्यं प्रति भुजङ्गमे। उत्पत्स्यति च ते पुत्रो ज्वलनार्कसमप्रभः।

इत्युक्त्वा स हि मां भ्रातर्गतो भर्त्ता तपोधनः। तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितं।

॥ सौतिरुवाच। एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा। एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत।

सान्त्वमानार्थदानैश्च पूजया चानुरूपया। सोदर्य्यां पूजयामास स्वसारं पन्नगोत्तमः। १९२५

ततः प्रववृधे गर्भो महातेजा महाप्रभः। यथा सोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि।

अथ काले तु सा ब्रह्मन् प्रजज्ञे भुजगस्वसा। कुमारं देवगर्भाभं पितृमातृभयापहं।

ववृधे स तु तत्रैव नागराजनिवेशने। वेदांश्चाधिजगे साङ्गान्भार्गवाच्च्यवनान्मुनेः।

चीर्णव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः। नाम चास्याभवत्ख्यातं लोकेष्वास्तीक इत्युत।

अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तं। वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतं। १९३०

स बाल एव तत्रस्थश्चरन्नमितबुद्धिमान्। गृहे पन्नगराजस्य प्रयत्नात्परिरक्षितः।

भगवानिव देवेशः शूलपाणिर्हिरण्मयः। विवर्द्धमानः सर्व्वांस्तान्पन्नगानभ्यहर्षयत्।

॥ इत्यादिपर्व्वण्यास्तीके अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ शौनकउवाच ॥ यदपृच्छत्तदा राजा मन्त्रिणो जनमेजयः। पितुः स्वर्गगतिं तन्मे विस्तरेण पुनर्व्वद।

॥ सौतिरुवाच ॥ शृणु ब्रह्मन्यथापृच्छन्मन्त्रिणो नृपतिस्तदा। यथा चाख्यातवन्तस्ते निधनं तत्परीक्षितः।

॥ जनमेजयउवाच ॥ जानन्ति स्म भवन्तस्तद्यथावृत्तं पितुर्मम। आसीद्यथा स निधनं गतः काले महायशाः। १९३५

श्रुत्वा भवत्सकाशाद्धि पितुर्वृत्तमशेषतः। कल्याणं प्रतिपत्स्यामि विपरीतं न जातु चित्।

॥ सौतिरुवाच। मन्त्रिणोऽथाब्रुवन्वाक्यं पृष्टास्तेन महात्मना। सर्व्वे धर्म्मविदः प्राज्ञा राजानं जनमेजयं।

॥ मन्त्रिणऊचुः। शृणु पार्थिव यद्ब्रूषे पितुस्तव महात्मनः। चरितं पार्थिवेन्द्रस्य यथा निष्ठां गतश्च सः।

धर्म्मात्मा च महात्मा च प्रजापालः पिता तव। आसीदिह यथावृत्तः स महात्मा शृणुष्व तत्।

चातुर्व्वर्ण्यं स्वधर्म्मस्थं स कृत्वा पर्य्यरक्षत। धर्म्मतो धर्म्मविद्राजा धर्म्मो विग्रहवानिव। १९४०

ररक्ष पृथिवीं देवीं श्रीमानतुलविक्रमः। द्वेष्टारस्तस्य नैवासन् स द्वेष्टि न कञ्चन।
समः सर्व्वेषु भूतेषु प्रजापतिरिवाभवत्। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्म्मसु।
स्थिताः सुमनसो राजंस्तेन राज्ञा स्वधिष्ठिताः। विधवाऽनाथविकलान् कृपणांश्च बभार सः।
सुदर्शः सर्व्वभूतानामासीत्सोम इवापरः। तुष्टपुष्टजनः श्रीमान्सत्यवाग्दृढविक्रमः।
धनुर्व्वेदे तु शिष्योऽभून्नृपः शारद्वतस्य सः। गोविन्दस्य प्रियश्चासीत्पिता ते जनमेजय। १९४५
लोकस्य चैव सर्व्वस्य प्रिय आसीन्महायशाः। परिक्षीणेषु कुरुषु सोत्तरायामजीजनत्।
परीक्षिदभवत्तेन सौभद्रस्यात्मजो बली। राजधर्म्मार्थकुशलो युक्तः सर्व्वगुणैर्वृतः।
जितेन्द्रियश्चात्मवांश्च मेधावी धर्म्मसेविता। षड्वर्गजिन्महाबुद्धिर्नीतिशास्त्रविदुत्तमः।
प्रजा इमास्तव पिता षष्टिवर्षाण्यपालयत्। ततो दिष्टान्तमापन्नः सर्व्वेषां दुःखमावहन्। ततस्त्वं पुरुषश्रेष्ठ धर्म्मेण प्रतिपेदिवान्।
इदं वर्षसहस्राणि राज्यं कुरुकुलागतं। बाल एवाभिषिक्तस्त्वं सर्व्वभूतानुपालकः। १९५०
॥जनमेजय उवाच॥ नास्मिन् कुले जातु बभूव राजा यो न प्रजानां प्रियकृत्प्रियश्च। विशेषतः प्रेक्ष्य पितामहानां वृत्तं महद्वृत्तपरायणानां।
कथं निधनमापन्नः पिता मम तथाविधः। आचक्षध्वं यथावन्मे श्रोतुमिच्छामि तत्त्वतः।
॥ सौतिरुवाच। एवं सञ्चोदिता राज्ञा मन्त्रिणस्ते नराधिपं। ऊचुः सर्व्वे यथा वृत्तं राज्ञः प्रियहितैषिणः।
॥ मन्त्रिण ऊचुः ॥ स राजा पृथिवीपालः सर्व्वशस्त्रभृतां वरः। बभूव मृगयाशीलस्तव राजन्पिता सदा।
यथा पाण्डुर्महाबाहुर्धनुर्द्धरवरो युधि। अस्मास्वासज्य सर्व्वाणि राजकार्य्याण्यशेषतः। १९५५
स कदाचिद्वनगतो मृगं विव्याध पत्त्रिणा। विद्ध्वा चान्वसरत्तूर्णं तं मृगं गहने वने।
पदातिर्बद्धनिस्त्रिंशस्ततायुधकलापवान्। न चाससाद गहने मृगं नष्टं पिता तव।
परिश्रान्तो वयस्थश्च षष्टिवर्षो जरान्वितः। क्षुधितः स महारण्ये ददर्श मुनिसत्तमं।
स तं पप्रच्छ राजेन्द्रो मुनिं मौनव्रते स्थितं। नच किञ्चिदुवाचेदं पृष्टोऽपि स मुनिस्तदा।
ततो राजा क्षुच्छ्रमार्त्तस्तं मुनिं स्थाणुवत्स्थितं। मौनव्रतधरं शान्तं सद्यो मन्युवशं गतः। १९६०
न बुबोध च तं राजा मौनव्रतधरं मुनिं। स तं क्रोधसमाविष्टो धर्षयामास ते पिता।
मृतं सर्पं धनुष्कोट्या समुत्क्षिप्य धरातलात्। तस्य शुद्धात्मनः प्रादात्स्कन्धे भरतसत्तम।
न चोवाच स मेधावी तमथो साध्वसाधु वा। तस्थौ तथैव चाक्रुद्धः सर्प्पं स्कन्धेन धारयन्।
इत्यादिपर्व्वण्यास्तीके एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ मन्त्रिण ऊचुः ॥ ततः स राजा राजेन्द्र स्कन्धे तस्य भुजङ्गमं। मुनेः क्षुत्क्षाम आसज्य स्वपुरं प्रययौ पुनः।
ऋषेस्तस्य तु पुत्त्रोऽभूद्गवि जातो महायशाः। शृङ्गी नाम महातेजास्तिग्मवीर्य्योऽतिकोपनः। १९६५
ब्रह्माणं समुपागम्य मुनिः पूजां चकार ह। सोऽनुज्ञातस्ततस्तत्र शृङ्गी शुश्राव तं तदा।
सख्युः सकाशात्पितरं पित्रा ते धर्षितं पुरा। मृतं सर्प्पं समासक्तं स्थाणुभूतस्य तस्य तं।

वहन्तं राजशार्दूल स्कन्धेनानपकारिणं। तपस्विनमतीवाथ तं मुनिप्रवरं नृप।
जितेन्द्रियं विशुद्धञ्च स्थितं कर्म्मण्यथाद्भुतं। तपसा द्योतितात्मानं स्वेष्वङ्गेषु यतं सदा।
शुभाचारं शुभकथं सुस्थितं तमलोलुपं। अक्षुद्रमनसूयञ्च वृद्धं मौनव्रते स्थितं। शरण्यं सर्व्वभूतानां पित्रा विनिकृतं तव। १९००
शशापाथ महातेजाः पितरं ते रुषान्वितः। ऋषेः पुत्रो महातेजा बालोऽपि स्थविरद्युतिः।
स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह। पितरं तेऽभिसन्धाय तेजसा प्रज्वलन्निव।
अनागसि गुरौ यो मे मृतसर्पमवासृजत्। तं नागस्तक्षकः क्रुद्धस्तेजसा प्रदहिष्यति।
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः। सप्तरात्रादितः पापं पश्य मे तपसो बलं। इत्युक्त्वा प्रययौ तत्र पिता यत्रास्य सोऽभवत्। दृष्ट्वा च पितरं तस्मै तं शापं प्रत्यवेदयत्।
स चापि मुनिशार्दूलः प्रेषयामास ते पितुः। शिष्यं गौरमुखं नाम शीलवन्तं गुणान्वितं। १९०५
आचख्यौ स च विश्रान्तो राज्ञः सर्व्वमशेषतः। शप्तोऽसि मम पुत्रेण यत्तो भव महीपते।
तक्षकस्त्वां महाराज तेजसाऽसौ दहिष्यति। श्रुत्वा च तद्वचो घोरं पिता ते जनमेजय।
यत्तोऽभवत्परित्रस्तस्तक्षकात्पन्नगोत्तमात्। ततस्तस्मिंस्तु दिवसे सप्तमे समुपस्थिते।
राज्ञः समीपं ब्रह्मर्षिः काश्यपो गन्तुमैच्छत। तं ददर्शाथ नागेन्द्रस्तक्षकः काश्यपं तदा। तमब्रवीत्पन्नगेन्द्रः काश्यपं त्वरितं द्विजं। क्व भवांस्त्वरितो याति किञ्च कार्य्यं चिकीर्षति।
॥ काश्यप उवाच ॥ यत्र राजा कुरुश्रेष्ठः परीक्षिन्नाम वै द्विज। तक्षकेण भुजङ्गेन धक्ष्यते किल सोऽद्य वै। १९८०
गच्छाम्यहं तं त्वरितः सद्यः कर्त्तुमपज्वरं। मयाभिपन्नं तञ्चापि न सर्पो धर्षयिष्यति।
॥ तक्षक उवाच ॥ किमर्थं तं मया दष्टं संजीवयितुमिच्छसि। अहं स तक्षको ब्रह्मन्पश्य मे वीर्य्यमद्भुतं।
न शक्तस्त्वं मया दष्टं तं संजीवयितुं नृपं। इत्युक्त्वा तक्षकस्तत्र सोऽदशद्वै वनस्पतिं। सदष्टमात्रो नागेन भस्मीभूतोऽभवन्नगः।
काश्यपश्च ततो राजन्नजीवयत तं नगं।
ततस्तं लोभयामास कामं ब्रूहीति तक्षकः। स एवमुक्तस्तं प्राह काश्यपस्तक्षकं पुनः।
धनलिप्सुरहं तत्र यामीत्युक्तश्च तेन सः। तमुवाच महात्मानं तक्षकः श्लक्ष्णया गिरा। १९८५
यावद्धनं प्रार्थयसे राज्ञस्तस्मात्ततोऽधिकं। गृहाण मत्त एव त्वं संनिवर्त्तस्व चानघ।
स एवमुक्तो नागेन काश्यपो द्विपदां वरः। लब्ध्वा वित्तं निववृते तक्षकाद्यावदीप्सितं।
तस्मिन्प्रतिगते विप्रे छद्मनोपेत्य तक्षकः। तं नृपं नृपतिश्रेष्ठं पितरं धार्म्मिकं तव।
प्रासादस्थं यत्तमपि दग्धवान्विषवह्निना। ततस्त्वं पुरुषव्याघ्र विजयायाभिषेचितः।
एतद्दृष्टं श्रुतं चापि यथावन्नृपसत्तम। अस्माभिर्निखिलं सर्व्वं कथितं तेऽतिदारुणं। १९९०
श्रुत्वा चैतन्नरश्रेष्ठपार्थिवस्य पराभवं। अस्य चर्षेरुतङ्कस्य विधत्स्व यदनन्तरं।
॥ सौतिरुवाच ॥ एतस्मिन्नेव काले तु स राजा जनमेजयः। उवाच मन्त्रिणः सर्व्वानिदं वाक्यमरिन्दमः।
॥ जनमेजय उवाच ॥ अथ तत्कथितं केन यद्वृत्तं तद्वनस्पतौ। आश्चर्य्यभूतं लोकस्य भस्मराशीकृतं तदा।
यद्वृक्षं जीवयामास काश्यपस्तक्षकेण वै। नूनं मन्त्रैर्हतविषो न प्रणश्येत काश्यपात्।

चिन्तयामास पापात्मा मनसा पन्नगाधमः। दष्टं यदि मया विप्रः पार्थिवं जीवयिष्यति। १९९५

तक्षकः संहतविषो लोके यास्यति हास्यतां। विचिन्त्यैवं कृता तेन ध्रुवं तुष्टिर्द्विजस्य वै।

भविष्यति ह्युपायेन यस्य दास्यामि यातनां। एकन्तु श्रोतुमिच्छामि तद्वृत्तं निर्ज्जने वने।

संवादं पन्नगेन्द्रस्य काश्यपस्य च तत्तथा। श्रुतवान् दृष्टवांश्चापि भवतां कथमागतं। श्रुत्वा तस्य विधास्येऽहं पन्नगान्तकरीं मतिं।

॥ मन्त्रिण ऊचुः ॥ शृणु राजन्यथाऽस्माकं येन तत्कथितं पुरा। समागतं द्विजेन्द्रस्य पन्नगेन्द्रस्य चाध्वनि।

तस्मिन् वृक्षे नरः कश्चिदिन्धनार्थाय पार्थिव। विचिन्वन्पूर्व्वमारूढः शुष्कशाखा वनस्पतौ। २०००

न बुध्येतामुभौ तौ च नगस्थं पन्नगद्विजौ। सह तेनैव वृक्षेण भस्मीभूतोऽभवन्नृप।

द्विजप्रभावाद्राजेन्द्र व्यजीवत्स वनस्पतिः। तेनागम्य द्विजश्रेष्ठपुंसाऽस्मासु निवेदितं।

यथावृत्तन्तु तत्सर्व्वं तक्षकस्य द्विजस्य च। एतत्ते कथितं राजन् यथा दृष्टं श्रुतञ्च यत्। श्रुत्वा च नृपशार्दूल विधत्स्व यदनन्तरं।

॥ सूत उवाच ॥ मन्त्रिणान्तु वचः श्रुत्वा स राजा जनमेजयः। पर्य्यतप्यत दुःखार्त्तः प्रत्यपिंषत्करं करे।

निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः। मुमोचाश्रूणि च तदा नेत्राभ्यां प्ररुदन्नृपः। २००५

दुर्धरं वाष्पमुत्सृज्य स्पृष्ट्वा चापो यथाविधि। मुहूर्त्तमिव च ध्यात्वा निश्चित्य मनसा नृपः।

अमर्षी मन्त्रिणः सर्व्वानिदं वचनमब्रवीत्। जनमेजय उवाच। श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति।

निश्चितेयं मम मतिर्या च तां मे निबोधत। अनन्तरञ्च मन्येऽहं तक्षकाय दुरात्मने।

प्रतिकर्त्तव्यमित्येवं येन मे हिंसितः पिता। शृङ्गिणं हेतुमात्रं यः कृत्वा दग्ध्वा च पार्थिवं।

इयं दुरात्मता तस्य काश्यपं यो न्यवर्त्तयत्। यद्यागच्छेत्स वै विप्रो ननु जीवेत्पिता मम। २०१०

परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः। काश्यपस्य प्रसादेन मन्त्रिणां विनयेन च।

स तु वारितवान्मोहात्काश्यपं द्विजसत्तमं। सञ्जिजीवयिषुं प्राप्तं राजानमपराजितं।

महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः। द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति।

उतङ्कस्य प्रियं कर्त्तुमात्मनश्च महत्प्रियं। भवतां चैव सर्व्वेषां गच्छाम्यपचितिं पितुः।

॥ इत्यादिपर्व्वण्यास्तीके पञ्चाशोऽध्यायः॥ ५०॥

॥ सौतिरुवाच। एवमुक्त्वा ततः श्रीमान्मन्त्रिभिश्चानुमोदितः। आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः। २०१५

ब्रह्मन्भरतशार्दूलो राजा पारीक्षितस्तदा। पुरोहितमथाहूय ऋत्विजो वसुधाधिपः।

अब्रवीद्वाक्यसम्पन्नः कार्य्यसम्पत्करं वचः। यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान्।

प्रतिकुर्य्यां तथा तस्य तद्भवन्तो ब्रुवन्तु मे। अपि तत्कर्म्म विदितं भवतां येन पन्नगं।

तक्षकं संप्रदीप्तेऽग्नौ प्रक्षिपेयं सबान्धवं। यथा तेन पिता मह्यं पूर्व्वं दग्धो विषाग्निना।

तथाऽहमपि तं पापं दग्धुमिच्छामि पन्नगं। ऋत्विज ऊचुः। अस्ति राजन्महत्सत्रं त्वदर्थं देवनिर्मितं। सर्पसत्रमिति ख्यातं पुराणे परिपठ्यते। २०२०

आहर्त्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप। इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः।

॥ सौतिरुवाच ॥ एवमुक्तः स राजर्षिर्मेने दग्धं हि तक्षकं। हुताशनमुखे दीप्ते प्रविष्टमिति सत्तम।
ततोऽब्रवीन्मन्त्रविदस्तान् राजा ब्राह्मणांस्तदा। आहरिष्यामि तत्सत्रं सम्भाराः संभ्रियन्तु मे।
ततस्त ऋत्विजस्तस्य शास्त्रतो द्विजसत्तम। तं देशं मापयामासुर्यज्ञायतनकारणात्।
यथावद्वेदविद्वांसः सर्व्वे बुद्ध्या परं गताः। ऋद्ध्या परमया युक्तमिष्टं द्विजगणैर्युतं। २०२५
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिषेवितं। निर्म्माय चापि विधिवद्यज्ञायतनमीप्सितं।
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा। इदं चासीत्तत्र पूर्व्वं सर्पसत्रे भविष्यति।
निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा। यज्ञस्यायतने तस्मिन् क्रियमाणे वचोऽब्रवीत्।
स्थपतिर्बुद्धिसम्पन्नो वास्तुविद्याविशारदः। इत्यब्रवीत् सूत्रधारः सूतः पौराणिकस्तदा।
यस्मिन्देशे च काले च मापनेयं प्रवर्त्तिता। ब्राह्मणं कारणं कृत्वा नायं संस्थास्यते क्रतुः। २०३०
एतच्छ्रुत्वा तु राजाऽसौ प्राग्दीक्षाकालमब्रवीत्। क्षत्तारं न हि मे कश्चिदज्ञातः प्रविशेदिति।
इत्यादिपर्व्वण्यास्तीके एकपञ्चाशोऽध्यायः॥ ५१ ॥

॥ सौतिरुवाच ॥ ततः कर्म्म प्रववृते सर्पसत्रविधानतः। पर्य्यक्रामंश्च विधिवत्स्वे स्वे कर्म्मणि याजकाः।
प्रावृत्य कृष्णवासांसि धूम्रसंरक्तलोचनाः। जुहुवुर्म्मन्त्रवच्चैव समिद्धं जातवेदसं।
कम्पयन्तश्च सर्व्वेषामुरगाणां मनांसि च। सर्प्पानाजुहुवुस्तत्र सर्व्वानग्निमुखे तदा।
ततः सर्प्पाः समापेतुः प्रदीप्ते हव्यवाहने। विचेष्टमानाः कृपणमाह्वयन्तः परस्परं। २०३५
विस्फुरन्तः श्वसन्तश्च वेष्टयन्तः परस्परं। पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे। श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशव
स्तथा। नदन्तो विविधान्नादान् पेतुर्दीप्ते विभावसौ।
क्रोशयोजनमात्रा हि गोकर्णस्य प्रमाणतः। पतन्त्यजस्रं वेगेन वह्नावग्निमतां वर।
एवं शतसहस्राणि प्रयुतान्यर्ब्बुदानि च। अवशानि विनष्टानि पन्नगानान्तु तत्र वै।
तुरगा इव तत्रान्ये हस्तिहस्ता इवापरे। मत्ता इव च मातङ्गा महाकाया महाबलाः।
उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः। घोराश्च परिघप्रख्या दन्दशूका महाबलाः। प्रपेतुरग्नावुरगा मातृवाग्दण्ड
पीडिताः। २०४०
इत्यादिपर्व्वणि सर्प्पसत्रे द्विपञ्चाशोऽध्यायः॥ ५२ ॥

॥शौनक उवाच॥ सर्प्पसत्रे तदा राज्ञः पाण्डवेयस्य धीमतः। जनमेजयस्य केत्वासन्नृत्विजः परमर्षयः।
के सदस्या बभूवुश्च सर्प्पसत्रे सुदारुणे। विषादजननेऽत्यर्थं पन्नगानां महाभये।
सर्व्वं विस्तरशस्तात भवाञ्छंसितुमर्हति। सर्प्पसत्रविधानज्ञा विज्ञेयाः के च सूतज।
॥ सौतिरुवाच ॥ हन्त ते कथयिष्यामि नामानीह मनीषिणां। ये ऋत्विजः सदस्याश्च तस्यासन्नृपतेस्तदा।
तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः। च्यवनस्यान्वये ख्यातो विप्रो वेदविदांवरः। २०४५
उद्गाता ब्राह्मणो वृद्धो विद्वान् कौत्सोऽथ जैमिनिः। ब्रह्माऽभवच्छार्ङ्गरवो अध्वर्य्युश्चापि पिङ्गलः।
सदस्यश्चाभवद्व्यासः पुत्रशिष्यसहायवान्। उद्दालकः प्रमतकः श्वेतकेतुश्च पिङ्गलः।

असितो देवलश्चैव नारदः पर्व्वतस्तथा। आत्रेयः कुण्डजठरौ द्विजः कालघटस्तथा।
वात्स्यः श्रुतश्रवा वृद्धो जपस्वाध्यायशीलवान्। कोहलो देवशर्म्मा च मौद्गल्यः समसौरभः।
एते चान्ये च बहवो ब्राह्मणा वेदपारगाः। सदस्याश्चाभवंस्तत्र सत्रे पारीक्षितस्य ह। २०५०
जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ। अहयः प्रापतंस्तत्र घोराः प्राणिभयावहाः।
वसामेदोवहाः कुल्या नागानां सम्प्रवर्त्तिताः। ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा।
पततां चैव नागानां धिष्ठितानां तथाऽम्बरे। अश्रूयतानिशं शब्दः पच्यतां चाग्निना भृशं।
तक्षकस्तु स नागेन्द्रः पुरन्दरनिवेशनं। गतः श्रुत्वैव राजानं दीक्षितं जनमेजयं।
ततः सर्व्वं यथावृत्तमाख्याय भुजगोत्तमः। अगच्छच्छरणं भीत आगस्कृत्वा पुरन्दरं। २०५५
तमिन्द्रः प्राह सुप्रीतो न तवास्तीह तक्षक। भयं नागेन्द्र तस्माद्वै सर्पसत्रात्कदाचन।
प्रसादितो मया पूर्व्वं तवार्थाय पितामहः। तस्मात्तव भयं नास्ति व्येतु ते मानसो ज्वरः।
॥सौतिरुवाच॥ एवमाश्वासितस्तेन ततः स भुजगोत्तमः। उवास भवने तस्मिन् शक्रस्य मुदितः सुखी।
अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः। अल्पशेषपरीवारो वासुकिः पर्य्यतप्यत।
कश्मलं चाविशद्घोरं वासुकिं पन्नगोत्तमं। स घूर्णमानहृदयो भगिनीमिदमब्रवीत्। २०६०
दह्यन्त्यङ्गानि मे भद्रे न दिशः प्रतिभान्ति च। सीदामीव च सम्मोहाद्घूर्णतीव च मे मनः।
दृष्टिर्भ्राम्यति मेऽतीव हृदयं दीर्य्यतीव च। पतिष्याम्यवशोऽद्याहं तस्मिन्दीप्ते विभावसौ।
पारीक्षितस्य यज्ञोऽसौ वर्त्ततेऽस्मज्जिघांसया। व्यक्तं मयाऽपि गन्तव्यं प्रेतराजनिवेशनं।
अयं स कालः सम्प्राप्तो यदर्थमसि मे स्वसः। जरत्कारौ मया दत्ता त्रायस्वास्मान्सबान्धवान्।
आस्तीकः किल यज्ञं तं वर्त्तन्तं भुजगोत्तमे। प्रतिषेत्स्यति मां पूर्व्वं स्वयमाह पितामहः। २०६५
तद्वत्से ब्रूहि वत्सं स्वं कुमारं वृद्धसंमतं। ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमं।
इत्यादिपर्व्वणि सर्प्पसत्रे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥सौतिरुवाच॥ तत आहूय पुत्रं स्वं जरत्कारुर्भुजङ्गमा। वासुकेर्नागराजस्य वचनादिदमब्रवीत्।
अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः। कालः स चायं सम्प्राप्तस्तत्कुरुष्व यथातथं।
॥आस्तीक उवाच॥ किन्निमित्तं मम पितुर्दत्ता त्वं मातुलेन मे। तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्त्ताऽस्मि तत्तथा।
॥सौतिरुवाच॥ तत आचष्ट सा तस्मै बान्धवानां हितैषिणी। भगिनी नागराजस्य जरत्कारुरविक्लवा। २०७०
॥जरत्कारुरुवाच॥ पन्नगानामशेषाणां माता कद्रूरिति श्रुता। तया शप्ता रुषितया सुता यस्मान्निबोध तत्।
उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम। विनतार्थाय पणितं दासभावाय पुत्रकाः।
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः। तत्र पञ्चत्वमापन्नाः प्रेतलोकं गमिष्यथ।
तां च शप्तवतीं देवः साक्षाल्लोकपितामहः। एवमस्त्विति तद्वाक्यं प्रोवाचानुमुमोद च।
वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा। अमृते मथिते तात देवाञ्छरणमीयिवान्। २०७५
सिद्धार्थाश्च सुराः सर्व्वे प्राप्यामृतमनुत्तमं। भ्रातरं मे पुरस्कृत्य पितामहमुपागमन्।

ते तं प्रसादयामासुः सुराः सर्व्वेऽब्जसम्भवं । राज्ञा वासुकिना सार्द्धं शापोऽसौ न भवेदिति ।

॥ देवा ऊचुः ॥ वासुकिर्नागराजोऽयं दुःखितो ज्ञातिकारणात् । अभिशापः स मातुस्तु भगवन्न भवेत् कथं ।

॥ ब्रह्मोवाच ॥ जरत्कारुर्जरत्कारुं यां भार्य्यां समवाप्स्यति । तत्र जातो द्विजः शापान्मोक्षयिष्यति पन्नगान् ।

एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगोत्तमः । प्रादादमरगर्भाभां तव पित्रे महात्मने । १०८०

प्रागेवानागते काले तस्मात्त्वं मय्यजायथाः । अयं स कालः सम्प्राप्तो भयान्नस्त्रातुमर्हसि ।

भ्रातरञ्चापि मे तस्मात्त्रातुमर्हसि पावकात् । न मोघन्तु कृतं तन्नो यदहं तव धीमते । पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे ।

॥ सौतिरुवाच ॥ एवमुक्तस्तथेत्युक्त्वा आस्तीको मातरं तदा । अब्रवीद्दुःखसन्तप्तं वासुकिं जीवयन्निव ।

अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम । तस्माच्छापान्महासत्त्व सत्यमेतद्ब्रवीमि ते ।

भव स्वस्थमना नाग नहि ते विद्यते भयं । प्रयतिष्ये तथा राजन्यथा श्रेयो भविष्यति । १०८५

न मे वागनृतं प्राह स्वैरेष्वपि कुतोऽन्यथा । तं वै नृपवरं गत्वा दीक्षितं जनमेजयं ।

वाग्भिर्मङ्गलयुक्ताभिस्तोषयिष्येऽद्य मातुल । यथा स यज्ञो नृपतेर्निवर्त्तिष्यति सत्तम ।

स सम्भावय नागेन्द्र मयि सर्व्वं महामते । न ते मयि मनो जातु मिथ्या भवितुमर्हति ।

॥ वासुकिरुवाच ॥ आस्तीक परिघूर्णामि हृदयं मे विदीर्य्यते । दिशो न प्रतिजानामि ब्रह्मदण्डनिपीड़ितः ।

॥ आस्तीकउवाच ॥ न सन्तापस्त्वया कार्य्यः कथञ्चित्पन्नगोत्तम । प्रदीप्ताग्नेः समुत्पन्नं नाशयिष्यामि ते भयं । १०९०

ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसं । नाशयिष्यामि माऽत्र त्वं भयं कार्षीः कथञ्चन ।

॥ सौति रुवाच ॥ ततः स वासुकेर्घोरमपनीय मनोज्वरं । आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशं ।

जनमेजयस्य तं यज्ञं सर्व्वैः समुदितं गुणैः । मोक्षाय भुजगेन्द्राणामास्तीको द्विजसत्तमः ।

स गत्वाऽपश्यदास्तीको यज्ञायतनमुत्तमं । वृतं सदस्यैर्बहुभिः सूर्य्यवह्निसमप्रभैः ।

स तत्र वारितो द्वास्स्थैः प्रविशन्द्विजसत्तमः । अभितुष्टाव तं यज्ञं प्रवेशार्थी परन्तपः । १०९५

स प्राप्य यज्ञायतनं वरिष्ठं द्विजोत्तमः पुण्यकृतां वरिष्ठः । तुष्टाव राजानमनन्तकीर्त्तिमृत्विक्सदस्यांश्च तथैव चाग्निं ।

इत्यादिपर्व्वणि सर्पसत्रे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ आस्तीक उवाच ॥ सोमस्य यज्ञो वरुणस्य यज्ञः प्रजापतेर्यज्ञ आसीत्प्रयागे । तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ।

शक्रस्य यज्ञः शतसंख्य उक्तस्तथाऽपरं तुल्यसंख्यं शतं वै । तथा यज्ञोऽयंतव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ।

यमस्य यज्ञो हरिमेधसश्च यथा यज्ञो रन्तिदेवस्य राज्ञः । तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ।

गयस्य यज्ञः शशविन्दोश्च राज्ञो यज्ञस्तथा वैश्रवणस्य राज्ञः । तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः । ११००

नृगस्य यज्ञस्त्वजमीढस्य चासीद्यथा यज्ञो दाशरथेश्च राज्ञः । तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ।

यज्ञः श्रुतो दिविदेवस्य सूनोर्युधिष्ठिरस्याजमीढस्य राज्ञः । तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ।

कृष्णस्य यज्ञः सत्यवत्याः सुतस्य स्वयञ्च कर्म्म प्रचकार यत्र । तथा यज्ञोऽयं तव भारताग्र्य पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ।

इमे च ते सूर्य्यसमानवर्चसः समासते वृत्रहणः क्रतुं यथा। नैषां ज्ञातुं विद्यते ज्ञानमद्य दत्तं येभ्यो न प्रणश्येत्कदाचित्
ऋत्विक्समो नास्ति लोकेषु चैव द्वैपायनेनेति विनिश्चितं मे। एतस्य शिष्या हि क्षितिं सञ्चरन्ति सर्व्वर्त्विजः कर्म्मसु स्वेषु
दक्षाः। ११०५

विभावसुश्चित्रभानुर्महात्मा हिरण्यरेता हुतभुक्कृष्णवर्त्मा। प्रदक्षिणावर्त्तशिखः प्रदीप्तो हव्यं तवेदं हुतभुग्वष्टि देवान्।
नेह त्वदन्यो विद्यते जीवलोके समो नृपः पालयिता प्रजानां। धृत्या च ते प्रीतमनाः सदाऽहं त्वं वा वरुणो धर्म्मराजो यमो वा।
शक्रः साक्षाद्वज्रपाणिर्य्यथेह त्राता लोकेऽस्मिंस्त्वं तथेह प्रजानां। मतस्त्वं नः पुरुषेन्द्रेह लोके न च त्वदन्यो भूपतिरस्ति यज्ञे।
खट्वाङ्गनाभागदिलीपकल्प ययातिमान्धातृसमप्रभाव। आदित्यतेजःप्रतिमानतेजा भीष्मो यथा राजसि सुव्रतस्त्वं।
वाल्मीकिवत्ते निभृतं स्ववीर्य्यं वशिष्ठवत्ते नियतश्च कोपः। प्रभुत्वमिन्द्रत्वसमं मतं मे द्युतिश्च नारायणवद्विभाति। १११०
यमो यथा धर्म्मविनिश्चयज्ञः कृष्णो यथा सर्व्वगुणोपपन्नः। श्रियां निवासोऽसि यथा वसूनां निधानभूतोऽसि तथा क्रतूनां।
दम्भोद्भवेनासि समो बलेन रामो यथा शास्त्रविदस्त्रविच्च। और्व्वत्रिताभ्यामसि तुल्यतेजा दुष्प्रेक्षणीयोऽसि भगीरथेन।
॥ सौतिरुवाच ॥ एवं स्तुताः सर्व्व एव प्रसन्ना राजा सदस्या ऋत्विजो हव्यवाहः। तेषां दृष्ट्वा भावितानीङ्गितानि प्रोवाच राजा
जनमेजयोऽथ।

इत्यादिपर्व्वणि सर्प्पसत्रे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ जनमेजय उवाच ॥ बालोऽप्ययं स्थविर इवावभाषते नायं बालः स्थविरोऽयं मतो मे। इच्छाम्यहं वरमस्मै प्रदातुं तन्मे विप्राः
संविदध्वं यथावत्।
॥ सदस्या ऊचुः ॥ बालोऽपि विप्रो मान्य एवेह राज्ञां विद्वान्यो वै स पुनर्वै यथावत्। सर्व्वान् कामांस्त्वत्त एवार्हतेऽद्य यथा
च नस्तक्षक एति शीघ्रं। १११५
॥ सौतिरुवाच ॥ व्याहर्तुकामे वरदे नृपे द्विजं वरं वृणीष्वेति ततोऽभ्युवाच। होता वाक्यं नातिहृष्टान्तरात्मा कर्म्मण्यस्मिंस्तक्षको
नैति तावत्।
॥ जनमेजय उवाच ॥ यथा चेदं कर्म्म समाप्यते मे यथा च वै तक्षक एति शीघ्रं। तथा भवन्तः प्रयतन्तु सर्व्वे परं शक्त्या स हि मे
विद्विषाणः।
॥ ऋत्विज ऊचुः ॥ यथा शास्त्राणि नः प्राहुर्यथा शंसति पावकः। इन्द्रस्य भवने राजंस्तक्षको भयपीडितः।
यथा सूतो लोहिताक्षो महात्मा पौराणिको वेदितवान्पुरस्तात्। स राजानं प्राह पृष्टस्तदानीं यथाहुर्व्विप्रास्तद्वदेतन्नृदेव।
पुराणमागम्य ततो ब्रवीम्यहं दत्तं तस्मै वरमिन्द्रेण राजन्। वसेह त्वं मत्सकाशे सुगुप्तो न पावकस्त्वां प्रदहिष्यतीति। ११२०
एतच्छ्रुत्वा दीक्षितस्तप्यमान आस्ते होतारं चोदयन् कर्म्मकाले। होता च यत्तोऽस्याजुहावाथ मन्त्रैरथामरेन्द्रः स्वयमाजगाम।
विमानमारुह्य महानुभावः सर्व्वैर्द्देवैः परिसंस्तूयमानः। बलाहकैश्चाप्यनुगम्यमानो विद्याधरैरप्सरसां गणैश्च।
तस्योत्तरीये निहितः स नागो भयोद्विग्नः शर्म्म नैवाभ्यगच्छत्।
ततो राजा मन्त्रविदोऽब्रवीत्पुनः क्रुद्धो वाक्यं तक्षकस्यान्तमिच्छन्।
॥ जनमेजय उवाच ॥ इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः। तमिन्द्रेणैव सहितं पातयध्वं विभावसौ। ११२५
॥ सौतिरुवाच ॥ जनमेजयेन राज्ञा तु चोदितस्तक्षकं प्रति। होता जुहाव तत्रस्थं तक्षकं पन्नगं तथा।

हूयमाने तथा चैव तक्षकः सपुरन्दरः। आकाशे ददृशे चैव वेगेन व्यथितस्तदा।
पुरन्दरस्तु तं यज्ञं दृष्ट्वोरुभयमाविशत्। हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ।
इन्द्रे गते तु राजेन्द्र तक्षको भयमोहितः। मन्त्रशक्त्या पावकार्चिःसमीपमवशो गतः।
॥ ऋत्विज ऊचुः ॥ वर्त्तते तव राजेन्द्र कर्म्मैतद्विधिवत्प्रभो। अस्मै तु विप्रमुख्याय वरं त्वं दातुमर्हसि। २१३०
॥ जनमेजयउवाच ॥ बालाभिरूपस्य तवाप्रमेय वरं प्रयच्छामि यथानुरूपं। वृणीष्व यत्तेऽभिमतं हृदिस्थितं तत्ते प्रदास्याम्यपि चेददेयं।
॥ ऋत्विजऊचुः ॥ अयमायाति तूर्णं स तक्षकस्ते वशं नृप। श्रूयतेऽस्य महानादो नदतो भैरवं रवं।
नूनं मुक्तो वज्रभृता स नागो भ्रष्टो नाकान्मन्त्रविस्रस्तकायः। घूर्णन्नाकाशे नष्टसंज्ञोऽभ्युपैति तीव्रान्निश्वासान्निश्वसन्पन्नगेन्द्रः।
॥ सौतिरुवाच ॥ पतिष्यमाणे नागेन्द्रे तक्षके जातवेदसि। इदमन्तरमित्येवं तदास्तीकोऽभ्यचोदयत्।
॥आस्तीकउवाच॥ वरं ददासि चेन्मह्यं वृणोमि जनमेजय। सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः। २१३५
एवमुक्तस्तदा तेन ब्रह्मन्पारीक्षितस्तु सः। नातिहृष्टमनाश्चेदमास्तीकं वाक्यमब्रवीत्।
सुवर्णं रजतं गाश्च यच्चान्यन्मन्यसे विभो। तं ते दद्यां वरं विप्र न निवर्त्तेत्क्रतुर्मम।
॥ आस्तीक उवाच ॥ सुवर्णं रजतं गाश्च न त्वां राजन्वृणोम्यहं। सत्रं ते विरमत्वेतत्स्वस्ति मातृकुलस्य नः।
॥ सौतिरुवाच ॥ आस्तीकेनैवमुक्तस्तु राजा पारीक्षितस्तदा। पुनःपुनरुवाचेदमास्तीकं वदतांवरः।
अन्यं वरय भद्रं ते वरं द्विजवरोत्तम। अयाचत न चाप्यन्यं वरं स भृगुनन्दन। २१४०
ततो वेदविदस्तात सदस्याः सर्व्व एव तं। राजानमूचुः सहिता लभतां ब्राह्मणो वरं।
इत्यादिपर्व्वण्यास्तीके आस्तीकवरप्रदानं षट्पञ्चाशोऽध्यायः॥ ५६ ॥
॥ शौनक उवाच ॥ ये सर्प्पाः सर्पसत्रेऽस्मिन्पतिता हव्यवाहने। तेषां नामानि सर्व्वेषां श्रोतुमिच्छामि सूतज।
॥ सौतिरुवाच ॥ सहस्राणि बहून्यस्मिन्प्रयुतान्यर्वुदानि च। न शक्यं परिसंख्यातुं बहुत्वाद्द्विजसत्तम।
यथा स्मृति तु नामानि पन्नगानां निबोध मे। उच्यमानानि मुख्यानां हुतानां जातवेदसि।
वासुकेः कुलजातांस्तु प्राधान्येन निबोध मे। नीलरक्तान्सितान्घोरान्महाकायान्विषोल्बणान्। २१४५
अवशान्मातृवाग्दण्डपीडितान्कृपणान् हुतान्। कोटिशो मानसः पूर्णः शलः पालो हलीमकः।
पिच्छलः कौणपश्चक्रः कालवेगः प्रकालनः। हिरण्यबाहुः शरणः कक्षकः कालदन्तकः।
एते वासुकिजा नागाः प्रविष्टा हव्यवाहने। अन्ये च बहवो विप्र तथा वै कुलसम्भवाः। प्रदीप्ताग्नौ हुताः सर्व्वे घोररूपा महाबलाः।
तक्षकस्य कुले जाता प्रवक्ष्यामि निबोध तान्। पुच्छाण्डको मण्डलकःपिण्डसेक्ता रभेणकः।
उच्छिखः शरभो भङ्गो बिल्वतेजा विरोहणः। शिली शलकरो मूकः सुकुमारः प्रवेपनः। २१५०
मुद्गरः शिशुरोमा च सुरोमा च महाहनुः। एते तक्षकजा नागाः प्रविष्टा हव्यवाहनं।
पारावतः पारिजातः पाण्डरो हरिणः कृशः। विहङ्गः शरभो मेदः प्रमोदः संहतापनः।
ऐरावतकुलादेते प्रविष्टा हव्यवाहनं। कौरव्यकुलजान्नागाञ्छृणु मे त्वं द्विजोत्तम।

एरकः कुण्डलो वेणी वेणीस्कन्धः कुमारकः। बाहुकः शृङ्गवेरश्च धूर्त्तकः प्रातरातकौ।
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यवाहनं। धृतराष्ट्रकुले जातान् शृणु नागान्यथातथं। २१५५
कीर्त्त्यमानान्मया ब्रह्मन्वातवेगान् विषोल्बणान्। शङ्कुकर्णः पिठरकः कुठारमुखसेचकौ।
पूर्णाङ्गदः पूर्णमुखः प्रहासः शकुनिर्दरिः। अमाहठः कामठकः सुषेणो मानसो व्ययः।
भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोद्रपारकः। ऋषभो वेगवान्नागः पिण्डारकमहाहनू।
रक्ताङ्गः सर्व्वसारङ्गः समृद्धपटवासकौ। वराहको वीरणकः सुचित्रश्चित्रवेगिकः।
पराशरस्तरुणको मणिस्कन्धस्तथारुणिः। इति नागा मया ब्रह्मन् कीर्त्तिताः कीर्त्तिवर्द्धनाः। २१६०
प्राधान्येन बहुत्वात्तु न सर्व्वे परिकीर्त्तिताः। एतेषां प्रसवो यश्च प्रसवस्य च सन्ततिः।
न शक्यं परिसंख्यातुं ये दीप्तं पावकं गताः। त्रिशीर्षाः सप्तशीर्षाश्च दशशीर्षास्तथाऽपरे।
कालानलविषा घोरा हुताः शतसहस्रशः। महाकाया महावेगाः शैलशृङ्गसमुच्छ्रयाः।
योजनायामविस्तारा द्वियोजनसमायताः। कामरूपाः कामबला दीप्तानलविषोल्बणाः।
दग्धास्तत्र महासत्रे ब्रह्मदण्डनिपीडिताः। २१६५
इत्यादिपर्व्वण्यास्तीके सप्तपञ्चाशोऽध्यायः॥ ५७॥
॥ सौतिरुवाच॥ इदमत्यद्भुतं चान्यदास्तीकस्यानुशुश्रुम। तथा वरैश्छन्द्यमाने राज्ञा पारीक्षितेन हि।
इन्द्रहस्ताच्च्युतो नागः खएव यदतिष्ठत। ततश्चिन्तापरो राजा बभूव जनमेजयः।
हूयमाने भृशन्दीप्ते विधिवद्वसुरेतसि। न स्म स प्रापतद्वह्नौ तक्षको भयपीडितः।
॥ शौनकउवाच॥ किं सूत तेषां विप्राणां मन्त्रग्रामो मनीषिणां। न प्रत्यभात्तदाऽग्नौ यत्र पपात न तक्षकः।
॥ सौतिरुवाच॥ तमिन्द्रहस्ताद्विस्रस्तं विसंज्ञं पन्नगोत्तमं। आस्तीकस्तिष्ठतिष्ठेति वाचस्तिस्रोऽभ्युदीरयत्। २१७०
वितस्थे सोऽन्तरीक्षे च हृदयेन विदूयता। यथा तिष्ठति वै कश्चित् खञ्च गांचान्तरा नरः।
ततो राजाऽब्रवीद्वाक्यं सदस्यैश्चोदितो भृशं। काममेतद्भवत्वेवं यथास्तीकस्य भाषितं।
समाप्यतामिदं कर्म्म पन्नगाः सन्त्वनामयाः। प्रीयतामयमास्तीकः सत्यं सूतवचोऽस्तु तत्।
ततो हलहलाशब्दः प्रीतिदः समजायत। आस्तीकस्य वरे दत्ते तथैवोपरराम च।
स यज्ञः पाण्डवेयस्य राज्ञः पारीक्षितस्य ह। प्रीतिमांश्चाभवद्राजा भारतो जनमेजयः। २१७५
ऋत्विग्भ्यः ससदस्येभ्यो ये तत्रासन्समागताः। तेभ्यश्च प्रददौ वित्तं शतशोऽथ सहस्रशः।
लोहिताक्षाय सूताय तथा स्थपतये विभुः। येनोक्तं तस्य तत्राग्रे सर्प्पसत्रनिवर्त्तने।
निमित्तं ब्राह्मण इति तस्मै वित्तं ददौ बहु। दत्वा द्रव्यं यथान्यायं भोजनाच्छादनान्वितं।
प्रीतस्तस्मै नरपतिरप्रमेयपराक्रमः। ततश्चकारावभृथं विधिदृष्टेन कर्म्मणा।
आस्तीकं प्रेषयामास गृहानेव सुसंस्कृतं। राजा प्रीतमनाः प्रीतं कृतकृत्यं मनीषिणं। २१८०
पुनरागमनं कार्य्यमिति चैनं वचोऽब्रवीत्। भविष्यसि सदस्यो मे वाजिमेधे महाक्रतौ।
तथेत्युक्त्वा प्रदुद्राव तदास्तीको मुदायुतः। कृत्वा स्वकार्य्यमतुलं तोषयित्वा च पार्थिवं।

स गत्वा परमप्रीतो मातुलं मातरञ्च तां। अभिगम्योपसंगृह्य यथावृत्तं न्यवेदयत्।

॥ सौतिरुवाच ॥ एतच्छ्रुत्वा प्रीयमाणाः समेता ये तत्रासन् पन्नगा वीतमोहाः। आस्तीके वै प्रीतिमन्तो बभूवुरूचुश्चैनं वरमिष्टं वृणीष्व।

भूयोभूयः सर्व्वशस्तेऽब्रुवंस्तं किं ते प्रियं करवामाद्य विद्वन्। प्रीता वयं मोक्षिताश्चैव सर्व्वे कामं किं ते करवामाद्य वत्स। २१८५

॥ आस्तीक उवाच ॥ सायं प्रातर्य्ये प्रसन्नात्मरूपा लोके विप्रा मानवा ये परेऽपि। धर्म्माख्यानं ये पठेयुर्म्ममेदं तेषां युष्मन्नैव किञ्चिद्भयं स्यात्।

तैश्चाप्युक्तो भागिनेयः प्रसन्नैरेतत्सत्यं काममेवं वरं ते। प्रीत्या युक्ताः कामितं सर्व्वशस्ते कर्त्तारः स्म प्रवणा भागिनेय।

असितं चार्त्तिमन्तञ्च सुनीथं चापि यः स्मरेत्। दिवावा यदि रात्रौ नास्य सर्पभयं भवेत्।

यो जरत्कारुणा जातो जरत्कारौ महायशाः। आस्तीकः सर्पसत्रे वः पन्नगान्योऽभ्यरक्षत। तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ।

सर्पापसर्प भद्रं ते गच्छ सर्प महाविष। जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर। २१९०

आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्त्तते। शतधा भिद्यते मूर्द्ध्नि शिंशवृक्षफलं यथा।

॥ सूतउवाच ॥ स एवमुक्तस्तदा द्विजेन्द्रः समागतैस्तैर्भुजगेन्द्रमुख्यैः। संप्राप्य प्रीतिं विपुलां महात्मा ततोमनोगमनायाथ दध्रे।

मोक्षयित्वा तु भुजगान्सर्पसत्राद्द्विजोत्तमः। जगाम काले धर्म्मात्मा दिष्टान्तं पुत्रपौत्रवान्।

इत्याख्यानं मयास्तीकं यथावत्तव कीर्त्तितं। यत्कीर्त्तयित्वा सर्पेभ्यो न भयं विद्यते क्वचित्।

यथा कथितवान् ब्रह्मन् प्रमतिः पूर्व्वजस्तव। पुत्राय रुरवे प्रीतः पृच्छते भार्गवोत्तम। २१९५

यद्वाक्यं श्रुतवांश्चाहं तथा च कथितं मया। आस्तीकस्य कवेर्व्विप्र श्रीमच्चरितमादितः।

श्रुत्वा धर्म्मिष्ठमाख्यानमास्तीकं पुण्यवर्द्धनं। यन्मां त्वं पृष्टवान् ब्रह्मन् श्रुत्वा डुण्डुभभाषितं। व्येतु ते सुमहद्ब्रह्मन् कौतूहलमरिन्दम।

इत्यादिपर्व्वणि सर्पसत्रे समाप्तं अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## अथादिवंशावतारणपर्व्व ॥ ६ ॥

॥ शौनक उवाच ॥ भृगुवंशात्प्रभृत्येव त्वया मे कीर्त्तितं महत्। आख्यानमखिलं तात सौते प्रीतोऽस्मि तेन ते।

वक्ष्यामि चैव भूयस्त्वां यथावत्सूतनन्दन। याः कथा व्याससम्पन्नास्ताश्च भूयो विचक्ष्व मे।

तस्मिन्परमदुष्पारे सर्पसत्रे महात्मनां। कर्म्मान्तरेषु यज्ञस्य सदस्यानां तथाऽध्वरे। २२००

या बभूवुः कथाश्चित्रा येष्वर्थेषु यथातथं। त्वत्त इच्छामहे श्रोतुं सौते त्वं वै प्रवक्ष्य नः।

॥ सौतिरुवाच ॥ कर्म्मान्तरेष्वकथयन् द्विजा वेदाश्रयाः कथाः। व्यासस्त्वकथयच्चित्रमाख्यानं भारतं महत्।

॥ शौनकउवाच ॥ महाभारतमाख्यानं पाण्डवानां यशस्करं। जनमेजयेन पृष्टः सन् कृष्णद्वैपायनस्तदा।

श्रावयामास विधिवत्तदा कर्म्मान्तरेषु सः। तामहं विधिवत्पुण्यां श्रोतुमिच्छामि वै कथां।

मनः सागरसम्भूतां महर्षेर्भावितात्मनः। कथयस्व सतां श्रेष्ठ नहि तृप्यामि सूतज। २२०५

॥ सौतिरुवाच ॥ हन्त ते कथयिष्यामि महदाख्यानमुत्तमं। कृष्णद्वैपायनमतं महाभारतमादितः।
शृणु सर्व्वमशेषेण कथ्यमानं मया द्विज। शंसितुं तन्महान्हर्षो ममापीह प्रवर्त्तते।
इत्यादिपर्व्वण्यादिवंशावतारणपर्व्वणि कथाबन्ध एकोनषष्टितमोऽध्यायः।५९।
॥ सौतिरुवाच ॥ श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयं। अभ्यगच्छदृषिर्व्विद्वान् कृष्णद्वैपायनस्तदा।
जनयामास यं काली शक्तेः पुत्रात्पराशरात्। कन्यैव यमुनाद्वीपे पाण्डवानां पितामहं।
जातमात्रश्च यः सद्य इष्टादेहमवीवृधत्। वेदांश्चाधिजगे साङ्गान्सेतिहासान्महायशाः। २२१०
यन्नैति तपसा कश्चिन्न वेदाध्ययनेन च। न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना।
विव्यासैकं चतुर्द्धा यो वेदं वेदविदांवरः। परावरज्ञो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः।
यः पाण्डुं धृतराष्ट्रञ्च विदुरं चाप्यजीजनत्। शान्तनोः सन्ततिं तन्वन् पुण्यकीर्त्तिर्महायशाः।
जनमेजयस्य राजर्षेः स महात्मा सदस्तथा। विवेश सहितः शिष्यैर्व्वेदवेदाङ्गपारगैः।
तत्र राजानमासीनं ददर्श जनमेजयं। वृतं सदस्यैर्ब्बहुभिर्द्देवैरिव पुरन्दरं। २२१५
तथा मूर्द्धाभिषिक्तैश्च नानाजनपदेश्वरैः। ऋत्विग्भिर्ब्रह्मकल्पैश्च कुशलैर्यज्ञसंस्तरे।
जनमेजयस्तु राजर्षिं दृष्ट्वा तमृषिमागतं। सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः।
काञ्चनं विष्टरं तस्मै सदस्यानुमतः प्रभुः। आसनं कल्पयामास यथा शक्रो बृहस्पतेः।
तत्रोपविष्टं वरदं देवर्षिगणपूजितं। पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्म्मणा।
पाद्यमाचमनीयञ्च अर्घ्यं गाञ्च विधानतः। पितामहाय कृष्णाय तदर्हाय न्यवेदयत्। २२२०
प्रतिगृह्य तु तां पूजां पाण्डवाज्जनमेजयात्। गाञ्चैव समनुज्ञाप्य व्यासः प्रीतोऽभवत्तदा। तथा च पूजयित्वा तं प्रणया
त्प्रपितामहं।
उपोपविश्य प्रीतात्मा पर्य्यपृच्छदनामयं। भगवानपि तं दृष्ट्वा कुशलं प्रतिवेद्य च।
सदस्यैः पूजितः सर्व्वैः सदस्यान्प्रत्यपूजयत्। ततस्तु सहितः सर्व्वैः सदस्यैर्जनमेजयः। इदं पश्चाद्द्विजश्रेष्ठ पर्य्यपृच्छत्कृताञ्जलिः।
॥ जनमेजय उवाच ॥ कुरूणां पाण्डवानाञ्च भवान् प्रत्यक्षदर्शिवान्। तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज।
कथं समभवद्भेदस्तेषामक्लिष्टकर्म्मणां। तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत्। २२२५
पितामहानां सर्व्वेषां दैवेनाविष्टचेतसां। कार्त्स्न्येनैतत्समाचक्ष्व यथावृत्तं द्विजोत्तम।
॥ सौतिरुवाच ॥ तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा। शशास शिष्यमासीनं वैशम्पायनमन्तिके।
॥ व्यासउवाच ॥ कुरूणां पाण्डवानाञ्च यथा भेदोऽभवत्पुरा। तदस्मै सर्व्वमाचक्ष्व यन्मत्तः श्रुतवानसि।
गुरोर्व्वचनमाज्ञाय स तु विप्रर्षभस्तदा। आचचक्षे ततः सर्व्वमितिहासं पुरातनं।
राज्ञे तस्मै सदस्येभ्यः पार्थिवेभ्यश्च सर्व्वशः। भेदं सर्व्वविनाशञ्च कुरुपाण्डवयोस्तदा। २२३०
इत्यादिपर्व्वण्यादिवंशावतारणपर्व्वणि कथाऽनुबन्धे षष्टितमोऽध्यायः।६०।
॥ वैशम्पायनउवाच ॥ गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः। संपूज्य च द्विजान्सर्व्वांस्तथाऽन्यान् विदुषो जनान्।
महर्षेर्व्विश्रुतस्येह सर्व्वलोकेषु धीमतः। प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यास्य महात्मनः।

श्रोतुं पात्रञ्च राजंस्त्वं प्राप्येमां भारतीं कथां। गुरोर्व्वक्त्रपरिस्पन्दो मनः प्रोत्सहतीव मे।
शृणु राजन्यथा भेदः कुरुपाण्डवयोरभूत्। राज्यार्थे द्यूतसम्भूतो वनवासस्तथैव च।
यथा च युद्धमभवत्पृथिवीक्षयकारकं। तत्तेऽहं कथयिष्यामि पृच्छते भरतर्षभ। २२३५
मृते पितरि ते वीरा वनादेत्य स्वमन्दिरं। न चिरादेव विद्वांसो वेदे धनुषि चाभवन्।
तांस्तथा सत्त्ववीर्य्यौजःसम्पन्नान्पौरसम्मतान्। नामृष्यन् कुरवो दृष्ट्वा पाण्डवाञ्छ्रीयशोभृतः।
ततो दुर्य्योधनः क्रूरः कर्णश्च सहसौबलः। तेषां निग्रहनिर्व्वासान् विविधांस्ते समारभन्।
ततो दुर्य्योधनः क्रूरः कणिकस्य मते स्थितः। पाण्डवान्विविधोपायै राज्यहेतोरपीडयत्।
ददावथ विषं पापो भीमाय धृतराष्ट्रजः। जरयामास तद्वीरः सहान्नेन वृकोदरः। २२४०
प्रमाणकोट्यां संसुप्तं पुनर्ब्बद्ध्वा वृकोदरं। तोयेषु भीमं गङ्गायाः प्रक्षिप्य पुरमाव्रजत्।
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनं। उदतिष्ठन्महाबाहुर्भीमसेनो गतव्यथः।
आशीविषैः कृष्णसर्प्पैः सुप्तं चैनमदंशयत्। सर्व्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा।
तेषान्तु विप्रकारेषु तेषु तेषु महामतिः। मोक्षणे प्रतिकारे च विदुरोऽवहितोऽभवत्।
स्वर्गस्थो जीवलोकस्य यथा शक्रः सुखावहः। पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः। २२४५
यदा तु विविधोपायैः संवृतैर्विवृतैरपि। नाशक्नोद्विनिहन्तुं तान्दैवभाव्यर्थरक्षितान्।
ततः सम्मन्त्र्य सचिवैर्वृषदुःशासनादिभिः। धृतराष्ट्रमनुज्ञाप्य जातुषं गृहमादिशत्।
सुतप्रियैषी तान्राजा पाण्डवानम्बिकासुतः। ततो विवासयामास राज्यभोगबुभुक्षया।
ते प्रातिष्ठन्त सहिता नगरान्नागसाह्वयात्। प्रस्थाने चाभवन्मन्त्री क्षत्ता तेषां महात्मनां।
तेन मुक्ता जतुगृहान्निशीथे प्राद्रवन्वनं। ततः सम्प्राप्य कौन्तेया नगरं वारणावतं। २२५०
न्यवसन्त महात्मानो मात्रा सह परन्तपाः। धृतराष्ट्रेण चाज्ञप्ता उषिता जातुषे गृहे।
पुरोचनात् रक्षमाणाः संवत्सरमतन्द्रिताः। सुरुङ्गां कारयित्वा तु विदुरेण प्रचोदिताः। आदीप्य जातुषं वेश्म दग्ध्वा चैव पुरोचनं।
प्राद्रवन्भयसंविग्ना मात्रा सह परन्तपाः। ददृशुर्दारुणं रक्षो हिडिम्बं वननिर्झरे।
हत्वा च तं राक्षसेन्द्रं भीताः समवबोधनात्। निशि सम्प्राद्रवन्पार्था धार्त्तराष्ट्रभयार्द्दिताः।
प्राप्ता हिडिम्बा भीमेन यत्र जातो घटोत्कचः। एकचक्रां ततो गत्वा पाण्डवाः संशितव्रताः। २२५५
वेदाध्ययनसम्पन्नास्तेऽभवन् ब्रह्मचारिणः। ते तत्र नियताः कालं कञ्चिदूषुर्नरर्षभाः।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने। तत्राससाद क्षुधितं पुरुषादं वृकोदरः।
भीमसेनो महाबाहुर्वकं नाम महाबलं। तञ्चापि पुरुषव्याघ्रो बाहुवीर्य्येण पाण्डवः।
निहत्य तरसा वीरो नागरान्पर्य्यसान्त्वयत्। ततस्ते शुश्रुवुः कृष्णां पाञ्चालेषु स्वयम्वरां।
श्रुत्वा चैवाभ्यगच्छन्त गत्वा चैवालभन्त तां। ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः। २२६०
विदिता हास्तिनपुरं प्रत्याजग्मुररिन्दमाः। त उक्ता धृतराष्ट्रेण राज्ञा शान्तनवेन च।

भ्रातृभिर्विग्रहस्तात कथं वो न भवेदिति। अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनुचिन्तितः।
तस्माज्जनपदोपेतं सुविभक्तमहापथं। वासाय खाण्डवप्रस्थं व्रजध्वं गतमत्सराः।
तयोस्ते वचनाज्जग्मुः सह सर्व्वैः सुहृज्जनैः। नगरं खाण्डवप्रस्थं रत्नान्यादाय सर्व्वशः।
तत्र ते न्यवसन्पार्थाः संवत्सरगणान्बहून्। वशे शस्त्रप्रतापेन कुर्व्वन्तोऽन्यान्महीभृतः। २२६५
एवं धर्म्मप्रधानास्ते सत्यव्रतपरायणाः। अप्रमत्तोत्थिताः क्षान्ताः प्रतपन्तोऽहितान्बहून्।
अजयद्भीमसेनस्तु दिशं प्राचीं महायशाः। उदीचीमर्ज्जुनो वीरः प्रतीचीं नकुलस्तथा।
दक्षिणां सहदेवस्तु विजिग्ये परवीरहा। एवं चक्रुरिमां सर्व्वे वशे कृत्स्नां वसुन्धरां।
पञ्चभिः सूर्य्यसङ्काशैः सूर्य्येण च विराजता। षट्सूर्य्येवाभवत्पृथ्वी पाण्डवैः सत्यविक्रमैः।
ततो निमित्ते कस्मिंश्चिद्धर्म्मराजो युधिष्ठिरः। वनं प्रस्थापयामास तेजस्वी सत्यविक्रमः। २२७०
प्राणेभ्योऽपि प्रियतरं भ्रातरं सव्यसाचिनं। अर्ज्जुनं पुरुषव्याघ्रं स्थिरात्मानं गुणैर्युतं।
स वै संवत्सरं पूर्णं मासं चैकं वनेऽवसत्। ततो गच्छद्धृषीकेशं द्वारवत्यां कदाचन।
लब्धवांस्तत्र बीभत्सुर्भार्य्यां राजीवलोचनां। अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीं।
सा शचीव महेन्द्रेण श्रीः कृष्णेनेव सङ्गता। सुभद्रा युयुजे प्रीत्या पाण्डवेनार्ज्जुनेन ह।
अतर्पयच्च कौन्तेयः खाण्डवे हव्यवाहनं। बीभत्सुर्वासुदेवेन सहितो नृपसत्तम। २२७५
नातिभारो हि पार्थस्य केशवेन सहाभवत्। व्यवसायसहायस्य विष्णोः शत्रुवधेष्विव।
पार्थायाग्निर्ददौ चापि गाण्डीवं धनुरुत्तमं। इषुधी चाक्षयैर्बाणैरथञ्च कपिलक्षणं।
मोक्षयामास बीभत्सुर्मयं यत्र महासुरं। स चकार सभां दिव्यां सर्व्वरत्नसमन्वितां।
तस्यां दुर्य्योधनो मन्दो लोभं चक्रे सुदुर्म्मतिः। ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरं। वनं प्रस्थापयामास सप्तवर्षाणि पञ्च च।
अज्ञातमेकं राष्ट्रे च ततो वर्षं त्रयोदशं। ततश्चतुर्द्दशे वर्षे याचमानाः स्वकं वसु। २२८०
नालभन्त महाराज ततो युद्धमवर्त्तत। ततस्ते क्षत्रमुत्साद्य हत्वा दुर्य्योधनं नृपं।
राज्यं विहतभूयिष्ठं प्रत्यपद्यन्त पाण्डवाः। एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्म्मणां। भेदो राज्यविनाशाय जयस्य जयतांवर।
इत्यादिपर्व्वण्यादिवंशावतारणपर्व्वणि भारतसूत्रमेकषष्ठोऽध्यायः ।६१।
॥ जनमेजयउवाच ॥ कथितं वै समासेन त्वया सर्व्वं द्विजोत्तम। महाभारतमाख्यानं कुरूणां चरितं महत्।
कथां त्वमघविध्वंसीं कथयस्व तपोधन। विस्तरश्रवणे जातं कौतूहलमतीव मे।
स भवान् विस्तरेणेमां पुनराख्यातुमर्हति। नहि तृप्यामि पूर्व्वेषां शृण्वानश्चरितं महत्। २२८५
न तत्कारणमल्पं वै धर्म्मज्ञा यत्र पाण्डवाः। अवध्यान्सर्व्वशो जघ्नुः प्रशस्यन्ते च मानवैः।
किमर्थं ते नरव्याघ्राः शक्ताः सन्तो ह्यनागसः। प्रयुज्यमानान्संक्लेशान् क्षान्तवन्तो दुरात्मनां।
कथं नागायुतप्राणो बाहुशाली वृकोदरः। परिक्लिश्यन्नपि क्रोधं धृतवान्वै द्विजोत्तम।
कथं सा द्रौपदी कृष्णा क्लिश्यमाना दुरात्मभिः। शक्ता सती धार्त्तराष्ट्रान्नादहत्क्रोधचक्षुषा।
कथं व्यसनिनं द्यूते पार्थौ माद्रीसुतौ तदा। अन्वयुस्ते नरव्याघ्रा बाध्यमाना दुरात्मभिः। २२९०

कथं धर्मभृतां श्रेष्ठः सुतो धर्मस्य धर्मवित्। अनर्हः परमं क्लेशं सोढवान्स युधिष्ठिरः।
कथञ्च बहुलाः सेनाः पाण्डवः कृष्णसारथिः। अस्त्रेनैकोऽनयत्सर्वाः पितृलोकं धनञ्जयः।
एतदाचक्ष्व मे सर्व्वं यथावृत्तं तपोधन। यद्यच्च कृतवन्तस्ते तत्र तत्र महारथाः।
॥ वैशम्पायन उवाच॥ क्षणं कुरु महाराज विपुलोऽयमनुक्रमः। पुण्याख्यानस्य वक्तव्यः कृष्णद्वैपायनेरितः।
महर्षेः सर्व्वलोकेषु पूजितस्य महात्मनः। प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः। २२९५
इदं शतसहस्रंहि श्लोकानां पुण्यकर्म्मणां। सत्यवत्यात्मजेनेह व्याख्यातममितौजसा।
य इदं श्रावयेद्विद्वान्ये चेदं शृणुयुर्नराः। ते ब्रह्मणः स्थानमेत्य प्राप्नुयुर्द्देवतुल्यतां।
इदं हि वेदैः समितं पवित्रमपि चोत्तमं। श्रव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतं।
अस्मिन्नर्थश्च कामश्च निखिलेनोपदिश्यते। इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी।
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान्। कार्ष्णं वेदमिमं विद्वान्श्रावयित्वाऽर्थमश्नुते। २३००
भ्रूणहत्याकृतं चापि पापं जह्यादसंशयं। इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः।
मुच्यते सर्व्वपापेभ्यो राहुणा चन्द्रमा यथा। जयोनामेतिहासोऽयं श्रोतव्यो विजिगीषुणा।
महीं विजयते राजा शत्रूंश्चापि पराजयेत्। इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत्।
महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा। वीरं जनयते पुत्रं कन्यां वा राज्यभागिनीं।
धर्म्मशास्त्रमिदं पुण्यमर्थशास्त्रमिदं परं। मोक्षशास्त्रमिदं पुण्यं व्यासेनामितबुद्धिना। २३०५
सम्प्रत्याचक्षते चेदं तथा श्रोष्यन्ति चापरे। पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः।
शरीरेण कृतं पापं वाचा च मनसैव च। सर्व्वं स त्यजति क्षिप्रं यइदं शृणुयान्नरः।
भरतानां महज्जन्म शृण्वतामनसूयतां। नास्ति व्याधिभयं तेषां परलोकभयं कुतः।
धन्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यं तथैव च। कृष्णद्वैपायनेनेदं कृतं पुण्यं चिकीर्षुणा।
कीर्त्तिं प्रथयता लोके पाण्डवानां महात्मनां। अन्येषां क्षत्रियाणाञ्च भूरिद्रविणतेजसां। २३१०
सर्व्वविद्यावदातानां लोके प्रथितकर्म्मणां। यइदं मानवो लोके पुण्यार्थे ब्राह्मणान् शुचीन्।
श्रावयेत महापुण्यं तस्य धर्म्मः सनातनः। कुरूणां प्रथितं वंशं कीर्त्तयन्सततं शुचिः।
वंशमाप्नोति विपुलं लोके पूज्यतमो भवेत्। योऽधीते भारतं पुण्यं ब्राह्मणो नियतव्रतः। चतुरो वार्षिकान्मासान्सर्व्वपापैः
प्रमुच्यते।
विज्ञेयः स च वेदानां पारगो भारतं पठन्। देवा राजर्षयो ह्यत्र पुण्या ब्रह्मर्षयस्तथा।
कीर्त्त्यन्ते धूतपाप्मानः कीर्त्त्यते केशवस्तथा। भगवांश्चापि देवेशो यत्र देवी च कीर्त्त्यते। २३१५
अनेकजननो यत्र कार्त्तिकेयस्य सम्भवः। ब्राह्मणानां गवाञ्चैव माहात्म्यं यत्र कीर्त्त्यते। सर्व्वश्रुतिसमूहोऽयं श्रोतव्यो
धर्म्मबुद्धिभिः।
य इदं श्रावयेद्विद्वान् ब्राह्मणानिह पर्व्वसु। धूतपाप्मा जितस्वर्गो ब्रह्म गच्छति शाश्वतं।
श्रावयेद्ब्राह्मणान् श्राद्धे यश्चेदं पादमन्ततः। अक्षय्यं तस्य तच्छ्राद्धमुपावर्त्तेत्पितृनिह।

अक्ष्णा यदेनः क्रियते इन्द्रियैर्मनसाऽपि वा। ज्ञानादज्ञानतो वाऽपि प्रकरोति नरश्च यत्। तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते।

भरतानां महज्जन्म महाभारतमुच्यते। निरुक्तमस्य यो वेद सर्व्वपापैः प्रमुच्यते। २३२०

भरतानां यतश्चायमितिहासो महाद्भुतः। महतो ह्येनसो मर्त्त्यान्मोचयेदनुकीर्त्तितः।

त्रिभिर्व्वर्षैर्लब्धकामः कृष्णद्वैपायनो मुनिः। नित्योत्थितः शुचिः शक्तो महाभारतमादितः।

तपो नियममास्थाय कृतमेतन्महर्षिणा। तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदं।

कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथां। श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः।

सर्व्वथा वर्त्तमाना वै न ते शोच्याः कृताकृतैः। नरेण धर्म्मकामेन सर्व्वः श्रोतव्य इत्यपि। २३२५

निखिलेनेतिहासोऽयं ततः सिद्धिमवाप्नुयात्। न तां स्वर्गगतिं प्राप्य तुष्टिं प्राप्नोति मानवः।

यां श्रुत्वैव महापुण्यमितिहासमुपाश्नुते। शृण्वन् श्राद्धः पुण्यशीलः श्रावयंश्चेदमद्भुतं।

नरः फलमवाप्नोति राजसूयाश्वमेधयोः। यथा समुद्रो भगवान्यथा मेरुर्महागिरिः।

उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते। इदं हि वेदैः समितं पवित्रमपि चोत्तमं।

श्रव्यं श्रुतिसुखं चैव पावनं शीलवर्द्धनं। य इदं भारतं राजन्वाचकाय प्रयच्छति। २३३०

तेन सर्व्वा मही दत्ता भवेत्सागरमेखला। पारीक्षितकथां दिव्यां पुण्याय विजयाय च।

कथ्यमानां मया कृत्स्नां शृणु हर्षकरीमिमां। त्रिभिर्व्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः।

महाभारतमाख्यानं कृतवानिदमद्भुतं। धर्म्मे चार्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।

इत्यादिपर्व्वण्यादिवंशावतरणे भारतप्रशंसा द्विषष्टोऽध्यायः॥ ६२ ॥

॥ वैशम्पायन उवाच ॥ राजोपरिचरो नाम धर्म्मनित्यो महीपतिः। बभूव मृगयां गन्तुं सदा किल धृतव्रतः।

स चेदिविषयं रम्यं वसुः पौरवनन्दनः। इन्द्रोपदेशाज्जग्राह रमणीयं महीपतिः। २३३५

तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोनिधिं। देवाः शक्रपुरोगा वै राजानमुपतस्थिरे।

इन्द्रत्वमर्हो राजाऽयं तपसेत्यनुचिन्त्य वै। तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्त्तयन्।

॥ देवा ऊचुः ॥ न संकीर्य्येत धर्म्मोऽयं पृथिव्यां पृथिवीपते। त्वया हि धर्म्मो विधृतः कृत्स्नं धारयते जगत्।

॥ इन्द्र उवाच ॥ लोके धर्म्मं पालय त्वं नित्ययुक्तः समाहितः। धर्म्मयुक्तस्ततो लोकान्पुण्यानाप्स्यसि शाश्वतान्।

दिविष्ठस्य भुविष्ठस्त्वं सखाभूतो मम प्रियः। रम्यः पृथिव्यां यो देशस्तमावस नराधिप। २३४०

पशव्यश्चैव पुण्यश्च प्रभूतधनधान्यवान्। स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः।

अर्थवानेष देशो हि धनरत्नादिभिर्युतः। वसुपूर्णा च वसुधा वस चेदिषु चेदिप।

धर्म्मशीला जनपदाः सुसन्तोषाश्च साधवः। न च मिथ्याप्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा।

न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रताः। युञ्जते धुरि नो गाश्च कृशान्सन्धुक्षयन्ति च।

सर्व्वे वर्णाः स्वधर्म्मस्थाः सदा चेदिषु मानद। न तेऽस्त्यविदितं किञ्चित्त्रिषु लोकेषु यद्भवेत्। २३४५

देवोपभोग्यं दिव्यं त्वामाकाशे स्फाटिकं महत्। आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते।

त्वमेकः सर्व्वमर्त्त्येषु विमानवरमास्थितः। चरिष्यस्युपरिस्थो हि देवो विग्रहवानिव।

ददामि ते वैजयन्तीं मालामम्लानपङ्कजां। धारयिष्यति संग्रामे या त्वां शस्त्रैरविक्षतं।

लक्षणं चैतदेवेह भविता ते नराधिप। इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत्।

॥ वैशम्पायन उवाच ॥ यष्टिञ्च वैणवीं तस्मै ददौ वृत्रनिसूदनः। इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालिनीं। २३५०

तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा। प्रवेशं कारयामास गते सम्वत्सरे तदा।

ततः प्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः। प्रवेशः क्रियते राजन्यथा तेन प्रवर्त्तितः।

अपरेद्युस्तथा तस्याः क्रियतेऽत्युच्छ्रयो नृपैः। अलङ्कृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः।

माल्यदामपरिक्षिप्ता विधिवत्क्रियतेऽपि च। भगवान्पूज्यते चात्र हंसरूपेण चेश्वरः। स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः।

स तां पूजां महेन्द्रस्तु दृष्ट्वा देवः कृतां शुभां। वसुना राजमुख्येन प्रीतिमानब्रवीत्प्रभुः। २३५५

ये पूजयिष्यन्ति नरा राजानश्च महं मम। कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः।

तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति। तथा स्फीतो जनपदो मुदितश्च भविष्यति।

एवं महात्मना तेन महेन्द्रेण नराधिप। वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः।

उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः। भूमिरत्नादिभिर्दानैस्तथा पूज्या भवन्ति ते।

वरदानमहायज्ञैस्तथा शक्रोत्सवेन च। सम्पूजितो मघवता वसुश्चेदीश्वरो नृपः। २३६०

पालयामास धर्म्मेण चेदिस्थः पृथिवीमिमां। इन्द्रप्रीत्या चेदिपतिश्चकारेन्द्रमहं वसुः।

पुत्राश्चास्य महावीर्य्याः पञ्चासन्नमितौजसः। नानाराज्येषु च सुतान्स सम्राडभ्यषेचयत्।

महारथो मागधानां विश्रुतो यो बृहद्रथः। प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनं।

मावेल्लश्च यदुश्चैव राजन्यश्चापराजितः। एते तस्य सुता राजन्राजर्षेर्भूरितेजसः।

न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च। वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः। २३६५

वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तं। उपतस्थुर्महात्मानं गन्धर्व्वाप्सरसो नृपं।

राजोपरिचरेत्येवं नाम तस्याथ विश्रुतं। पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः। अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल।

गिरिं कोलाहलं तन्तु पदा वसुरताडयत्। निश्चक्राम ततस्तेन प्रहारविवरेण सा।

तस्यां नद्यामजनयन्मिथुनं पर्व्वतः स्वयं। तस्मात् विमोक्षणात्प्रीता नदी राज्ञे न्यवेदयत्।

यः पुमानभवत्तत्र तं स राजर्षिसत्तमः। वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः। २३७०

चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः। वसोः पत्नी तु गिरिका कामकालं न्यवेदयत्। ऋतुकालमनुप्राप्ता स्नाता पुंसवने शुचिः।

तदहः पितरश्चैनमूचुर्जहि मृगानिति। तं राजसत्तमं प्रीतास्तदा मतिमताम्वर।

स पितॄणां नियोगन्तमनतिक्रम्य पार्थिवः। चचार मृगयां कामी गिरिकामेव संस्मरन्। अतीव रूपसम्पन्नां साक्षाच्छ्रियमिवापरां।

अशोकैश्चम्पकैश्चूतैरनेकैरतिमुक्तकैः। पुन्नागैः कर्णिकारैश्च वकुलैर्दिव्यपाटलैः।

पाटलैर्नारिकेलैश्च चन्दनैश्चार्जुनैस्तथा। एतैरम्यैर्महावृक्षैः पुण्यैः स्वादुफलैर्युतं। २१७५

कोकिलाकुलसन्नादं मत्तभ्रमरनादितं। वसन्तकाले तत्तस्य वनञ्चैत्ररथोपमं।

मन्मथाभिपरीतात्मा नापश्यद्गिरिकां तदा। अपश्यन्कामसन्तप्तश्चरमाणो यदृच्छया।

पुष्पसंछन्नशाखाग्रं पल्लवैरुपशोभितं। अशोकं स्तवकैश्छन्नं रमणीयमपश्यत।

अधस्तात्तस्य छायायां सुखासीनो नराधिपः। मधुगन्धैश्च संयुक्तं पुष्पगन्धमनोहरं। वायुना प्रेर्य्यमाणस्तु धूम्राय मुदमन्वगात्।

तस्य रेतः प्रचस्कन्द चरतो गहने वने। स्कन्नमात्रञ्च तद्रेतो वृक्षपत्रेण भूमिपः। प्रतिजग्राह मिथ्या मे न पतेद्रेत इत्युत। २१८०

इदं मिथ्यापरिस्कन्नं रेतो मे न भवेदिति। ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः।

सञ्चिन्त्यैवं तदा राजा विचार्य्य च पुनः पुनः। अमोघत्वञ्च विज्ञाय रेतसो राजसत्तमः।

शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य वै। अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगं। सूक्ष्मधर्मार्थतत्त्वज्ञो गत्वा श्येनं ततोऽब्रवीत्।

मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय। गिरिकायाः प्रयच्छाशु तस्या ह्यार्त्तवमद्य वै।

गृहीत्वा तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान्। जवं परममास्थाय प्रदुद्राव विहङ्गमः। २१८५

तमपश्यदथायान्तं श्येनं श्येनस्तथा परः। अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया।

तुण्डयुद्धमथाकाशे तावुभौ सम्प्रचक्रतुः। युध्यतोरपतद्रेतस्तच्चापि यमुनाऽम्भसि।

तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः। मीनभावमनुप्राप्ता बभूव यमुनाचरी।

श्येनपादपरिभ्रष्टं तद्वीर्य्यमथ वासवं। जग्राह तरसोपेत्य साऽद्रिका मत्स्यरूपिणी।

कदाचिदपि मत्सीं तां बबन्धुर्मत्स्यजीविनः। मासे च दशमे प्राप्ते तदा भरतसत्तम। २१९०

उज्जह्रुरुदरात्तस्याः स्त्रीपुमांसञ्च मानुषं। आश्चर्य्यभूतं तद्गत्वा राज्ञेऽथ प्रत्यवेदयन्।

काये मत्स्या इमौ राजन्सम्भूतौ मानुषाविति। तयोः पुमांसं जग्राह राजोपरिचरस्तदा।

स मत्स्यो नाम राजासीद्धार्म्मिकः सत्यसङ्गरः। साऽप्सरा मुक्तशापा च क्षणेन समपद्यत।

या पुरोक्ता भगवता तिर्य्यग्योनिगता शुभा। मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि।

ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना। संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च। २१९५

सिद्धर्षिचारणपथं जगामाथ वराप्सराः। सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी।

राज्ञा दत्ता च दाशाय कन्येयं ते भवत्विति। रूपसत्त्वसमायुक्ता सर्व्वैः समुदिता गुणैः।

सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात्। आसीत्सा मत्स्यगन्धैव कञ्चित्कालं शुचिस्मिता।

शुश्रूषार्थं पितुर्नावं वाहयन्तीं जले च तां। तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः।

अतीव रूपसम्पन्नां सिद्धानामपि काङ्क्षितां। दृष्ट्वैव च स तां धीमांश्चकमे चारुहासिनीं। २२००

दिव्यां तां वासवीं कन्यां रम्भोरुं मुनिपुङ्गवः। सङ्गमं मम कल्याणि कुरुष्वेत्यभ्यभाषत।
साऽब्रवीत्पश्य भगवन् पारावारे स्थितानृषीन्। आवयोर्दृष्टयोरेभिः कथं तु स्यात्समागमः।
एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः। येन देशः स सर्व्वस्तु तमोभूत इवाभवत्।
दृष्ट्वा सृष्टन्तु नीहारं ततस्तं परमर्षिणा। विस्मिता साऽभवत्कन्या व्रीडिता च तपस्विनी।
॥ सत्यवत्युवाच ॥ विद्धि मां भगवन्कन्यां सदा पितृवशानुगां। त्वत्संयोगाच्च दुष्येत कन्याभावो ममानघ। २४०५
कन्यात्वे दूषिते चापि कथं यास्ये द्विजोत्तम। गृहं गन्तुमृषे चाहं धीमन्न स्थातुमुत्सहे।
॥ वैशम्पायन उवाच ॥ एतत्संचिन्त्य भगवन्विधत्स्व यदनन्तरं। एवमुक्तवतीं तान्तु प्रीतिमानृषिसत्तमः।
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि। वृणीष्व च वरं भीरु यं त्वमिच्छसि भामिनि।
वृथा हि न प्रसादो मे भूतपूर्व्वः शुचिस्मिते। एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमं।
स चास्यै भगवान्प्रादान्मनसः काङ्क्षितं भुवि। ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता। २४१०
जगाम सह संसर्गमृषिणाऽद्भुतकर्म्मणा। तेन गन्धवतीत्येवं नामास्याः प्रथितं भुवि।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्त नरा भुवि। तस्या योजनगन्धेति ततो नामापरं स्मृतं।
इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमं। पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा।
जज्ञे च यमुनाद्वीपे पाराशर्य्यः स वीर्य्यवान्। स मातरमनुज्ञाप्य तपस्येव मनो दधे।
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत्। एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात्। २४१५
न्यस्तो द्वीपे स यद्बालस्तस्माद्द्वैपायनः स्मृतः। पादापसारिणं धर्म्मं स तु विद्वान् युगे युगे। आयुः शक्तिञ्च मर्त्यानां युगानुगम
वेक्ष्य च।
ब्रह्मणो ब्राह्मणानाञ्च तथानुग्रहकाङ्क्षया। विव्यास वेदान् यस्मात्स तस्माद्व्यास इति स्मृतः।
वेदानध्यापयामास महाभारतपञ्चमान्। सुमन्तुं जैमिनिं पैलं शुकञ्चैव स्वमात्मजं।
प्रभुर्व्वरिष्ठो वरदो वैशम्पायनमेव च। संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः।
तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः। वसुवीर्य्यात्समभवन्महावीर्य्यो महायशाः। २४२०
वेदार्थविच्च भगवानृषिर्व्विप्रो महायशाः। शूले प्रोतः पुराणर्षिरचौरश्चौरशङ्कया।
अणीमाण्डव्य इत्येवं विख्यातः स महायशाः। स धर्म्ममाहूय पुरा महर्षिरिदमुक्तवान्।
इषीकया मया बाल्याद्विद्धा ह्येका शकुन्तिका। तत्किल्बिषं स्मरे धर्म्म नान्यत्पापमहं स्मरे।
तन्मे सहस्रसमितं कस्मान्नेहाजयत्तपः। गरीयान्ब्राह्मणवधः सर्व्वभूतवधादतः।
तस्मात्त्वं किल्बिषी धर्म्म शूद्रयोनौ जनिष्यसि। तेन शापेन धर्म्मोऽपि शूद्रयोनावजायत। २४२५
विद्वान् विदुररूपेण धार्म्मी तनुरकिल्बिषी। सञ्जयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात्।
सूर्य्याच्च कुन्तिकन्यायां जज्ञे कर्णो महाबलः। सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः।
अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः। वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः।
अनादिनिधनो देवः स कर्त्ता जगतः प्रभुः। अव्यक्तमक्षरं ब्रह्म प्रधानं त्रिगुणात्मकं।

आत्मानमव्ययञ्चैव प्रकृतिं प्रभवं प्रभुं। पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरं। २४३०
अनन्तमचलं देवं हंसं नारायणं प्रभुं। धातारमजमव्यक्तं यमाहुः परमव्ययं।
कैवल्यं निर्गुणं विश्वमनादिमजमव्ययं। पुरुषः स विभुःकर्त्ता सर्व्वभूतपितामहः। धर्म्मसंवर्द्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु।
अस्त्रज्ञौ तु महावीर्य्यौ सर्व्वशास्त्रविशारदौ। सात्यकिः कृतवर्म्मा च नारायणमनुव्रतौ।
सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ। भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्द्धत।
महर्षेरुग्रतपसस्तस्माद्द्रोणो व्यजायत। गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः। २४३५
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः। अश्वत्थामा ततो जज्ञे द्रोणादेव महाबलः।
तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः। वैताने कर्म्मणि तते पावकात्समजायत।
वीरो द्रोणविनाशाय धनुरादाय वीर्य्यवान्। तत्रैव वेद्यां कृष्णाऽपि जज्ञे तेजस्विनी शुभा।
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमं। प्रह्लादशिष्यो नग्नजित्सुबलश्चाभवत्ततः।
तस्य प्रजा धर्म्महन्त्री जज्ञे देवप्रकोपनात्। गन्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा। २४४०
दुर्य्योधनस्य जननी जज्ञातेऽर्थविशारदौ। कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः। क्षेत्रे विचित्रवीर्य्यस्य पाण्डुश्चैव महाबलः।
धर्म्मार्थकुशलो धीमान्मेधावी धूतकल्मषः। विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि।
पाण्डोस्तु जज्ञिरे पञ्च पुत्त्रा देवसमाः पृथक्। द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः।
धर्म्माद्युधिष्ठिरो जज्ञे मारुताच्च वृकोदरः। इन्द्राद्धनञ्जयः श्रीमान्सर्व्वशस्त्रभृतां वरः।
जज्ञाते रूपसम्पन्नावश्विभ्याञ्च यमावपि। नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ। २४४५
तथा पुत्त्रशतं जज्ञे धृतराष्ट्रस्य धीमतः। दुर्य्योधनप्रभृतयो युयुत्सुः करणस्तथा।
ततो दुःशासनश्चैव दुःसहश्चापि भारत। दुर्म्मर्षणो विकर्णश्च चित्रसेनो विविंशतिः।
जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत। वैश्यापुत्त्रो युयुत्सुश्च एकादश महारथाः।
अभिमन्युः सुभद्रायामर्ज्जुनादभ्यजायत। स्वस्रीयो वासुदेवस्य पौत्त्रः पाण्डोर्महात्मनः।
पाण्डवेभ्यो हि पाञ्चाल्यां द्रौपद्यां पञ्च जज्ञिरे। कुमारा रूपसम्पन्नाः सर्व्वशास्त्रविशारदाः। २४५०
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात्। अर्ज्जुनाच्छ्रुतकीर्त्तिस्तु शतानीकस्तु नाकुलिः।
तथैव सहदेवाच्च श्रुतसेनः प्रतापवान्। हिडिम्बायाञ्च भीमेन वने जज्ञे घटोत्कचः।
शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्त्रत्वमागता। यां यक्षः पुरुषं चक्रे स्थूणः प्रियचिकीर्षया।
कुरूणां विग्रहे तस्मिन्समागच्छन्बहून्यथ। राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे।
तेषामपरिमेयानां नामधेयानि सर्व्वशः। न शक्यानि समाख्यातुं वर्षाणामयुतैरपि। एते तु कीर्त्तिता मुख्या यैराख्यान
मिदं ततं। २४५५

इत्यादिपर्व्वण्यादिवंशावतारणे त्रिषष्टोऽध्यायः॥ ६३ ॥

॥ जनमेजय उवाच ॥ य एते कीर्त्तिता ब्रह्मन्ये चान्ये नानुकीर्त्तिताः। सम्यक् तां श्रोतुमिच्छामि राज्ञश्चान्यान्सहस्रशः।
यदर्थमिह संभूता देवकल्पा महारथाः। भुवि तन्मे महाभाग सम्यगाख्यातुमर्हसि।

॥ वैशम्पायन उवाच ॥ रहस्यं खल्विदं राजन्देवानामिति नः श्रुतं । तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा । जामदग्न्यस्तपस्तेपे महेन्द्रे पर्व्वतोत्तमे ।
तदा निःक्षत्रिये लोके भार्गवेण कृते सति । ब्राह्मणान् क्षत्रिया राजन्सुतार्थिन्योऽभिचक्रमुः । २४६०
ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः । ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ।
तेभ्यश्च लेभिरे गर्भं क्षत्रियास्ताः सहस्रशः । ततः सुषुविरे राजन् क्षत्रियान् वीर्य्यवत्तरान् ।
कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये । एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ।
जातं वृद्धञ्च धर्म्मेण सुदीर्घेणायुषाऽन्वितं । चत्वारोऽपि ततो वर्णा बभूवुर्ब्राह्मणोत्तराः ।
अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा । तथैवान्यानि भूतानि तिर्य्यग्योनिगतान्यपि । २४६५
ऋतौ दारांश्च गच्छन्ति तत्तथा भरतर्षभ । ततोऽवर्द्धन्त धर्म्मेण सहस्रशतजीविनः ।
ताः प्रजाः पृथिवीपाल धर्म्मव्रतपरायणाः । आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्व्वशो नराः ।
अथेमां सागरापाङ्गां गाम्गजेन्द्रगताखिलां । अध्यतिष्ठत्पुनः क्षत्रं सशैलवनपत्तनां । प्रशासति पुनः क्षत्रे धर्म्मेणेमां वसुन्धरां ।
ब्राह्मणाद्यास्ततो वर्णा लेभिरे मुदमुत्तमां ।
कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः । धर्म्मेण दण्डं दण्ड्येषु प्रणयन्तोऽन्वपालयन् ।
तथा धर्म्मपरे क्षत्रे सहस्राक्षः शतक्रतुः । स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः । २४७०
न बाल एव म्रियते तदा कश्चिज्जनाधिप । न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः ।
एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ । इयं सागरपर्य्यन्ता समापूर्य्यत मेदिनी ।
ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः । साङ्गोपनिषदान्वेदान् विप्राश्चाधीयते तदा ।
न च विक्रीणते ब्रह्म ब्राह्मणाश्च तदा नृप । न च शूद्रसमाभ्याशे वेदानुच्चारयन्त्युत ।
कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह । युञ्जते धुरि नो गाश्च कृशाङ्गांश्चाप्यजीवयन् । २४७५
फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः । न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ।
कर्म्माणि च नरव्याघ्र धर्म्मोपेतानि मानवाः । धर्म्ममेवानुपश्यन्तश्चक्रुर्धर्म्मपरायणाः ।
स्वकर्म्मनिरताश्चासन्सर्व्वे वर्णा नराधिप । एवं तदा नरव्याघ्र धर्म्मो न ह्रसते क्वचित् ।
काले गावः प्रसूयन्ते नार्य्यश्च भरतर्षभ । भवन्त्यृतुषु वृक्षाणां पुष्पाणि च फलानि च ।
एवं कृतयुगे सम्यग्वर्त्तमाने तदा नृप । आपूर्य्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशं । २४८०
एवं समुदिते लोके मानुषे भरतर्षभ । असुरा जज्ञिरे क्षेत्रे राज्ञान्तु मनुजेश्वर ।
आदित्यैर्हि तदा दैत्या बहुशो निर्ज्जिता युधि । ऐश्वर्य्याद्भ्रंशिताः स्वर्गात्सम्बभूवुः क्षिताविह ।
इह देवत्वमिच्छन्तो मानुषेषु मनस्विनः । जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ।
गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च । क्रव्यात्सु चैव भूतेषु गजेषु च मृगेषु च ।
जातैरिह महीपाल जायमानैश्च तैर्म्मही । न शशाकात्मनात्मानमियं धारयितुं धरा । २४८५
अथ जाता महीपालाः केचिद्बहुमदान्विताः । दितेः पुत्रा दनोश्चैव तदा लोक इहाच्युताः ।

वीर्य्यवन्तोऽवलिप्तास्ते नानारूपधरा महीं । इमां सागरपर्य्यन्तां परीयुररिमर्द्दनाः ।
ब्राह्मणान् क्षत्रियान्वैश्यान् शूद्रांश्चैवाप्यपीडयन् । अन्यानि चैव सत्त्वानि पीडयामासुरोजसा ।
त्रासयन्तोऽभिनिघ्नन्तः सर्व्वभूतगणांश्च ते । विचेरुः सर्व्वशो राजन्महीं शतसहस्रशः ।
आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः । अब्रह्मण्या वीर्य्यमदा मत्ता मदबलेन च ।　　२४९०
एव वीर्य्यबलोत्सिक्तै र्भूरियत्नैर्महासुरैः । पीड्यमाना मही राजन्ब्रह्माणमुपचक्रमे ।
न ह्यमी भूतसत्त्वौघाः पन्नगाः सनगां महीं । तदा धारयितुं शेकुः संक्रान्तां दानवैर्बलात् ।
ततो मही महीपाल भारार्त्ता भयपीडिता । जगाम शरणं देवं सर्व्वभूतपितामहं ।
सा संवृतं महाभागैर्देवद्विजमहर्षिभिः । ददर्श देवं ब्रह्माणं लोककर्त्तारमव्ययं ।
गन्धर्व्वैरप्सरोभिश्च देवकर्म्मसु निष्ठितैः । वन्द्यमानं मुदोपेतैर्ववन्दे चैनमेत्य सा ।　　२४९५
अथ विज्ञापयामास भूमिस्तं शरणार्थिनी । सन्निधौ लोकपालानां सर्व्वेषामेव भारत ।
तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयम्भुवः । पूर्व्वमेवाभवद्राजन् विदितं परमेष्ठिनः ।
स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत । ससुरासुरलोकानामशेषेण मनोगतं ।
तामुवाच महाराज भूमिंभूमिपतिः प्रभुः । प्रभवः सर्व्वभूतानामीशः शम्भुः प्रजापतिः ।
॥ ब्रह्मोवाच ॥ यदर्थमसि संप्राप्ता मत्सकाशं वसुन्धरे । तदर्थं संनियोक्ष्यामि सर्व्वानेव दिवौकसः ।　　२५००
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा स महीं देवो ब्रह्मा राजन् विसृज्य च । आदिदेश तदा सर्व्वान् विबुधान् भूतकृत्स्वयं ।
अस्या भूमे र्निरसितुं भारं भागैः पृथक्पृथक् । अस्यामेव प्रसूयध्वं विरोधायेति चाब्रवीत् ।
तथैव च समानीय गन्धर्व्वाप्सरसां गणान् । उवाच भगवान्सर्व्वानिदं वचनमर्थवत् ।
॥ ब्रह्मोवाच ॥ स्वैः स्वैरंशैः प्रसूयध्वं यथेष्टं मानुषेषु च । अथ शक्रादयः सर्व्वे श्रुत्वा सुरगुरोर्व्वचः । तथ्यमर्थ्यञ्च पथ्यञ्च तस्य ते जगृहुस्तदा ।
अथ ते सर्व्वशोंऽशैः स्वैर्गन्तुं भूमिं कृतक्षणाः । नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ।　　२५०५
यः स चक्रगदापाणिः पीतवासाः शितिप्रभः । पद्मनाभः सुरारिघ्नः पृथुचार्व्वञ्चितेक्षणः ।
प्रजापतिपतिर्द्देवः सुरनाथो महाबलः । श्रीवत्साङ्को हृषीकेशः सर्व्वदैवतपूजितः ।
तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमं । अंशेनावतरस्वेति तथेत्याह च तं हरिः ।
इत्यादिपर्व्व ण्यादिवंशावतारणांशावतरणे चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

## ॥ अथ सम्भवपर्व्व ३ ॥

॥ वैशम्पायन उवाच ॥ अथ नारायणेनेन्द्रश्चकार सह संविदं । अवतर्त्तुं महीं स्वर्गादंशतः सहितः सुरैः ।
आदिश्य च स्वयं शक्रः सर्व्वानेव दिवौकसः । निर्जगाम पुनस्तस्मात्क्षयान्नारायणस्य ह ।　　२५१०
तेऽमरारिविनाशाय सर्व्वलोकहिताय च । अवतेरुः क्रमेणैव महीं स्वर्गाद्दिवौकसः ।
ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च । जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ।

दानवान्राक्षसांश्चैव गन्धर्व्वान्पन्नगांस्तथा । पुरुषादानि चान्यानि जघ्नुः सत्त्वान्यनेकशः ।

दानवा राक्षसाश्चैव गन्धर्व्वाः पन्नगास्तथा । न तान्बलस्थान्बालेऽपि जघ्नुर्भरतसत्तम ।

॥ जनमेजयउवाच ॥ देवदानवसंघानां गन्धर्व्वाप्सरसां तथा । मानवानाञ्च सर्व्वेषां तथा वै यक्षरक्षसां । २५१५

श्रोतुमिच्छामि तत्त्वेन सम्भवं कृत्स्नमादितः । प्राणिनाञ्चैव सर्व्वेषां सम्भवं वक्तुमर्हसि ।

॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि नमस्कृत्य स्वयम्भुवे । सुरादीनामहं सम्यक् लोकानां प्रभवाप्ययं ।

ब्रह्मणो मानसाः पुत्त्रा विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।

मरीचेः कश्यपः पुत्त्रः कश्यपात्तु इमाः प्रजाः । प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ।

अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा । क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः । २५२०

कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत । एतासां वीर्य्यसम्पन्नं पुत्त्रपौत्त्रमनन्तकं ।

अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः । ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत ।

धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंश एव च । भगो विवस्वान्पूषा च सविता दशमस्तथा ।

एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते । जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः ।

एक एव दितेः पुत्त्रो हिरण्यकशिपुः स्मृतः । नाम्ना ख्यातास्तु तस्येमे पञ्च पुत्त्रा महात्मनः । २५२५

प्रह्लादः पूर्व्वजस्तेषां संह्लादस्तदनन्तरं । अनुह्लादस्तृतीयोऽभूत्तस्माच्च शिबिबास्कलौ ।

प्रह्लादस्य त्रयः पुत्त्राः ख्याताः सर्व्वत्र भारत । विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ।

विरोचनस्य पुत्त्रोऽभूद्बलिरेकः प्रतापवान् । बलेश्च प्रथितः पुत्त्रो बाणो नाम महासुरः ।

रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः । चत्वारिंशद्दनोः पुत्त्राः ख्याताः सर्व्वत्र भारत ।

तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः । शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः । २५३०

असिलोमा च केशी च दुर्ज्जयश्चैव दानवः । अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्य्यवान् ।

तथा गगनमूर्द्धा च वेगवान् केतुमांश्च सः । स्वर्भानुरश्वोऽश्वपतिर्वृषपर्व्वाजकस्तथा ।

अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः । एकपादेकचक्रश्च विरूपाक्षमहोदरौ ।

निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा । शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा । एते ख्याता दनोर्व्वंशे दानवाः परिकीर्त्तिताः ।

अन्यौ तु खलु देवानां सूर्य्याचन्द्रमसौ स्मृतौ । अन्यौ दानवमुख्यानां सूर्य्याचन्द्रमसौ तथा । २५३५

इमे च वंशाः प्रथिताः सत्त्ववन्तो महाबलाः । दनुपुत्त्रा महाराज दश दानववंशजाः ।

एकाक्षोऽमृतपो वीरः प्रलम्बनरकावपि । वातापी शत्रुतपनः शठश्चैव महासुरः ।

गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः । असंख्येयाः स्मृतास्तेषां पुत्त्राः पौत्त्राश्च भारत ।

सिंहिका सुषुवे पुत्त्रं राहुं चन्द्रार्कमर्द्दनं । सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रप्रमर्द्दनं ।

क्रूरस्वभावं क्रूरायाः पुत्त्रपौत्त्रमनन्तकं । गणः क्रोधवशो नाम क्रूरकर्म्माऽरिमर्द्दनः । २५४०

दनायुषः पुनः पुत्त्राश्चत्वारोऽसुरपुङ्गवाः । विक्षरो बलवीरौ च वृत्रश्चैव महासुरः ।

कालायाः प्रथिताः पुत्त्राः कालकल्पाः प्रहारिणः। प्रविख्याता महावीर्य्या दानवेषु परन्तपाः।
विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च। क्रोधशत्रुस्तथैवान्ये कालेया इति विश्रुताः।
असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत्। ख्याताश्चोशनसः पुत्त्राश्चत्वारोऽसुरयाजकाः।
त्वष्टाधरस्तथात्रिश्च द्वावन्यौ रौद्रकर्म्मिणौ। तेजसा सूर्य्यसङ्काशा ब्रह्मलोकपरायणाः। २५४५
इत्येष वंशप्रभवः कथितस्ते तरस्विनाम्। असुराणां सुराणाञ्च पुराणे संश्रुतो मया।
एतेषां यदपत्यन्तु न शक्यं तदशेषतः। प्रसंख्यातुं महीपाल गुणभूतमनन्तकं।
तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ। आरुणिर्व्वारुणिश्चैव वैनतेयाः प्रकीर्त्तिताः।
शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः। कूर्म्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्त्तिताः।
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा। गोपतिर्धृतराष्ट्रश्च सूर्य्यवर्च्चाश्च सप्तमः। २५५०
सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः। भीमश्चित्ररथश्चैव विख्यातः सर्व्वविद्वशी।
तथा शालिशिरा राजन् पर्ज्जन्यश्च चतुर्द्दशः। कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः। इत्येते देवगन्धर्व्वा मौनेयाः परिकीर्त्तिताः।
अथ प्रभूतान्यन्यानि कीर्त्तयिष्यामि भारत। अनवद्यां मनुं वंशामसुरां मार्गणप्रियां।
अनूपां सुभगां भासीमिति प्राधा व्यजायत। सिद्धः पूर्णश्च बर्हीच पूर्णायुश्च महायशाः।
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः। विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा। २५५५
इत्येते देवगन्धर्व्वाः प्राधेयाः परिकीर्त्तिताः। इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणं।
प्राधाऽसूत महाभागा देवी देवर्षितः पुरा। अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलोत्तमा।
अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा। केशिनी च सुबाहुश्च सुरता सुरजा तथा।
सुप्रिया चातिबाहुश्च विख्यातौ च हाहा हूहूः। तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्व्वसत्तमाः।
अमृतं ब्राह्मणा गावो गन्धर्व्वाप्सरसस्तथा। अपत्यं कपिलायास्तु पुराणे परिकीर्त्तितं। २५६०
इति ते सर्व्वभूतानां सम्भवः कथितो मया। यथावत्संपरिख्यातो गन्धर्व्वाप्सरसां तथा।
भुजगानां सुपर्णानां रुद्राणां मरुतां तथा। गवाञ्च ब्राह्मणानाञ्च श्रीमतां पुण्यकर्म्मणां।
आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः। श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता।
इमन्तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणदेवसन्निधौ। अपत्यलाभं लभते स पुष्कलं श्रियं यशः प्रेत्य च शोभनाङ्गतिं।
इत्यादिपर्व्वणि सम्भवपर्व्वण्यंशावतरणे पञ्चषष्टोऽध्यायः ॥ ६५ ॥
॥ वैशम्पायन उवाच ॥ ब्रह्मणो मानसाः पुत्त्रा विदिताः षण्महर्षयः। एकादश सुताः स्थाणोः ख्याताः परमतेजसः। २५६५
मृगव्याधश्च सर्पश्च निरृतिश्च महायशाः। अजैकपादहिर्ब्बुध्न्यः पिनाकी च परन्तपः।
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः। स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। षडेते ब्रह्मणः पुत्त्रा वीर्य्यवन्तो महर्षयः।
त्रयस्त्वङ्गिरसः पुत्त्रा लोके सर्व्वत्र विश्रुताः। बृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रतः।
अत्रेस्तु बहवः पुत्त्राः श्रूयन्ते मनुजाधिप। सर्व्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः। २५७०

राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा। यक्षाश्च मनुजव्याघ्र पुत्रास्तस्य च धीमतः।
पुलहस्य सुता राजन् शरभाश्च प्रकीर्त्तिताः। सिंहाः किंपुरुषा व्याघ्रा ऋक्षा ईहामृगास्तथा।
क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः। विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः।
दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः। ब्रह्मणः पृथिवीपाल शान्तात्मा सुमहातपाः।
वामादजायताङ्गुष्ठाद्भार्य्या तस्य महात्मनः। तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः। २५७५
ताः सर्व्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः। पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः।
ददौ स दश धर्म्माय सप्तविंशतिमिन्दवे। दिव्येन विधिना राजन् कश्यपाय त्रयोदश।
नामतो धर्म्मपत्न्यस्ताः कीर्त्त्यमाना निबोध मे। कीर्त्तिर्लक्ष्मीर्धृतिर्म्मेधा पुष्टिः श्रद्धा क्रिया तथा।
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्म्मस्य ता दश। द्वाराण्येतानि धर्म्मस्य विहितानि स्वयम्भुवा।
सप्तविंशतिः सोमस्य पत्न्यो लोकेषु विश्रुताः। कालस्य नयने युक्ताः सोमपत्न्यः शुचिव्रताः। २५८०
सर्व्वा नक्षत्रयोगिन्यो लोकयात्राविधानतः। पैतामहो मुनिर्द्देवस्तस्य पुत्रः प्रजापतिः। तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरं।
धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः।
धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा। चन्द्रमास्तु मनस्विन्याः श्वासायाः श्वसनस्तथा।
रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः। प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ।
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा। ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः। २५८५
सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते। मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा।
अह्नः सुतस्तथा ज्योतिः श्रमः शान्तस्तथा मुनिः। अग्नेः पुत्रः कुमारस्तु श्रीमाञ्छरवणालयः।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः। कृत्तिकाभ्युपपन्नेश्च कार्त्तिकेय इति स्मृतः।
अनिलस्य शिवा भार्य्या तस्याः पुत्रो मनोजवः। अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु।
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाऽथ देवलं। द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ। बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी। २५९०
योगसक्ता जगत्कृत्स्नमसक्ता विचचार ह। प्रभासस्य तु भार्य्या सा वसूनामष्टमस्य ह।
विश्वकर्म्मा महाभागो जज्ञे शिल्पप्रजापतिः। कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वर्द्धकिः।
भूषणानाञ्च सर्व्वेषां कर्त्ता शिल्पवतां वरः। यो दिव्यानि विमानानि त्रिदशानां चकार ह।
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः। पूजयन्ति च यं नित्यं विश्वकर्म्माणमव्ययं।
स्तनन्तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः। निःसृतो भगवान्धर्म्मः सर्व्वलोकसुखावहः। २५९५
त्रयस्तस्य वराः पुत्राः सर्व्वभूतमनोहराः। शमः कामश्च हर्षश्च तेजसा लोकधारिणः।
कामस्य तु रतिर्भार्य्या शमस्य प्राप्तिरङ्गना। नन्दा तु भार्य्या हर्षस्य यासु लोकाः प्रतिष्ठिताः।
मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः। जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः।
त्वाष्ट्री तु सवितुर्भार्य्या वडवारूपधारिणी। असूयत महाभागा साऽन्तरीक्षेऽश्विनावुभौ।
द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप। तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः। २६००

त्रयस्त्रिंशत इत्येते देवा स्तेषामहं तव। अन्वयं सम्प्रवक्ष्यामि पक्षैश्च कुलतो गणान्।

रुद्राणामपरः पक्षः साध्यानां मरुतां तथा। वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च।

वैनतेयस्तु गरुडो बलवानरुणस्तथा। बृहस्पतिश्च भगवानादित्येष्वेव गण्यते।

अश्विनौ गुह्यकान् विद्धि सर्व्वौषध्यस्तथा पशून्। एते देवगणा राजन् कीर्त्तितास्तेऽनुपूर्व्वशः।

यान्कीर्त्तयित्वा मनुजः सर्व्वपापैः प्रमुच्यते। ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः। २६०५

भृगोः पुत्त्रः कविर्व्विद्वाञ्छुक्रः कविसुतो ग्रहः। त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भयाभये।

स्वयम्भुवा नियुक्तः सन्भुवनं परिधावति। योगाचार्य्यो महाबुद्धिर्दैत्यानामभवद्गुरुः। सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः।

तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्ग्गवे। अन्यमुत्पादयामास पुत्त्रं भृगुरनिन्दितं।

च्यवनं दीप्ततपसं धर्म्मात्मानं यशस्विनं। यः स रोषाच्च्युतो गर्भान्मातुर्म्मोक्षाय भारत।

आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः। और्व्वस्तस्यां समभवदूरुं भित्त्वा महायशाः। २६१०

महातेजा महावीर्य्यो बाल एव गुणैर्युतः। ऋचीकस्तस्य पुत्त्रस्तु जमदग्निस्ततोऽभवत्।

जमदग्नेस्तु चत्वार आसन्पुत्त्रा महात्मनः। रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः।

सर्व्वशस्त्रेषु कुशलः क्षत्रियान्तकरो वशी। और्व्वस्यासीत्पुत्त्रशतं जमदग्निपुरोगमं। तेषां पुत्त्रसहस्राणि बभूवुर्भुवि विस्तरः।

द्वौ पुत्त्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणं। लोके धाता विधाता च यौ स्थितौ मनुना सह।

तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा। तस्यास्तु मानसाः पुत्त्रास्तुरगा व्योमचारिणः। २६१५

वरुणस्य भार्य्या या ज्येष्ठा शुक्राद्देवी व्यजायत। तस्याः पुत्त्रं बलं विद्धि सुरां च सुरनन्दिनीं।

प्रजानामन्नकामानामन्योन्यपरिभक्षणात्। अधर्म्मस्तत्र सञ्जातः सर्व्वभूतविनाशकः।

तस्यापि निर्ऋतिर्भार्य्या नैर्ऋता येन राक्षसाः। घोरास्तस्यास्त्रयः पुत्त्राः पापकर्म्मरताः सदा।

भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा। न तस्य भार्य्या पुत्त्रो वा कश्चिदस्त्यन्तको हि सः।

काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीं। ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः। २६२०

उलूकान्सुषुवे काकी श्येनी श्येनान्व्यजायत। भासी भासानजनयद्गृध्रांश्चैव जनाधिप।

धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्व्वशः। चक्रवाकांश्च भद्रा तु जनयामास सैव तु।

शुकी च जनयामास शुकानेव यशस्विनी। कल्याणगुणसम्पन्ना सर्व्वलक्षणपूजिता।

नव क्रोधवशा नारीः प्रजज्ञे क्रोधसम्भवाः। मृगी च मृगमन्दा च हरी भद्रमना अपि।

मातङ्गी त्वथ शार्दूली श्वेता सुरभिरेव च। सर्व्वलक्षणसम्पन्ना सुरसा चैव भामिनी। २६२५

अपत्यं तु मृगाः सर्व्वे मृग्या नरवरोत्तम। ऋक्षाश्च मृगमन्दायाः सृमराश्च परन्तप।

ततस्त्वैरावतं नागं जज्ञे भद्रमनाः सुतं। ऐरावतः सुतस्तस्या देवनागो महागजः।

हर्य्याश्च हरयोऽपत्यं वानराश्च तरस्विनः। गोलाङ्गूलांश्च भद्रन्ते हर्य्याः पुत्त्रान्प्रचक्षते।

प्रजज्ञे त्वथ शार्दूली सिंहान्व्याघ्राननेकशः। द्वीपिनश्च महासत्त्वान्सर्व्वानेव नसंशयः।

मातङ्ग्यपि च मातङ्गानपत्यानि नराधिप । दिशां गजन्तु श्वेताख्यं श्वेताऽजनयदाशुगं । २६३०

तथा दुहितरौ राजन्सुरभिर्व्वै व्यजायत । रोहिणी चैव भद्रातु गन्धर्व्वीतु यशस्विनी ।

विमलामपि भद्रन्ते अनलामपि भारत । रोहिण्यां जज्ञिरे गावो गन्धर्व्व्यां वाजिनः सुताः । सप्तपिण्डफलान् वृक्षानन लाऽपि व्यजायत ।

अनलायाः शुकी पुत्री कङ्कस्तु सुरसासुतः । अरुणस्य भार्य्या श्येनी तु वीर्य्यवन्तौ महाबलौ ।

सम्पातिं जनयामास वीर्य्यवन्तं जटायुषं । सुरसाऽजनयन्नागान् कद्रूःपुत्रांस्तु पन्नगान् ।

द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ । इत्येष सर्व्वभूतानां महतां मनुजाधिप । प्रभवः कीर्त्तितः सम्यङ्मया मतिमतां वर । २६३५

यं श्रुत्वा पुरुषः सम्यङ्मुक्तो भवति पाप्मनः । सर्व्वज्ञताञ्च लभते गतिमग्र्याञ्च विन्दति ।

इत्यादिपर्व्वणि सम्भवपर्व्वण्यंशावतरणे षट्षष्ठोऽध्यायः ॥ ६६ ॥

॥ जनमेजय उवाच ॥ देवानां दानवानाञ्च गन्धर्व्वोरगरक्षसां । सिंहव्याघ्रमृगाणाञ्च पन्नगानां पतत्त्रिणां ।

सर्व्वेषाञ्चैव भूतानां सम्भवं भगवन्नहं । श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनां । जन्म कर्म्म च भूतानामेतेषामनु पूर्व्वशः ।

॥ वैशम्पायनउवाच ॥ मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः । प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्व्वशः ।

विप्रचित्तिरितिख्यातो य आसीद्दानवर्षभः । जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः । २६४०

दितेः पुत्रस्तु यो राजन् हिरण्यकशिपुः स्मृतः । स जज्ञे मानुषे लोके शिशुपालो नरर्षभ ।

संह्राद इति विख्यातः प्रह्रादस्यानुजस्तु यः । स शल्य इति विख्यातो जज्ञे वाह्लीकपुङ्गवः ।

अनुह्रादस्तु तेजस्वी योऽभूत् ख्यातो जघन्यजः । धृष्टकेतुरिति ख्यातः स बभूव नरेश्वरः ।

यस्तु राजञ्छिबिर्नाम दैतेयः परिकीर्त्तितः । द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ।

वास्कलो नाम यस्तेषामासीदसुरसत्तमः । भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभ । २६४५

अयः शिरा अश्वशिरा अयःशङ्कुश्च वीर्य्यवान् । तथा गगनमूर्द्धा च वेगवांश्चात्र पञ्चमः ।

पञ्चैते जज्ञिरे राजन्वीर्य्यवन्तो महासुराः । कैकयेषु महात्मानः पार्थिवर्षभसत्तमाः । केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान् ।

अमितौजा इति ख्यातः सोग्रकर्म्मा नराधिपः । स्वर्भानुरिति विख्यातः श्रीमान्यस्तु महासुरः ।

उग्रसेन इति ख्यात उग्रकर्म्मा नराधिपः । यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः ।

अशोको नाम राजाऽभून्महावीर्य्योऽपराजितः । तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः । २६५०

दैतेयः सोऽभवद्राजा हार्द्दिक्यो मनुजर्षभः । वृषपर्व्वेति विख्यातः श्रीमान्यस्तु महासुरः ।

दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः । अजकस्त्ववरो राजन्य आसीद्वृषपर्व्वणः ।

स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः । अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः ।

रोचमान इतिख्यातः पृथिव्यां सोऽभवन्नृपः । सूक्ष्मस्तु मतिमान्राजन् कीर्त्तिमान्यः प्रकीर्त्तितः ।

दृढरथ इतिख्यातः क्षितावासीत्स पार्थिवः । तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः । २६५५

सेनाबिन्दुरिति ख्यातः स बभूव नराधिपः। इषुपो नाम यस्तेषामसुराणां बलाधिकः।
नग्नजिन्नाम राजासीद्भुवि विख्यातविक्रमः। एकचक्र इति ख्यात आसीद्यस्तु महासुरः।
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ। विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः।
चित्रधर्मेति विख्यातः क्षितावासीत् स पार्थिवः। हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः।
सुबाहुरिति विख्यातः श्रीमानासीत् स पार्थिवः। अहरस्तु महातेजाः शत्रुपक्षक्षयङ्करः। २६६०
वाह्लीको नाम राजा स बभूव प्रथितः क्षितौ। निचन्द्रश्चन्द्रवक्त्रस्तु य आसीदसुरोत्तमः।
मुञ्जकेश इति ख्यातः श्रीमानासीत् स पार्थिवः। निकुम्भस्त्वजितः संख्ये महामतिरजायत।
भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः। शरभो नाम यस्तेषां दैतेयानां महासुरः।
पौरवो नाम राजर्षिः स बभूव नरोत्तमः। कुपथस्तु महावीर्यः श्रीमान् राजन्महासुरः।
सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः। क्रथस्तु राजन् राजर्षिः क्षितौ जज्ञे महासुरः। २६६५
पार्वतेय इति ख्यातः काञ्चनाचलसन्निभः। द्वितीयः शलभस्तेषामसुराणां बभूव ह।
प्रह्लादो नाम वाह्लीकः स बभूव नराधिपः। चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः।
चन्द्रवर्मेति विख्यातः काम्बोजानां नराधिपः। अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः।
ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः। मृतपा इति विख्यातो य आसीदसुरोत्तमः।
पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम। गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः। २६७०
द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः। मयूर इति विख्यातः श्रीमान्यस्तु महासुरः।
स विश्व इति विख्यातो बभूव पृथिवीपतिः। सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः।
कालकीर्त्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः। चन्द्रहन्तेति यस्तेषां कीर्त्तितः प्रवरोऽसुरः।
शुनको नाम राजर्षिः स बभूव नराधिपः। विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः।
जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः। दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः। २६७५
काशिराजः स विख्यातः पृथिव्यां पृथिवीपते। ग्रहन्तु सुषुवे यन्तु सिंहिकाऽर्केन्दुमर्द्दनं। स क्राथ इति विख्यातो बभूव
मनुजाधिपः।
अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः। विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः।
द्वितीयो विक्षराद्यस्तु नराधिप महासुरः। पांशुराष्ट्राधिप इति विख्यातः सोऽभवन्नृपः।
बलीन इति विख्यातो यस्त्वासीदसुरोत्तमः। पौण्ड्रमात्स्यक इत्येवं बभूव स नराधिपः।
वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः। मणिमान्नाम राजर्षिः स बभूव नराधिपः। २६८०
क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः। दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ।
क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः। दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः।
कालेयानान्तु ये पुत्रास्तेषामष्टौ नराधिपाः। जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः।
मगधेषु जयत्सेनस्तेषामासीत् स पार्थिवः। अष्टानां प्रवरस्तेषां कालेयानां महासुरः।

द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपमः। अपराजित इत्येवं स बभूव नराधिपः। २९८५
तृतीयस्तु महातेजा महामायो महासुरः। निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः।
तेषामन्यतमो यस्तु चतुर्थः परिकीर्त्तितः। श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः।
पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः। महौजा इति विख्यातो बभूवेह परन्तपः।
षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः। अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः।
समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात्। विश्रुतः सागरान्तायां क्षितौ धर्म्मार्थतत्त्ववित्। २९९०
बृहन्नामाष्टमस्तेषां कालेयानां नराधिप। बभूव राजा धर्म्मात्मा सर्व्वभूतहिते रतः।
कुक्षिस्तु राजन् विख्यातो दानवानां महाबलः। पार्व्वतीय इति ख्यातः काञ्चनाचलसन्निभः।
क्रथनश्च महावीर्य्यः श्रीमानाजन्महासुरः। सूर्य्याक्ष इति विख्यातः क्षितौ जज्ञे महीपतिः।
असुराणान्तु यः सूर्य्यः श्रीमांश्चैव महासुरः। दरदो नाम वाह्लीको वरः सर्व्वमहीक्षितां।
गणः क्रोधवशो नाम यस्ते राजन्प्रकीर्त्तितः। ततः सञ्जज्ञिरे वीराः क्षिताविह नराधिपाः। २९९५
मद्रकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा। सुवीरश्च सुबाहुश्च महावीरोऽथ वाह्लिकः।
क्रथो विचित्रः सुरथःश्रीमान्नीलश्च भूमिपः। चीरवासाश्च कौरव्य भूमिपालश्च नामतः।
दन्तवक्रश्च नामासीद्दुर्जयश्चैव दानवः। रुक्मी च नृपशार्दूलो राजा च जनमेजय।
आषाढो वायुवेगश्च भूरितेजास्तथैव च। एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः।
कारूषकाश्च राजानः क्षेमधूर्त्तिस्तथैव च। श्रुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च। ३०००
क्षेमोऽग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः। मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः।
गणात्क्रोधवशादेष राजपूगोऽभवत्क्षितौ। जातः पुरा महाभागो महाकीर्त्तिर्म्महाबलः।
कालनेमिरिति ख्यातो दानवानां महाबलः। स कंस इति विख्यात उग्रसेनसुतो बली।
यस्त्वासीद्देवको नाम देवराजसमद्युतिः। स गन्धर्व्वपति मुख्यःक्षितौ जज्ञे नराधिपः।
बृहस्पतेर्बृहत्कीर्त्तेर्द्देवर्षेर्व्विद्धि भारत। अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजं। ३००५
धन्विनां नृपशार्दूल यः सर्व्वास्त्रविदुत्तमः। महाकीर्त्तिर्म्महातेजाः स जज्ञे मनुजेश्वरः।
धनुर्व्वेदे च वेदे च यं तं वेदविदो विदुः। रिष्ठं चित्रकर्म्माणं द्रोणं स्वकुलवर्द्धनं।
महादेवान्तकाभ्याञ्च कामात्क्रोधाच्च भारत। एकत्वमुपपन्नानां जज्ञे शूरः परन्तपः।
अश्वत्थामा महावीर्य्यः शत्रुपक्षक्षयावहः। वीरः कमलपत्राक्षः क्षितावासीन्नराधिप।
जज्ञिरे वसवस्त्वष्टौ गङ्गायां शान्तनोः सुताः। वशिष्ठस्य च शापेन नियोगाद्वासवस्य च। ३०१०
तेषामवरजो भीष्मः कुरूणामभयङ्करः। मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः।
जामदग्न्येन रामेण सर्व्वास्त्रविदुषां वरः। योऽयुध्यत महातेजा भार्गवेण महात्मना। यस्तु राजन् कृपो नाम ब्रह्मर्षिरभ-
वत् क्षितौ। रुद्राणान्तु गणाद्विद्धि संभूतमतिपौरुषं।
शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः। द्वापरं विद्धि तं राजन्संभूतमरिमर्द्दनं।

सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः। पक्षात्स जज्ञे मरुतां देवानामरिमर्द्दन।
द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात्। मानुषे नृप लोकेऽस्मिन्सर्व्वशस्त्रभृतांवरः। २०१५
ततश्च कृतवर्म्माणं विद्धि राजन्जनाधिपं। तमप्रतिमकर्म्माणं क्षत्रियर्षभसत्तमं।
मरुतान्तु गणाद्विद्धि सञ्जातमरिमर्द्दनं। विराटं नाम राजानं परराष्ट्रप्रतापनं।
अरिष्टायास्तु यः पुत्त्रो हंस इत्यभिविश्रुतः। स गन्धर्व्वपतिर्जज्ञे कुरुवंशविवर्द्धनः।
धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः। दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः।
मातुर्दोषादृषेः कोपादन्ध एव व्यजायत। तस्यैवावरजो भ्राता महासत्त्वो महाबलः। २०२०
स पाण्डुरिति विख्यातः सत्यधर्म्मरतः शुचिः। अत्रेस्तु सुमहाभागं पुत्त्रं पुत्त्रवतांवरं। विदुरं विद्धि तं लोके जातं बुद्धिमतांवरं।
कलेरंशस्तु सञ्जज्ञे भुवि दुर्य्योधनो नृपः। दुर्ब्बुद्धिर्दुर्म्मतिश्चैव कुरूणामयशस्करः।
जगतो यस्तु सर्व्वस्य विद्विष्टः कलिपूरुषः। यः सर्व्वां घातयामास पृथिवीं पृथिवीपते।
उद्दीपितं येन वैरं भूतान्तकरणं महत्। पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह।
शतं दुःशासनादीनां सर्व्वेषां क्रूरकर्म्मणां। दुर्म्मुखो दुःसहश्चैव ये चान्ये नानुकीर्त्तिताः। २०२५
दुर्य्योधनसहायास्ते पौलस्त्या भरतर्षभ। वैश्यापुत्त्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः।
॥ जनमेजय उवाच ॥ ज्येष्ठानुज्येष्ठतां तेषां नामधेयानि वा विभो। धृतराष्ट्रस्य पुत्त्राणामानुपूर्व्व्येण कीर्त्तय।
॥ वैशम्पायन उवाच ॥ दुर्य्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा। दुःसहो दुःशलश्चैव दुर्म्मुखश्च तथा परः।
विविंशतिर्व्विकर्णश्च जलसन्धः सुलोचनः। विन्दानुविन्दौ दुर्द्धर्षः सुबाहुर्दुःप्रधर्षणः।
दुर्म्मर्षणो दुर्म्मुखश्च दुष्कर्णः कर्ण एव च। चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह। २०३०
दुर्म्मदो दुःप्रहर्षश्च विवित्सुर्व्विकटः समः। ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ।
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ। चित्रबाहुश्चित्रवर्म्मा सुवर्म्मा दुर्व्विरोचनः।
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ। भीमवेगो भीमबलो बलाकी भीमविक्रमः।
उग्रायुधो भीमशरः कनकायुर्दृढायुधः। दृढवर्म्मा दृढक्षत्त्रः सोमकीर्त्तिरनूदरः।
जरासन्धो दृढसन्धः सत्यसन्धः सहस्रवाक्। उग्रश्रवा उग्रसेनः क्षेममूर्त्तिस्तथैव च। २०३५
अपराजितः पण्डितको विशालाक्षो दुराधनः।
दृढहस्तः सुहस्तश्च वातवेगसुवर्च्चसौ। आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ।
कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः। उग्रो भीमरथो वीरो वीरबाहुरलोलुपः।
अभयो रौद्रकर्म्मा च तथा दृढरथश्च यः। अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकाङ्गदः। कुण्डजश्चित्रकश्चैव दुःशला च शताधिका। २०४०
वैश्यापुत्त्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः। एतदेकशतं राजन्कन्या चैका प्रकीर्त्तिता।
नामधेयानुपूर्व्व्या च ज्येष्ठानुज्येष्ठतां विदुः। सर्व्वेऽतिरथाः शूराः सर्व्वे युद्धविशारदाः।
सर्व्वे वेदविदश्चैव राजशास्त्रे च पारगाः। सर्व्वे संग्रामविद्यासु विद्याभिजनशोभिनः।

सर्व्वेषामनुरूपाश्च कृता दारा महीपते। दुःशलां समये राजन्सिन्धुराजाय कौरवः।
जयद्रथाय प्रददौ सौवलानुमते तदा। धर्म्मस्यांशन्तु राजानं विद्धि राजन्युधिष्ठिरं। २७४५
भीमसेनन्तु वातस्य देवराजस्य चार्ज्जुनं। अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि।
नकुलः सहदेवश्च सर्व्वभूतमनोहरौ। यस्तु वर्च्चा इतिख्यातः सोमपुत्त्रः प्रतापवान्।
सोऽभिमन्युर्बृहत्कीर्त्तिरर्ज्जुनस्य सुतोऽभवत्। यस्यावतरणे राजन्सुरान्सोमोऽब्रवीदिदं।
नाहं दद्याम्प्रियं पुत्त्रं मम प्राणैर्गरीयसं। समयः क्रियतामेष न शक्यमतिवर्त्तितुं।
सुरकार्य्यं हि नः कार्य्यमसुराणां क्षितौ वधः। तत्र यास्यत्ययं वर्च्चा न च स्थास्यति वै चिरं। २७५०
ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा। सोऽर्ज्जुनेत्यभिविख्यातो पाण्डोः पुत्त्रः प्रतापवान्।
तस्यायं भविता पुत्त्रो बालो भुवि महारथः। ततः षोडश वर्षाणि स्थास्यत्यमरसत्तमाः।
अस्य षोडशवर्षस्य स संग्रामो भविष्यति। यत्रांशा वः करिष्यन्ति कर्म्म वीरनिसूदनं।
नरनारायणाभ्यां तु स संग्रामो विना कृतः। चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः।
विमुखाञ्छात्रवान्सर्व्वान् कारयिष्यति मे सुतः। बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति। २७५५
महारथानां वीराणां कदनञ्च करिष्यति। सर्व्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति।
दिनार्द्धेन महाबाहुः प्रेतराजपुरं प्रति। ततो महारथैर्व्वीरैः समेत्य बहुशो रणे।
दिनक्षये महाबाहुर्मया भूयः समेष्यति। एकं वंशकरं पुत्त्रं वीरं वै जनयिष्यति।
प्रनष्टं भारतं वंशं स भूयो धारयिष्यति। एतत्सोमवचः श्रुत्वा तथाऽस्त्विति दिवौकसः।
प्रत्यूचुः सहिताः सर्व्वे ताराधिपमपूजयन्। एवं ते कथितं राजंस्तव जन्म पितुः पितुः। २७६०
अग्नेर्भागन्तु विद्धि त्वं धृष्टद्युम्नं महारथं। शिखण्डिनमथो राजंस्त्रीपूर्व्वं विद्धि राक्षसं।
द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ। विश्वान्देवगणान् विद्धि सञ्जातान्भरतर्षभ।
प्रतिविन्ध्यः सुतः सोमः श्रुतकीर्त्तिस्तथा परः। नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्य्यवान्।
शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत्। तस्य कन्या पृथा नाम रूपेणासदृशी भुवि।
पितुः स्वस्रीयपुत्त्राय सोऽनपत्याय वीर्य्यवान्। अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा। २७६५
अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया। अददत्कुन्तिभोजाय स तां दुहितरं तदा।
सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने। उग्रम्पर्य्यचरद्घोरं ब्राह्मणं संशितव्रतं।
निगूढनिश्चयं धर्म्मे यन्तं दुर्व्वाससं विदुः। तमुग्रं संशितात्मानं सर्व्वयत्नैरतोषयत्।
तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि। उवाच चैनां भगवान्प्रीतोऽस्मि सुभगे तव।
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। तस्य तस्य प्रसादात्त्वं देवि पुत्त्रान्जनिष्यसि। २७७०
एवमुक्ता च सा बाला तदा कौतूहलान्विता। कन्या सती देवमर्कमाजुहाव यशस्विनी।
प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा। अजीजनत्सुतं चास्यां सर्व्वशस्त्रभृतां वरं।
सकुण्डलं सकवचं देवगर्भश्रियान्वितं। दिवाकरसमं दीप्त्या चारुसर्व्वाङ्गभूषितं।

निगूहमाना जातं वै बन्धुपक्षभयात्तदा । उत्ससर्ज्ज जले कुन्ती तं कुमारं यशस्विनं ।

तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः । राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा । २७७५

चक्रतुर्नामधेयञ्च तस्य बालस्य तावुभौ । दम्पती वसुषेणेति दिक्षु सर्व्वासु विश्रुतं ।

स वर्द्धमानो बलवान् सर्व्वास्त्रेषूद्यतोऽभवत् । वेदाङ्गानि च सर्व्वाणि जजाप जयतां वरः ।

यस्मिन् काले जपन्नास्ते धीमान् सत्यपराक्रमः । नादेयं ब्राह्मणेष्वासीत्तस्मिन् काले महात्मनः ।

तमिन्द्रो ब्राह्मणो भूत्वा पुत्त्रार्थे भूतभावनः । ययाचे कुण्डले वीरं कवचञ्च सहाङ्गजं ।

उत्कृत्य कर्णो ह्यददत् कवचं कुण्डले तथा । शक्तिं शक्रो ददौ तस्मै विस्मितश्चेदमब्रवीत् । २७८०

देवासुरमनुष्याणां गन्धर्व्वोरगरक्षसां । यस्मिन् क्षेप्स्यसि दुर्द्धर्ष स एको न भविष्यति ।

पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ । ततो वैकर्त्तनः कर्णः कर्म्मणा तेन सोऽभवत् ।

आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः । स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः । स तु सूतकुले वीरो ववृधे राजसत्तम ।

कर्णं नरवरश्रेष्ठं सर्व्वशस्त्रभृतां वरं ।

दुर्य्योधनस्य सचिवं मित्रं शत्रुविनाशनं । दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमं ।

यस्तु नारायणो नाम देवदेवः सनातनः । तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् । २७८५

शेषस्यांशश्च नागस्य बलदेवो महाबलः । सनत्कुमारं प्रद्युम्नं विद्धि राजन्महौजसं ।

एवमन्ये मनुष्येन्द्रा बहवोंऽशा दिवौकसां । जज्ञिरे वसुदेवस्य कुले कुलविवर्द्धनाः ।

गणस्त्वप्सरसां यो वै मया राजन् प्रकीर्त्तितः । तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य च ।

तानि षोडश देवीनां सहस्राणि नराधिप । बभूवुर्म्मानुषे लोके वासुदेवपरिग्रहाः ।

श्रियस्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले । भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः । २७९०

द्रौपदी त्वथ सञ्जज्ञे शचीभागादनिन्दिता । द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता ।

नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी । पद्मायताक्षी सुश्रोणी स्वसितायतमूर्द्धजा ।

सर्व्वलक्षणसम्पन्ना वैदूर्य्यमणिसन्निभा । पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः ।

सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते । कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा ।

इति देवासुराणां ते गन्धर्व्वाप्सरसां तथा । अंशावतरणं राजन् राक्षसानाञ्च कीर्त्तितं । २७९५

ये पृथिव्यां समुद्भूता राजानो युद्धदुर्म्मदाः । महात्मानो यदूनाञ्च ये जाता विपुले कुले ।

ब्राह्मणाः क्षत्रिया वैश्या मया ते परिकीर्त्तिताः । धन्यं यशस्यं पुत्त्रीयमायुष्यं विजयावहं । इदमंशावतरणं श्रोतव्यमनसूयता ।

अंशावतरणं श्रुत्वा देवगन्धर्व्वरक्षसां । प्रभवाप्ययवित् प्राज्ञो न कृच्छ्रेष्ववसीदति ।

इत्यादिपर्व्वणि सम्भवपर्व्वण्यंशावतरणं समाप्तं सप्तषष्टोऽध्यायः ॥ ६७ ॥

॥ जनमेजय उवाच ॥ त्वत्तः श्रुतमिदं ब्रह्मन् देवदानवरक्षसां । अंशावतरणं सम्यग्गन्धर्व्वाप्सरसां तथा ।

इमं तु भूय इच्छामि कुरूणां वंशमादितः । कथ्यमानं त्वया विप्र विप्रर्षिगणसन्निधौ । २८००

॥ वैशम्पायन उवाच ॥ पौरवाणां वंशकरो दुष्मन्तो * नाम वीर्य्यवान् । पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ।

* दुष्मन्त इति क्वचित् पुस्तके पाठः ।

चतुर्भागं भुवः कृत्स्नं यो भुङ्क्ते मनुजेश्वरः । समुद्रावरणांश्चापि देशान् स समितिञ्जयः ।
आम्लेच्छावधिकान् सर्व्वान् स भुङ्क्ते रिपुमर्द्दनः । रत्नाकरसमुद्रान्तांश्चातुर्व्वर्ण्यजनावृतान् ।
न वर्णसङ्करकरो न कृष्याकरकृज्जनः । न पापकृत् कश्चिदासीत्तस्मिन् राजनि शासति ।
धर्म्मे रतिं सेवमाना धर्म्मार्थावभिपेदिरे । तदा नरा नरव्याघ्र तस्मिन् जनपदेश्वरे । २८०५
नासीच्चौरभयं तात न क्षुधाभयमण्वपि । नासीद्व्याधिभयं चापि तस्मिन् जनपदेश्वरे ।
स्वधर्म्मै रेमिरे वर्णा दैवे कर्म्मणि निःस्पृहाः । तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ।
कालवर्षी च पर्ज्जन्यः शस्यानि रसवन्ति च । सर्व्वरत्नसमृद्धा च मही पशुमती तथा ।
स्वकर्म्मनिरता विप्रा नानृतं तेषु विद्यते । स चाद्भुतमहावीर्य्यो वज्रसंहननो युवा ।
उद्यम्य मन्दरं दोर्भ्यां वहेत् सवनकाननं । चतुष्पथगदायुद्धे सर्व्वप्रहरणेषु च । २८१०
नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः । बले विष्णुसमश्चासीत्तेजसा भास्करोपमः ।
अक्षोभ्यत्वेऽर्णवसमः सहिष्णुत्वे धरासमः । सम्मतः स महीपालः प्रसन्नपुरराष्ट्रवान् ।
भूयो धर्म्मपरैर्भावैर्मुदितं जनमादिशत् ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने अष्टषष्टोऽध्यायः ॥ ६८ ॥
॥ जनमेजय उवाच ॥ सम्भवं भरतस्याहं चरितञ्च महामते । शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ।
दुष्मन्तेन च वीरेण यथा प्राप्ता शकुन्तला । तं वै पुरुषसिंहस्य भगवन् विस्तरं त्वहं । २८१५
श्रोतुमिच्छामि तत्त्वज्ञ सर्व्वं मतिमतांवर ॥ वैशम्पायन उवाच ॥ स कदाचिन्महाबाहुः प्रभूतबलवाहनः ।
वनंजगाम गहनं हयनागशतैर्वृतः । बलेन चतुरङ्गेण वृतः परमवल्गुना ।
खड्गशक्तिधरैर्वीरैर्गदामुषलपाणिभिः । प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः ।
सिंहनादैश्च योधानां शङ्खदुन्दुभिनिःस्वनैः । रथनेमिस्वनैश्चैव सनागवरबृंहितैः ।
नानायुधधरैश्चापि नानावेशधरैस्तथा । हेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः । २८२०
आसीत्किलकिलाशब्दस्तस्मिन् गच्छति पार्थिवे । प्रासादवरशृङ्गस्थाः परया नृपशोभया ।
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करं । शक्रोपमममित्रघ्नं परवारणवारणं ।
पश्यन्तः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे । अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ।
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः । इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपं ।
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्द्धनि । तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः । २८२५
निर्य्ययौ परमप्रीत्या वनं मृगजिघांसया । तं देवराजप्रतिमं मत्तवारणधूर्गतं ।
द्विजक्षत्रियविट्शूद्रा निर्य्यान्तमनुजग्मिरे । ददृशुर्व्वर्द्धयानास्ते आशीर्भिश्च जयेन च ।
सुदूरमनुजग्मुस्तं पौरजानपदास्तथा । न्यवर्त्तन्त ततः पश्चादनुज्ञाता नृपेण ह ।
सुवर्णप्रतिमेनाथ रथेन वसुधाधिपः । महीमापूरयामास घोषेण त्रिदिवं तथा ।
स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनं । विल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलं । २८३०

विषमं पर्व्वतप्रस्थैरश्मभिश्च समावृतं । निर्ज्जलं निर्म्मनुष्यञ्च बहुयोजनमायतं ।
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः । तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ।
लोडयामास दुष्मन्तः सूदयन् विविधान्मृगान् । बाणगोचरसम्प्राप्तांस्तत्र व्याघ्रगणान्बहून् ।
पातयामास दुष्मन्तो निर्व्विभेद च सायकैः । दूरस्थान्सायकैः कांश्चिदभिनत्स नराधिपः ।
अभ्याशमागतांश्चान्यान् खड्गेन निरकृन्तत । कांश्चिदेणान्समाजघ्ने शक्त्या शक्तिमतांवरः । २८३५
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः । तोमरैरसिभिश्चापि गदामुषलकम्पनैः ।
चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् । राज्ञा चाद्भुतवीर्य्येण योधैश्च समरप्रियैः ।
लोड्यमानं महारण्यं तत्यजुः स्म मृगाधिपाः । तत्र विद्रुतयूथानि हतयूथपतीनि च ।
मृगयूथान्यथौत्सुक्याच्छब्दञ्चक्रुस्ततस्ततः । शुष्कांश्चापि नदीर्गत्वा जलनैराश्यकर्षिताः ।
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः । क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि । २८४०
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः । केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः ।
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा । तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः ।
सङ्कोच्याग्रकरान्भीताः प्राद्रवन्ति स्म वेगिताः । शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ।
वन्या गजवरास्तत्र ममृदुर्म्मनुजान्बहून् । तद्वनं बलमेघेन शरधारेण संवृतं । व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपं ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ वैशम्पायन उवाच ॥ ततो मृगसहस्राणि हत्वा सबलवाहनः । राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह । २८४५
एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः । स वनस्यान्तमासाद्य महच्छून्यं समासदत् ।
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतं । मनःप्रह्लादजननं दृष्टिकान्तमतीव च ।
शीतमारुतसंयुक्तं जगामान्यन्महद्वनं । पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलं ।
विपुलं मधुरारावैर्न्नादितं विहगैस्तथा । पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितं ।
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतं । षट्पदाघूर्णिततलं लक्ष्म्या परमया युतं । २८५०
नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी । षट्पदैर्वाप्यनाकीर्णस्तस्मिन्वै काननेऽभवत् ।
विहगैर्न्नादितं पुष्पैरलंकृतमतीव च । सर्व्वर्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतं । मनोरमं महेष्वासो विवेश वनमुत्तमं ।
मारुतागलितास्तत्र द्रुमाः कुसुमशालिनः । पुष्पवृष्टिं विचित्रान्तु व्यसृजंस्ते पुनः पुनः ।
दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्म्मधुरस्वनैः । विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ।
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु । रुवन्ति रावान्मधुरान् षट्पदा मधुलिप्सवः । २८५५
तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डितान् । लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्द्धनान् ।
सम्पश्यन्सुमहातेजा बभूव मुदितस्तदा । परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः । अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ।
सिद्धचारणसङ्घैश्च गन्धर्व्वाप्सरसाङ्गणैः । सेवितं वनमत्यर्थं मत्तवानरकिन्नरं ।
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः । परिक्रामन्वने वृक्षानुपैतीव रिरंसया ।

एवं गुणसमायुक्तं ददर्श स वनं नृपः। नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभं। २८६०
प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमं। आश्रमप्रवरं रम्यं ददर्श च मनोरमं।
नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकं। तं तदाऽप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत्।
यतिभिर्बालिखिल्यैश्च वृतं मुनिगणान्वितं। अग्न्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृतं।
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च। मालिनीमभितो राजन्नदीं पुण्यां सुखोदकां।
नैकपक्षिगणाकीर्णां तपोवनमनोरमां। तत्र व्यालमृगान्सौम्यान्पश्यन् प्रीतिमवाप सः। २८६५
तं चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत। देवलोकप्रतीकाशं सर्व्वतः सुमनोहरं।
नदीमाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः। सर्व्वप्राणभृतां तत्र जननीमिव धिष्ठितां।
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीं। सकिन्नरगणावासां वानरर्क्षनिषेवितां।
पुण्यस्वाध्यायसंघुष्टां पुलिनैरुपशोभितां। मत्तवारणशार्दूलभुजगेन्द्रनिषेवितां।
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः। आश्रमप्रवरं रम्यं महर्षिगणसेवितं। २८७०
नदीमाश्रमसम्बद्धां दृष्ट्वाश्रमपदं तथा। चकाराभिप्रवेशाय मतिं स नृपतिस्तदा।
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया। नरनारायणस्थानं गङ्गयेवोपशोभितं।
मत्तवर्हिणसंघुष्टं प्रविवेश महद्वनं। तत्स चैत्ररथप्रख्यं समुपेत्य नरर्षभः।
अतीव गुणसम्पन्नमनिर्द्देश्यञ्च वर्चसा। महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनं।
ध्वजिनीमश्वसम्बाधां पदातिगजसङ्कुलां। अवस्थाप्य वनद्वारि सेनामिदमुवाच सः। २८७५
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनं। काश्यपं स्थीयतामत्र यावदागमनं मम।
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः। क्षुत्पिपासे जहौ राजा मुदं चावाप पुष्कलां।
सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः। पुरोहितसहायश्च जगामाश्रममुत्तमं।
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययं। ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह।
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतं। ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः। शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु। २८८०
यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितं। मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः।
भारुण्डसामगीताभिरथर्व्वशिरसोद्गतैः। यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः।
अथर्व्ववेदप्रवराः पूगयज्ञियसामगाः। संहितामीरयन्ति स्म पदक्रमयुतां तु ते।
शब्दसंस्कारसंयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः। नादितः स बभौ श्रीमान् ब्रह्मलोक इवापरः।
यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः। न्यायतत्त्वार्थविज्ञानसंपन्नैर्वेदपारगैः। २८८५
नानावाक्यसमाहारसमवायविशारदैः। विशेषकार्य्यविद्भिश्च मोक्षधर्म्मपरायणैः।
स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः। शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः।
द्रव्यकर्म्मगुणज्ञैश्च कार्य्यकारणवेदिभिः। पक्षिवानररुतज्ञैश्च व्यासग्रन्थसमाश्रितैः।
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितं। लोकायतिकमुख्यैश्च समन्तादनुनादितं।

तत्र तत्र च विप्रेन्द्रान्नियतान् संशितव्रतान्। जपहोमपरान् विप्रान्ददर्श परवीरहा। २८९०
आसनानि विचित्राणि रुचिराणि महीपतिः। प्रयत्नोपहितानि स दृष्ट्वा विस्मयमागमत्।
देवतायतनानाञ्च प्रेक्ष्य पूजां कृतां द्विजैः। ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः।
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभं। नातृप्यत्प्रेक्षमाणो वै तपोवनगुणैर्युतं।
स काश्यपस्यायतनं महाव्रतैर्वृतं समन्तादृषिभिस्तपोधनैः। विवेश सामात्यपुरोहितोऽरिहा विविक्तमत्यर्थमनोहरं शुभं।

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने सप्ततितमोऽध्यायः॥ ७०॥

॥ वैशम्पायन उवाच॥ ततो गच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान्। नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतं। २८९५
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाश्रमं। उवाच क इहेत्युच्चैर्व्वनं सन्नादयन्निव।
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी। निश्चक्रामाश्रमात्तस्मात्तापसीवेशधारिणी।
सा तन्दृष्ट्वैव राजानं दुष्मन्तमसितेक्षणा। स्वागतन्त इति क्षिप्रमुवाच प्रतिपूज्य च।
आसनेनार्च्चयित्वा च पाद्येनार्घ्येण चैव हि। पप्रच्छानामयं राजन् कुशलञ्च नराधिपं।
यथावदर्च्चयित्वाऽथ पृष्ट्वा चानामयं तदा। उवाच स्मयमानेव किङ्कार्य्यं क्रियतामिति। २९००
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीं। दृष्ट्वा चैवानवद्याङ्गीं यथावत्प्रतिपूजितः।
आगतोऽहं महाभागमृषिं कण्वमुपासितुं। क्व गतो भगवान् भद्रे तन्ममाचक्ष्व शोभने।
॥ शकुन्तलोवाच॥ गतः पिता मे भगवान् फलान्याहर्त्तुमाश्रमात्। मुहूर्त्तं सम्प्रतीक्षस्व द्रष्टाऽस्येनमुपागतं।
॥ वैशम्पायन उवाच॥ अपश्यमानस्तमृषिं तथा चोक्तस्तया च सः। तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीं।
विभ्राजमानां वपुषा तपसा च दमेन च। रूपयौवनसम्पन्नामित्युवाच महीपतिः। २९०५
का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनं। एवं रूपगुणोपेता कुतस्त्वमसि शोभने।
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः। इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने।
एवमुक्ता तु सा कन्या तेन राज्ञा तमाश्रमे। उवाच हसती वाक्यमिदं सुमधुराक्षरं।
कण्वस्याहं भगवतो दुष्मन्त दुहिता मता। तपस्विनो धृतिमतो धर्म्मज्ञस्य महात्मनः।
॥ दुष्मन्त उवाच॥ ऊर्द्ध्वरेता महाभागो भगवान् लोकपूजितः। चलेद्धि वृत्ताद्धर्म्मोऽपि न चलेत् संशितव्रतः। २९१०
कथं त्वं तस्य दुहिता सम्भूता वरवर्णिनी। संशयो मे महानत्र तन्मे छेत्तुमिहार्हसि।
॥ शकुन्तलोवाच॥ यथायमागमो मह्यं यथा चेदमभूत्पुरा। शृणु राजन्यथातत्त्वं यथाऽस्मि दुहिता मुनेः।
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत्। तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव।
॥ कण्व उवाच॥ तप्यमानः किल पुरा विश्वामित्रो महत्तपः। सुभृशं तापयामास शक्रं सुरगणेश्वरं।
तपसा दीप्तवीर्य्योऽयं स्थानान्मां च्यावयेदिति। भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत्। २९१५
गुणैरप्सरसां दिव्यैर्मेनके त्वं विशिष्यसे। श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु।
असावादित्यसङ्काशो विश्वामित्रो महातपाः। तप्यमानस्तपो घोरं मम कम्पयते मनः।
मेनके तव भारोऽयं विश्वामित्रः सुमध्यमे। संशितात्मा सुदुर्द्धर्ष उग्रे तपसि वर्त्तते।

स मां न च्यावयेत्स्थानात्तं वै ब्रूहि प्रलोभय । चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमं ।
रूपयौवनमाधुर्य्यचेष्टितस्मितभाषितैः । लोभयित्वा वरारोहे तपसस्तं निवर्त्तय । २९२०
॥ मेनकोवाच ॥ महातेजाः स भगवांस्तथैव च महातपाः । कोपनश्च तथा ह्येनं जानाति भगवानपि ।
तेजसस्तपसश्चैव कोपस्य च महात्मनः । त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथं ।
महाभागं वशिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् । क्षत्रजातश्च यः पूर्व्वमभवद्ब्राह्मणो बलात् ।
शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः । यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ।
बभार यत्रास्य पुरा काले दुर्गे महात्मनः । दारान्मतङ्गो धर्म्मात्मा राजर्षिर्व्याधतां गतः । २९२५
अतीतकाले दुर्भिक्षे अभ्येत्य पुनराश्रमं । मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ।
मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयं । त्वञ्च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ।
चकारान्यञ्च लोकं वै क्रुद्धो नक्षत्रसम्पदा । प्रतिश्रवणपूर्व्वाणि नक्षत्राणि चकार यः । गुरुशापहतस्यापि त्रिशङ्कोः शरणं ददौ ।
एतानि यस्य कर्म्माणि तस्याहं भृशमुद्विजे । यथाऽसौ न दहेत् क्रुद्धस्तथाज्ञापय मां विभो ।
तेजसा निर्द्दहेल्लोकान् कम्पयेद्धरणीं पदा । संक्षिपेच्च महामेरुं तूर्णमावर्त्तयेद्दिशः । २९३०
तादृशं तपसा युक्तं प्रदीप्तमिव पावकं । कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत् ।
हुताशनमुखं दीप्तं सूर्य्यचन्द्राक्षितारकं । कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ।
यमश्च सोमश्च महर्षयश्च साध्या विश्वे वालखिल्याश्च सर्व्वे । एतेऽपि यस्योद्विजन्ते प्रभावात्तस्मात्कस्मान्मादृशी नोद्विजेत ।
त्वयैवमुक्ता च कथं समीपमृषेर्न गच्छेयमहं सुरेन्द्र । रक्षान्तु मे चिन्तय देवराज यथा त्वदर्थं रक्षिताऽहं चरेयं ।
कामन्तु मे मारुतस्तत्र वासः प्रक्रीडिताया विवृणोतु देव । भवेच्च मे मन्मथस्तत्र कार्य्ये सहायभूतस्तु तव प्रसादात् । २९३५
वनाच्च वायुः सुरभिः प्रवायात्तस्मिन्काले तमृषिं लोभयन्त्याः । तथेत्युक्त्वा विहिते चैव तस्मिंस्ततो ययौ साश्रमं कौशिकस्य ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने एकसप्ततोऽध्यायः ॥ ७१ ॥
॥ कण्व उवाच ॥ एवमुक्तस्तया शक्रः सन्दिदेश सदागतिं । प्रातिष्ठत तदा काले मेनका वायुना सह ।
अथापश्यद्वरारोहा तपसा दग्धकिल्बिषं । विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ।
अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ । अपोवाह च वासोऽस्या मारुतः शशिसन्निभं ।
साऽगच्छत्त्वरिता भूमिं वासस्तदभिलिप्सती । स्मयमानेव सव्रीडं मारुतं वरवर्णिनी । २९४०
पश्यतस्तस्य राजर्षेरप्यग्निसमतेजसः । विश्वामित्रस्ततस्तां तु विषमस्थामनिन्दितां ।
गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः । अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ।
तस्या रूपगुणान् दृष्ट्वा स तु विप्रर्षभस्तदा । चकार भावं संसर्गे तया कामवशं गतः ।
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता । तौ तत्र सुचिरं कालमुभौ व्यहरतां तदा ।
रममाणौ यथाकामं यथैकदिवसं तथा । जनयामास स मुनिर्मेनकायां शकुन्तलां । २९४५

प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम्। जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु। कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदं।

तं वने विजने गर्भं सिंहव्याघ्रसमाकुले। दृष्ट्वा शयानं शकुनाः समन्तात्पर्य्यवारयन्।

नेमां हिंस्युर्व्वने बालां क्रव्यादा मांसगृद्धिनः। पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजां।

उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमां। निर्जने विपिने रम्ये शकुन्तैः परिवारितां।

आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयं। शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते। क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्म्मशासने। २९५०

निर्जने तु वने यस्मात् शकुन्तैः परिवारिता। शकुन्तलेति नामास्याः कृतं चापि ततो मया।

एवं दुहितरं विद्धि मम विप्र शकुन्तलां। शकुन्तला च पितरं मन्यते मामनिन्दिता।

॥ शकुन्तलोवाच ॥ एतदाचष्ट पृष्टः सन्मम जन्म महर्षये। सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप।

कण्वं हि पितरं मन्ये पितरं स्वमजानती। इति ते कथितं राजन्यथा वृत्तं श्रुतं मया।

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने द्वासप्ततितमोऽध्यायः ॥ ७२ ॥

॥ दुष्मन्त उवाच ॥ सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे। भार्य्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते। २९५५

सुवर्णमालां वासांसि कुण्डले परिहाटके। नानापत्तनजे शुभ्रे मणिरत्ने च शोभने।

आहरामि तवाद्याहं निष्कादीन्यजिनानि च। सर्व्वं राज्यं तवाद्यास्तु भार्य्या मे भव शोभने।

गान्धर्व्वेण च मां भीरु विवाहेनैहि सुन्दरि। विवाहानां हि रम्भोरु गान्धर्व्वः श्रेष्ठ उच्यते।

॥ शकुन्तलोवाच ॥ फलाहारो गतो राजन्पिता मे इत आश्रमात्। मुहूर्त्तं सम्प्रतीक्षस्व स मां तुभ्यं प्रदास्यति।

॥ दुष्मन्त उवाच ॥ इच्छामि त्वां वरारोहे भजमानामनिन्दिते। त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम। २९६०

आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः। आत्मनैवात्मनो दानं कर्त्तुमर्हसि धर्म्मतः।

अष्टावेव समासेन विवाहा धर्म्मतः स्मृताः। ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः। गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः।

तेषां धर्म्मान्यथा पूर्व्वं मनुः स्वायम्भुवोऽब्रवीत्। प्रशस्तांश्चतुरः पूर्व्वान्ब्राह्मणस्योपधारय।

षडानुपूर्व्व्या क्षत्रस्य विद्धि धर्म्माननिन्दिते। राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः।

पञ्चानान्तु त्रयो धर्म्म्या अधर्म्म्यौ द्वौ स्मृताविह। पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन। २९६५

अनेनविधिना कार्य्यो धर्म्मस्यैषा गतिः स्मृता। गान्धर्व्वराक्षसौ क्षत्रे धर्म्म्यौ तौ मा विशङ्किथाः। पृथग्वा यदि वा मिश्रौ कर्त्तव्यौ नात्र संशयः।

सा त्वं मम सकामस्य सकामा वरवर्णिनी। गान्धर्व्वेण विवाहेन भार्य्या भवितुमर्हसि।

॥ शकुन्तलोवाच ॥ यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्म्मम। प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो।

सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः। मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरः।

युवराजो महाराज सत्यमेतद्ब्रवीमि ते। यद्येतदेवं दुष्मन्त अस्तु मे सङ्गमस्त्वया। २९७०

॥ वैशम्पायनउवाच ॥ एवमस्त्विति तां राजा प्रत्युवाचाविचारयन्। अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते । यथात्व
मर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते ।

एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीं । जग्राह विधिवत्पाणावुवास च तया सह ।

विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः । प्रेषयिष्ये तवार्थाय वाहिनीं च तुरङ्गिणीं ।

तया त्वानाययिष्यामि निवासं स्वं शुचिस्मिते ।

॥ वैशम्पायनउवाच ॥ इतितस्याःप्रतिश्रुत्य स नृपो जनमेजय । मनसा चिन्तयन् प्रायात्काश्यपं प्रति पार्थिवः । ९९७५

भगवांस्तपसा युक्तः श्रुत्वा किन्नु करिष्यति । एवं स चिन्तयन्नेव प्रविवेश स्वकं पुरं ।

मुहूर्त्ते याते तस्मिंस्तु कण्वोऽप्याश्रममागमत् । शकुन्तला च पितरं ह्रिया नोपजगाम तं ।

विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः । उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा ।

त्वयाऽद्य भद्रे रहसि मामनादृत्य यः कृतः । पुंसा सह समायोगो न स धर्म्मोपघातकः ।

क्षत्रियस्य हि गान्धर्व्वो विवाहः श्रेष्ठ उच्यते । सकामायाः सकामेन निर्म्मन्त्रो रहसि स्मृतः । ९९८०

धर्म्मात्मा च महात्मा च दुष्मन्तः पुरुषोत्तमः । अभ्यगच्छः पतिं यत्त्वं भजमानं शकुन्तले ।

महात्मा जनिता लोके पुत्त्रस्तव महाबलः । य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीं ।

परश्चाभिप्रयातस्य चक्रं तस्य महात्मनः । भविष्यत्यप्रतिहतं सततं चक्रवर्त्तिनः ।

ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत् । विनिधाय ततो भारं सन्निधाय फलानि च ।

॥ शकुन्तलोवाच ॥ मया पतिर्वृतो राजा दुष्मन्तःपुरुषोत्तमः । तस्मै ससचिवाय त्वं प्रसादं कर्त्तुमर्हसि । ९९८५

॥ कण्वउवाच ॥ प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि । गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितं ।

॥ वैशम्पायनउवाच ॥ ततो धर्म्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा । शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि शकुन्तलोपाख्याने त्रिसप्ततोऽध्यायः ॥ ७३ ॥

॥ वैशम्पायनउवाच ॥ प्रतिज्ञाय तु दुष्मन्ते प्रतियाते शकुन्तला । गर्भं सुषाव वामोरुः कुमारममितौजसं ।

त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिं । रूपौदार्य्यगुणोपेतं दौष्मन्तिं जनमेजय ।

जातकर्म्मादिसंस्कारं कण्वः पुण्यकृतांवरः । विधिवत्कारयामास वर्द्धमानस्य धीमतः । ९९९०

दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान् । चक्राङ्कितकरः श्रीमान्महामूर्द्धा महाबलः ।

कुमारो देवगर्भाभः स तत्राशु व्यवर्द्धत । षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।

सिंहव्याघ्रान्वराहांश्च महिषांश्च गजांस्तथा । बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ।

आरोहन्दमयंश्चैव क्रीडंश्च परिधावति । ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।

अस्त्वयं सर्व्वदमनः सर्व्वं हि दमयत्यसौ । स सर्व्वदमनो नाम कुमारः समपद्यत । ९९९५

विक्रमेणौजसा चैव बलेन च समन्वितः । तं कुमारमृषिर्दृष्ट्वा कर्म्म चास्यातिमानुषं ।

समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलां । तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ।

शकुन्तलामिमां शीघ्रं सहपुत्त्रामितो गृहात् । भर्त्तुः प्रापयतागारं सर्व्वलक्षणपूजितं ।

नारीणां चिरवासो हि बान्धवेषु न रोचते। कीर्त्तिचारित्रधर्म्मघ्नस्तस्मान्नयत मा चिरं।
तथेत्युक्त्वा तु ते सर्व्वे प्रातिष्ठन्त महौजसः। शकुन्तलां पुरस्कृत्य सपुत्त्रां गजसाह्वयं। १०००
गृहीत्वाऽमरगर्भाभं पुत्त्रं कमललोचनं। आजगाम ततः शुभ्रूर्दुष्मन्तं विदिताद्वनात्।
अभिसृत्य च राजानं विदिता च प्रवेशिता। सह तेनैव पुत्त्रेण बालार्कसमतेजसा।
निवेदयित्वा ते सर्व्वे आश्रमं पुनरागताः। पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला।
अयं पुत्त्रस्त्वया राजन्यौवराज्येऽभिषिच्यतां। त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः। यथासमयमेतस्मिन्वर्त्तस्व पुरुषोत्तम।
यथा मत्सङ्गमे पूर्व्वं यः कृतः समयस्त्वया। तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति। १००५
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि। अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि।
धर्म्मकामार्थसम्बन्धं न स्मरामि त्वया सह। गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु।
सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी। निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला।
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा। कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत।
आकारं गूहमाना च मन्युना च समीरिता। तपसा सम्भृतं तेजो धारयामास वै तदा। १०१०
सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता। भर्त्तारमभिसम्प्रेक्ष्य क्रुद्धा वचनमब्रवीत्।
जानन्नपि महाराज कस्मादेवं प्रभाषसे। न जानामीति निःशङ्कं यथाऽन्यः प्राकृतो जनः।
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च। कल्याणं वद साक्ष्येण मात्मानमवमन्यथाः।
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा।
एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणं। यो वेदिता कर्म्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि। १०१५
मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति। विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः।
आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तं।
यमो वैवस्वतस्तस्य निर्य्यातयति दुष्कृतं। हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति।
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः। तं यमः पापकर्म्माणं वियातयति दुष्कृतं।
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते। न तस्य देवाः श्रेयांसो यस्यात्माऽपि न कारणं। १०२०
स्वयं प्राप्तेति मामेवं माऽवमंस्थाः पतिव्रतां। अर्घार्हां नार्च्चयसि मां स्वयं भार्य्यामुपस्थितां।
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि। न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे।
यदि मे याचमानाया वचनं न करिष्यसि। दुष्मन्त शतधा मूर्द्धा ततस्तेऽद्य स्फुटिष्यति।
भार्य्यां पतिः सम्प्रविश्य स यस्माज्जायते पुनः। जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः।
यदागमवतः पुंसस्तदपत्यं प्रजायते। तत्तारयति सन्तत्या पूर्व्वप्रेतान्पितामहान्। १०२५
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः। तस्मात्पुत्त्र इति प्रोक्तः स्वयमेव स्वयम्भुवा।
सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती। सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता।
अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा। भार्य्या मूलं त्रिवर्गस्य भार्य्यामूलं तरिष्यतः।

भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः। भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः।
सखायः प्रविविक्तेषु भवन्त्येताः प्रियम्वदाः। पितरो धर्म्मकार्य्येषु भवन्त्यार्त्तस्य मातरः। ३०३०
कान्तारेष्वपि विश्रामो जनस्याध्वनिकस्य वै। यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः।
संसरन्तमपि प्रेतं विषमेष्वेकपातिनं। भार्य्यैवान्वेति भर्त्तारं सततं या पतिव्रता।
प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते। पूर्व्वं मृतञ्च भर्त्तारं पश्चात्साध्व्यनुगच्छति।
एतस्मात्कारणाद्राजन् पाणिग्रहणमिष्यते। यदाप्नोति पतिर्भार्य्यामिह लोके परत्र च।
आत्मात्मनैव जनितः पुत्त्र इत्युच्यते बुधैः। तस्माद्भार्य्यां नरः पश्येन्मातृवत्पुत्त्रमातरं। ३०३५
भार्य्यायां जनितं पुत्त्रमादर्शेष्विव चाननं। ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत्।
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः। ह्लादन्ते स्वेषु दारेषु घर्म्मार्त्ताः सलिलेष्विव।
सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः। रतिं प्रीतिञ्च धर्म्मञ्च तास्वायत्तमवेक्ष्य हि।
आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनं। ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजां।
प्रतिपद्य यदा सूनुर्धरणीरेणुगुण्ठितः। पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः। ३०४०
स त्वं स्वयमभिप्राप्तं साभिलाषमिमं सुतं। प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे।
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः। न भरेथाः कथन्नु त्वं धर्म्मज्ञः सन् स्वमात्मजं।
न वाससां न रामाणां नापां स्पर्शस्तथाविधः। शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथासुखः।
ब्राह्मणो द्विपदां श्रेष्ठो गौर्व्वरिष्ठा चतुष्पदां। गुरुर्गरीयसां श्रेष्ठः पुत्त्रः स्पर्शवतां वरः।
स्पृशतु त्वां समाश्लिष्य पुत्त्रोऽयं प्रियदर्शनः। पुत्त्रस्पर्शात्सुखतरः स्पर्शो लोके न विद्यते। ३०४५
त्रिषु वर्षेषु पूर्णेषु प्रजाताऽहमरिन्दम। इमं कुमारं राजेन्द्र तव शोकविनाशनं।
आहर्त्ता वाजिमेधस्य शतसंख्यस्य पौरव। इति वागन्तरीक्षे मां सूतकेऽभ्यवदत्पुरा।
ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः। मूर्द्ध्नि पुत्त्रानुपाघ्राय प्रतिनन्दन्ति मानवाः।
वेदेष्वपि वदन्तीमं मन्त्रग्रामं द्विजातयः। जातकर्म्मणि पुत्त्राणां तवापि विदितं तथा।
अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्त्रनामासि स जीव शरदः शतं। ३०५०
जीवितं त्वदधीनं मे सन्तानमपि चाक्षयं। तस्मात्त्वं जीव मे पुत्त्र सुसुखी शरदां शतं।
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात्पुरुषोऽपरः। सरसीवामले त्मानं द्वितीयं पश्य वै सुतं।
यथा ह्याहवनीयोऽग्निर्गार्हपत्यात्प्रणीयते। तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधाकृतः।
मृगावकृष्टेन पुरा मृगयां परिधावता। अहमासादिता राजन् कुमारी पितुराश्रमे।
उर्व्वशी पूर्व्वचित्तिश्च सहजन्या च मेनका। विश्वाची च घृताची च षडेवाप्सरसां वराः। ३०५५
तासां सा मेनका नाम ब्रह्मयोनिवराप्सराः। दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत्।
सा मां हिमवतः प्रस्थे सुषुवे मेनकाऽप्सराः। अवकीर्य्यैव मा याता परात्मजमिवासती।
किन्नु कर्म्माशुभं पूर्व्वं कृतवत्यन्यजन्मनि। यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया।

कामं त्वया परित्यक्ता गमिष्यामि स्वमाश्रमं। इमन्तु बालं सन्त्यक्तुं नार्हस्यात्मजमात्मनः।
॥ दुष्मन्त उवाच ॥ न पुत्रमभिजानामि त्वयि जातं शकुन्तले। असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः। ३०१०
मेनका निरनुक्रोशा बन्धकी जननी तव। यया हिमवतः पृष्ठे निर्म्माल्यमिव चोज्झिता।
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव। विश्वामित्रो ब्राह्मणत्वे लुब्धः कामवशं गतः।
मेनकाऽप्सरसां श्रेष्ठा महर्षीणां पिता च ते। तयोरपत्यं कस्मात्त्वं पुंश्चलीव प्रभाषसे।
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे। विशेषतो मत्सकाशे दुष्टतापसि गम्यतां।
क्व महर्षिः स चैवाग्र्यः साऽप्सराः क्व च मेनका। क्व च त्वमेवं कृपणा तापसीवेशधारिणी। ३०१५
अतिकायश्च ते पुत्रो बालोऽतिबलवानयं। कथमल्पेन कालेन शालस्तम्भ इवोद्गतः।
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे। यदृच्छया कामरागाज्जाता मेनकया ह्यसि।
सर्व्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि। नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया।
॥ शकुन्तलोवाच ॥ राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि। आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि।
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकां। ममैवोद्रिच्यते जन्म दुष्मन्त तव जन्मनः। ३०२०
क्षितावटसि राजेन्द्र अन्तरीक्षे चराम्यहं। आवयोरन्तरं पश्य मेरुसर्षपयोरिव।
महेन्द्रस्य कुवेरस्य यमस्य वरुणस्य च। भवनान्यनुसंयामि प्रभावं पश्य मे नृप।
सत्यश्चापि प्रवादोऽयं यं प्रवक्ष्यामि तेऽनघ। निदर्शनार्थं न द्वेषाच्छ्रुत्वा तं क्षन्तुमर्हसि।
विरूपो यावदादर्शे नात्मनः पश्यते मुखं। मन्यते तावदात्मानमन्येभ्यो रूपवत्तरं।
यदा स्वमुखमादर्शे विकृतं सोऽभिवीक्षते। तदाऽन्तरं विजानीते आत्मानं चेतरं जनं। ३०२५
अतीव रूपसम्पन्नो न किञ्चिदवमन्यते। अतीव जल्पन् दुर्व्वाचो भवतीह विहेठकः।
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः। अशुभं वाक्यमादत्ते पुरीषमिव शूकरः।
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः। गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः।
अन्यान्परिवदन्साधुर्यथा हि परितप्यते। तथा परिवदन्नन्यांस्तुष्टो भवति दुर्ज्जनः।
अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिं। एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः। ३०३०
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः। यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान्।
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते। यत्र दुर्ज्जनमित्याह दुर्ज्जनः सज्जनं स्वयं।
सत्यधर्म्मच्युतात्पुंसः क्रुद्धादाशीविषादिव। अनास्तिकोऽप्युद्विजते जनः किम्पुनरास्तिकः।
स्वयमुत्पाद्य वै पुत्रं सदृशं यो न मन्यते। तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते।
कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन्। उत्तमं सर्व्वधर्म्माणां तस्मात्पुत्रं न संत्यजेत्। ३०३५
स्वपत्नी प्रभवान्पञ्च लब्धान् क्रीतान् विवर्द्धितान्। कृतानन्यासु चोत्पन्नान्पुत्रान्वै मनुरब्रवीत्।
धर्म्मकीर्त्त्यावहा नृणां मनसः प्रीतिवर्द्धनाः। त्रायन्ते नरकाज्जाताः पुत्रा धर्म्मप्लवाः पितॄन्।
स त्वं नृपतिशार्दूल पुत्रं न त्यक्तुमर्हसि। आत्मानं सत्यधर्म्मौ च पालयन्पृथिवीपते।

नरेन्द्रसिंह कपटं न वोढुं त्वमिहार्हसि । वरं कूपशताद्वापी वरं वापीशतात्क्रतुः । वरं क्रतुशतात्पुत्त्रः सत्यं पुत्त्रशताद्वरं ।

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतं । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते । ३०९५

सर्व्ववेदाधिगमनं सर्व्वतीर्थावगाहनं । सत्यञ्च वचनं राजन् समं वा स्यान्न वा समं ।

नास्ति सत्यसमो धर्म्मो न सत्याद्विद्यते परं । न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ।

राजन् सत्यं परं ब्रह्म सत्यञ्च समयः परः । मा त्याक्षीः समयं राजन् सत्यं सङ्गतमस्तु ते ।

अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयं । आत्मना हन्त गच्छामि त्वादृशे नास्ति सङ्गतं ।

ऋतेऽपि त्वयि दुष्मन्त शैलराजावतंसिकां । चतुरन्तामिमामुर्व्वीं पुत्त्रो मे पालयिष्यति । ३१००

॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला । अथान्तरीक्षात् दुष्मन्तं वागुवाचाशरीरिणी । ऋत्विक्पुरोहिताचार्य्यैर्मन्त्रिभिश्च वृतं तदा ।

भस्त्रा माता पितुः पुत्त्रो येन जातः स एव सः । भरस्व पुत्त्रं दुष्मन्त माऽवमंस्थाः शकुन्तलां ।

रेतोधाः पुत्त्र उन्नयति नरदेव यमक्षयात् । त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ।

जाया जनयते पुत्त्रमात्मनोऽङ्गं द्विधाकृतं । तस्माद्भरस्व दुष्मन्त पुत्त्रं शाकुन्तलं नृप ।

अभूतिरेषा यत्त्यक्त्वा जीवेज्जीवन्तमात्मजं । शाकुन्तलं महात्मानं दौष्मन्तिं भर पौरव । ३१०५

भर्त्तव्योऽयं त्वया यस्मादस्माकं वचनादपि । तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ।

तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसां । पुरोहितममात्यांश्च सम्प्रहृष्टोऽब्रवीदिदं ।

शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितं । अहं चाप्येवमेवैनं जानामि स्वयमात्मजं ।

यद्यहं वचनादेव गृह्णीयामिममात्मजं । भवेद्धि शङ्को लोकस्य नैवं शुद्धो भवेदयं ।

॥ वैशम्पायन उवाच ॥ तं विशोध्य तदा राजा देवदूतेन भारत । हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतं । ३११०

ततस्तस्य तदा राजा पितृकर्म्माणि सर्व्वशः । कारयामास मुदितः प्रीतिमानात्मजस्य ह ।

मूर्द्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे । सभाज्यमानो विप्रैश्च स्तूयमानश्च वन्दिभिः ।

स मुदं परमां लेभे पुत्त्रसंस्पर्शजां नृपः । ताञ्चैव भार्य्यां दुष्मन्तः पूजयामास धर्म्मतः । अब्रवीच्चैव तां राजा सान्त्वपूर्व्वमिदं वचः ।

कृतो लोकपरोक्षोऽयं सम्बन्धोऽयं त्वया सह । तस्मादेतन्मया देवि त्वच्छुद्ध्यर्थं विचारितं ।

मन्यते चैव लोकस्ते स्त्रीभावान्मयि सङ्गतं । पुत्त्रश्चायं वृतो राज्ये मया तस्माद्विचारितं । ३११५

यच्च कोपितयाऽत्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये । प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे ।

तामेवमुक्त्वा राजर्षिर्दुष्मन्तो महिषीं प्रियां । वासोभिरन्नपानैश्च पूजयामास भारत ।

दुष्मन्तस्तु तदा राजा पुत्त्रं शाकुन्तलं तदा । भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ।

तस्य तत्प्रथितं चक्रं प्रावर्त्तत महात्मनः । भास्करं दिव्यमजितं लोकसन्नादनं महत् ।

स विजित्य महीपालांश्चकार वशवर्त्तिनः । चचार च सतां धर्म्मं प्राप चानुत्तमं यशः ।

स राजा चक्रवर्त्त्यासीत्सार्व्वभौमः प्रतापवान् । ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः । ३१२०

याजयामास तं कण्वो विधिवद्भूरिदक्षिणं। श्रीमान् गोविततं नाम वाजिमेधमवाप सः। यस्मिन् सहस्रं पद्मानां कण्वाय भरतो ददौ।
भरताद्भारती कीर्त्तिर्येनेदं भारतं कुलं। अपरे ये च पूर्व्वे वै भारता इति विश्रुताः।
भरतस्यान्ववाये हि देवकल्पा महौजसः। बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः।
येषामपरिमेयानि नामधेयानि सर्व्वशः। तेषान्तु ते यथामुख्यं कीर्त्तयिष्यामि भारत। महाभागान्देवकल्पान्सत्यार्ज्जवपरायणान्। ११२५

इत्यादिपर्व्वणि सम्भवपर्व्वणि शाकुन्तले समाप्तमिति चतुःसप्ततोऽध्यायः ॥ ७४ ॥

॥ वैशम्पायन उवाच ॥ प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च। भरतस्य कुरोः पूरोराजमीढस्य चानघ। यादवानामिमं वंशं कौरवाणाञ्च सर्व्वशः। तथैव भरतानाञ्च पुण्यं स्वस्त्ययनं महत्।
धन्यं यशस्यमायुष्यं कीर्त्तयिष्यामि तेऽनघ। तेजोभिरुदिताः सर्व्वे महर्षिसमतेजसः।
दश प्राचेतसः पुत्त्राः सन्तः पुण्यजनाः स्मृताः। मुखजेनाग्निना यैस्ते पूर्व्वं दग्धा महौजसः।
तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः। सम्भूताः पुरुषव्याघ्र स हि लोकपितामहः। ११३०
वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः। आत्मतुल्यानजनयत् सहस्रं संशितव्रतान्।
सहस्रसङ्ख्यान् सम्भूतान् दक्षपुत्त्रांश्च नारदः। मोक्षमध्यापयामास साङ्ख्यज्ञानमनुत्तमं।
ततः पञ्चाशतं कन्याः पुत्त्रिका अभिसन्दधे। प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय।
ददौ दश स धर्म्माय कश्यपाय त्रयोदश। कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे।
त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा। मारीचः कश्यपस्तस्यामादित्यान् समजीजनत्। ११३५
इन्द्रादीन्वीर्य्यसम्पन्नान् विवस्वन्तमथापि च। विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः।
मार्त्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः। यमश्चापि सुतो जज्ञे ख्यातस्तस्यानुजः प्रभुः।
धर्म्मात्मा स मनुर्धीमान् यत्र वंशः प्रतिष्ठितः। मनोर्व्वंशो मानवानां ततोऽयं प्रथितोऽभवत्।
ब्रह्मक्षत्त्रादयस्तस्मान्मनोर्जातास्तु मानवाः। ततोऽभवन्महाराज ब्रह्म क्षत्त्रेण सङ्गतं।
ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन्। वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च। ११४०
कारूषमथ शर्य्यातिं तथा चैवाष्टमीमिलां। पृषध्रं नवमं प्राहुः क्षत्त्रधर्म्मपरायणं।
नाभागारिष्टदशमान्मनोः पुत्त्रान् प्रचक्षते। पञ्चाशत्तु मनोः पुत्त्रास्तथैवान्येऽभवन् क्षितौ।
अन्योन्यभेदात्ते सर्व्वे विनेशुरिति नः श्रुतं। पुरूरवास्ततो विद्वानिलायां समपद्यत।
सा वै तस्याभवन्माता पिता चैवेति नः श्रुतं। त्रयोदश समुद्रस्य द्वीपानश्नन् पुरूरवाः। अमानुषैर्वृतः सर्व्वैर्मानुषः सन्महायशाः।
विप्रैः स विग्रहं चक्रे वीर्य्योन्मत्तः पुरूरवाः। जहार च स विप्राणां रत्नान्युत्क्रोशतामपि। ११४५
सनत्कुमारस्तं राजन् ब्रह्मलोकादुपेत्य ह। अनुदर्शं ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ।
ततो महर्षिभिः क्रुद्धैः सद्यः शप्तो व्यनश्यत। लोभान्वितो मदबलान्नष्टसंज्ञो नराधिपः।
स हि गन्धर्व्वलोकस्थानुर्व्वश्या सहितो विराट्। आनिनाय क्रियार्थेऽग्नीन् यथावद्विहितांस्त्रिधा।
षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः। दृढायुश्च वनायुश्च श्रुतायुश्चोर्व्वशीसुताः।

नहुषं वृद्धशर्म्माणं रजिङ्गयमनेनसं। स्वर्भानवीसुतामेतानायोः पुत्त्रान्प्रचक्षते। ३१५०

आयुषो नहुषः पुत्त्रो धीमान्सत्यपराक्रमः। राज्यं शशास सुमहद्धर्म्मेण पृथिवीपते।

पितॄन्देवानृषीन्विप्रान् गन्धर्व्वोरगराक्षसान्। नहुषः पालयामास ब्रह्मक्षत्त्रमथो विशः।

स हत्वा दस्युसङ्घातानृषीन् करमदापयत्। पशुवच्चैव तान्पृष्ठे वाहयामास वीर्य्यवान्।

कारयामास चेन्द्रत्वमभिभूय दिवौकसः। तेजसा तपसा चैव विक्रमेणौजसा तथा।

यतिं ययातिं संयातिमायातिमयतिं ध्रुवं। नहुषो जनयामास षट्सुतान्प्रियवादिनः। ३१५५

यतिस्तु योगमास्थाय ब्रह्मभूतोऽभवन्मुनिः। ययातिर्नाहुषः सम्राडासीत्सत्यपराक्रमः।

स पालयामास महीमीजे च बहुभिर्मखैः। अतिभक्त्या पितॄनर्च्चन्देवांश्च प्रयतः सदा।

अन्वशासत्प्रजाः सर्व्वा ययातिरपराजितः। तस्य पुत्त्रा महेष्वासाः सर्व्वैः समुदिता गुणैः।

देवयान्यां महाराज शर्म्मिष्ठायाञ्च जज्ञिरे। देवयान्यामजायेतां यदुस्तुर्व्वसुरेव च।

द्रुह्युश्चानुश्च पूरुश्च शर्म्मिष्ठायां प्रजज्ञिरे। स शाश्वतीः समा राजन् प्रजा धर्म्मेण पालयन्। ३१६०

जरामार्च्छन्महाघोरां नाहुषो रूपनाशिनीं। जराऽभिभूतः पुत्त्रान्स राजा वचनमब्रवीत्।

यदुं पूरुं तुर्व्वसुञ्च द्रुह्युं चानुञ्च भारत। यौवनेन चरन्कामान्युवा युवतिभिः सह।

विहर्त्तुमहमिच्छामि साह्यं कुरुत पुत्त्रकाः। तं पुत्त्रो देवयानेयः पूर्व्वजो वाक्यमब्रवीत्।

किं कार्य्यं भवतः कार्य्यमस्माकं यौवनेन ते। ययातिरब्रवीत्तं वै जरा मे प्रतिगृह्यतां।

यौवनेन त्वदीयेन चरेयं विषयानहं। यजतो दीर्घसत्त्रैर्मे शापाच्चोशनसो मुनेः। कामार्थः परिहीणोऽयं तप्येयं तेन पुत्त्रकाः। ३१६५

मामकेन शरीरेण राज्यमेकः प्रशास्तु वः। अहं तन्वाऽभिनवया युवा काममवाप्नुयां।

ते न तस्य प्रत्यगृह्णन्यदुप्रभृतयो जरां। तमब्रवीत्ततः पूरुः कनीयान्सत्यविक्रमः।

राजंश्चराभिनवया तन्वा यौवनगोचरः। अहं जरां समादाय राज्ये स्थास्यामि ते ऽज्ञया।

एवमुक्तः स राजर्षिस्तपोवीर्य्यसमाश्रयात्। सञ्चारयामास जरां तदा पुत्त्रे महात्मनि।

पौरवेणाथ वयसा राजा यौवनमास्थितः। यायातेनापि वयसा राज्यं पूरुरकारयत्। ३१७०

ततो वर्षसहस्रान्ते ययातिरपराजितः। स्थितः स नृपशार्दूलः शार्दूलसमविक्रमः।

ययातिरपि पत्नीभ्यां दीर्घकालं विहृत्य च। विश्वाच्या सहितो रेमे पुनश्चैत्ररथे वने।

नाध्यगच्छत्तदा तृप्तिं कामानां स महायशाः। अवेत्य मनसा राजन्निमां गाथां तदा जगौ।

न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते।

पृथिवी रत्नसंपूर्णा हिरण्यं पशवः स्त्रियः। नालमेकस्य तत्सर्व्वमिति मत्वा शमं व्रजेत्। ३१७५

यदा न कुरुते पापं सर्व्वभूतेषु कर्हिचित्। कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा।

यदा चायं न विभेति यदा चास्मान्न विभ्यति। यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा।

इत्यवेक्ष्य महाप्राज्ञः कामानां फल्गुतां नृप। समाधाय मनो बुध्या प्रत्यगृह्णाज्जरां सुतात्।

दत्त्वा च यौवनं राजा पूरुं राज्येऽभिषिच्य च। अतृप्त एव कामानां पूरुं पुत्त्रमुवाच ह।

त्वया दायादवानस्मि त्वं मे वंशकरः सुतः । पौरवो वंश इति ते ख्यातिं लोके गमिष्यति । ३१८०

॥ वैशम्पायन उवाच ॥ ततः स नृपशार्दूल पूरुं राज्येऽभिषिच्य च । तपः सुचरितं कृत्वा भृगुतुङ्गे महातपाः ।

कालेन महता पश्चात्कालधर्म्ममुपेयिवान् । कारयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ।

इत्यादिपर्व्व सम्भवपर्व्वणि ययात्युपाख्याने पञ्चसप्ततोध्यायः ॥ ७५ ॥

॥ जनमेजय उवाच ॥ ययातिः पूर्व्वजोऽस्माकं दशमो यः प्रजापतेः । कथं स शुक्रतनयां लेभे परमदुर्लभां ।

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन । आनुपूर्व्व्या च मे शंस राज्ञो वंशकरान् पृथक् ।

॥ वैशम्पायन उवाच ॥ ययातिरासीन्नृपतिर्द्देवराजसमद्युतिः । तं शुक्रवृषपर्व्वाणौ वव्राते वै यथा पुरा । ३१८५

तत्तेऽहं सम्प्रवक्ष्यामि पृच्छते जनमेजय । देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ।

सुराणामसुराणाञ्च समजायत वै मिथः । ऐश्वर्य्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे ।

जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिं । पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे ।

ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्द्धिनौ भृशं । तत्र देवा निजघ्नुर्यान्दानवान्युधि सङ्गतान् ।

तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात् । ततस्ते पुनरुत्थाय योधयाञ्चक्रिरे सुरान् । ३१९०

असुरास्तु निजघ्नुर्यान्सुरान्समरमूर्द्धनि । न तान्सञ्जीवयामास बृहस्पतिरुदारधीः ।

नहि वेद स तां विद्यां यां काव्यो वेत्ति वीर्य्यवान् । सञ्जीविनीं ततो देवा विषादमगमन्परं ।

ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा । ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः ।

भजमानान्भजस्वास्मान् कुरु नः साह्यमुत्तमं । या सा विद्या निवसति ब्राह्मणेऽमिततेजसि ।

शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि । वृषपर्व्वसमीपे हि शक्यो द्रष्टुं त्वया द्विजः । ३१९५

रक्षते दानवांस्तत्र न स रक्षत्यदानवान् । तमाराधयितुं शक्तो भवान्पूर्व्ववयाः कविं ।

देवयानीञ्च दयितां सुतां तस्य महात्मनः । त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते ।

शीलदाक्षिण्यमाधुर्य्यैराचारेण दमेन च । देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवं ।

तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः । तदाऽभिपूजितो देवैः समीपे वृषपर्व्वणः ।

स गत्वा त्वरितो राजन्देवैः सम्प्रेषितः कचः । असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह । ३२००

ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः । नाम्ना कचमिति ख्यातं शिष्यं गृह्णातु मां भवान् ।

ब्रह्मचर्य्यं चरिष्यामि त्वय्यहं परमं गुरौ । अनुमन्यस्व मां ब्रह्मन्सहस्रं परिवत्सरान् ।

॥ शुक्रउवाच ॥ कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः । अर्च्चयिष्येऽहमर्च्यं त्वामर्च्चितोऽस्तु बृहस्पतिः ।

॥ वैशम्पायन उवाच ॥ कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतं । आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयं ।

व्रतस्य प्राप्तकालं स यथोक्तं प्रत्यगृह्णत । आराधयन्नुपाध्यायं देवयानीञ्च भारत । ३२०५

नित्यमाराधयिष्यंस्तौ युवा यौवनगोचरे । गायन्नृत्यन्वादयंश्च देवयानीमतोषयत् ।

स शीलयन्देवयानीं कन्यां सम्प्राप्तयौवनां । पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत ।

देवयान्यपि तं विप्रं नियमव्रतधारिणं । गायन्ती च ललन्ती च रहः पर्य्यचरत्तथा ।

पञ्चवर्षशतान्येवं कचस्य चरतो व्रतं। तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचं।
गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः। जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च। १२१०
हत्वा शालावृकेभ्यश्च प्रायच्छंस्तिलशः कृतं। ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनं।
ता दृष्ट्वा रहिता गाश्च कचेनाभ्यागता वनात्। उवाच वचनं काले देवयान्यथ भारत।
॥ देवयान्युवाच ॥ आहुतं चाग्निहोत्रं ते सूर्य्यश्चास्तं गतः प्रभो। अगोपाश्चागता गावः कचस्तात न दृश्यते।
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति। तं विना न च जीवेयमिति सत्यं ब्रवीमि ते।
॥ शुक्र उवाच ॥ अयमेहीति संशब्द्य मृतं सञ्जीवयाम्यहं। ततः सञ्जीवनीं विद्यां प्रयुज्य कचमाह्वयत्। १२१५
भित्त्वा भित्त्वा शरीराणि वृकाणां स विनिर्गतः। आहूतः प्रादुरभवत्कचो हृष्टोऽथ विद्यया।
कस्माच्चिरायितोऽसीति पृष्टस्तामाह भार्गवीं। समिधश्च कुशादीनि काष्ठभारञ्च भाविनि।
गृहीत्वा श्रमभारार्त्तो वटवृक्षं समाश्रितः। गावश्च सहिताः सर्व्वा वृक्षच्छायामुपाश्रिताः।
असुरास्तत्र मां दृष्ट्वा कस्त्वमित्यभ्यचोदयन्। बृहस्पतिसुतश्चाहं कच इत्यभिविश्रुतः।
इत्युक्तमात्रे मां हत्वा पेशीकृत्वा तु दानवाः। दत्त्वा शालावृकेभ्यस्तु सुखं जग्मुः स्वमालयं। १२२०
आहूतो विद्यया भद्रे भार्गवेण महात्मना। त्वत्समीपमिहायातः कथञ्चित्समजीवितः।
हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मणकन्यया। स पुनर्देवयान्योक्तः पुष्पाहारो यदृच्छया।
वनं ययौ कचो विप्रो ददृशुर्दानवाश्च तं। पुनस्तं पेषयित्वा तु समुद्राम्भस्यमिश्रयन्।

चिरङ्गतं पुनः कन्या पित्रे तं संन्यवेदयत्। विप्रेण पुनराहूतो विद्यया गुरुदेहजः। पुनरावृत्य तद्वृत्तं न्यवेदयत तद्यथा।

ततस्तृतीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः। प्रायच्छन् ब्राह्मणायैव सुरायामसुरास्तथा। १२२५
देवयान्यथ भूयोऽपि पितरं वाक्यमब्रवीत्। पुष्पाहारः प्रेषणकृत्कचस्तात न दृश्यते।
व्यक्तं हतो मृतो वाऽपि कचस्तात भविष्यति। तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते।
॥ शुक्र उवाच ॥ बृहस्पतेः सुतः पुत्रि कचः प्रेतगतिं गतः। विद्यया जीवितोऽप्येवं हन्यते करवाम किं।

मैवं शुचो मा रुद देवयानि न त्वादृशी मर्त्यमनुप्रशोचेत्। यस्यास्तव ब्रह्म च ब्राह्मणाश्च सेन्द्रा देवा वसवोऽथाश्विनौ च।

सुरद्विषश्चैव जगच्च सर्व्वमुपस्थाने सन्नमन्ति प्रभावात्। अशक्योऽसौ जीवयितुं द्विजातिः सञ्जीवितो वध्यते चैव भूयः। १२३०

॥ देवयान्युवाच ॥ यस्याङ्गिरा वृद्धतमः पितामहो बृहस्पतिश्चापि पिता तपोनिधिः। ऋषेः पुत्रं तमथो वाऽपि पौत्रं कथं न शोचेयमहं न रुद्यां।

स ब्रह्मचारी च तपोधनश्च सदोत्थितः कर्म्मसु चैव दक्षः। कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये प्रियो हि मे तात कचोऽभिरूपः।

॥ वैशम्पायन उवाच ॥ स पीडितो देवयान्या महर्षिः समाह्वयत्संरब्ध एव काव्यः। असंशयं मामसुरा द्विषन्ति ये मे शिष्यानागतान् सूदयन्ति।

अब्राह्मणं कर्त्तुमिच्छन्ति रौद्रास्ते मां यथा व्यभिचरन्ति नित्यं। अप्यस्य पापस्य भवेदिहान्तः कं ब्रह्महत्या न दहेदपीन्द्रं।

गुरोर्हि भीतो विद्यया चोपहूतः शनैर्वाक्यं जठरे व्याजहार। ३२२५

॥ वैशम्पायनउवाच ॥ तमब्रवीत्केन पथोपनीतस्त्वं चोदरे तिष्ठसि ब्रूहि विप्र।

॥ कचउवाच ॥ तव प्रसादान्न जहाति मां स्मृतिः स्मरामि सर्व्वं यच्च यथा च वृत्तं। नत्वेवं स्यात्तपसः क्षयो मे ततः क्लेशं घोरमिमं सहामि।

असुरैः सुरायां भवतोऽस्मि दत्तो हत्वा दग्ध्वा चूर्णयित्वा च काव्य। ब्राह्मीं मायां चासुरीं विप्र मायां त्वयि स्थिते कथमेवातिवर्त्तेत्।

॥ शुक्रउवाच ॥ किन्ते प्रियं करवाण्यद्य वत्से वधेन मे जीवितं स्यात्कचस्य। नान्यत्र कुक्षेर्मम भेदनेन दृश्येत्कचो मद्गतो देवयानि।

॥ देवयान्युवाच ॥ द्वौ मां शोकावग्निकल्पौ दहेतां कचस्य नाशस्तव चैवोपघातः। कचस्य नाशे मम शर्म्म नास्ति तवोपघाते जीवितुं नास्मि शक्ता। ३२३०

॥ शुक्रउवाच ॥ संसिद्धरूपोऽसि बृहस्पतेः सुत यत्त्वां भक्तं भजते देवयानी। विद्यामिमां प्राप्नुहि जीवनीं त्वं न चेदिन्द्रः कचरूपी त्वमद्य।

न निवर्त्तेत्पुनर्जीवन् कश्चिदन्यो ममोदरात्। ब्राह्मणं वर्ज्जयित्वैकं तस्माद्विद्यामवाप्नुहि।

पुत्रो भूत्वा भावय भावितो मामस्माद्देहादुपनिष्क्रम्य तात। समीक्षेथा धर्म्मवतीमवेक्षां गुरोः सकाशात्प्राप्य विद्यां सविद्यः।

॥ वैशम्पायन उवाच ॥ गुरोः सकाशात्समवाप्य विद्यां भित्त्वा कुक्षिं निर्विचक्राम विप्रः। कचोऽभिरूपो दक्षिणं ब्राह्मणस्य शुक्लात्यये पौर्णमास्यामिवेन्दुः।

दृष्ट्वा च तं पतितं ब्रह्मराशिमुत्थापयामास मृतं कचोऽपि। विद्यां सिद्धां तामवाप्याभिवाद्य ततः कचस्तं गुरुमित्युवाच। ३२३५

यः श्रोत्रयोरमृतं सन्निषिञ्चेद्विद्यामविद्यस्य यथा त्वमार्य्य। तं मन्येऽहं पितरं मातरञ्च तस्मै न द्रुह्येत्कृतमस्य जानन्।

ऋतस्य दातारमनुत्तमस्य निधिं निधीनामपि लब्धविद्याः। ये नाद्रियन्ते गुरुमर्च्चनीयं पापाल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः।

॥ वैशम्पायन उवाच ॥ सुरापानाद्वञ्चनां प्राप्य विद्वान् संज्ञानाशञ्चैव महातिघोरं। दृष्ट्वा कचं चापि तथाऽभिरूपं पीतं तदा सुरया मोहितेन।

समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः। सुरापानं प्रति सञ्जातमन्युः काव्यः स्वयं वाक्यमिदं जगाद।

यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात्सुरां पास्यति मन्दबुद्धिः। अपेतधर्म्मा ब्रह्महा चैव स स्यादस्मिन् लोके गर्हितः स्यात्परे च। ३२४०

मया चैतां विप्रधर्म्मोक्तिसीमां मर्य्यादां वै स्थापितां सर्व्वलोके। सन्तो विप्राः शुश्रुवांसो गुरूणां देवा लोकाश्चोपशृण्वन्तु सर्व्वे।

इतीदमुक्त्वा स महानुभावस्तपोनिधीनां निधिरप्रमेयः। तान्दानवान्दैवविमूढबुद्धीनिदं समाहूय वचोऽभ्युवाच।

आचक्षे वो दानवा बालिशाः स्थ सिद्धः कचो वत्स्यति मत्सकाशे। सञ्जीविनीं प्राप्य विद्यां महात्मा तुल्यप्रभावो ब्राह्मणो ब्रह्मभूतः।

एतावदुक्त्वा वचनं विरराम स भार्गवः। दानवा विस्मयाविष्टाः प्रययुः स्वं निवेशनं।

गुरोरुष्य सकाशे तु दशवर्षशतानि सः। अनुज्ञातः कचो गन्तुमियेष त्रिदशालयं। १२५५

इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने षट्सप्ततोऽध्यायः ॥ ७६ ॥

॥ वैशम्पायन उवाच ॥ समावृत्तव्रतं तन्तु विसृष्टं गुरुणा तदा। प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदं।

ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च। भ्राजसे विद्यया चैव तपसा च दमेन च।

ऋषिर्यथाङ्गिरा मान्यः पितुर्मम महायशाः। तथा मान्यश्च पूज्यश्च मम भूयो बृहस्पतिः।

एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन। व्रतस्थे नियमोपेते यथावर्त्ताम्यहं त्वयि।

स समावृत्तविद्यो मां भक्तां भजितुमर्हसि। गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतं। १२६०

॥ कच उवाच ॥ पूज्यो मान्यश्च भगवान्यथा तव पिता मम। तथा त्वमनवद्याङ्गि पूजनीयतरा मम।

प्राणेभ्योऽपि प्रियतरा भार्गवस्य महात्मनः। त्वं भद्रे धर्म्मतः पूज्या गुरुपुत्त्री सदा मम।

यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव। देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि।

॥ देवयान्युवाच ॥ गुरुपुत्रस्य पुत्रो वै न त्वं पुत्रश्च मे पितुः। तस्मात्पूज्यश्च मान्यश्च ममापि त्वं द्विजोत्तम।

असुरैर्हन्यमाने च कच त्वयि पुनः पुनः। तदा प्रभृति या प्रीतिस्तां त्वमद्य स्मरस्व मे। १२६५

सौहार्द्दे चानुरागे च वेत्थ मे भक्तिमुत्तमां। न मामर्हसि धर्म्मज्ञ त्यक्तुं भक्तामनागसं।

कचउवाच ॥ अनियोज्ये नियोगे मां नियुनक्षि शुभव्रते। प्रसीद सुभ्रु त्वं मह्यं गुरोर्गुरुतरा शुभे।

यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने। तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि।

भगिनी धर्म्मतो मे त्वं मैवं वोचः सुमध्यमे। सुखमस्म्युषितो भद्रे न मन्युर्व्विद्यते मम।

आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि। अविरोधेन धर्म्मस्य स्मर्त्तव्योऽस्मि कथान्तरे। अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम। १२७०

॥ देवयान्युवाच ॥ यदि मां धर्म्मकामार्थे प्रत्याख्यास्यसि याचितः। ततः कच न ते विद्या सिद्धिमेषा गमिष्यति।

॥ कचउवाच ॥ गुरुपुत्त्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः। गुरुणा चाननुज्ञातः काममेवं शपस्व मां।

आर्षं धर्म्मं ब्रुवाणोऽहं देवयानि यथा त्वया। शप्तो नार्होऽस्मि शापस्य कामतोऽद्य न धर्म्मतः।

तस्माद्भवत्या यः कामो न तथा स भविष्यति। ऋषिपुत्त्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति।

फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा। अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति। १२७५

॥ वैशम्पायनउवाच ॥ एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा। त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः।

तमागतमभिप्रेक्ष्य देवा इन्द्रपुरोगमाः। बृहस्पतिं सभाज्येदं कचं वचनमब्रुवन्।

॥ देवा ऊचुः ॥ यत्त्वयाऽस्मद्धितं कर्म्म कृतं वै परमाद्भुतं। न ते यशः प्रणशिता भागभाक्च भविष्यसि।

इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने सप्तसप्ततोऽध्यायः ॥ ७७ ॥

॥ वैशम्पायन उवाच ॥ कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकसः। कचादधीत्य तां विद्यां कृतार्था भरतर्षभ।

सर्व्व एव समागम्य शतक्रतुमथाब्रुवन्। कालस्ते विक्रमस्याद्य जहि शत्रून् पुरन्दर। ३२८०

एवमुक्तस्तु सहितैस्त्रिदशैर्मघवांस्तदा। तथेत्युक्त्वा प्रचक्राम सोऽपश्यत वने स्त्रियः।

क्रीडन्तीनान्तु कन्यानां वने चैत्ररथोपमे। वायुभूतः स वस्त्राणि सर्व्वाण्येव व्यमिश्रयत्।

ततो जलात् समुत्तीर्य्य कन्यास्ताः सहितास्तदा। वस्त्राणि जगृहुस्तानि यथासन्नान्यनेकशः।

तत्र वासो देवयान्याः शर्म्मिष्ठा जगृहे तदा। व्यतिमिश्रमजानन्ती दुहिता वृषपर्व्वणः।

ततस्तयोर्म्मिथस्तत्र विरोधः समजायत। देवयान्याश्च राजेन्द्र शर्म्मिष्ठायाश्च तत्कृते। ३२८५

॥ देवयान्युवाच ॥ कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि। समुदाचारहीनाया न ते साधु भविष्यति।

॥ शर्म्मिष्ठोवाच ॥ आसीनञ्च शयानञ्च पिता ते पितरं मम। स्तौति वन्दीव चाभीक्ष्णं नीचैः स्थित्वा विनीतवत्।

याचतस्त्वं हि दुहिता स्तुवतः प्रतिगृह्णतः। सुताऽहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः।

आदुन्वस्व विदुन्वस्व द्रुह्य कुप्यस्व याचकि। अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकि।

लप्स्यसे प्रतियोद्धारं नहि त्वां गणयाम्यहं ॥ वैशम्पायन उवाच ॥ समुच्छ्रयं देवयानीं गतां सक्तां च वाससि। शर्म्मिष्ठा प्राक्षिपत्कूपे ततः स्वपुरमागमत्। ३२९०

हतेयमिति विज्ञाय शर्म्मिष्ठा पापनिश्चया। अनवेक्ष्य ययौ वेश्म क्रोधवेगपरायणा।

अथ तं देशमभ्यागाद्ययातिर्न्नहुषात्मजः। श्रान्तयुग्यः श्रान्तहयो मृगलिप्सुः पिपासितः।

स नाहुषः प्रेक्षमाण उदपानं गतोदकं। ददर्श राजा तां तत्र कन्यामग्निशिखामिव।

तामपृच्छत्स दृष्ट्वैव कन्याममरवर्णिनीं। सान्त्वयित्वा नृपश्रेष्ठः साम्ना परमवल्गुना।

का त्वं ताम्रनखी श्यामा सुमृष्टमणिकुण्डला। दीर्घं ध्यायसि चात्यर्थं कस्माच्छोचसि चातुरा। ३२९५

कथञ्च पतिताऽस्मिन् कूपे वीरुत्तृणावृते। दुहिता चैव कस्य त्वं वद सत्यं सुमध्यमे।

देवयान्युवाच। योऽसौ देवैर्हतान्दैत्यानुत्थापयति विद्यया। तस्य शुक्रस्य कन्याऽहं स मां नूनं न बुध्यते।

एष मे दक्षिणो राजन् पाणिस्ताम्रनखाङ्गुलिः। समुद्धर गृहीत्वा मां कुलीनस्त्वं हि मे मतः।

जानामि हि त्वां संशान्तं वीर्य्यवन्तं यशस्विनं। तस्मान्मां पतितामस्मात् कूपादुद्धर्त्तुमर्हसि।

॥ वैशम्पायन उवाच ॥ तामथो ब्राह्मणीं राजा विज्ञाय नहुषात्मजः। गृहीत्वा दक्षिणे पाणावुज्जहार ततोऽवटात्। ३३००

उद्धृत्य चैनां तरसा तस्मात् कूपान्नराधिपः। आमन्त्रयित्वा सुश्रोणीं ययातिः स्वपुरं ययौ।

गते तु नाहुषे तस्मिन् देवयान्यप्यनिन्दिता। उवाच शोकसन्तप्ता घूर्णिकामागतां पुरः।

देवयान्युवाच। त्वरितं घूर्णिके गच्छ शीघ्रमाचक्ष्व मे पितुः। नेदानीं सम्प्रवेक्ष्यामि नगरं वृषपर्व्वणः।

॥ वैशम्पायन उवाच ॥ सा तत्र त्वरितं गत्वा घूर्णिकाऽसुरमन्दिरं। दृष्ट्वा काव्यमुवाचेदं सम्भ्रमाविष्टचेतना।

आचचक्षे महाप्राज्ञं देवयानीं वने हतां। शर्म्मिष्ठया महाभाग दुहित्रा वृषपर्व्वणः। ३३०५

श्रुत्वा दुहितरं काव्यस्तत्र शर्म्मिष्ठया हतां। त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने।

दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने। बाहुभ्यां सम्परिष्वज्य दुःखितो वाक्यमब्रवीत्।
आत्मदोषैर्नियच्छन्ति सर्व्वे दुःखसुखे जनाः। मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता।
॥ देवयान्युवाच ॥ निष्कृतिर्मेऽस्तु वा माऽस्तु शृणुष्वावहितो मम। शर्मिष्ठया यदुक्ताऽस्मि दुहित्रा वृषपर्व्वणः।
सत्यं किलैतत्सा प्राह दैत्यानामसि गायनः। एवं हि मे कथयति शर्मिष्ठा वार्षपर्व्वणी। ३३१०
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणा भृशं। स्तुवतो दुहिता नित्यं याचतः प्रतिगृह्णतः।
अहन्तु स्तूयमानस्य ददतोऽप्रतिगृह्णतः। इदं मामाह शर्मिष्ठा दुहिता वृषपर्व्वणः। क्रोधसंरक्तनयना दर्पपूर्णा पुनः पुनः।
यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः। प्रसादयिष्ये शर्मिष्ठामित्युक्ता तु सखी मया।
॥ शुक्र उवाच ॥ स्तुवतो दुहिता न त्वं याचतः प्रतिगृह्णतः। अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि।
वृषपर्व्वैव तद्वेद शक्रो राजा च नाहुषः। अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम। ३३१५
यच्च किञ्चित्सर्व्वगतं भूमौ वा यदि वा दिवि। तस्याहमीश्वरो नित्यं तुष्टेनोक्तः स्वयम्भुवा।
अहं जलं विमुञ्चामि प्रजानां हितकाम्यया। पुष्णाम्योषधयः सर्व्वा इति सत्यं ब्रवीमि ते।
॥ वैशम्पायन उवाच ॥ एवं विषादमापन्नां मन्युना सम्प्रपीडितां। वचनैर्मधुरैः श्लक्ष्णैः सान्त्वयामास तां पिता।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्यानेऽष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
॥ शुक्र उवाच । यः परेषां नरो नित्यमतिवादांस्तितिक्षते। देवयानि विजानीहि तेन सर्व्वमिदं जितं।
यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा। स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते। ३३२०
यः समुत्पतितं क्रोधमक्रोधेन निरस्यति। देवयानि विजानीहि तेन सर्व्वमिदं जितं।
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति। यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते।
यः सन्धारयते मन्युं योऽतिवादांस्तितिक्षते। यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनं।
यो यजेदपरिश्रान्तो मासि मासि शतं समाः। न क्रुद्ध्येद्यश्च सर्व्वस्य तयोरक्रोधनोऽधिकः।
यत्कुमाराः कुमार्य्यश्च वैरं कुर्य्युरचेतसः। न तत्प्राज्ञोऽनुकुर्व्वीत न विदुस्ते बलाबलं। ३३२५
॥ देवयान्युवाच ॥ वेदाहं तात बालाऽपि धर्म्माणां यदिहान्तरं। अक्रोधे चातिवादे च वेद चापि बलाबलं।
शिष्यस्याशिष्यवृत्तेस्तु न क्षन्तव्यं बुभूषता। तस्मात्सङ्कीर्णवृत्तेषु वासो मम न रोचते।
पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च। न तेषु निवसेत्प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु।
ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन वा। तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते।
वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्व्वणः। मम मथ्नाति हृदयमग्निकाम इवारणिं। ३३३०
न ह्यतो दुष्करतरं मन्ये लोकेष्वपि त्रिषु। यः सपत्नश्रियं दीप्तां हीनश्रीः पर्य्युपासते। मरणं शोभनं तस्य इति विद्वज्जना विदुः।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ वैशम्पायन उवाच ॥ ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह। वृषपर्व्वाणमासीनमित्युवाचाविचारयन्।

नाधर्म्मश्चरितो राजन्सद्यः फलति गौरिव। शनैरावर्त्त्यमानो हि कर्त्तुर्मूलानि कृन्तति।
पुत्त्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति। फलत्येव ध्रुवं पापं गुरुभुक्तमिवोदरे।
यदघातयथा विप्रं कचमाङ्गिरसं तदा। अपापशीलं धर्म्मज्ञं शुश्रूषुं मद्गृहे रतं। ३३३५
वधादनर्हतस्तस्य वधाच्च दुहितुर्म्मम। वृषपर्व्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवं।
स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह। अहो मामभिजानासि दैत्य मिथ्याप्रलापिनं। यथेममात्मनो दोषं न नियच्छस्युपेक्षसे।
॥ वृषपर्व्वोवाच ॥ नाधर्म्मं न मृषावादं त्वयि जानामि भार्गव। त्वयि धर्म्मश्च सत्यञ्च तत्प्रसीदतु नो भवान्।
यद्यस्मानपहाय त्वमितो गच्छसि भार्गव। समुद्रं संप्रवेक्ष्यामो नान्यदस्ति परायणं।
॥ शुक्र उवाच ॥ समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः। दुहितुर्न्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे। ३३४०
प्रसाद्यतां देवयानी जीवितं यत्र मे स्थितं। योगक्षेमकरस्तेऽहमिन्द्रस्येव बृहस्पतिः।
॥ वृषपर्व्वोवाच ॥ यत्किञ्चिदसुरेन्द्राणां विद्यते वसु भार्गव। भुवि हस्तिगवाश्वञ्च तस्य त्वं मम चेश्वरः।
॥ शुक्र उवाच ॥ यत्किञ्चिदस्ति द्रविणं दैत्येन्द्राणां महासुर। तस्येश्वरोऽस्मि यद्येषा देवयानी प्रसाद्यतां।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तथेत्याह वृषपर्व्वा महाकविः। देवयान्यन्तिकं गत्वा तमर्थं प्राह भार्गवः।
॥ देवयान्युवाच ॥ यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव। नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयं। ३३४५
॥ वृषपर्व्वोवाच ॥ यं काममभिकामासि देवयानि शुचिस्मिते। तत्तेऽहं सम्प्रदास्यामि यदि वाऽपि हि दुर्लभं।
॥ देवयान्युवाच ॥ दासीं कन्यासहस्रेण शर्म्मिष्ठामभिकामये। अनु मां तत्र गच्छेत्सा यत्र दद्याच्च मे पिता।
॥ वृषपर्व्वोवाच ॥ उत्तिष्ठ त्वं गच्छ धात्रि शर्म्मिष्ठां शीघ्रमानय। यञ्च कामयते कामं देवयानी करोतु तं।
॥ वैशम्पायन उवाच ॥ ततो धात्री तत्र गत्वा शर्म्मिष्ठां वाक्यमब्रवीत्। उत्तिष्ठ भद्रे शर्म्मिष्ठे ज्ञातीनां सुखमावह।
त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः। सा यं कामयते कामं स कार्य्योऽद्य त्वयाऽनघे। ३३५०
॥ शर्म्मिष्ठोवाच ॥ यं सा कामयते कामं करवाण्यहमद्य तं। यद्येवमाह्वयेच्छुक्रो देवयानीकृते हि मां। मद्दोषान्माऽगमच्छुक्रो देवयानी च मत्कृते।
॥ वैशम्पायन उवाच ॥ ततः कन्यासहस्रेण वृता शिबिकया तदा। पितुर्न्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात्।
॥ शर्म्मिष्ठोवाच ॥ अहं दासीसहस्रेण दासी ते परिचारिका। अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता।
॥ देवयान्युवाच ॥ स्तुवतो दुहिताऽहं ते याचतः प्रतिगृह्णतः। स्तूयमानस्य दुहिता कथं दासी भविष्यसि।
॥ शर्म्मिष्ठोवाच ॥ येन केनचिदार्त्तानां ज्ञातीनां सुखमावहेत्। अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता। ३३५५
॥ वैशम्पायन उवाच ॥ प्रतिश्रुते दासभावे दुहित्रा वृषपर्व्वणः। देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत्।
॥ देवयान्युवाच ॥ प्रविशामि पुरं तात तुष्टाऽस्मि द्विजसत्तम। अमोघं तव विज्ञानमस्ति विद्याबलञ्च ते।
॥ वैशम्पायन उवाच ॥ एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः। प्रविवेश पुरं हृष्टः पूजितः सर्व्वदानवैः।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्यानेऽशीतितमोऽध्यायः॥ ८०॥
॥ वैशम्पायन उवाच ॥ अथ दीर्घस्य कालस्य देवयानी नृपोत्तम। वनमन्तदेव निर्याता क्रीडार्थं वरवर्णिनी।

तेन दासीसहस्रेण सार्द्धं शर्म्मिष्ठया तदा। तमेव देशं सम्प्राप्ता यथाकामं चचार सा। ३३९०
ताभिः सखीभिः सहिता सर्व्वाभिर्मुदिता भृशं। क्रीडन्त्योऽभिरताः सर्व्वाः पिबन्त्यो मधुमाधवीं।
खादन्त्यो विविधान्भक्ष्यान्विदशन्त्यः फलानि च। पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया।
तमेव देशं सम्प्राप्तो जलार्थी श्रमकर्षितः। ददृशे देवयानीं स शर्म्मिष्ठां ताश्च योषितः।
पिबन्तीर्ललमानाश्च दिव्याभरणभूषिताः। उपविष्टाञ्च ददृशे देवयानीं शुचिस्मितां।
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनां। शर्म्मिष्ठया सेव्यमानां पादसंवाहनादिभिः। ३३९५
॥ ययातिरुवाच ॥ द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते। गोत्रे च नामनी चैव द्वयोः पृच्छाम्यहं शुभे।
॥ देवयान्युवाच ॥ आख्यास्याम्यहमादत्स्व वचनं मे नराधिप। शुक्रो नामासुरगुरुः सुतां जानीहि तस्य मां।
इयञ्च मे सखी दासी यत्राहं तत्र गामिनी। दुहिता दानवेन्द्रस्य शर्म्मिष्ठा वृषपर्व्वणः।
॥ ययातिरुवाच ॥ कथन्नु ते सखी दासी कन्येयं वरवर्णिनी। असुरेन्द्रसुता सुभ्रूः परं कौतूहलं हि मे।
॥ देवयान्युवाच ॥ सर्व्व एव नरश्रेष्ठ विधानमनुवर्त्तते। विधानविहितं मत्वा मा विचित्राः कथाः कृथाः। ३४००
राजवद्रूपवेशौ ते ब्राह्मीं वाचं बिभर्षि च। को नाम त्वं कुतश्चासि कस्य पुत्रश्च शंस मे।
॥ ययातिरुवाच ॥ ब्रह्मचर्य्येण वेदो मे कृत्स्नः श्रुतिपथं गतः। राजाऽहं राजपुत्रश्च ययातिरिति विश्रुतः।
॥ देवयान्युवाच ॥ केनास्यर्थेन नृपते इमं देशमुपागतः। जिघृक्षुर्व्वारिजं किञ्चिदथ वा मृगलिप्सया।
॥ ययातिरुवाच ॥ मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः। बहुधाऽप्यनुयुक्तोऽस्मि तदनुज्ञातुमर्हसि।
॥ देवयान्युवाच ॥ द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्म्मिष्ठया सह। त्वदधीनाऽस्मि भद्रं ते सखा भर्त्ता च मे भव। ३४०५
॥ ययातिरुवाच ॥ विद्ध्यौशनसि भद्रन्ते न त्वामर्होऽस्मि भाविनि। अविवाह्या हि राजानो देवयानि पितुस्तव।
॥ देवयान्युवाच ॥ संसृष्टं ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्म संहितं। ऋषिश्चाप्यृषिपुत्रश्च नाहुषाङ्ग वहस्व मां।
॥ ययातिरुवाच ॥ एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने। पृथग्धर्म्माः पृथक्शौचास्तेषान्तु ब्राह्मणो वरः।
॥ देवयान्युवाच ॥ पाणिधर्म्मो नाहुषायं न पुम्भिः सेवितः पुरा। तं मे त्वमग्रहीरग्रे वृणोमि त्वामहं ततः।
कथं नु मे मनस्विन्याः पाणिमन्यः पुमान्स्पृशेत्। गृहीतमृषिपुत्रेण स्वयं वाप्यृषिणा त्वया। ३४१०
॥ ययातिरुवाच ॥ क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्व्वतोमुखात्। दुराधर्षतरो विप्रो ज्ञेयः पुंसा विजानता।
॥ देवयान्युवाच ॥ कथमाशीविषात्सर्पाज्ज्वलनात्सर्व्वतोमुखात्। दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ।
॥ ययातिरुवाच ॥ एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते। हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः।
दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम। अतोऽदत्ताञ्च पित्रा त्वां भद्रे न विवहाम्यहं।
॥ देवयान्युवाच ॥ दत्तां वहस्व तन्मां त्वं पित्रा राजन्वृतो मया। अयाचतो भयं नास्ति दत्ताञ्च प्रतिगृह्णतः। ३४१५
॥ वैशम्पायनउवाच ॥ त्वरितं देवयान्याथ सन्दिष्टं पितुरात्मनः। सर्व्वं निवेदयामास धात्री तस्मै यथातथं।
श्रुत्वैव च स राजानं दर्शयामास भार्गवः। दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतः स्थितः। देवयान्युवाच। राजाऽयं नाहुषस्तात दुर्गमे पाणिमग्रहीत्। नमस्ते देहि मामस्मै लोके नान्यं पतिं वृणे।

॥ शुक्र उवाच ॥ हृतोऽनया पतिर्वीर सुतया मे मनीषया। व्यतिक्रमान्मया दत्ता महिषीं नहुषात्मज।

॥ ययातिरुवाच ॥ अधर्म्मो न स्पृशेदेव महात्मन्निह भार्गव। वर्णसङ्करजो ब्रह्मन्निति त्वां प्रवृणोम्यहं। ३३९०

॥ शुक्र उवाच ॥ अधर्म्मात्त्वां विमुञ्चामि वृणु त्वं वरमीप्सितं। अस्मिन्विवाहे माम्लासीरहं पापं नुदामि ते।

वहस्व भार्य्यां धर्म्मेण देवयानीं सुमध्यमां। अनया सह सम्प्रीतिमतुलां समवाप्नुहि।

इयं चापि कुमारी ते शर्म्मिष्ठा वार्षपर्व्वणी। सम्पूज्या सततं राजन्मा चैनां शयने ह्वयेः।

॥ वैशम्पायन उवाच ॥ एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणं। शास्त्रोक्तविधिना राजा विवाहमकरोच्छुभं।

लब्ध्वा शुक्रान्महद्वित्तं देवयानीं तदोत्तमां। द्विसहस्रेण कन्यानां तथा शर्म्मिष्ठया सह। ३३९५

सम्पूजितश्च शुक्रेण दैत्यैश्च नृपसत्तमः। जगाम स्वपुरं हृष्टोऽनुज्ञातोऽथ महात्मना।

इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने एकाशीतितमोऽध्यायः॥ ८१ ॥

॥ वैशम्पायन उवाच ॥ ययातिः स्वपुरं प्राप्य महेन्द्रपुरसन्निभं। प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत्।

देवयान्याश्चानुमते सुतां तां वृषपर्व्वणः। अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत्।

वृतां दासीसहस्रेण शर्म्मिष्ठां वार्षपर्व्वणीं। वासोभिरन्नपानैश्च संविभज्य सुसत्कृतां।

देवयान्या तु सहितः स नृपो नहुषात्मजः। विजहार बहूनब्दान्देववन्मुदितः सुखी। ३४००

ऋतुकाले तु सम्प्राप्ते देवयानी वराङ्गना। लेभे गर्भं प्रथमतः कुमारञ्च व्यजायत।

गते वर्षसहस्रे तु शर्म्मिष्ठा वार्षपर्व्वणी। ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत्।

ऋतुकालश्च सम्प्राप्तो न च मेऽस्ति पतिर्वृतः। किं प्राप्तं किन्नु कर्त्तव्यं किं वा कृत्वा कृतं भवेत्।

देवयानी प्रजाताऽसौ वृथाऽहं प्राप्तयौवना। यथा तया वृतो भर्त्ता तथैवाहं वृणोमि तं।

राज्ञा पुत्त्रफलं देयमिति मे निश्चिता मतिः। अपीदानीं स धर्म्मात्मा इयान्मे दर्शनं रहः। ३४०५

अथ निष्क्रम्य राजाऽसौ तस्मिन्काले यदृच्छया। अशोकवनिकाभ्याशे शर्म्मिष्ठां प्रेक्ष्य धिष्ठितः।

तमेकं रहिते दृष्ट्वा शर्म्मिष्ठा चारुहासिनी। प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत्।

शर्म्मिष्ठोवाच ॥ सोमस्येन्द्रस्य विष्णोर्व्वा यमस्य वरुणस्य च। तव वा नाहुष गृहे कः स्त्रियं द्रष्टुमर्हति।

रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा। सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप।

ययातिरुवाच॥ वेद्मि त्वां शीलसम्पन्नां दैत्यकन्यामनिन्दितां। रूपञ्च ते न पश्यामि सूच्यग्रमपि निन्दितं। ३४१०

अब्रवीदुशना काव्यो देवयानीं यदाऽवहं। नेयमाह्वयितव्या ते शयने वार्षपर्व्वणी।

॥ शर्म्मिष्ठोवाच ॥ न नर्म्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। प्राणात्यये सर्व्वधनापहारे पञ्चानृतान्याहुर पातकानि।

पृष्टन्तु साक्ष्ये प्रवदन्तमन्यथा वदन्ति मिथ्या पतितं नरेन्द्र। एकार्थतायान्तु समाहितायां मिथ्या वदन्तं त्वनृतं हिनस्ति।

॥ ययातिरुवाच ॥ राजा प्रमाणं भूतानां स नश्येत मृषा वदन्। अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्त्तुमुत्सहे।

॥ शर्म्मिष्ठोवाच ॥ समावेतौ मतौ राजन्पतिः सख्याश्च यः पतिः। समं विवाहमित्याहुः सख्या मेऽसि वृतः पतिः। ३४१५

॥ ययातिरुवाच ॥ दातव्यं याचमानेभ्य इति मे व्रतमाहितं। त्वञ्च याचसि मां कामं ब्रूहि किं करवाणि ते।

॥ शर्म्मिष्ठोवाच ॥ अभ्युत्पादि मां राजन्धर्म्मञ्च प्रतिपादय। त्वत्तोऽपत्यवती लोके चरेयं धर्म्ममुत्तमं।
त्रय एवाधना राजन्भार्य्या दासस्तथा सुतः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनं।
देवयान्या भुजिष्याऽस्मि वश्या च तव भार्गवी। सा चाहञ्च त्वया राजन्भजनीये भजस्व मां।
॥ वैशम्पायनउवाच ॥ एवमुक्तस्तु राजा स तथ्यमित्यभिजज्ञिवान्। पूजयामास शर्म्मिष्ठां धर्म्मञ्च प्रत्यपादयत्। १४२०
स समागम्य शर्म्मिष्ठां यथाकाममवाप्य च। अन्योन्यं चापि सम्पूज्य जग्मतुस्तौ यथागतं।
तस्मिन्समागमे सुभ्रूः शर्म्मिष्ठा चारुहासिनी। लेभे गर्भं प्रथमतस्तस्मान्नृपतिसत्तमात्।
प्रजज्ञे च ततः काले राजन्राजीवलोचना। कुमारं देवगर्भाभं राजीवनिभलोचनं।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने द्व्यशीतोऽध्यायः॥ ८२ ॥
॥ वैशम्पायनउवाच ॥ श्रुत्वा कुमारं जातन्तु देवयानी शुचिस्मिता। चिन्तयामास दुःखार्त्ता शर्म्मिष्ठां प्रति भारत।
अभिगम्य च शर्म्मिष्ठां देवयान्यब्रवीदिदं॥ देवयान्युवाच॥ किमिदं वृजिनं सुभ्रु कृतं वै कामलुब्धया। १४२५
॥ शर्म्मिष्ठोवाच ॥ ऋषिरभ्यागतः कश्चिद्धर्म्मात्मा वेदपारगः। स मया वरदः कामं याचितो धर्म्मसंहितं।
नाहमन्यायतः काममाचरामि शुचिस्मिते। तस्मादृषेर्म्ममापत्यमिति सत्यं ब्रवीमि ते।
॥ देवयान्युवाच ॥ शोभनं भीरु यद्येवमथ स ज्ञायते द्विजः। गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजं।
॥ शर्म्मिष्ठोवाच ॥ तपसा तेजसा चैव दीप्यमानं यथा रविं। तं दृष्ट्वा मम सम्प्रष्टुं शक्तिर्नासीच्छुचिस्मिते।
॥ देवयान्युवाच ॥ यद्येतदेवं शर्म्मिष्ठे न मन्युर्व्विद्यते मम। अपत्यं यदि ते लब्धं ज्येष्ठाच्छ्रेष्ठाच्च वै द्विजात्। १४३०
॥ वैशम्पायनउवाच ॥ अन्योन्यमेवमुक्त्वा तु सम्प्रहस्य च ते मिथः। जगाम भार्गवी वेश्म तथ्यमित्यवजग्मुषी।
ययातिर्देवयान्यान्तु पुत्त्रावजनयन्नृपः। यदुञ्च तुर्व्वसुञ्चैव शक्रविष्णू इवापरौ।
तस्मादेव तु राजर्षेः शर्म्मिष्ठा वार्षपर्व्वणी। द्रुह्युं चानुञ्च पूरुञ्च त्रीन्कुमारानजीजनत्।
ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता। ययातिसहिता राजन्जगाम रहितं वनं।
ददर्श च तदा तत्र कुमारान्देवरूपिणः। क्रीडमानान्सुविश्रब्धान्विस्मिता चेदमब्रवीत्। १४३५
॥ देवयान्युवाच ॥ कस्यैते दारका राजन्देवपुत्त्रोपमाः शुभाः। वर्च्चसा रूपतश्चैव सदृशा मे मतास्तव।
॥ वैशम्पायनउवाच ॥ एवं पृष्ट्वा तु राजानं कुमारान्पर्य्यपृच्छत। देवयान्युवाच। किं नामधेयं वंशो वः पुत्त्रकाः कश्च वः पिता।
प्रब्रूत मे यथा तथ्यं श्रोतुमिच्छामि तं ह्यहं।
तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमं। शर्म्मिष्ठां मातरञ्चैव तथाचख्युश्च दारकाः।
॥ वैशम्पायनउवाच ॥ इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः। नाभ्यनन्दत तान्राजा देवयान्यास्तदन्तिके।
रुदन्तस्तेऽथ शर्म्मिष्ठामभ्ययुर्ब्बालकास्ततः। श्रुत्वा तु तेषां बालानां सव्रीड इव पार्थिवः। १४४०
दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति। बुद्ध्वा च तत्त्वं सा देवी शर्म्मिष्ठामिदमब्रवीत्।
॥ देवयान्युवाच ॥ मदधीना सती कस्मादकार्षीर्व्विप्रियं मम। तमेवासुरधर्म्मं त्वमास्थिता न बिभेषि मे।
॥ शर्म्मिष्ठोवाच ॥ यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि। न्यायतो धर्म्मतश्चैव चरन्ती न बिभेमि ते।
यदा त्वया वृतो भर्त्ता वृत एव तदा मया। सखीभर्त्ता हि धर्म्मेण भर्त्ता भवति शोभने।

पूज्याऽसि मम मान्या च श्रेष्ठा च ब्राह्मणी ह्यसि। त्वत्तोऽपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत्। ३४४५

॥ वैशम्पायन उवाच ॥ श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदं। राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया।

सहसोत्पतितां श्यामां दृष्ट्वा तां चाश्रुलोचनां। तूर्णं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा।

अनुवव्राज सम्भ्रान्तः पृष्ठतः सान्त्वयन्नृपः। न्यवर्त्तत नचैव स्म क्रोधसंरक्तलोचना।

अविब्रुवन्ती किञ्चिच्च राजानं चारुलोचना। अचिरादेव सम्प्राप्ता काव्यस्योशनसोऽन्तिकं।

सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता। अनन्तरं ययातिस्तु पूजयामास भार्गवं। ३४५०

॥ देवयान्युवाच ॥ अधर्म्मेण जितो धर्म्मः प्रवृत्तमधरोत्तरं। शर्म्मिष्ठयाऽतिवृत्ताऽस्मि दुहित्रा वृषपर्व्वणः।

त्रयोऽस्यां जनिताः पुत्रा राज्ञा तेन ययातिना। दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते।

धर्म्मज्ञ इति विख्यात एष राजा भृगूद्वह। अतिक्रान्तश्च मर्य्यादां काव्यैतत्कथयामि ते।

॥ शुक्र उवाच ॥ धर्म्मज्ञः सन्महाराज योऽधर्म्ममकृथाः प्रियं। तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया।

॥ ययातिरुवाच ॥ ऋतुं वै याचमानाया भगवन्नान्यचेतसा। दुहितुर्दानवेन्द्रस्य धर्म्म्यमेतत्कृतं मया। ३४५५

ऋतुं वै याचमानाया न ददाति पुमानृतुं। भ्रूणहेत्युच्यते ब्रह्मन् स इह ब्रह्मवादिभिः।

अभिकामां स्त्रियं यश्च गम्यां रहसि याचितः। नोपैति स च धर्म्मेषु भ्रूणहेत्युच्यते बुधैः।

इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह। अधर्म्मभयसंविग्नः शर्म्मिष्ठामुपजग्मिवान्।

॥ शुक्र उवाच ॥ नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव। मिथ्याचारस्य धर्म्मेषु चौर्य्यं भवति नाहुष।

॥ वैशम्पायन उवाच ॥ क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा। पूर्व्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत। ३४६०

॥ ययातिरुवाच ॥ अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह। प्रसादं कुरु मे ब्रह्मन् जरेयं न विशेच्च मां।

॥ शुक्र उवाच ॥ नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप। जरां त्वेतां त्वमन्यस्मिन् संक्रामय यदीच्छसि।

॥ ययातिरुवाच ॥ राज्यभाक् स भवेद्ब्रह्मन् पुण्यभाक् कीर्त्तिभाक् तथा। यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यतां।

॥ शुक्र उवाच ॥ संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज। मामनुध्याय भावेन न च पापमवाप्स्यसि।

वयो दास्यति ते पुत्रो यः स राजा भविष्यति। आयुष्मान् कीर्त्तिमांश्चैव बह्वपत्यस्तथैव च। ३४६५

इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने त्र्यशीतितमोऽध्यायः॥ ८३॥

॥ वैशम्पायन उवाच ॥ जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि। पुत्रं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः।

॥ ययातिरुवाच ॥ जरा वली च मां तात पलितानि च पर्य्यगुः। काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने।

त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह। यौवनेन त्वदीयेन चरेयं विषयानहं।

पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहं। दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह॥

॥ यदुरुवाच ॥ जरायां बहवो दोषाः पानभोजनकारिताः। तस्माज्जरां न ते राजन् ग्रहीष्य इति मे मतिः। ३४७०

सितश्मश्रुर्निरानन्दो जरया शिथिलीकृतः। वली सङ्गतगात्रस्तु दुर्द्दर्शो दुर्ब्बलः कृशः।

अशक्तः कार्य्यकरणे परिभूतः स यौवनैः। सहोपजीविभिश्चैव तां जरां नाभिकामये।

सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप। जरां ग्रहीतुं धर्म्मज्ञ तस्मादन्यं वृणीष्व वै।

॥ ययातिरुवाच ॥ यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि । तस्मादराज्यभाक्तात प्रजा तव भविष्यति ।
तुर्व्वसो प्रतिपद्यस्व पाप्मानं जरया सह । यौवनेन चरेयं वै विषयांस्तव पुत्रक । १४७५
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनं । स्वञ्चैव प्रतिपत्स्यामि पाप्मानं जरया सह ।
॥ तुर्व्वसुरुवाच ॥ न कामये जरां तात कामभोगप्रणाशिनीं । बलरूपान्तकरणीं बुद्धिप्राणप्रणाशिनीं ।
॥ ययातिरुवाच । यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि । तस्मात्प्रजासमुच्छेदं तुर्व्वसो तव यास्यति ।
सङ्कीर्णाचारधर्म्मेषु प्रतिलोमचरेषु च । पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि ।
गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु च । पशुधर्म्मिषु पापेषु म्लेच्छेषु त्वं भविष्यसि । १४८०
॥ वैशम्पायनउवाच ॥ एवं स तुर्व्वसुं शप्त्वा ययातिः सुतमात्मनः । शर्म्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ।
॥ ययातिरुवाच ॥ द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीं । जरां वर्षसहस्रं मे यौवनं स्वन्ददस्व च ।
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनं । स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह ।
॥ द्रुह्युरुवाच ॥ नगजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियं । वाग्भङ्गश्चास्य भवति तां जरां नाभिकामये ।
॥ ययातिरुवाच ॥ यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि । तस्माद्द्रुह्यो प्रियः कामो न ते सम्पत्स्यते क्वचित् ।१४८५
यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च । हस्तिनां पीठकानाञ्च गर्द्दभानान्तथैव च । वस्तानाञ्च गवाञ्चैव शिविकायास्तथैव च ।
उडुपप्लवसन्तारो यत्र नित्यं भविष्यति । अराजभोजशब्दन्त्वं तत्र प्राप्स्यसि सान्वयः ।
॥ ययातिरुवाच ॥ अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह । एकं वर्षसहस्रन्तु चरेयं यौवनेन ते ।
॥ अनुरुवाच ॥ जीर्णः शिशुवदादत्ते कालेऽन्नमशुचिर्य्यथा । न जुहोति च कालेऽग्निं तां जरां नाभिकामये ।
॥ ययातिरुवाच ॥ यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि । जरा दोषस्त्वया प्रोक्तस्तस्मात्त्वं प्रतिपत्स्यसे । १४९०
प्रजाश्च यौवनं प्राप्ता विनशिष्यन्त्यनो तव । अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ।
॥ ययातिरुवाच ॥ पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि । जरा वलीच मां तात पलितानि च पर्य्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने । पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह । कञ्चित्कालं चरेयं वै विषयान्वयसा तव ।
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनं । स्वञ्चैव प्रतिपत्स्यामि पाप्मानं जरया सह ।
॥ वैशम्पायनउवाच ॥ एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा । यथात्थ मां महाराज तत्करिष्यामि ते वचः । १४९५
प्रतिपत्स्यामि ते राजन् पाप्मानं जरया सह । गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् ।
जरयाऽहं प्रतिच्छन्नो वयोरूपधरस्तव । यौवनं भवते दत्त्वा चरिष्यामि यथात्थ मां ।
॥ ययातिरुवाच ॥ पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते । सर्व्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ।
एवमुक्त्वा ययातिस्तु स्मृत्वा काव्यं महातपाः । संक्रामयामास जरां तदा पूरौ महात्मनि ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ययात्युपाख्याने चतुरशीतोऽध्यायः ॥ ८४ ॥
॥ वैशम्पायन उवाच ॥ पौरवेणाथ वयसा ययातिर्नहुषात्मजः । प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान् प्रियान् । १५००
यथाकामं यथोत्साहं यथाकालं यथासुखं । धर्म्माविरुद्धं राजेन्द्र यथाऽर्हति स एव हि ।
देवानतर्पयद्यज्ञैः श्राद्धैस्तद्वत्पितॄनपि । दीनाननुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ।

अतिथीनन्नपानैश्च विशश्च परिपालनैः। आनृशंस्येन शूद्रांश्च दस्यून्संनिग्रहेण च।
धर्म्मेण च प्रजाः सर्व्वा यथावदनुरञ्जयन्। ययातिः पालयामास साक्षादिन्द्र इवापरः।
स राजा सिंहविक्रान्तो युवा विषयगोचरः। अविरोधेन धर्म्मस्य चचार सुखमुत्तमं। ३५०५
स संप्राप्य शुभान्कामांस्तृप्तः खिन्नश्च पार्थिवः। कालं वर्षसहस्रान्तं सस्मार मनुजाधिपः।
परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्य्यवान्। यौवनं प्राप्य राजर्षिः सहस्रपरिवत्सरान्।
विश्वाच्या सहितो रेमे व्यभ्राजन्नन्दने वने। अलकायां स कालन्तु मेरुशृङ्गे तथोत्तरे।
यदा स पश्यते कालं धर्म्मात्मा तं महीपतिः। पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह।
यथाकामं यथोत्साहं यथाकालमरिन्दम। सेविता विषयाः पुत्र यौवनेन मया तव। ३५१०
न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते।
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्य्याप्तं तस्मात्तृष्णां परित्यजेत्।
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं।
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः। तथाऽप्यनुदिनं तृष्णा ममैतेष्वभिजायते।
तस्मादेनामहं त्यक्त्वा ब्रह्मण्याधाय मानसं। निर्द्वन्द्वो निर्म्ममो भूत्वा चरिष्यामि मृगैः सह। ३५१५
पूरो प्रीतोऽस्मि भद्रन्ते गृहाणेदं स्वयौवनं। राज्यं चेदं गृहाण त्वं त्वं हि मे प्रियकृत्सुतः।
॥ वैशम्पायन उवाच॥ प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा। यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः।
अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसं। ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन्।
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो। ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रयच्छसि।
यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्व्वसुः। शर्म्मिष्ठाया सुतो द्रुह्युस्ततोऽनुः पूरुरेव च। ३५२०
कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति। एतत्सम्बोधयामस्त्वां धर्म्मं त्वं प्रतिपालय।
॥ ययातिरुवाच ॥ ब्राह्मणप्रमुखा वर्णाः सर्व्वे शृण्वन्तु मे वचः। ज्येष्ठं प्रति यथा राज्यं न देयं मे कथञ्चन।
मम ज्येष्ठेन यदुना नियोगो नानुपालितः। प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः।
मातापित्रोर्व्वचनकृद्धितः पथ्यश्च यः सुतः। स पुत्रः पुत्रवद्यश्च वर्त्तते पितृमातृषु।
यदुनाऽहमवज्ञातस्तथा तुर्व्वसुनाऽपि च। द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशं। ३५२५
पूरुणा तु कृतं वाक्यं मानितश्च विशेषतः। कनीयान्मम दायादो धृता येन जरा मम।
मम कामः स च कृतः पूरुणा मित्ररूपिणा। शुक्रेण च वरो दत्तो काव्येनोशनसा स्वयं।
पुत्रो यस्त्वाऽनुवर्त्तेत स राजा पृथिवीपतिः। भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यतां।
॥ प्रकृतय ऊचुः ॥ यः पुत्रो गुणसम्पन्नो मातापित्रोर्हितः सदा। सर्व्वमर्हति कल्याणं कनीयानपि सत्तमः।
अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव। वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरं। ३५३०
॥ वैशम्पायन उवाच॥ पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा। अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मनः।
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः। पुरात्स निर्ययौ राजा ब्राह्मणैस्तापसैः सह।

अरुन्तुदं परुषं तीक्ष्णवाचं वाक्कण्टकैर्व्वितुदन्तं मनुष्यान्। विद्यादलक्ष्मीकतमं जनानां मुखे निबद्धां निर्ऋतिं वहन्तं।
सद्भिः पुरस्तादभिपूजितः स्यात्सद्भिस्तथा पृष्ठतो रक्षितः स्यात्। सदाऽसतामतिवादांस्तितिक्षेत्सतां वृत्तं चाददीतार्य्य वृत्तः। ३५१०
वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि। परस्य नामर्म्मसु ते पतन्ति तान्पण्डितो नावसृजेत्परेषु।
न हीदृशं संवननं त्रिषु लोकेषु विद्यते। दया मैत्री च भूतेषु दानञ्च मधुरा च वाक्।
तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित्। पूज्यान्संपूजयेद्दद्यान्न च याचेत्कदाचन।
इत्यादिपर्व्वणि सम्भवपर्व्वण्युत्तरयायात्युपाख्याने सप्ताशीतोऽध्यायः ॥ ८७ ॥
॥ इन्द्र उवाच ॥ सर्व्वाणि कर्म्माणि समाप्य राजन् गृहं परित्यज्य वनं गतोऽसि। तत्त्वां पृच्छामि नहुषस्य पुत्र केनासि तुल्यस्तपसा ययाते।
॥ ययातिरुवाच ॥ नाहं देवमनुष्येषु न गन्धर्व्वेषु महर्षिषु। आत्मनस्तपसा तुल्यं कञ्चित्पश्यामि वासव। ३५१५
॥ इन्द्र उवाच ॥ यदाऽवमंस्थाः सदृशः श्रेयसश्च अल्पीयसश्चाविदितप्रभावः। तस्माल्लोकास्त्वन्तवन्तस्तवेमे क्षीणे पुण्ये पतितास्यद्य राजन्।
॥ ययातिरुवाच ॥ सुरर्षिगन्धर्व्वनरावमानात्क्षयं गता मे यदि शक्र लोकाः। इच्छेयं वै सुरलोकाद्विहीनः सतां मध्ये पतितुं देवराज।
॥ इन्द्र उवाच ॥ सतां सकाशे पतितासि राजंश्च्युतः प्रतिष्ठां यत्र लब्धासि भूयः। एतद्विदित्वा च पुनर्ययाते त्वं माऽवमंस्थाः सदृशः श्रेयसश्च।
॥ वैशम्पायन उवाच ॥ ततः प्रहायामरराजजुष्टान्पुण्याल्लोकान्पतमानं ययातिं। संप्रेक्ष्य राजर्षिवरोऽष्टकस्तमुवाच सद्धर्म्मविधानगोप्ता।
॥ अष्टक उवाच ॥ कस्त्वं युवा वासवतुल्यरूपः स्वतेजसा दीप्यमानो यथाऽग्निः। पतस्युदीर्णाम्बुधरान्धकारात् खात्खेचराणां प्रवरो यथाऽर्कः। ३५२०
दृष्ट्वा च त्वां सूर्य्यपथात्पतन्तं वैश्वानरार्कद्युतिमप्रमेयं। किन्नु स्विदेतत्पततीति सर्व्वे वितर्कयन्तः परिमोहिताः स्मः।
॥ दृष्ट्वा च त्वां धिष्ठितं देवमार्गे शक्रार्कविष्णुप्रतिमप्रभावं। अभ्युद्गतास्त्वां वयमद्य सर्व्वे तत्त्वञ्च पाते तव जिज्ञासमानाः।
न चापि त्वां धृष्णुमः प्रष्टुमग्रे न च त्वमस्मान्पृच्छसि ये वयं स्मः। तत्त्वां पृच्छामि स्पृहणीयरूप कस्य त्वं वा किं निमित्तं त्वमागाः।
भयन्तु ते व्येतु विषादमोहौ त्यजाशु चैवेन्द्रसमप्रभाव। त्वां वर्त्तमानं हि सतां सकाशे नाऽलंप्रसोढुं बलहाऽपि शक्रः।
सन्तः प्रतिष्ठा हि सुखच्युतानां सतां सदैवामरराजकल्प। ते सङ्गताः स्थावरजङ्गमेशाः प्रतिष्ठितस्त्वं सदृशेषु सत्सु। ३५२५
प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः। प्रभुः सूर्य्यः प्रकाशित्वे सतां चाभ्यागतः प्रभुः।
इत्यादिपर्व्वणि सम्भवपर्व्वण्युत्तरयायात्युपाख्याने अष्टाशीतोऽध्यायः ॥ ८८ ॥
॥ ययातिरुवाच ॥ अहं ययातिर्नहुषस्य पुत्रः पूरोः पिता सर्व्वभूतावमानात्। प्रभ्रंशितः सुरसिद्धर्षिलोकात्परिच्युतः प्रपताम्यल्पपुण्यः।

अहं हि पूर्व्वो वयसा भवद्भ्यस्तेनाभिवादं भवतां न प्रयुञ्जे। यो विद्यया तपसा जन्मना वा वृद्धः स पूज्यो भवति द्विजानां।

॥ अष्टक उवाच॥ अवादीस्त्वं वयसा यः प्रवृद्धः स वै राजन्नाभ्यधिकः कथ्यते च। यो विद्यया तपसा संप्रवृद्धः स एव पूज्यो भवति द्विजानां।

॥ ययातिरुवाच ॥ प्रतिकूलं कर्म्मणां पापमाहुस्तद्वर्त्तते प्रवणे पापलोक्यं। सन्तोऽसतां नानुवर्त्तन्ति चैतद्यथा चैषामनुकूलास्तथासन्। ३५८०

अभूद्धनं मे विपुलं गतं तद्विचेष्टमानो नाधिगन्ता तदस्मि। एवं प्रधार्य्यात्महिते निविष्टो यो वर्त्तते स विजानाति धीरः।

महाधनो यो यजते सुयज्ञैः सर्व्वविद्यासु विनीतबुद्धिः। वेदानधीत्य तपसा योज्य देहं दिवं समायात्पुरुषो वीतमोहः।

न जातु हृष्येन्महता धनेन वेदानधीयीतानहंकृतः स्यात्। नानाभावा बहवो जीवलोके दैवाधीना नष्टचेष्टाधिकाराः। तत्तत्प्राप्य न विहन्येत धीरो दिष्टं बलीय इति मत्वात्मबुद्ध्या।

सुखं हि जन्तुर्यदि वाऽपि दुःखं दैवाधीनं विन्दते नात्मशक्त्या। तस्माद्दिष्टं बलवन्मन्यमानो न संज्वरेन्नापि हृष्येत्कथञ्चित्।

दुःखैर्न तप्येन्न सुखैः प्रहृष्येत्समेन वर्त्तेत सदैव धीरः। दिष्टं बलीय इति मन्यमानो न संज्वरेन्नापि हृष्येत्कथञ्चित्। ३५८५

भये न मुह्याम्यष्टकाहं कदाचित्सन्तापो मे मानसो नास्ति कश्चित्। धाता यथा मां विदधीत लोके ध्रुवं तथाऽहं भवितेति मत्वा।

संस्वेदजा अण्डजा उद्भिदश्च सरीसृपाः कृमयोऽथाप्सु मत्स्याः। तथाश्मानस्तृणकाष्ठञ्च सर्व्वं दिष्टक्षये स्वां प्रकृतिं भजन्ति।

अनित्यतां सुखदुःखस्य बुद्ध्वा कस्मात्सन्तापमष्टकाहं भजेयं। किं कुर्य्यां वै किञ्च कृत्वा न तप्ये तस्मात्सन्तापं वर्ज्जयाम्यप्रमत्तः।

॥ वैशम्पायन उवाच॥ एवं ब्रुवाणं नृपतिं ययातिमथाष्टकः पुनरेवान्वपृच्छत्। मातामहं सर्व्वगुणोपपन्नं तत्र स्थितं स्वर्ग्गलोके यथावत्।

॥ अष्टक उवाच॥ ये ये लोकाः पार्थिवेन्द्र प्रधानास्त्वया भुक्ता यञ्च कालं यथावत्। तान्मे राजन्ब्रूहि सर्व्वान्यथावत् क्षेत्रज्ञवद्भाषसे त्वं हि धर्म्मान्। ३५९०

॥ ययातिरुवाच॥ राजाऽहमासमिह सार्व्वभौमस्ततो लोकान्महतश्चाजयं वै। तत्रावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः।

ततः पुरीं पुरुहूतस्य रम्यां सहस्रद्वारां शतयोजनायतां। अध्यावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः।

ततो दिव्यमजरं प्राप्य लोकं प्रजापतेर्लोकपतेर्दुरापं। तत्रावसं वर्षसहस्रमात्रं ततो लोकं परमस्म्यभ्युपेतः।

स देवदेवस्य निवेशने च विहृत्य लोकानवसं यथेष्टं। संपूज्यमानस्त्रिदशैः समस्तैस्तुल्यप्रभावद्युतिरीश्वराणां।

तथाऽवसन्नन्दने कामरूपी संवत्सराणामयुतं शतानां। सहाप्सरोभिर्विहरन्पुण्यगन्धान्पश्यन्नगान्पुष्पितांश्चारुरूपान्। ३५९५

तत्र स्थितं मां देवसुखेषु सक्तं कालेऽतीते महति ततोऽतिमात्रं। दूतो देवानामब्रवीदुग्ररूपो ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण।

एतत्कर्म्म निहितं राजसिंह तेनो भोजोऽहं नन्दनात् क्षीणपुण्यः। वाचोऽश्रौषं चान्तरिक्षे सुराणां सानुक्रोशाः शोचतां मां नरेन्द्र।

अहो कष्टं क्षीणपुण्यो ययातिः पतत्यसौ पुण्यकृत्पुण्यकीर्त्तिः। तानब्रुवं पतमानस्ततोऽहं सतां मध्ये निपतेयं कथन्नु।

तैराख्याता भवतां यज्ञभूमिः समीक्ष्य चैमां त्वरितमुपागतोऽस्मि। हविर्गन्धं देशिकं यज्ञभूमेर्धूमापाङ्गं प्रतिगृह्य प्रतीतः।

इत्यादिपर्व्वणि सम्भवपर्व्वणि उत्तरययात्युपाख्याने एकोननवतितमोऽध्यायः॥ ८९॥

॥ अष्टक उवाच ॥ यदाऽवसो नन्दने कामरूपः संवत्सराणामयुतं शतानां। किंकारणं कार्त्तयुगप्रधान हित्वा च तं वसुधामन्वपद्यः। २१००

॥ ययातिरुवाच ॥ ज्ञातिः सुहृत्स्वजनो वा यथेह क्षीणे वित्ते त्यज्यते मानवैर्हि। तथा तत्र क्षीणपुण्यं मनुष्यं त्यजन्ति सद्यः सेश्वरा देवसङ्घाः।

॥ अष्टक उवाच ॥ तस्मिन् कथं क्षीणपुण्या भवन्ति सम्मुह्यते मेऽत्र मनोऽतिमात्रं। किं वा विशिष्टाः कस्य धामोपयान्ति तद्वै ब्रूहि क्षेत्रवित्त्वं मतो मे।

॥ ययातिरुवाच ॥ इमं भौमं नरकं ते पतन्ति लालप्यमाना नरदेव सर्व्वे। ते कङ्कगोमायुबलाशनार्थं क्षीणा विवृद्धिं बहुधा व्रजन्ति।

तस्मादेतद्वर्ज्जनीयं नरेन्द्र दुष्टं लोके गर्हणीयञ्च कर्म्म। आख्यातं ते पार्थिव सर्व्वमेव भूयश्चेदानीं वद किं ते वदामि।

॥ अष्टक उवाच ॥ यदा तु तान्वितुदन्ते वयांसि तथा गृध्राः शितिकण्ठाः पतङ्गाः। कथं भवन्ति कथमाभवन्ति न भौममन्यं नरकं शृणोमि। २१०५

॥ ययातिरुवाच ॥ ऊर्द्ध्वं देहात्कर्म्मणो जृम्भमाणाद्व्यक्तं पृथिव्यामनुसञ्चरन्ति। इमं भौमं नरकं ते पतन्ति नावेक्षन्ते वर्षपूगाननेकान्।

षष्टिं सहस्राणि पतन्ति व्योम्नि तथा अशीतिं परिवत्सराणि। तान्वै तुदन्ति पततः प्रपातं भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः।

॥ अष्टक उवाच ॥ यदेनसस्ते पततस्तुदन्ति भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः। कथं भवन्ति कथमाभवन्ति कथं भूता गर्भभूता भवन्ति।

॥ ययातिरुवाच ॥ अस्रं रेतः पुष्पफलानुपृक्तमन्वेति तद्वै पुरुषेण सृष्टं। स वै तस्या रज आपद्यते वै स गर्भभूतः समुपैति तत्र।

वनस्पतीनोषधीश्चाविशन्ति अपो वायुं पृथिवीं चान्तरीक्षं। चतुष्पदं द्विपदं चापि सर्व्वमेवं भूता गर्भभूता भवन्ति। २११०

॥ अष्टक उवाच ॥ अन्यद्वपुर्विदधातीह गर्भमुताहोस्वित्स्वेन कायेन याति। आपद्यमानो नरयोनिमेतामाचक्ष्व मे संशयात्प्रब्रवीमि।

शरीरभेदाभिसमुच्छ्रयञ्च चक्षुःश्रोत्रे लभते केन संज्ञां। एतत्तत्त्वं सर्व्वमाचक्ष्व पृष्टः क्षेत्रज्ञं त्वां तात मन्याम सर्व्वे।

॥ ययातिरुवाच ॥ वायुः समुत्कर्षति गर्भयोनिमृतौ रेतः पुष्परसानुपृक्तं। स तत्र तन्मात्रकृताधिकारः क्रमेण संवर्द्धयतीह गर्भं।

स जायमानो विगृहीतगात्रः संज्ञामधिष्ठाय ततो मनुष्यः। स श्रोत्राभ्यां वेदयतीह शब्दं सर्व्वं रूपं पश्यति चक्षुषा च।

घ्राणेन गन्धं जिह्वयाऽथो रसञ्च त्वचा स्पर्शं मनसा वेद भावं। इत्यष्टकेहोपचितं हि विद्धि महात्मनः प्राणभृतः शरीरे। २११२

॥ अष्टकउवाच ॥ यः संस्थितः पुरुषो दह्यते वा निखन्यते वाऽपि निकृष्यते वा । अभावभूतः स विनाशमेत्य केनात्मना चेतयते परस्तात् ।

॥ ययातिरुवाच ॥ हित्वा सोऽसून्सुप्तवन्निष्टनित्वा पुरोधाय सुकृतं दुष्कृतं वा । अन्यां योनिं पवनाग्रानुसारी हित्वा देहं भजते राजसिंह ।

पुण्यां योनिं पुण्यकृतो व्रजन्ति पापां योनिं पापकृतो व्रजन्ति। कीटाः पतङ्गाश्च भवन्ति पापा न मे विवक्षाऽस्ति महानुभाव।

चतुष्पदा द्विपदाः षट्पदाश्च तथाभूता गर्भभूता भवन्ति । आख्यातमेतन्निखिलेन सर्व्वं भूयस्तु किं पृच्छसि राजसिंह ।

॥ अष्टकउवाच ॥ किं स्वित्कृत्वा लभते तात लोकान्मर्त्यः श्रेष्ठांस्तपसा विद्यया वा । तन्मे पृष्टः शंस सर्व्वं यथावच्छुभाल्लोकान्येन गच्छेत्क्रमेण । ३६२०

॥ ययातिरुवाच॥ तपश्च दानञ्च शमो दमश्च ह्रीरार्जवं सर्व्वभूतानुकम्पा । स्वर्गस्य लोकस्य वदन्ति सन्तो द्वाराणि सप्तैव महान्ति पुंसां । नश्यन्ति मानेन तमोऽभिभूताः पुंसः सदैवेति वदन्ति सन्तः ।

अधीयमानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषां । तस्यान्तवन्तश्च भवन्ति लोका नचास्य तद्ब्रह्म फलं ददाति।

चत्वारि कर्म्माण्यभयंकराणि भयं प्रयच्छन्त्ययथा कृतानि । मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः।

न मानमान्यो मुदमाददीत न सन्तापं प्राप्नुयाच्चावमानात्। सन्तः सतः पूजयन्तीह लोके नासाधवः साधुबुद्धिं लभन्ते

इति दद्यामिति यज इत्यधीय इति व्रतं । इत्येतानि भयान्याहुस्तानि वर्ज्यानि सर्व्वशः । ३६२५

ये चाश्रयं वेदयन्ते पुराणं मनीषिणो मानसमार्गरुद्धं । तद्वः श्रेयस्तेन संयोगमेत्य परां शान्तिं प्राप्नुयुः प्रेत्य चेह।

इत्यादिपर्व्वणि सम्भवपर्व्वण्युत्तर ययात्युपाख्याने नवतितमोऽध्यायः॥ ९० ॥

॥ अष्टकउवाच । चरन् गृहस्थः कथमेति धर्म्मान्कथं भिक्षुः कथमाचार्य्यकर्म्मा । वानप्रस्थः सत्पथे सन्निविष्टो बहून्यस्मिन्सं प्रतिवेदयन्ति ।

॥ ययातिरुवाच । आहूताध्यायी गुरुकर्म्मस्वचोद्यः पूर्व्वोत्थायी चरमं चोपशायी मृदुर्दान्तो धृतिमानप्रमत्तःस्वाध्यायशीलः सिध्यति ब्रह्मचारी ।

धर्म्मागतं प्राप्य धनं यजेत दद्यात्सदैवातिथीन्भोजयेच्च । अनाददानश्च परैरदत्तं सैषा गृहस्थोपनिषत्पुराणी ।

स्ववीर्य्यजीवी वृजिनान्निवृत्तो दाता परेभ्यो न परोपतापी । तादृङ्मुनिः सिद्धिमुपैति मुख्यां वसन्नरण्ये नियताहारचेष्टः । ३६३०

अशिल्पजीवी गुणवांश्चैव नित्यंजितेन्द्रियः सर्व्वतो विप्रयुक्तः । अनोकशायी लघुरल्पप्रचारश्चरन्देशानेकचरः स भिक्षुः ।

रात्र्या यया वाऽभिजिताश्च लोका भवन्ति कामाभिजिताः सुखाश्च । तामेव रात्रिं प्रयतेत विद्वानरण्यसंस्थो भवितुं यतात्मा ।

दशैव पूर्व्वान्दश चापरांश्च ज्ञातीनथात्मानमथैकविंशं । अरण्यवासी सुकृते दधाति विमुच्यारण्ये स्वशरीरधातून्।

॥ अष्टक उवाच ॥ कतिस्विदेव मुनयः कति मौनानि चाप्युत । भवन्तीति तदाचक्ष्व श्रोतुमिच्छामहे वयं ।

॥ ययातिरुवाच ॥ अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः । ग्रामे वा वसतोऽरण्यं स मुनिः स्याज्जनाधिप । ३६३५

॥ अष्टकउवाच ॥ कथं स्विद्वसतोऽरण्ये ग्रामो भवति पृष्ठतः । ग्रामे वा वसतोऽरण्यं कथं भवति पृष्ठतः ।

॥ ययातिरुवाच ॥ न ग्राम्यमुपयुञ्जीत य आरण्यो मुनिर्भवेत्। तथाऽस्य वसतोऽरण्ये ग्रामो भवति पृष्ठतः।

अनग्निरनिकेतश्चाप्यगोत्रचरणो मुनिः। कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरं।

यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनं। तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठतः।

यस्तु कामान्परित्यज्य त्यक्तकर्म्मा जितेन्द्रियः। आतिष्ठेच्च मुनिर्मौनं स लोके सिद्धिमाप्नुयात्। ३६४०

धौतदन्तं कृत्तनखं सदा स्नातमलङ्कृतं। असितं सितकर्म्माणं कस्तमर्हति नार्च्चितुं।

तपसा कर्षितः क्षामः क्षीणमांसास्थिशोणितः। स च लोकमिमं जित्वा लोकं विजयते परं।

यदा भवति निर्द्वन्द्वो मुनिर्मौनं समास्थितः। अथ लोकमिमं जित्वा लोकं विजयते परं।

आस्येन तु यदाहारं गोवन्मृगयते मुनिः। अथाऽस्य लोकः सर्व्वोऽयं सोऽमृतत्वाय कल्पते।

इत्यादिपर्व्वणि सम्भवपर्व्वण्युत्तरयायात्युपाख्याने एकनवतीऽध्यायः॥ ९१॥

॥ अष्टक उवाच ॥ कतरस्त्वनयोः पूर्व्वं देवानामेति सात्मतां। उभयोर्द्धावतो राजन् सूर्य्याचन्द्रमसोरिव। ३६४५

॥ ययातिरुवाच ॥ अनिकेतो गृहस्थेषु कामवृत्तेषु संयतः। ग्राम एव वसन् भिक्षुस्तयोः पूर्व्वतरं गतः।

अप्राप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत्। तप्यते यदि तत्कृत्वा चरेत्सोऽन्यत्ततस्तपः।

पापानां कर्म्मणां नित्यं बिभीयाद्यस्तु मानवः। सुखमप्याचरन्नित्यं सोऽत्यन्तं सुखमेधते।

तद्वै नृशंसं तदसत्यमाहुर्यः सेवते धर्म्ममनर्थबुद्धिः। अस्वोऽप्यनीशश्च तथैव राजं स्तदार्जवं स समाधिस्तदार्य्यं।

॥ अष्टक उवाच ॥ केनासि दूतः प्रहितोऽद्य राजन्युवा स्रग्वी दर्शनीयः सुवर्च्चाः। कुत आयातः कतरस्यां दिशि त्वमुताहो स्वित्पार्थिवं स्थानमस्ति। ३६५०

॥ ययातिरुवाच ॥ इमं भौमं नरकं क्षीणपुण्यः प्रवेष्टुमुर्व्वीं गगनाद्विप्रकीर्णः। उक्त्वाऽहं वः प्रपतिष्याम्यनन्तरं त्वरन्ति मां लोकपा ब्रह्मणो ये।

सतां सकाशे तु वृतः प्रपातस्ते सङ्गता गुणवन्तस्तु सर्व्वे। शक्राच्च लब्धो हि वरो मयैष पतिष्यता भूमितले नरेन्द्र।

॥ अष्टक उवाच ॥ पृच्छामि त्वां माप्रपत प्रपातं यदि लोकाः पार्थिव सन्ति मेऽत्र। यद्यन्तरीक्षे यदि वा दिवि स्थिताः क्षेत्रज्ञं त्वां तस्य धर्म्मस्य मन्ये।

॥ ययातिरुवाच ॥ यावत्पृथिव्यां विहितं गवाश्वं सहारण्यैः पशुभिः पार्व्वतैश्च। तावल्लोका दिवि ते संस्थिता वै तथा विजानीहि नरेन्द्रसिंह।

॥ अष्टक उवाच ॥ तांस्ते ददामि माप्रपत प्रपातं ये मे लोका दिवि राजेन्द्र सन्ति। यद्यन्तरीक्षे यदि वा दिविश्रिता स्तानाक्रम क्षिप्रमपेतमोहः। ३६५५

॥ ययातिरुवाच ॥ नास्मद्विधो ब्राह्मणो ब्रह्मविच्च प्रतिग्रहे वर्त्तते राजमुख्य। यथा प्रदेयं सततं द्विजेभ्यस्तथाऽददं पूर्व्वमहं नरेन्द्र।

नाब्राह्मणः कृपणो जातु जीवेद्या चापि स्याद्ब्राह्मणी वीरपत्नी। सोऽहं नैवाकृतं पूर्व्वं चरेयं विधित्समानः किमु तत्र साधु।

॥ प्रतर्दन उवाच ॥ पृच्छामि त्वां स्पृहणीयरूप प्रतर्दनोऽहं यदि मे सन्ति लोकाः । यद्यन्तरीक्षे यदि वा दिवि श्रिताः क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ।

॥ ययातिरुवाच ॥ सन्ति लोका बहवस्ते नरेन्द्र अप्येकैकः सप्तसप्ताप्यहानि । मधुच्युतो घृतपृक्ता विशोकास्ते नान्तवन्तः प्रतिपालयन्ति ।

॥ प्रतर्दन उवाच ॥ तांस्ते ददामि मा प्रपत प्रपातं ये मे लोकास्तव ते वै भवन्तु । यद्यन्तरीक्षे यदि वा दिवि श्रितास्तानाक्रम क्षिप्रमपेतमोहः । १११०

॥ ययातिरुवाच ॥ न तुल्यतेजाः सुकृतं कामयेत योगक्षेमं पार्थिवपार्थिवः सन् । दैवादेशादापदं प्राप्य विद्वांश्चरेन्नृशंसं नहि जातु राजा ।

धर्म्यं मार्गं यतमानो यशस्यं कुर्यान्नृपो धर्ममवेक्षमाणः । न मद्विधो धर्मबुद्धिः प्रजानन् कुर्यादेवं कृपणं मां यथात्थ ।

कुर्यादपूर्वं न कृतं यदन्यैर्विवित्समानः, किमु तत्र साधु । ब्रुवाणमेवं नृपतिं ययातिं नृपोत्तमो वसुमानब्रवीत्तं ।

इत्यादिपर्व्वणि सम्भवपर्व्वणुत्तर ययात्युपाख्याने द्विनवतोऽध्यायः ॥ ९२ ॥

॥ वसुमानुवाच ॥ पृच्छामि त्वां वसुमानौषदश्विर्यद्यस्ति लोको दिवि मे नरेन्द्र । यद्यन्तरीक्षे प्रथितो महात्मन् क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ।

॥ ययातिरुवाच ॥ यदन्तरीक्षं पृथिवी दिशश्च यत्तेजसा तपते भानुमांश्च । लोकास्तावन्तो दिवि संस्थिता वै ते नान्तवन्तः प्रतिपालयन्ति । १११५

॥ वसुमानुवाच ॥ तांस्ते ददानि मा प्रपत प्रपातं ये मे लोकास्तव ते वै भवन्तु । क्रीणीष्वैतांस्तृणकेनापि राजन् प्रतिग्रहस्ते यदि धीमन्प्रदुष्टः ।

॥ ययातिरुवाच ॥ न मिथ्याऽहं विक्रयं वै स्मरामि वृथा गृहीतं शिशुकाच्छङ्कमानः । कुर्यां न चैवाकृतपूर्वमन्यैर्विवित्समानः किमु तत्र साधु ।

॥ वसुमानुवाच ॥ तांस्त्वं लोकान् प्रतिपद्यस्व राजन्मया दत्तान्यदि नेष्टः क्रयस्ते । अहं न तान्वै प्रतिगन्ता नरेन्द्र सर्वे लोकास्तव ते वै भवन्तु ।

॥ शिबिरुवाच ॥ पृच्छामि त्वां शिबिरौशीनरोऽहं ममापि लोका यदि सन्तीह तात । यद्यन्तरीक्षे यदि वा दिवि श्रिताः क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ।

॥ ययातिरुवाच ॥ यत्त्वं वाचा हृदयेनापि साधून्परीप्समानान्नावमंस्था नरेन्द्र । तेनानन्ता दिवि लोकाः श्रितास्ते विद्युद्रूपाः स्वनवन्तो महान्तः । ११२०

॥ शिबिरुवाच ॥ तांस्त्वं लोकान्प्रतिपद्यस्व राजन्मया दत्तान्यदि नेष्टः क्रयस्ते । न चाहं तान्प्रतिपत्स्ये ह दत्त्वा यत्र गत्वा नानुशोचन्ति धीराः ।

॥ ययातिरुवाच ॥ यथा त्वमिन्द्रप्रतिमप्रभावस्ते चाप्यनन्ता नरदेव लोकाः । तथाऽद्य लोके न रमेऽन्यदत्ते तस्माच्छिबे नाभिनन्दामि देयं ।

॥ अष्टक उवाच ॥ न चेदेकैकशो राजल्लोकान्नः प्रतिनन्दसि । सर्व्वे प्रदाय भवते गन्तारो नरकं वयं ।

॥ ययातिरुवाच ॥ यदर्होऽहं तद्यतध्वं सन्तः सत्याभिनन्दिनः । अहं तन्नाभिजानामि यत्कृतं न मया पुरा ।

॥ अष्टक उवाच ॥ कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः । यानारुह्य नरा लोकानभिवाञ्छन्ति शाश्वतान् । २१७५

॥ ययातिरुवाच ॥ युष्मानेते वहिष्यन्ति रथाः पञ्च हिरण्मयाः । उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव ।

॥ अष्टक उवाच ॥ आतिष्ठस्व रथान् राजन् विक्रमस्व विहायसं । वयमप्यनुयास्यामो यदा कालो भविष्यति ।

॥ ययातिरुवाच ॥ सर्व्वैरिदानीं गन्तव्यं सह स्वर्गजितो वयं । एष नो विरजाः पन्था दृश्यते देवसद्मनः ।

॥ वैशम्पायन उवाच ॥ तेऽधिरुह्य रथान् सर्व्वे प्रयाता नृपसत्तमाः । आक्रमन्तो दिवं भाभिर्धर्म्मेणावृत्य रोदसी ।

॥ अष्टक उवाच ॥ अहं मन्ये पूर्व्वमेकोऽस्मि गन्ता सखा चेन्द्रः सर्व्वथा मे महात्मा । कस्मादेवं शिविरौशीनरोऽयमेकोऽत्यगात् सर्व्ववेगेन वाहान् । २१८०

॥ ययातिरुवाच ॥ अददद्देवयानाय यावद्वित्तमविन्दत । उशीनरस्य पुत्रोऽयं तस्माच्छ्रेष्ठो हि वः शिविः ।

दानं तपः सत्यमथापि धर्म्मो ह्रीः श्रीः क्षमा सौम्यमथो विधित्सा । राजन्नेतान्यप्रमेयाणि राज्ञः शिवेः स्थितान्यप्रतिमस्य बुद्ध्या ।
एवं वृत्तो ह्रीनिषेधश्च यस्मात्तस्माच्छिबिरत्यगाद्वै रथेन ।

॥ वैशम्पायन उवाच ॥ अथाष्टकः पुनरेवान्वपृच्छन्मातामहं कौतुकादिन्द्रकल्पं । पृच्छामि त्वां नृपते ब्रूहि सत्यं कुतश्च कस्यासि सुतश्च कस्य । कृतन्त्वया यद्धि न तस्य कर्त्ता लोके त्वदन्यः क्षत्रियो ब्राह्मणो वा ।

॥ ययातिरुवाच ॥ ययातिरस्मि नहुषस्य पुत्रः पूरोः पिता सार्व्वभौमस्त्विहासं । गुह्यं चार्थं मामकेभ्यो ब्रवीमि मातामहोऽहं भवतां प्रकाशं ।

सर्व्वामिमां पृथिवीं निर्जिगाय प्रदामहं छादनं ब्राह्मणेभ्यः । मेध्यानश्वानेकशतान् सुरूपांस्तदा देवाः पुण्यभाजो भवन्ति । २१८५

अदामहं पृथिवीं ब्राह्मणेभ्यः पूर्णामिमामखिलां वाहनेन । गोभिः सुवर्णेन धनैश्च मुख्यैस्तत्रासन् गाः शतमर्ब्बुदानि ।

सत्येन मे द्यौश्च वसुन्धरा च तथैवाग्निर्ज्वलते मानुषेषु । न मे वृथा व्याहृतमेव वाक्यं सत्यं हि सन्तः प्रतिपूजयन्ति ।

यदष्टक प्रब्रवीमीह सत्यं प्रतर्द्दनं चौषदश्विं तथैव । सर्व्वे च लोका मुनयश्च देवाः सत्येन पूज्या इति मे मनोगतं ।

यो नः स्वर्गजितः सर्व्वान् यथावृत्तं निवेदयेत् । अनसूयुर्द्विजाग्र्येभ्यः स लभेन्नः सलोकतां ।

॥ वैशम्पायन उवाच ॥ एवं राजा स महात्मा ह्यतीव स्वैर्द्दौहित्रैस्तारितोऽमित्रसाहः । त्यक्त्वा महीं परमोदारकर्म्मा स्वर्गं गतः कर्म्मभिर्व्याप्य पृथ्वीं । २१९०

इत्यादिपर्व्वणि सम्भवपर्व्वण्युत्तरयायात्युपाख्यानं समाप्तमिति त्रिनवतोऽध्यायः ॥ ९३ ॥

॥ जनमेजय उवाच ॥ भगवञ्छ्रोतुमिच्छामि पूरोर्वंशकरान्नृपान् । यद्वीर्य्यान् यादृशांश्चापि यावतो यत्पराक्रमान् ।

न ह्यस्मिन् शीलहीनो वा निर्व्वीर्य्यो वा नराधिपः । प्रजाविरहितो वाऽपि भूतपूर्व्वः कथञ्चन ।
तेषां प्रथितवृत्तानां राज्ञां विज्ञानशालिनां । चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ।

॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि । पूरोर्वंशधरान् वीरान् शक्रप्रतिमतेजसः । भूरिद्रविणविक्रान्तान् सर्व्वलक्षणपूजितान् ।

प्रवीरेश्वररौद्राश्वास्त्रयः पुत्रा महारथाः । पूरोः पौष्ट्यामजायन्त प्रवीरो वंशकृत्ततः । ११९९

मनस्युरभवत्तस्माच्छूरसेनीसुतः प्रभुः । पृथिव्याश्चतुरन्ताया गोप्ता राजीवलोचनः ।

शक्तः संहननो वाग्मी सौवीरीतनयास्त्रयः । मनस्योरभवन्पुत्राः शूराः सर्व्वे महारथाः ।

अन्वग्भानुप्रभृतयो मिश्रकेश्यां मनस्विनः । रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः ।

यज्वानो जज्ञिरे शूराः प्रजावन्तो बहुश्रुताः । सर्व्वे सर्व्वास्त्रविद्वांसः सर्व्वे धर्म्मपरायणाः ।

ऋचेयुरथ कक्षेयुः कृकणेयुश्च वीर्य्यवान् । स्थण्डिलेयुर्वनेयुश्च जलेयुश्च महायशाः । १२००

तेजेयुर्बलवान् धीमान् सत्येयुश्चेन्द्रविक्रमः । धर्म्मेयुः सन्नतेयुश्च दशमो देवविक्रमः ।

अनाधृष्टिरभूत्तेषां विद्वान् भुवि तथैकराट् । ऋचेयुरथ विक्रान्तो देवानामिव वासवः ।

अनाधृष्टिसुतस्त्वासीद्राजसूयाश्वमेधकृत् । मतिनार इति ख्यातो राजा परमधार्म्मिकः ।

मतिनारसुता राजंश्चत्वारोऽमितविक्रमाः । तंसुर्महानतिरथो द्रुह्युश्चाप्रतिमद्युतिः ।

तेषां तंसुर्महावीर्य्यः पौरवं वंशमुद्वहन् । आजहार यशो दीप्तं जिगाय च वसुन्धरां । १२०५

ईलिनन्तु सुतं तंसुर्जनयामास वीर्य्यवान् । सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः ।

रथन्तर्य्यां सुतान् पञ्च पञ्चभूतोपमांस्ततः । ईलिनो जनयामास दुष्मन्तप्रभृतीन्नृपान् ।

दुष्मन्तं शूरभीमौ च प्रवसुं वसुमेव च । तेषां ज्येष्ठोऽभवद्राजा दुष्मन्तो जनमेजय ।

दुष्मन्ताद्भरतो जज्ञे विद्वान् शाकुन्तलो नृपः । तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ।

भरतस्तिसृषु स्त्रीषु नव पुत्रानजीजनत् । नाभ्यनन्दत तान् राजा नानुरूपा ममेत्युत । १२१०

ततस्तान्मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयं । ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् ।

ततो महद्भिः क्रतुभिरीजानो भरतस्तदा । लेभे पुत्रं भरद्वाजाद्भुमन्युं नाम भारत ।

ततः पुत्रिणमात्मानं ज्ञात्वा पौरवनन्दनः । भुमन्युं भरतश्रेष्ठ यौवराज्येऽभ्यषेचयत् ।

ततो दिविरथो नाम भुमन्योरभवत्सुतः । सुहोत्रश्च सुहोता च सुहविः सुयजुस्तथा । पुष्करिण्यामृचीकश्च भुमन्योरभवन्सुताः ।

तेषां ज्येष्ठः सुहोत्रस्तु राज्यमाप महीक्षितां । राजसूयाश्वमेधाद्यैः सोऽयजद्बहुभिः सवैः । १२१५

सुहोत्रः पृथिवीं कृत्स्नां बुभुजे सागराम्बरां । पूर्णां हस्तिगवाश्वैश्च बहुरत्नसमाकुलां ।

ममज्जेव मही तस्य भूरिभारावपीडिता । हस्त्यश्वरथसम्पूर्णा मनुष्यकलिला भृशं ।

सुहोत्रे राजनि तदा धर्म्मतः शासति प्रजाः । चैत्ययूपाङ्किता चासीद्भूमिः शतसहस्रशः ।

प्रवृद्धजनसस्या च सर्व्वदैव व्यरोचत । ऐक्ष्वाकी जनयामास सुहोत्रात् पृथिवीपते ।

अजमीढं सुमीढञ्च पुरुमीढञ्च भारत । १२२०

अजमीढो वरस्तेषां तस्मिन् वंशः प्रतिष्ठितः । षट्पुत्रान् सोऽप्यजनयत्तिसृषु स्त्रीषु भारत ।

एवं धूमिन्यथो नीली दुष्मन्तपरमेष्ठिनौ। केशिन्यजनयज्जह्नुं सुतौ चाजनरूपिणौ।
तथेमे सर्व्वपाञ्चाला दुष्मन्तपरमेष्ठिनोः। अन्वयाः कुशिका राजञ्जह्नोरमिततेजसः।
जनरूपिणयोर्ज्येष्ठमृक्षमाहुर्जनाधिपं। ऋक्षात्सम्वरणो जज्ञे राजन्वंशकरः सुतः।
आर्क्षे सम्वरणे राजन्प्रशासति वसुन्धरां। संक्षयः सुमहानासीत्प्रजानामिति नः श्रुतं। ३७२५
व्यशीर्य्यत ततो राष्ट्रं क्षयैर्नानाविधैस्तदा। क्षुन्मृत्युभ्यामनावृष्ट्या व्याधिभिश्च समाहतं।
अभ्यघ्नन्भारतांश्चैव सपत्नानां बलानि च। चालयन्वसुधाञ्चैव बलेन चतुरङ्गिणा।
अभ्ययात्तञ्च पाञ्चाल्यो विजित्य तरसा महीं। अक्षौहिणीभिर्दशभिः स एनं समरेऽजयत्।
ततः सदारः सामात्यः सपुत्त्रः ससुहृज्जनः। राजा सम्वरणस्तस्मात्पलायत महाभयात्।
सिन्धोर्नदस्य महतो निकुञ्जे न्यवसत्तदा। नदीविषयपर्य्यन्ते पर्व्वतस्य समीपतः। ३७३०
तत्रावसन्बहून्कालान्भारता दुर्गमाश्रिताः। तेषां निवसतां तत्र सहस्रं परिवत्सरान्।
अथाभ्यगच्छद्भारतान्वशिष्ठो भगवानृषिः। तमागतं प्रयत्नेन प्रत्युद्गम्याभिवाद्य च।
अर्घ्यमभ्याहरंस्तस्मै ते सर्व्वे भारतास्तदा। निवेद्य सर्व्वमृषये सत्कारेण सुवर्च्चसे।
तमासने चोपविष्टं राजा वव्रे स्वयं तदा। पुरोहितो भवान्नोऽस्तु राज्याय प्रयतेमहि।
ओमित्येवं वशिष्ठोऽपि भारतान्प्रत्यपद्यत। अथाभ्यषिञ्चत्साम्राज्ये सर्व्वक्षत्त्रस्य पौरवं। विषाणभूतं सर्व्वस्यां पृथिव्यामिति
नः श्रुतं। ३७३५
भरताध्युषितं पूर्व्वं सोऽध्यतिष्ठत्पुरोत्तमं। पुनर्बलिभृतश्चैव चक्रे सर्व्वमहीक्षितः।
ततः स पृथिवीं प्राप्य पुनरीजे महाबलः। आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः।
ततः सम्वरणात्सौरी तपती सुषुवे कुरुं। राजत्वे तं प्रजाः सर्व्वा धर्म्मज्ञ इति वव्रिरे।
तस्य नाम्नाऽभिविख्यातं पृथिव्यां कुरुजाङ्गलं। कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः।
अविक्षितमभिष्यन्तं तथा चैत्ररथं मुनिं। जनमेजयञ्च विख्यातं पुत्त्रांश्चास्यानुशुश्रुमः। पञ्चैतान्वाहिनी पुत्त्रान्व्यजायत
मनस्विनी। ३७४०
अविक्षितः परिक्षित्तु शबलाश्वश्च वीर्य्यवान्। आदिराजो विराजश्च शाल्मलिश्च महाबलः। उच्चैःश्रवा भङ्गकारो जितारि
श्चाष्टमः स्मृतः।
एतेषामन्ववाये तु ख्यातास्ते कर्म्मजैर्गुणैः। जनमेजयादयः सप्त तथैवान्ये महारथाः।
परीक्षितोऽभवन्पुत्त्राः सर्व्वे धर्म्मार्थकोविदाः। कक्षसेनोग्रसेनौ तु चित्रसेनश्च वीर्य्यवान्।
इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः। जनमेजयस्य तनया भुवि ख्याता महाबलाः।
धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च। निषधश्च महातेजास्तथा जाम्बूनदो बली। ३७४५
कुण्डोदरः पदातिश्च वसातिश्चाष्टमः स्मृतः। सर्व्वे धर्म्मार्थकुशलाः सर्व्वभूतहिते रताः।
धृतराष्ट्रोऽथ राजासीत्तस्य पुत्त्रोऽथ कुण्डिकः। हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः।
हविःश्रवास्तथेन्द्राभः भुमन्युश्चापराजितः। धार्त्तराष्ट्रसुतानान्तु त्रीनेतान्प्रथितान्भुवि।

प्रतीपं धर्मनेत्रश्च सुनेत्रंचापि भारत । प्रतीपः प्रथितस्तेषां बभूवाप्रतिमो भुवि ।

प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ । देवापिः शान्तनुश्चैव वाह्लीकश्च महारथः । २०५०

देवापिश्च प्रवव्राज तेषां धर्म्महितेप्सया । शान्तनुश्च महीं लेभे वाह्लीकश्च महारथः ।

भरतस्यान्वये जाताः सत्त्ववन्तो नराधिपाः । देवर्षिकल्पा नृपते बहवो राजसत्तमाः ।

एवं विधाश्चाप्यपरे देवकल्पा महारथाः । जाता मनोरन्ववाये ऐलवंशविवर्द्धनाः ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पूरुवंशानुकीर्तने चतुर्नवतोऽध्यायः ॥ ९४ ॥

॥ जनमेजय उवाच ॥ श्रुतस्त्वत्तो मया विप्र पूर्व्वेषां सम्भवो महान् । उदाराश्चापि वंशेऽस्मिन् राजानो मे परिश्रुताः ।

किन्तु लघ्वर्थसंयुक्तं प्रियाख्यानं न मामति । प्रीणात्यतो भवान् भूयो विस्तरेण ब्रवीतु मे । २०५५

एतामेव कथां दिव्यामाप्रजापतितो मनोः । तेषामाजननं पुण्यं कस्य न प्रीतिमावहेत् ।

सद्धर्म्मगुणमाहात्म्यैरभिवर्द्धितमुत्तमं । विष्टभ्य लोकांस्त्रीनेषां यशः स्फीतमवस्थितं ।

गुणप्रभाववीर्य्यौजः सत्त्वोत्साहवतामहं । न तृप्यामि कथां शृण्वन्नमृतास्वादसम्मितां ।

॥ वैशम्पायन उवाच ॥ शृणु राजन् पुरा सम्यङ्मया द्वैपायनाच्छ्रुतं । प्रोच्यमानं मया कृत्स्नं स्ववंशजननं शुभं ।

दक्षाददितिरदितेर्व्विवस्वान् विवस्वतो मनुर्म्मनोरिला इलायाः पुरूरवाः । पुरूरवस आयुरायुषो नहुषो नहुषाद्ययातिर्य्ययातेर्द्दे भार्य्ये बभूवतुः । २०६०

उशनसो दुहिता देवयानी वृषपर्व्वणश्च दुहिता शर्म्मिष्ठा नाम ।

अत्रानुवंशश्लोको भवति । यदुञ्च तुर्वसुञ्चैव देवयानी व्यजायत । द्रुह्युं चानुञ्च पूरुञ्च शर्म्मिष्ठा वार्षपर्व्वणी ।

तत्र यदोर्यादवाः पूरोः पौरवाः ।

पूरोस्तु भार्य्या कौशल्या नाम तस्यामस्य जज्ञे जनमेजयो नाम । यस्त्रीनश्वमेधानाजहार विश्वजिता चेष्ट्वा वनं विवेश । जनमेजयः खल्वनन्तां नामोपयेमे माधवीं तस्यामस्य जज्ञे प्राचिन्वान् । यः प्राचीं दिशं जिगाय यावत्सूर्य्योदयात् ततस्तस्य प्राचिन्वत्त्वं । २०६५

प्राचिन्वान् खल्वश्मकीमुपयेमे यादवीं तस्यामस्य जज्ञे संयातिः ।

संयातिः खलु दृषद्वतो दुहितरं वराङ्गीं नामोपयेमे तस्यामस्य जज्ञे अहंयातिः ।

अहंयातिः खलु कृतवीर्य्यदुहितरमुपयेमे भानुमतीं नाम तस्यामस्य जज्ञे सार्व्वभौमः ।

सार्व्वभौमः खलु जित्वा जहार कैकेयीं सुनन्दां नाम तामुपयेमे तस्यामस्य जज्ञे जयत्सेनो नाम ।

जयत्सेनः खलु वैदर्भीमुपयेमे सुश्रवां नाम तस्यामस्य जज्ञे अवाचीनः । २०७०

अवाचीनोऽपि वैदर्भीमपरामेवोपयेमे मर्य्यादां नाम तस्यामस्य जज्ञे अरिहः ।

अरिहः खल्वाङ्गीमुपयेमे तस्यामस्य जज्ञे महाभौमः ।

महाभौमः खलु प्रासेनजितीमुपयेमे सुयज्ञां नाम तस्यामस्य जज्ञे अयुतनायी यः पुरुषमेधानामयुतमानयत् तेनास्यायुतनायित्वं ।

अयुतनायी खलु पृथुश्रवसो दुहितरमुपयेमे कामां नाम तस्यामस्य जज्ञे अक्रोधनः।

स खलु कालिङ्गीं करम्भां नामोपयेमे तस्यामस्य जज्ञे देवातिथिः। १००५

देवातिथिः खलु वैदेहीमुपयेमे मर्य्यादां नाम तस्यामस्य जज्ञेऽरिहो नाम।

अरिहः खल्वाङ्गेयीमुपयेमे सुदेवां नाम तस्यां पुत्रमजीजनदृक्षं।

ऋक्षः खलु तक्षकदुहितरमुपयेमे ज्वालां नाम तस्यां पुत्रं मतिनारं नामोत्पादयामास।

मतिनारः खलु सरस्वत्यां गुणसमन्वितं द्वादशवार्षिकंसत्रमाहरत् समाप्ते च सत्रे सरस्वत्यभिगम्य तं भर्त्तारं वरयामास तस्यां पुत्रमजीजनत्तंसुं नाम।

अत्रानुवंशश्लोको भवति। तंसुं सरस्वती पुत्रं मतिनाराद्व्यजीजनत्। ईलिनं जनयामास कालिङ्ग्यां तंसुरात्मजं। १०१०

ईलिनस्तु रथन्तर्य्यां दुष्मन्ताद्यान् पञ्च पुत्रानजीजनत्।

दुष्मन्तः खलु विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे तस्यामस्य जज्ञे भरतः।

अत्रानुवंशश्लोकौ भवतः। भस्त्रा माता पितुः पुत्रो येन जातः स एव सः। भरस्व पुत्रं दुष्मन्त मावमंस्थाः शकुन्तलां।

रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात्। त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला।

ततोऽस्य भरतत्वं भरतः खलु काशेयीमुपयेमे सार्व्वसेनीं सुनन्दां नाम तस्यामस्य जज्ञे भुमन्युः। १०१५

भुमन्युः खलु दाशार्हीमुपयेमे विजयां नाम तस्यामस्य जज्ञे सुहोत्रः।

सुहोत्रः खल्विक्ष्वाकुकन्यामुपयेमे सुवर्णां नाम तस्यामस्य जज्ञे हस्ती य इदं हास्तिन पुरं स्थापयामास एतदस्य हास्तिनपुरत्वं।

हस्ती खलु त्रैगर्त्तीमुपयेमे यशोधरां नाम तस्यामस्य जज्ञे विकुण्ठनो नाम।

विकुण्ठनः खलु दाशार्हीमुपयेमे सुदेवां नाम तस्यामस्य जज्ञे अजमीढो नाम।

अजमीढस्य चतुर्व्विंशं पुत्रशतं बभूव कैकेय्यां गान्धार्य्यां विशालायामृक्षायां चेति। पृथक्पृथग्वंशधरा नृपतयः तत्र वंशकरः सम्वरणः। १०२०

सम्वरणः खलु वैवस्वतीं तपतीं नामोपयेमे तस्यामस्य जज्ञे कुरुः।

कुरुः खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम तस्यामस्य जज्ञे विदूरथः।

विदूरथस्तु माधवीमुपयेमे संप्रियां नाम तस्यामस्य जज्ञे अनश्वा नाम।

अनश्वा खलु मागधीमुपयेमे अमृतां नाम तस्यामस्य जज्ञे परीक्षित्।

परीक्षित् खलु बाहुदामुपयेमे सुयशां नाम तस्यामस्य जज्ञे भीमसेनः। १०२५

भीमसेनः खलु कैकेयीमुपयेमे कुमारीं नाम तस्यामस्य जज्ञे प्रतिश्रवा नाम।

प्रतिश्रवसः प्रतीपः खलु शैब्यामुपयेमे सुनन्दां नाम तस्यां पुत्रानुत्पादयामास देवापिं शान्तनुं वाह्लीकं चेति।

देवापिः खलु बाल एवारण्यं विवेश शान्तनुस्तु महीपालो बभूव।

अत्रानुवंशश्लोको भवति। यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते। पुनर्युवा च भवति तस्मात्तं शान्तनुं विदुः इति तदस्य शान्तनुत्वं।

शान्तनुः खलु गङ्गां भागीरथीमुपयेमे तस्यामस्य जज्ञे देवव्रतो नाम यमाहुर्भीष्ममिति। ३८००

भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति।

तस्यां पूर्व्वं कानीनो गर्भः पराशराद्द्वैपायनोऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्त्रौ बभूवतुः।

विचित्रवीर्य्यश्चित्राङ्गदश्च तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्व्वेण हतः विचित्रवीर्य्यस्तु राजासीत्।

विचित्रवीर्य्यः खलु कौशल्यात्मजेऽम्बिकाम्बालिके काशिराजदुहितरावुपयेमे।

विचित्रवीर्य्यस्त्वनपत्य एव विदेहत्वं प्राप्तः ततः सत्यवत्यचिन्तयन्मा दौष्यन्तोऽयं वंश उच्छेदं व्रजेदिति। ३८०५

सा द्वैपायनमृषिं मनसा चिन्तयामास। स तस्याः पुरतः स्थितः किङ्करवाणीति।

सा तमुवाच भ्राता तवानपत्य एव स्वर्यातो विचित्रवीर्य्यः साध्वपत्यं तस्योत्पादयेति।

स तथेत्युक्त्वा त्रीन्पुत्त्रानुत्पादयामास। धृतराष्ट्रं पाण्डुं विदुरञ्चेति।

तत्र धृतराष्ट्रस्य राज्ञः पुत्त्रशतं बभूव गान्धार्य्यां वरदानाद्द्वैपायनस्य।

तेषां धृतराष्ट्रस्य पुत्त्राणां चत्वारः प्रधाना बभूवुः। दुर्य्योधनो दुःशासनो विकर्णश्चित्रसेनश्चेति। ३८१०

पाण्डोस्तु द्वे भार्य्ये बभूवतुः कुन्ती पृथा नाम माद्री चेत्युभे स्त्रीरत्ने।

अथ पाण्डुर्मृगयां चरन्मैथुनगतमृषिमपश्यन्मृग्यां वर्त्तमानं तथैवाप्लुतमनास्वादितकामरसमतृप्तञ्च बाणेनाजघान।

स बाणविद्ध उवाच पाण्डुं चरता धर्म्ममिमं येन त्वयाऽभिज्ञेन कामरसस्याहमनवाप्तकामरसो निहतस्तस्मात्त्वमप्येतामवस्थामासाद्यानवाप्तकामरसः पञ्चत्वमाप्स्यसि क्षिप्रमेवेति स विवर्णरूपस्तथा पाण्डुः शापं परिहरमाणो नोपासर्पत भार्य्ये वाक्यं चोवाच।

स्वचापल्यादिदं प्राप्तवानहं शृणोमि च नानपत्यस्य लोकाः सन्तीति सा त्वं मदर्थे पुत्त्रानुत्पादयेति कुन्तीमुवाच सा तथोक्ता पुत्त्रानुत्पादयामास धर्म्माद्युधिष्ठिरं मारुताद्भीमसेनं शक्रादर्ज्जुनमिति।

तां संहृष्टः पाण्डुरुवाच इयं ते सपत्न्यनपत्या साध्वस्या अपत्यमुत्पाद्यतामिति। ३८१५

एवमस्त्विति कुन्ती तां विद्यां माद्र्याः प्रायच्छत्। माद्र्यामश्विभ्यां नकुलसहदेवावुत्पादितौ।

माद्रीं खल्वलङ्कृतां दृष्ट्वा पाण्डुर्भावं चक्रे स तां स्पृष्ट्वैव विदेहत्वं प्राप्तः।

तत्रैनं चिताग्निस्थं माद्री समन्वारुरोह उवाच कुन्ती यमयोरप्रमत्तया त्वया भवितव्यमिति।

ततस्ते पाण्डवाः कुन्त्या सहिता हस्तिनपुरमानीय तापसैर्भीष्मस्य विदुरस्य च निवेदिताः। सर्व्ववर्णानाञ्च निवेद्यान्तर्हितास्तापसा बभूवुः प्रेक्षमाणानांतेषां।

तच्च वाक्यमुपश्रुत्य भगवतामन्तरीक्षात्पुष्पवृष्टिः पपात देवदुन्दुभयश्च प्रणेदुः।

प्रतिगृहीताश्च पाण्डवाः पितुर्निधनमावेदयन्तस्तस्यौर्द्ध्वदेहिकं न्यायतश्च कृतवन्तस्तांस्तत्र निवसतः पाण्डवान् बाल्यात्प्रभृति दुर्य्योधनो नामर्षयत्। ३८२०

पापाचारो राक्षसीं बुद्धिमाश्रितोऽनेकैरुपायैरुद्धर्त्तुञ्च व्यवसितो भावित्वाच्चार्थस्य न शकितास्ते समुद्धर्त्तुं।

ततश्च धृतराष्ट्रेण व्याजेन वारणावतमनुप्रेषिता गमनमरोचयन्।

तत्रापि जतुगृहे दग्धुं समारब्धा न शकिता विदुरमन्त्रितेनेति।

तस्माच्च हिडिम्बमन्तरा हत्वा एकचक्रां गताः।

तस्यामप्येकचक्रायां वकं नाम राक्षसं हत्वा पाञ्चालनगरमधिगता: । ३८२५

तत्र द्रौपदीं भार्य्यामविन्दन् स्वविषयं चाभिजग्मु: ।

कुशलिन: पुत्रांश्चोत्पादयामासु: प्रतिविन्ध्यं युधिष्ठिर: सुतसोमं वृकोदर: । श्रुतकीर्त्तिमर्जुन: शतानीकं नकुल: श्रुतकर्म्माणं
सहदेव इति ।

युधिष्ठिरस्तु गोवासनस्य शैव्यस्य देविकां नाम कन्यां स्वयम्बरां लेभे तस्यां पुत्रं जनयामास यौधेयं नाम ।

भीमसेनोऽपि काश्यां बलन्धरां नामोपयेमे वीर्य्यशुल्कां तस्यां पुत्रं सर्व्वगं नामोत्पादयामास ।

अर्जुन: खलु द्वारवतीं गत्वा भगिनीं वासुदेवस्य सुभद्रां भद्रभाषिणीं भार्य्यामुदावहत् । स्वविषयं चाभ्याजगाम कुशली तस्या:
पुत्रमभिमन्युं अतीवगुणसम्पन्नं दयितं वासुदेवस्याजनयत् । ३८३०

नकुलस्तु चैद्यां करेणुमतीं नाम भार्य्यामुदावहत्तस्यां पुत्रं निरमित्रं नामाजनयत् ।

सहदेवोऽपि माद्रीमेव स्वयम्बरे विजयां नामोपयेमे मद्रराजस्य द्युतिमतो दुहितरं तस्यां पुत्रमजनयत्सुहोत्रं नाम ।

भीमसेनस्तु पूर्व्वमेव हिडिम्बायां राक्षसं घटोत्कचं पुत्रमुत्पादयामास ।

इत्येते एकादश पाण्डवानां पुत्रास्तेषां वंशकरोऽभिमन्यु: ।

स विराटस्य दुहितरमुपयेमे उत्तरां नाम । तस्यामस्य परासुर्गर्भोऽभवत्तमुत्सङ्गेन प्रतिजग्राह पृथा नियोगात् । पुरुषोत्तमस्य
वासुदेवस्य षाण्मासिकं गर्भमहमेनं जीवयिष्यामीति । ३८३५

स भगवता वासुदेवेनासञ्जातबलवीर्य्यपराक्रमोऽकालजातोऽस्त्राग्निना दग्धस्तेजसा स्वेन स जीवित: जीवयित्वा चैनमुवाच
परिक्षीणे कुले जातो भवत्वयं परीक्षिन्नामेति ।

परीक्षित्खलु माद्रवतीं नामोपयेमे त्वन्मातरं तस्यां भवान्जनमेजय: ।

भवतो वपुष्टमायां द्वौ पुत्रौ जज्ञाते शतानीक: शङ्कुकर्णश्च शतानीकस्य वैदेह्यां पुत्र उत्पन्नोऽश्वमेधदत्त इति ।

एष पूरोर्व्वंश: पाण्डवानाञ्च कीर्त्तितो धन्य: पुण्य: परमपवित्र: सततं श्रोतव्यो ब्राह्मणैर्नियमवद्भिरनन्तरं क्षत्रियै:स्वधर्म्मनिरतै:
प्रजापालनतत्परै: । वैश्यैरपि च श्रोतव्योऽधिगम्यश्च । तथा शूद्रैरपि त्रिवर्णशुश्रुषुभि: श्रद्दधानैरिति ।

इतिहासमिमं पुण्यमशेषत: श्रावयिष्यन्ति ये नरा: । श्रोष्यन्ति वा नियतात्मानो विमत्सरा मैत्रा वेदपरास्तेऽपि स्वर्गजित: पुण्य
लोका भवन्ति सततं देवब्राह्मणमनुष्याणां मान्या: सम्पूज्याश्च । ३८४०

परं हीदं भारतं भगवता व्यासेन प्रोक्तं पावनं ये ब्राह्मणादयो वर्णा: श्रद्दधाना अमत्सरा मैत्रा वेदसम्पन्ना: श्रोष्यन्ति तेऽपि
स्वर्गजित: सुकृतिनोऽशोच्या: कृताकृते भवन्ति ।

भवति चात्र श्लोक: । इदं हि वेदै: समितं पवित्रमपि चोत्तमं । धन्यं यशस्यमायुष्यं श्रोतव्यंनियतात्मभि: ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पूरुवंशानुकीर्त्तनेपञ्चनवतोऽध्याय: ॥ ९५ ॥

॥ वैशम्पायन उवाच ॥ इक्ष्वाकुवंशप्रभवो राजासीत्पृथिवीपति: । महाभिष इतिख्यात: सत्यवाक्सत्यविक्रम: ।

सोऽश्वमेधसहस्रेण राजसूयशतेन च । तोषयामास देवेशं स्वर्गं लेभे तत: प्रभु: ।

तत: कदाचिद्ब्रह्माणमुपासाञ्चक्रिरे सुरा: । तत्र राजर्षयो ह्यासन्सच राजा महाभिष: । ३८४५

अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहं । तस्या वास: समुद्धूतं मारुतेन शशिप्रभं ।

ततोऽभवन् सुरगणाः सहसाऽवाङ्मुखास्तदा । महाभिषन्तु राजर्षिमशङ्को दृष्टवान्नदीं ।
सोऽपध्यातो भगवता ब्रह्मणा तु महाभिषः । उक्तश्च जातो मर्त्त्येषु पुनर्लोकानवाप्स्यसि ।
स चिन्तयित्वा नृपतिर्नृपान् सर्वांस्तपोधनान् । प्रतीपं रोचयामास पितरं भूरितेजसं ।
महाभिषन्तु तं दृष्ट्वा नदी धैर्य्याच्च्युतं नृपं । तमेव मनसा ध्यायन्त्युपावर्त्तत् सरिद्वरा । ३८५०
सा तु विध्वस्तवपुषः कश्मलाभिहतान्नृप । ददर्श पथि गच्छन्ती वसून्देवान् दिवौकसः ।
तथारूपांश्च तान् दृष्ट्वा पप्रच्छ सरितां वरा । किमिदं नष्टरूपाः स्थ कच्चित् क्षेमं दिवौकसां ।
तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि । अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना ।
विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमं । सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा । तेन कोपाद्वयं शप्ता योनौ सम्भवतेति ह ।
न तच्छक्यं निवर्त्तयितुं यदुक्तं ब्रह्मवादिना । त्वमस्मान्मानुषी भूत्वा सृज पुत्रान् वसून् भुवि । ३८५५
न मानुषीणां जठरं प्रविशेम वयं शुभे । इत्युक्ता तैस्तु वसुभिस्तथेत्युक्त्वाऽब्रवीदिदं ।
॥ गङ्गोवाच ॥ मर्त्त्येषु पुरुषश्रेष्ठः को वः कर्त्ता भविष्यति ।
॥ वसव ऊचुः ॥ प्रतीपस्य सुतो राजा शान्तनुर्लोकविश्रुतः । भविता मानुषे लोके स नः कर्त्ता भविष्यति ।
॥ गङ्गोवाच ॥ ममाप्येवं मतं देवा यथा मां वदतानघाः । प्रियं तस्य करिष्यामि युष्माकञ्चैतदीप्सितं ।
॥ वसव ऊचुः ॥ जातान् कुमारान् स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि । यथा न चिरकालं नो निष्कृतिः स्यात्त्रिलोकगे । ३८६०
॥ गङ्गोवाच ॥ एवमेतत् करिष्यामि पुत्रस्तस्य विधीयतां । नास्य मोघः सङ्गमः स्यात् पुत्रहेतोर्मया सह ।
॥ वसव ऊचुः ॥ तुरीयार्द्धं प्रदास्यामो वीर्य्यस्यैकैकशो वयं । तेन वीर्य्येण पुत्रस्ते भविता तस्य चेप्सितः ।
न सम्पत्स्यति मर्त्त्येषु पुनस्तस्य तु सन्ततिः । तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्य्यवान् ।
एवं ते समयं कृत्वा गङ्गया वसवः सह । जग्मुः प्रहृष्टमनसो यथासङ्कल्पमञ्जसा ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि महाभिषोपाख्याने षण्णवतोऽध्यायः ॥ ९६ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रतीपो राजासीत् सर्व्वभूतहितः सदा । निषसाद समा बह्वीर्गङ्गाद्वारगतो जपन् । ३८६५
तस्य रूपगुणोपेता गङ्गा स्त्रीरूपधारिणी । उत्तीर्य्य सलिलात्तस्माल्लोभनीयतमाकृतिः ।
अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी । दक्षिणं शालसङ्काशमूरुं भेजे शुभानना ।
प्रतीपस्तु महीपालस्तामुवाच यशस्विनीं । करोमि किं ते कल्याणि प्रियं यत्तेऽभिकाङ्क्षितं ।
॥ स्त्र्युवाच ॥ त्वामहं कामये राजन् भजमानां भजस्व मां । त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः ।
॥ प्रतीप उवाच ॥ नाहं परस्त्रियं कामाद्गच्छेयं वरवर्णिनि । न चासवर्णां कल्याणि धर्म्म्यमेतद्धि मे व्रतं । ३८७०
॥ स्त्र्युवाच ॥ नाश्रेयस्यस्मि नागम्या न वक्तव्या च कर्हिचित् । भजन्तीं भज मां राजन् दिव्यां कन्यां वरस्त्रियं
॥ प्रतीप उवाच ॥ मया निवृत्तमेतत्तु यन्मां चोदयसि प्रियं । अन्यथा प्रतिपन्नं मां नाशयेद्धर्म्मविप्लवः ।
प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने । अपत्यानां स्नुषाणाञ्च भीरु विद्ध्येतदासनं ।
सव्योरुः कामिनीभोग्यस्त्वया स च विवर्जितः । तस्मादहं नाचरिष्ये त्वयि कामं वराङ्गने ।
स्नुषा मे भव सुश्रोणि पुत्रार्थं त्वां वृणोम्यहं । स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता । ३८७५

॥ स्त्र्युवाच ॥ एवमप्यस्तु धर्म्मज्ञ संयुज्येयं सुतेन ते। त्वद्भक्त्यात्तु भजिष्यामि प्रख्यातं भारतं कुलं।
पृथिव्यां पार्थिवा ये च तेषां यूयं परायणं। गुणा नहि मया शक्या वक्तुं वर्षशतैरपि।
कुलस्य ये वः प्रथितास्तत्साधुत्वमनुत्तमं। समयेनेह धर्म्मज्ञ आचरेयञ्च यद्विभो। तत्सर्व्वमेव पुत्त्रस्ते न मीमांसेत कर्हिचित्।
एवं वसन्ती पुत्त्रे ते वर्द्धयिष्याम्यहं रतिं। पुत्त्रैः पुण्यैः प्रियैश्चैव स्वर्गं प्राप्स्यति ते सुतः।
॥ वैशम्पायन उवाच ॥ तथेत्युक्त्वा तु सा राजंस्तत्रैवान्तरधीयत। पुत्त्रजन्म प्रतीक्षंस्तु स राजा तदधारयत्। १८८०
एतस्मिन्नेव काले तु प्रतीपः क्षत्त्रियर्षभः। तपस्तेपे सुतस्यार्थे सभार्य्यः कुरुनन्दनः।
तयोः समभवत्पुत्त्रो वृद्धयोः स महाभिषः। शान्तस्य जज्ञे सन्तानस्तस्मादासीत्स शान्तनुः।
संस्मरंश्चाक्षयाल्ँलोकान्विजितान्स्वेन कर्म्मणा। पुण्यकर्म्मकृदेवासीच्छान्तनुः कुरुसत्तमः।
प्रतीपः शान्तनुं पुत्त्रं यौवनस्थं ततोऽन्वशात्। पुरा स्त्री मां समभ्यागाच्छान्तनो भूतये तव।
त्वामाव्रजेद्यदि रहः सा पुत्त्र वरवर्णिनी। कामयानाभिरूपाढ्या दिव्यस्त्री पुत्त्रकाम्यया। १८८५
सा त्वया नानुयोक्तव्या कासि कस्यासि चाङ्गने। यच्च कुर्य्यान्न तत्कर्म्म सा प्रष्टव्या त्वयाऽनघ। मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तं।
॥ वैशम्पायन उवाच ॥ एवं सन्दिश्य तनयं प्रतीपः शान्तनुं तदा। स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह।
स राजा शान्तनुर्धीमान्देवराजसमद्युतिः। बभूव मृगयाशीलः सततं वनगोचरः।
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः। गङ्गामनु चचारैकः सिद्धचारणसेवितां।
स कदाचिन्महाराज ददर्श परमां स्त्रियं। जाज्वल्यमानां वपुषा साक्षाच्छ्रियमिवापरां। १८९०
सर्व्वानवद्यां सुदतीं दिव्याभरणभूषितां। सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभां।
तां दृष्ट्वा हृष्टरोमाऽभूद्विस्मितो रूपसम्पदा। पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः।
सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिं। स्नेहादागतसौहार्द्दा नातृप्यत विलासिनी।
॥ तामुवाच ततो राजा सान्त्वयन्श्लक्ष्णया गिरा। देवी वा दानवी वा त्वं गन्धर्व्वी चाथवाऽप्सराः।
यक्षी वा पन्नगी वाऽपि मानुषी वा सुमध्यमे। याचे त्वां सुरगर्भाभे भार्य्या मे भव शोभने। १८९५
इत्यादिपर्व्वणि सम्भव पर्व्वणि शान्तनूपाख्याने सप्तनवतोऽध्यायः ॥ ९७ ॥
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च। वसूनां समयं स्मृत्वाऽथाभ्यगच्छदनिन्दिता।
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा। भविष्यामि महीपाल महिषी ते वशानुगा।
यत्तु कुर्य्यामहं राजन्शुभं वा यदि वाऽशुभं। न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियं।
एवं हि वर्त्तमानेऽहं त्वयि वत्स्यामि पार्थिव। वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयं।
तथेति राज्ञा सा तूक्ता तदा भरतसत्तम। प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमं। १९००
आसाद्य शान्तनुस्तां च बुभुजे कामतो वशी। न प्रष्टव्येति मन्वानो न स तां किञ्चिदूचिवान्।
स तस्याः शीलवृत्तेन रूपौदार्य्यगुणेन च। उपचारेण च रहस्तुतोष जगतीपतिः।

दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी । मानुषं विग्रहं कृत्वा श्रीमती वरवर्णिनी ।
भाग्योपनतकामस्य भार्य्या चोपनताऽभवत् । शान्तनोर्नृपसिंहस्य देवराजसमद्युतेः ।
सम्भोगस्नेहचातुर्य्यैर्हावलास्यैर्मनोहरैः । राजानं रमयामास यथा रेमे तथैव सः । ३९०५
स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः । सम्वत्सरानृतून्मासान्न बुबुधे न बहून्गतान् ।
रममाणस्तया सार्द्धं यथाकामं नरेश्वरः । अष्टावजनयत्पुत्रांस्तस्याममरसन्निभान् ।
जातं जातञ्च सा पुत्रं क्षिपत्यम्भसि भारत । प्रीणाम्यहं त्वामित्युक्ता गङ्गा स्रोतस्यमज्जयत् ।
तस्य तन्नप्रियं राज्ञः शान्तनोरभवत्तदा । न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः ।
अथैनामष्टमे पुत्रे जाते प्रहसतीमिव । उवाच राजा दुःखार्त्तः परीप्सन्पुत्रमात्मनः । ३९१०
मा वधीः कस्य काऽसीति किं हिंससि सुतानिति । पुत्रघ्नि सुमहत्पापं सम्प्राप्तं ते सुगर्हितं ।
॥ स्त्र्युवाच ॥ पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर । जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ।
अहं गङ्गा जह्नुसुता महर्षिगणसेविता । देवकार्य्यार्थसिद्ध्यर्थमुषिताऽहं त्वया सह ।
इमेऽष्टौ वसवो देवा महाभागा महौजसः । वशिष्ठशापदोषेण मानुषत्वमुपागताः ।
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते । मद्विधा मानुषी धात्री लोके नास्तीह काचन । ३९१५
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता । जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षयाः ।
देवानां समयस्त्वेष वसूनां संश्रुतो मया । जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ।
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः । स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतं ।
एष पर्य्यायवासो मे वसूनां सन्निधौ कृतः । मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतं ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि भीष्मोत्पत्तावष्टनवतोध्यायः ॥ ९८ ॥
॥ शान्तनुरुवाच ॥ आपवो नाम कोन्वेष वसूनां किञ्च दुष्कृतं । यस्याभिशापात्ते सर्व्वे मानुषीं योनिमागताः । ३९२०
अनेन च कुमारेण त्वया दत्तेन किं कृतं । यस्य चैवकृते नायं मानुषेषु निवत्स्यति ।
ईशा वै सर्व्वलोकस्य वसवस्ते च वै कथं । मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ।
॥ वैशम्पायनउवाच ॥ एवमुक्ता तदा गङ्गा राजानमिदमब्रवीत् । भर्त्तारं जाह्नवी देवी शान्तनुं पुरुषर्षभं ।
गङ्गोवाच । यं लेभे वरुणः पुत्रं पुरा भरतसत्तम । वशिष्ठनामा स मुनिः ख्यात आपव इत्युत ।
तस्याश्रमपदं पुण्यं मृगपक्षिसमन्वितं । मेरोः पार्श्वे नगेन्द्रस्य सर्व्वर्त्तुकुसुमावृतं । ३९२५
स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम । वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ।
दक्षस्य दुहिता यातु सुरभीत्यभिशब्दिता । गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ।
अनुग्रहार्थं जगतः सर्व्वकामदुघां वरा । तां लेभे गान्तु धर्म्मात्मा होमधेनुं स वारुणिः ।
सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते । चचार पुण्ये रम्ये च गौरपेतभया तदा ।
अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ । पृथ्वाद्या वसवः सर्व्वे देवा देवर्षिसेवितं । ३९३०
ते सदारा वनं तच्च व्यचरन्त समन्ततः । रेमिरे रमणीयेषु पर्व्वतेषु वनेषु च ।

तस्यैकस्याथ भार्य्या तु वसोर्वासवविक्रम। सञ्चरन्ती वने तस्मिन् गां ददर्श सुमध्यमा।
नन्दिनीं नाम राजेन्द्र सर्व्वकामधुगुत्तमां। सा विस्मयसमाविष्टा शीलद्रविणसम्पदा।
द्यवे वै दर्शयामास तां गां गोवृषभेक्षण। आपीनाञ्च सुदोग्ध्रीञ्च सुवालधिखुरां शुभां। उपपन्नां गुणैः सर्व्वैः शीलेनानुत्तमेन च।
एवं गुणसमायुक्तां वसवे वसुनन्दिनी। दर्शयामास राजेन्द्र पुरा पौरवनन्दन। ३९२५
द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम। उवाच राजंस्तां देवीं तस्या रूपगुणान् वदन्।
एषा गौरुत्तमा देवी वारुणेरसितेक्षणा। ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमं।
अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे। दशवर्षसहस्राणि स जीवेत् स्थिरयौवनः।
एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा। तमुवाचानवद्याङ्गी भर्त्तारं दीप्ततेजसं।
अस्ति मे मानुषे लोके नरदेवात्मजा सखी। नाम्ना जितवती नाम रूपयौवनशालिनी। ३९३०
उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः। दुहिता प्रथिता लोके मानुषे रूपसम्पदा।
तस्या हेतोर्महाभाग सवत्सां गां ममेप्सितां। आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्द्धन।
यावदस्याः पयः पीत्वा सा सखी मम मानद। मानुषेषु भवत्वेका जरारोगविवर्जिता।
एतन्मम महाभाग कर्त्तुमर्हस्यनिन्दित। प्रियं प्रियतरं ह्यस्मान्नास्ति मेऽन्यत् कथञ्चन।
एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया। पृथ्वाद्यैर्भ्रातृभिः सार्द्धं द्यौस्तदा तां जहार गां। ३९३५
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप। ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुं। हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः।
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः। न चापश्यत्स गां तत्र सवत्सां काननोत्तमे।
ततः स मृगयामास वने तस्मिंस्तपोधनः। नाध्यगमच्च मृगयंस्तां गां मुनिरुदारधीः।
ज्ञात्वा तथाऽपनीतां तां वसुभिर्दिव्यदर्शनः। ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा।
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिं। तस्मात् सर्व्वे जनिष्यन्ति मानुषेषु न संशयः। ३९४०
एवं शशाप भगवान् वसूंस्तान् भरतर्षभ। वशं क्रोधस्य सम्प्राप्त आपवो मुनिसत्तमः।
शप्त्वा च तान्महाभागस्तपस्येव मनो दधे। एवं स शप्तवान् राजन् वसूनष्टौ तपोधनः। महाप्रभावो ब्रह्मर्षिर्देवान् क्रोधसमन्वितः।
अथाश्रमपदं प्राप्तास्ते वै भूयो महात्मनः। शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः।
प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ। लेभिरे न च तस्मात्ते प्रसादमृषिसत्तमात्।
आपवात् पुरुषव्याघ्र सर्व्वधर्म्मविशारदात्। ३९४५
उवाच च स धर्म्मात्मा शप्ता यूयं धरादयः। अनुसंवत्सरात्सर्व्वे शापमोक्षमवाप्स्यथ।
अयन्तु यत्कृते यूयं मया शप्ताः स वत्स्यति। द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्म्मणा।
नानृतं तच्चिकीर्षामि क्रुद्धो युष्मान् यदब्रुवं। न प्रजास्यति चाप्येष मानुषेषु महामनाः।
भविष्यति च धर्म्मात्मा सर्व्वशास्त्रविशारदः। पितुः प्रियहिते युक्तः स्त्रीभोगान् वर्जयिष्यति।

एवमुक्त्वा वसून्सर्व्वान्स जगाम महानृषिः । ततो मामुपजग्मुस्ते समेता वसवस्तदा । २९९०
अयाचन्त च मां राजन्वरं तच्च मया कृतं । जातान् जातान्प्रक्षिपास्मान् स्वयं गङ्गे त्वमम्भसि ।
एवं तेषामहं सम्यक् शप्तानां राजसत्तम । मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहं ।
अयं शापाद्दषेस्तस्य एक एव नृपोत्तम । द्यौराजन्मानुषे लोके चिरं वत्स्यति भारत ।
॥ वैशम्पायन उवाच ॥ एतदाख्याय सा देवी तत्रैवान्तरधीयत । आदाय च कुमारं तं जगामाथ यथेप्सितं ।
स तु देवव्रतो नाम गाङ्गेय इति चाभवत् । द्युनामा शान्तनोः पुत्त्रः शान्तनोरधिको गुणैः । २९९५
शान्तनुश्चापि शोकार्त्तो जगाम स्वपुरं ततः । तस्याहं कीर्त्तयिष्यामि शान्तनोरधिकान् गुणान् ।
महाभाग्यञ्च नृपतेर्भारतस्य महात्मनः । यस्येतिहासो द्युतिमान्महाभारतमुच्यते ।
इत्यादिपर्व्वणि सम्भवपर्व्वण्यापवोपाख्याने नवनवतोऽध्यायः ॥ ९९ ॥
॥ वैशम्पायन उवाच ॥ स राजा शान्तनुर्धीमान्देवराजर्षिसत्कृतः । धर्म्मात्मा सर्व्वलोकेषु सत्यवागिति विश्रुतः ।
दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमं । नित्यान्यासन्महासत्त्वे शान्तनौ पुरुषर्षभे ।
एवं स गुणसम्पन्नो धर्म्मार्थकुशलो नृपः । आसीद्भरतवंशस्य गोप्ता सर्व्वजनस्य च । २९००
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः । अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ।
तस्य कीर्तिमतो वृत्तमवेक्ष्य सततं नराः । धर्म्म एव परः कामादर्थाच्चेति व्यवस्थिताः ।
एतान्यासन्महासत्त्वे शान्तनौ पुरुषर्षभे । न चास्य सदृशः कश्चिद्धर्म्मतः पार्थिवोऽभवत् ।
वर्त्तमानं हि धर्म्मेषु सर्व्वधर्म्मभृतांवरं । तं महीपा महीपालं राजराज्येऽभ्यषेचयन् ।
वीतशोकभयाबाधाः सुखस्वप्नविबोधना । पतिं भारतगोप्तारं समपद्यन्त भूमिपाः । २९०५
तेन कीर्त्तिमता शिष्टाः शक्रप्रतिमतेजसा । यज्ञदानक्रियाशीलाः समपद्यन्त भूमिपाः । शान्तनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा ।
नियमात्सर्व्ववर्णानां धर्म्मोत्तरमवर्त्तत ।
ब्रह्म पर्य्यचरत् क्षत्त्रं विशः क्षत्त्रमनुव्रताः । ब्रह्मक्षत्त्रानुरक्ताश्च शूद्राः पर्य्यचरन् विशः ।
स हास्तिनपुरे रम्ये कुरूणां पुटभेदने । वसन्सागरपर्य्यन्तामन्वशासद्वसुन्धरां ।
स देवराजसदृशो धर्म्मज्ञः सत्यवागृजुः । दानधर्म्मतपोयोगात्श्रिया परमया युतः ।
अरागद्वेषसंयुक्तः सोऽभवत्प्रियदर्शनः । तेजसा सूर्य्यकल्पोऽभूद्वायुवेगसमो जवे । अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः । २९८०
बधः पशुवराहाणां तथैव मृगपक्षिणां । शान्तनौ पृथिवीपाले नावर्त्तत तथा नृप ।
ब्रह्मधर्म्मोत्तरे राज्ये शान्तनुर्विनयात्मवान् । समं शशास भूतानि कामरागविवर्ज्जितः ।
देवर्षिपितृयज्ञार्थमारभ्यन्त तदा क्रियाः । न चाधर्म्मेण केषाञ्चित्प्राणिनामभवद्बधः ।
असुखानामनाथानां तिर्य्यग्योनिषु वर्त्ततां । स एव राजा सर्व्वेषां भूतानामभवत्पिता ।
तस्मिन्कुरुपतिश्रेष्ठे राजराजेश्वरे सति । श्रिता वागभवत्सत्यं दानधर्म्माश्रितं मनः । २९८५
स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथापराः । रतिमप्राप्नुवन्स्त्रीषु बभूव वनगोचरः ।
तथारूपस्तथाचारस्तथावृत्तस्तथाश्रुतः । गाङ्गेयस्तस्य पुत्त्रोऽभून्नाम्ना देवव्रतो वसुः ।

सर्व्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च। महाबलो महासत्त्वो महावीर्य्यो महारथः।
स कदाचिन्मृगं विद्धा गङ्गामनुचरन्नदीं। भागीरथीमल्पजलां शान्तनुर्दृष्टवान्नृपः।
तां दृष्ट्वा चिन्तयामास शान्तनुः पुरुषर्षभः। स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा। ३९९०
ततो निमित्तमन्विच्छन्ददर्श स महामनाः। कुमारं रूपसम्पन्नं बृहन्तं चारुदर्शनं।
दिव्यमस्त्रं विकुर्व्वाणं यथादेवं पुरन्दरं। कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितं।
तां शरैराचितां दृष्ट्वा नदीं गङ्गां तदन्तिके। अभवद्विस्मितो राजा दृष्ट्वा कर्म्मातिमानुषं।
जातमात्रं पुरा दृष्ट्वा तं पुत्त्रं शान्तनुस्तदा। नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजं।
स तु तं पितरं दृष्ट्वा मोहयामास मायया। संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत। ३९९५
तदद्भुतं ततो दृष्ट्वा तत्र राजा स शान्तनुः। शङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह।
दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमं। गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतं।
अलङ्कृतामाभरणैर्व्विरजोऽम्बरसंवृतां। दृष्टपूर्व्वामपि स तां नाभ्यजानात्स शान्तनुः।
॥ गङ्गोवाच ॥ यं पुत्त्रमष्टमं राजंस्त्वं पुरा मय्यविन्दथाः। स चायं पुरुषव्याघ्र सर्व्वास्त्रविदुत्तमः।
गृहाणेमं महाराज मया संवर्द्धितं सुतं। आदाय पुरुषव्याघ्र नयस्वैनं गृहं विभो। ४०००
वेदानधिजगे साङ्गान्वशिष्ठादेष वीर्य्यवान्। कृतास्त्रः परमेष्वासो देवराजसमो युधि।
सुराणां सम्मतो नित्यमसुराणाञ्च भारत। उशना वेद यच्छास्त्रमयं तद्वेद सर्व्वशः।
तथैवाङ्गिरसः पुत्त्रः सुरासुरनमस्कृतः। यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन्प्रतिष्ठितं।
तव पुत्त्रे महाबाहो साङ्गोपाङ्गं महात्मनि। ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान्।
यदस्त्रं वेद रामश्च तदेतस्मिन्प्रतिष्ठितं। महेष्वासमिमं राजन्राजधर्म्मार्थकोविदं। मया दत्तं निजं पुत्त्रं वीरं वीर गृहं नय। ४००५
॥ वैशम्पायन उवाच ॥ तयैवं समनुज्ञातः पुत्त्रमादाय शान्तनुः। भ्राजमानं यथादित्यमाययौ स्वपुरं प्रति।
पौरवस्तु पुरीं गत्वा पुरन्दरपुरोपमां। सर्व्वकामसमृद्धार्थं मेने चात्मानमात्मना।
पौरवेषु ततः पुत्त्रं राज्यार्थमभयप्रदं। गुणवन्तं महात्मानं यौवराज्येऽभ्यषेचयत्।
पौरवाञ्छान्तनोः पुत्त्रः पितरञ्च महायशाः। राष्ट्रञ्च रञ्जयामास वृत्तेन भरतर्षभ।
स तथा सह पुत्त्रेण रममाणो महीपतिः। वर्त्तयामास वर्षाणि चत्वार्य्यमितविक्रमः। ४०१०
स कदाचिद्वनं यातो यमुनामभितो नदीं। महीपतिरनिर्द्देश्यमाजिघ्रद्गन्धमुत्तमं।
तस्य प्रभवमन्विच्छन्विचचार समन्ततः। स ददर्श तदा कन्यां दाशानां देवरूपिणीं।
तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनां। कस्य त्वमसि का चाऽसि किञ्च भीरु चिकीर्षसि।
साऽब्रवीद्दाशकन्याऽस्मि धर्म्मार्थं वाहये तरीं। पितुर्न्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः।
रूपमाधुर्य्यगन्धैस्तां संयुक्तां देवरूपिणीं। समीक्ष्य राजा दाशेयीं कामयामास शान्तनुः। ४०१५
स गत्वा पितरं तस्या वरयामास तां तदा। पर्य्यपृच्छत्ततस्तस्याः पितरं चात्मकारणात्।

स च तं प्रत्युवाचेदं दाशराजो महीपतिं । जातमात्रैव मे देया वराय वरवर्णिनी । हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर ।

यदीमां धर्म्मपत्नीं त्वमत्तः प्रार्थयसेऽनघ । सत्यवागसि सत्येन समयं कुरु मे ततः ।

समयेन प्रदद्यां ते कन्यामहमिमां नृप । नहि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ।

॥ शान्तनुरुवाच ॥ श्रुत्वा तव वरं दाश व्यवस्येयमहं तव । दातव्यं चेत्प्रदास्यामि नत्वदेयं कथञ्चन । ४०२०

॥ दाशउवाच ॥ अस्यां जायेत यः पुत्त्रः स राजा पृथिवीपते । त्वदूर्द्धमभिषेक्तव्यो नान्यः कश्चन पार्थिव ।

॥ वैशम्पायनउवाच ॥ नाकामयत तं दातुं वरं दाशाय शान्तनुः । शरीरजेन तीव्रेण दह्यमानोऽपि भारत ।

स चिन्तयन्नेव तदा दाशकन्यां महीपतिः । प्रत्ययाद्धास्तिनपुरं कामोपहतचेतनः ।

ततः कदाचिच्छोचन्तं शान्तनुं ध्यानमास्थितं । पुत्त्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ।

सर्व्वतो भवतः क्षेमं विधेयाः सर्व्वपार्थिवाः । तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः । ४०२५

ध्यायन्निव च मां राजन्नाभिभाषसि किञ्चन । नचाश्वेन विनिर्यासि विवर्णो हरिणः कृशः ।

व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्य्यां हि तत्र वै । एवमुक्तः स पुत्त्रेण शान्तनुः प्रत्यभाषत ।

असंशयं ध्यानपरो यथावत्स तथा शृणु । अपत्यं नस्त्वमेवैकः कुले महति भारत ।

शस्त्रनित्यश्च सततं पौरुषे पर्य्यवस्थितः । अनित्यतां च लोकानामनुशोचामि पुत्त्रक । कथञ्चित्तव गाङ्गेय विपत्तौ नास्ति नः कुलं ।

असंशयं त्वमेवैकः शतादपि वरः सुतः । नचाप्यहं वृथा भूयो दारान्कर्त्तुमिहोत्सहे । ४०३०

सन्तानस्याविनाशाय कामये भद्रमस्तु ते । अनपत्यन्त्वेकपुत्त्रमित्याहुर्द्धर्म्मवादिनः ।

अग्निहोत्रं त्रयी विद्या सन्तानमपि चाक्षयं । सर्व्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीं ।

एवमेतन्मनुष्येषु तच्च सर्व्वं प्रजास्विति । यदपत्यं महाप्राज्ञ तत्र मे नास्ति संशयः ।

एषा त्रयी पुराणानां देवतानाञ्च शाश्वती । त्वञ्च शूरः सदामर्षी शस्त्रनित्यश्च भारत । नान्यत्र युद्धात्तस्मात्ते निधनं विद्यते क्वचित् ।

सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत् । इति ते कारणं तात दुःखस्योक्तमशेषतः । ४०३५

॥ वैशम्पायनउवाच ॥ ततस्तत्कारणं राज्ञो ज्ञात्वा सर्व्वमशेषतः । देवव्रतो महाबुद्धिः प्रज्ञया चान्वचिन्तयत् ।

अभ्यगच्छत्तदैवाशु वृद्धामात्यं पितुर्हितं । तमपृच्छत्तदाऽभ्येत्य पितुस्तच्छोककारणं ।

तस्मै स कुरुमुख्याय यथावत्परिपृच्छते । वरं शशंस कन्यां तामुद्दिश्य भरतर्षभ ।

ततो देवव्रतो वृद्धैः क्षत्त्रियैः सहितस्तदा । अभिगम्य दाशराजं कन्यां वव्रे पितुः स्वयं ।

तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च । अब्रवीच्चैनमासीनं राजसंसदि भारत । ४०४०

त्वमेव नाथः पर्य्याप्तः शान्तनोर्भरतर्षभ । पुत्त्रः शस्त्रभृतां श्रेष्ठः किन्तु वक्ष्यामि ते वचः ।

को हि सम्बन्धकं श्लाघ्यमीप्सितं यौनमीदृशं । अतिक्रामन्न तप्येत साक्षादपि शतक्रतुः ।

अपत्यं चैतदार्य्यस्य यो युष्माकं समो गुणैः । यस्य शुक्रात्सत्यवती संभूता वरवर्णिनी ।

तेन मे बहुशस्तात पिता ते परिकीर्त्तितः । अर्हः सत्यवतीं वोढुं धर्म्मज्ञः स नराधिपः ।

असितो ह्यपि देवर्षिः प्रत्याख्यातः पुरा मया। सत्यवत्या भृशं ह्यर्थी स आसीदृषिसत्तमः। ४०४५
कन्यापितृत्वात् किञ्चित्तु वक्ष्यामि त्वां नराधिप। बलवत्सपत्नतामत्र दोषं पश्यामि केवलं।
यस्य हि त्वं सपत्नः स्या गन्धर्व्वस्यासुरस्य वा। न स जातु चिरं जीवेत्त्वयि क्रुद्धे परन्तप।
एतावानत्र दोषो हि नान्यः कश्चन पार्थिव। एतज्जानीहि भद्रन्ते दानादाने परन्तप।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु गाङ्गेयस्तद्युक्तं प्रत्यभाषत। शृण्वतां भूमिपालानां पितुरर्थाय भारत।
इदं मे व्रतमादत्स्व सत्यं सत्यवतां वर। नैव जातो नवाऽजात ईदृशं वक्तुमुत्सहेत्। ४०५०
एवमेतत्करिष्यामि यथा त्वमनुभाषसे। योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति।
इत्युक्तः पुनरेवाथ तं दाशः प्रत्यभाषत। चिकीर्षुर्दुष्करं कर्म्म राज्यार्थे भरतर्षभ।
त्वमेव नाथः सम्प्राप्तः शान्तनोरमितद्युते। कन्यायाश्चैव धर्म्मात्मन्प्रभुर्दानाय चेश्वरः।
इदं तु वचनं सौम्य कार्य्यं चैव निबोध मे। कौमारिकाणां शीलेन वक्ष्याम्यहमरिन्दम।
यत्त्वया सत्यवत्यर्थे सत्यधर्म्मपरायण। राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत्। ४०५५
नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन। तवापत्यं भवेद्यत्तु तत्र नः संशयो महान्।
॥ वैशम्पायन उवाच ॥ तस्यैतन्मतमाज्ञाय सत्यधर्म्मपरायणः। प्रत्यजानात्तदा राजन्पितुः प्रियचिकीर्षया।
॥ गाङ्गेय उवाच ॥ दाशराज निबोधेदं वचनं मे नृपोत्तम। शृण्वतां भूमिपालानां यद्ब्रवीमि पितुः कृते।
राज्यं तावत्पूर्व्वमेव मया त्यक्तं नराधिपाः। अपत्यहेतोरपि च करिष्येऽद्य विनिश्चयं।
अद्यप्रभृति मे दाश ब्रह्मचर्य्यं भविष्यति। अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि। ४०६०
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा सम्प्रहृष्टतनूरुहः। ददानीत्येव तं दाशो धर्म्मात्मा प्रत्यभाषत।
ततोऽन्तरीक्षेऽप्सरसो देवाः सर्षिगणास्तदा। अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन्।
ततः स पितुरर्थाय तामुवाच यशस्विनीं। अधिरोह रथं मातर्गच्छावः स्वगृहानिति।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भाविनीं। आगम्य हास्तिनपुरं शान्तनोः संन्यवेदयत्।
तस्य तद्दुष्करं कर्म्म प्रशशंसुर्नराधिपाः। समेताश्च पृथक्चैव भीष्मोऽयमिति चाब्रुवन्। ४०६५
तच्छ्रुत्वा दुष्करं कर्म्म कृतं भीष्मेण शान्तनुः। स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने।
इत्यादिपर्व्वणि सम्भवपर्व्वणि सत्यवतीलाभोपाख्याने शतोऽध्यायः ॥ १०० ॥
॥ वैशम्पायन उवाच ॥ ततो विवाहे निर्वृत्ते स राजा शान्तनुर्नृपः। तां कन्यां रूपसम्पन्नां स्वगृहे संन्यवेशयत्।
ततः शान्तनवो धीमान्सत्यवत्यामजायत। वीरश्चित्राङ्गदो नाम वीर्य्यवान्पुरुषेश्वरः।
अथापरं महेष्वासं सत्यवत्यां सुतं प्रभुः। विचित्रवीर्य्यं राजानं जनयामास वीर्य्यवान्।
अप्राप्तवति तस्मिंस्तु यौवनं पुरुषर्षभे। स राजा शान्तनुर्धीमान्कालधर्म्ममुपेयिवान्। ४०७०
स्वर्गते शान्तनौ भीष्मश्चित्राङ्गदमरिन्दमं। स्थापयामास वै राज्ये सत्यवत्या मते स्थितः।
स तु चित्राङ्गदः शौर्य्यात्सर्व्वांश्चिक्षेप पार्थिवान्। मनुष्यं न हि मेने स कञ्चित्सदृशमात्मनः।
तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा। गन्धर्व्वराजो बलवांस्तुल्यनामाऽभ्ययात्तदा।

तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह । तयोर्बलवतोस्तत्र गन्धर्व्वकुरुमुख्ययोः । नद्यास्तीरे सरस्वत्याः समास्तिस्रोऽभवद्रणः ।

तस्मिन्विमर्द्दे तुमुले शस्त्रवर्षसमाकुले । मायाधिकोऽवधीद्वीरं गन्धर्व्वः कुरुसत्तम । ४०७५

स हत्वा तु नरश्रेष्ठं चित्राङ्गदमरिन्दमं । अन्ताय कृत्वा गन्धर्व्वो दिवमाचक्रमे ततः ।

तस्मिन्पुरुषशार्दूले निहते भूरितेजसि । भीष्मः शान्तनवो राजा प्रेतकार्य्याण्यकारयत् ।

विचित्रवीर्य्यञ्च तदा बालमप्राप्तयौवनं । कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरं ।

विचित्रवीर्य्यः स तदा भीष्मस्य वचने स्थितः । अन्वशासन्महाराज पितृपैतामहं पदं ।

स धर्म्मशास्त्रकुशलं भीष्मं शान्तनवं नृपः । पूजयामास धर्म्मेण स चैनं प्रत्यपालयत् । ४०८०

इत्यादिपर्व्वणि सम्भवपर्व्वणि चित्राङ्गदोपाख्यानेएकाधिकशततोऽध्यायः ॥ १०१ ॥

॥ वैशम्पायनउवाच ॥ हते चित्राङ्गदे भीष्मो बाले भ्रातरि कौरव । पालयामास तद्राज्यं सत्यवत्या मते स्थितः ।

संप्राप्तयौवनं दृष्ट्वा भ्रातरं धीमतांवरः । भीष्मो विचित्रवीर्य्यस्य विवाहायाकरोन्मतिं ।

अथ काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरोपमाः । शुश्राव सहिता राजन्वृण्वाना वै स्वयम्वरं ।

ततः स रथिनां श्रेष्ठो रथेनैकेन शत्रुजित् । जगामानुमते मातुः पुरीं वाराणसीं प्रभुः ।

तत्र राज्ञः समुदितान्सर्व्वतः समुपागतान् । ददर्श कन्यास्ताश्चैव भीष्मः शान्तनुनन्दनः । ४०८५

कीर्त्यमानेषु राज्ञान्तु तदा नामसु सर्व्वशः । भीष्मस्तदा स्वयं कन्या वरयामास ताः प्रभुः ।

उवाच च महीपालान्राजन्जलदनिःस्वनः । रथमारोप्य ताः कन्या भीष्मः प्रहरतां वरः ।

आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः । अलङ्कृत्य यथाशक्ति प्रदाय च धनान्यपि ।

प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि । वित्तेन कथितेनान्ये बलेनान्येऽनुमान्य च ।

प्रमत्तामुपयान्त्यन्ये स्वयमन्ये च विन्दते । आर्षं विधिं पुरस्कृत्य दारान्विन्दन्ति चापरे । ४०९०

अष्टमं तमथो वित्त विवाहं कविभिर्वृतं । स्वयम्वरन्तु राजन्याः प्रशंसन्त्युपयान्ति च । प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्म्मवादिनः ।

ता इमाः पृथिवीपाला जिहीर्षामि बलादितः । ते यतध्वं परं शक्त्या विजयायेतराय वा ।

स्थितोऽहं पृथिवीपाला युद्धाय कृतनिश्चयः । एवमुक्त्वा महीपालान्काशिराजञ्च वीर्य्यवान् ।

सर्व्वाः कन्याः स कौरव्यो रथमारोप्य च स्वकं । आमन्त्र्य च स तान्प्रायाच्छीघ्रं कन्याः प्रगृह्य ताः । ततस्ते पार्थिवाः सर्व्वे समुत्पेतुरमर्षिताः । संस्पृशन्तः स्वकान्बाहून्दशन्तो दशनच्छदान् ।

तेषामाभरणान्याशु त्वरितानां विमुञ्चतां । आमुञ्चताञ्च वर्म्माणि संभ्रमः सुमहानभूत् । ४०९५

ताराणामिव सम्पातो बभूव जनमेजय । भूषणानाञ्च शुभ्राणां कवचानाञ्च सर्व्वशः ।

सवर्म्मभिर्भूषणैश्च द्राग्भ्राम्यद्भिरितस्ततः । सक्रोधामर्षजिह्मभ्रूसकषायदृशस्तथा ।

सूतोपक्लृप्तान्रुचिरान्सदश्वोद्यतधूर्गतान् । रथानास्थाय ते वीराः सर्व्वप्रहरणान्विताः ।

प्रयान्तमेकं कौरव्यमनुसस्रुरुदायुधाः । ततः समभवद्युद्धं तेषां तस्य च भारत ।

एकस्य च बहूनाञ्च तुमुलं लोमहर्षणं । ते त्विषून्दशसाहस्रांस्तस्मै युगपदाक्षिपन् । अप्राप्तांश्चैव तानाशु भीष्मः सर्व्वांस्तथाऽन्तरा । चिच्छेद शरवर्षेण महता लोमवाहिना । ४१००

ततस्ते पार्थिवाः सर्वे सर्वतः परिवार्य्य तं। ववृषुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः।
स तं बाणमयं वर्षं शरैरावार्य्य सर्वतः। ततः सर्वान्महीपालान्पर्य्यविध्यत्त्रिभिस्त्रिभिः ।
एकैकस्तु ततो भीष्मं राजन्विव्याध पञ्चभिः। स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमन्।
तद्युद्धमासीत्तुमुलं घोरं देवासुरोपमं। पश्यतां लोकवीराणां शरशक्तिसमाकुलं।
स धनूंषि ध्वजाग्राणि वर्म्माणि च शिरांसि च। चिच्छेद समरे भीष्मः शतशोऽथ सहस्रशः । ४१०५
तस्यातिपुरुषानन्याँल्लाघवं रथचारिणः। रक्षणं चात्मनः सङ्ख्ये शत्रवोऽप्यभ्यपूजयन्।
तान्विनिर्जित्य तु रणे सर्वशस्त्रभृतां वरः। कन्याभिः सहितः प्रायाद्भारतो भारतान्प्रति।
ततस्तं पृष्ठतो राजञ्छाल्वराजो महारथः। अभ्यगच्छदमेयात्मा भीष्मं शान्तनवं रणे।
वारणं जघने भिन्दन्दन्ताभ्यामपरो यथा। वासितामनुसम्प्राप्तो यूथपो बलिनांवरः।
स्त्रीकाम तिष्ठ तिष्ठेति भीष्ममाह स पार्थिवः। शाल्वराजो महाबाहुरमर्षेण प्रचोदितः । ४११०
ततः स पुरुषव्याघ्रो भीष्मः परबलार्द्दनः। तद्वाक्याकुलितः क्रोधाद्विधूमोऽग्निरिव ज्वलन्।
विततेषुधनुष्पाणिर्विकुञ्चितललाटभृत्। क्षत्रधर्म्मं समास्थाय व्यपेतभयसम्भ्रमः ।
निवर्त्तयामास रथं शाल्वं प्रति महारथः । निवर्त्तमानं तं दृष्ट्वा राजानः सर्व एव ते। प्रेक्षकाः समपद्यन्त भीष्मशाल्व समागमं।
तौ वृषाविव नर्द्दन्तौ बलिनौ वासितान्तरे। अन्योन्यमभिवर्त्तेतां बलविक्रमशालिनौ।
ततो भीष्मं शान्तनवं शरैः शतसहस्रशः। शाल्वराजो नरश्रेष्ठः समवाकिरदाशुगैः। ४११५
पूर्व्वमभ्यर्द्दितं दृष्ट्वा भीष्मं शाल्वेन ते नृपाः। विस्मिताः समपद्यन्त साधु साध्विति चाब्रुवन्।
लाघवं तस्य ते दृष्ट्वा समरे सर्वपार्थिवाः। अपूजयन्त संहृष्टा वाग्भिः शाल्वं नराधिपं।
क्षत्रियाणां ततो वाचः श्रुत्वा परपुरञ्जयः। क्रुद्धः शान्तनवो भीष्मस्तिष्ठ तिष्ठेत्यभाषत।
सारथिं चाब्रवीत्क्रुद्धो याहि यत्रैष पार्थिवः। यावदेनं निहन्म्यद्य भुजङ्गमिव पक्षिराट्।
ततोऽस्त्रं वारुणं सम्यग्योजयामास कौरवः। तेनाश्वांश्चतुरोऽमृद्नाच्छाल्वराजस्य भूपतेः। ४१२०
अस्त्रैरस्त्राणि संवार्य्य शाल्वराजस्य कौरवः। भीष्मो नृपतिशार्दूल न्यवधीत्तस्य सारथिं।
अस्त्रेण चाप्यथैन्द्रेण न्यवधीत्तुरगोत्तमान्। कन्याहेतोर्नरश्रेष्ठ भीष्मः शान्तनवस्तदा।
जित्वा विसर्ज्जयामास जीवन्तं नृपसत्तमं। ततः शाल्वः स्वनगरं प्रययौ भरतर्षभ।
स्वराज्यमन्वशाच्चैव धर्म्मेण नृपतिस्तदा। राजानो ये च तत्रासन्स्वयम्वरदिदृक्षवः। स्वान्येव तेऽपि राष्ट्राणि जग्मुः परपुरञ्जयाः।
एवं विजित्य ताः कन्या भीष्मः प्रहरतां वरः। प्रययौ हास्तिनपुरं यत्र राजा स कौरवः। ४१२५
विचित्रवीर्य्यो धर्म्मात्मा प्रशास्ति वसुधामिमां। यथा पिताऽस्य कौरव्यः शान्तनुर्नृपसत्तमः।
सोऽचिरेणैव कालेन अत्यक्रामन्नराधिप। वनानि सरितश्चैव शैलांश्च विविधद्रुमान्।
अक्षतः क्षपयित्वाऽरीन्संख्येऽसंख्येयविक्रमः। आनयामास काशस्य सुताः सागरगासुतः।

स्नुषा इव स धर्म्मात्मा भगिनीरिव चानुजाः । यथा दुहितरश्चैव परिगृह्य ययौ कुरून् ।

आनिन्ये स महाबाहुर्भ्रातुः प्रियचिकीर्षया । ताः सर्व्वगुणसम्पन्ना भ्राता भ्रात्रे यवीयसे । ४१३०

भीष्मो विचित्रवीर्य्याय प्रददौ विक्रमाहृताः । एवं धर्म्मेण धर्म्मज्ञः कृत्वा कर्म्मातिमानुषं । भ्रातुर्विचित्रवीर्य्यस्य विवाहायोपचक्रमे ।

सत्यवत्या सह मिथः कृत्वा निश्चयमात्मवान् । विवाहं कारयिष्यन्तं भीष्मं काशिपतेः सुता । ज्येष्ठा तासामिदं वाक्यमब्रवीद्धसती तदा ।

मया सौभपतिः पूर्व्वं मनसा हि वृतः पतिः । तेन चास्मि वृता पूर्व्वमेष कामश्च मे पितुः ।

मया वरयितव्योऽभूच्छाल्वस्तस्मिन् स्वयम्वरे । एतद्विज्ञाय धर्म्मज्ञ धर्म्मतत्त्वं समाचर ।

एवमुक्तस्तया भीष्मः कन्यया विप्रसंसदि । चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्म्मणः । ४१३५

विनिश्चित्य स धर्म्मज्ञो ब्राह्मणैर्वेदपारगैः । अनुजज्ञे तदा ज्येष्ठामम्बां काशीपतेः सुतां ।

अम्बिकाऽम्बालिके भार्य्ये प्रादाद्भ्रात्रे यवीयसे । भीष्मो विचित्रवीर्य्याय विधिदृष्टेन कर्म्मणा ।

तयोः पाणी गृहीत्वा तु रूपयौवनदर्पितः । विचित्रवीर्य्यो धर्म्मात्मा कामात्मा समपद्यत ।

ते चापि बृहती श्यामे नीलकुञ्चितमूर्द्धजे । रक्ततुङ्गनखोपेते पीनश्रोणिपयोधरे ।

आत्मनः प्रतिरूपोऽसौ लब्धः पतिरिति स्थिते । विचित्रवीर्य्यं कल्याणौ पूजयामासतुः शुभे । ४१४०

स चाश्विरूपसदृशो देवतुल्यपराक्रमः । सर्व्वासामेव नारीणां चित्तप्रमथनो रहः ।

ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः । विचित्रवीर्य्यस्तरुणो यक्ष्मणा समगृह्यत ।

सुहृदां यतमानानामाप्तैः सह चिकित्सकैः । जगामास्तमिवादित्यः कौरव्यो यमसादनं ।

धर्म्मात्मा स तु गाङ्गेयश्चिन्ताशोकपरायणः । प्रेतकार्य्याणि सर्व्वाणि तस्य सम्यगकारयत् ।

राज्ञो विचित्रवीर्यस्य सत्यवत्या मते स्थितः । ऋत्विग्भिः सहितो भीष्मः सर्व्वैश्च कुरुपुङ्गवैः । ४१४५

इत्यादिपर्व्वणि सम्भवपर्व्वणि विचित्रवीर्य्योपरमे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

वैशम्पायनउवाच ॥ ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी । पुत्रस्य कृत्वा कार्य्याणि स्नुषाभ्यां सह भारत ।

समाश्वास्य स्नुषे ते च भीष्मं शस्त्रभृतांवरं । धर्म्मञ्च पितृवंशञ्च मातृवंशञ्च भाविनी । प्रसमीक्ष्य महाभागा गाङ्गेयं वाक्यमब्रवीत् ।

शान्तनोर्धर्म्मनित्यस्य कौरव्यस्य यशस्विनः । त्वयि पिण्डश्च कीर्त्तिश्च सन्तानञ्च प्रतिष्ठितं ।

यथा कर्म्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवं । यथा चायुर्ध्रुवं सत्ये त्वयि धर्म्मस्तथा ध्रुवः ।

वेत्थ धर्म्मांश्च धर्म्मज्ञ समासेनेतरेण च । विविधास्त्वं श्रुतीर्वेत्थ वेदाङ्गानि च सर्व्वशः । ४१५०

व्यवस्थानञ्च ते धर्म्मे कुलाचारञ्च लक्षये । प्रतिपत्तिश्च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ।

तस्मात्सुभृशमाश्वस्य त्वयि धर्म्मभृतांवर । कार्य्ये त्वां विनियोक्ष्यामि तच्छ्रुत्वा कर्त्तुमर्हसि ।

मम पुत्रस्तव भ्राता वीर्य्यवान्सुप्रियश्च ते । बाल एव गतः स्वर्गमपुत्रः पुरुषर्षभ ।

इमे महिष्यौ भ्रातुस्ते काशिराजसुते शुभे । रूपयौवनसम्पन्ने पुत्रकामे च भारत ।

तयोरुत्पादयापत्यं सन्तानाय कुलस्य नः । मन्नियोगान्महाबाहो धर्म्मं कर्त्तुमिहार्हसि । ४१५५

राज्ये चैवाभिषिच्यस्व भारताननुशाधि च। दारांश्च कुरु धर्म्मेण मा निमज्जीः पितामहान्।
॥ वैशम्पायन उवाच ॥ तथोच्यमानो मात्रा स सुहृद्भिश्च परन्तपः। इत्युवाचाथ धर्म्मात्मा धर्म्म्यमेवोत्तरं वचः।
असंशयं परो धर्म्मस्त्वया मातरुदाहृतः। त्वमपत्यं प्रति च मे प्रतिज्ञां वेत्थ वै परां।
जानासि च यथावृत्तं शुल्कहेतोस्त्वदन्तरे। स सत्यवति सत्यं ते प्रतिजानाम्यहं पुनः।
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः। यद्वाप्यधिकमेताभ्यां नतु सत्यं कथञ्चन। ४१६०
त्यजेच्च पृथिवी गन्धमापश्च रसमात्मनः। ज्योतिस्तथा त्यजेद्रूपं वायुः स्पर्शगुणं त्यजेत्।
प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्मतां। त्यजेच्छब्दं तथाकाशं सोमः शीतांशुतां त्यजेत्।
विक्रमं वृत्रहा जह्याद्धर्म्मं जह्याच्च धर्म्मराट्। नत्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथञ्चन।
एवमुक्ता तु पुत्त्रेण भूरिद्रविणतेजसा। माता सत्यवती भीष्ममुवाच तदनन्तरं।
जानामि ते स्थितिं सत्ये परां सत्यपराक्रम। इच्छन्सृजेथास्त्रीँल्लोकानन्यांस्त्वं स्वेन तेजसा। ४१६५
जानामि चैवं सत्यं तन्मदर्थं यच्च भाषितं। आपद्धर्म्मं त्वमावेक्ष्य वह पैतामहीं धुरं।
यथा ते कुलतन्तुश्च धर्म्मश्च न पराभवेत्। सुहृदश्च प्रहृष्येरंस्तथा कुरु परन्तप।
लालप्यमानां तामेवं कृपणां पुत्त्रगृद्धिनीं। धर्म्मादपेतं ब्रुवतीं भीष्मो भूयोऽब्रवीदिदं।
राज्ञि धर्म्मानवेक्षस्व मा नः सर्व्वान्व्यनीनशः। सत्याच्च्युतिः क्षत्त्रियस्य न धर्म्मेषु प्रशस्यते।
शान्तनोरपि सन्तानं यथा स्यादक्षयं भुवि। तत्ते धर्म्मं प्रवक्ष्यामि क्षात्त्रं राज्ञि सनातनं। ४१७०
श्रुत्वा तं प्रतिपद्यस्व प्राज्ञैः सह पुरोहितैः। आपद्धर्म्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च।

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीष्मसत्यवतीसंवादे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

॥ भीष्म उवाच ॥ जामदग्न्येन रामेण पितुर्व्वधममृष्यता। राजा परशुना पूर्व्वं हैहयाधिपतिर्हतः।
शतानि दश बाहूनां निकृत्तान्यर्ज्जुनस्य वै। लोकस्याचरितो धर्म्मस्तेनाति किल दुश्चरः।
पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता। निर्द्दग्धं क्षत्त्रमसकृद्रथेन जयता महीं।
एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना। त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्त्रिया पुरा। ४१७५
एवं निःक्षत्त्रिये लोके कृते तेन महर्षिणा। उत्पादितान्यपत्यानि ब्राह्मणैर्व्वेदपारगैः।
पाणिग्राहस्य तनय इति वेदेषु निश्चितं। धर्म्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः।
लोकेऽप्याचरितो दृष्टः क्षत्त्रियाणां पुनर्भवः। ततः पुनः समुदितं क्षत्त्रं समभवत्तदा। इमञ्चैवात्र वक्ष्येऽहमितिहासं पुरातनं।
अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा। ममता नाम तस्यासीद्भार्य्या परमसम्मता।
उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसां। बृहस्पतिर्बृहत्तेजा ममतामन्वपद्यत। ४१८०
उवाच ममता तन्तु देवरं वदतांवरं। अन्तर्व्वत्नी त्वहं भ्रात्रा ज्येष्ठेनारम्यतामिति।
अयञ्च मे महाभाग कुक्षावेव बृहस्पते। औतथ्यो वेदमत्रापि षडङ्गं प्रत्यधीयत।
अमोघरेतास्त्वञ्चापि द्वयोर्नास्त्यत्र सम्भवः। तस्मादेवङ्गते नाद्य उपारमितुमर्हसि।
एवमुक्तस्तदा सम्यग्बृहस्पतिरधीरधीः। कामात्मानं तदात्मानं न शशाक नियच्छितुं।

स बभूव ततः कामी तया सार्द्धमकामया। उत्सृजन्तन्तु तं रेतः स गर्भस्थोऽभ्यभाषत। ४१८५

भोस्तात मागमः कामं द्वयोर्नास्तीह सम्भवः। अल्पावकाशो भगवन्पूर्व्वं चाहमिहागतः।

अमोघरेताश्च भवान्न पीडां कर्त्तुमर्हसि। अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पतिः।

जगाम मैथुनायैव ममतां चारुलोचनां। शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनिः। पद्भ्यामारोधयन्मार्गं शुक्रस्य च बृहस्पतेः।

स्थानमप्राप्तमथ तद्रेतः प्रतिहतं तदा। पपात सहसा भूमौ ततः क्रुद्धो बृहस्पतिः।

तद्दृष्ट्वा पतितं शुक्रं शशाप स रुषाऽन्वितः। उतथ्यपुत्त्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः। ४१९०

यन्मां त्वमीदृशे काले सर्व्वभूतेप्सिते सति। एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि।

स वै दीर्घतमा नाम शापादृषिरजायत। बृहस्पतेर्बृहत्कीर्त्तेर्बृहस्पतिरिवौजसा।

जात्यन्धो वेदवित्प्राज्ञः पत्नीं लेभे स विद्यया। तरुणीं रूपसम्पन्नां प्रद्वेषीं नाम ब्राह्मणीं।

स पुत्त्राञ्जनयामास गौतमादीन्महायशाः। ऋषेरुतथ्यस्य तदा सन्तानकुलवृद्धये।

धर्म्मात्मा च महात्मा च वेदवेदाङ्गपारगः। गोधर्म्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः। प्रावर्त्तत तदा कर्त्तुं श्रद्धावांस्तमशङ्कया। ४१९५

ततो वितथमर्य्यादं तं दृष्ट्वा मुनिसत्तमाः। क्रुद्धा मोहाभिभूतास्ते सर्व्वे तत्राश्रमौकसः।

अहोऽयं भिन्नमर्य्यादो नाश्रमे वस्तुमर्हति। तस्मादेनं वयं सर्व्वे पापात्मानं त्यजामहे।

इत्यन्योन्यं समाभाष्य ते दीर्घतमसं मुनिं। पुत्त्रलाभा च सा पत्नी न तुतोष पतिं तदा। प्रद्विषन्तीं पतिं भार्य्यां किं मां द्वेक्षीति चाब्रवीत्।

॥ प्रद्वेष्युवाच ॥ भार्य्याया भरणाद्भर्त्ता पालनाच्च पतिः स्मृतः। अहं त्वां भरणं कृत्वा जात्यन्धं ससुतं तदा।

नित्यकालं श्रमेणार्त्ता न भरेयं महातपाः ॥ भीष्म उवाच ॥ तस्यास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः। प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा। नीयतां क्षत्त्रियकुले धनार्थी त्वं भविष्यसि। ४२००

प्रद्वेष्युवाच ॥ त्वया दत्तं धनं विप्र नेच्छेयं दुःखकारणं। यथेष्टं कुरु विप्रेन्द्र न भरेयं पुरा यथा।

॥ दीर्घतमा उवाच ॥ अद्यप्रभृति मर्य्यादा मया लोके प्रतिष्ठिता। एक एव पतिर्नार्य्या यावज्जीवं परायणं।

मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरं। अभिगम्य परं नारी पतिष्यति न संशयः। अपतीनान्तु नारीणामद्यप्रभृति पातकं। यद्यस्ति चेद्धनं सर्व्वं वृथाभोगा भवन्तु ताः।

अकीर्त्तिः परिवादाश्च नित्यं तासां भवन्तु वै। इति तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता। गङ्गायां नीयतामेष पुत्त्रा इत्येवमब्रवीत्।

लोभमोहाभिभूतास्ते पुत्त्रास्तं गौतमादयः। बद्ध्वोडुपे परिक्षिप्य गङ्गायां समवासृजन्। ४२०५

कस्मादन्धश्च वृद्धश्च भर्त्तव्योऽयमिति स्म ते। चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान्।

सोऽनुस्रोतस्तदा विप्रः प्लवमानो यदृच्छया। जगाम सुबहून्देशानन्धस्तेनोडुपेन ह।

तन्तु राजा बलिर्नाम सर्व्वधर्म्मविदांवरः। अपश्यन्मज्जनगतः स्रोतसाऽभ्याशमागतं।

जगाद चैनं धर्म्मात्मा बलिः सत्यपराक्रमः। ज्ञात्वैवं मम वंशेऽस्य पुत्रार्थे भरतर्षभ।
सन्तानार्थं महाभाग भार्य्यासु मम मानद। पुत्रान्धर्म्मार्थकुशलानुत्पादयितुमर्हसि। ४२१०
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः। तस्मै स राजा स्वां भार्य्यां सुदेष्णां प्राहिणोत्तदा।
अन्धं वृद्धञ्च तं मत्वा न सा देवी जगाम ह। स्वान्तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा।
तस्यां काक्षीवदादीन्स शूद्रयोनावृषिस्तदा। जनयामास धर्म्मात्मा पुत्रानेकादशैव ह।
काक्षीवदादीन्पुत्रांस्तान् दृष्ट्वा सर्व्वानधीयतः। उवाच तमृषिं राजा ममेम इति भारत।
नेत्युवाच महर्षिस्तं ममेम इति चाब्रवीत्। शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः। ४२१५
अन्धं वृद्धञ्च मां दृष्ट्वा सुदेष्णा महिषी तव। अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम।
ततः प्रसादयामास पुनस्तमृषिसत्तमं। बलिः सुदेष्णां स्वां भार्य्यां तस्मै स प्राहिणोत्पुनः।
तां स दीर्घतमाऽङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत्। भविष्यन्ति कुमारास्ते तेजसादित्यवर्च्चसः।
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः। तेषां देशाः समाख्याताः स्वनामकथिता भुवि।
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः। कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः। ४२२०
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च स्मृताः। एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः।
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि। जाताः परमधर्म्मज्ञा वीर्य्यवन्तो महाबलाः। एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितं।

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीष्मसत्यवतीसंवादे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

भीष्म उवाच। पुनर्भरतवंशस्य हेतुं सन्तानवृद्धये। वक्ष्यामि नियतं मातस्तन्मे निगदतः शृणु।
ब्राह्मणो गुणवान् कश्चिद्धनेनोपनिमन्त्र्यतां। विचित्रवीर्य्यक्षेत्रेषु यः समुत्पादयेत्प्रजाः।
वैशम्पायन उवाच॥ ततः सत्यवती भीष्मं वाचा संसज्जमानया। विहसन्तीव सव्रीडमिदं वचनमब्रवीत्। ४२२५
सत्यमेतन्महाबाहो यथावदसि भारत। विश्वासात्ते प्रवक्ष्यामि सन्तानाय कुलस्य नः।
न ते शक्यमनाख्यातुमापद्धीयं तथाविधं। त्वमेव नः कुले धर्म्मस्त्वं सत्यं त्वं परा गतिः।
तस्मान्निशम्य सत्यं मे कुरुष्व यदनन्तरं। धर्म्मयुक्तस्य धर्म्मार्थं पितुरासीत्तरी मम।
सा कदाचिदहं तत्र गता प्रथमयौवनं। अथ धर्म्मविदां श्रेष्ठः परमर्षिः पराशरः। आजगाम तरीं धीमांस्तरिष्यन्यमुनां नदीं।
स तार्य्यमाणो यमुनां मामुपेत्याब्रवीत्तदा। सान्त्वपूर्व्वं मुनिश्रेष्ठः कामार्त्तो मधुरं वचः। ४२३०
तमहं शापभीता च पितुर्भीता च भारत। वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे।
अभिभूय स मां बालां तेजसा वशमानयत्। तमसा लोकमावृत्य नौगतामेव भारत।
मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः। तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः।
ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकं। द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि।
पाराशर्य्यो महायोगी स बभूव महानृषिः। कन्यापुत्रो मम पुरा द्वैपायन इति श्रुतः। ४२३५
यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः। लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च।

सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः। सद्योत्पन्नः स तु महान् सह पित्रा ततो गतः।

स नियुक्तो मया व्यक्तं त्वया चाप्रतिमद्युतिः। भ्रातुः क्षेत्रेषु कल्याणमपत्यं जनयिष्यति।

स हि मामुक्तवांस्तत्र स्मरेः कृच्छ्रेषु मामिति। तं स्मरिष्ये महाबाहो यदि भीष्म त्वमिच्छसि।

तव ह्यनुमते भीष्म नियतं स महातपाः। विचित्रवीर्य्यक्षेत्रेषु पुत्त्रानुत्पादयिष्यति। ४२४०

वैशम्पायनउवाच॥ महर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत्। धर्म्ममर्थञ्च कामञ्च धीनेतान्योऽनुपश्यति। अर्थमर्थानुबन्धञ्च धर्म्मं धर्म्मानुबन्धनं।

कामं कामानुबन्धञ्च विपरीतान्पृथक्पृथक्। यो विचिन्त्य धिया धीरो व्यवस्यति स बुद्धिमान्।

तदिदं धर्म्मयुक्तञ्च हितं चैव कुलस्य नः। उक्तम्भवत्या यच्छ्रेयस्तन्मह्यं रोचते भृशं।

॥ वैशम्पायनउवाच॥ ततस्तस्मिन् प्रतिज्ञाते भीष्मेण कुरुनन्दन। कृष्णद्वैपायनं काली चिन्तयामास वै मुनिं।

स वेदान्विब्रुवन्धीमान्मातुर्व्विज्ञाय चिन्तितं। प्रादुर्ब्बभूवाविदितः क्षणेन कुरुनन्दन। ४२४५

तस्मै पूजां ततः कृत्वा सुताय विधिपूर्व्वकं। परिष्वज्य च बाहुभ्यां प्रस्नवैरभ्यषिञ्चत।

मुमोच बाष्पं दाशेयी पुत्त्रं दृष्ट्वा चिरस्य तु। तामद्भिः परिषिच्यार्त्तां महर्षिरभिवाद्य च। मातरं पूर्व्वजः पुत्त्रो व्यासो वचनमब्रवीत्।

भवत्या यदभिप्रेतं तदहं कर्त्तुमागतः। शाधि मां धर्म्मतत्त्वज्ञे करवाणि प्रियं तव।

तस्मै पूजां ततोऽकार्षीत्पुरोधाः परमर्षये। स च तां प्रतिजग्राह विधिवन्मन्त्रपूर्व्वकं।

पूजितो मन्त्रपूर्व्वं तु विधिवत्प्रीतिमाप सः। तमासनगतं माता पृष्ट्वा कुशलमव्ययं। ४२५०

सत्यवत्यथ वीक्ष्यैनमुवाचेदमनन्तरं। मातापित्रोः प्रजायन्ते पुत्त्राः साधारणाः कवे।

तेषां पिता यथा स्वामी तथा माता न संशयः। विधानविहितः स त्वं यथा मे प्रथमः सुतः।

विचित्रवीर्य्यो ब्रह्मर्षे तथा मेऽवरजः सुतः। यथा च पितृतो भीष्मस्तथा त्वमसि मातृतः।

भ्राता विचित्रवीर्य्यस्य यथा वा पुत्त्र मन्यसे। अयं शान्तनवः सत्यं पालयन्सत्यविक्रमः। बुद्धिं न कुरुतेऽपत्ये तथा राज्याऽनुशासने।

स त्वं व्यपेक्षया भ्रातुः सन्तानाय कुलस्य च। भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ। ४२५५

अनुक्रोशाच्च भूतानां सर्व्वेषां रक्षणाय च। आनृशंस्याच्च यद्ब्रूयां तच्छ्रुत्वा कर्त्तुमर्हसि। यवीयसस्तव भ्रातुर्भार्य्ये सुरसुतोपमे।

रूपयौवनसम्पन्ने पुत्त्रकामे च धर्म्मतः। तयोरुत्पादयापत्यं समर्थो ह्यसि पुत्त्रक। अनुरूपं कुलस्यास्य सन्तत्याः प्रसवस्य च।

व्यासउवाच॥ वेत्थ धर्म्मं सत्यवति परं चापरमेव च। तथा तव महाप्राज्ञे धर्म्मे प्रणिहिता मतिः।

तस्मादहं त्वन्नियोगाद्धर्म्ममुद्दिश्य कारणं। ईप्सितं ते करिष्यामि दृष्टं ह्येतत्सनातनं।

भ्रातुः पुत्त्रान्प्रदास्यामि मित्रावरुणयोः समान्। व्रतं चरेतां ते देव्यौ निर्द्दिष्टमिह यन्मया। ४२६०

संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः। नहि मामव्रतोपेता उपेयात्काचिदङ्गना।

सत्यवत्युवाच॥ सद्यो यथा प्रपद्येत देवी गर्भं तथा कुरु। अराजकेषु राष्ट्रेषु प्रजाऽनाथा विनश्यति।

नश्यन्ति च क्रियाः सर्व्वा नास्ति वृष्टिर्न देवता।

कथं चाराजकं राष्ट्रं शक्यं धारयितुं प्रभो। तस्माद्गर्भं समाधत्स्व भीष्मः संवर्द्धयिष्यति।

व्यासउवाच। यदि पुत्रः प्रदातव्यो मया भ्रातुरकालिकः। विरूपतां मे सहतां तयोरेतत्परं व्रतं। ४१९५
यदि मे सहते गन्धं रूपं वेशं तथा वपुः। अद्यैव गर्भं कौशल्या विशिष्टं प्रतिपद्यतां।
वैशम्पायन उवाच। एवमुक्त्वा महातेजा व्यासः सत्यवतीं तदा। शयने सा च कौशल्या शुचिवस्त्रा स्वलङ्कृता।
समागमनमाकाङ्क्षेदिति सोऽन्तर्हितो मुनिः। ततोऽभिगम्य सा देवी स्नुषां रहसि सङ्गतां।
धर्म्यमर्थसमायुक्तमुवाच वचनं हितं। कौशल्ये धर्मतन्त्रं त्वां यद्ब्रवीमि निबोध तत्।
भरतानां समुच्छेदो व्यक्तं मद्भाग्यसंक्षयात्। व्यथितां मां च संप्रेक्ष्य पितृवंशञ्च पीडितं। ४२००
भीष्मो बुद्धिमदान्मह्यं कुलस्यास्य विवृद्धये। सा च बुद्धिस्त्वय्यधीना पुत्रि प्रापय मां तथा। नष्टञ्च भारतं वंशं पुनरेव समुद्धर।
पुत्रं जनय सुश्रोणि देवराजसमप्रभं। स हि राज्यधुरं गुर्व्वीमुद्वक्ष्यति कुलस्य नः।
सा धर्मतोऽनुनीयैनां कथञ्चिद्धर्मचारिणीं। भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा।
इत्यादिपर्व्वणि सम्भवपर्व्वणि सत्यवत्युपदेशे पञ्चाधिकशततोऽध्यायः॥ १०५ ॥
वैशम्पायन उवाच॥ ततः सत्यवती काले वधूं स्नातामृतौ तदा। संवेशयन्ती शयने शनैर्व्वचनमब्रवीत्।
कौशल्ये देवरस्तेऽस्ति सोऽद्य त्वानुप्रवेक्ष्यति। अप्रमत्ता प्रतीक्षैनं निशीथे आगमिष्यति। ४२०५
श्वश्र्वास्तद्वचनं श्रुत्वा शयाना शयने शुभे। साऽचिन्तयत्तदा भीष्ममन्यांश्च कुरुपुङ्गवान्।
ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः। दीप्यमानेषु दीपेषु शरणं प्रविवेश ह।
तस्य कृष्णस्य कपिला जटा दीप्ते च लोचने। बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत्।
संबभूव तया सार्द्धं मातुः प्रियचिकीर्षया। भयात्काशिसुता तन्तु नाशक्नोदभिवीक्षितुं।
ततोऽनिष्क्रान्तमागम्य माता पुत्रमुवाच ह। अप्यस्यां गुणवान् पुत्र राजपुत्रो भविष्यति। ४२१०
निशम्य तद्वचो मातुर्व्यासः सत्यवतीसुतः। प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः।
नागायुतसमप्राणो विद्वान्राजर्षिसत्तमः। महाभागो महावीर्य्यो महाबुद्धिर्भविष्यति।
तस्य चापि शतं पुत्रा भविष्यन्ति महात्मनः। किन्तु मातुः स वैगुण्यादन्ध एव भविष्यति।
तस्य तद्वचनं श्रुत्वा माता पुत्रमथाब्रवीत्। नान्धः कुरूणां नृपतिरनुरूपस्तपोधन।
ज्ञातिवंशस्य गोप्तारं पितॄणां वंशवर्द्धनं। द्वितीयं कुरुवंशस्य राजानं दातुमर्हसि। ४२१५
स तथेति प्रतिज्ञाय निश्चक्राम महायशाः। साऽपि कालेन कौशल्या सुषुवेऽन्धं तमात्मजं।
पुनरेव तु सा देवी परिभाष्य स्नुषां ततः। ऋषिमावाहयत्सत्या यथा पूर्व्वमरिन्दम।
ततस्तेनैव विधिना महर्षिस्तामपद्यत। अम्बालिकामथाभ्यागादृषिं दृष्ट्वा च साऽपि तं।
विवर्णा पाण्डुसङ्काशा समपद्यत भारत। तां भीतां पाण्डुसङ्काशां विषण्णां प्रेक्ष्य भारत।
व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत्। यस्मात्पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिह। ४२२०
तस्मादेष सुतस्तेवै पाण्डुरेव भविष्यति। नाम चास्य तदेवेह भविष्यति शुभानने।
इत्युक्त्वा स निराक्रामद्भगवानृषिसत्तमः। ततो निष्क्रान्तमालोक्य सत्या पुत्रमथाब्रवीत्।
शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुतां। तं माता पुनरेवान्यमेकं पुत्रमयाचत।

तथेति च महर्षिस्तां मातरं प्रत्यभाषत। ततः कुमारं सा देवी प्राप्तकालमजीजनत्।
पाण्डुलक्षणसम्पन्नं दीप्यमानं वरश्रिया। यस्य पुत्रा महेष्वासा जज्ञिरे पञ्च पाण्डवाः। ॥४२९५
ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत्। सा तु रूपञ्च गन्धञ्च महर्षेः प्रविचिन्त्य तं।
नाकरोद्वचनं देव्या भयात् सुरसुतोपमा। ततः स्वैर्भूषणैर्दासीं भूषयित्वाऽप्सरोपमां।
प्रेषयामास कृष्णाय ततः काशिपतेः सुता। सा तं ऋषिमनुप्राप्तं प्रत्युद्गम्याभिवाद्य च।
संविवेशाभ्यनुज्ञाता सत्कृत्योपचचार ह। कामोपभोगेन रहस्तस्यां तुष्टिमगादृषिः। तया सहोषितो राजन्महर्षिः संशितव्रतः।
उत्तिष्ठन्नब्रवीदेनामभुजिष्या भविष्यसि। अयञ्च ते शुभे गर्भः श्रेयानुदरमागतः। धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः। ॥४३००
स जज्ञे विदुरो नाम कृष्णद्वैपायनात्मजः। धृतराष्ट्रस्य वै भ्राता पाण्डोश्चैव महात्मनः।
धर्म्मो विदुररूपेण शापात्तस्य महात्मनः। माण्डव्यस्यार्थतत्त्वज्ञः कामक्रोधविवर्जितः। कृष्णद्वैपायनोऽप्येतत् सत्यवत्यै न्यवेदयत्।
प्रलम्भमात्मनश्चैव शूद्रायाः पुत्रजन्म च। स धर्म्मस्यानृणो भूत्वा पुनर्मात्रा समेत्य च। तस्यै गर्भं समावेद्य तत्रैवान्तरधीयत।
एते विचित्रवीर्य्यस्य क्षेत्रे द्वैपायनादपि। जज्ञिरे देवगर्भाभाः कुरुवंशविवर्द्धनाः।
इत्यादिपर्व्वणि सम्भवपर्व्वणि विचित्रवीर्य्यसुतोत्पत्तौ षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ जनमेजय उवाच ॥ किं कृतं कर्म धर्मेण येन शापमुपेयिवान्। कस्य शापाच्च ब्रह्मर्षेः शूद्रयोनावजायत। ॥४३०५
॥ वैशम्पायन उवाच ॥ बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः। धृतिमान् सर्वधर्मज्ञः सत्ये तपसि च स्थितः।
स आश्रमपदद्वारि वृक्षमूले महातपाः।। ऊर्द्ध्वबाहुर्महायोगी तस्थौ मौनव्रतान्वितः।
तस्य कालेन महता तस्मिंस्तपसि वर्त्ततः। तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः।
अनुसार्य्यमाणा बहुभी रक्षिभिर्भरतर्षभ। ते तस्यावसथे लोप्त्रं दस्यवः कुरुसत्तम।
निधाय च भयाल्लीनास्तत्रैवानागते बले। तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलं। ॥४३१०
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः। तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनं।
कतमेन पथा याता दस्यवो द्विजसत्तम। तेन गच्छामहे ब्रह्मन् यथा शीघ्रतरं वयं।
तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः। न किञ्चिद्वचनं राजन्नब्रवीत् साध्वसाधु वा।
ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमं। ददृशुस्तत्र लीनांस्तांश्चोरांस्तद्द्रव्यमेव च।
ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति। संयम्यैनं ततो राज्ञे दस्यूंश्चैव न्यवेदयन्। ॥४३१५
तं राजा सह तैश्चौरैरन्वशाद्वध्यतामिति। स रक्षिभिस्तैरज्ञातः शूले प्रोतो महातपाः।
ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा। प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ।
शूलस्थः स तु धर्म्मात्मा कालेन महता ततः। निराहारोऽपि विप्रर्षिर्मरणं नाभ्यपद्यत।
धारयामास च प्राणानृषींश्च समुपानयत्। शूलाग्रे तप्यमानेन तपसा तेन महात्मना।
सन्तापं परमं जग्मुर्मुनयस्तपसाऽन्विताः। ते रात्रौ शकुना भूत्वा सन्निपत्य तु भारत। ॥४३२०

हर्षयन्तो यथाशक्ति तमपृच्छन्द्विजोत्तमं। श्रोतुमिच्छामहे ब्रह्मन् किं पापं कृतवानसि। येनेह समनुप्राप्तं शूले दुःखभयं महत्।

इत्यादिपर्व्वणि सम्भवपर्व्वणि अणीमाण्डव्योपाख्याने सप्ताधिकशततमोऽध्यायः॥ १०७ ॥

वैशम्पायनउवाच॥ ततः स मुनिशार्दूलस्तानुवाच तपोधनान्। दोषतः कं गमिष्यामि न हि मेऽन्योऽपराध्यति।
तं दृष्ट्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि। न्यवेदयंस्तथा राज्ञे यथावृत्तं नराधिप।
श्रुत्वा च वचनं तेषां निश्चित्य सह मन्त्रिभिः। प्रसादयामास तदा शूलस्थमृषिसत्तमं।
राजोवाच॥ यन्मयाऽपकृतं मोहादज्ञानादृषिसत्तम। प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि। ॥४२१५
एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः। कृतप्रसादं राजा तं ततः समवतारयत्।
अवतार्य्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह। अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे।
स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः। तेनातितपसा लोकान्विजिग्ये दुर्लभान्परैः।
अणीमाण्डव्य इति च ततो लोकेषु गीयते। स गत्वा सदनं विप्रो धर्म्मस्य परमात्मवित्।
आसनस्थं ततो धर्म्मं दृष्ट्वोपालभत प्रभुः। किन्नु तद्दुष्कृतं कर्म्म मया कृतमजानता। ॥४२२०
यस्येयं फलनिर्वृत्तिरीदृश्यासादिता मया। शीघ्रमाचक्ष्व मे तत्त्वं पश्य मे तपसो बलं।
धर्म्म उवाच॥ पतङ्गिकानां पुच्छेषु त्वयेषीका प्रवेशिता। कर्म्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन।
अणीमाण्डव्यउवाच॥ अल्पेऽपराधेऽपि महान्मम दण्डस्त्वया धृतः। शूद्रयोनावतो धर्म्म मानुषः सम्भविष्यसि।
मर्य्यादां स्थापयाम्यद्य लोके धर्म्मफलोदयां। आचतुर्द्दशकाद्वर्षान्न भविष्यति पातकं। परतः कुर्व्वतामेवं दोष एव भविष्यति।
वैशम्पायनउवाच॥ एतेन त्वपराधेन शापात्तस्य महात्मनः। धर्म्मो विदुररूपेण शूद्रयोनावजायत। ॥४२२५
धर्म्मे चार्थे च कुशलो लोभक्रोधविवर्जितः। दीर्घदर्शी शमपरः कुरूणाञ्च हिते रतः।

इत्यादिपर्व्वणि सम्भवपर्व्वणि अणीमाण्डव्योपाख्याने अष्टाधिकशततमोऽध्यायः॥ १०८ ॥

॥ वैशम्पायन उवाच ॥ तेषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलं। कुरवोऽथ कुरुक्षेत्रं त्रयमेतदवर्द्धत।
ऊर्द्ध्वसस्याऽभवद्भूमिः सस्यानि रसवन्ति च। यथर्तु वर्षी पर्ज्जन्यो बहुपुष्पफला द्रुमाः।
वाहनानि प्रहृष्टानि मुदिता मृगपक्षिणः। गन्धवन्ति च माल्यानि रसवन्ति फलानि च।
वणिग्भिश्चान्वकीर्य्यन्त नगराण्यथ शिल्पिभिः। शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन्। ॥४२३०
नाभवन् दस्यवः केचिन्नाधर्म्मरुचयो जनाः। प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्त्तत।
धर्म्मक्रिया यज्ञशीलाः सत्यव्रतपरायणाः। अन्योन्यप्रीतिसंयुक्ता व्यवर्द्धन्त प्रजास्तदा।
मानक्रोधविहीनाश्च नरा लोभविवर्जिताः। अन्योऽन्यमभ्यनन्दन्त धर्म्मोत्तरमवर्त्तत।
तन्महोदधिवत्पूर्णं नगरं वै व्यरोचत। द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः।
प्रासादशतसम्बाधं महेन्द्रपुरसन्निभं। नदीषु वनखण्डेषु वापीपल्वलसानुषु। काननेषु च रम्येषु विजह्रुर्मुदिता जनाः। ॥४२३५
उत्तरैः कुरुभिः सार्द्धं दक्षिणाः कुरवस्तथा। विस्पर्द्धमाना व्यचरंस्तथा देवर्षिचारणैः।
नाभवत्कृपणः कश्चिन्नाभवन्विधवाः स्त्रियः। तस्मिन्जनपदे रम्ये कुरुभिर्बहुलीकृते।

कूपारामसभावाप्यो ब्राह्मणावसथास्तथा । बभूवुः सर्व्वर्द्धियुतास्तस्मिन् राष्ट्रे सदोत्सवाः ।
भीष्मेण धर्म्मतो राजन् सर्व्वतः परिरक्षिते । बभूव रमणीयश्च चैत्ययूपशताङ्कितः ।
स देशः परराष्ट्राणि विमृज्याभिप्रवर्द्धितः । भीष्मेण विहितं राष्ट्रे धर्म्मचक्रमवर्त्तत । ॥४२५०
क्रियमाणेषु कृत्येषु कुमाराणां महात्मनां । पौरजानपदाः सर्व्वे बभूवुः परमोत्सुकाः ।
गृहेषु कुरुमुख्यानां पौराणाञ्च नराधिप । दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्व्वशः ।
धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः । जन्मप्रभृति भीष्मेण पुत्त्रवत्परिपालिताः ।
संस्कारैः संस्कृतास्ते तु ततोऽध्ययनसंयुताः । श्रमव्यायामकुशलाः समपद्यन्त यौवनं ।
धनुर्व्वेदे च वेदे च गदायुद्धेऽसिचर्म्मणि । तथैव गजशिक्षायां नीतिशास्त्रेषु पारगाः । ॥४२५५
इतिहासपुराणेषु नानाशिक्षासु बोधिताः । वेदवेदाङ्गतत्त्वज्ञाः सर्व्वत्र कृतनिश्चयाः ।
पाण्डुर्धनुषि विक्रान्तो नरेभ्योऽभ्यधिकोऽभवत् । अन्येभ्यो बलवानासीद्धृतराष्ट्रो महीपतिः ।
त्रिषु लोकेषु न त्वासीत्कश्चिद्विदुरसम्मितः । धर्म्मनित्यस्तथा राजन्धर्म्मे च परमं गतः ।
प्रनष्टं शान्तनोर्व्वंशं समीक्ष्य पुनरुद्धृतं । ततो निर्व्वचनं लोके सर्व्वराष्ट्रेष्ववर्त्तत ।
वीरसूनां काशिसुते देशानां कुरुजाङ्गलं । सर्व्वधर्म्मविदां भीष्मः पुराणां गजसाह्वयं । ॥४२६०
धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत । पारशवत्वाद्विदुरो राजा पाण्डुर्ब्बभूव ह ।
कदाचिदथ गाङ्गेयः सर्व्वनीतिमतां वरः । विदुरं धर्म्मतत्त्वज्ञं वाक्यमाह यथोचितं ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डुराज्याभिषेके नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥ भीष्म उवाच ॥ गुणैः समुदितं सम्यगिदं नः प्रथितं कुलं । अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् ।
रक्षितं राजभिः पूर्व्वं धर्म्मविद्भिर्महात्मभिः । नोत्सादमगमच्चेदं कदाचिदिह नः कुलं ।
मया च सत्यवत्या च कृष्णेन च महात्मना । समवस्थापितं भूयो युष्मासु कुलतन्तुषु । ॥४२६५
तच्चैतद्वर्द्धते भूयः कुलं सागरवद्यथा । तथा मया विधातव्यं त्वया चैव न संशयः ।
श्रूयते यादवी कन्या स्वनुरूपा कुलस्य नः । सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ।
कुलीना रूपवत्यश्च ताः कन्याः पुत्त्र सर्व्वशः । उचिताश्चैव सम्बन्धे ह्यस्माकं क्षत्त्रियर्षभाः ।
मन्ये वरयितव्यास्ता इत्यहं धीमतां वर । सन्तानार्थं कुलस्यास्य यद्वा विदुर मन्यसे ।
॥ विदुर उवाच ॥ भवान् पिता भवान्माता भवान्नः परमो गुरुः । तस्मात्स्वयं कुलस्यास्य विचार्य्य कुरु यद्धितं । ॥४२७०
॥ वैशम्पायन उवाच ॥ अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजां । आराध्य वरदं देवं भगनेत्रहरं हरं ।
गान्धारी किल पुत्त्राणां शतं लेभे वरं शुभा । इति शुश्राव तत्त्वेन भीष्मः कुरुपितामहः ।
ततो गान्धारराजस्य प्रेषयामास भारत । अचक्षुरिति तत्रासीत्सुबलस्य विचारणा ।
कुलं ख्यातिञ्च वृत्तञ्च बुद्ध्या तु प्रसमीक्ष्य सः । ददौ तां धृतराष्ट्राय गान्धारीं धर्म्मचारिणीं ।
गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषं । आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत । ॥४२७५
ततः सा पटमादाय कृत्वा बहुगुणं तदा । बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा ।

नाभ्यसूयां पतिमहमित्येवं कृतनिश्चया। ततो गन्धारराजस्य पुत्रः शकुनिरभ्ययात्।

स्वसारं वयसा लक्ष्म्या युक्तामादाय कौरवान्। तां तदा धृतराष्ट्राय ददौ परमसत्कृतां।

भीष्मस्यानुमते चैव विवाहं समकारयत्। दत्त्वा स भगिनीं वीरो यथार्हञ्च परिच्छदं। पुनरायात्स्वनगरं भीष्मेण प्रतिपूजितः।

गान्धार्य्यपि वरारोहा शीलाचारविचेष्टितैः। तुष्टिं कुरूणां सर्व्वेषां जनयामास भारत। ॥४३८०

वृत्तेनाराध्य तान्सर्व्वान् गुरून्पतिपरायणा। वाचाऽपि पुरुषानन्यान्सुव्रता नान्वकीर्त्तयत्।

इत्यादिपर्व्वणि सम्भवपर्व्वणि धृतराष्ट्रविवाहे दशाधिकशततमोऽध्यायः॥ ११०॥

॥ वैशम्पायन उवाच॥ शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत्। तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि।

पितृस्वस्रीयाय सतामनपत्याय भारत। अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक्। अग्रजामथ तां कन्यां शूरोऽनुग्रहकाङ्क्षिणे। प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने।

नियुक्ता सा पितुर्गेहे ब्राह्मणातिथिपूजने। उग्रं पर्य्यचरत्तत्र ब्राह्मणं संशितव्रतं।

निगूढनिश्चयं धर्म्मे यन्तं दुर्व्वाससं विदुः। तमुग्रं शंसितात्मानं सर्व्वयत्नैरतोषयत्। ॥४३८५

तस्यै स प्रददौ मन्त्रमापद्धर्म्मान्ववेक्षया। अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः।

यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। तस्य तस्य प्रसादेन तव पुत्रो भविष्यति।

तथोक्ता सा तु विप्रेण कुन्ती कौतूहलान्विता। कन्या सती देवमर्कमाजुहाव यशस्विनी।

सा ददर्श तमायान्तं भास्करं लोकभावनं। विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतं।

तां समासाद्य देवस्तु विवस्वानिदमब्रवीत्। अयमस्म्यसितापाङ्गि ब्रूहि किं करवाणि ते। ॥४३९०

॥ कुन्त्युवाच॥ कश्चिन्मे ब्राह्मणः प्रादाद्वरं विद्याञ्च शत्रुहन्। तद्विजिज्ञासयाह्वानं कृतवत्यस्मि ते विभो।

एतस्मिन्नपराधे त्वां शिरसाऽहं प्रसादये। योषितो हि सदा रक्ष्याः स्वपराद्धाऽपि नित्यशः।

॥ सूर्य्य उवाच॥ वेदाहं सर्व्वमेवैतद्यद्दुर्व्वासा वरं ददौ। सन्त्यज्य भयमेवेह क्रियतां सङ्गमो मम।

अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे। वृथाह्वानेऽपि ते भीरु दोषः स्यान्नात्र संशयः।

॥ वैशम्पायन उवाच॥ एवमुक्ता बहुविधं सान्त्वपूर्व्वं विवस्वता। सा तु नैच्छद्वरारोहा कन्याऽहमिति भारत। ॥४३९५

बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी। तामर्क्कः पुनरेवेदमब्रवीद्भरतर्षभ।

मत्प्रसादान्न ते राज्ञि भविता दोष इत्युत। एवमुक्त्वा स भगवान् कुन्तिराजसुतां तदा।

प्रकाशकर्त्ता तपनः सम्बभूव तया सह। तत्र वीरः समभवत्सर्व्वशस्त्रभृतां वरः। आमुक्तकवचः श्रीमान्देवगर्भः श्रियाऽन्वितः।

सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः। अजायत सुतः कर्णः सर्व्वलोकेषु विश्रुतः।

प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः। दत्त्वा च तपतां श्रेष्ठो दिवमाचक्रमे ततः॥ ॥४४००

दृष्ट्वा कुमारं जातं सा वार्ष्णेयी दीनमानसा। एकाग्रं चिन्तयामास किं कृत्वा सुकृतं भवेत्।

गूहमानाऽपचारं सा बन्धुपक्षभयात्तदा। उत्ससर्ज्ज कुमारं तं जले कुन्ती महाबलं।

तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः । पुत्रत्वे कल्पयामास सभार्य्यः सूतनन्दनः ।
नामधेयञ्च चक्राते तस्य बालस्य तावुभौ । वसुना सह जातोऽयं वसुषेणो भवत्विति ।
स वर्द्धमानो बलवान् सर्व्वास्त्रेषूद्यतोऽभवत् । आपृष्ठतापादादित्यमुपातिष्ठत वीर्य्यवान् । ४४०५
तस्मिन्काले तु जपतस्तस्य वीरस्य धीमतः । नादेयं ब्राह्मणेष्वासीत्किञ्चिद्वसु महीतले ।
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षार्थी समुपागमत् । कवचं प्रार्थयामास फाल्गुनस्य हिते रतः ।
स्वशरीरात्समुत्कृत्य कवचं स्वं निसर्गजं । विप्ररूपाय शक्राय ददौ कर्णः कृताञ्जलिः ।
प्रतिगृह्य तु देवेशस्तुष्टस्तेनास्य कर्म्मणा । ददौ शक्तिं सुरपतिर्व्वाक्यं चेदमुवाच ह ।
देवासुरमनुष्याणां गन्धर्व्वोरगरक्षसां । यमेकं जेतुमिच्छेथाः सोऽनया न भविष्यति । ४४१०
प्राङ्नाम तस्य कथितं वसुषेण इति क्षितौ । कर्णो वैकर्त्तनश्चैव कर्म्मणा तेन सोऽभवत् ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ऐन्द्रशक्तिलाभे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
वैशम्पायन उवाच ॥ सत्त्वरूपगुणोपेता धर्म्मारामा महाव्रता । दुहिता कुन्तिभोजस्य पृथा पृथुललोचना ।
तान्तु तेजस्विनीं कन्यां रूपयौवनशालिनीं । व्यावृण्वन् पार्थिवाः केचिदतीव स्त्रीगुणैर्युतां ।
ततः सा कुन्तिभोजेन राज्ञाहूय नराधिपान् । पित्रा स्वयम्वरे दत्ता दुहिता राजसत्तम ।
ततः सा रङ्गमध्यस्थं तेषां राज्ञां मनस्विनी । ददर्श राजशार्दूलं पाण्डुं भरतसत्तमं । ४४१५
सिंहदर्पं महोरस्कं वृषभाक्षं महाबलं । आदित्यमिव सर्व्वेषां राज्ञां प्रच्छाद्य वै प्रभाः ।
तिष्ठन्तं राजसमितौ पुरन्दरमिवापरं । तं दृष्ट्वा साऽनवद्याङ्गी कुन्तिभोजसुता शुभा । पाण्डुं नरवरं रङ्गे हृदयेनाकुलाऽभवत् ।
ततः कामपरीताङ्गी सकृत्प्रचलमानसा । व्रीडमाना स्रजं कुन्ती राज्ञः स्कन्धे समासजत् ।
तं निशम्य वृतं पाण्डुं कुन्त्या सर्व्वे नराधिपाः । यथागतं समाजग्मुर्गजैरश्वै रथैस्तथा ।
ततस्तस्याः पिता राजन्विवाहमकरोत्प्रभुः । स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः । ४४२०
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव । कुन्त्याः पाण्डोश्च राजेन्द्र कुन्तिभोजो महीपतिः ।
कृत्वोद्वाहं तदा तन्तु नानावसुभिरर्च्चितं । स्वपुरं प्रेषयामास स राजा कुरुसत्तम ।
ततो बलेन महता नानाध्वजपताकिना । स्तूयमानः स चाशीर्भिर्ब्राह्मणैश्च महर्षिभिः ।
संप्राप्य नगरं राजा पाण्डुः कौरवनन्दनः । न्यवेशयत तां भार्य्यां कुन्तीं स्वभवने प्रभुः ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि कुन्तीविवाहे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
वैशम्पायन उवाच । ततः शान्तनवो भीष्मो राज्ञः पाण्डोर्यशस्विनः । विवाहस्यापरस्यार्थे चकार मतिमान्मतिं । ४४२५
सोऽमात्यैः स्थविरैः सार्द्धं ब्राह्मणैश्च महर्षिभिः । बलेन चतुरङ्गेण ययौ मद्रपतेः पुरं ।
तमागतमभिश्रुत्य भीष्मं वाह्लीकपुङ्गवः । प्रत्युद्गम्यार्च्चयित्वा च पुरं प्रवेशयन्नृपः ।
दत्त्वा तस्यासनं शुभ्रं पाद्यमर्घ्यं तथैव च । मधुपर्कञ्च मद्रेशः पप्रच्छागमनेऽर्थितां ।
तं भीष्मः प्रत्युवाचेदं मद्रराजं कुरूद्वहः । आगतं मां विजानीहि कन्यार्थिनमरिन्दम ।
श्रूयते भवतः साध्वी स्वसा माद्री यशस्विनी । तामहं वरयिष्यामि पाण्डोरर्थे यशस्विनीं । ४४३०

युक्तरूपो हि सम्बन्धे त्वं नो राजन् वरस्तव । एत[illegible] सर्व्वथा [illegible]विधि ।
तमेवं वादिनं भीष्मं प्रत्यभाषत मद्रपः । न हि मेऽन्यो वरस्त्वत्तः श्रेयानिति मतिर्मम ।
पूर्व्वैः प्रवर्त्तितं किञ्चित्कुलेऽस्मिन्नृपसत्तमैः । साधु वा यदि वाऽसाधु तन्नातिक्रान्तुमुत्सहे ।
व्यक्तं तद्भवतश्चापि विदितं नात्र संशयः । न च युक्तं तथा वक्तुं भवान्देहीति सत्तम ।
कुलधर्म्मः स नो वीर प्रमाणं परमञ्च तत् । तेन त्वां न ब्रवीम्येतदसन्दिग्धं वचोऽरिहन् । ४४३५
तं भीष्मः प्रत्युवाचेदं मद्रराजं जनाधिपः । धर्म्म एष परो राजन् स्वयमुक्तः स्वयम्भुवा ।
नात्र कश्चन दोषोऽस्ति पूर्व्वैर्विधिरयं कृतः । विदितेयञ्च ते शल्य मर्य्यादा साधुसम्मता ।
इत्युक्त्वा स महातेजाः शातकुम्भं कृताकृतं । रत्नानि च विचित्राणि शल्यायादात्सहस्रशः ।
गजानश्वान् रथांश्चैव वासांस्याभरणानि च । मणिमुक्ताप्रवालञ्च गाङ्गेयो व्यसृजच्छुभं ।
तत्प्रगृह्य धनं सर्व्वं शल्यः सम्प्रीतमानसः । ददौ तां समलङ्कृत्य स्वसारं कौरवर्षभे । ४४४०
स तां माद्रीमुपादाय भीष्मः सागरगासुतः । आजगाम पुरीं धीमान्प्रविष्टो गजसाह्वयं ।
तत इष्टेऽहनि प्राप्ते मुहूर्त्ते साधुसम्मते । जग्राह विधिवत्पाणिं माद्र्याः पाण्डुर्नराधिपः ।
ततो विवाहे निर्वृत्ते स राजा कुरुनन्दनः । स्थापयामास तां भार्य्यां शुभे वेश्मनि भाविनीं ।
स ताभ्यां व्यचरत् सार्द्धं भार्य्याभ्यां राजसत्तमः । कुन्त्या माद्र्या च राजेन्द्रो यथाकामं यथासुखं ।
ततः स कौरवो राजा विहृत्य त्रिदशा निशाः । जिगीषया महीं पाण्डुर्निरक्रामत्पुरात्प्रभो । ४४४५
स भीष्मप्रमुखान् वृद्धानभिवाद्य प्रणम्य च । धृतराष्ट्रञ्च कौरव्यं तथाऽन्यान् कुरुसत्तमान् ।
आमन्त्र्य प्रययौ राजा तैश्चैवाभ्यनुमोदितः । मङ्गलाचारयुक्ताभिराशीर्भिरभिनन्दितः ।
गजवाजिरथौघेन बलेन महताऽगमत् । स राजा देवगर्भाभो विजिगीषुर्वसुन्धरां ।
हृष्टपुष्टबलैः प्रायात्पाण्डुः शत्रूननेकशः । पूर्व्वमागस्कृतो गत्वा दशार्णाः समरे जिताः । पाण्डुना नरसिंहेन कौरवाणां यशोभृता ।
ततः सेनामुपादाय पाण्डुर्नानाविधध्वजां । प्रभूतहस्त्यश्वयुतां पदातिरथसङ्कुलां । ४४५०
आगस्कारी महीपानां बहूनां बलदर्पितः । गोप्ता मगधराष्ट्रस्य दार्वो राजगृहे हतः ।
ततः कोषं समादाय वाहनानि च भूरिशः । पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः ।
तथा काशिषु सुह्मेषु पुण्ड्रेषु च नरर्षभ । स्वबाहुबलवीर्य्येण कुरूणामकरोद्यशः ।
तं शरौघमहाज्वालं शस्त्रार्च्चिषमरिन्दमं । पाण्डुपावकमासाद्य व्यदह्यन्त नराधिपाः ।
ते ससेनाः ससेनेन विध्वंसितबला नृपाः । पाण्डुना वशगाः कृत्वा कुरुकर्म्मसु योजिताः । ४४५५
तेन ते निर्जिताः सर्व्वे पृथिव्यां सर्व्वपार्थिवाः । तमेकं मेनिरे शूरं देवेष्विव पुरन्दरं ।
तं कृताञ्जलयः सर्व्वे प्रणता वसुधाधिपाः । उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च ।
मणिमुक्ताप्रवालञ्च सुवर्णं रजतं बहु । गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् ।
खरोष्ट्रमहिषांश्चैव यच्च किञ्चिदजाविकं । कम्बलाजिनरत्नानि राङ्कवास्तरणानि च । तत्सर्व्वं प्रतिजग्राह राजा नागपुराधिपः ।

तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः । हर्षयिष्यन् स्वराष्ट्राणि पुरञ्च गजसाह्वयं । ॥४४९०

शान्तनोराजसिंहस्य भरतस्य च धीमतः । प्रनष्टः कीर्त्तिजः शब्दः पाण्डुना पुनराहृतः ।

ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च । ते नागपुरसिंहेन पाण्डुना करदीकृताः ।

इत्यभाषन्त राजानो राजामात्याश्च सङ्गताः । प्रतीतमनसो हृष्टाः पौरजानपदैः सह । प्रत्युद्ययुस्तं प्राप्तं सर्वे भीष्मपुरोगमाः ।

तेन दूरमिवाध्वानं गत्वा नागपुरालयात् । आवृतं ददृशुर्हृष्टा लोकं बहुविधैर्धनैः ।

नानायानसमानीतै रत्नैरुच्चावचैस्तदा । हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैस्तथाऽविभिः । ॥४४९५

नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः । सोऽभिवाद्य पितुः पादौ कौशल्यानन्दवर्द्धनः ।

यथाऽर्हं मानयामास पौरजानपदानपि । प्रमृद्य पुरराष्ट्राणि कृतार्थं पुनरागतं ।

पुत्रमाश्लिष्य भीष्मस्तु हर्षादश्रूण्यवर्त्तयत् । स तूर्य्यशतसङ्घानां भेरीणाञ्च महास्वनैः । हर्षयन् सर्वशः पौरान् विवेश गजसाह्वयं ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डुदिग्विजये त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

वैशम्पायन उवाच ॥ धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनं । भीष्माय सत्यवत्यै च मात्रे चोपजहार सः ।

विदुराय च वै पाण्डुः प्रेषयामास तद्धनं । सुहृदश्चापि धर्म्मात्मा धनेन समतर्पयत् । ॥४५००

ततः सत्यवतीं भीष्मं कौशल्याञ्च यशस्विनीं । शुभैः पाण्डुर्जितैरर्थैस्तोषयामास भारत ।

ननन्द माता कौशल्या तमप्रतिमतेजसं । जयन्तमिव पौलोमी परिष्वज्य नरर्षभं ।

तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः । अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ।

संप्रयुक्तस्तु कुन्त्या च माद्र्या च भरतर्षभ । जिततन्द्रीस्तदा पाण्डुर्बभूव वनगोचरः ।

हित्वा प्रासादनिलयं शुभानि शयनानि च । अरण्यनित्यः सततं बभूव मृगयापरः । ॥४५०५

स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः । उवास गिरिपृष्ठेषु महाशालवनेषु च ।

रराज कुन्त्या माद्र्या च पाण्डुः सह वने चरन् । करेण्वोरिव मध्यस्थः श्रीमान् पौरन्दरो गजः ।

भारतं सह भार्य्याभ्यां खड्गबाणधनुर्धरं । विचित्रकवचं वीरं परमास्त्रविदं नृपं ।

देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः । तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः । उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ।

अथ पारशवीं कन्यां देवकस्य महीपतेः । रूपयौवनसम्पन्नां स शुश्रावापगासुतः । ॥४५१०

ततस्तु वरयित्वा तामानीय भरतर्षभः । विवाहं कारयामास विदुरस्य महामतेः ।

तस्यां चोत्पादयामास विदुरः कुरुनन्दनः । पुत्रान् विनयसम्पन्नानात्मनः सदृशान् गुणैः ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि विदुरपरिणये चतुर्द्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

॥ वैशम्पायनउवाच ॥ ततः पुत्त्रशतं जज्ञे गान्धार्य्यां जनमेजय । धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः ।

पाण्डोः कुन्त्याञ्च माद्र्याञ्च पुत्राः पञ्च महारथाः । देवेभ्यः समपद्यन्त सन्तानाय कुलस्य वै ।

॥ जनमेजय उवाच ॥ कथं पुत्त्रशतं जज्ञे गान्धार्य्यां द्विजसत्तम । कियता चैव कालेन तेषामायुश्च किं परं । ॥४५१५

कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत । कथञ्च सदृशीं भार्य्यां गान्धारीं धर्म्मचारिणीं । आनुकूल्ये वर्त्तमानां धृतराष्ट्रो भ्यवर्त्तत ।

कथञ्च शतस्य सतः पाण्डोस्तेन महात्मना । समुत्पन्ना दैवतेभ्यः पुत्त्राः पञ्च महारथाः ।
एतदिच्छाम्यथान्यायं विस्तरेण तपोधन । कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ।
॥ वैशम्पायन उवाच ॥ क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितं । तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ।
सा वव्रे सदृशं भर्त्तुः पुत्त्राणां शतमात्मनः । ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत् । ४४९०
सम्वत्सरद्वयं तन्तु गान्धारी गर्भमाहितं । अप्रजा धारयामास ततस्तां दुःखमाविशत् ।
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसं । उदरस्यात्मनः स्थैर्य्यमुपलभ्यान्वचिन्तयत् ।
अज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः । सोदरं घातयामास गान्धारी दुःखमूर्च्छिता ।
ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता । द्विवर्षसम्भृता कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ।
अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत् । तां स मांसमयीं पेशीं ददर्श जपतां वरः । ४४९५
ततोऽब्रवीत्सौबलेयीं किमिदं ते चिकीर्षितं । सा चात्मनो मतं सत्यं शशंस परमर्षये ।
॥ गान्धार्य्युवाच ॥ ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभं । दुःखेन परमेणेदमुदरं घातितं मया ।
शतञ्च किल पुत्त्राणां वितीर्णं मे त्वया पुरा । इयञ्च मे मांसपेशी जाता पुत्त्रशताय वै ।
॥ व्यास उवाच ॥ एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत् । वितथं नोक्तपूर्व्वं मे स्वैरेष्वपि कुतोऽन्यथा ।
घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयतां । सुगुप्तेषु च देशेषु रक्षा चैव विधीयतां । शीताभिरद्भिरष्ठीलामिमाञ्च परिषिञ्चय । ४५००
॥ वैशम्पायन उवाच ॥ सा सिच्यमाना त्वष्ठीला बभूव शतधा तदा । अङ्गुष्ठपर्व्वमात्राणां गर्भाणां पृथगेव तु ।
एकाधिकशतं पूर्णं यथायोगं विशाम्पते । मांसपेश्यास्तदा राजन् क्रमशः कालपर्य्ययात् ।
ततस्तांस्तेषु कुण्डेषु गर्भानवदधे तदा । स्वनुगुप्तेषु देशेषु रक्षां वै व्यदधात्ततः ।
शशंस चैव भगवान् कालेनैतावता पुनः । उद्घाटनीयान्येतानि कुण्डानीति च सौबलीं ।
इत्युक्त्वा भगवान्व्यासस्तथा प्रतिनिधाय च । जगाम तपसे धीमान्हिमवन्तं शिलोच्चयं । ४५०५
जज्ञे क्रमेण चैतेन तेषां दुर्य्योधनो नृपः । जन्मतस्तु प्रमाणेन ज्येष्ठो राजा युधिष्ठिरः ।
तदाख्यातन्तु भीष्माय विदुराय च धीमते । यस्मिन्नहनि दुर्धर्षो जज्ञे दुर्य्योधनस्तदा । तस्मिन्नेव महाबाहुर्जज्ञे भीमोऽपि वीर्य्यवान् ।
स जातमात्र एवाथ धृतराष्ट्रसुतो नृप । रासभारावसदृशं रुराव च ननाद च ।
तं खराः प्रत्यभाषन्त गृध्रगोमायुवायसाः । वाताश्च प्रववुश्चापि दिग्दाहश्चाभवत्तदा ।
ततस्तु भीतवद्राजा धृतराष्ट्रोऽब्रवीदिदं । समानीय बहून्विप्रान्भीष्मं विदुरमेव च । ४५१०
अन्यांश्च सुहृदो राजन्कुरून्सर्व्वांस्तथैव च । युधिष्ठिरो राजपुत्त्रो ज्येष्ठो नः कुलवर्द्धनः । प्राप्तः स्वगुणतो राज्यं न तस्मिन् वाच्यमस्ति नः । अयं त्वनन्तरस्तस्मादपि राजा भविष्यति । एतद्धि ब्रूत मे तथ्यं यदत्र भविता ध्रुवं ।
वाक्यस्यैतस्य निधने दिक्षु सर्व्वासु भारत । क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवशंसिनः ।
लक्षयित्वा निमित्तानि तानि घोराणि सर्व्वशः । तेऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः ।
यथेमानि निमित्तानि घोराणि मनुजाधिप । उत्थितानि सुते ज्येष्ठे तानि ते पुरुषर्षभ ।

यदर्थं कुलान्तकरणो भवितैष सुतस्तव। तस्य शान्तिः परित्यागे गुप्तावपनयो महान्। ॥४५१५

शतमेकोनमप्यस्तु पुत्राणां ते महीपते। त्यजैनमेकं शान्तिं चेत्कुलस्येच्छसि भारत।

एकेन कुरु वै क्षेमं कुलस्य जगतस्तथा। त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।

ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्। स तथा विदुरेणोक्तस्तैश्च सर्व्वैर्द्विजोत्तमैः। न चकार तथा राजा पुत्रस्नेहसमन्वितः।

ततः पुत्रशतं पूर्णं धृतराष्ट्रस्य पार्थिव। मासमात्रेण संजज्ञे कन्या चैका शताधिका।

गान्धार्य्यां क्लिश्यमानायामुदरेण विवर्द्धता। धृतराष्ट्रं महाराजं वैश्या पर्य्यचरत्किल। ॥४५२०

तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः। जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करणो नृप।

एवं पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः। महारथानां वीराणां कन्या चैका शताधिका। युयुत्सुश्च महातेजा वैश्यापुत्रः प्रतापवान्।

इत्यादिपर्व्वणि सम्भवपर्व्वणि गान्धारीपुत्रोत्पत्तौ पञ्चदशाधिकशततमोऽध्यायः॥ ११५॥

॥ जनमेजय उवाच। धृतराष्ट्रस्य पुत्राणामादितः कथितं त्वया। ऋषेः प्रसादात्तु शतं न च कन्या प्रकीर्त्तिता।

वैश्यापुत्रो युयुत्सुश्च कन्या चैका शताधिका। गान्धारराजदुहिता शतपुत्रेति चानघ।

उक्ता महर्षिणा तेन व्यासेनामिततेजसा। कथं त्विदानीं भगवन् कन्यां त्वं तु ब्रवीषि मे। ॥४५२५

यदि भागशतं पेशी कृता तेन महर्षिणा। न प्रजास्यति चेद्भूयः सौबलेयी कथञ्चन।

कथन्तु सम्भवस्तस्या दुःशलाया वदस्व मे। यथावदिह विप्रर्षे परं मेऽत्र कुतूहलं।

॥ वैशम्पायन उवाच॥ साध्वयं प्रश्न उद्दिष्टः पाण्डवेय ब्रवीमि ते। तां मांसपेशीं भगवान् स्वयमेव महातपाः। शीताभिरद्भिरासिच्य भागंभागमकल्पयत। यो यथा कल्पितो भागस्तं तं धात्र्या तथा नृप। घृतपूर्णेषु कुण्डेषु एकैकं प्राक्षिपत्तदा।

एतस्मिन्नन्तरे साध्वी गान्धारी सुदृढव्रता। दुहितुः स्नेहसंयोगमनुध्याय वराङ्गना। ॥४५३०

मनसाऽचिन्तयद्देवी एतत्पुत्रशतं मम। भविष्यति न सन्देहो न ब्रवीत्यन्यथा मुनिः।

ममेयं परमा तुष्टिर्दुहिता मे भवेद्यदि। एका शताधिका बाला भविष्यति कनीयसी।

ततो दौहित्रजाल्लोकानबाह्योऽसौ पतिर्मम। अधिका किल नारीणां प्रीतिर्जामातृजा भवेत्।

यदि नाम ममापि स्याद्दुहितैका शताधिका। कृतकृत्या भवेयं वै पुत्रदौहित्रसंवृता।

यदि सत्यं तपस्तप्तं दत्तं वाऽप्यथ वा हुतं। गुरवस्तोषिता वापि तथाऽस्तु दुहिता मम। ॥४५३५

एतस्मिन्नेव काले तु कृष्णद्वैपायनः स्वयं। व्यभजत्स तदा पेशीं भगवानृषिसत्तमः। गणयित्वा शतं पूर्णमंशानामाह सौबलीं।

॥ व्यास उवाच॥ पूर्णं पुत्रशतं त्वेतन्न मिथ्या वागुदाहृता। दौहित्रयोगाय भाग एकः शिष्टः शतात्परः।

एषा ते सुभगा कन्या भविष्यति यथेप्सिता। ततोऽन्यं घृतकुम्भञ्च समानाय्य महातपाः।

तञ्चापि प्राक्षिपत्तत्र कन्याभागं तपोधनः। एतत्ते कथितं राजन्दुःशलाजन्म भारत। ब्रूहि राजेन्द्र किम्भूयो वर्णयिष्यामि तेऽनघ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि दुःशलोत्पत्तौ षोडशाधिकशततमोऽध्यायः॥ ११६॥

॥ जनमेजय उवाच ॥ ज्येष्ठानुज्येष्ठतां तेषां नामानि च पृथक् पृथक्। धृतराष्ट्रस्य पुत्राणामानुपूर्व्व्या प्रकीर्त्तय। ॥४५४०

॥ वैशम्पायन उवाच ॥ दुर्य्योधनो युयुत्सुश्च राजा दुःशासनस्तथा। दुःसहो दुःशलश्चैव जलसन्धः समः सहः।

विन्दानुविन्दौ दुर्द्धर्षः सुबाहुर्दुःप्रधर्षणः। दुर्म्मर्षणो दुर्म्मुखश्च दुःकर्णः कर्ण एव च।

विविंशतिर्व्विकर्णश्च शलः सत्त्वः सुलोचनः। चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः।

दुर्म्मदो दुर्व्विगाहश्च विवित्सुर्व्विकटाननः। ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ।

चित्रवाणश्चित्रवर्म्मा सुवर्म्मा दुर्व्विमोचनः। अयोबाहुर्म्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः। ॥४५४५

भीमवेगो भीमबलो बलाकी बलवर्द्धनः। उग्रायुधः सुषेणश्च कुण्डधारो महोदरः।

चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा। दृढवर्म्मा दृढक्षत्रः सोमकीर्त्तिरनूदरः।

दृढसन्धो जरासन्धः सत्यसन्धः सदःसुवाक्। उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः।

अपराजितः कुण्डशायी विशालाक्षो दुराधरः। दृढहस्तः सुहस्तश्च वातवेगसुवर्च्चसौ।

आदित्यकेतुर्ब्बह्वाशी नागदत्तोग्रयाय्यपि। कवची क्रथनः कुण्डी कुण्डधारो धनुर्द्धरः। ॥४५५०

उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः। अभयो रौद्रकर्म्मा च तथा दृढरथाश्रयः।

अनाधृष्यः कुण्डभेदी विरावी चित्रकुण्डलः। प्रमथश्च प्रमाथी च दीर्घरोमश्च वीर्य्यवान्।

दीर्घबाहुर्म्महाबाहुर्व्यूढोरुः कनकध्वजः। कुण्डाशी विरजाश्चैव दुःशला च शताधिका।

इति पुत्रशतं राजन् कन्या चैव शताधिका। नामधेयानुपूर्व्व्येण विद्धि जन्मक्रमं नृप।

सर्व्वेतिरथाः शूराः सर्व्वे युद्धविशारदाः। सर्व्वे वेदविदश्चैव सर्व्वे शास्त्रकोविदाः। ॥४५५५

सर्व्वेषामनुरूपाश्च कृता दारा महीपते। धृतराष्ट्रेण समये परीक्ष्य विधिवन्नृप।

दुःशलां चापि समये धृतराष्ट्रो नराधिपः। जयद्रथाय प्रददौ विधिना भरतर्षभ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि धृतराष्ट्रपुत्रनामकथने सप्तदशाधिकशतोऽध्यायः॥ ११७ ॥

जनमेजय उवाच। कथितो धार्त्तराष्ट्राणामार्षः सम्भव उत्तमः। अमानुषो मनुष्याणां भवता ब्रह्मवादिना।

नामधेयानि चाप्येषां कथ्यमानानि भागशः। त्वत्तः श्रुतानि मे ब्रह्मन् पाण्डवानाञ्च कीर्त्तय।

ते हि सर्व्वे महात्मानो देवराजपराक्रमाः। त्वयैवांशावतरणे देवभागाः प्रकीर्त्तिताः। ॥४५६०

एतदिच्छाम्यहं श्रोतुमतिमानुषकर्म्मणां। तेषामाजननं सर्व्वं वैशम्पायन कीर्त्तय।

वैशम्पायन उवाच। राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते। चरन्मैथुनधर्म्मस्थं ददर्श मृगयूथपं।

ततस्तां च मृगीं तञ्च रुक्मपुङ्खैः सुपत्रिभिः। निर्ब्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः।

स च राजन्महातेजा ऋषिपुत्रस्तपोधनः। भार्य्यया सह तेजस्वी मृगरूपेण सङ्गतः।

संसक्तश्च तया मृग्या मानुषीमीरयन्गिरं। क्षणेन पतितो भूमौ विललापाकुलेन्द्रियः। ॥४५६५

मृग उवाच॥ काममन्युपरीताहि बुद्ध्या विरहिता अपि। वर्जयन्ति नृशंसानि पापेष्वपि रता नराः।

न विधिं ग्रसते प्रज्ञा प्रज्ञान्तु ग्रसते विधिः। विधिपर्य्यागतानर्थान्प्राज्ञो न प्रतिपद्यते।

शश्वद्धर्म्मात्मनां मुख्ये कुले जातस्य भारत। कामलोभाभिभूतस्य कथं ते चलिता मतिः।

पाण्डुरुवाच। शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता। राज्ञां मृग न मां मोहात्त्वं गर्हयितुमर्हसि।

अच्छद्मना मायया च मृगाणां वध इष्यते। स एव धर्म्मो राज्ञान्तु तद्विद्वान् किं नु गर्हसे। ॥४५७०

अगस्त्यः सत्रमासीनश्चकार मृगयामृषिः। आरण्यान् सर्व्वदैवत्यान् मृगान् प्रोक्ष्य महावने।

प्रमाणदृष्टधर्म्मेण कथमस्मान् विगर्हसे। अगस्त्यस्याभिचारेण युष्माकञ्च वपा हुता।

मृग उवाच॥ न रिपून् वै समुद्दिश्य विमुञ्चन्ति नराः शरान्। रन्ध्र एषां विशेषेण वधकालः प्रशस्यते।

पाण्डुरुवाच। प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा। उपायैर्व्विविधैस्तीक्ष्णैः कस्मान्मृग विगर्हसे।

॥मृगउवाच॥ नाहं घ्नन्तं मृगान् राजन् विगर्हे चात्मकारणात्। मैथुनन्तु प्रतीक्ष्यं मे त्वयेहाद्यानृशंस्यतः। ॥४५७५

सर्व्वभूतहिते काले सर्व्वभूतेप्सिते तथा। को हि विद्वान् मृगं हन्याच्चरन्तं मैथुनं वने।

अस्यां मृग्याञ्च राजेन्द्र हर्षान्मैथुनमाचरं। पुरुषार्थफलं कर्त्तुं तत्त्वया विफलीकृतं।

पौरवाणां महाराज तेषामक्लिष्टकर्म्मणां। वंशे जातस्य कौरव्य नानुरूपमिदं तव।

नृशंसं कर्म्म सुमहत् सर्व्वलोकविगर्हितं। अस्वर्ग्यमयशस्यञ्च चाधर्म्मिष्ठञ्च भारत।

स्त्रीभोगानां विशेषज्ञः शास्त्रधर्म्मार्थतत्त्ववित्। नार्हस्त्वं सुरसङ्काश कर्त्तुमस्वर्ग्यमीदृशं। ॥४५८०

त्वया नृशंसकर्त्तारः पापाचाराश्च मानवाः। निग्राह्याः पार्थिवश्रेष्ठ त्रिवर्गपरिवर्ज्जिताः।

किं कृतं ते नरश्रेष्ठ मामिहानागसं घ्नता। मुनिं मूलफलाहारं मृगवेशधरं नृप।

वसमानमरण्येषु नित्यं शमपरायणं। त्वयाऽहं हिंसितो यस्मात्तस्मात्त्वामप्यहं शपे।

द्वयोर्नृशंसकर्त्तारमवशं काममोहितं। जीवितान्तकरो भाव एवमेवागमिष्यति।

अहं हि किन्दमो नाम तपसा भावितो मुनिः। व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरं। ॥४५८५

मृगो भूत्वा मृगैः सार्द्धं चरामि गहने वने। न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः।

मृगरूपधरं हत्वा मामेवं काममोहितं। अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि।

प्रियया सह संवासं प्राप्य कामविमोहितः। त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि।

अन्तकाले हि संवासं यया गन्तासि कान्तया। प्रेतराजपुरं प्राप्तं सर्व्वभूतदुरत्ययं। भक्त्या मतिमतां श्रेष्ठ सैव त्वामनुगमिष्यति।

वर्त्तमानः सुखे दुःखं यथाऽहं प्रापितस्त्वया। तथा त्वाञ्च सुखं प्राप्तं दुःखमभ्यागमिष्यति। ॥४५९०

॥ वैशम्पायन उवाच॥ एवमुक्त्वा सुदुःखार्त्तो जीवितात् स व्यमुच्यत। मृगः पाण्डुश्च दुःखार्त्तः क्षणेन समपद्यत।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डुमृगशापेऽष्टादशाधिकशततमोऽध्यायः॥ ११८॥

॥ वैशम्पायन उवाच॥ तं व्यतीतमतिक्रम्य राजा स्वमिव बान्धवं। सभार्य्यः शोकदुःखार्त्तः पर्य्यदेवयदातुरः।

॥ पाण्डुरुवाच॥ सतामपि कुले जाताः कर्म्मणा बत दुर्गतिं। प्राप्नुवन्त्यकृतात्मानः कामजालविमोहिताः।

शश्वद्धर्म्मात्मना जातो बाल एव पिता मम। जीवितान्तमनुप्राप्तः कामात्मैवेति नः श्रुतं।

तस्य कामात्मनः क्षेत्रे राज्ञः संयतवागृषिः। कृष्णद्वैपायनः साक्षाद्भगवान्मामजीजनत्। ॥४५९५

तस्याद्य व्यसने बुद्धिः सञ्जातेयं ममाधमा। त्यक्तस्य देवैरनयान्मृगयां परिधावतः।

मोक्षमेव व्यवस्यामि बन्धो हि व्यसनं महत्। सुवृत्तिमनुवर्त्तिष्ये तामहं पितुरव्ययां।

अतीव तपसात्मानं योजयिष्याम्यसंशयं। तस्मादेकोऽहमेकाकी एकैकस्मिन्वनस्पतौ। चरन्भैक्ष्यं मुनिर्मुण्डश्चरिष्याम्याश्रमानिमान्।

पांशुना समवच्छन्नः शून्यागारकृतालयः। वृक्षमूलनिकेतो वा त्यक्तसर्व्वप्रियाप्रियः।

न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः। निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः। ॥१००

न चाप्यवहसन्कञ्चिन्न कुर्व्वन्भ्रूकुटीं क्वचित्। प्रसन्नवदनो नित्यं सर्व्वभूतहिते रतः।

जङ्गमाजङ्गमं सर्व्वमविहिंसंश्चतुर्व्विधं। स्वासु प्रजास्विव सदा समः प्राणभृतः प्रति।

एककालञ्चरन्भैक्ष्यं कुलानि द्वे च पञ्च वा। असम्भवे वा भैक्ष्यस्य चरन्ननशनान्यपि। अल्पमल्पञ्च भुञ्जानः पूर्व्वालाभे न जातु चित्।

अन्यानविचरन्लोभादलाभे सप्त पूरयन्। अलाभे यदि वा लाभे समदर्शी महातपाः।

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः। नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः। ॥१०५

न जिजीविषुवत्किञ्चिन्न मुमूर्षुवदाचरन्। जीवितं मरणञ्चैव नाभिनन्दन्न च द्विषन्।

याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः। ताः सर्व्वाः समतिक्रम्य निमेषादिष्ववस्थिताः।

तासु चाप्यनवस्थासु त्यक्तसर्व्वेन्द्रियक्रियाः। संपरित्यक्तधर्म्मार्थः सुनिर्णिक्तात्मकल्मषः।

निर्मुक्तः सर्व्वपापेभ्यो व्यतीतः सर्व्ववागुराः। न वशे कस्यचित्तिष्ठन्सधर्म्मा मातरिश्वनः।

एतया सततं धृत्या चरन्नेवंप्रकारया। देहं संस्थापयिष्यामि निर्भयं मार्गमाश्रितः। ॥११०

नाहं शुक्लपथे मार्गे स्ववीर्य्यक्षयशोचिते। स्वधर्म्मात् सततापेते चरेयं वीर्य्यवर्जितः।

सत्कृतोऽसत्कृतो वाऽपि योऽन्यं कृपणचक्षुषा। उपैति वृत्तिं कामात्मा स शुनां वर्त्तते पथि।

वैशम्पायन उवाच ॥ एवमुक्त्वा सुदुःखार्त्तो निश्वासपरमो नृपः। अवेक्षमाणः कुन्तीञ्च माद्रीञ्च समभाषत।

कौशल्या विदुरः क्षत्ता राजा च सहबन्धुभिः। आर्य्या सत्यवती भीष्मस्ते च राजपुरोहिताः।

ब्राह्मणाश्च महात्मानः सोमपाः शंसितव्रताः। पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः। प्रसाद्य सर्व्वे वक्तव्याः पाण्डुः प्रव्रजितो वनं। ॥११५

निशम्य वचनं भर्त्तुर्व्वनवासे धृतात्मनः। तत्समं वचनं कुन्ती माद्री च समभाषतां।

अन्येऽपि ह्याश्रमाः सन्ति ये शक्या भरतर्षभ। आवाभ्यां धर्म्मपत्नीभ्यां सह तप्तुं तपो महत्।

शरीरस्यापि मोक्षाय स्वर्ग्यं प्राप्य महाफलं। त्वमेव भविता भर्त्ता स्वर्गस्यापि न संशयः।

प्रणिधायेन्द्रियग्रामं भर्तृलोकपरायणे। त्यक्त्वा कामसुखे ह्यावां तप्स्यावो विपुलं तपः।

यदि चावां महाप्राज्ञ त्यक्ष्यसि त्वं विशाम्पते। अद्यैवावां प्रहास्यावो जीवितं नात्र संशयः। ॥१२०

पाण्डुरुवाच ॥ यदि व्यवसितं ह्येतद्युवयोर्धर्म्मसंहितं। स्ववृत्तिमनुवर्त्स्येतामहं पितुरव्ययां।

त्यक्त्वा ग्राम्यसुखाहारं तप्यमानो महत्तपः। वल्कली फलमूलाशी चरिष्यामि महावने।

अग्नौ जुह्वदुभौ कालावुभौ कालावुपस्पृशन्। कृशः परिमिताहारश्चीरचर्म्मजटाधरः।

शीतवातातपसहः क्षुत्पिपासानवेक्षकः। तपसा दुश्चरेणेदं शरीरमुपशोषयन्।

एकान्तशीली विमृशन् पक्वापक्वेन वर्त्तयन्। पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन्। ॥४९२५

वानप्रस्थजनस्यापि दर्शनं कुलवासिनां। नाप्रियाण्याचरिष्यामि किम्पुनर्ग्रामवासिनां।

एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिं। काङ्क्षमाणोऽहमासिष्ये देहस्यास्य समापनात्।

॥ वैशम्पायन उवाच ॥ इत्येवमुक्त्वा भार्य्ये ते राजा कौरवनन्दनः। ततश्चूडामणिं निष्कमङ्गदे कुण्डलानि च।

वासांसि च महार्हाणि स्त्रीणामाभरणानि च। प्रदाय सर्व्वं विप्रेभ्यः पाण्डुः पुनरभाषत।

गत्वा नागपुरं वाच्यं पाण्डुः प्रव्रजितो वनं। अर्थं कामं सुखञ्चैव रतिञ्च परमात्मिकां। प्रतस्थे सर्व्वमुत्सृज्य सभार्य्यः कुरुनन्दनः। ॥४९३०

ततस्तस्यानुयातारस्ते चैव परिचारकाः। श्रुत्वा भरतसिंहस्य विविधाः करुणा गिरः। भीममार्त्तस्वरं कृत्वा हाहेति परिचुक्रुशुः।

उष्णमश्रु विमुञ्चन्तस्तं विहाय महीपतिं। ययुर्नागपुरं तूर्णं सर्व्वमादाय तद्धनं।

ते गत्वा नगरं राज्ञो यथावृत्तं महात्मनः। कथयाञ्चक्रिरे राज्ञस्तद्धनं विविधं ददुः।

श्रुत्वा तेभ्यस्ततः सर्व्वं यथावृत्तं महावने। धृतराष्ट्रो नरश्रेष्ठः पाण्डुमेवान्वशोचत।

न शय्यासनभोगेषु रतिं विन्दति कर्हिचित्। भ्रातृशोकसमाविष्टस्तमेवार्थं विचिन्तयन्। ॥४९३५

राजपुत्रस्तु कौरव्य पाण्डुर्मूलफलाशनः। जगाम सह पत्नीभ्यां ततो नागशतं गिरिं।

स चैत्ररथमासाद्य कालकूटमतीत्य च। हिमवन्तमतिक्रम्य प्रययौ गन्धमादनं।

रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः। उवास स महाराज समेषु विषमेषु च।

इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च। शतशृङ्गे महाराज तापसः समतप्यत।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डुचरिते ऊनविंशत्यधिकशततमोऽध्यायः॥ ११९ ॥

॥ वैशम्पायन उवाच ॥ तत्रापि तपसि श्रेष्ठे वर्त्तमानः स वीर्य्यवान्। सिद्धचारणसङ्घानां बभूव प्रियदर्शनः। ॥४९४०

शुश्रूषुरनहंवादी संयतात्मा जितेन्द्रियः। स्वर्गं गन्तुं पराक्रान्तः स्वेन वीर्य्येण भारत।

केषाञ्चिदभवद्भ्राता केषाञ्चिदभवत्सखा। ऋषयस्त्वपरे चैनं पुत्रवत्पर्य्यपालयन्।

स तु कालेन महता प्राप्य निष्कल्मषं तपः। ब्रह्मर्षिसदृशः पाण्डुर्बभूव भरतर्षभ।

अमावास्यान्तु सहिता ऋषयः संशितव्रताः। ब्रह्माणं द्रष्टुकामास्ते सम्प्रतस्थुर्महर्षयः।

सम्प्रयातानृषीन्दृष्ट्वा पाण्डुर्व्वचनमब्रवीत्। भवन्तः क्व गमिष्यन्ति ब्रूत मे वदतांवराः। ॥४९४५

॥ ऋषय ऊचुः ॥ समवायो महानद्य ब्रह्मलोके महात्मनां। देवानाञ्च ऋषीणाञ्च पितॄणाञ्च महात्मनां। वयं तत्र गमिष्यामो द्रष्टुकामाः स्वयम्भुवं।

॥ वैशम्पायन उवाच ॥ पाण्डुरुत्थाय सहसा गन्तुकामो महर्षिभिः। स्वर्गपारं तितीर्षुः स शतशृङ्गादुदङ्मुखः। प्रतस्थे सह पत्नीभ्यामब्रुवंस्तांश्च तापसाः।

उपर्य्युपरि गच्छन्तः शैलराजमुदङ्मुखाः। दृष्टवन्तो गिरौ रम्ये दुर्गान्देशान्बहून् वयं।

विमानशतसम्बाधां गीतस्वरनिनादितां। आक्रीडभूमिं देवानां गन्धर्व्वाप्सरसां तथा।

उद्यानानि कुबेरस्य समानि विषमाणि च। महानदीनितम्बांश्च गहनान् गिरिगह्वरान्। ४६५०

सन्ति नित्यहिमा देशा निर्वृक्षमृगपक्षिणः। सन्ति क्वचिन्महादर्य्यो दुर्गाः काश्चिद्दुरासदाः।

नातिक्रामेत पक्षी यान् कुत एवेतरे मृगाः। वायुरेको हि यात्यत्र सिद्धाश्च परमर्षयः।

गच्छन्त्यौ शैलराजेऽस्मिन् राजपुत्र्यौ कथं त्विमे। न सीदेतामदुःखार्हे मा गमो भरतर्षभ।

॥ पाण्डुरुवाच ॥ अप्रजस्य महाभागा न द्वारं परिचक्षते। स्वर्गे तेनाभितप्तोऽहमप्रजस्तु ब्रवीमि वः।

पित्र्यादृणादनिर्मुक्तस्तेन तप्ये तपोधनाः। देहनाशे ध्रुवो नाशः पितॄणामेष निश्चयः। ४६५५

ऋणैश्चतुर्भिः संयुक्ता जायन्ते मानवा भुवि। पितृदेवर्षिमनुजैर्देयं तेभ्यश्च धर्मतः।

एतानि तु यथाकालं यो न बुध्यति मानवः। न तस्य लोकाः सन्तीति धर्मविद्भिः प्रतिष्ठितं।

यज्ञैस्तु देवान् प्रीणाति स्वाध्यायतपसा मुनीन्। पुत्रैः श्राद्धैः पितॄंश्चापि आनृशंस्येन मानवान्।

ऋषिदेवमनुष्याणां परिमुक्तोऽस्मि धर्मतः। त्रयाणामितरेषान्तु नाश आत्मनि नश्यति।

पित्र्यादृणादनिर्मुक्त इदानीमस्मि तापसाः। इह तस्मात्प्रजाहेतोः प्रजायन्ते नरोत्तमाः। ४६६०

यथैवाहं पितुः क्षेत्रे जातस्तेन महर्षिणा। तथैवास्मिन्मम क्षेत्रे कथं वै सम्भवेत्प्रजा।

॥ तापसा ऊचुः ॥ अस्ति वै तव धर्मात्मन्विद्म देवोपमं शुभं। अपत्यमनघं राजन्वयं दिव्येन चक्षुषा।

दैवोद्दिष्टं नरव्याघ्र कर्मणेहोपपादय। अक्लिष्टं फलमव्यग्रो विन्दते बुद्धिमान्नरः।

तस्मिन्दृष्टे फले राजन् प्रयत्नं कर्तुमर्हसि। अपत्यं गुणसम्पन्नं लब्धा प्रीतिकरं ह्यसि।

॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा तापसवचः पाण्डुश्चिन्तापरोऽभवत्। आत्मनो मृगशापेन जानन्नुपहतां क्रियां। ४६६५

सोऽब्रवीद्विजने कुन्तीं धर्मपत्नीं यशस्विनीं। अपत्योत्पादने यत्नमापदि त्वं समर्थय।

अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता। इति कुन्ति विदुर्धीराः शाश्वतं धर्मवादिनः।

इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः। सर्व्वमेवानपत्यस्य न पावनमिहोच्यते।

सोऽहमेवं विदित्वैतत्प्रपश्यामि शुचिस्मिते। अनपत्यः शुभाँल्लोकान्नावाप्स्यामीति चिन्तयन्।

मृगाभिशापान्नष्टं मे जननं ह्यकृतात्मनः। नृशंसकारिणो भीरु यथैवोपहतं पुरा। ४६७०

इमे वै बन्धुदायादाः षट्पुत्रा धर्मदर्शने। षडेवाबन्धुदायादाः पुत्रास्तान् शृणु मे पृथे।

स्वयं जातः प्रणीतश्च परिक्रीतश्च यः सुतः। पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते।

दत्तः क्रीतः कृत्रिमश्च उपगच्छेत्स्वयञ्च यः। सहोढो ज्ञातिरेताश्च हीनयोनिधृतश्च यः।

पूर्व्वपूर्व्वतमाभावे मत्वा लिप्सेत वै सुतं। उत्तमादवरात् पुंसः काङ्क्षन्ते पुत्रमापदि।

अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति मानवाः। आत्मशुक्रादपि पृथे मनुः स्वायम्भुवोऽब्रवीत्। ४६७५

तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयं। सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि।

शृणु कुन्ति कथामेतां शारदण्डायनीं प्रति। सा वीरपत्नी गुरुणा नियुक्ता पुत्रजन्मनि। पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे।

वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलं। कर्म्मण्यवसिते तस्मिन्सा तेनैव सहाऽवसत्।

तत्र त्रीन् जनयामास दुर्जयादीन्महारथान्। तथा त्वमपि कल्याणि ब्राह्मणात् तपसाऽधिकात्। मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डुपृथासंवादे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

वैशम्पायन उवाच। एवमुक्ता महाराज कुन्ती पाण्डुमभाषत। कुरूणामृषभं वीरं तदा भूमिपतिं पतिं। ४६८०

न मामर्हसि धर्म्मज्ञ वक्तुमेवं कथञ्चन। धर्म्मपत्नीमभिरतां त्वयि राजीवलोचने।

त्वमेव तु महाबाहो मय्यपत्यानि भारत। वीर वीर्य्योपपन्नानि धर्म्मतो जनयिष्यसि।

स्वर्गं मनुजशार्दूल गच्छेयं सहिता त्वया। अपत्याय च माङ्गच्छ त्वमेव कुरुनन्दन।

नह्यहं मनसाऽप्यन्यं गच्छेयं त्वदृते नरं। त्वत्तः प्रतिविशिष्टश्च कोऽन्योऽस्ति भुवि मानवः।

इमाञ्च तावद्धर्म्मात्मन् पौराणीं शृणु मे कथां। परिश्रुतां विशालाक्ष कीर्त्तयिष्यामि यामहं। ४६८५

व्युषिताश्व इति ख्यातो बभूव किल पार्थिवः। पुरा परमधर्म्मिष्ठः पूरोर्व्वंशविवर्द्धनः।

तस्मिंश्च यजमाने वै धर्म्मात्मनि महाभुजे। उपागमंस्ततो देवाः सेन्द्रा देवर्षिभिः सह।

अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः। व्युषिताश्वस्य राजर्षेस्ततो यज्ञे महात्मनः। देवा ब्रह्मर्षयश्चैव चक्रुः कर्म्म स्वयं तदा।

व्युषिताश्वस्ततो राजन्नतिमर्त्यान् व्यरोचत। सर्व्वभूतान् प्रति यथा तपनः शिशिरात्यये।

स विजित्य गृहीत्वा च नृपतीन्राजसत्तम। प्राच्यानुदीच्यान् पाश्चात्यान् दाक्षिणात्यानकालयत्। ४६९०

अश्वमेधे महायज्ञे व्युषिताश्वः प्रतापवान्। बभूव स हि राजेन्द्रो दशनागबलान्वितः।

अप्यत्र गाथां गायन्ति ये पुराणविदो जनाः। व्युषिताश्वे यशोवृद्धे मनुष्येन्द्रे कुरूद्वह।

व्युषिताश्वः समुद्रान्तां विजित्येमां वसुन्धरां। अपालयत्सर्व्ववर्णान् पिता पुत्त्रानिवौरसान्।

यजमानो महायज्ञै र्ब्राह्मणेभ्यो धनं ददौ। अनन्तरत्नान्यादाय स जहार महाक्रतून्।

सुषाव च बहून्सोमान्सोमसंस्थास्ततान च। आसीत्काक्षीवती चास्य भार्य्या परमसम्मता। भद्रा नाम मनुष्येन्द्र रूपेणासदृशी भुवि। ४६९५

कामयामासतुस्तौ च परस्परमिति श्रुतं। स तस्यां कामसम्मत्तो यक्ष्मणा समपद्यत।

तेनाचिरेण कालेन जगामास्तमिवांशुमान्। तस्मिन्प्रेते मनुष्येन्द्रे भार्य्याऽस्य भृशदुःखिता।

अपुत्त्रा पुरुषव्याघ्र विललापेति नः श्रुतं। भद्रा परमदुःखार्त्ता तन्निबोध जनाधिप।

॥ भद्रोवाच ॥ नारी परमधर्म्मज्ञ सर्व्वा भर्त्तृविनाकृता। पतिं विना जीवति या न सा जीवति दुःखिता।

पतिं विना मृतं श्रेयो नार्य्याः क्षत्रियपुङ्गव। त्वद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व मां। ४७००

त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे। प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व मां।

पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च। त्वामहं नरशार्दूल गच्छन्तमनिवर्त्तितुं।

छायेवानुगता राजन्सततं वशवर्त्तिनी। भविष्यामि नरव्याघ्र नित्यं प्रियहिते रता।

अद्य प्रभृति मां राजन् कष्टा हृदयशोषणाः। आधयोऽभिभविष्यन्ति त्वामृते पुष्करेक्षण।

अभाग्यया मया नूनं वियुक्ताः सहचारिणः। तेन मे विप्रयोगोऽयमुपपन्नस्त्वया सह। ४७०५

विप्रयुक्ता तु या पत्या मुहूर्त्तमपि जीवति। दुःखं जीवति सा पापा नरकस्थेव पार्थिव।

संयुक्ता विप्रयुक्ताश्च पूर्व्वदेहे कृता मया। तमोभिः कर्म्मभिः पापैः पूर्व्वदेहेषु सञ्चितं।
दुःखं मामनुसम्प्राप्तं राजंस्त्वद्विप्रयोगजं। अद्यप्रभृत्यहं राजन् कुशसंस्तरशायिनी।
भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा। दर्शयस्व नरव्याघ्र साधु मामसुखान्वितां। कृपणां चाप्यकरुणां विलपन्तीं नरेश्वर।
॥ कुन्त्युवाच ॥ एवं बहुविधं तस्यां विलपन्त्यां पुनः पुनः। तं शवं सम्परिष्वज्य वाक् केनान्तर्हिताऽब्रवीत्। ४७१०
उत्तिष्ठ भद्रे गच्छ त्वं ददानीह वरं तव। जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि।
आत्मकीये वरारोहे शयनीये चतुर्द्दशीं। अष्टमीं वा ऋतुस्नाता संविशेथा मया सह।
एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता। यथोक्तमेव तद्वाक्यं भद्रा पुत्त्रार्थिनी तदा।
सा तेन सुषुवे देवी शवेन भरतर्षभ। त्रीन् शाल्वांश्चतुरो मद्रान् सुतान् भरतसत्तम।
तथा त्वमपि मय्येवं मनसा भरतर्षभ। शक्ता जनयितुं पुत्त्रांस्तपोयोगबलान्वितः। ४७१५
इत्यादिपर्व्वणि सम्भवपर्व्वणि व्युषिताश्वसंवादे एकविंशत्यधिकशततमोऽध्यायः ॥ २१ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तया राजा तां देवीं पुनरब्रवीत्। धर्म्मविद्धर्म्मसंयुक्तमिदं वचनमुत्तमं।
॥ पाण्डुरुवाच ॥ एवमेतत्पुरा कुन्ति व्युषिताश्वश्चकार ह। यथा त्वयोक्तं कल्याणि स ह्यासीदमरोपमः।
अथ त्विदं प्रवक्ष्यामि धर्म्मतत्त्वं निबोध मे। पुराणमृषिभिर्दृष्टं धर्म्मविद्भिर्महात्मभिः।
अनावृताः किल पुरा स्त्रिय आसन्वरानने। कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि।
तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन्। नाधर्म्मोऽभूद्वरारोहे स हि धर्म्मः पुराऽभवत्। ४७२०
तञ्चैव धर्म्मं पौराणं तिर्य्यग्योनिगताः प्रजाः। अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः।
प्रमाणदृष्टो धर्म्मोऽयं पूज्यते च महर्षिभिः। उत्तरेषु च रम्भोरु कुरुष्वद्यापि पूज्यते।
स्त्रीणामनुग्रहकरः स हि धर्म्मः सनातनः। अस्मिंस्तु लोके न चिरान्मर्य्यादेयं शुचिस्मिते। स्थापिता येन यस्माच्च तन्मे विस्तरतः
शृणु।
बभूवोद्दालको नाम महर्षिरिति नः श्रुतं। श्वेतकेतुरिति ख्यातः पुत्त्रस्तस्याभवन्मुनिः।
मर्य्यादेयं कृता तेन धर्म्या वै श्वेतकेतुना। कोपात्कमलपत्राक्षि यदर्थं तं निबोध मे। ४७२५
श्वेतकेतोः किल पुरा समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत्।
ऋषिपुत्त्रस्ततः कोपं चकारामर्षचोदितः। मातरं तां तथा दृष्ट्वा नीयमानां बलादिव।
क्रुद्धं तन्तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह। मा तात कोपं कार्षीस्त्वमेष धर्म्मः सनातनः।
अनावृता हि सर्व्वेषां वर्णानामङ्गना भुवि। यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः।
ऋषिपुत्त्रोऽथ तं धर्म्मं श्वेतकेतुर्न चक्षमे। चकार चैव मर्य्यादामिमां स्त्रीपुंसयोर्भुवि। ४७३०
मानुषेषु महाभागे नत्वेवान्येषु जन्तुषु। तदाप्रभृति मर्य्यादा स्थितेयमिति नः श्रुतं।
व्युच्चरन्त्याः पतिं नार्य्या अद्यप्रभृति पातकं। भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहं।
भार्य्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीं। पतिव्रतामेतदेव भविता पातकं भुवि।
पत्या नियुक्ता या चैव पत्न्यपत्यार्थमेव च। न करिष्यति तस्याश्च भविष्यति तदेव हि।

इति तेन पुरा भीरु मर्य्यादा स्थापिता बलात्। उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना। ४०३५

सौदासेन च रम्भोरु नियुक्ता पुत्रजन्मनि। मदयन्ती जगामर्षिं वशिष्ठमिति नः श्रुतं।

तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनी। भार्य्या कल्माषपादस्य भर्तुः प्रियचिकीर्षया।

अस्माकमपि ते जन्म विदितं कमलेक्षणे। कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये।

अत एतानि सर्व्वाणि कारणानि समीक्ष्य वै। ममैतद्वचनं धर्म्यं कर्तुमर्हस्यनिन्दिते।

ऋतावृतौ राजपुत्रि स्त्रिया भर्ता यतव्रते। नातिवर्त्तव्य इत्येवं धर्मं धर्मविदो विदुः। ४०४०

शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति। धर्ममेवं जनाः सन्तः पुराणं परिचक्षते।

भर्ता भार्य्यां राजपुत्रि धर्म्यं वाऽधर्म्यमेव वा। यद्ब्रूयात्तत्तथा कार्य्यमिति वेदविदो विदुः।

विशेषतः पुत्रगृद्धी हीनः प्रजननात्स्वयं। यथाऽहमनवद्याङ्गि पुत्रदर्शनलालसः।

तथा रक्ताङ्गुलितलः पद्मपत्रनिभः शुभे। प्रसादार्थं मया तेऽयं शिरस्यभ्युद्यतोऽञ्जलिः।

मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाऽधिकात्। पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि। त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां गतिं। ४०४५

॥ वैशम्पायन उवाच ॥ एवमुक्ता ततः कुन्ती पाण्डुं परपुरञ्जयं। प्रत्युवाच वरारोहा भर्तुः प्रियहिते रता।

पितृवेश्मन्यहं बाला नियुक्ताऽतिथिपूजने। उग्रं पर्य्यचरं तत्र ब्राह्मणं संशितव्रतं।

निगूढनिश्चयं धर्मे यन्तं दुर्व्वाससं विदुः। तमहं संशितात्मानं सर्व्वयत्नैरतोषयं। स मेऽभिचारसंयुक्तमाचष्ट भगवान्वरं।

मन्त्रं त्विमञ्च मे प्रादादब्रवीच्चैव मामिदं। यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। अकामो वा सकामो वा वशं ते समुपैष्यति।

तस्य तस्य प्रसादात्ते राज्ञि पुत्रो भविष्यति। इत्युक्ताऽहं तदा तेन पितृवेश्मनि भारत। ४०५०

ब्राह्मणस्य वचस्तथ्यं तस्य कालोऽयमागतः। अनुज्ञाता त्वया देवमाह्वयेयमहं नृप।

तेन मन्त्रेण राजर्षे यथा स्यान्नौ प्रजा हिता। आवाहयामि कं देवं ब्रूहि सत्यवतां वर।

त्वत्तोऽनुज्ञाप्रतीक्षां मां विद्ध्यस्मिन्कर्मणि स्थितां।

॥ पाण्डुरुवाच ॥ अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि। धर्ममावाहय शुभे स हि लोकेषु पुण्यभाक्।

अधर्मेण न नो धर्मः संयुज्येत कथञ्चन। लोकश्चायं वरारोहे धर्मोऽयमिति मन्यते। ४०५५

धार्म्मिकश्च कुरूणां स भविष्यति न संशयः। धर्मेण चापि दत्तस्य नाधर्मे रंस्यते मनः।

तस्माद्धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते। उपचाराभिचाराभ्यां धर्ममावाहयस्व वै।

॥ वैशम्पायनउवाच ॥ सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना। अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमवर्त्तत।

इत्यादिपर्व्वणि सम्भवपर्व्वणि कुन्तीपुत्रोत्पत्त्यनुज्ञाने द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

॥ वैशम्पायनउवाच ॥ संवत्सरधृते गर्भे गान्धार्य्या जनमेजय। आह्वयामास वै कुन्ती गर्भार्थं धर्ममच्युतं।

सा बलिं त्वरिता देवी धर्मायोपजहार ह। जजाप विधिवज्जप्यं दत्तं दुर्व्वाससा पुरा। ४०६०

आजगाम ततो देवो धर्मो मन्त्रबलात्ततः। विमाने सूर्य्यसङ्काशे कुन्ती यत्र जपस्थिता।

विहस्य तां ततो ब्रूयाः कुन्ति किन्ते ददाम्यहं। सा तं विहस्यमानाऽपि पुत्रं देह्यब्रवीदिदं।

संयुक्ता सा हि धर्म्मेण योगमूर्त्तिधरेण ह। लेभे पुत्त्रं वरारोहा सर्व्वप्राणभृतां हितं।
ऐन्द्रे चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे। दिवामध्यगते सूर्य्ये तिथौ पूर्णेऽतिपूजिते।
समृद्धयशसं कुन्ती सुषाव प्रवरं सुतं। जातमात्रे सुते तस्मिन्वागुवाचाशरीरिणी। ४७६५
एष धर्म्मभृतां श्रेष्ठो भविष्यति नरोत्तमः। विक्रान्तः सत्यवाक्चैव राजा पृथ्व्यां भविष्यति।
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः। भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः।
यशसा तेजसा चैव वृत्तेन च समन्वितः। धार्म्मिकं तं सुतं लब्ध्वा पाण्डुस्तां पुनरब्रवीत्।
प्राहुः क्षत्रं बलज्येष्ठं बलज्येष्ठं सुतं वृणु। ततस्तथोक्ता भर्त्रा तु वायुमेवाजुहाव सा।
ततस्तामागतो वायुर्मृगारूढो महाबलः। किन्ते कुन्ति ददाम्यद्य ब्रूहि यत्ते हृदि स्थितं। ४७७०
सा सलज्जा विहस्याह पुत्त्रं देहि सुरोत्तम। बलवन्तं महाकायं सर्व्वदर्पप्रभञ्जनं।
तस्माज्जज्ञे महाबाहुर्भीमो भीमपराक्रमः। तमप्यतिबलं जातं वागुवाचाशरीरिणी।
सर्व्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत। इदमत्यद्भुतं चासीज्जातमात्रे वृकोदरे। यदङ्कात्पतितो मातुः शिलां गात्रैरचूर्णयत्।
कुन्ती व्याघ्रभयोद्विग्ना सहसोत्पतिता किल। नान्वबुध्यत संसुप्तमुत्सङ्गे स्वे वृकोदरं।
ततः स वज्रसंघातः कुमारो न्यपतद्गिरौ। पपात तेन शतधा शिला गात्रैर्विचूर्णिता। ४७७५
तां शिलां चूर्णितां दृष्ट्वा पाण्डुर्विस्मयमागतः। यस्मिन्नहनि भीमस्तु जज्ञे भरतसत्तम।
दुर्य्योधनोऽपि तत्रैव प्रजज्ञे वसुधाधिपः। जाते वृकोदरे पाण्डुरिदं भूयोऽन्वचिन्तयत्। कथं नु मे वरः पुत्त्रो लोकश्रेष्ठो भवेदिति।
दैवे पुरुषकारे च लोकोऽयं संप्रतिष्ठितः। तत्र दैवन्तु विधिना कालयुक्तेन लभ्यते।
इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतं। अप्रमेयबलोत्साहो वीर्य्यवानमितद्युतिः।
तं तोषयित्वा तपसा पुत्त्रं लप्स्ये महाबलं। यं दास्यति स मे पुत्त्रः स वरीयान्भविष्यति। ४७८०
अमानुषान्मानुषांश्च संग्रामे स हनिष्यति। कर्म्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः।
ततः पाण्डुर्महाराजो मन्त्रयित्वा महर्षिभिः। दिदेश कुन्त्याः कौरव्यो व्रतं सम्वत्सरं शुभं।
आत्मना च महाबाहुरेकपादस्थितोऽभवत्। उग्रं स तप आस्थाय परमेण समाधिना।
आरिराधयिषुर्देवं त्रिदशानां तमीश्वरं। सूर्य्येण सह धर्म्मात्मा पर्य्यतप्यत भारत। तं तु कालेन महता वासवः प्रत्यपद्यत।
शक्र उवाच॥ पुत्त्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतं। ब्राह्मणानां गवाञ्चैव सुहृदां चार्थसाधकं। ४७८५
दुर्हृदां शोकजननं सर्व्वबान्धवनन्दनं। सुतं तेऽग्र्यं प्रदास्यामि सर्व्वामित्रविनाशनं।
इत्युक्तः कौरवो राजा वासवेन महात्मना। उवाच कुन्तीं धर्म्मात्मा देवराजवचः स्मरन्।
उदर्कस्तव कल्याणि तुष्टो देवगणेश्वरः। दातुमिच्छति ते पुत्त्रं यथासङ्कल्पितं त्वया।
अतिमानुषकर्म्माणं यशस्विनमरिन्दमं। नीतिमन्तं महात्मानमादित्यसमतेजसं।
दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनं। पुत्त्रं जनय सुश्रोणि धाम क्षत्रियतेजसां। लब्धः प्रसादो देवेन्द्रात्तमाह्वय शुचिस्मिते। ४७९०
वैशम्पायनउवाच॥ एवमुक्ता ततः शक्रमाजुहाव यशस्विनी। अथाजगाम देवेन्द्रो जनयामास चार्जुनं।

जातमात्रे कुमारे तु वागुवाचाशरीरिणी । महागम्भीरनिर्घोषा नभो नादयती तदा ।
शृण्वतां सर्व्वभूतानां तेषां चाश्रमवासिनां । कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मितां ।
कार्त्तवीर्य्यसमः कुन्ति शिवतुल्यपराक्रमः । एष शक्र इवाजय्यो यशस्ते प्रथयिष्यति ।
अदित्या विष्णुना प्रीतिर्य्यथाऽभूदभिवर्द्धिता । तथा विष्णुसमः प्रीतिं वर्द्धयिष्यति तेऽर्जुनः । ४७९५
एष मद्रान्वशे कृत्वा कुरूंश्च सह सोमकैः । चेदिकाशिकरूषांश्च कुरुलक्ष्मीं वहिष्यति ।
एतस्य भुजवीर्य्येण खाण्डवे हव्यवाहनः । मेदसा सर्व्वभूतानां तृप्तिं यास्यति वै परां ।
ग्रामणीश्च महीपालानेष जित्वा महाबलः । भ्रातृभिः सहितो वीर स्त्रीन्मेधानाहरिष्यति ।
जामदग्न्यसमः कुन्ति विष्णुतुल्यपराक्रमः । एष वीर्य्यवतां श्रेष्ठो भविष्यति महायशाः ।
एष युद्धे महादेवं तोषयिष्यति शङ्करं । अस्त्रं पाशुपतं नाम तस्मात्तुष्टादवाप्स्यति । ४८००
निवातकवचा नाम दैत्या विबुधविद्विषः । शक्राज्ञया महाबाहुस्तान्वधिष्यति ते सुतः ।
तथा दिव्यानि चास्त्राणि निखिलेनाहरिष्यति । विप्रनष्टां श्रियं चायमाहर्त्ता पुरुषर्षभः ।
एतामत्यद्भुतां वाचं कुन्ती शुश्राव सूतके । वाचमुच्चरितामुच्चैस्तां निशम्य तपस्विनां ।
बभूव परमो हर्षः शतशृङ्गनिवासिनां । तथा देवनिकायानां सेन्द्राणाञ्च दिवौकसां ।
आकाशे दुन्दुभीनाञ्च बभूव तुमुलस्वनः । उदतिष्ठन्महाघोषः पुष्पवृष्टिभिरावृतः । ४८०५
समवेत्य च देवानां गणाः पार्थमपूजयन् । काद्रवेया वैनतेया गन्धर्व्वाप्सरसस्तथा ।
प्रजानां पतयः सर्व्वे सप्त चैव महर्षयः । भरद्वाजः कश्यपो गौतमश्च विश्वामित्रो जमदग्निर्व्वसिष्ठः । यश्चोदितो भास्करे
ऽभूत्प्रनष्टे सोऽप्यत्रात्रिर्भगवानाजगाम ।
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः । दक्षः प्रजापतिश्चैव गन्धर्व्वाप्सरसस्तथा ।
दिव्यमाल्याम्बरधराः सर्व्वालङ्कारभूषिताः । उपगायन्ति बीभत्सुं नृत्यन्त्यप्सरसाङ्गणाः ।
तथा महर्षयश्चापि तेपुस्तत्र समन्ततः । गन्धर्व्वैः सहितः श्रीमान्प्रागायत च तुम्बुरुः । ४८१०
भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा । गोपतिर्धृतराष्ट्रश्च सूर्य्यवर्चास्तथाऽष्टमः ।
युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा । त्रयोदशः शालिशिराः पर्ज्जन्यश्च चतुर्द्दशः ।
कलिः पञ्चदशश्चैव नारदश्चात्र षोडशः । सत्वाहृहत्वाहृहकः करालश्च महामनाः ।
ब्रह्मचारी बहुगुणः सुवर्णश्चेति विश्रुतः । विश्वावसुःसुमन्युश्च सुचन्द्रश्च शहस्तथा ।
गीतमाधुर्य्यसम्पन्नौ विख्यातौ च हाहाहूहू । इत्येते देवगन्धर्व्वा जगुस्तत्र नराधिप । ४८१५
तथैवाप्सरसो हृष्टाः सर्व्वालङ्कारभूषिताः । ननृतुर्व्वै महाभागा जगुश्चायतलोचनाः ।
अनूचानाऽनवद्या च गुणमुख्या गुणावरा । अद्रिका च तथा सोमा मिश्रकेशी त्वलम्बुषा ।
मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा । अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा ।
असिता च सुबाहुश्च सुप्रिया च वपुस्तथा । पुण्डरीका सुगन्धा च सुरसा च प्रमाथिनी ।
काम्या शारद्वती चैव ननृतुस्तत्र सङ्घशः । मेनका सहजन्या च कर्णिका पुञ्जिकस्थला । ४८२०

अनूचाना घृताची च विश्वाची पूर्व्वचित्त्यपि। उम्लोचेति च विख्याता प्रम्लोचेति च तादृशी।
उर्व्वश्येकादशी तासां जगुश्चायतलोचनाः। धाताऽर्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा।
इन्द्रो विवस्वान्पूषा च त्वष्टा च सविता तथा। पर्ज्जन्यश्चैव विष्णुश्च आदित्या द्वादश स्मृताः।
महिमानं पाण्डवस्य वर्द्धयन्तोऽम्बरे स्थिताः। मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः। ४८२५
अजैकपादहिर्ब्बुध्न्यः पिनाकी च परन्तप। दहनोऽथेश्वरश्चैव कपाली च विशांपते। स्थाणुर्भवश्च भगवान्रुद्रास्तत्रावतस्थिरे।
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः। विश्वेदेवास्तथा साध्यास्तत्रासन्परिसंस्थिताः।
कर्कोटकोऽथ सर्पश्च वासुकिश्च भुजङ्गमः। कच्छपश्चाथ कुण्डश्च तक्षकश्च महोरगः।
आययुस्तपसा युक्ता महाक्रोधा महाबलाः। एते चान्ये च बहवस्तत्र नागा व्यवस्थिताः।
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चासितध्वजः। अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः। ४८३०
तांश्च देवगणान्सर्वांस्तपःसिद्धा महर्षयः। विमानगिर्य्यग्रगतान्ददृशुर्नेतरे जनाः।
तद्दृष्ट्वा महदाश्चर्य्यं विस्मिता मुनिसत्तमाः। अधिकां स्म ततो वृत्तिमवर्त्तन्पाण्डवान्प्रति।
पाण्डुस्तु पुनरेवैनां पुत्त्रलोभान्महायशाः। प्रवक्तुमैच्छद्धर्म्मपत्नीं कुन्ती त्वेनमथाब्रवीत्।
नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत। अतः परं स्वैरिणी स्याद्बन्धकी पञ्चमे भवेत्।
स त्वं विद्वन्धर्म्ममिममधिगम्य कथं नु मां। अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे। ४८३५
इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डवोत्पत्तौ त्रयोविंशत्यधिकशतोऽध्यायः॥ १२३ ॥
वैशम्पायन उवाच। कुन्तीपुत्त्रेषु जातेषु धृतराष्ट्रात्मजेषु च। मद्रराजसुता पाण्डुं रहो वचनमब्रवीत्।
न मेऽस्ति त्वयि सन्तापो विगुणेऽपि परन्तप। नावरत्वे वरार्हायाः स्थिता चानघ नित्यदा।
गान्धार्य्याश्चैव नृपते जातं पुत्त्रशतं तथा। श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन।
इदन्तु मे महद्दुःखं तुल्यतायामपुत्त्रता। दिष्ट्या त्विदानीं भर्त्तुर्मे कुन्त्यामप्यस्ति सन्ततिः।
यदि त्वपत्यसन्तानं कुन्तिराजसुता मयि। कुर्य्यादनुग्रहो मे स्यात्तव चापि हितं भवेत्। ४८४०
संरम्भो हि सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति। यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय।
पाण्डुरुवाच॥ ममाप्येष सदा माद्रि हृद्यर्थः परिवर्त्तते। न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया।
तवत्विदंमतं मत्वा प्रयतिष्याम्यतः परं। मन्ये ध्रुवं मयोक्ता सा वचनं प्रतिपत्स्यते।
वैशम्पायन उवाच। ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत्। कुलस्य मम सन्तानं लोकस्य च कुरु प्रियं।
मम चापिण्डनाशाय पूर्व्वेषामपि चात्मनः। मत्प्रियार्थञ्च कल्याणि कुरु कल्याणमुत्तमं। ४८४५
यशसोऽर्थाय चैव त्वं कुरु कर्म्म सुदुष्करं। प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोऽर्थिना।
तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करं। गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भाविनि।
तथा राजर्षयः सर्व्वे ब्राह्मणाश्च तपोधनाः। चक्रुरुच्चावचं कर्म्म यशसोऽर्थाय दुष्करं।
सा त्वं माद्रीं प्लवेनेव तारयैनामनिन्दिते। अपत्यसंविभागेन परां कीर्त्तिमवाप्नुहि। एवमुक्ताऽब्रवीन्माद्रीं सकृच्चिन्तय दैवतं।
तस्मात्ते भविताऽपत्यमनुरूपमसंशयं।

ततो माद्री विचार्य्यैव जगाम मनसाऽश्विनौ । तावागम्य सुतौ तस्यां जनयामासतुर्यमौ । ४८५०

नकुलं सहदेवञ्च रूपेणाप्रतिमौ भुवि । तथैव तावपि यमौ वागुवाचाशरीरिणी ।

सत्त्वरूपगुणोपेतौ भवतोऽत्यश्विनाविति । भासतस्तेजसाऽत्यर्थं रूपद्रविणसम्पदा ।

नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः । भक्त्या च कर्म्मणा चैव तथाशीर्भिर्विशाम्पते ।

ज्येष्ठं युधिष्ठिरेत्येवं भीमसेनेति मध्यमं । अर्जुनेति तृतीयञ्च कुन्तीपुत्त्रानकल्पयन् ।

पूर्व्वजं नकुलेत्येवं सहदेवेति चापरं । माद्रीपुत्त्रावकथयंस्ते विप्राः प्रीतमानसाः । ४८५५

अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः । पाण्डुपुत्त्रा व्यराजन्त पञ्च संवत्सरा इव ।

महासत्त्वा महावीर्य्या महाबलपराक्रमाः । पाण्डुर्दृष्ट्वा सुतांस्तांस्तु देवरूपान्महौजसः ।

मुदं परमिकां लेभे ननन्द च नराधिपः । ऋषीणामपि सर्व्वेषां शतशृङ्गनिवासिनां ।

प्रिया बभूवुस्तासाञ्च तथैव मुनियोषितां । कुन्तीमथ पुनः पाण्डुर्माद्र्यर्थे समचोदयत् ।

तमुवाच पृथा राजन् रहस्युक्ता तदा सती । उक्ता सकृद्द्वन्द्वमेषा लेभे तेनास्मि वञ्चिता । ४८६०

बिभेम्यस्याः परिभवात् कुस्त्रीणां गतिरीदृशी । नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने फलद्वयं ।

तस्मान्नाहं नियोक्तव्या त्वयैषोऽस्तु वरो मम । एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः । सम्भूताः कीर्त्तिमन्तस्ते कुरुवंशविवर्द्धनाः ।

शुभलक्षणसम्पन्नाः सोमवत्प्रियदर्शनाः । सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः ।

सिंहग्रीवा मनुष्येन्द्रा ववृधुर्देवविक्रमाः । विवर्द्धमानास्ते तत्र पुण्ये हैमवते गिरौ । विस्मयं जनयामासुर्महर्षीणां समेयुषां ।

ते च पञ्च शतञ्चैव कुरुवंशविवर्द्धनाः । सर्व्वे ववृधुरल्पेन कालेनाप्स्विव नीरजाः । ४८६५

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डवोत्पत्तौ चतुर्व्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

॥ वैशम्पायन उवाच ॥ दर्शनीयांस्ततः पुत्त्रान् पाण्डुः पञ्च महावने । तान्पश्यन्पर्व्वते रम्ये स्वबाहुबलमाश्रितः ।

सुपुष्पितवने काले कदाचिन्मधुमाधवे । भूतसम्मोहने राजा सभार्य्यो व्यचरद्वनं ।

पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः । अन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ।

जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितं । पाण्डोर्वनं तत्सम्प्रेक्ष्य प्रजज्ञे हृदि मन्मथः ।

प्रहृष्टमनसं तत्र विचरन्तं यथाऽमरं । तं माद्र्यनुजगामैका वसनं बिभ्रती शुभं । ४८७०

समीक्षमाणः स तु तां वयःस्थां तनुवाससं । तस्य कामः प्रववृधे गहनेऽग्निरिवोद्गतः ।

रहस्येकान्तु तां दृष्ट्वा राजा राजीवलोचनां । न शशाक नियन्तुं तं कामं कामबलात्कृतः ।

तत एनां बलाद्राजा निजग्राह रहोगतां । वार्य्यमाणस्तथा देव्या विस्फुरन्त्या यथाबलं ।

स तु कामपरीतात्मा तं शापं नान्वबुध्यत । माद्रीं मैथुनधर्म्मेण सोऽन्वगच्छद्बलादिव ।

जीवितान्ताय कौरव्य मन्मथस्य वशङ्गतः । शापजं भयमुत्सृज्य विधिना सम्प्रचोदितः । ४८७५

तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहिता । सम्प्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ।

स तया सह सङ्गम्य भार्य्यया कुरुनन्दन। पाण्डुः परमधर्म्मात्मा युयुजे कालधर्म्मणा।
ततो माद्री समालिङ्ग्य राजानं गतचेतसं। मुमोच दुःखजं शब्दं पुनः पुनरतीव हि।
सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ। आजग्मुः सहितास्तत्र यत्र राजा तथा गतः।
ततो माद्र्यब्रवीद्राजन्नार्त्ता कुन्तीमिदं वचः। एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः। ४८८०
तच्छ्रुत्वा वचनं तस्यास्तत्रैवाधाय दारकान्। हताऽहमिति विक्रुश्य सहसैवाजगाम सा।
दृष्ट्वा पाण्डुञ्च माद्रीञ्च शयानौ धरणीतले। कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता।
रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान्। कथं त्वामभ्यतिक्रान्तः शापं जानन्वनौकसः।
ननु नाम त्वया माद्रि रक्षितव्यो नराधिपः। सा कथं लोभितवती विजने त्वं नराधिपं।
कथं दीनस्य सततं त्वामासाद्य रहोगतां। तं विचिन्तयतः शापं प्रहर्षः समजायत। ४८८५
धन्या त्वमसि वाह्लीकि मत्तो भाग्यतरा तथा। दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः।
माद्र्युवाच। विलपन्त्या मया देवि वार्य्यमाणेन चासकृत्। आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा।
कुन्त्युवाच। अहं ज्येष्ठा धर्म्मपत्नी ज्येष्ठं धर्म्मफलं मम। अवश्यंभाविनो भावान्मा मां माद्रि निवर्त्तय।
अन्विष्यामीह भर्त्तारमहं प्रेतवशं गतं। उत्तिष्ठ त्वं विसृज्यैनमिमान् पालय दारकान्।
माद्र्युवाच। अहमेवानुयास्यामि भर्त्तारमपलायिनं। नहि तृप्ताऽस्मि कामानां ज्येष्ठा मामनुमन्यतां। ४८९०
मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः। तमुच्छिन्द्यामस्य कामं कथं नु यमसादने।
न चाप्यहं वर्त्तयन्ती निर्व्विशेषं सुतेषु ते। वृत्तिमार्य्ये चरिष्यामि स्पृशेदेनस्तथा च मां।
तस्मान्मे सुतयोः कुन्ति वर्त्तितव्यं स्वपुत्रवत्। मां हि कामयमानोऽयं राजा प्रेतवशं गतः।
राज्ञः शरीरेण सह ममापीदं कलेवरं। दग्धव्यं सुप्रतिच्छन्नमेतदार्य्ये प्रियं कुरु।
दारकेष्वप्रमत्ता च भवेथाश्च हिता मम। अतोऽन्यं न प्रपश्यामि संदेष्टव्यं हि किञ्चन। ४८९५
वैशम्पायनउवाच॥ इत्युक्त्वा तं चिताग्निस्थं धर्म्मपत्नी नरर्षभं। मद्रराजसुता तूर्णमन्वारोहद्यशस्विनी।
इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डूपरमे पञ्चविंशत्यधिकशततोऽध्यायः॥ १२५॥
॥ वैशम्पायनउवाच॥ पाण्डोरुपरमं दृष्ट्वा देवकल्पा महर्षयः। ततो मन्त्रविदः सर्व्वे मन्त्रयाञ्चक्रिरे मिथः।
॥ तापसा ऊचुः॥ हित्वा राज्यञ्च राष्ट्रञ्च स महात्मा महायशाः। अस्मिन् स्थाने तपस्तप्तुं तापसान् शरणं गतः।
स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह। प्रादायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः।
तस्येमानात्मजान्देहं भार्य्याञ्च सुमहात्मनः। स्वराष्ट्रं गृह्य गच्छामो धर्म्म एष हि नः स्मृतः। ४९००
॥ वैशम्पायन उवाच॥ ते परस्परमामन्त्र्य देवकल्पा महर्षयः। पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयं।
उदारमनसः सिद्धा गमने चक्रिरे मनः। भीष्माय पाण्डवान् दातुं धृतराष्ट्राय चैव हि।
तस्मिन्नेव क्षणे सर्व्वे तानादाय प्रतस्थिरे। पाण्डोर्दारांश्च पुत्रांश्च शरीरे ते च तापसाः।
सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला। प्रपन्ना दीर्घमध्वानं संक्षिप्तं तदमन्यत।
सा त्वदीर्घेण कालेन सम्प्राप्ता कुरुजाङ्गलं। वर्द्धमानपुरद्वारमाससाद यशस्विनी। ४९०५

द्वारिणं तापसा जग्मू राजानञ्च प्रकाशय । ते तु गत्वा क्षणेनैव सभायां विनिवेदिताः ।
तं चारणसहस्राणां मुनीनामागमं तदा । श्रुत्वा नागपुरे नॄणां विस्मयः समपद्यत ।
मुहूर्त्तोदित आदित्ये सर्व्वे बालपुरस्कृताः । सदारास्तापसान्द्रष्टुं निर्य्ययुः पुरवासिनः ।
स्त्रीसङ्घाः क्षत्रसङ्घाश्च यानसङ्घसमास्थिताः । ब्राह्मणैः सह निर्ज्जग्मुर्ब्राह्मणानाञ्च योषितः ।
तथा विट्शूद्रसङ्घानां महान् व्यतिकरोऽभवत् । न कश्चिदकरोदीर्ष्यामभवन् धर्म्मबुद्धयः ।		४९१०
तथा भीष्मः शान्तनवः सोमदत्तोऽथ वाह्लिकः । प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयं ।
सा च सत्यवती देवी कौशल्या च यशस्विनी । राजदारैः परिवृता गान्धारी चापि निर्ययौ ।
धृतराष्ट्रस्य दायादा दुर्य्योधनपुरोगमाः । भूषिता भूषणैश्चित्रैः शतसङ्ख्या विनिर्ययुः ।
तान्महर्षिगणान्दृष्ट्वा शिरोभिरभिवाद्य च । उपोपविविशुः सर्व्वे कौरव्याः सपुरोहिताः ।
तथैव शिरसा भूमावभिवाद्य प्रणम्य च ।। उपोपविविशुः सर्व्वे पौरजानपदा अपि ।		४९१५
तमकूजमभिज्ञाय जनौघं सर्व्वशस्तदा । पूजयित्वा यथान्यायं पाद्येनार्घ्येण च प्रभो ।
भीष्मो राज्यञ्च राष्ट्रञ्च महर्षिभ्यो न्यवेदयत् । तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी ।
ऋषीणां मतमाज्ञाय महर्षिरिदमब्रवीत् । यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः । कामभोगान्परित्यज्य शतशृङ्गमितो गतः ।
ब्रह्मचर्य्यव्रतस्थस्य तस्य दिव्येन हेतुना । साक्षाद्धर्म्मादयं पुत्त्रस्तत्र जातो युधिष्ठिरः ।
तथैनं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः । मातरिश्वा ददौ पुत्त्रं भीमं नाम महाबलं ।		४९२०
पुरुहूतादयं जज्ञे कुन्त्यामेव धनञ्जयः । यस्य कीर्त्तिर्महेष्वासान्सर्व्वानभिभविष्यति ।
यौ तु माद्री महेष्वासावसूत पुरुषोत्तमौ । अश्विभ्यां पुरुषव्याघ्राविमौ तावपि पश्यत ।
चरता धर्म्मनित्येन वनवासं यशस्विना । नष्टः पैतामहो वंशः पाण्डुना पुनरुद्धृतः ।
पुत्त्राणां जन्म वृद्धिञ्च वैदिकाध्ययनानि च । पश्यन्तः सततं पाण्डोः परां प्रीतिमवाप्स्यथ ।
वर्त्तमानः सतां वृत्ते पुत्त्रलाभमवाप्य च । पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ।		४९२५
तं चितागतमाज्ञाय वैश्वानरमुखे हुतं । प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ।
सा गता सह तेनैव पतिलोकमनुव्रता । तस्यास्तस्य च यत्कार्य्यं क्रियतां तदनन्तरं ।
इमे तयोः शरीरे द्वे पुत्त्राश्चेमे तयोर्वराः । क्रियाभिरनुगृह्यन्तां सह मात्रा परन्तपाः ।
प्रेतकार्य्ये निवृत्ते तु पितृमेधं महायशाः । लभतां सर्व्वधर्म्मज्ञः पाण्डुः कुरुकुलोद्वहः ।
वैशम्पायन उवाच ॥ एवमुक्त्वा कुरून्सर्व्वान् कुरूणामेव पश्यतां । क्षणेनान्तर्हिताः सर्व्वे तापसा गुह्यकैः सह ।		४९३०
गन्धर्व्वनगराकारं तथैवान्तर्हितं पुनः । ऋषिसिद्धगणान्दृष्ट्वा विस्मयं ते परं ययुः ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि ऋषिसंवादे षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
॥ धृतराष्ट्र उवाच ॥ पाण्डोर्व्विदुर सर्व्वाणि प्रेतकार्य्याणि कारय । राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ।
पशून्वासांसि रत्नानि धनानि विविधानि च । पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितं ।

यथा च कुन्ती सत्कारं कुर्य्यान्माद्र्यास्तथा कुरु। यथा न वायुर्नादित्यः पश्येतां तां सुसंवृतां।
न शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः। यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः। ४९३५
॥ वैशम्पायन उवाच ॥ विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत। पाण्डुं संस्कारयामास देशे परमपूजिते।
ततस्तु नगरात्तूर्णमाज्यगन्धपुरस्कृताः। निर्हृताः पावका दीप्ताः पाण्डो राजपुरोहितैः।
अथैनमार्त्तवैः पुष्पैर्गन्धैश्च विविधैर्वरैः। शिविकां तामलङ्कृत्य वाससाच्छाद्य सर्व्वशः।
तां तथा शोभितां माल्यैर्व्वासोभिश्च महाधनैः। अमात्या ज्ञातयश्चैनं सुहृदश्चोपतस्थिरे।
नृसिंहं नरयुक्तेन परमालङ्कृतेन तं। अवहन् यानमुख्येन सह माद्र्या सुसंवृतं। ४९४०
पाण्डुरेणातपत्रेण चामरव्यजनेन च। सर्व्ववादित्रनादैश्च समलञ्चक्रिरे ततः।
रत्नानि चाप्युपादाय बहूनि शतशो नराः। प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तत्रौर्द्ध्वदेहिके।
अथ छत्राणि शुभ्राणि चामराणि बृहन्ति च। आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च।
याजकैः शुक्लवासोभिर्हूयमाना हुताशनाः। अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलङ्कृताः।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः। रुदन्तः शोकसन्तप्ता अनुजग्मुर्नराधिपं। ४९४५
अयमस्मानपाहाय दुःखे चाधाय शाश्वते। कृत्वा चास्माननाथांश्च क यास्यति नराधिप।
क्रोशन्तः पाण्डवाः सर्व्वे भीष्मो विदुर एव च। रमणीये वनोद्देशे गङ्गातीरे समे शुभे।
न्यासयामासुरथ तां शिविकां सत्यवादिनः। सभार्य्यस्य नृसिंहस्य पाण्डोरक्लिष्टकर्म्मणः।
ततस्तस्य शरीरन्तु सर्व्वगन्धाधिवासितं। शुचिकालीयकादिग्धं दिव्यचन्दनरूषितं।
पर्य्यषिञ्चन् जलेनाशु शातकुम्भमयैर्घटैः। चन्दनेन च शुक्लेन सर्व्वतः समलेपयन्। ४९५०
कालागुरुविमिश्रेण तथा तुङ्गरसेन च। अथैनं देशजैः शुक्लैर्व्वासोभिः समयोजयन्।
संछन्नः स तु वासोभिर्जीवन्निव नराधिपः। शुशुभे स नरव्याघ्रो महार्हशयनोचितः।
याजकैरभ्यनुज्ञाते प्रेतकर्म्मण्यनुष्ठिते। घृतावसिक्तं राजानं सहमाद्र्या स्वलङ्कृतं।
तुङ्गपद्मविमिश्रेण चन्दनेन सुगन्धिना। अन्यैश्च विविधैर्गन्धैर्व्विधिना समदाहयन्।
ततस्तयोः शरीरे द्वे दृष्ट्वा मोहवशं गता। हाहा पुत्त्रेति कौशल्या पपात सहसा भुवि। ४९५५
तां प्रेक्ष्य पतितामार्त्तां पौरजानपदो जनः। रुरोद दुःखसन्तप्तो राजभक्त्या कृपाऽन्वितः।
कुन्त्याश्चैवार्त्तनादेन सर्व्वाणि च विचुक्रुशुः। मानुषैः सह भूतानि तिर्य्यग्योनिगतान्यपि।
तथा भीष्मः शान्तनवो विदुरश्च महामतिः। सर्व्वशः कौरवाश्चैव प्राणदन् भृशदुःखिताः।
ततो भीष्मोऽथ विदुरो राजा च सह पाण्डवैः। उदकं चक्रिरे तस्य सर्व्वाश्च कुरुयोषितः।
चुक्रुशुः पाण्डवाः सर्व्वे भीष्मः शान्तनवस्तथा। विदुरो ज्ञातयश्चैव चक्रुश्चाप्युदकक्रियाः। ४९६०
कृतोदकांस्तानादाय पाण्डवाञ्छोककर्शितान्। सर्व्वाः प्रकृतयो राजञ्छोचमाना न्यवारयन्।
यथैव पाण्डवा भूमौ सुषुपुः सह बान्धवैः। तथैव नागरा राजन् शिश्यिरे ब्राह्मणादयः।

तद्गतानन्दमस्वस्थमाकुमारमहृष्टवत्। बभूव पाण्डवैः सार्द्धं नगरं द्वादश क्षपाः।

इत्यादिपर्व्वणि सम्भवपर्व्वणि पाण्डुदाहे सप्तविंशत्यधिकशततमोऽध्यायः॥ १२७ ॥

॥ वैशम्पायन उवाच ॥ ततः कुन्ती च राजा च भीष्मश्च सह बन्धुभिः। ददुः श्राद्धं तदा पाण्डोः स्वधामृतमयं तदा।

कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः। रत्नौघान् द्विजमुख्येभ्यो दत्त्वा ग्रामवरांस्तथा। ४९६५

कृतशौचांस्ततस्तांस्तु पाण्डवान् भरतर्षभान्। आदाय विविशुः सर्व्वे पुरं वारणसाह्वयं।

सततं स्मानुशोचन्तस्तमेव भरतर्षभं। पौरजानपदाः सर्व्वे मृतं स्वमिव बान्धवाः।

श्राद्धावसाने तु तदा दृष्ट्वा तं दुःखितं जनं। सम्मूढां दुःखशोकार्त्तां व्यासो मातरमब्रवीत्।

अतिक्रान्तसुखाः कालाः पर्य्युपस्थितदारुणाः। श्वः श्वः पापिष्ठदिवसाः पृथिवी गतयौवना।

बहुमायासमाकीर्णो नानादोषसमाकुलः। लुप्तधर्म्मक्रियाचारो घोरः कालो भविष्यति। ४९७०

कुरूणामनयाच्चापि पृथिवी न भविष्यति। गच्छ त्वं योगमास्थाय युक्ता वस तपोवने।

माद्राक्षीस्त्वं कुलस्यास्य घोरं सङ्क्षयमात्मनः। तथेति समनुज्ञाय सा प्रविश्याब्रवीत् स्नुषां।

अम्बिके तव पौत्रस्य दुर्न्नयात् किल भारताः। सानुबन्धा विनङ्क्ष्यन्ति पौराश्चैवेति नः श्रुतं।

तत्कौशल्यामिमामार्त्तां पुत्रशोकाभिपीडितां। वनमादाय भद्रं ते गच्छामि यदि मन्यसे।

तथेत्युक्ता त्वम्बिकया भीष्ममामन्त्र्य सुव्रता। वनं ययौ सत्यवती स्नुषाभ्यां सह भारत। ४९७५

ताः सुघोरं तपस्तप्त्वा देव्यो भरतसत्तम। देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा।

वैशम्पायन उवाच। अथाप्तवन्तो वेदोक्तान् संस्कारान् पाण्डवास्तदा। संव्यवर्द्धन्त भोगांस्ते भुञ्जानाः पितृवेश्मनि।

धार्त्तराष्ट्रैश्च सहिताः क्रीडन्तो मुदिताः सुखं। बालक्रीडासु सर्व्वासु विशिष्टास्तेजसा ऽभवन्।

जवे लक्ष्याभिहरणे भोज्ये पांशुविकर्षणे। धार्त्तराष्ट्रान् भीमसेनः सर्व्वान् स परिमर्द्दति।

हर्षात् प्रक्रीडमानांस्तान् गृह्य राजन्निलीयते। शिरःसु विनिगृह्यैतान् योधयामास पाण्डवः। ४९८०

शतमेकोत्तरं तेषां कुमाराणां महौजसां। एक एव निगृह्णाति नातिकृच्छ्राद्वृकोदरः।

कचेषु च निगृह्यैनान् विनिहत्य बलाद्बली। चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोंऽसकान्।

दशबालान् जले क्रीडन् भुजाभ्यां परिगृह्य सः। आस्ते स्म सलिले मग्नो मृतकल्पान् विमुञ्चति।

फलानि वृक्षमारुह्य विचिन्वन्ति च ते यदा। तदा पादप्रहारेण भीमः कम्पयते द्रुमान्।

प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः। सफलाः प्रपतन्ति स्म द्रुतं त्रस्ताः कुमारकाः। ४९८५

न ते नियुद्धे न जवे न योग्यासु कदाचन। कुमारा उत्तरं चक्रुः स्पर्द्धमाना वृकोदरं।

एवं स धार्त्तराष्ट्रांश्च स्पर्द्धमानो वृकोदरः। अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा।

ततो बलमतिख्यातं धार्त्तराष्ट्रः प्रतापवान्। भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत्।

तस्य धर्म्मादपेतस्य पापानि परिपश्यतः। मोहादैश्वर्य्यलोभाच्च पापा मतिरजायत।

अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः। मध्यमः पाण्डुपुत्राणां निकृत्या सं निगृह्यतां। ४९९०

प्राणवान् विक्रमी चैव शौर्य्येण महताऽन्वितः। स्पर्द्धते चापि सहितानस्मानेको वृकोदरः।

तन्तु सुप्तं पुरोद्याने गङ्गायां प्रक्षिपामहे। अथ तस्मादवरजं श्रेष्ठं चैव युधिष्ठिरं।
प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धरां। एवं स निश्चयं पापः कृत्वा दुर्य्योधनस्तदा। नित्यमेवान्तरप्रेक्षी भीमस्यासीन्महात्मनः।
ततो जलविहारार्थं कारयामास भारत। चैलकम्बलवेश्मानि विचित्राणि महान्ति च।
सर्व्वकामैः सुपूर्णानि पताकोच्छ्रायवन्ति च। तत्र सञ्जनयामास नानागाराण्यनेकशः। ४९९५
उदकक्रीडनं नाम कारयामास भारत। प्रमाणकोट्यां तं देशं स्थलं किञ्चिदुपेत्य ह।
भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यमथापि च। उपपादितं नरैस्तत्र कुशलैः सूदकर्म्मणि।
न्यवेदयंस्तत्पुरुषा धार्त्तराष्ट्राय वै तदा। ततो दुर्य्योधनस्तत्र पाण्डवानाह दुर्म्मतिः।
गङ्गां चैवानुयास्याम उद्यानवनशोभितां। सहिता भ्रातरः सर्व्वे जलक्रीडामवाप्नुमः।
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः। ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः। ५०००
निर्ययुर्नगराच्छूराः कौरवाः पाण्डवैः सह। उद्यानवनमासाद्य विसृज्य च महाजनं।
विशन्ति स्म तदा वीराः सिंहा इव गिरेर्गुहां। उद्यानमभिपश्यन्तो भ्रातरः सर्व्व एव ते।
उपस्थानगृहैः शुभ्रैर्व्वलभीभिश्च शोभितं। गवाक्षकैस्तथा जालैर्यन्त्रैः साञ्चारिकैरपि।
सम्मार्जितं सौधकारैश्चित्रकारैश्च चित्रितं। दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीभिश्च।
जलं तच्छुशुभे छन्नं फुल्लैर्जलरुहैस्तथा। उपच्छन्ना वसुमती तथा पुष्पैर्यथर्त्तुकैः। ५००५
तत्रोपविष्टास्ते सर्व्वे पाण्डवाः कौरवाश्च ह। उपच्छन्नान्बहून् कामांस्ते भुञ्जन्ति ततस्ततः।
अथोद्यानवरे तस्मिंस्तथा क्रीडागताश्च ते। परस्परस्य वक्त्रेभ्यो ददुर्भक्ष्यांस्ततस्ततः।
ततो दुर्य्योधनः पापस्तद्भक्ष्ये कालकूटकं। विषं प्रक्षेपयामास भीमसेनजिघांसया।
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः। स वाचाऽमृतकल्पश्च भ्रातृवच्च सुहृद्यथा।
स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पापकृत्। प्रतीच्छितं स्म भीमेन तं वै दोषमजानता। ५०१०
ततो दुर्य्योधनस्तत्र हृदयेन हसन्निव। कृतकृत्यमिवात्मानं मन्यते पुरुषाधमः।
ततस्ते सहिताः सर्व्वे जलक्रीडामकुर्व्वत। पाण्डवा धार्त्तराष्ट्राश्च तदा मुदितमानसाः।
क्रीडावसाने ते सर्व्वे शुचिवस्त्राः स्वलङ्कृताः। दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः।
विहारावसथेष्वेव वीरा वासमरोचयन्। खिन्नस्तु बलवान्भीमो व्यायामाभ्यधिकं तदा।
वाहयित्वा कुमारांस्तान्जलक्रीडागतांस्तदा। प्रमाणकोट्यां वासार्थी सुष्वापावाप्य तत् स्थलं। ५०१५
शीतं वातं समासाद्य श्रान्तो मदविमोहितः। विषेण च परीताङ्गो निश्चेष्टः पाण्डुनन्दनः।
ततो बद्ध्वा लतापाशैर्भीमं दुर्य्योधनः स्वयं। मृतकल्पं तदा वीरं स्थलाज्जलमपातयत्।
स निःसंज्ञो जलस्यान्तमथ वै पाण्डवोऽविशत्। आक्रामन्नागभवने तदा नागकुमारकान्। ततः समेत्य बहुभिस्तदा नागैर्महाविषैः। अदश्यत भृशं भीमो महादंष्ट्रैर्विषोल्वणैः।
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकं। हतं सर्पविषेणैव स्थावरं जङ्गमेन तु।

दंष्ट्राश्च दंष्ट्रिणां तेषां मर्म्मस्वपि निपातिताः । त्वचं नैवास्य बिभिदुः सारत्वात् पृथुवक्षसः । ५०२०

ततः प्रबुद्धः कौन्तेयः सर्व्वं संछिद्य बन्धनं । पोथयामास तान् सर्व्वान् केचिद्भीताः प्रदुद्रुवुः ।

हतावशेषा भीमेन सर्व्वे वासुकिमभ्ययुः । ऊचुश्च सर्प्पराजानं वासुकिं वासवोपमं ।

अयं नरो वै नागेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः । यथा च नो मतिर्व्वीर विषपीतो भविष्यति ।

निश्चेष्टोऽस्माननुप्राप्तः स च दष्टोऽन्वबुध्यत । ससंज्ञश्चापि संवृत्तश्छित्वा बन्धनमाशु नः ।

पोथयन्तं महाबाहुं त्वं चैनं ज्ञातुमर्हसि । ततो वासुकिरभ्येत्य नागैरनुगतस्तदा । पश्यति स्म महाबाहुं भीमं भीमपराक्रमं । ५०२५

आर्य्यकेण च दृष्टः स पृथाया आर्य्यकेण च । तदा दौहित्रदौहित्रः परिष्वक्तः सुपीडितं ।

सुप्रीतश्चाभवत्तस्य वासुकिः सुमहायशाः । अब्रवीत्तञ्च नागेन्द्रः किमस्य क्रियतां प्रियं ।

धनौघो रत्ननिचयो वसु चास्य प्रदीयतां । एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।

यदि नागेन्द्र तुष्टोऽसि किमस्य धनसञ्चयैः । रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबलः ।

बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितं । यावत्पिबति बालोऽयं तावदस्मै प्रदीयतां । ५०३०

एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत । ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।

प्राङ्मुखश्चोपविष्टः स रसं पिबति पाण्डवः । एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः ।

एवमष्टौ स कुण्डानि ह्यपिबत्पाण्डुनन्दनः । ततस्तु शयने दिव्ये नागदत्ते महाभुजः । अशेत भीमसेनस्तु यथासुखमरिन्दमः ।

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीमसेनरसपाने अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

॥ वैशम्पायन उवाच । ततस्ते कौरवाः सर्व्वे विना भीमञ्च पाण्डवाः । वृत्तक्रीडाविहारास्तु प्रतस्थुर्गजसाह्वयं ।

रथैर्गजैस्तथा चाश्वैर्यानैश्चान्यैरनेकशः । ब्रुवन्तो भीमसेनस्तु यातो ह्यग्रत एव नः । ५०३५

ततो दुर्य्योधनः पापस्तत्रापश्यन् वृकोदरं । भ्रातृभिः सहितो हृष्टो नगरं प्रविवेश ह ।

युधिष्ठिरस्तु धर्म्मात्मा ह्यविदन् पापमात्मनि । स्वेनानुमानेन परं साधुं समनुपश्यति ।

सोऽभ्युपेत्य तदा पार्थो मातरं भ्रातृवत्सलः । अभिवाद्याब्रवीत्कुन्तीमम्ब भीम इहागतः ।

क्व गतो भविता मातर्नेह पश्यामि तं शुभे । उद्यानानि वनञ्चैव विचितानि समन्ततः ।

तदर्थं न च तं वीरं दृष्टवन्तो वृकोदरं । मन्यमानास्ततः सर्व्वे यातो नः पूर्व्वमेव सः । ५०४०

आगताः स्म महाभागे व्याकुलेनान्तरात्मना । इहागम्य क्व नु गतस्त्वया वा प्रेषितः क्व नु ।

कथयस्व महाबाहुं भीमसेनं यशस्विनि । नहि मे शुध्यते भावस्तं वीरं प्रति शोभने ।

यतः प्रसुप्तं मन्येऽहं भीमं नेति हतस्तु सः । इत्युक्ता च ततः कुन्ती धर्म्मराजेन धीमता । हाहेति कृत्वा संभ्रान्ता प्रत्युवाच युधिष्ठिरं ।

न पुत्र भीमं पश्यामि न मामभ्येत्यसाविति । शीघ्रमन्वेषणे यत्नं कुरु तस्यानुजैः सह ।

इत्युक्त्वा तनयं ज्येष्ठं हृदयेन विदूयता । क्षत्तारमानाय्य तदा कुन्ती वचनमब्रवीत् । ५०४५

क्व गतो भगवन् क्षत्तर्भीमसेनो न दृश्यते । उद्यानान्निर्गताः सर्व्वे भ्रातरो भ्रातृभिः सह ।

तत्रैकस्तु महाबाहुर्भीमो नाभ्येति मामिह । न च प्रीणयते चक्षुः सदा दुर्य्योधनस्य सः ।

क्रूरोऽसौ दुर्मतिः क्षुद्रो राज्यलुब्धोऽनपत्रपः। निहन्यादपि तं वीरं जातमन्युः सुयोधनः। तेन मे व्याकुलं चित्तं हृदयं दह्यतीव च।

॥ विदुर उवाच ॥ मैवं वदस्व कल्याणि शेषसंरक्षणं कुरु। प्रत्यादिष्टो हि दुष्टात्मा शेषेऽपि प्रहरेत्तव।

दीर्घायुषस्तव सुता यथोवाच महामुनिः। आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति। ५०५०

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ययौ विद्वान्विदुरः स्वं निवेशनं। कुन्ती चिन्तापरा भूत्वा सहासीना सुतैर्गृहे।

ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः। तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली।

तं दृष्ट्वा प्रतिबुध्यन्तं पाण्डवं ते भुजङ्गमाः। सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन्।

यत्ते पीतो महाबाहो रसोऽयं वीर्य्यसम्भृतः। तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि।

गच्छाद्य त्वञ्च स्वगृहं स्नातो दिव्यैरिमैर्जलैः। भ्रातरस्तेऽनुतप्यन्ति त्वां विना कुरुपुङ्गव। ५०५५

ततः स्नातो महाबाहुः शुचिः शुक्लाम्बरस्रजः। ततो नागस्य भवने कृतकौतुकमङ्गलः।

ओषधीभिर्विषघ्नीभिः सुरभीभिर्विशेषतः। भुक्तवान्परमान्नञ्च नागैर्दत्तं महाबलैः।

पूजितो भुजगैर्वीर आशीर्भिश्चाभिनन्दितः। दिव्याभरणसञ्छन्नो नागानामन्त्र्य पाण्डवः।

उदतिष्ठत्प्रहृष्टात्मा नागलोकादरिन्दमः। उत्क्षिप्तः स तु नागेन जलात् जलरुहेक्षणः।

तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः। ते चान्तर्दधिरे नागाः पाण्डवस्यैव पश्यतः। ५०६०

तत उत्थाय कौन्तेयो भीमसेनो महाबलः। आजगाम महाबाहुर्मातुरन्तिकमञ्जसा।

ततोऽभिवाद्य जननीं ज्येष्ठं भ्रातरमेव च। कनीयसः समाघ्राय शिरःस्वरिविमर्दनः।

तैश्चापि सम्परिष्वक्तः सह मात्रा नरर्षभैः। अन्योन्यगतसौहार्द्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन्।

ततस्तत्सर्व्वमाचष्ट दुर्य्योधनविचेष्टितं। भ्रातृभ्यो भीमसेनश्च महाबलपराक्रमः।

नागलोके च यद्वृत्तं गुणदोषमशेषतः। तच्च सर्व्वमशेषेण कथयामास पाण्डवः। ५०६५

ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत्। तूष्णीं भव न ते जल्प्यमिदं कार्य्यं कथञ्चन। इतःप्रभृति कौन्तेया रक्षतान्योन्यमादृताः।

एवमुक्त्वा महाबाहुर्धर्म्मराजो युधिष्ठिरः। भ्रातृभिः सहितः सर्व्वैरप्रमत्तोऽभवत्तदा।

कुमारान् क्रीडमानांस्तान्दृष्ट्वा राजा च दुर्म्मदान्। एवं दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः।

अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान्। पाण्डवा अपि तत्सर्व्वं प्रत्यजानन्नमर्षिताः।

उद्भावनमकुर्व्वन्तो विदुरस्य मते स्थिताः। गुरुं शिक्षार्थमन्विष्य गौतमं तान् न्यवेदयत्। शरस्तम्बे समुद्भूतं वेदशास्त्रार्थपारगं। ५०७०

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीमप्रत्यागमने ऊनत्रिंशदधिकशततमोऽध्यायः॥ १२९॥

॥ जनमेजय उवाच ॥ कृपस्यापि मम ब्रह्मन्सम्भवं वक्तुमर्हसि। शरस्तम्बात्कथं जज्ञे कथं वाऽस्त्राण्यवाप्तवान्।

॥ वैशम्पायन उवाच ॥ महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः। पुत्रः किल महाराज जातः सह शरैर्विभो।

न तस्य वेदाध्ययने तथा बुद्धिरजायत। यथाऽस्य बुद्धिरभवद्धनुर्व्वेदे परन्तप।

अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मचारिणः। तथा स तपसोपेतः सर्व्वाण्यस्त्राण्यवाप ह।

धनुर्व्वेदपरत्वाच्च तपसा विपुलेन च। भृशं सन्तापयामास देवराजं स गौतमः। ५०७५
ततो जानपदीं नाम देवकन्यां सुरेश्वरः। प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव।
सा हि गत्वाश्रमं तस्य रमणीयं शरद्वतः। धनुर्व्वाणधरं बाला लोभयामास गौतमं।
तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने। लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत्।
धनुश्च हि शरास्तस्य कराभ्यामपतन्भुवि। वेपथुश्चापि तां दृष्ट्वा शरीरे समजायत।
स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात्। अवतस्थे महाप्राज्ञो धैर्य्येण परमेण ह। ५०८०
यस्तस्य सहसा राजन्विकारः समदृश्यत। तेन सुस्राव रेतोऽस्य स च तं नावबुध्यत।
स विहायाश्रमं तञ्च ताञ्चैवाप्सरसं मुनिः। जगाम रेतस्तत्तस्य शरस्तम्बे पपात च।
शरस्तम्बे च पतितं द्विधा तदभवन्नृप। तस्माच्च मिथुनं जज्ञे गौतमस्य शरद्वतः।
मृगयां चरतो राज्ञः शान्तनोस्तु यदृच्छया। कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत।
धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च। ज्ञात्वा द्विजस्य चापत्ये धनुर्व्वेदान्तगस्य ह। ५०८५
स राज्ञे दर्शयामास मिथुनं सशरं धनुः। स तदादाय मिथुनं राजा च कृपयाऽन्वितः।
आजगाम गृहानेव मम पुत्त्राविति ब्रुवन्। ततः संवर्द्धयामास संस्कारैश्चाप्ययोजयत्।
प्रातिपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत्। गौतमोऽपि ततोऽभ्येत्य धनुर्व्वेदपरोऽभवत्।
कृपया यन्मया बालाविमौ संवर्द्धिताविति। तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः।
गोपितौ गौतमस्तत्र तपसा समविन्दत। आगत्य तस्मै गोत्रादि सर्व्वमाख्यातवांस्तदा। ५०९०
चतुर्विधं धनुर्व्वेदं शास्त्राणि विविधानि च। निखिलेनास्य तत्सर्व्वं गुह्यमाख्यातवांस्तदा।
सोऽचिरेणैव कालेन परमाचार्य्यतां गतः। ततोऽधिजग्मुः सर्व्वे ते धनुर्व्वेदं महारथाः।
धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः। वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः।
॥ वैशम्पायन उवाच ॥ विशेषार्थी ततो भीष्मः पौत्त्राणां विनयेप्सया। इष्वस्त्रज्ञान् पर्य्यपृच्छदाचार्य्यान्वीर्य्यसंमतान्।
नाल्पधीर्नामहाभागस्तथा नानास्त्रकोविदः। नादेवसत्त्वो विनयेत् कुरूनस्त्रे महाबलान्। ५०९५
इति सञ्चिन्त्य गाङ्गेयस्तदा भरतसत्तमः। द्रोणाय वेदविदुषे भारद्वाजाय धीमते।
पाण्डवान्कौरवांश्चैव ददौ शिष्यान्नरर्षभ। शास्त्रतः पूजितश्चैव सम्यक्तेन महात्मना।
स भीष्मेण महाभागस्तुष्टोऽस्त्रविदुषां वरः। प्रतिजग्राह तान्सर्व्वान्शिष्यत्वेन महायशाः।
शिक्षयामास च द्रोणो धनुर्वेदमशेषतः। तेऽचिरेणैव कालेन सर्व्वशस्त्रविशारदाः। बभूवुः कौरवा राजन्पाण्डवाश्चामितौजसः।
जनमेजय उवाच। कथं समभवद्द्रोणः कथं चास्त्राण्यवाप्तवान्। कथञ्चागात्कुरून्ब्रह्मन्कस्य पुत्त्रः स वीर्य्यवान्। ५१००
कथं चास्य सुतो जातः सोऽश्वत्थामाऽस्त्रवित्तमः। एतदिच्छाम्यहं श्रोतुं विस्तरेण प्रकीर्त्तय।
वैशम्पायन उवाच। गङ्गाद्वारं प्रति महान् बभूव भगवानृषिः। भरद्वाज इति ख्यातः सततं संशितव्रतः।
सोऽभिषेक्तुं ततो गङ्गां पूर्व्वमेवागमन्नदीं। महर्षिभिर्भरद्वाजो हविर्द्धाने चरन्पुरा। ददर्शाप्सरसं साक्षाद्घृताचीमाप्लुतामृषिः।
रूपयौवनसम्पन्नां मदृप्तां मदालसां। तस्याः पुनर्नदीतीरे वसनं पर्य्यवर्त्तत। व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः।

तत्र संसक्तमनसो भरद्वाजस्य धीमतः। ततोऽस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे। ५१०५

ततः समभवद्द्रोणः कलशे तस्य धीमतः। अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्व्वशः।

अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान्। प्रत्यपादयदाग्नेयमस्त्रमस्त्रविदां वरः।

अग्नेस्तु जातः स मुनिस्ततो भरतसत्तम। भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत्।

भरद्वाजसखा चासीत्पृषतो नाम पार्थिवः। तस्यापि द्रुपदो नाम तदा समभवत्सुतः।

स नित्यमाश्रमं गत्वा द्रोणेन सह पार्थिव। चिक्रीडाध्ययनञ्चैव चकार क्षत्रियर्षभः। ५११०

ततो व्यतीते पृषते स राजा द्रुपदोऽभवत्। पाञ्चालेषु महाबाहुरुत्तरेषु नरेश्वर।

भरद्वाजोऽपि भगवानारुरोह दिवं तदा। तत्रैव च वसन् द्रोणस्तपस्तेपे महातपाः।

वेदवेदाङ्गविद्वान्स तपसा दग्धकिल्बिषः। ततः पितृनियुक्तात्मा पुत्रलोभान्महायशाः।

शारद्वतीं ततो भार्य्यां कृपीं द्रोणोऽन्वविन्दत। अग्निहोत्रे च धर्म्मे च दमे च सततं रतां।

अलभद्गौतमी पुत्रमश्वत्थामानमेव च। स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः। ५११५

तच्छ्रुत्वान्तर्हितं भूतमन्तरीक्षस्थमब्रवीत्। अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतं। अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति।

सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत्। तत्रैव च वसन् धीमान्धनुर्व्वेदपरोऽभवत्।

स शुश्राव महात्मानं जामदग्न्यं परन्तपं। सर्व्वज्ञानविदं विप्रं सर्व्वशस्त्रभृतां वरं।

ब्राह्मणेभ्यस्तदा राजन्दित्सन्तं वसु सर्व्वशः। स रामस्य धनुर्व्वेदं दिव्यान्यस्त्राणि चैव ह। श्रुत्वा तेषु मनश्चक्रे नीतिशास्त्रे तथैव च।

ततः स व्रतिभिः शिष्यैस्तपोयुक्तैर्महातपाः। वृतः प्रायान्महाबाहुर्म्महेन्द्रं पर्व्वतोत्तमं। ५१२०

ततो महेन्द्रमासाद्य भारद्वाजो महातपाः। क्षान्तं दान्तममित्रघ्नमपश्यद्भृगुनन्दनं।

ततो द्रोणो वृतः शिष्यैरुपगम्य भृगूद्वहं। आचख्यावात्मनो नाम जन्म चाङ्गिरसः कुले।

निवेद्य शिरसा भूमौ पादौ चैवाभ्यवादयत्। ततस्तं सर्व्वमुत्सृज्य वनं जिगमिषुं तदा। जामदग्न्यं महात्मानं भारद्वाजो ऽब्रवीदिदं।

भरद्वाजात्समुत्पन्नं तथा त्वं मामयोनिजं। आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तमं।

तमब्रवीन्महात्मा स सर्व्वक्षत्रियमर्द्दनः। स्वागतं ते द्विजश्रेष्ठ यदीच्छसि वदस्व मे। ५१२५

एवमुक्तस्तु रामेण भारद्वाजोऽब्रवीद्वचः। रामं प्रहरतां श्रेष्ठं दित्सन्तं विविधं वसु। अहं धनमनन्तं हि प्रार्थये विपुलव्रत।

॥ रामउवाच ॥ हिरण्यं मम यच्चान्यद्वसु किञ्चिदिह स्थितं। ब्राह्मणेभ्यो मया दत्तं सर्व्वमेतत्तपोधन।

तथैवेयं धरा देवी सागरान्ता सपत्तना। कश्यपाय मया दत्ता कृत्स्ना नगरमालिनी।

शरीरमात्रमेवाद्य ममेदमवशेषितं। अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च।

अस्त्राणि वा शरीरं वा वरयैतन्मयोद्यतं। वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाशु तत्। ५१३०

॥ द्रोणउवाच ॥ अस्त्राणि मे समग्राणि ससंहाराणि भार्गव। सप्रयोगरहस्यानि दातुमर्हस्यशेषतः।

तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः। सरहस्यव्रतञ्चैव धनुर्व्वेदमशेषतः।

प्रतिश्रुत्य तु तत्सर्व्वं कृतास्त्रो द्विजसत्तमः। प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति।

इत्यादि पर्व्वणि सम्भवपर्व्वणि द्रोणभार्गवसंवादे त्रिंशदधिकशततमोऽध्यायः॥ १३० ॥

॥ वैशम्पायन उवाच ॥ ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान्। अब्रवीत्पार्थिवं राजन् सखायं विद्धि मामिह।

इत्येवमुक्तः सख्या स प्रीतिपूर्व्वं जनेश्वरः। भारद्वाजेन पाञ्चालो नामृष्यत वचोऽस्य तत्। ५१३५

स क्रोधामर्षजिह्मभ्रूः कषायीकृतलोचनः। ऐश्वर्य्यमदसम्पन्नो द्रोणं राजाऽब्रवीदिदं।

॥ द्रुपद उवाच ॥ अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी। यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज।

न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित्। सख्यं भवति मन्दात्मन्श्रिया हीनैर्धनच्युतैः।

सौहृदान्यपि जीर्य्यन्ते कालेन परिजीर्य्यतः। सौहृदं मे त्वया ह्यासीत्पूर्व्वं सामर्थ्यबन्धनं।

न सख्यमजरं लोके हृदि तिष्ठति कस्यचित्। कालो ह्येनं विहरति क्रोधो वैनं हरत्युत। ५१४०

मैवं जीर्णमुपास्स्व त्वं सख्यं भवत्त्वपाकृधि। आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनं।

न दरिद्रो वसुमतो नाविद्वान्विदुषः सखा। न शूरस्य सखा क्लीवः सखिपूर्व्वं किमिष्यते।

ययोरेव समं वित्तं ययोरेव समं श्रुतं। तयोर्विवाहः सख्यञ्च नतु पुष्टविपुष्टयोः।

नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा। नाराजा पार्थिवस्यापि सखिपूर्व्वं किमिष्यते।

॥ वैशम्पायन उवाच ॥ द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान्। मुहूर्त्तं चिन्तयित्वा तु मन्युनाऽभिपरिप्लुतः। ५१४५

स विनिश्चित्य मनसा पाञ्चालं प्रति बुद्धिमान्। जगाम कुरुमुख्यानां नगरं नागसाह्वयं।

स नागपुरमागम्य गौतमस्य निवेशने। भारद्वाजोऽवसत्तत्र प्रच्छन्नं द्विजसत्तमः।

ततोऽस्य तनुजः पार्थान् कृपस्यानन्तरं प्रभुः। अस्त्राणि शिक्षयामास नाबुध्यन्त च तं जनाः।

एवं स तत्र गूढात्मा कञ्चित्कालमुवास ह। कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात्।

क्रीडन्तो वीटया तत्र वीराः पर्य्यचरन्मुदा। पपात कूपे सा वीटा तेषां वै क्रीडतां तदा। ५१५०

ततस्ते यत्नमातिष्ठन्वीटामुद्धर्त्तुमादृताः। नच ते प्रत्यपद्यन्त कर्म्म वीटोपलब्धये।

ततोऽन्योन्यमवैक्षन्त व्रीडयाऽवनताननाः। तस्या योगमविन्दन्तो भृशं चोत्कण्ठिताभवन्।

तेऽपश्यन्ब्राह्मणं श्याममापन्नं पलितं कृशं। कृत्यवन्तमदूरस्थमग्निहोत्रपुरस्कृतं।

ते तं दृष्ट्वा महात्मानमुपगम्य कुमारकाः। भग्नोत्साहक्रियात्मानो ब्राह्मणं पर्य्यवारयन्।

अथ द्रोणः कुमारांस्तान् दृष्ट्वा कृत्यवतस्तदा। प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्य्यवान्। ५१५५

अहो वो धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रतां। भरतस्यान्वये जाता ये वीटां नाधिगच्छत।

वीटाञ्च मुद्रिकाञ्चैव ह्यहमेतदपि द्वयं। उद्धरेयमिषीकाभिर्भोजनं मे प्रदीयतां।

एवमुक्त्वा कुमारांस्तान्द्रोणः स्वाङ्गुलिवेष्टनं। कूपे निरुदके तस्मिन्नपातयदरिन्दमः। ततोऽब्रवीत्तदा द्रोणं कुन्तीपुत्त्रो युधिष्ठिरः।

॥ युधिष्ठिर उवाच। कृपस्यानुमते ब्रह्मन्भिक्षामाप्नुहि शाश्वतीं। एवमुक्तः प्रत्युवाच प्रहस्य भरतानिदं।

॥ द्रोण उवाच। एषा मुष्टिरिषीकाणां मयास्त्रेणाभिमन्त्रिता। अस्या वीर्य्यं निरीक्षध्वं यदन्यस्य न विद्यते। ५१६०

भेत्स्यामीषीकया वीटां तामिषीकां तथाऽन्यया। तामन्यया समायोगे वीटाया ग्रहणं मम।

वैशम्पायन उवाच। ततो यथोक्तं द्रोणेन तत्सर्व्वं कृतमञ्जसा। तदवेक्ष्य कुमारास्ते विस्मयोत्फुल्ललोचनाः।

आश्चर्य्यमिदमत्यन्तमिति मत्वा वचोऽब्रुवन्॥ कुमारा ऊचुः॥ मुद्रिकामपि विप्रर्षे शीघ्रमेतां समुद्धर।

वैशम्पायन उवाच। ततः शरं समादाय धनुर्द्रोणो महायशाः। शरेण विद्ध्वा मुद्रां तामूर्द्ध्वमावाहयत्प्रभुः।

सशरं समुपादाय कूपादङ्गुलिवेष्टनं। ददौ ततः कुमाराणां विस्मितानामविस्मितः। ५१९५

मुद्रिकामुद्धृतां दृष्ट्वा तमाहुस्ते कुमारकाः। कुमारा ऊचुः। अभिवादयामहे ब्रह्मन्नैतदन्येषु विद्यते। कोऽसि कस्यासि जानीमो
वयं किं करवामहे।

वैशम्पायन उवाच। एवमुक्तस्ततो द्रोणः प्रत्युवाच कुमारकान्।

द्रोण उवाच। आचक्षध्वञ्च भीष्माय रूपेण च गुणैश्च मां। स एव सुमहातेजाः साम्प्रतं प्रतिपत्स्यते।

वैशम्पायन उवाच। तथेत्युक्त्वा च गत्वा च भीष्ममूचुः कुमारकाः। ब्राह्मणस्य वचस्तथ्यं तच्च कर्म्म तथाविधं।

भीष्मः श्रुत्वा कुमाराणां द्रोणस्य प्रत्यजानत। युक्तरूपः स हि गुरुरित्येवमनुचिन्त्य च। ५२००

अथैनमानीय तदा स्वयमेव सुसत्कृतं। परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः। हेतुमागमने तच्च द्रोणः सर्व्वं न्यवेदयत्।

॥ द्रोण उवाच॥ महर्षेरग्निवेशस्य सकाशमहमच्युत। अस्त्रार्थमगमं पूर्व्वं धनुर्व्वेदचिकीर्षया।

ब्रह्मचारी विनीतात्मा जटिलो बहुलाः समाः। अवसं सुचिरं तत्र गुरुशुश्रूषणे रतः।

पाञ्चाल्यो राजपुत्त्रश्च यज्ञसेनो महाबलः। इष्वस्त्रहेतोर्न्यवसत्तस्मिन्नेव गुरौ प्रभुः।

स मे तत्र सखा चासीदुपकारी प्रियश्च मे। तेनाहं सह सङ्गम्य वर्त्तयन् सुचिरं प्रभो। ५२०५

बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च। स मे सखा सदा तत्र प्रियवादी प्रियङ्करः।

अब्रवीदिति मां भीष्म वचनं प्रीतिवर्द्धनं। अहं प्रियतमः पुत्त्रः पितुर्द्रोण महात्मनः।

अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा। तद्भोग्यं भविता तात सखे सत्येन ते शपे।

मम भोगाश्च वित्तञ्च त्वदधीनं सुखानि च। एवमुक्तोऽथ वव्राज कृतास्त्रः पूजितो मया।

तच्च वाक्यमहं नित्यं मनसा धारयंस्तदा। सोऽहं पितृनियोगेन पुत्त्रलोभाद्यशस्विनीं। ५२१०

नातिकेशीं महाप्रज्ञामुपयेमे महाव्रतां। अग्निहोत्रे च सत्रे च दमे च सततं रतां।

अलभद्गौतमी पुत्त्रमश्वत्थामानमौरसं। भीमं विक्रमकर्म्माणमादित्यसमतेजसं।

पुत्त्रेण तेन प्रीतोऽहं भरद्वाजो मया यथा। गोक्षीरं पिबतो दृष्ट्वा धनिनस्तत्र पुत्त्रकान्। अश्वत्थामाऽरुदद्बालस्तन्मे सन्देह
यद्दिशः।

न स्नातकोऽवसीदेत वर्त्तमानः स्वकर्म्मसु। इति सञ्चिन्त्य मनसा तं देशं बहुशो भ्रमन्।

विशुद्धमिच्छन् गाङ्गेय धर्म्मोपेतं प्रतिग्रहं। अन्तादन्तं परिक्रम्य नाध्यगच्छं पयस्विनीं। ५२१५

अथ पिष्टोदकेनैनं लोभयन्ति कुमारकाः। पीत्वा पिष्टरसं बालः क्षीरं पीतं मयाऽपि च।

ननर्त्तोत्थाय कौरव्य हृष्टो बाल्यादिमोहितः। तं दृष्ट्वा नृत्यमानन्तु बालैः परिवृतं सुतं।

हास्यतामुपसम्प्राप्तं कश्मलं तत्र मेऽभवत्। द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति।

पिष्टोदकं सुतो यस्य पीत्वा क्षीरस्य तृष्णया। नृत्यति स्म मुदाविष्टः क्षीरं पीतं मयाऽप्युत।

इति तथोक्तां वाचं श्रुत्वा मे बुद्धिरच्यवत् । आत्मानं चात्मना गर्हन्मनसेदं व्यचिन्तयं । ५१९०

अपिचाहं पुरा विप्रैर्वर्ज्जितो गर्हितो वसे । परोपसेवां पापिष्ठां न च कुर्य्यां धनेप्सया ।

इति मत्वा प्रियं पुत्रं भीष्मादाय ततो ह्यहं । पूर्व्वस्नेहानुरागित्वात्सदार: सौमकिं गत: ।

अभिषिक्तन्तु श्रुत्वैव कृतार्थोऽस्मीति चिन्तयन् । प्रियं सखायं सुप्रीतो राज्यस्थं समुपागमं । संस्मरन्सङ्गमं चैव वचनं चैव तस्य तत् ।

ततो द्रुपदमागम्य सखिपूर्व्वमहं प्रभो । अब्रुवं पुरुषव्याघ्र सखाऽयं विद्धि मामिति ।

उपस्थितस्तु द्रुपदं सखिवच्चास्मि सङ्गत: । स मां निराकारमिव प्रहसन्निदमब्रवीत् । ५१९५

अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसी । यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज ।

सङ्गतानीह जीर्य्यन्ति कालेन परिजीर्य्यत: । सौहृदं मे त्वया ह्यासीत्पूर्व्वं सामर्थ्यबन्धनं ।

नाश्रोत्रिय: श्रोत्रियस्य नारथी रथिन: सखा । साम्याद्धि सख्यं भवति वैषम्यान्नोपपद्यते ।

न सख्यमजरं लोके विद्यते जातु कस्यचित् । कामो वैनं विहरति क्रोधो वैनं हरत्युत ।

मैवं जीर्णमुपास्स्व त्वं सख्यं भवत्वपाकृधि । आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनं । ५२००

न ह्यनाढ्य: सखाढ्यस्य नाविद्वान्विदुष: सखा । न शूरस्य सखा क्लीब: सखिपूर्व्वं किमिष्यते ।

नहि राज्ञामुदीर्णानामेवं भूतैर्नरै: क्वचित् । सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतै: ।

नाश्रोत्रिय: श्रोत्रियस्य नारथी रथिन: सखा । नाराजा पार्थिवस्यापि सखिपूर्व्वं किमिष्यते ।

अहं त्वया न जानामि राज्यार्थे संविदं कृतां । एकरात्रन्तु ते ब्रह्मन्कामं दास्यामि भोजनं ।

एवमुक्तस्त्वहं तेन सदार: प्रस्थितस्तदा । तां प्रतिज्ञां प्रतिज्ञाय यां कर्त्ताऽस्म्यचिरादिव । ५२०५

द्रुपदेनैवमुक्तोऽहं मन्युनाऽभिसमाप्लुत: । अभ्यागच्छं कुरून्भीष्म शिष्यैरर्थी गुणान्वितै: ।

ततोऽहं भवत: कामं सम्वर्द्धयितुमागत: । इदं नागपुरं रम्यं ब्रूहि किं करवाणि ते ।

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तदा भीष्मो भारद्वाजमभाषत । भीष्म उवाच । अपज्यं क्रियतां चापं साध्वस्त्रं प्रतिपादय । भुङ्क्ष्व भोगान्भृशं प्रीत: पूज्यमान: कुरुक्षये । कुरूणामस्ति यद्वित्तं राज्यं चेदं सराष्ट्रकं । त्वमेव परमो राजा सर्व्वे च कुरवस्तव।

यच्च ते प्रार्थितं ब्रह्मन् कृतं तदिति चिन्त्यतां ।

दिष्ट्या प्राप्तोऽसि विप्रर्षे महान्मेऽनुग्रह: कृत: । ५२१०

इत्यादिपर्व्वणि सम्भवपर्व्वणि भीष्मद्रोणसंवादे एकत्रिंशदधिकशततोऽध्याय: ॥ १३१ ॥

॥ वैशम्पायन उवाच ॥ तत: सम्पूजितो द्रोणो भीष्मेण द्विपदां वर: । विशश्राम महातेजा: पूजित: कुरुवेश्मनि ।

विश्रान्तेऽथ गुरौ तस्मिन्पौत्रानादाय कौरवान् । शिष्यत्वेन ददौ भीष्मो वसूनि विविधानि च ।

गृहञ्च सुपरिच्छन्नं धनधान्यसमाकुलं । भारद्वाजाय सुप्रीत: प्रत्यपादयत प्रभु: ।

स ताञ्छिष्यान्महेष्वास: प्रतिजग्राह कौरवान् । पाण्डवान्धार्त्तराष्ट्रांश्च द्रोणो मुदितमानस: ।

प्रतिगृह्य च तान्सर्व्वान्द्रोणो वचनमब्रवीत् । रहस्येक: प्रतीतात्मा कृतोपसदनांस्तदा । ५२१५

॥ द्रोण उवाच ॥ कार्य्यं मे काङ्क्षितं किञ्चिद्धृदि सम्परिवर्त्तते । कृतास्त्रैस्तत्प्रदेयं मे तदेतद्वदतानघा: ।

अथ द्रोणाभ्यनुज्ञाताः कदाचित्कुरुपाण्डवाः। रथैर्विनिर्ययुः सर्व्वे मृगयामरिमर्द्दन।
तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया। राजन्ननुजगामैकः श्वानमादाय पाण्डवान्।
तेषां विचरतां तत्र तत्तत्कर्म्म चिकीर्षया। श्वा चरन् स वने मूढो नैषादिं प्रति जग्मिवान्।
स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरं। नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके।
तदा तस्याथ भषतः शुनः सप्त शरान्मुखे। लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा। १२५०
स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह। तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः।
लाघवं शब्दवेधित्वं दृष्ट्वा तत्परमं तदा। प्रेक्ष्य तं व्रीडिताश्चासन् प्रशशंसुश्च सर्व्वशः।
तं ततोऽन्वेषमाणास्ते वने वननिवासिनं। ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान्।
न चैनमभिजानंस्ते तदा विकृतदर्शनं। तथैनं परिपप्रच्छुः को भवान्कस्य वेत्युत।
एकलव्य उवाच। निषादाधिपतेर्वीरा हिरण्यधनुषः सुतं। द्रोणशिष्यञ्च मां वित्त धनुर्व्वेदकृतश्रमं। १२५१
वैशम्पायन उवाच। ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः। यथावृत्तं वने सर्व्वं द्रोणायाचख्युरद्भुतं।
कौन्तेयस्त्वर्ज्जुनो राजन्नेकलव्यमनुस्मरन्। रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत्।
अर्ज्जुन उवाच॥ तदाऽहं परिरभ्यैकः प्रीतिपूर्व्वमिदं वचः। भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति।
अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्य्यवान्। अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः।
वैशम्पायन उवाच। मुहूर्त्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयं। सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान्। १२६०
ददर्श मलदिग्धाङ्गं जटिलं चीरवाससं। एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान्।
एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात्। अभिगम्योपसंगृह्य जगाम शिरसा महीं।
पूजयित्वा ततो द्रोणं विधिवत्स निषादजः। निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः।
ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः। यदि शिष्योऽसि मे वीर वेतनं दीयतां मम।
एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणोऽब्रवीदिदं। एकलव्य उवाच। किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः। नहि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम। १२६५
वैशम्पायन उवाच। तमब्रवीत्त्वयाऽङ्गुष्ठो दक्षिणो दीयतामिति। एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणं।
प्रतिज्ञामात्मनो रक्षन्सत्ये च नियतः सदा। तथैव हृष्टवदनस्तथैवादीनमानसः।
छित्वा विचार्य्य तं प्रादाद्द्रोणायाङ्गुष्ठमात्मनः। ततः शरन्तु नैषादिरङ्गुलीभिर्व्यकर्षत। न तथा च स शीघ्रोऽभूद्यथा पूर्व्वं नराधिप।
ततोऽर्ज्जुनः प्रीतमना बभूव विगतज्वरः। द्रोणश्च सत्यवागासीन्नान्योऽभिभविताऽर्ज्जुनं।
द्रोणस्य तु तदा शिष्यौ गदायोग्यौ बभूवतुः। दुर्य्योधनश्च भीमश्च सदा संरब्धमानसौ। १२७०
अश्वत्थामा रहस्येषु सर्व्वेष्वभ्यधिकोऽभवत्। तथाऽति पुरुषानन्यान्त्सारुकौ यमजावुभौ।
युधिष्ठिरो रथिश्रेष्ठः सर्व्वत्र तु धनञ्जयः। प्रथितः सागरान्तायां रथयूथपयूथपः।
बुद्धियोगबलोत्साहैः सर्व्वास्त्रेषु च निष्ठितः। अस्त्रे गुर्व्वनुरागे च विशिष्टोऽभवदर्ज्जुनः।

तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्य्यवान्। एकः सर्व्वकुमाराणां बभूवातिरथोऽर्जुनः।
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयं। धार्त्तराष्ट्रा दुरात्मानो नामृष्यन्त परस्परं। ५२७५
तांस्तु सर्व्वान् समानीय सर्व्वविद्यास्त्रशिक्षितान्। द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभः।
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतं। अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत्।
॥ द्रोण उवाच ॥ शीघ्रं भवन्तः सर्व्वेऽपि धनूंष्यादाय सर्व्वशः। भासमेतं समुद्दिश्य तिष्ठध्वं सन्धितेषवः।
मद्वाक्यसमकालन्तु शिरोऽस्य विनिपात्यतां। एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः।
॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरं पूर्व्वमुवाचाङ्गिरसां वरः। सन्धत्स्व बाणं दुर्द्धर्ष मद्वाक्यान्ते विमुञ्च तं। ५२८०
ततो युधिष्ठिरः पूर्व्वं धनुर्गृह्य परन्तपः। तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः।
ततो विततधन्वानं द्रोणस्तं कुरुनन्दनं। स मुहूर्त्तादुवाचेदं वचनं भरतर्षभ।
पश्यैनन्त्वं द्रुमाग्रस्थं भासं नरवरात्मज। पश्यामीत्येवमाचार्य्यं प्रत्युवाच युधिष्ठिरः।
स मुहूर्त्तादिव पुनर्द्रोणस्तं प्रत्यभाषत ॥ द्रोण उवाच ॥ अथ वृक्षमिमं मां वा भ्रातॄन्वाऽपि प्रपश्यसि।
तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिं। भवन्तञ्च तथा भ्रातॄन् भासञ्चेति पुनः पुनः। ५२८५
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव। नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन्।
ततो दुर्य्योधनादींस्तान्धार्त्तराष्ट्रान्महायशाः। तेनैव क्रमयोगेन जिज्ञासुः पर्य्यपृच्छत।
अन्यांश्च शिष्यान् भीमादीन् राज्ञश्चैवान्यदेशजान्। तथा च सर्व्वे तत्सर्व्वं पश्याम इति कुत्सिताः।
इत्यादि पर्व्वणि सम्भवपर्व्वणि द्रोणशिष्यपरीक्षायां द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ वैशम्पायन उवाच ॥ ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत। त्वयेदानीं प्रहर्त्तव्यमेतल्लक्ष्यं विलोक्यतां।
मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः। वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्त्तकं। ५२९०
एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः। तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः।
मुहूर्त्तादिव तं द्रोणस्तथैव समभाषत। पश्यस्येनं स्थितं भासं द्रुमं मामपि वार्ज्जुन।
पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत। नतु वृक्षं भवन्तं वा पश्यामीति च भारत।
ततः प्रीतमना द्रोणो मुहूर्त्तादिव तं पुनः। प्रत्यभाषत दुर्द्धर्षः पाण्डवानां महारथं।
भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्व्वचः। शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत्। ५२९५
अर्ज्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः। मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन्।
ततस्तस्य नगस्थस्य क्षुरेण निशितेन च। शिर उत्कृत्य तरसा पातयामास पाण्डवः।
तस्मिन् कर्म्मणि संसिद्धे पर्य्यष्वजत पाण्डवं। मेने च द्रुपदं संख्ये सानुबन्धं पराजितं।
कस्यचित्त्वथ कालस्य सशिष्योऽङ्गिरसां वरः। जगाम गङ्गामभितो मज्जितुं भरतर्षभ।
अवगाढमथो द्रोणं सलिले सलिलेचरः। ग्राहो जग्राह बलवाञ्जङ्घान्ते कालचोदितः। ५३००
स समर्थोऽपि मोक्षाय शिष्यान्सर्व्वानचोदयत्। ग्राहं हत्वा मोक्षयध्वं मामिति त्वरयन्निव।
तद्वाक्यसमकालन्तु बीभत्सुर्निशितैः शरैः। अवार्य्यैः पञ्चभिर्ग्राहं मग्नमम्भस्यताडयत्।

इतरेत्वथ संमूढास्तत्र प्रपेदिरे। तन्तु दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवं।
विशिष्टं सर्व्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा। स पार्थबाणैर्बहुधा खण्डशः परिकल्पितः।
ग्राहः पञ्चत्वमापेदे जङ्घां त्यक्त्वा महात्मनः। अथाऽब्रवीन्महात्मानं भारद्वाजो महारथं। ५२०५
गृहाणेमं महाबाहो विशिष्टमतिदुर्द्धरं। अस्त्रं ब्रह्मशिरो नाम सप्रयोगनिवर्त्तनं।
न च ते मानुषेष्वेतत्प्रयोक्तव्यं कथञ्चन। जगद्विनिर्द्दहेदेतदल्पतेजसि पातितं।
असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते। तद्धारयेथाः प्रयतः शृणु चेदं वचो मम।
बाधेतामानुषः शत्रुर्यदि त्वां वीर कश्चन। तद्वधाय प्रयुञ्जीथास्तदस्त्रमिदमाहवे।
तथेति स प्रतिश्रुत्य वीभत्सुः प्रकृताञ्जलिः। जग्राह परमास्त्रं तदाह चैनं पुनर्गुरुः। ५२१०
भविता त्वत्समो नान्यः पुमाल्लोके धनुर्धरः।
इत्यादिपर्व्वणि सम्भवपर्व्वणि द्रोणग्राहमोक्षणे द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
वैशम्पायन उवाच। कृतास्त्रान्धार्त्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत। दृष्ट्वा द्रोणोऽब्रवीद्राजन् धृतराष्ट्रं जनेश्वरं।
कृपस्य सोमदत्तस्य वाह्लीकस्य च धीमतः। गाङ्गेयस्य च सान्निध्ये व्यासस्य विदुरस्य च।
राजन् संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम। ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव।
ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना। धृतराष्ट्र उवाच। भारद्वाज महत्कर्म्म कृतं ते द्विजसत्तम। ५२१५
यदाऽनुमन्यसे कालं यस्मिन्देशे यथा यथा। तथातथा विधानाय स्वयमाज्ञापयस्व मां।
स्पृहयाम्यद्य निर्व्वेदात्पुरुषाणां सचक्षुषां। अस्त्रहेतोः पराक्रान्तान्ये मे द्रक्ष्यन्ति पुत्रकान्।
क्षत्तर्यद्गुरुराचार्य्यो ब्रवीति कुरु तत्तथा। नहीदृशं प्रियं मन्ये भविता धर्म्मवत्सल।
ततो राजानमामन्त्र्य निर्गतो विदुरो बहिः। भारद्वाजो महाप्राज्ञो मापयामास मेदिनीं।
समामवृक्षां निर्गुल्मामुदक्प्रस्रवणान्वितां। तस्यां भूमौ बलिं चक्रे तिथौ नक्षत्रपूजिते। ५२२०
अवघुष्टे समाजे च तदर्थं वदतांवर। रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथा विधि।
प्रेक्षागारं सुविहितं चक्रुस्ते तस्य शिल्पिनः। राज्ञः सर्व्वायुधोपेतं स्त्रीणाञ्चैव नरर्षभ।
मञ्चांश्च कारयामासुस्तत्र जानपदा जनाः। विपुलानुच्छ्रयोपेताञ्छिविकाश्च महाधनाः।
तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा। भीष्मं प्रमुखतः कृत्वा कृपं चाचार्य्यसत्तमं।
मुक्ताजालपरिक्षिप्तं वैदूर्य्यमणिशोभितं। शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत्। ५२२५
गान्धारी च महाभागा कुन्ती च जयतांवर। स्त्रियश्च राज्ञः सर्व्वास्ताः सप्रेष्याः सपरिच्छदाः।
हर्षादारुरुहुर्मञ्चान्मेरुं देवस्त्रियो यथा। ब्राह्मणक्षत्रियाद्यञ्च चातुर्व्वर्ण्यं पुराद्द्रुतं।
दर्शनेप्सु समभ्यागात्कुमाराणां कृतास्त्रतां। क्षणेनैकस्थतां तत्र दर्शनेप्सुर्जगाम ह।
प्रवादितैश्च वादित्रैर्जनकौतूहलेन च। महार्णव इव क्षुब्धः समाजः सोऽभवत्तदा।
ततः शुक्लाम्बरधरः शुक्लयज्ञोपवीतवान्। शुक्लकेशः सितश्मश्रुः शुक्लमाल्यानुलेपनः। ५२३०
रङ्गमध्यं तदाचार्य्यः सपुत्रः प्रविवेश ह। नभो जलधरैर्हीनं साङ्गारक इवांशुमान्।

स यथासमयं चक्रे बलिं बलवतांवरः । ब्राह्मणांस्तु सुमन्त्रज्ञान् कारयामास मङ्गलं ।
सुखपुण्याहघोषस्य पुण्यस्य समनन्तरं । विविशुर्विविधं गृह्य शस्त्रोपकरणं नराः ।
ततो बद्धाङ्गुलित्राणा बद्धकक्षा महारथाः । बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः ।
अनुज्येष्ठन्तु ते तत्र युधिष्ठिरपुरोगमाः । चक्रुरस्त्रं महावीर्य्याः कुमाराः परमाद्भुतं ।　५२३५
केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे । मनुजा धृष्टमपरे वीक्षाञ्चक्रुः सुविस्मिताः ।
ते स्म लक्ष्याणि विभिदुर्बाणैर्नामाङ्कशोभितैः । विविधैर्लाघवोत्सृष्टै रुह्यन्तो वाजिभिर्द्रुतं ।
तत्कुमारबलं तत्र गृहीतशरकार्मुकं । गन्धर्व्वनगराकारं प्रेक्ष्य ते विस्मिताऽभवन् ।
सहसा चुक्रुशुश्चान्ये नराः शतसहस्रशः । विस्मयोत्फुल्लनयनाः साधुसाध्विति भारत ।
कृत्वा धनुषि ते मार्गान् रथचर्य्यासु चासकृत् । गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ।　५२४०
गृहीतखड्गचर्म्माणस्ततो भूयः प्रहारिणः । त्सरुमार्गान् यथोद्दिष्टां श्चेरुः सर्व्वासु भूमिषु ।
लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टितां । ददृशुस्तत्र सर्व्वेषां प्रयोगं खड्गचर्म्मणोः ।
अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ । अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ।
बद्धकक्षौ महाबाहू पौरुषे पर्य्यवस्थितौ । बृंहन्तौ वासिताहेतोः समदाविव कुञ्जरौ ।
तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ । चेरतुर्निर्म्मलगदौ समदाविव कुञ्जरौ ।　५२४५
विदुरो धृतराष्ट्राय गान्धार्य्याः पाण्डवारणिः । न्यवेदयेतां तत्सर्व्वं कुमाराणां विचेष्टितं ।
इत्यादिपर्व्वणि सम्भवपर्व्वण्यस्त्रदर्शने चतुर्व्विंशदधिकशतोऽध्यायः ॥ १२४ ॥

॥ वैशम्पायन उवाच ॥ कुरुराजे हि रङ्गस्थे भीमे च बलिनांवरे । पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ।
हा वीर कुरुराजेति हा भीम इति जल्पतां । पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ।
ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान् । भारद्वाजः प्रियं पुत्त्रमश्वत्थामानमब्रवीत् ।
॥ द्रोण उवाच ॥ वारयैतौ महावीर्य्यौ कृतयोग्यावुभावपि । माभूद्रङ्गप्रकोपोऽयं भीमदुर्य्योधनोद्भवः ।　५२५०
॥ वैशम्पायन उवाच ॥ ततस्तावुद्यतगदौ गुरुपुत्त्रेण वारितौ । युगान्तानिलसंक्षुब्धौ महावेलाविवार्णवौ ।
ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत् । निवार्य्य वादित्रगणं महामेघनिभस्वनं ।
यो मे पुत्त्रात्प्रियतरः सर्व्वशस्त्रविशारदः । ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ।
आचार्य्यवचनेनाथ कृतस्वस्त्ययनो युवा । बद्धगोधाङ्गुलित्राणः पूर्णतूणः सकार्मुकः ।
काञ्चनं कवचं बिभ्रत्प्रत्यदृश्यत फाल्गुनः । सार्कः सेन्द्रायुधतडित्ससन्ध्य इव तोयदः ।　५२५५
ततः सर्व्वस्य रङ्गस्य समुत्पिञ्जलकोऽभवत् । प्रावाद्यन्त च वाद्यानि सशङ्खानि समन्ततः ।
एष कुन्तीसुतः श्रीमानेष मध्यमपाण्डवः । एष पुत्त्रो महेन्द्रस्य कुरूणामेष रक्षिता ।
एषोऽस्त्रविदुषां श्रेष्ठ एष धर्म्मभृतां वरः । एष शीलवताञ्चापि शीलज्ञाननिधिः परः ।
इत्येवं तुमुला वाचः शुश्रुवुः प्रेक्षकेरिताः । कुन्त्याः प्रस्नवसंयुक्तैरस्रैः क्लिन्नमुरोऽभवत् ।
तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत् । धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः ।　५२६०

क्षत्तः क्षुब्धार्णवनिभः किमेष सुमहास्वनः । सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलं ।
॥ विदुर उवाच ॥ एष पार्थो महाराज फाल्गुनः पाण्डुनन्दनः । अवतीर्णः सकवचस्तत्रैष सुमहास्वनः ।
॥ धृतराष्ट्र उवाच ॥ धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते । पृथारणिसमुद्भूतैस्त्रिभिः पाण्डववह्निभिः ।
॥ वैशम्पायन उवाच ॥ तस्मिन् प्रमुदिते रङ्गे कथञ्चित्प्रत्युपस्थिते । दर्शयामास बीभत्सुराचार्य्यायास्त्रलाघवं ।
आग्नेयेनासृजदग्निं वारुणेनासृजत्पयः । वायव्येनासृजद्वायुं पार्ज्जन्येनासृजद्घनान् । ५१९५
भौमेन प्राविशद्भूमिं पार्व्वतेनाभवद्गिरिं । अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ।
क्षणात्प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः । क्षणेन रथमध्यस्थः क्षणेनावतरन्महीं ।
सुकुमारञ्च सूक्ष्मञ्च गुरुञ्चापि गुरुप्रियः । सौष्टवेनाभिसंक्षिप्तः सोऽविध्यद्विविधैः शरैः ।
भ्रमतश्च वराहस्य लौहस्य प्रमुखे समं । पञ्चबाणानसंसक्तान्संमुमोचैकबाणवत् ।
गव्ये विषाणकोषे च चले रज्ज्ववलम्बिनि । निचखान महावीर्य्यः शायकानेकविंशति । ५२००
इत्येवमादि सुमहत्खड्गे धनुषि चानघ । गदायां शस्त्रकुशलो मण्डलानि प्रदर्शयन् ।
ततः समाप्तभूयिष्ठे तस्मिन् कर्म्मणि भारत । मन्दीभूते समाजे च वादित्रस्य च निःस्वने ।
द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः । वज्रनिष्पेषसदृशः शुश्रुवे भुजनिःस्वनः ।
दीर्य्यन्ते किंनु गिरयः किंस्विद्भूमिर्विदीर्य्यते । किंस्विदापूर्य्यते व्योम जलधाराघनैर्घनैः ।
रङ्गस्यैवं मतिरभूत्क्षणेन वसुधाऽधिप । द्वारञ्चाभिमुखाः सर्व्वे बभूवुः प्रेक्षकास्तदा । ५२०५
पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो बभौ । पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः ।
अश्वत्थामा च सहितं भ्रातॄणां शतमूर्जितं । दुर्य्योधनममित्रघ्नमुत्थितं पर्य्यवारयत् ।
स तैस्तदा भ्रातृभिरुद्यतायुधैर्गदाग्रपाणिः समवस्थितैर्वृतः । बभौ यथा दानवसंक्षये पुरा पुरन्दरो देवगणैः समावृतः ।
इत्यादिपर्व्वणि सम्भवपर्व्वण्यस्त्रदर्शने पञ्चत्रिंशदधिकशततोऽध्यायः ॥ १३५ ॥
वैशम्पायन उवाच । दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनः । विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः ।
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः । सधनुर्बद्धनिस्त्रिंशः पादचारीव पर्व्वतः । ५२१०
कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचनः । तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणसूदनः ।
सिंहर्षभगजेन्द्राणां बलवीर्य्यपराक्रमः । दीप्तिकान्तिद्युतिगुणैः सूर्य्येन्दुज्वलनोपमः ।
प्रांशुः कनकतालाभः सिंहसंहननो युवा । असंख्येयगुणः श्रीमान्भास्करस्यात्मसम्भवः ।
स निरीक्ष्य महाबाहुः सर्व्वतो रङ्गमण्डलं । प्रणामं द्रोणकृपयोर्न्नात्यादृतमिवाऽकरोत् ।
स समाजजनः सर्व्वो निश्चलः स्थिरलोचनः । कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् । ५२१५
सोऽब्रवीन्मेघगम्भीरस्वरेण वदतां वरः । भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिं ।
पार्थ यत्ते कृतं कर्म्म विशेषवदहन्ततः । करिष्ये पश्यतां नृणामात्मानं विस्मयंगमः ।
असमाप्ते ततस्तस्य वचने वदतांवर । यन्त्रोत्क्षिप्त इवोत्तस्थौ क्षिप्रं वै सर्व्वतो जनः ।
प्रीतिश्च मनुजव्याघ्र दुर्य्योधनमुपाविशत् । ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वाविवेश ह ।

ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा। यत्कृतं तत्र पार्थेन तच्चकार महाबलः॥ ५३९०

अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत। कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत्॥

॥ दुर्योधन उवाच ॥ स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद। अहं च कुरुराज्यं च यथेष्टमुपभुज्यतां॥

॥ कर्ण उवाच ॥ कृतं सर्व्वमहं मन्ये सखित्वं च त्वया वृणे। द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छाम्यहं प्रभो॥

॥ दुर्योधन उवाच ॥ भुङ्क्ष्व भोगान्मया सार्द्धं बन्धूनां प्रियकृद्भव। दुर्हृदां कुरु सर्व्वेषां मूर्द्ध्नि पादमरिन्दम॥

॥ वैशम्पायन उवाच ॥ ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत। कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितं॥ ५३९५

॥ अर्जुन उवाच ॥ अनाहूतोपविष्टानामनाहूतोपजल्पिनां। ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे॥

॥ कर्ण उवाच ॥ रङ्गोऽयं सर्व्वसामान्यः किमत्र तव फाल्गुन। वीर्य्यश्रेष्ठाश्च राजानो बलं धर्म्मोऽनुवर्त्तते॥

किं क्षेपैर्दुर्ब्बलाश्वासैः शरैः कथय भारत। गुरोः समक्षं यावत्ते हराम्यद्य शिरः शरैः॥

॥ वैशम्पायन उवाच ॥ ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरञ्जयः। भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तं॥

ततो दुर्योधनेनापि सभ्रात्रा समरोद्यतः। परिष्वक्तः स्थितः कर्णः प्रगृह्य सशरं धनुः॥ ५४००

ततः सविद्युत्स्तनितैः सेन्द्रायुधपुरोगमैः। आवृतं गगनं मेघैर्बलाकापङ्क्तिहासिभिः॥

ततः स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकिनं। भास्करोऽप्यनयन्नाशं समीपोपगतान्घनान्॥

मेघच्छायोपगूढस्तु ततोऽदृश्यत फाल्गुनः। सूर्य्यातपपरिक्षिप्तः कर्णोऽपि समदृश्यत॥

धार्त्तराष्ट्रा यतः कर्णस्तस्मिन्देशे व्यवस्थिताः। भारद्वाजः कृपो भीष्मो यतः पार्थस्ततोऽभवन्॥

द्विधारङ्गः समभवत्स्त्रीणां द्वैधमजायत। कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह॥ ५४०५

तां तथा मोहमापन्नां विदुरः सर्व्वधर्म्मवित्। कुन्तीमाश्वासयामास प्रेष्याभिश्चन्दनोदकैः॥

ततः प्रत्यागतप्राणा तावुभौ परिदंशितौ। पुत्रौ दृष्ट्वा सुसंभ्रान्ता नान्वपद्यत किञ्चन॥

तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत्। द्वन्द्वयुद्धसमाचारे कुशलः सर्व्वधर्म्मवित्॥

अयं पृथायास्तनयः कनीयान्पाण्डुनन्दनः। कौरवो भवता सार्द्धं द्वन्द्वयुद्धं करिष्यति॥

त्वमप्येवं महाबाहो मातरं पितरं कुलं। कथयस्व नरेन्द्राणां येषां त्वं कुलभूषणः॥ ५४१०

ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा। वृथाकुलसमाचारैर्न युध्यन्ते नृपात्मजाः॥

॥ वैशम्पायन उवाच ॥ एवमुक्तस्य कर्णस्य व्रीडावनतमाननं। बभौ वर्षाम्बुविक्लिन्नं पद्ममागलितं यथा॥

॥ दुर्योधन उवाच ॥ आचार्य्य त्रिविधा योनी राज्ञां शास्त्रविनिश्चये। सत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति॥

यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति। तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते॥

॥ वैशम्पायन उवाच ॥ ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः। काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः। अभिषिक्तोऽङ्ग राज्यस्य श्रिया युक्तो महाबलः॥ ५४१५

सच्छत्रबालव्यजनो जयशब्दान्तरेण च। उवाच कौरवं राजा वचनं स वृषस्तदा॥

अस्य राज्यप्रदानस्य सदृशं किं ददानि ते। प्रब्रूहि राजशार्दूल कर्त्ता ह्यस्मि तथा नृप। अत्यन्तं सख्यमिच्छामीत्याह तं स सुयोधनः॥

एवमुक्तस्ततः कर्णस्तथेति प्रत्युवाच तं। हर्षाच्चोभौ समाश्लिष्य परां मुदमवापतुः।

इत्यादिपर्व्वसम्भवपर्व्वण्यस्त्रदर्शने षट्त्रिंशदधिकशतोऽध्यायः॥ १३६ ॥

वैशम्पायन उवाच। ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः। विवेशाधिरथो रङ्गं यष्टिप्राणो ह्वयन्निव।
तमालोक्य धनुस्त्यक्त्वा पितृगौरवयन्त्रितः। कर्णोऽभिषेकार्द्रशिराः शिरसा समवन्दत। ५४२०
ततः पादाववच्छाद्य पटान्तेन ससंभ्रमः। पुत्रेति परिपूर्णार्थमब्रवीद्रथसारथिः।
परिष्वज्य च तस्याथ मूर्द्धानं स्नेहविक्लवः। अङ्गराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः।
तं दृष्ट्वा सूतपुत्रोऽयमिति संचिन्त्य पाण्डवः। भीमसेनस्तदा वाक्यमब्रवीत्प्रहसन्निव।
न त्वमर्हसि पार्थेन सूतपुत्र रणे वधं। कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया।
अङ्गराज्यञ्च नार्हस्त्वमुपभोक्तुं नराधम। श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे। ५४२५
एवमुक्तस्ततः कर्णः किञ्चित्प्रस्फुरिताधरः। गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत।
ततो दुर्य्योधनः कोपादुत्पपात महाबलः। भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः।
सोऽब्रवीद्भीमकर्म्माणं भीमसेनमवस्थितं। वृकोदर न युक्तं ते वचनं वक्तुमीदृशं।
क्षत्रियाणां बलं ज्येष्ठं योद्धव्यं क्षत्रबन्धुना। शूराणाञ्च नदीनाञ्च दुर्विदाः प्रभवाः किल।
सलिलादुत्थितो वह्निर्येन व्याप्तं चराचरं। दधीचस्यास्थितो वज्रं कृतं दानवसूदनं। ५४३०
आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि। श्रूयते भगवान्देवः सर्व्वगुह्यमयो गुहः।
क्षत्रियेभ्यश्च ये जाता ब्राह्मणास्ते च ते श्रुताः। विश्वामित्रप्रभृतयः प्राप्ता ब्रह्मत्वमव्ययं।
आचार्य्यः कलशाज्जातो द्रोणः शस्त्रभृतांवरः। गौतमस्यान्ववायेच शरस्तम्बाच्च गौतमः।
भवताञ्च यथा जन्म तदप्यागमितं मया। सकुण्डलं सकवचं सर्व्वलक्षणलक्षितं। कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति।
पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः। अनेन बाहुवीर्य्येण मया चाज्ञानुवर्त्तिना। ५४३५
यस्य वा मनुजस्येदं नक्षान्तं मद्विचेष्टितं। रथमारुह्य पद्भ्यां स विनामयतु कार्म्मुकं।
ततः सर्व्वस्य रङ्गस्य हाहाकारो महानभूत्। साधुवादानुसंबद्धः सूर्य्यश्चास्तमुपागमत्।
ततो दुर्य्योधनः कर्णमालम्ब्याग्रकरे नृपः। दीपिकाग्निकृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ।
पाण्डवाश्च सद्रोणाः सकृपाश्च विशाम्पते। भीष्मेण सहिताः सर्व्वे ययुः स्वं स्वं निवेशनं।
अर्ज्जुनेति जनः कश्चित्कश्चित्कर्णेति भारत। कश्चिद्दुर्य्योधनेत्येवं ब्रुवन्तः प्रस्थितास्तदा। ५४४०
कुन्त्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितं। पुत्रमङ्गेश्वरं स्नेहाच्छन्ना प्रीतिरजायत।
दुर्य्योधनस्यापि तदा कर्णमासाद्य पार्थिव। भयमर्ज्जुनसञ्जातं क्षिप्रमन्तरधीयत।
स चापि वीरः कृतशस्त्रनिःश्रमः परेण साम्नाभ्यवदत्सुयोधनं। युधिष्ठिरस्याप्यभवत्तदा मतिर्न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ।

इत्यादिपर्व्वसम्भवपर्व्वण्यस्त्रदर्शने सप्तत्रिंशदधिकशतोऽध्यायः॥ १३७॥

॥ वैशम्पायन उवाच॥ पाण्डवान्धार्त्तराष्ट्रांश्च कृतास्त्रान् प्रसमीक्ष्य सः। गुर्व्वर्थदक्षिणाकाले प्राप्तेऽमन्यत वै गुरुः।
ततः शिष्यान्समानीय आचार्य्योऽर्थमचोदयत्। द्रोणः सर्व्वानशेषेण दक्षिणार्थं महीपते। ५४४५

पाञ्चालराजं द्रुपदं गृहीत्वा रणमूर्द्धनि। पर्य्यानयत भद्रं वः सा स्यात्परमदक्षिणा।
तथेत्युक्त्वा तु ते सर्व्वे रथैस्तूर्णं प्रहारिणः। आचार्य्यधनदानार्थं द्रोणेन सहिता ययुः।
ततोऽभिजग्मुः पाञ्चालान्निघ्नन्तस्ते नरर्षभाः। ममृदुस्तस्य नगरं द्रुपदस्य महौजसः।
दुर्य्योधनश्च कर्णश्च युयुत्सुश्च महाबलः। दुःशासनो विकर्णश्च जलसन्धः सुलोचनः।
एते चान्ये च बहवः कुमारा बहुविक्रमाः। अहं पूर्व्वमहंपूर्व्वमित्येवं क्षत्रियर्षभाः। ५४५०
ततो वररथारूढाः कुमाराः सादिभिः सह। प्रविश्य नगरं सर्व्वे राजमार्गमुपाययुः।
तस्मिन्काले तु पाञ्चाल्यः श्रुत्वा दृष्ट्वा महद्बलं। भ्रातृभिः सहितो राजंस्त्वरया निर्ययौ गृहात्। ततस्तु कृतसन्नाहो यज्ञसेनो महीधरः। शरवर्षाणि मुञ्चन्तः प्रणेदुः सर्व्व एव ते।
ततो रथेन शुभ्रेण समासाद्य तु कौरवान्। यज्ञसेनः शरान्घोरान्ववर्ष युधि दुर्ज्जयः।
॥ वैशम्पायन उवाच॥ पूर्व्वमेव तु सम्मन्त्र्य पार्थो द्रोणमथाब्रवीत्। दर्पोद्रेकात्कुमाराणामाचार्य्यं द्विजसत्तमं।
एषां पराक्रमस्यान्ते वयं कुर्य्याम साहसं। एतैरशक्यः पाञ्चाल्यो ग्रहीतुं रणमूर्द्धनि। ५४५५
एवमुक्त्वा तु कौन्तेयो भ्रातृभिः सहितोऽनघः। अर्द्धक्रोशे तु नगरादतिष्ठद्बहिरेव सः।
द्रुपदः कौरवान्दृष्ट्वा प्राधावत समन्ततः। शरजालेन महता मोहयन्कौरवीं चमूं।
तमुद्यतं रथेनैकमाशुकारिणमाहवे। अनेकमिव सन्त्रासान्मेनिरे तत्र कौरवाः।
द्रुपदस्य शरा घोरा विचेरुः सर्व्वतो दिशं। ततः शङ्खाश्च भेर्य्यश्च मृदङ्गाश्च सहस्रशः।
प्रावाद्यन्त महाराज पाञ्चालानां निवेशने। सिंहनादश्च सञ्जज्ञे पाञ्चालानां महात्मनां। धनुर्ज्यातलशब्दश्च संस्पृश्य गगनं महान्। ५४६०
दुर्य्योधनो विकर्णश्च सुबाहुर्दीर्घलोचनः। दुःशासनश्च सङ्क्रुद्धाः शरवर्षैरवाकिरन्।
सोऽतिविद्धो महेष्वासः पार्षतो युधि दुर्जयः। व्यधमत्तान्यनीकानि तत्क्षणादेव भारत।
दुर्य्योधनं विकर्णञ्च कर्णञ्चापि महाबलं। नानानृपसुतान्वीरान्सैन्यानि विविधानि च। अलातचक्रवत्सर्व्वं चरन्बाणैरतर्पयत्।
ततस्तु नागराः सर्व्वे मुषलैर्यष्टिभिस्तदा। अभ्यवर्षन्त कौरव्यान्वर्षमाणा घना इव।
सबालवृद्धास्ते पौराः कौरवानभ्ययुस्तदा। श्रुत्वा तु तुमुलं युद्धं कौरवानेव भारत। द्रवन्ति स्म नदन्ति स्म क्रोशन्तः पाण्डवान्प्रति। ५४६५
पाण्डवास्तु स्वनं श्रुत्वा आर्त्तानां लोमहर्षणं। अभिवाद्य ततो द्रोणं रथानारुरुहुस्तदा।
युधिष्ठिरं निवार्य्याशु मा युध्यस्वेति पाण्डवं। माद्रेयौ चक्ररक्षौ तु फाल्गुनश्च तदाऽकरोत्।
सेनाग्रगो भीमसेनः सदाऽभूद्गदया सह। तदा शत्रुस्वनं श्रुत्वा भ्रातृभिः सहितोऽनघः। आयाज्जवेन कौन्तेयो रथेनानादयन्दिशः।
पाञ्चालानां ततः सेनामुद्धूतार्णवनिस्वनां। भीमसेनो महाबाहुर्दण्डपाणिरिवान्तकः। प्रविवेश महासेनां मकरः सागरं यथा।
स्वयमभ्यद्रवद्भीमो नागानीकं गदाधरः। स युद्धकुशलः पार्थो बाहुवीर्य्येण चातुलः। अहनत्कुञ्जरानीकं गदया कालरूपधृक्। ५४७०

ते गजा गिरिसङ्काशाः क्षरन्तो रुधिरं बहु । भीमसेनस्य गदया भिन्नमस्तकपिण्डकाः । पतन्ति द्विरदा भूमौ वज्रघाता दिवाचलाः ।

गजानश्वान्रथांश्चैव पातयामास पाण्डवः । पदातींश्च रथांश्चैव न्यवधीदर्जुनानुजः ।

गोपालइव दण्डेन यथा पशुगणान्वने । चालयंश्च नगांश्च संचचाल वृकोदरः ।

॥ वैशम्पायन उवाच ॥ भारद्वाजप्रियं कर्तुमुद्यतः फाल्गुनस्तदा । पार्षतं शरजालेन क्षिपन्नागात्स पाण्डवः ।

हयौघांश्च रथौघांश्च गजौघांश्च समन्ततः । पातयन्समरे राजन्युगान्ताग्निरिव ज्वलन् । ५४७५

ततस्ते वध्यमाना वै पाञ्चालाः सृञ्जयास्तथा । शरैर्नानाविधैस्तूर्णं पार्थं संछाद्य सर्वशः ।

सिंहनादं मुखैः कृत्वा समयुध्यन्त पाण्डवं । तद्युद्धमभवद्घोरं सुमहाद्भुतदर्शनं । सिंहनादस्वनं श्रुत्वा नामृष्यत्पाकशासनिः ।

ततः किरीटी सहसा पाञ्चालान्समरेऽद्रवत् । छादयन्निषुजालेन महता मोहयन्निव ।

शीघ्रमभ्यस्यतो बाणान्सन्दधानस्य चानिशं । नान्तरं ददृशे किञ्चित्कौन्तेयस्य यशस्विनः ।

सिंहनादश्च संजज्ञे साधुशब्देन मिश्रितः । ततः पाञ्चालराजस्तु तथा सत्यजिता सह । ५४८०

त्वरमाणोऽभिदुद्राव महेन्द्रं शम्बरो यथा । महता शरवर्षेण पार्थः पाञ्चालमावृणोत् ।

ततो हलहलाशब्द आसीत्पाञ्चालके बले । जिघृक्षति महासिंहे गजानामिव यूथपं ।

दृष्ट्वा पार्थं तदायान्तं सत्यजित्सत्यविक्रमः । पाञ्चालं वै परिप्रेप्सुर्धनञ्जयमदुद्रवत् ।

ततस्त्वर्जुनपाञ्चालौ युद्धाय समुपागतौ । व्यक्षोभयेतां तौ सैन्यमिन्द्रवैरोचनाविव ।

ततः सत्यजितं पार्थो दशभिर्मर्मभेदिभिः । विव्याध बलवद्गाढं तदद्भुतमिवाभवत् । ५४८५

ततः शरशतैः पार्थं पाञ्चाल्यः शीघ्रमार्दयत् । पार्थस्तु शरवर्षेण छाद्यमानो महारथः ।

वेगं चक्रे महावेगो धनुर्ज्यामवमृज्य च । ततः सत्यजितश्चापं छित्त्वा राजानमभ्ययात् ।

अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरं । साश्वं ससूतं सरथं पार्थं विव्याध सत्वरः ।

स तं न ममृषे पार्थः पाञ्चालेनार्दितो युधि । ततस्तस्य विनाशार्थं सत्वरं व्यसृजच्छरान् ।

हयान्ध्वजं धनुर्मुष्टिमुभौ तौ पार्ष्णिसारथी । स तथाभिद्यमानेषु कार्मुकेषु पुनःपुनः । ५४९०

हयेषु विनियुक्तेषु विमुखोऽभवदाहवे । स सत्यजितमालोक्य तथा विमुखमाहवे ।

वेगेन महता राजन्नभ्यवर्षत पाण्डवं । तदा चक्रे महद्युद्धमर्जुनो जयतांवरः ।

तस्य पार्थो धनुश्छित्त्वा ध्वजं चोर्व्यामपातयत् । पञ्चभिस्तस्य विव्याध हयान्सूतञ्च सायकैः ।

तत उत्सृज्य तच्चापमाददानं शरावरं । खड्गमुद्धृत्य कौन्तेयः सिंहनादमथाऽकरोत् ।

पाञ्चालस्य रथस्येषामाप्लुत्य सहसाऽपतत् । ५४९५

पाञ्चालरथमास्थाय अवित्रस्तो धनञ्जयः । विक्षोभ्याम्भोनिधिं पार्थस्तं नागमिव सोऽग्रहीत् ।

ततस्तु सर्वपाञ्चाला विद्रवन्ति दिशो दश ।

दर्शयन्सर्वसैन्यानां स बाह्वोर्बलमात्मनः । सिंहनादस्वनं कृत्वा निर्जगाम धनञ्जयः ।

आयान्तमर्जुनं दृष्ट्वा कुमाराः सहितास्तदा। सम्मृद्नन्तस्य नगरं द्रुपदस्य महात्मनः।
॥ अर्जुनउवाच ॥ सम्बन्धी कुरुवीराणां द्रुपदो राजसत्तमः। मा वधीस्तद्बलं भीम गुरुदानं प्रदीयतां। ५५००
वैशम्पायनउवाच ॥ भीमसेनस्तदा राजन्नर्जुनेन निवारितः। अतृप्तो युद्धधर्मेषु न्यवर्त्तत महाबलः।
ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्द्धनि। उपाजह्रुः सहामात्यं द्रोणाय भरतर्षभ।
भग्नदर्पं हृतधनं तं तथा वशमागतं। स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत्।
विमृद्य तरसा राष्ट्रं पुरं ते मृदितं मया। प्राप्य जीवं रिपुवशं सखिपूर्व्वं किमिष्यते।
एवमुक्त्वा प्रहस्यैवं किञ्चित् स पुनरब्रवीत्। मा भैः प्राणभयाद्वीर क्षमिणो ब्राह्मणा वयं। ५५०५
आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह। तेन संवर्द्धितः स्नेहः प्रीतिश्च क्षत्रियर्षभ।
प्रार्थयेयं त्वया सख्यं पुनरेव जनाधिप। वरं ददामि ते राजन् राज्यस्यार्द्धमवाप्नुहि।
अराजा किल नो राज्ञः सखा भवितुमर्हति। अतः प्रयतितं राज्ये यज्ञसेन मया तव।
राजाऽसि दक्षिणे कूले भागीरथ्याहमुत्तरे। सखायं मां विजानीहि पाञ्चाल यदि मन्यसे।
द्रुपद उवाच ॥ अनाश्चर्य्यमिदं ब्रह्मन् विक्रान्तेषु महात्मसु। प्रीये त्वयाऽहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीं। ५५१०
॥ वैशम्पायन उवाच ॥ एवमुक्तः स तं द्रोणो मोचयामास भारत। सत्कृत्य चैनं प्रीतात्मा राज्यार्द्धं प्रत्यपादयत्।
माकन्दीमथ गङ्गायास्तीरे जनपदायुतां। सोऽध्यावसद्दीनमनाः काम्पिल्यञ्च पुरोत्तमं।
दक्षिणांश्चापि पाञ्चालान् यावच्चर्म्मण्वती नदी। द्रोणेन चैवं द्रुपदः परिभूयाथ पालितः।
क्षात्रेण च बलेनास्य नापश्यत् स पराजयं। हीनं विदित्वा चात्मानं ब्राह्मेण स बलेन तु।
पुत्रजन्म परीप्सन् वै पृथिवीमन्वसञ्चरत्। अहिच्छत्रञ्च विषयं द्रोणः समभिपद्यत। ५५१५
एवं राजन्नहिच्छत्रा पुरी जनपदायुता। युधि निर्ज्जित्य पार्थेन द्रोणाय प्रतिपादिता।
इत्यादिपर्व्वणि सम्भवपर्व्वणि द्रुपदशासनेऽष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
॥ वैशम्पायन उवाच ॥ ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव। स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः।
धृतिस्थैर्य्यसहिष्णुत्वादानृशंस्यात्तथार्ज्जवात्। भृत्यानामनुकम्पार्थं तथैव स्थिरसौहृदात्।
ततो दीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः। पितुरन्तर्दधे कीर्त्तिं शीलवृत्तसमाधिभिः।
असियुद्धे गदायुद्धे रथयुद्धे च पाण्डवः। सङ्कर्षणादशिक्षद्वै शश्वच्छिक्षां वृकोदरः। ५५२०
समाप्तशिक्षो भीमस्तु द्युमत्सेनसमो बले। पराक्रमेण सम्पन्नो भ्रातॄणामचरद्वशे।
प्रगाढदृढमुष्टित्वे लाघवे वेधने तथा। क्षुरनाराचभल्लानां विपाठानाञ्च तत्त्ववित्।
लाघवे सौष्ठवे चैव नान्यः कश्चन विद्यते। बीभत्सुसदृशो लोके इति द्रोणो व्यवस्थितः।
ततोऽब्रवीद्गुडाकेशं द्रोणः कौरवसंसदि। अगस्त्यस्य धनुर्वेदे शिष्यो मम गुरुः पुरा।
अग्निवेश इति ख्यातस्तस्य शिष्योऽस्मि भारत। तीर्थात्तीर्थं गमयितुमहमेतत्समुद्यतः। तपसा यन्मया प्राप्तममोघमशनिप्रभं।
अस्त्रं ब्रह्मशिरो नाम यद्दहेत्पृथिवीमपि। ५५२५
ददता गुरुणा चोक्तं न मनुष्येष्विदं त्वया। भारद्वाज विमोक्तव्यमल्पवीर्य्येष्वपि प्रभो।

त्वया प्राप्तमिदं वीर दिव्यं नान्योऽर्हति त्विदं । समयस्तु त्वया रक्ष्यो मुनिसृष्टो विशाम्पते ।
आचार्य्यदक्षिणां देहि ज्ञातिग्रामस्य पश्यतः । ददानीति प्रतिज्ञाते फाल्गुनेनाब्रवीद्गुरुः ।
युद्धेऽहं प्रतियोद्धव्यो युध्यमानस्त्वयाऽनघ । तथेति च प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः । उपसङ्गृह्य चरणौ स प्रायादुत्तरां दिशं ।
स्वभावादगमच्छब्दो महीं सागरमेखलां । अर्ज्जुनस्य समो लोके नास्ति कश्चिद्धनुर्धरः । ५५२०
गदायुद्धेऽसियुद्धे च रथयुद्धे च पाण्डवः । पारगश्च धनुर्युद्धे बभूवाथ धनञ्जयः ।
नीतिमान्सकलां नीतिं विबुधाधिपतेस्तदा । अवाप्य सहदेवोऽपि भ्रातॄणां वर्त्तते वशे ।
द्रोणेनैव विनीतश्च भ्रातॄणां नकुलः प्रियः । चित्रयोधी समाख्यातो बभूवातिरथोदितः ।
त्रिवर्षकृतयज्ञस्तु गन्धर्व्वाणामुपप्लवे । अर्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः ।
न शशाक वशे कर्त्तुं यं पाण्डुरपि वीर्य्यवान् । सोऽर्जुनेन वशं नीतो राजासीद्यवनाधिपः । ५५२५
अतीव बलसम्पन्नः सदा मानी कुरून्प्रति । विपुलो नाम सौवीरः शस्तः पार्थेन धीमता ।
दत्तामित्र इति ख्यातं संग्रामे कृतनिश्चयं । सुमित्रं नाम सौवीरमर्जुनोऽदमयच्छरैः ।
भीमसेनसहायश्च रथानामयुतञ्च सः । अर्जुनः समरे प्राच्यान्सर्व्वानेकरथोऽजयत् ।
तथैवैकरथो गत्वा दक्षिणामजयद्दिशं । धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ।
एवं सर्व्वे महात्मानः पाण्डवा मनुजोत्तमाः । परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा । ५५३०
ततो बलमतिख्यातं विज्ञाय दृढधन्विनां । दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु ।
स चिन्तापरमो राजा न निद्रामलभन्निशि ।
इत्यादिपर्व्वणि सम्भवपर्व्वणि धृतराष्ट्रचिन्तायामूनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥
॥ वैशम्पायन उवाच ॥ श्रुत्वा पाण्डुसुतान्वीरान् बलोद्रिक्तान्महौजसः । धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ।
तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमं । कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ।
॥ धृतराष्ट्र उवाच ॥ उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम । तत्र मे निश्चिततमं सन्धिविग्रहकारणं । कणिक त्वं ममाचक्ष्व करिष्ये वचनं तव । ५५३५
॥ वैशम्पायन उवाच ॥ स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः । उवाच वचनं तीक्ष्णं राजशास्त्रार्थदर्शनः ।
॥ कणिक उवाच ॥ शृणु राजन्निदं तत्र प्रोच्यमानं मयाऽनघ । न मेऽभ्यसूया कर्त्तव्या श्रुत्वैतत्कुरुसत्तम ।
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः । अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ।
नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः । तस्मात्सर्व्वाणि कार्य्याणि दण्डेनैव विधारयेत् ।
नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात् । गूहेत्कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः । ५५४०
नासम्यक् कृतकारी स्यादुपक्रम्य कदाचन । कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरं ।
वधमेव प्रशंसन्ति शत्रूणामपकारिणां । सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितं ।
आपद्यापदि काले च कुर्व्वीत न विचारयेत् । नावज्ञेयो रिपुस्तात दुर्ब्बलोऽपि कथञ्चन । अल्पोऽप्यग्निर्व्वनं कृत्स्नं दहत्याश्रयसंश्रयात् ।

अन्धः स्यादन्धवेलायां बाधिर्य्यमपि चाश्रयेत्। कुर्य्यात्तृणमयं चापं शयीत मृगशायिकां।
सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितं। दया न तस्मिन् कर्त्तव्या शरणागत इत्युत। ५५५५
निरुद्विग्नो हि भवति न हताज्जायते भयं। हन्यादमित्रं दानेन तथा पूर्व्वापकारिणं।
हन्यात्त्रीन्पञ्च सप्तेति परपक्षस्य सर्व्वशः। मूलमेवादितश्छिन्द्यात्परपक्षस्य नित्यशः। ततः सहायांस्तत्पक्षान्सर्व्वांश्च तदनन्तरं।
छिन्नमूले ह्यधिष्ठाने सर्व्वे तज्जीविनो हताः। कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ।
एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः। राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत्।
अग्न्याधानेन यज्ञेन काषायेण जटाऽजिनैः। लोकान्विश्वासयित्वैव ततो लुम्पेद्यथा वृकः। ५५६०
अङ्कुशं शौचमित्याहुरर्थानामुपधारणे। आनाम्य फलितां शाखां पक्वं पक्वं प्रशातयेत्।
फलार्थोऽयं समारम्भो लोके पुंसां विपश्चितां।
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्य्ययः। ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि।
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन्। कृपा न तस्मिन् कर्त्तव्या हन्यादेवापकारिणं।
हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः। तथैव भेददण्डाभ्यां सर्व्वोपायैः प्रशान्तये। ५५६५
धृतराष्ट्र उवाच॥ कथं सान्त्वेन दानेन भेदैर्द्दण्डेन वा पुनः। अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथं।
कणिक उवाच॥ शृणु राजन्यथावृत्तं वने निवसतः पुरा। जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः।
अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः। सखिभिर्न्यवसत्सार्द्धं व्याघ्राखुवृकबभ्रुभिः।
तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपं। अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन्।
जम्बुक उवाच॥ असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया। युवा वै जवसम्पन्नो बुद्धिशाली न शक्यते। ५५७०
मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयं। अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः।
ततो वै भक्षयिष्यामः सर्व्वे मुदितमानसाः। जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः।
मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा। दृष्ट्वैवाचेष्टमानन्तु भूमौ मृगकलेवरं। स्नात्वागच्छत भद्रं वो रक्षामीत्याह जम्बुकः।
शृगालवचनात्तेऽपि गताः सर्व्वे नदीं ततः। स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः।
अथाजगाम पूर्व्वन्तु स्नात्वा व्याघ्रो महाबलः। ददर्श जम्बुकञ्चैव चिन्ताकुलितमानसं। ५५७५
व्याघ्र उवाच॥ किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः। अशित्वा पिशितान्यद्य विहरिष्यामहे वयं।
जम्बुक उवाच। शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत्। धिग्बलं मृगराजस्य मयाऽद्यायं मृगो हतः।
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति। गर्ज्जमानस्य तस्यैवमतो भक्ष्यं न रोचये।
व्याघ्र उवाच॥ ब्रवीति यदि स ह्येवं काले ह्यस्मिन् प्रबोधितः। स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान्।
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनं। ५५८०
एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह। तमागतमभिप्रेत्य शृगालोऽप्यब्रवीद्वचः।
॥ जम्बुक उवाच॥ शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत्। मृगमांसं न खादेयं गरमेतन्न रोचते।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यतां। तच्छ्रुत्वा मूषिको वाक्यं सन्त्रस्तः प्रगतो बिलं।

ततः स्नात्वा स वै तत्र आजगाम वृको नृप । समागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।

मृगराजो हि संक्रुद्धो न ते साधु भविष्यति । सकलत्रस्त्विहायाति कुरुष्व यदनन्तरं । ५५८५

एवं सञ्चोदितस्तेन जम्बुकेन तदा वृकः । ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ।

एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह । तमुवाच महाराज नकुलं जम्बुको वने ।

स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः । मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितं ।

॥ नकुल उवाच ॥ मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः । निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।

न त्वयाऽप्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत् । कणिक उवाच । एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः । ५५९०

खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् । एवं समाचरन्नित्यं सुखमेधेत भूपतिः ।

भयेन भेदयेद्भीरुं शूरमञ्जलिकर्म्मणा । लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ।

एवं ते कथितं राजन् शृणु चाप्यपरं तथा । पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः । रिपुस्थानेषु वर्त्तन्तः कर्त्तव्या भूतिमिच्छता ।

शपथेनाप्यरिं हन्यादर्थदानेन वा पुनः । विषेण मायया वाऽपि नोपेक्षेत कथञ्चन । उभौ चेत्संशयोपेतौ श्रद्धावांस्तत्र वर्द्धते ।

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनं । ५५९५

क्रुद्धोऽप्यक्रुद्धरूपः स्यात् स्मितपूर्व्वाभिभाषिता । न चाप्यन्यमपध्वंसेत् कदाचित्कोपसंयुतः ।

प्रहरिष्यन् प्रियं ब्रूयात्प्रहरन्नपि भारत । प्रहृत्य च कृपायीत शोचेत च रुदेत च ।

आश्वासयेच्चापि परं सान्त्वधर्म्मार्थवृत्तिभिः । अथास्य प्रहरेत्काले यदा विचलिते पथि ।

अपि घोरापराधस्य धर्म्ममाश्रित्य तिष्ठतः । स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ।

यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् । अधनान्नास्तिकांश्चौरान्विषये स्वे न वासयेत् । ५६००

प्रत्युत्थानासनाद्येन सम्प्रदानेन केनचित् । प्रतिविश्रब्धघाती स्यात्तीक्ष्णदंष्ट्रो निमग्नकः ।

अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्व्वशः । अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ।

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ।

चाराः सुविहिताः कार्य्या आत्मनश्च परस्य वा । पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ।

उद्यानेषु विहारेषु देवतायतनेषु च । पानागारेषु रथ्यासु सर्व्वतीर्थेषु चाप्यथ । चत्वरेषु च कूपेषु पर्व्वतेषु वनेषु च । समवायेषु सर्व्वेषु सरित्सु च विचारयेत् । ५६०५

वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः । स्मितपूर्व्वाभिभाषी स्यात् सृष्टो रौद्रेण कर्म्मणा ।

अञ्जलिः शपथः सान्त्वं शिरसा पादवन्दनं । आशाकरणमित्येवं कर्त्तव्यं भूतिमिच्छता ।

सुपुष्पितः स्यादफलः फलवान् स्याद्दुरारुहः । आमः स्यात्पक्वसंकाशो न च जीर्य्येत कर्हिचित् ।

त्रिवर्गे त्रिविधा पीडा अनुबन्धास्तथैव च । अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत् ।

धर्म्मं विचरतः पीडा साऽपि द्वाभ्यां नियच्छति । अर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्त्तिनः । ५६१०

अगर्व्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता। अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सह।
कर्म्मणा येन तेनैव मृदुना दारुणेन च। उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत्।
न संशयमनारुह्य नरो भद्राणि पश्यति। संशयं पुनरारुह्य यदि जीवति पश्यति।
यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत्। अनागतेन दुर्ब्बुद्धिं प्रत्युत्पन्नेन पण्डितं।
योऽरिणा सह सन्धाय शयीत कृतकृत्यवत्। स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते। ५६१५
मन्त्रसंवरणे यत्नः सदा कार्य्योऽनसूयता। आकारमभिरक्षेत चारेणाप्यनुपालितः।
नाच्छित्त्वा परमर्म्माणि नाकृत्वा कर्म्म दारुणं। नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियं।
कर्षितं व्याधितं क्लिन्नमपानीयमघासकं। परिविश्वस्तमन्दञ्च प्रहर्त्तव्यमरेर्ब्बलं।
नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति सङ्गतं। तस्मात्सर्व्वाणि साध्यानि सावशेषाणि कारयेत्।
संग्रहे विग्रहे चैव यत्नः कार्य्योऽनसूयता। उत्साहश्चापि यत्नेन कर्त्तव्यो भूतिमिच्छता। ५६२०
नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा। आरब्धान्येव पश्येरन् सुपर्य्यवसितान्यपि।
भीतवत्संविधातव्यं यावद्भयमनागतं। आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत्।
दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः। स मृत्युमुपगृह्णीयाद्गर्भमश्वतरी तथा।
अनागतं हि बुध्येत यच्च कार्य्यं पुरःस्थितं। न तु बुद्धिक्षयात्किञ्चिदतिक्रामेत्प्रयोजनं।
उत्साहश्चापि यत्नेन कर्त्तव्यो भूतिमिच्छता। विभज्य देशकालौ च दैवं धर्म्मादयस्त्रयः। ५६२५
नैःश्रेयसौ तु तौ ज्ञेयौ देशकालाविति स्थितिः।
तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः। गहनेऽग्निरिवोत्सृष्टः क्षिप्रं सञ्जायते महान्।
अग्निस्तोकमिवात्मानं सन्धुक्षयति यो नरः। स वर्द्धमानो ग्रसते महान्तमपि सञ्चयं।
आशाङ्कालवतीं दद्यात्कालं विघ्नेन योजयेत्। विघ्नं निमित्ततो ब्रूयान्निमित्तं वाऽपि हेतुतः।
क्षुरो भूत्वा हरेत्प्राणान्निशितः कालसाधनः। प्रतिच्छन्नो लोमहारी द्विषतां परिकर्त्तनः। ५६३०
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह। वर्त्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर।
सर्व्वकल्याणसम्पन्नो विशिष्ट इति निश्चयः। तस्मात्त्वं पाण्डुपुत्रेभ्यो रक्षात्मानं नराधिप।
भ्रातृव्या बलिनो यस्मात्पाण्डुपुत्रा नराधिप। पश्चात्तापो यथा न स्यात्तथा नीतिर्व्विधीयतां।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा सम्प्रतस्थे कणिकः स्वगृहं ततः। धृतराष्ट्रोऽपि कौरव्यः शोकार्त्तः समपद्यत।
इत्यादिपर्व्वणि सम्भवपर्व्वणि कणिकवाक्ये चत्वारिंशदधिकशतोऽध्यायः समाप्तञ्च सम्भवपर्व्व ॥ १४० ॥

## ॥ अथ जतुगृहपर्व्व ॥

॥ वैशम्पायन उवाच ॥ ततः सुबलपुत्रस्तु राजा दुर्य्योधनश्च ह। दुःशासनश्च कर्णश्च दुष्टं मन्त्रममन्त्रयन्। ५६३५
ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपं। दहने तु सपुत्रायाः कुन्त्या बुद्धिमकारयन्।
तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान्। आकारेण च तं मन्त्रं बुबुधे दुष्टचेतसां।

ततो विदितवेद्यात्मा पाण्डवानां हिते रतः। पलायने मतिं चक्रे कुन्त्याः पुत्रैः सहानघः।
ततो वातसहां नावं यन्त्रयुक्तां पताकिनीं। ऊर्म्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच ह।
॥ विदुर उवाच ॥ एष जातः कुलस्यास्य कीर्त्तिवंशप्रणाशनः। धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतं। ५९४०
इयं वारिपथे युक्ता तरङ्गपवनक्षमा। नौर्य्यया मृत्युपाशात्त्वं सपुत्रा मोक्ष्यसे शुभे।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा व्यथिता कुन्ती पुत्रैः सह यशस्विनी। नावमारुह्य गङ्गायां प्रययौ भरतर्षभ।
ततो विदुरवाक्येन नावं विक्षिप्य पाण्डवाः। धनं चादाय तैर्दत्तमरिष्टं प्राविशन्वनं।
निषादी पञ्चपुत्रा तु जातुषे तत्र वेश्मनि। कारणाभ्यागता दग्धा सह पुत्रैरनागसा।
स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः। वञ्चिताश्च दुरात्मानो धार्त्तराष्ट्राः सहानुगाः। ५९४५
अविज्ञाता महात्मानो जनानामक्षतास्तथा। जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रिताः।
ततस्तस्मिन्पुरे लोका नगरे वारणावते। दृष्ट्वा जतुगृहं दग्धमन्वशोचन्त दुःखिताः।
प्रेषयामासू राजानं यथावृत्तं निवेदितुं। संवृत्तस्ते महान्कामः पाण्डवान्दग्धवानसि।
सकामो भव कौरव्य भुङ्क्ष्व राज्यं सपुत्रकः। तच्छ्रुत्वा धृतराष्ट्रस्तु सह पुत्रेण शोचयन्।
प्रेतकार्य्याणि च तथा चकार सह बान्धवैः। पाण्डवानां तथा चक्रे भीष्मश्च कुरुसत्तमः। ५९५०
॥ जनमेजय उवाच ॥ पुनर्व्विस्तरशः श्रोतुमिच्छामि द्विजसत्तम। दाहं जतुगृहस्यैव पाण्डवानाञ्च मोक्षणं।
सुनृशंसमिदं कर्म्म तेषां क्रूरोपसंहितं। कीर्त्तयस्व यथावृत्तं परं कौतूहलं मम।
॥ वैशम्पायन उवाच ॥ शृणु विस्तरशो राजन्वदतो मे परन्तप। दाहं जतुगृहस्यैतत्पाण्डवानाञ्च मोक्षणं।
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयं। दुर्य्योधनो लक्षयित्वा पर्य्यतप्यत दुर्म्मनाः।
ततो वैकर्त्तनः कर्णः शकुनिश्चापि सौबलः। अनेकैरभ्युपायैस्ते जिघांसन्ति स्म पाण्डवान्। ५९५५
पाण्डवा अपि तत्सर्व्वं प्रतिचक्रुर्य्यथागतं। उद्भावनमकुर्व्वन्तो विदुरस्य मते स्थिताः।
गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा। कथयाञ्चक्रिरे तेषां गुणान्संसत्सु भारत।
राज्यप्राप्तिञ्च सम्प्राप्तं ज्येष्ठं पाण्डुसुतं तदा। कथयन्ति स्म सम्भूय चत्वरेषु सभासु च।
प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः। राज्यं न प्राप्तवान्पूर्व्वं स कथं नृपतिर्भवेत्।
तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः। प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति। ५९६०
ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनं। अभिषिञ्चाम साध्वद्य सत्यकारुण्यवेदिनं।
स हि भीष्मं शान्तनवं धृतराष्ट्रञ्च धर्म्मवित्। सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन्।
तेषां दुर्य्योधनः श्रुत्वा तानि वाक्यानि जल्पतां। युधिष्ठिरानुरक्तानां पर्य्यतप्यत दुर्म्मतिः।
स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे। ईर्ष्यया चापि सन्तप्तो धृतराष्ट्रमुपागमत्।
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः। पौरानुरागसन्तप्तः पश्चादिदमभाषत। ५९६५
॥ दुर्य्योधन उवाच ॥ श्रुता मे जल्पतां तात पौराणामशिवा गिरः। त्वामनादृत्य भीष्मञ्च पतिमिच्छन्ति पाण्डवं।
मतमेतच्च भीष्मस्य न स राज्यं बुभुक्षति। अस्माकन्तु परां पीडां चिकीर्षन्ति पुरे जनाः।

पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा। त्वमन्धगुणसंयोगात्प्राप्तं राज्यं न लब्धवान्।

स एव पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः। तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः।

ते वयं राजवंशेन हीनाः सह सुतैरपि। अवज्ञाता भविष्यामो लोकस्य जगतीपते। ५५७०

सततं निरयं प्राप्ताः परपिण्डोपजीविनः। न भवेम यथा राजंस्तथा नीतिर्विधीयतां।

यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान्। ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने।

इत्यादिपर्व्वणि जतुगृहपर्व्वणि दुर्य्योधनेर्ष्यायामेकचत्वारिंशदधिकशततमोऽध्यायः॥ १४१ ॥

॥ वैशम्पायन उवाच ॥ एवं श्रुत्वा तु पुत्रस्य प्रज्ञाचक्षुर्नराधिपः। कणिकस्य च वाक्यानि तानि श्रुत्वा स सर्व्वशः। धृतराष्ट्रो द्विधाचित्तः शोकार्त्तः समपद्यत।

दुर्य्योधनश्च कर्णश्च शकुनिः सौबलस्तथा। दुःशासनचतुर्थास्ते मन्त्रयामासुरेकतः।

ततो दुर्य्योधनो राजा धृतराष्ट्रमभाषत। पाण्डवेभ्यो भयं न स्यात्तान्विवासयतां भवान्। निपुणेनाभ्युपायेन नगरं वारणावतं। ५५७५

धृतराष्ट्रस्तु पुत्रेण श्रुत्वा वचनमीरितं। मुहूर्त्तमिव सञ्चिन्त्य दुर्य्योधनमथाऽब्रवीत्।

॥ धृतराष्ट्र उवाच ॥ धर्म्मनित्यः सदा पाण्डुस्तथा धर्म्मपरायणः। सर्व्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः।

नास्मै किञ्चिद्विजानाति भोजनादि चिकीर्षितं। निवेदयति नित्यं हि मम राज्यं धृतव्रतः।

तस्य पुत्रो यथा पाण्डुस्तथा धर्म्मपरायणः। गुणवाँल्लोकविख्यातः पौरवाणां सुसम्मतः।

स कथं शक्यतेऽस्माभिरपाकर्त्तुं बलादितः। पितृपैतामहाद्राज्यात्ससहायो विशेषतः। ५५८०

भृता हि पाण्डुनाऽमात्या बलञ्च सततं भृतं। भृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः।

ते पुरा सत्कृतास्तात पाण्डुना नागरा जनाः। कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान्।

॥ दुर्य्योधन उवाच ॥ एवमेवं यथा तात भावितं दोषमात्मनः। दृष्ट्वा प्रकृतयः सर्व्वा अर्थमानेन पूजिताः।

ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः। अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते।

स भवान्पाण्डवानाशु विवासयितुमर्हति। मृदुनैवाभ्युपायेन नगरं वारणावतं। ५५८५

यदा प्रतिष्ठितं राज्यं मयि राजन्भविष्यति। तदा कुन्ती सहापत्या पुनरेष्यति भारत।

॥ धृतराष्ट्र उवाच ॥ दुर्य्योधन ममाप्येतद्धृदि संपरिवर्त्तते। अभिप्रायस्य पापत्वान्नैवं तु विवृणोम्यहं।

नच भीष्मो नच द्रोणो नच क्षत्ता न गौतमः। विवास्यमानान्कौन्तेयानन्विच्छन्त्यथ कर्हिचित्।

समा हि कौरवेयाणां वयन्ते चैव पुत्रक। नैते विषममिच्छेयुर्धर्म्मयुक्ता मनस्विनः।

ते वयं कौरवेयाणामेतेषाञ्च महात्मनां। कथं न वध्यतां तात गच्छेम जगतस्तथा। ५५९०

॥ दुर्य्योधन उवाच ॥ मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः। यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः।

कृपः शारद्वतश्चैव यत एतौ ततो भवेत्। द्रोणञ्च भागिनेयञ्च न स त्यक्ष्यति कर्हिचित्।

क्षत्ताऽर्थबद्धस्त्वस्माकं प्रच्छन्नं संयतः परैः। न चैकः स समर्थोऽस्मान्पाण्डवार्थेऽधिबाधितुं।

सुविस्रब्धः पाण्डुपुत्रान्सह मात्रा प्रवासय। वारणावतमद्यैव यथा यान्ति तथा कुरु।

विनिद्रकरणं घोरं हृदि शल्यमिवार्पितं । शोकपावकमुद्भूतं कर्म्मणैतेन नाशय । ५९९५

इत्यादिपर्व्वणि जतुगृहपर्व्वणि दुर्य्योधनपरामर्शे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

॥ वैशम्पायन उवाच ॥ ततो दुर्य्योधनो राजा सर्व्वाः प्रकृतयः शनैः । अर्थमानप्रदानाभ्यां सञ्जहार सहानुजः ।
धृतराष्ट्रप्रयुक्तास्ते केचित्कुशलमन्त्रिणः । कथयाञ्चक्रिरे रम्यं नगरं वारणावतं ।
अयं समाजः सुमहान् रमणीयतमो भुवि । उपस्थितः पशुपतेर्नगरे वारणावते ।
सर्व्वरत्नसमाकीर्णे पुंसां देशे मनोरमे । इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः ।
कथ्यमाने तथा रम्ये नगरे वारणावते । गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप । ६०००
यदा त्वमन्यत नृपो जातकौतूहला इति । उवाचैनानथ तान् पाण्डवानम्बिकासुतः ।
॥ धृतराष्ट्र उवाच ॥ ममेते पुरुषा नित्यं कथयन्ति पुनः पुनः । रमणीयतमं लोके नगरं वारणावतं ।
ते तात यदि मन्यध्वमुत्सवं वारणावते । सगणाः सानुयात्राश्च विहरध्वं यथाऽमराः ।
ब्राह्मणेभ्यश्च रत्नानि गायनेभ्यश्च सर्व्वशः । प्रयच्छध्वं यथाकामं देवा इव सुवर्च्चसः ।
किञ्चित्कालं विहृत्यैवमनुभूय परां मुदं । इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ । ६००५
॥ वैशम्पायन उवाच ॥ धृतराष्ट्रस्य तं काममनुबुद्ध्वा युधिष्ठिरः । आत्मनश्चासहायत्वं तथेति प्रत्युवाच तं ।
ततो भीष्मं शान्तनवं विदुरञ्च महामतिं । द्रोणञ्च बाह्लिकञ्चैव सोमदत्तञ्च कौरवं ।
कृपमाचार्य्यपुत्रञ्च भूरिश्रवसमेव च । मान्यानन्यानमात्यांश्च ब्राह्मणांश्च तपोधनान् ।
पुरोहितांश्च पौरांश्च गान्धारीञ्च यशस्विनीं । युधिष्ठिरः शनैर्दीन उवाचेदं वचस्तदा ।
रमणीये जनाकीर्णे नगरे वारणावते । सगणास्तात यास्यामो धृतराष्ट्रस्य शासनात् । ६०१०
प्रसन्नमनसः सर्व्वे पुण्या वाचो विमुञ्चत । आशीर्भिर्वृंहितानस्मान्न पापं प्रसहिष्यते ।
एवमुक्तास्तु ते सर्व्वे पाण्डुपुत्रेण कौरवाः । प्रसन्नवदना भूत्वा तेऽन्ववर्त्तन्त पाण्डवान् ।
स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्व्वशः । मा च वोऽस्त्वशुभं किञ्चित्सर्व्वशः पाण्डुनन्दनाः ।
ततः कृतस्वस्त्ययना राज्यलाभाय पार्थिवाः । कृत्वा सर्व्वाणि कार्य्याणि प्रययुर्व्वारणावतं ।

इत्यादिपर्व्वणि जतुगृहपर्व्वणि वारणावतयात्रायां त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

एवमुक्तेषु राज्ञा तु पाण्डुपुत्रेषु भारत । दुर्य्योधनः परं हर्षमगच्छत्स दुरात्मवान् । ६०१५
स पुरोचनमेकान्तमानीय भरतर्षभ । गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत् ।
॥ दुर्य्योधन उवाच ॥ ममेयं वसुसम्पूर्णा पुरोचन वसुन्धरा । यथेयं मम तद्वत्ते स तां रक्षितुमर्हसि ।
नहि मे कश्चिदन्योऽस्ति विश्वासिकतरस्त्वया । सहायो येन सन्धाय मन्त्रयेयं यथा त्वया ।
संरक्ष तात मन्त्रञ्च सपत्नांश्च ममोद्धर । निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ।
पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतं । उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् । ६०२०
स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना । वारणावतमद्यैव यथा यासि तथा कुरु ।
तत्र गत्वा चतुःशालं गृहं परमसंवृतं । नगरोपान्तमाश्रित्य कारयेथा महाधनं ।

शणसर्ज्जरसादीनि यानि द्रव्याणि कानिचित्। आग्नेयान्युत सन्तीह तानि तत्र प्रदापय।
सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया। मृत्तिकां मिश्रयित्वा तं लेपं कुड्येषु दापय।
शणं तैलं घृतं चैव जतु दारूणि चैव हि। तस्मिन्वेश्मनि सर्व्वाणि निक्षिपेथाः समन्ततः। ५०२५
यथा च तन्न पश्येरन्परीक्षन्तोऽपि पाण्डवाः। आग्नेयमिति तत्कार्य्यमपि चान्येऽपि मानवाः।
वेश्मन्येवं कृते तत्र गत्वा तान् परमार्च्चितान्। वासयेथाः पाण्डवेयान् कुन्तीञ्च ससुहृज्जनां।
आसनानि च दिव्यानि यानानि शयनानि च। विधातव्यानि पाण्डूनां यथा तुष्येत वै पिता।
यथा च तन्न जानन्ति नगरे वारणावते। तथा सर्व्वं विधातव्यं यावत्कालस्य पर्य्ययः।
ज्ञात्वा च तान्सुविश्वस्तान् शयानानकुतोभयान्। अग्निस्त्वया ततो देयो द्वारतस्तस्य वेश्मनः। ५०३०
दह्यमाने स्वके गेहे दग्धा इति ततो जनाः। न गर्हयेयुरस्मान्वै पाण्डवार्थाय कर्हिचित्।
स तथेति प्रतिज्ञाय कौरवाय पुरोचनः। प्रायाद्रासभयुक्तेन स्यन्दनेनाशुगामिना।
स गत्वा त्वरितं राजन्दुर्य्योधनमते स्थितः। यथोक्तं राजपुत्रेण सर्व्वं चक्रे पुरोचनः।
इत्यादिपर्व्वणि जतुगृहपर्व्वणि पुरोचनोपदेशे चतुश्चत्वारिंशदधिकशततोऽध्यायः॥ १४४ ॥
वैशम्पायन उवाच॥ पाण्डवास्तु रथान्युक्त्वा सदश्वैरनिलोपमैः। आरोहमाणा भीष्मस्य पादौ जगृहुरार्त्तवत्।
राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः। अन्येषाञ्चैव वृद्धानां कृपस्य विदुरस्य च। ५०३५
एवं सर्व्वान् कुरून् वृद्धानभिवाद्य यतव्रताः। समालिङ्ग्य समानांश्च बालैश्चाप्यभिवादिताः।
सर्व्वा मातृस्तथापृच्छ्य कृत्वा चैव प्रदक्षिणं। सर्व्वाः प्रकृतयश्चैव प्रययुर्व्वारणावतं।
विदुरश्च महाप्राज्ञस्तथाऽन्ये कुरुपुङ्गवाः। पौराश्च पुरुषव्याघ्रानन्वयुः शोककर्षिताः।
तत्र केचिद्ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा। दीनान् दृष्ट्वा पाण्डुसुतानतीव भृशदुःखिताः।
विषमं पश्यते राजा सर्व्वथा स सुमन्दधीः। कौरव्यो धृतराष्ट्रस्तु नच धर्म्मं प्रपश्यति। ५०४०
नहि पापमपापात्मा रोचयिष्यति पाण्डवः। भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः।
कुत एव महात्मानौ माद्रीपुत्रौ करिष्यतः। तान् राज्यं पितृतः प्राप्तान् धृतराष्ट्रो न मृष्यते।
अधर्म्यमिदमत्यन्तं कथं भीष्मोऽनुमन्यते। विवास्यमानानस्थाने नगरे योऽभिमन्यते।
पितेव हि नृपोऽस्माकमभूच्छान्तनवः पुरा। विचित्रवीर्य्यो राजर्षिः पाण्डुश्च कुरुनन्दनः।
स तस्मिन्पुरुषव्याघ्रे देवभावं गते सति। राजपुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यते। ५०४५
वयमेतदनिच्छन्तः सर्व्व एव पुरोत्तमात्। गृहान्विहाय गच्छामो यत्र गन्ता युधिष्ठिरः।
तांस्तथा वादिनः पौरान् दुःखितान्दुःखकर्षितः। उवाच मनसा ध्यात्वा धर्म्मराजो युधिष्ठिरः।
पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः। अशङ्कमानैस्तत्कार्य्यमस्माभिरिति नो व्रतं।
भवन्तः सुहृदोऽस्माकमस्मान् कृत्वा प्रदक्षिणं। प्रतिनन्द्य तथाशीर्भिर्निवर्त्तध्वं यथागृहं।
यदा तु कार्य्यमस्माकं भवद्भिरुपपत्स्यते। तदा करिष्यथास्माकं प्रियाणि च हितानि च। ५०५०
एवमुक्तास्ततः पौराः कृत्वा चापि प्रदक्षिणं। आशीर्भिश्चाभिनन्द्यैतान् जग्मुर्नगरमेव हि।

पौरेषु विनिवृत्तेषु विदुरः सर्व्वधर्म्मवित् । बोधयन् पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ।
प्राज्ञः प्राज्ञप्रलापज्ञः प्रलापज्ञमिदं वचः । प्राज्ञं प्राज्ञः प्रलापज्ञः प्रलापज्ञं वचोऽब्रवीत् ।
यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीं । विज्ञायेह तथा कुर्य्यादापदं निस्तरेद्यथा ।
अलोहं निशितं शस्त्रं शरीरपरिकर्त्तनं । यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः । १०५५
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः । न दहेदिति चात्मानं यो रक्षति स जीवति ।
नाचक्षुर्व्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः । नाधृतिर्बुद्धिमाप्नोति बुध्यस्वैवं प्रबोधितः ।
अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजं । श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् ।
चरन्मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः । आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ।
एवमुक्तः प्रत्युवाच धर्म्मराजो युधिष्ठिरः । विदुरं विदुषां श्रेष्ठं ज्ञातमित्येव पाण्डवः । १०६०
अनुशिष्यानुगम्यैतान् कृत्वा चैव प्रदक्षिणं । पाण्डवानभ्यनुज्ञाय विदुरः प्रययौ गृहान् ।
निवृत्ते विदुरे चापि भीष्मे पौरजने तथा । अजातशत्रुमासाद्य कुन्ती वचनमब्रवीत् ।
क्षत्ता यदब्रवीद्वाक्यं जनमध्येऽब्रुवन्निव । त्वया च स तथेत्युक्तो जानीमो न च तद्वयं ।
यदीदं शक्यमस्माभिर्ज्ञातुं न च स दोषवत् । श्रोतुमिच्छामि तत्सर्व्वं संवादं तव तस्य च ।
॥ युधिष्ठिर उवाच ॥ गृहादग्निश्च बोद्धव्य इति मां विदुरोऽब्रवीत् । पन्थाश्च वो नाविदितः कश्चित् स्यादिति धर्म्मधीः । १०६५
जितेन्द्रियश्च वसुधां प्राप्स्यतीति च मेऽब्रवीत् । विज्ञातमिति तत्सर्व्वं प्रत्युक्तो विदुरो मया ।
॥ वैशम्पायन उवाच ॥ अष्टमेऽहनि रोहिण्यां प्रयाताः फाल्गुनस्य ते । वारणावतमासाद्य ददृशुर्नागरं जनं ।
इत्यादिपर्व्वणि जतुगृहपर्व्वणि वारणावतगमने पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
॥ वैशम्पायन उवाच ॥ ततः सर्व्वाः प्रकृतयो नगराद्वारणावतात् । सर्व्वमङ्गलसंयुक्ता यथाशास्त्रमतन्द्रिताः ।
श्रुत्वागतान्पाण्डुपुत्रान्नानायानैः सहस्रशः । अभिजग्मुर्नरश्रेष्ठान् श्रुत्वैव परया मुदा ।
ते समासाद्य कौन्तेयान्वारणावतका जनाः । कृत्वा जयाशिषः सर्व्वे परिवार्य्योपतस्थिरे । १०७०
तैर्वृतः पुरुषव्याघ्रो धर्म्मराजो युधिष्ठिरः । विबभौ देवसङ्काशो वज्रपाणिरिवामरैः ।
सत्कृताश्चैव पौरैस्ते पौरान्सत्कृत्य चानघ । अलङ्कृतं जनाकीर्णं विविशुर्वारणावतं ।
ते प्रविश्य पुरीं वीरास्तूर्णं जग्मुरथो गृहान् । ब्राह्मणानां महीपाल रतानां स्वेषु कर्म्मसु ।
नगराधिकृतानाञ्च गृहाणि रथिनां तदा । उपतस्थुर्नरश्रेष्ठा वैश्यशूद्रगृहाण्यपि ।
अर्च्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभ । जग्मुरावसथं पश्चात्पुरोचनपुरःसराः । १०७५
तेभ्यो भक्ष्याणि पानानि शयनानि शुभानि च । आसनानि च मुख्यानि प्रददौ स पुरोचनः ।
तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः । उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः ।
दशरात्रोषितानान्तु तत्र तेषां पुरोचनः । निवेदयामास गृहं शिवाख्यमशिवं तदा ।
तत्र ते पुरुषव्याघ्रा विविशुः सपरिच्छदाः । पुरोचनस्य वचनात्कैलासमिव गुह्यकाः ।
तच्चागारमभिप्रेक्ष्य सर्व्वधर्म्मभृतांवरः । उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः । १०८०

॥ युधिष्ठिर उवाच ॥ जिघ्राणोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितं। कृतं हि व्यक्तमाग्नेयमिदं वेश्म परन्तप।
शणसर्जरसं व्यक्तमानीय गृहकर्म्मणि। मुञ्जवल्वजवंशादि द्रव्यं सर्व्वं घृतोक्षितं। शिल्पिभिः सुकृतं ह्याप्तैर्व्विनीतैर्व्वेश्मकर्म्मणि।
विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः। तथाहि वर्त्तते मन्दः सुयोधनवशे स्थितः।
इमान्तु तां महाबुद्धिर्विदुरो दृष्टवांस्तदा। आपदं तेन मां पार्थ स संबोधितवान् पुरा।
ते वयं बोधितास्तेन नित्यमस्मद्धितैषिणा। पित्रा कनीयसा स्नेहाद्बुद्धिमन्तोऽशिवं गृहं। अनार्य्यैः सुकृतं गूढैर्दुर्य्योधनवशानुगैः।१०८५
॥ भीमसेन उवाच ॥ यदीदं गृहमाग्नेयं विहितं मन्यते भवान्। तत्रैव साधु गच्छामो यत्र पूर्व्वोषिता वयं।
युधिष्ठिर उवाच ॥ इह यत्तैर्निराकारैर्व्वस्तव्यमिति रोचये। नष्टैरविहितैर्म्मार्गैर्गतिमिष्टां ध्रुवामितः।
यदि विन्देत चाकारमस्माकं स पुरोचनः। क्षिप्रकारी ततो भूत्वा प्रसह्यापि दहेत नः।
नायं बिभेत्युपक्रोशादधर्म्माद्वा पुरोचनः। तथाहि वर्त्तते मन्दः सुयोधनवशे स्थितः।
अपि चायं प्रदग्धेषु भीष्मोऽस्मासु पितामहः। कोपं कुर्य्यात् किमर्थं वा कौरवान् कोपयेत सः। १०९०
अथवाऽपीह दग्धेषु भीष्मोऽस्माकं पितामहः। धर्म्म इत्येव कुप्येरन् ये चान्ये कुरुपुङ्गवाः।
वयन्तु यदि दाहस्य बिभ्यतः प्रद्रवेम हि। सर्व्वान्नो घातयेत् सर्व्वान् राज्यलुब्धः सुयोधनः।
अपदस्थान् पदे तिष्ठन्नपक्षान् पक्षसंस्थितः। हीनकोशान् महाकोशः प्रयोगैर्घातयेद्ध्रुवं।
तदस्माभिरिमं पापं तञ्च पापं सुयोधनं। वञ्चयद्भिर्निवस्तव्यं छन्नावासं क्वचित् क्वचित्।
ते वयं मृगयाशीलाश्चराम वसुधामिमां। तथा नो विदिता मार्गा भविष्यन्ति पलायतां। १०९५
भौमञ्च विलमद्यैव करवाम सुसंवृतं। गूढोच्छ्वसान्न नस्तत्र हुताशः संप्रधक्ष्यति।
वसतोऽत्र यथा चास्मान् बुध्येत पुरोचनः। पौरो वाऽपि जनः कश्चित्तथा कार्य्यमतन्द्रितैः।
इत्यादिपर्व्वणि जतुगृहपर्व्वणि भीमसेनयुधिष्ठिरसंवादे षट्चत्वारिंशदधिकशतोऽध्यायः ॥ १४६ ॥
वैशम्पायन उवाच ॥ विदुरस्य सुहृत्कश्चित् खनकः कुशलो नरः। विविक्ते पाण्डवान् राजन्निदं वचनमब्रवीत्।
प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहं। पाण्डवानां प्रियं कार्य्यमिति किं करवाणि वः।
प्रच्छन्नं विदुरेणोक्तः श्रेयस्त्वमिह पाण्डवान्। प्रतिपादय विश्वासादिति किं करवाणि वः। ११००
कृष्णपक्षे चतुर्दश्यां रात्रावस्यां पुरोचनः। भवनस्य तव द्वारि प्रदास्यति हुताशनं।
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः। इति व्यवसितं तस्य धार्त्तराष्ट्रस्य दुर्म्मतेः।
किञ्चिच्च विदुरेणोक्तो म्लेच्छवाचाऽसि पाण्डव। त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणं।
उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः॥ युधिष्ठिर उवाच॥ अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै।
शुचिमाप्तं प्रियञ्चैव सदा च दृढभक्तिकं। न विद्यते कवेः किञ्चिदभिज्ञातं प्रयोजनं। ११०५
यथा तस्य तथा नस्त्वं निर्व्विशेषा वयं त्वयि। भवतश्च यथा तस्य पालयास्मान्यथा कविः।
इदं शरणमाग्नेयं मदर्थमिति मे मतिः। पुरोचनेन विहितं धार्त्तराष्ट्रस्य शासनात्।
स पापः कोशवांश्चैव ससहायश्च दुर्म्मतिः। अस्मानपि च पापात्मा नित्यकालं प्रबाधते।
स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात्। अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः।

सन्दिष्टमायुधागारमिदं तस्य दुरात्मनः । वप्राङ्गं निःप्रतीकारमाश्रित्येदं कृतं महत् । ५८१०

इदं तदशुभं नूनं तस्य कर्म्म चिकीर्षितं । प्रागेव विदुरो वेद तेनास्मानवबोधयत् ।

सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा । पुरोचनस्याविदितानस्मांस्त्वं प्रतिमोचय ।

स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः । परिखामुत्किरन्नाम चकार च महाबिलं ।

चक्रे च वेश्मनस्तस्य मध्येनातिमहद्बिलं । कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ।

पुरोचनभयादेव व्यदधात्संवृतं मुखं । ५८१५

स तस्य तु गृहद्वारि वसत्यशुभधीः सदा । तत्र ते सायुधाः सर्व्वे वसन्ति स्म क्षपां नृप ।

दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनं । विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनं ।

अतुष्टास्तुष्टवद्राजन्नूषुः परमविस्मिताः । न चैनानन्वबुध्यन्त नरा नगरवासिनः । अन्यत्र विदुरामात्यात्तस्मात् खनकसत्तमात् ।

इत्यादिपर्व्वणि जतुगृहपर्व्वणि जतुगृहवासे सप्तचत्वारिंशदधिकशततोऽध्यायः ॥ १४७ ॥

॥ वैशम्पायन उवाच ॥ तांस्तु दृष्ट्वा सुमनसः परिसम्वत्सरोषितान् । विश्वस्तानिव संलक्ष्य हर्षञ्चक्रे पुरोचनः ।

पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः । भीमसेनार्जुनौ चोभौ यमौ प्रोवाच धर्म्मवित् । ५८२०

॥ युधिष्ठिर उवाच ॥ अस्मानयं सुविश्वस्तान्वेत्ति पापः पुरोचनः । वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने ।

आयुधागारमादीप्य दग्ध्वा चैव पुरोचनं । षट्प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ।

॥ वैशम्पायन उवाच ॥ अथ दानापदेशेन कुन्ती ब्राह्मणभोजनं । चक्रे निशि महाराज आजग्मुस्तत्र योषितः ।

ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत । जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीं ।

निषादी पञ्चपुत्रा तु तस्मिन्भोज्ये यदृच्छया । अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता । ५८२५

सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला । सह सर्व्वैः सुतै राजंस्तस्मिन्नेव निवेशने ।

सुष्वाप विगतज्ञाना मृतकल्पा नराधिप । अथ प्रवाते तुमुले निशि सुप्ते जने तदा ।

तदुपादीपयद्भीमः शेते यत्र पुरोचनः । ततो जतुगृहद्वारं दीपयामास पाण्डवः ।

समन्ततो ददौ पश्चादग्निं तत्र निवेशने । ज्ञातन्तु तद्गृहं सर्व्वमादीप्तं पाण्डुनन्दनाः ।

सुरङ्गां विविशुस्तूर्णं मात्रा सार्द्धमरिन्दमाः । ५८३०

ततः प्रतापः सुमहाञ्छब्दश्चैव विभावसोः । प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः । तदवेक्ष्य गृहं दीप्तमाहुः पौराः कृशाननाः ।

॥ पौरा ऊचुः ॥ दुर्य्योधनप्रयुक्तेन पापेनाकृतबुद्धिना । गृहमात्मविनाशाय कारितं दाहितञ्च तत् ।

अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी । यः शुचीन्पाण्डुदायादान्दाहयामास शत्रुवत् ।

दिष्ट्या त्विदानीं पापात्मा दग्धोऽयमतिदुर्म्मतिः । अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् ।

॥ वैशम्पायन उवाच ॥ एवन्ते विलपन्ति स्म वारणावतका जनाः । परिवार्य्य गृहं तत्र तस्थूरात्रौ समन्ततः । ५८३५

पाण्डवाश्चापि ते सर्व्वे सह मात्रा सुदुःखिताः । बिलेन तेन निर्गत्य जग्मुर्द्रुतमलक्षिताः ।

तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः । न शेकुः सहसा गन्तुं सह मात्रा परन्तपाः ।

भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः । जगाम भ्रातॄनादाय सर्व्वान्मातरमेव च ।

स्कन्धमारोप्य जननीं यमावङ्केन वीर्य्यवान्। पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलः।
उरसा पादपान् भञ्जन्महीं पद्भ्यां विदारयन्। स जगामाशु तेजस्वी वातरंहा वृकोदरः। ५८४०
इत्यादिपर्व्वणि जतुगृहपर्व्वणि जतुगृहदाहेऽष्टचत्वारिंशदधिकशततमोऽध्यायः॥ १४८ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु यथासम्प्रत्ययं कविः। विदुरः प्रेषयामास तद्वनं पुरुषं शुचिं।
स गत्वा तु यथोद्देशं पाण्डवान्ददृशे वने। जनन्या सह कौरव्य मापयानान्नदीजलं।
विदितं तन्महाबुद्धेर्व्विदुरस्य महात्मनः। ततस्तस्यापि चारेण चेष्टितं पापचेतसः।
ततः स प्रेषितो विद्वान् विदुरेण नरस्तदा। पार्थानां दर्शयामास मनोमारुतगामिनीं।
सर्व्ववातसहां नावं यन्त्रयुक्तां पताकिनीं। शिवे भागीरथीतीरे नरैर्व्विस्रम्भिभिः कृतां। ५८४५
ततः पुनरथोवाच ज्ञापकं पूर्व्वचोदितं। युधिष्ठिर निबोधेदं संज्ञार्थं वचनं कवेः।
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः। न हन्तीत्येवमात्मानं यो रक्षति स जीवति।
तेन मां प्रेषितं विद्धि विश्वस्तं संज्ञयाऽनया। भूयश्चैवाह मां क्षत्ता विदुरः सर्व्वतोऽर्थवित्।
कर्णं दुर्य्योधनञ्चैव भ्रातृभिः सहितं रणे। शकुनिञ्चैव कौन्तेय विजेताऽसि न संशयः।
इयं वारिपथे युक्ता नौरप्सु सुखगामिनी। मोचयिष्यति वः सर्व्वानस्माद्देशान्न संशयः। ५८५०
अथ तान् व्यथितान् दृष्ट्वा सह मात्रा नरोत्तमान्। नावमारोप्य गङ्गायां प्रस्थितानब्रवीत्पुनः।
विदुरो मूर्द्ध्न्युपाघ्राय परिष्वज्य वचो मुहुः। अरिष्टं गच्छताव्यग्राः पन्थानमिति चाब्रवीत्।
इत्युक्त्वा स तु तान्वीरान् पुमान्विदुरचोदितः। तारयामास राजेन्द्र गङ्गां नावा नरर्षभान्।
तारयित्वा ततो गङ्गां पारं प्राप्तांश्च सर्व्वतः। जयाशिषः प्रयुज्याथ यथागतमगाद्धि सः।
पाण्डवाश्च महात्मानः प्रतिसन्दिश्य वै कवेः। गङ्गामुत्तीर्य्य वेगेन जग्मुर्गूढमलक्षिताः। ५८५५
इत्यादिपर्व्वणि जतुगृहपर्व्वणि गङ्गोत्तरणे ऊनपञ्चाशदधिकशततमोऽध्यायः॥ १४९ ॥
वैशम्पायन उवाच। अथ रात्र्यां व्यतीतायामशेषो नागरो जनः। तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान्।
निर्व्वापयन्तो ज्वलनं ते जना ददृशुस्ततः। जातुषं तद्गृहं दग्धममात्यञ्च पुरोचनं।
नूनं दुर्य्योधनेनेदं विहितं पापकर्म्मणा। पाण्डवानां विनाशायेत्येवं ते चुक्रुशुर्जनाः।
विदिते धृतराष्ट्रस्य धार्त्तराष्ट्रो न संशयः। दग्धवान् पाण्डुदायादान्न ह्येनं प्रतिषिद्धवान्।
नूनं शान्तनवोऽपीह न धर्म्ममनुवर्त्तते। द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः। ५८६०
ते वयं धृतराष्ट्रस्य प्रेषयामो दुरात्मनः। संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि।
ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनं। निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसं।
खनकेन तु तेनैव वेश्म शोधयता बिलं। पांशुभिः पिहितं तच्च पुरुषैस्तैर्न लक्षितं।
ततस्ते ज्ञापयामासुर्धृतराष्ट्रस्य नागराः। पाण्डवानग्निना दग्धानमात्यञ्च पुरोचनं।
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियं। विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः। ५८६५
अद्य पाण्डुर्मृतो राजा मम भ्राता महायशाः। तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः।

गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतं। सत्कारयन्तु तान्वीरान् कुन्तिराजसुतां च तां।
कारयन्तु च कुल्यानि शुभानि च हरन्ति च। ये च तत्र मृतास्तेषां सुहृदो यान्तु तानपि।
एवं गते मया शक्यं यत्कारयितुं हितं। पाण्डवानाञ्च कुन्त्याश्च तत्सर्व्वं क्रियतां धनैः।
एवमुक्त्वा ततश्चक्रे ज्ञातिभिः परिवारितः। उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः। ५८७०
रुरुदुः सहिताः सर्व्वे भृशं शोकपरायणाः। हा युधिष्ठिर कौरव्य हा भीम इति चापरे।
हा फाल्गुनेति चाप्यन्ये हा यमाविति चापरे। कुन्तीमार्त्ताश्च शोचन्त उदकं चक्रिरे जनाः।
अन्ये पौरजनाश्चैवमन्वशोचन्त पाण्डवान्। विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः।
पाण्डवाश्चापि निर्गत्य नगराद्वारणावतात्। नदीं गङ्गामनुप्राप्ता मातृषष्ठा महाबलाः।
दाशानां भुजवेगेन नद्याः स्रोतोजवेन च। वायुना चानुकूलेन तूर्णं पारमवाप्नुवन्। ५८७५
ततो नावं परित्यज्य प्रययुर्दक्षिणां दिशं। विज्ञाय निशि पन्थानं नक्षत्रगणसूचितं।
यतमाना वनं राजन् गहनं प्रतिपेदिरे। ततः श्रान्ताः पिपासार्त्ता निद्रान्धाः पाण्डुनन्दनाः।
पुनरूचुर्महावीर्य्यं भीमसेनमिदं वचः। इतः कष्टतरं किन्नु यद्वयं गहने वने। दिशश्च न विजानीमो गन्तुं चैव न शक्नुमः।
तञ्च पापं न जानीमो यदि दग्धः पुरोचनः। कथन्नु विप्रमुच्येम भयादस्मादलक्षिताः।
पुनरस्मानुपादाय तथैव व्रज भारत। त्वं हि नो बलवानेको यथा सततगस्तथा। ५८८०
इत्युक्तो धर्म्मराजेन भीमसेनो महाबलः। आदाय कुन्तीं भ्रातॄंश्च जगामाशु महाबलः।
इत्यादिपर्व्वणि जतुगृह पर्व्वणि पाण्डववनप्रवेशे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

॥ वैशम्पायन उवाच ॥ तेन विक्रममाणेन ऊरुवेगसमीरितं। वनं सवृक्षविटपं व्याघूर्णितमिवाभवत्।
जङ्घावातो ववौ चास्य शुचिशुक्रागमे यथा। आवर्जितलतावृक्षं मार्गं चक्रे महाबलः।
स वृक्षान् पुष्पितांश्चैव फलितांश्च वनस्पतीन्। अवरुज्य ययौ गुल्मान् पथस्तस्य समीपजान्।
स रोषित इव क्रुद्धो वने भञ्जन्महाद्रुमान्। त्रिःप्रस्रुतमदः शुष्मी षष्टिवर्षी मतङ्गराट्। ५८८५
गच्छतस्तस्य वेगेन तार्क्ष्यमारुतरंहसः। भीमस्य पाण्डुपुत्राणां मूर्च्छेव समजायत।
असकृच्चापि सन्तीर्य्य दूरपारं भुजप्लवैः। पथि प्रच्छन्नमासेदुर्धार्त्तराष्ट्रभयात्तदा।
कृच्छ्रेण मातरञ्चैव सुकुमारीं यशस्विनीं। अवहत् स तु पृष्ठेन रोधःसु विषमेषु च।
आगमच्च वनोद्देशमल्पमूलफलोदकं। क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभ।
घोरा समभवत्सन्ध्या दारुणा मृगपक्षिणः। अप्रकाशा दिशः सर्व्वा वातैरासन्ननार्त्तवैः। ५८९०
शीर्णपर्णफलैराजन् बहुगुल्मक्षुपैर्द्रुमैः। भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः।
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः। नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया।
न्यविशन्त हि ते सर्व्वे निरास्वादे महावने। ततस्तृषा परिक्लान्ता कुन्ती पुत्रानथाब्रवीत्।
माता सती पाण्डवानां पञ्चानां मध्यतः स्थिता। तृष्णया हि परीतास्मि पुत्रान्भृशमथाब्रवीत्।
तच्छ्रुत्वा भीमसेनस्य मातृस्नेहात्प्रजल्पितं। कारुण्येन मनस्तप्तं गमनायोपचक्रमे। ५८९५

ततो भीमो वनं घोरं प्रविश्य विजनं महत्। न्यग्रोधं विपुलच्छायं रमणीयं ददर्श ह।
तत्र निक्षिप्य तान्सर्व्वानुवाच भरतर्षभः। पानीयं मृगयामीह विश्रमध्वमिति प्रभो।
एते रुवन्ति मधुरं सारसा जलचारिणः। ध्रुवमत्र जलस्थानं महच्चेति मतिर्म्मम।
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत। जगाम तत्र यत्र स्म सारसा जलचारिणः।
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ। तेषामर्थे च जग्राह भ्रातॄणां भ्रातृवत्सलः। ५९००
उत्तरीयेण पानीयमानयामास भारत। गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति। शोकदुःखपरीतात्मा निशश्वासोरगो यथा।
स सुप्तां मातरं दृष्ट्वा भ्रातॄंश्च वसुधातले। भृशं शोकपरीतात्मा विललाप वृकोदरः।
अतः कष्टतरं किन्नु द्रष्टव्यं हि भविष्यति। यत्पश्यामि महीसुप्तान् भ्रातॄनद्य सुमन्दभाक्।
शयनेषु परार्द्ध्येषु ये पुरा वारणावते। नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले।
स्वसारं वसुदेवस्य शत्रुसङ्घावमर्द्दिनः। कुन्तिराजसुतां कुन्तीं सर्व्वलक्षणपूजितां। ५९०५
स्नुषां विचित्रवीर्य्यस्य भार्य्यां पाण्डोर्महात्मनः। तथैव चास्मज्जननीं पुण्डरीकोदरप्रभां।
सुकुमारतरामेनां महार्हशयनोचितां। शयानां पश्यताद्येह पृथिव्यामतथोचितां।
धर्म्मादिन्द्राच्च वाताच्च सुषुवे या सुतानिमान्। सेयं भूमौ परिश्रान्ता शेते प्रासादशायिनी।
किन्नु दुःखतरं शक्यं मया द्रष्टुमतः परं। योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले।
त्रिषु लोकेषु यो राज्यं धर्म्मनित्योऽर्हते नृपः। सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत्कथं। ५९१०
अयं नीलाम्बुदश्यामो नरेष्वप्रतिमोऽर्ज्जुनः। शेते प्राकृतवद्भूमौ ततो दुःखतरं नु किं।
अश्विनाविव देवानां याविमौ रूपसम्पदा। तौ प्राकृतवदद्येमौ प्रसुप्तौ धरणीतले।
ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः। स जीवेत सुखं लोके ग्रामद्रुम इवैकजः।
एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः। चैत्यो भवति निर्ज्ञातिरर्च्चनीयः सुपूजितः।
येषाञ्च बहवः शूरा ज्ञातयो धर्म्ममाश्रिताः। ते जीवन्ति सुखं लोके भवन्ति च निरामयाः। ५९१५
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः। जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव।
वयन्तु धृतराष्ट्रेण सपुत्त्रेण दुरात्मना। विवासिता न दग्धाश्च कथञ्चिद्दैवसंश्रयात्।
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः। कान्दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमं।
सकामो भव दुर्ब्बुद्धे धार्त्तराष्ट्राल्पदर्शन। नूनं देवाः प्रसन्नास्ते नानुज्ञां मे युधिष्ठिरः। प्रयच्छति वधे तुभ्यं तेन जीवसि दुर्म्मते।
नन्वद्य ससुतामात्यं सकर्णानुजसौबलं। गत्वा क्रोधसमाविष्टः प्रेषयिष्ये यमक्षयं। ५९२०
किन्नु शक्यं मया कर्त्तुं यत्ते न क्रुध्यते नृपः। धर्म्मात्मा पाण्डवश्रेष्ठः पापाचार युधिष्ठिरः।
एवमुक्त्वा महाबाहुः क्रोधसन्दीप्तमानसः। करं करेण निष्पिष्य निःश्वसन् दीनमानसः।
पुनर्दीनमना भूत्वा शान्तार्च्चिरिव पावकः। भ्रातॄन्महीतले सुप्तानवैक्षत वृकोदरः।
विश्वस्तानिव संविष्टान् पृथग्जनसमानिव। नातिदूरेण नगरं वनादस्माद्धि लक्षये।

जागर्त्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयं । पास्यन्तीमे वसं पश्चात्प्रतिबुद्धा जितक्लमाः । ५९२५
इतिभीमो व्यवस्यैव जजागार स्वयं तदा ।
इत्यादिपर्व्वणि जतुगृह पर्व्वणि भीमजलाहरणे एकपञ्चाशदधिकशततोऽध्यायः समाप्तञ्च जतुगृहपर्व्व ॥ १५१ ॥

## ॥ अथहिडिम्बवधपर्व्व ॥ ९ ॥

॥ वैशम्पायन उवाच ॥ तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः । अविदूरे वनात्तस्माच्छालवृक्षं समाश्रितः ।
क्रूरो मानुषमांसादो महावीर्य्यपराक्रमः । प्रावृड्जलधरश्यामः पिङ्गाक्षो दारुणाकृतिः ।
दंष्ट्राकरालवदनः पिशितेप्सुः क्षुधार्द्दितः । लम्बस्फिक् लम्बजठरो रक्तश्मश्रुशिरोरुहः ।
महावृक्षगलस्कन्धः शङ्कुकर्णो विभीषणः । यदृच्छया तानपश्यत्पाण्डुपुत्रान्महारथान् । ५९३०
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः । पिशितेप्सुः क्षुधार्त्तश्च तानपश्यद्यदृच्छया ।
ऊर्द्ध्वाङ्गुलिः स कण्डूयन्धुन्वन् रूक्षान् शिरोरुहान् । जृम्भमाणो महावक्त्रः पुनःपुनरवेक्ष्य च ।
हृष्टो मानुषमांसस्य महाकायो महाबलः । आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ।
उपपन्नश्चिरस्याद्य भक्ष्योऽयं मम सुप्रियः । स्नेहस्रवान्प्रस्रवति जिह्वा पर्य्येति मे मुखं ।
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः । देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च । ५९३५
आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि । उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु । गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः । मानुषो बलवान् गन्धो घ्राणं तर्पयतीव मे ।
हत्वैतान्मानुषान्सर्व्वानानयस्व ममान्तिकं । अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ।
एषामुत्कृत्य मांसानि मानुषाणां यथेष्टतः । भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम ।
भक्षयित्वा च मांसानि मानुषाणां प्रकामतः । नृत्याव सहितावावां दत्ततालावनेकशः ।
एवमुक्ता हिडिम्बा तु हिडिम्बेन तदा वने । भ्रातुर्व्वचनमाज्ञाय त्वरमाणेव राक्षसी । ५९४०
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ । ददर्श तत्र सा गत्वा पाण्डवान्पृथया सह । शयानान् भीमसेनञ्च जाग्रतं त्वपराजितं ।
दृष्ट्वैव भीमसेनं सा शालपोतमिवोद्गतं । राक्षसी कामयामास रूपेणाप्रतिमं भुवि ।
अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः । कम्बुग्रीवः पुष्कराक्षो भर्त्ता युक्तो भवेन्मम ।
नाहं भ्रातृवचो जातु कुर्य्यां क्रूरोपसंहितं । पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदं ।
मुहूर्त्तमेव तृप्तिश्च भवेद्भ्रातुर्म्ममैव च । हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः । ५९४५
सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमं । उपतस्थे महाबाहुं भीमसेनं शनैः शनैः ।
लज्जमानेव ललना दिव्याभरणभूषिता । स्मितपूर्व्वमिदं वाक्यं भीमसेनमथाब्रवीत् ।
कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ । क इमे शेरते चेह पुरुषा देवरूपिणः ।
केयं वै बृहती श्यामा सुकुमारी तवाऽनघ । शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ।
नेदं जानाति गहनं वनं राक्षससेवितं । वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः । ५९५०

तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा। बिभक्षयिषता मांसं युष्माकममरोपमाः।
सा ऽहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभं। नान्यं भर्त्तारमिच्छामि सत्यमेतद्ब्रवीमि ते।
एतद्विज्ञाय धर्म्मज्ञ युक्तं मयि समाचर। कामोपहतचित्ताङ्गीं भजमानां भजस्व मां।
त्रास्यामि त्वां महाबाहो राक्षसात्पुरुषादकात्। वत्स्यावो गिरिदुर्गेषु भर्त्ता भव ममाऽनघ।
अन्तरीक्षचरी ह्यस्मि कामतो विचरामि च। अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह। ५८८५
भीमसेन उवाच॥ मातरं भ्रातरं ज्येष्ठं सुखसुप्तान् कथं त्विमान्। परित्यजेत कोन्वद्य प्रभवन्निह राक्षसि।
को हि सुप्तानिमान् भ्रातॄन्दत्त्वा राक्षसभोजनं। मातरञ्च नरो गच्छेत्कामार्त्त इव मद्विधः।
राक्षस्युवाच॥ यत्ते प्रियं तत्करिष्ये सर्व्वानेतान्प्रबोधय। मोक्षयिष्याम्यहं कामं राक्षसात्पुरुषादकात्।
भीम उवाच। सुखसुप्तान् वने भ्रातॄन्मातरं चैव राक्षसि। न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः।
नहि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमं। न मनुष्या न गन्धर्व्वा न यक्षाश्चारुलोचने। ५८९०
गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत्कुरु। तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकं।
इत्यादिपर्व्वणि हिडिम्बवधपर्व्वणि हिडिम्बाभीमसंवादे द्विपञ्चाशदधिकशततोऽध्यायः॥ १५२ ॥
वैशम्पायन उवाच॥ तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः। अवतीर्य्य द्रुमात्तस्मादाजगामाथ पाण्डवान्।
लोहिताक्षो महाबाहुरूर्द्ध्वकेशो महाननः। मेघसंघातवर्ष्मा च तीक्ष्णदंष्ट्रो भयानकः।
तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनं। हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः।
आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः। साऽहं त्वां भ्रातृभिः सार्द्धं यद्ब्रवीमि तथा कुरु। ५८९५
अहं कामगमा वीर रक्षोबलसमन्विता। आरुहेमां मम श्रोणिं नेष्यामि त्वां विहायसा।
प्रबोधयैतान्संसुप्तान्मातरं च परन्तप। सर्व्वानेव गमिष्यामि गृहीत्वा वो विहायसा।
भीमउवाच॥ माभैस्त्वं पृथुसुश्रोणि नैष कश्चिन्मयि स्थिते। अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे।
नायं प्रतिबलो भीरु राक्षसापसदो मम। सोढुं युधि परिस्पन्दमथवा सर्व्वराक्षसाः।
पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ। ऊरू परिघसङ्काशौ संहतं चाप्युरो महत्। ५९००
विक्रमं मे यथेन्द्रस्य साऽद्य द्रक्ष्यसि शोभने। माऽवमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषं।
हिडिम्बोवाच॥ नावमन्ये नरव्याघ्र त्वामहं देवरूपिणं। दृष्टप्रभावस्तु मया मानुषेष्वेव राक्षसः।
वैशम्पायनउवाच॥ तथा सञ्जल्पतस्तस्य भीमसेनस्य भारत। वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः।
अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः। स्रग्दामपूरितशिखं समग्रेन्दुनिभाननं।
सुभ्रूनासाक्षिकेशान्तं सुकुमारनखत्वचं। सर्व्वाभरणसंयुक्तं सुसूक्ष्माम्बरवाससं। ५९०५
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरं। पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः।
संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम। उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत्।
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः। न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता।
धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि। पूर्व्वेषां राक्षसेन्द्राणां सर्व्वेषामयशस्करि।

यानिमानाश्रिताऽकार्षीर्विप्रियं सुमहन्मम । एष तानद्य वै सर्व्वान्हनिष्यामि त्वया सह । ५९८०
एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः । वधायाभिपपातैनाम् दन्तैर्दन्तानुपस्पृशन् ।
तमापतन्तं संप्रेक्ष्य भीमः प्रहरतांवरः । भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् ।
वैशम्पायनउवाच ॥ भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव । भगिनीं प्रति संक्रुद्धमिदं वचनमब्रवीत् ।
किन्ते हिडिम्ब एतैर्व्वा सुखसुप्तैः प्रबोधितैः । मामासादय दुर्बुद्धे तरसा त्वं नराशन ।
मय्येव प्रहरेहि त्वं न स्त्रियं हन्तुमर्हसि । विशेषतोऽनपकृते परेणापकृते सति । ५९८५
नहीयं स्ववशा बाला कामयत्यद्य मामिह । चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ।
भगिनी तव दुर्बुद्धे राक्षसां वै यशोहर । त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ।
कामयत्यद्य मां भीरुस्तवनैषाऽपराध्यति । अनङ्गेन कृते दोषे नेमां गर्हितुमर्हसि ।
मयि तिष्ठति दुष्टात्मन्स्त्रियं हन्तुमर्हसि । सङ्गच्छस्व मया सार्द्धमेकेनैको नराशन ।
अहमेको नयिष्यामि त्वामद्य यमसादनं । अद्य मद्बलनिष्पिष्टं शिरो राक्षस दीर्य्यतां । ५९९०
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः । अद्य गात्राणि ते कङ्काः श्येना गोमायवस्तथा ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे । क्षणेनाद्य करिष्येऽहमिदं वनमराक्षसं । पुरा यद्दूषितं नित्यं त्वया भक्षयता नरान् ।
अद्य त्वां भगिनी रक्षः कृष्यमाणं मयाऽसकृत् । द्रक्ष्यत्यद्रि प्रतीकाशं सिंहेनेव महाद्विपं ।
निराबाधास्त्वयि हते मया राक्षसपांसन । वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ।
हिडिम्ब उवाच ॥ गर्जितेन वृथा किं ते कत्थितेन च मानुष । कृत्वैतत्कर्म्मणा सर्व्वं कत्थेथा मा चिरं कृथाः । ५९९५
बलिनं मन्यसे यच्चाप्यात्मानं सपराक्रमं । ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकं ।
न तावदेतान् हिंसिष्ये स्वपन्त्वेते यथा सुखं । एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियम्वदं ।
पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि । हनिष्यामि ततः पश्चादिमां विप्रियकारिणीं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः । अभ्यद्रवत संक्रुद्धो भीमसेनमरिन्दमं ।
तस्याभिद्रवतस्तूर्णं भीमो भीमपराक्रमः । वेगेन प्रहितं बाहुं निजग्राह हसन्निव । ६०००
निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह । तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ।
ततः स राक्षसः क्रुद्धः पाण्डवेन बलार्दितः । भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवं ।
पुनर्भीमो बलादेनं विचकर्ष महाबलः । मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति ।
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा । हिडिम्बो भीमसेनश्च विक्रमं चक्रतुः परं ।
बभञ्जतुस्तदा वृक्षाँल्लतास्चाकर्षतुस्तदा । मत्ताविव च संरब्धौ वारणौ षष्टिहायनौ । ६००५
तयोः शब्देन महता विबुद्धास्ते नरर्षभाः । सहमात्रा च ददृशुर्हिडिम्बामग्रतः स्थितां ।
इत्यादिपर्व्वणि हिडिम्बवधपर्व्वणि हिडिम्बभीमयुद्धे त्रयःपञ्चाशदधिकशततोऽध्यायः ॥ १५३ ॥
॥ वैशम्पायन उवाच ॥ प्रबुद्धास्ते हिडिम्बाया रूपंदृष्ट्वाऽतिमानुषं । विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ।
ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसम्पदा । उवाच मधुरं वाक्यं सान्त्वपूर्व्वमिदं शनैः ।

कस्य त्वं सुरगर्भाभे का वाऽसि वरवर्णिनि। केन कार्य्येण सम्प्राप्ता कुतश्चागमनं तव।
यदि वाऽस्य वनस्य त्वं देवता यदि वाऽप्सराः। आचक्ष्व मम तत्सर्व्वं किमर्थं चेह तिष्ठसि। ६०९०
॥ हिडिम्बोवाच॥ यदेतत्पश्यसि वनं नीलमेघनिभं महत्। निवासो राक्षसस्यैव हिडिम्बस्य ममैव च।
तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भाविनि। भ्रात्रा सम्प्रेषिता मार्य्ये त्वां सपुत्रां जिघांसितुं।
क्रूरबुद्धेरहं तस्य वचनादागता त्विह। अद्राक्षं नवहेमाभं तव पुत्रं महाबलं।
ततोऽहं सर्व्वभूतानां भावे विचरता शुभे। चोदितां तव पुत्रस्य मन्मथेन वशानुगा।
ततो वृतो मया भर्त्ता तव पुत्रो महाबलः। अपनेतुं च यतितो नचैव शकितो मया। ६०९५
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः। स्वयमेवागतो हन्तुमिमान्सर्व्वांस्तवात्मजान्।
स तेन मम कान्तेन तव पुत्रेण धीमता। बलादितो विनिष्पिष्य व्यपनीतो महात्मना।
विकर्षन्तौ महावेगौ गर्ज्जमानौ परस्परं। पश्यैतौ युधि विक्रान्तावेतौ च नरराक्षसौ।
॥ वैशम्पायन उवाच ॥ तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः। अर्जुनो नकुलश्चैव सहदेवश्च वीर्य्यवान्।
तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परं। काङ्क्षमाणौ जयं चैव सिंहाविव बलोत्कटौ। ६१००
यथाऽन्योन्यं समाश्लिष्य विकर्षन्तौ पुनः पुनः। दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः।
वसुधारेणुसंवीतौ वसुधाधरसन्निभौ। विभ्राजतुर्यथा शैलौ नीहारेणाभिसंवृतौ।
राक्षसेन तदा भीमं क्लिश्यमानं निरीक्ष्य च। उवाचेदं वचः पार्थः प्रहसञ्छनकैरिव।
भीम माभैर्महाबाहो न त्वां बुध्यामहे वयं। समेतं भीमरूपेण रक्षसा श्रमकर्षितः।
साहाय्येऽस्मि स्थितः पार्थ पातयिष्यामि राक्षसं। नकुलः सहदेवश्च मातरं गोपयिष्यतः। ६१०५
॥ भीमउवाच ॥ उदासीनो निरीक्षस्व न कार्य्यः संभ्रमस्त्वया। न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः।
॥ अर्जुन उवाच ॥ किमनेन चिरं भीम जीवता पापरक्षसा। गन्तव्यं न चिरं स्थातुमिह शक्यमरिन्दम।
पुरा संरज्यते प्राची पुरा सन्ध्या प्रवर्त्तते। रौद्रे मुहूर्त्ते रक्षांसि प्रबलानि भवन्त्युत।
त्वरस्व भीम माक्रीड जहि रक्षो विभीषणं। पुरा विकुरुते मायां भुजयोः सारमर्पय।
॥ वैशम्पायन उवाच ॥ अर्जुनेनैवमुक्तस्तु भीमो रोषाज्ज्वलन्निव। बलमाहारयामास यदायोर्जगतः क्षये। ६११०
ततस्तस्याम्बुदाभस्य भीमो रोषात्तु रक्षसः। उत्क्षिप्याभ्रामयद्देहं तूर्णं शतगुणं तदा।
॥ भीमउवाच ॥ वृथा मांसैर्वृथा पुष्टो वृथावृद्धो वृथामतिः। वृथा मरणमर्हस्त्वं वृथाऽद्य न भविष्यति।
क्षेममद्य करिष्यामि यथा वनमकण्टकं। न पुनर्मानुषान् हत्वा भक्षयिष्यसि राक्षस।
॥ अर्जुन उवाच ॥ यदि वा मन्यसे भारं त्वमिमं राक्षसं युधि। करोमि तव साहाय्यं शीघ्रमेव निपात्यतां।
अथ वाऽप्यहमेवैनं हनिष्यामि वृकोदर। कृतकर्म्मा परिश्रान्तः साधु तावदुपारम। ६११५
तस्य तद्वचनं श्रुत्वा भीमसेनोऽत्यमर्षणः। निष्पिष्यैनं बलाद्भूमौ पशुमारममारयत्।
स मार्य्यमाणो भीमेन ननाद विपुलं स्वनं। पूरयंस्तद्वनं सर्व्वं जलार्द्र इव दुन्दुभिः।
बाहुभ्यां योक्त्रयित्वा तु बलवान् पाण्डुनन्दनः। मध्ये भङ्क्त्वा महाबाहुर्हर्षयामास पाण्डवान्। हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः। अपूजयन्नरव्याघ्रं भीमसेनमरिन्दमं।

अभिपूज्य महात्मानं भीमं भीमपराक्रमं। पुनरेवार्ज्जुनो वाक्यमुवाचेदं वृकोदरं।

नदूरे नगरं मन्ये वनादस्मादहं विभो। शीघ्रं गच्छाम भद्रं ते न नो विद्यात् सुयोधनः। ६०४०

ततः सर्व्वे तथेत्युक्त्वा मात्रा सह महारथाः। प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी।

इत्यादिपर्व्वणि हिडिम्बवधपर्व्वणि हिडिम्बवधे चतुःपञ्चाशदधिकशततमोऽध्यायः॥ १५४॥

॥ भीमसेन उवाच॥ स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीं। हिडिम्बे व्रज पन्थानं त्वमिमं भ्रातृसेवितं।

॥ युधिष्ठिर उवाच॥ क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः। शरीरगुप्त्यभ्यधिकं धर्म्मं गोपाय पाण्डव।

वधाभिप्रायमायान्तमवधीस्त्वं महाबलं। रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति।

॥ वैशम्पायन उवाच॥ हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलिः। युधिष्ठिरञ्च कौन्तेयमिदं वचनमब्रवीत्। ६०४५

आर्य्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजं। तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे।

सोढुं तत्परमं दुःखं मया कालप्रतीक्षया। सोऽयमभ्यागतः कालो भविता मे सुखोदयः।

मया ह्युत्सृज्य सुहृदः स्वधर्म्मं स्वजनं तथा। वृतोऽयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे।

वीरेणाहं तथा तेन त्वया वाऽपि यशस्विनि। प्रत्याख्याता न जीवामि सत्यमेतद्ब्रवीमि ते।

तदर्हसि कृपां कर्त्तुं मयि त्वं वरवर्णिनि। मत्वा मूढेति तन्मां त्वं भक्ता वाऽनुगतेति वा। ६०५०

भर्त्राऽनेन महाभागे संयोजय सुतेन ते। तमुपादाय गच्छेयं यथेष्टं देवरूपिणं। पुनश्चैवानयिष्यामि विस्रम्भं कुरु मे शुभे।

अहं हि मनसा ध्याता सर्व्वान्नेष्यामि वः सदा। वृजिनात्तारयिष्यामि दुर्गेषु विषमेषु च।

पृष्ठेन वो वहिष्यामि शीघ्रां गतिमभीप्सतः। यूयं प्रसादं कुरुत भीमसेनो भजेत मां।

आपदस्तरणे प्राणान्धारयेद्येन तेन वा। सर्व्वमादृत्य कर्त्तव्यं तं धर्म्ममनुवर्त्तता।

आपत्सु यो धारयति धर्म्मं धर्म्मविदुत्तमः। व्यसनं ह्येव धर्म्मस्य धर्म्मिणामापदुच्यते। ६०५५

पुण्यं प्राणान्धारयति पुण्यं प्राणदमुच्यते। येन येनाचरेद्धर्म्मं तस्मिन्गर्हा न विद्यते।

॥ युधिष्ठिर उवाच॥ एवमेव यथात्थ त्वं हिडिम्बे नात्र संशयः। स्थातव्यं तु त्वया सत्ये यथा ब्रूयाः सुमध्यमे।

स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलं। भीमसेनं भजेथास्त्वं प्रागस्तगमनाद्रवेः।

अहःसु विहरानेन यथाकामं मनोजवा। अयं त्वानयितव्यस्ते भीमसेनः सदा निशि।

॥ वैशम्पायन उवाच॥ तथेति तत्प्रतिज्ञाय भीमसेनोऽब्रवीदिदं। शृणु राक्षसि सत्येन समयं ते वदाम्यहं। ६०६०

यावत्कालेन भवति पुत्रस्योत्पादनं शुभे। तावत्कालं गमिष्यामि त्वया सह सुमध्यमे।

॥ वैशम्पायन उवाच॥ तथेति तत्प्रतिज्ञाय हिडिम्बा राक्षसी तदा। भीमसेनमुपादाय सोर्द्ध्वमाचक्रमे ततः।

शैलशृङ्गेषु रम्येषु देवतायतनेषु च। मृगपक्षिविघुष्टेषु रमणीयेषु सर्व्वदा।

कृत्वा च रूपं परमं सर्व्वाभरणभूषिता। सञ्जल्पन्ती सुमधुरं रमयामास पाण्डवं।

तथैव वनदुर्गेषु पुष्पितद्रुमसानुषु। सरःसु रमणीयेषु पद्मोत्पलयुतेषु च। ६०६५

नदीद्वीपप्रदेशेषु वैदूर्य्यसिकतासु च। सुतीर्थवनतोयासु तथा गिरिनदीषु च।

काननेषु विचित्रेषु पुष्पितद्रुमवल्लिषु। हिमवद्गिरिकुञ्जेषु गुहासु विविधासु च।

प्रफुल्लशतपत्रेषु सरःस्वमलवारिषु । सागरस्य प्रदेशेषु मणिहेमचितेषु च ।
पल्वलेषु च रम्येषु महाशालवनेषु च । देवारण्येषु पुण्येषु तथा पर्व्वतसानुषु ।
गुह्यकानां निवासेषु तापसायतनेषु च । सर्व्वर्तुफलरम्येषु मानसेषु सरःसु च । ६०७०
बिभ्रती परमं रूपं रमयामास पाण्डवं । रमयन्ती तथा भीमं तत्र तत्र मनोजवा ।
प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलं । विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणं ।
भीमनादं सुताम्रोष्ठं तीक्ष्णदंष्ट्रं महाबलं । महेष्वासं महावीर्य्यं महासत्वं महाभुजं ।
महाजवं महाकायं महामायमरिन्दमं । दीर्घघोणं महोरस्कं विकटोद्बद्धपिण्डिकं ।
अमानुषं मानुषजं भीमवेगं महाबलं । यः पिशाचानतीत्यान्यान् बभूवातीव राक्षसान् । ६०७५
बालोऽपि यौवनं प्राप्तो मानुषेषु विशाम्पते । सर्व्वास्त्रेषु परं वीरः प्रकर्षमगमद्बली ।
सद्यो हि गर्भान्राक्षस्यो लभन्ते प्रसवन्ति च । कामरूपधराश्चैव भवन्ति बहुरूपिकाः ।
प्रणम्य विकचः पादावग्रह्णात्स पितुस्तदा । मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ।
घटो हास्योत्कच इति माता तं प्रत्यभाषत । अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह ।
अनुरक्तश्च तानासीत्पाण्डवान्स घटोत्कचः । तेषाञ्च दयितो नित्यमात्मनित्यो बभूव ह । ६०८०
संवाससमयो जीर्ण इत्याभाष्य ततस्तु तान् । हिडिम्बा समयं कृत्वा स्वां गतिं प्रत्यपद्यत ।
कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः । आमन्त्र्य रक्षसां श्रेष्ठः प्रतस्थे चोत्तरां दिशं ।
स हि सृष्टो मघवता शक्तिहेतोर्महात्मना । कर्णस्याप्रतिवीर्य्यस्य प्रतियोद्धा महारथः ।
इत्यादिपर्व्वणि हिडिम्बवधपर्व्वणि घटोत्कचोत्पत्तौ पञ्चपञ्चाशदधिकशततोऽध्यायः ॥ १५५ ॥
॥ वैशम्पायन उवाच ॥ ते वनेन वनं गत्वा घ्नन्तो मृगगणान्बहून् । अपक्रम्य ययू राजंस्त्वरमाणा महारथाः ।
मत्स्यांस्त्रिगर्त्तान्पाञ्चालान् कीचकानन्तरेण च । रमणीयान्वनोद्देशान् प्रेक्षमाणाः सरांसि च । ६०८५
जटाः कृत्वात्मनः सर्व्वे वल्कलाजिनवाससः । सह कुन्त्या महात्मानो बिभ्रतस्तापसं वपुः ।
क्वचिद्वहन्तो जननीं त्वरमाणा महारथाः । क्वचिच्छन्देन गच्छन्तस्ते जग्मुः प्रसभं पुनः । ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्व्वशः । नीतिशास्त्रञ्च सर्व्वज्ञा ददृशुस्ते पितामहं ।
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा । तस्थुः प्राञ्जलयः सर्व्वे सह मात्रा परन्तपाः ।
॥ व्यास उवाच ॥ मयेदं व्यसनं पूर्व्वं विदितं भरतर्षभाः । यथा तु तैरधर्म्मेण धार्त्तराष्ट्रैर्विवासिताः ।
तद्विदित्वाऽस्मि सम्प्राप्तश्चिकीर्षुः परमं हितं । न विषादोऽत्र कर्त्तव्यः सर्व्वमेतत्सुखाय वः । ६०९०
समास्ते चैव मे सर्व्वे यूयं चैव न संशयः । दीनतो बालतश्चैव स्नेहं कुर्व्वन्ति मानवाः ।
तस्मादभ्यधिकः स्नेहो युष्मासु मम साम्प्रतं । स्नेहपूर्व्वं चिकीर्षामि हितं वस्तन्निबोधत ।
इदं नगरमभ्याशे रमणीयं निरामयं । वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ।
॥ वैशम्पायन उवाच ॥ एवं स तान्समाश्वास्य व्यासः सत्यवतीसुतः । एकचक्रामभिगतः कुन्तीमाश्वासयत्प्रभुः ।
॥ व्यास उवाच ॥ जीवत्पुत्रि सुतस्तेऽयं धर्म्मनित्यो युधिष्ठिरः । धर्म्मेण पृथिवीं जित्वा महात्मा पुरुषर्षभः । पृथिव्यां पार्थिवान्सर्व्वान् प्रशासिष्यति धर्म्मराट् । ६०९५

पृथिवीमखिलां जित्वा सर्व्वां सागरमेखलां। भीमसेनार्जुनबलाद्भोक्ष्यते नात्र संशयः।
पुत्त्रास्तव च माद्र्याश्च सर्व्व एव महारथाः। स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसः सदा।
यक्ष्यन्ति च नरव्याघ्रा निर्ज्जित्य पृथिवीमिमां। राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः।
अनुगृह्य सुहृद्वर्गं भोगैश्वर्य्यसुखेन च। पितृपैतामहं राज्यमिहैव भोक्ष्यन्ति ते सुताः।
वैशम्पायन उवाच। एवमुक्त्वा निवेश्यैतान् ब्राह्मणस्य निवेशने। अब्रवीत्पार्थिवश्रेष्ठमृषिर्द्वैपायनस्तदा। ११००
इह मासं प्रतीक्षध्वमागमिष्याम्यहं पुनः। देशकालौ विदित्वैव लप्स्यध्वं परमां मुदं।
स तैः प्राञ्जलिभिः सर्व्वैस्तथेत्युक्तो नराधिप। जगाम भगवान् व्यासो यथागतमृषिः प्रभुः।
इत्यादिपर्व्वणि हिडिम्बवधपर्व्वणि व्यासदर्शने षट्पञ्चाशदधिकशततमोऽध्यायः समाप्तञ्चेदं हिडिम्बवधपर्व्व ॥ १५६ ॥

## ॥ अथ वकवधपर्व्व ॥ १० ॥

॥ जनमेजय उवाच ॥ एकचक्रां गतास्ते तु कुन्तीपुत्त्रा महारथाः। अत ऊर्द्ध्वं द्विजश्रेष्ठ किमकुर्व्वत पाण्डवाः।
॥ वैशम्पायन उवाच ॥ एकचक्रां गतास्ते तु कुन्तीपुत्त्रा महारथाः। ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने।
रमणीयानि पश्यन्तो वनानि विविधानि च। पार्थिवानपि चोद्देशान् सरितश्च सरांसि च। ११०५
चेरुर्भैक्षं तदा ते तु सर्व्व एव विशाम्पते। बभूवुर्नागराणाञ्च स्वैर्गुणैः प्रियदर्शनाः।
निवेदयन्ति स्म तदा कुन्त्या भैक्षं सदा निशि। तया विभक्तान् भागांस्ते भुञ्जते स्म पृथक् पृथक्।
अर्द्धं ते भुञ्जते वीराः सह मात्रा परन्तपाः। अर्द्धं सर्व्वस्य भैक्षस्य भीमो भुङ्क्ते महाबलः।
तथा तु तेषां वसतां तस्मिन् राष्ट्रे महात्मनां। अतिचक्राम सुमहान् कालोऽथ भरतर्षभ।
ततः कदाचित् भैक्षाय गतास्ते पुरुषर्षभाः। सङ्गत्या भीमसेनस्तु तत्रास्ते पृथया सह। १११०
अथार्त्तिजं महाशब्दं ब्राह्मणस्य निवेशने। भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत।
रोरूयमाणांस्तान् दृष्ट्वा परिदेवयतश्च सा। कारुण्यात्साधुभावाच्च कुन्ती राजन्न चक्षमे।
मथ्यमानेन दुःखेन हृदयेन पृथा तदा। उवाच भीमं कल्याणी कृपान्वितमिदं वचः।
वसाम सुसुखं पुत्त्र ब्राह्मणस्य निवेशने। अज्ञाता धार्त्तराष्ट्रस्य सत्कृता वीतमन्यवः।
सा चिन्तये सदा पुत्त्र ब्राह्मणस्यास्य किन्न्वहं। प्रियं कुर्य्यामिति गृहे यत्कुर्य्युरुषिताः सुखं। १११५
एतावान् पुरुषस्तात कृतं यस्मिन्न नश्यति। यावच्च कुर्य्यादन्योऽस्य कुर्य्यादभ्यधिकं ततः।
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवं। तत्रास्य यदि साहाय्यं कुर्य्याम सुकृतं भवेत्।
॥ भीमसेन उवाच ॥ ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितं। विदित्वा व्यवसिष्यामि यद्यपि स्यात्सुदुष्करं।
॥ वैशम्पायन उवाच ॥ एवं तौ कथयन्तौ च भूयः शुश्रुवतुः स्वनं। आर्त्तिजं तस्य विप्रस्य सभार्य्यस्य विशाम्पते।
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः। विवेश त्वरिता कुन्ती बद्धवत्सेव सौरभी। ११२०
ततस्तं ब्राह्मणं तत्र भार्य्यया च सुतेन च। दुहित्रा चैव सहितं ददर्शानतमाननं।
॥ ब्राह्मण उवाच ॥ धिगिदं जीवितं लोके गतसारमनर्थकं। दुःखमूलं पराधीनं भृशमप्रियभागि च।

जीविते परमं दुःखं जीविते परमो ज्वरः । जीविते वर्त्तमानस्य दुःखानामागमो ध्रुवः ।
आत्मा ह्येको हि धर्म्मार्थौ कामं चैव निषेवते । एतैश्च विप्रयोगोऽपि दुःखं परमनन्तकं ।
आहुः केचित्परं मोक्षं स च नास्ति कथञ्चन । अर्थप्राप्तौ तु नरकः कृत्स्न एवोपपद्यते । ६१२५
अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततोऽधिकं । जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरं ।
नहि योगं प्रपश्यामि येन मुच्येयमापदः । पुत्त्रदारेण वा सार्द्धं प्राद्रवेयमनामयं ।
यतितं वै मया पूर्व्वं वेत्थ ब्राह्मणि तत्त्वथा । क्षेमं यतस्ततो गन्तुं त्वया तु मम न श्रुतं ।
इह जाता विवृद्धाऽस्मि पिता चापि ममेति वै । उक्तवत्यसि दुर्म्मेधे याच्यमाना मयाऽसकृत् ।
स्वर्गतोऽपि पिता वृद्धस्तथा माता चिरं तव । बान्धवा भूतपूर्व्वाश्च तत्र वासे तु का रतिः । ६१३०
सोऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम । बन्धुप्रणाशः सम्प्राप्तो भृशं दुःखकरो मम ।
अथ वा मद्विनाशोऽयं नहि शक्ष्यामि किञ्चन । परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ।
सह धर्म्मचरीं दान्तां नित्यं मातृसमां मम । सखायं विहितां देवैर्न्नित्यं परमिकां गतिं ।
पित्रा मात्रा च विहितां सदा गार्हस्थ्यभागिनीं । वरयित्वा यथा न्यायं मन्त्रवत्परिणीय च ।
कुलीनां शीलसम्पन्नामपत्यजननीमपि । त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीं । परित्यक्तुं न शक्ष्यामि भार्य्यां नित्यमनुव्रतां । ६१३५
कुत एव परित्यक्तुं सुतं शक्ष्याम्यहं स्वयं । बालमप्राप्तवयसमजातव्यञ्जनाकृतिं ।
भर्त्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना । यया दौहित्रजाल्लोकानाशंसे पितृभिः सह ।
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे । मन्यन्ते केचिदधिकं स्नेहं पुत्त्रे पितुर्न्नराः । कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ ।
यस्यां लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखं । अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ।
आत्मानमपि चोत्सृज्य तप्स्यामि परलोकगः । त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुं । ६१४०
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः । आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ।
स कृच्छ्रामहमापन्नो न शक्तस्तर्त्तुमापदं । अहो धिक् कां गतिं त्वद्य गमिष्यामि सबान्धवः । सर्व्वैः सह मृतं श्रेयो नच मे जीवितं क्षमं ।

इत्यादिपर्व्वणि वकवधपर्व्वणि ब्राह्मणचिन्तायां सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

॥ ब्राह्मण्युवाच ॥ न सन्तापस्त्वया कार्य्यः प्राकृतेनेव कर्हिचित् । न हि सन्तापकालोऽयं वैद्यस्य तव विद्यते ।
अवश्यं निधनं सर्व्वैर्गन्तव्यमिह मानवैः । अवश्यम्भाविन्यर्थे वै सन्तापो नेह विद्यते ।
भार्य्या पुत्त्रोऽथ दुहिता सर्व्वमात्मार्थमिष्यते । व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र च । ६१४५
एतद्धि परमं नार्य्याः कार्य्यं लोके सनातनं । प्राणानपि परित्यज्य यद्भर्त्तृहितमाचरेत् ।
तच्च तत्र कृतं कर्म्म तवापीदं सुखावहं । भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करं ।
एष चैव गुरुर्धर्म्मो यं प्रवक्ष्याम्यहं तव । अर्थश्च तव धर्म्मश्च भूयानत्र प्रदृश्यते ।
यदर्थमिष्यते भार्य्या प्राप्तः सोऽर्थस्त्वया मयि । कन्या चैका कुमारश्च कृताऽहमनृणा त्वया ।

समर्थः पोषणे चापि सुतयोरक्षणे तथा । मत्तर्हि सुतयोः शक्ता तथा रक्षणपोषणे । ६१५०
मम हि त्वद्विहीनायाः सर्व्वप्राणधनेश्वर । कथं स्यातां सुतौ बालौ भवेयं च कथं त्वहं ।
कथं हि विधवाऽनाथा बालपुत्रा विना त्वया । मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ।
अहङ्कृताऽवलिप्तैश्च प्रार्थ्यमानामिमां सुतां । अयुक्तैस्तव सम्बन्धे कथं शक्ष्यामि रक्षितुं ।
उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः । प्रार्थयन्ति जनाः सर्व्वे पतिहीनां तथा स्त्रियं ।
साऽहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः । स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम । ६१५५
कथं तव कुलस्यैकामिमां बालामनागसं । पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ।
कथं शक्ष्यामि बालेऽस्मिन् गुणानाधातुमीप्सितान् । अनाथे सर्व्वतो लुप्ते यथा त्वं धर्म्मदर्शिवान् ।
इमामपि च ते बालामनाथां परिभूय मां । अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ।
तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहितां । प्रमथ्यैनां हरेयुस्ते हविर्ध्वांक्षा इवाध्वरात् ।
संप्रेक्षमाणा पुत्रं ते नानुरूपमिवात्मनः । अनर्हवशमापन्नामिमां चापि सुतां तव । ६१६०
अवज्ञाता च लोकेषु तथात्मानमजानती । अवलिप्तैर्नरैर्ब्रह्मन्मरिष्यामि न संशयः ।
तौ च हीनौ मया बालौ त्वया चैव तथात्मजौ । विनश्येतां न सन्देहो मत्स्याविव जलक्षये ।
त्रितयं सर्वथाऽप्येवं विनशिष्यत्यसंशयं । त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ।
व्युष्टिरेषा परा स्त्रीणां पूर्व्वं भर्त्तुः परां गतिं । गन्तुं ब्रह्मन्सपुत्राणामिति धर्म्मविदो विदुः ।
परित्यक्तः सुतश्चायं दुहितेयं तथा मया । बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितञ्च मे । ६१६५
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा । विशिष्यते स्त्रिया भर्त्तुर्नित्यं प्रियहिते स्थितिः ।
तदिदं यच्चिकीर्षामि धर्म्मं परमसम्मतं । इष्टञ्चैव हितञ्चैव तव चैव कुलस्य च ।
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः । आपद्धर्म्मप्रमोक्षाय भार्य्या चापि सतां मतं ।
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि ।
दृष्टादृष्टफलार्थं हि भार्य्या पुत्रो धनं गृहं । सर्व्वमेतद्विधातव्यं बुधानामेष निश्चयः । ६१७०
एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्द्धन । न समं सर्व्वमेवेति बुधानामेष निश्चयः ।
स कुरुष्व मया कार्य्यं तारयात्मानमात्मना । अनुजानीहि मामार्य्य सुतौ मे परिपालय ।
अवध्यां स्त्रियमित्याहुर्धर्म्मज्ञा धर्म्मनिश्चये । धर्म्मज्ञान् राक्षसानाहुर्न हन्यात्स च मामपि ।
निःसंशयं वधः पुंसां स्त्रीणां संशयितो वधः । अतो मामेव धर्म्मज्ञ प्रस्थापयितुमर्हसि ।
भुक्तं प्रियाण्यवाप्तानि धर्म्मश्च चरितो महान् । त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितं । ६१७५
जातपुत्रा च वृद्धा च प्रियकामा च ते सदा । समीक्ष्यैतदहं सर्व्वं व्यवसायं करोम्यतः ।
उत्सृज्यापि हि मामार्य्य प्राप्स्यस्यन्यामपि स्त्रियं । ततः प्रतिष्ठितो धर्म्मो भविष्यति पुनस्तव ।
न चाप्यधर्म्मः कल्याण बहुपत्नीकता नृणां । स्त्रीणामधर्म्मः सुमहान् भर्त्तुः पूर्व्वस्य लङ्घने ।
एतत्सर्व्वं समीक्ष्य त्वमात्मत्यागं च गर्हितं । आत्मानं तारयाद्याशु कुलं चेमौ च दारकौ ।

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तया भर्त्ता तां समालिङ्ग्य भारत। मुमोच बाष्पं शनकैः सभार्य्यो भृशदुःखितः। ६१८०

इत्यादिपर्व्वणि वकवधपर्व्वणि ब्राह्मणीवाक्ये अष्टपञ्चाशदधिकशततोऽध्यायः ॥ १५८ ॥

॥ वैशम्पायन उवाच ॥ तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तु। ततो दुःखपरीताङ्गी कन्या तावभ्यभाषत।
किमेवं भृशदुःखार्त्तौ रोरूयेतामनाथवत्। ममापि श्रूयतां वाक्यं श्रुत्वा च क्रियतां क्षमं।
धर्म्मतोऽहं परित्याज्या युवयोर्नात्र संशयः। त्यक्तव्यां मां परित्यज्य त्राहि सर्व्वं मयैकया।
इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति। अस्मिन्नुपस्थिते काले तरध्वं प्लववन्मया।
इह वा तारयेद्दुर्गादुत वा प्रेत्य भारत। सर्व्वथा तारयेत्पुत्त्रः पुत्त्र इत्युच्यते बुधैः। ६१८५
आकाङ्क्षन्ते च दौहित्रानपि नित्यं पितामहाः। तत्स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः।
भ्राता च मम बालोऽयं गते लोकममुं त्वयि। अचिरेणैव कालेन विनश्येत न संशयः।
तातेऽपि हि गते स्वर्गं विनष्टे च ममानुजे। पिण्डः पितॄणां व्युच्छिद्येत्तत्तेषां विप्रियं भवेत्।
पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयं। दुःखाद्दुःखतरं प्राप्य म्रियेयमतथोचिता।
त्वयि त्वरोगे निर्म्मुक्ते माता भ्राता च मे शिशुः। सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयं। ६१९०
आत्मा पुत्त्रः सखा भार्य्या कृच्छ्रन्तु दुहिता किल। स कृच्छ्रान्मोचयात्मानं माञ्च धर्म्मे नियोजय।
अनाथा कृपणा बाला यत्र क्वचन गामिनी। भविष्यामि त्वया तात विहीना कृपणा सदा।
अथवाऽहं करिष्यामि कुलस्यास्य विमोक्षणं। फलसंस्था भविष्यामि कृत्वा कर्म्म सुदुष्करं।
अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम। पीडिताऽहं भविष्यामि तदवेक्षस्व मामपि।
तदस्मदर्थं धर्म्मार्थं प्रसवार्थञ्च सत्तम। आत्मानं परिरक्षस्व त्यक्तव्यां माञ्च सन्त्यज। ६१९५
अवश्यकरणीये च मा त्वां कालोऽत्यगादयं। किन्नतः परमं दुःखं यद्वयं स्वर्गते त्वयि।
याचमानाः परादन्नं परिधावेमहि श्ववत्। त्वयि त्वरोगे निर्म्मुक्ते क्लेशादस्मात्सबान्धवे। अमृतेव सती लोके भविष्यामि सुखान्विता।
इतः प्रदाने देवाश्च पितरश्चेति नः श्रुतं। त्वया दत्तेन तोयेन भविष्यन्ति हिताय वै।
॥ वैशम्पायन उवाच ॥ एवं बहुविधं तस्या निशम्य परिदेवितं। पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः।
ततः प्ररुदितान्सर्व्वान्निशम्याथ सुतस्तदा। उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत्। ६२००
मा पितः क्रन्द मा मातर्म्मा स्वसस्त्विति चाब्रवीत्। प्रहसन्निव सर्व्वांस्तानेकैकमनुसर्पति।
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत्। अनेनाहं हनिष्यामि राक्षसं पुरुषादकं।
तथापि तेषां दुःखेन परीतानां निशम्य तत्। बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान्।
अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान्। गतासूनमृतेनेव जीवयन्तीदमब्रवीत्।

इत्यादिपर्व्वणि वकवधपर्व्वणि ब्राह्मणकन्यापुत्त्रवाक्ये ऊनषष्ट्यधिकशततोऽध्यायः ॥ १५९ ॥

॥ कुन्त्युवाच ॥ कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः। विदित्वाऽप्यपकर्षेयं शक्यं चेदपकर्षितुं। ६२०५
॥ ब्राह्मण उवाच ॥ उपपन्नं सतामेतद्यद्ब्रवीषि तपोधने। नतु दुःखमिदं शक्यं मानुषेण व्यपोहितुं।

समीपे नगरस्यास्य बको वसति राक्षसः। ईशो जनपदस्यास्य पुरस्य च महाबलः।
पुष्टो मानुषमांसेन दुर्बुद्धिः पुरुषादकः। रक्षत्यसुरराड् नित्यमिमं जनपदं बली।
नगरं चैव देशञ्च रक्षोबलसमन्वितं। तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयं।
वेतनं तस्य विहितं शालिवाहस्य भोजनं। महिषौ पुरुषश्चैको यस्तदादाय गच्छति। १२१०
एकैकश्चापि पुरुषस्तत्प्रयच्छति भोजनं। स वारो बहुभिर्वर्षैर्भवत्यसुकरो नरैः।
तद्विमोक्षाय ये केचिद्यतन्ति पुरुषाः क्वचित्। सपुत्रदारांस्तान्हत्वा तद्रक्षो भक्षयत्युत।
वेत्रकीयगृहे राजा नायं नयमिहास्थितः। उपायं तं न कुरुते यत्नादपि स मन्दधीः।
अनामयं जनस्यास्य येन स्यादद्य शाश्वतं। एतदर्हा वयं नूनं वसामो दुर्बलस्य ये। विषये नित्यमुद्विग्नाः कुराजानमु
पाश्रिताः।
ब्राह्मणाः कस्य वक्तव्याः कस्य वा छन्दचारिणः। गुणैरेते हि वत्स्यन्ति कामगाः पक्षिणो यथा। १२१५
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनं। त्रयस्य सञ्चयेनास्य ज्ञातीन्पुत्रांश्च तारयेत्।
विपरीतं मया चेदं त्रयं सर्व्वमुपार्ज्जितं। तदिमामापदं प्राप्य भृशं तप्यामहे वयं।
सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः। भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया।
न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित्। सुहृज्जनं प्रदातुञ्च न शक्ष्यामि कथञ्चन।
गतिञ्चैव न पश्यामि तस्मान्मोक्षाय रक्षसः। सोऽहं दुःखार्णवे मग्नो महत्यसुकरे भृशं। १२२०
सहैवैतैर्गमिष्यामि बान्धवैरद्य राक्षसं। ततो नः सहितान्क्षुद्रः सर्व्वानेवोपभोक्ष्यति।
इत्यादिपर्व्वणि बकवधपर्व्वणि कुन्तीप्रश्ने षष्ट्यधिकशततमोऽध्यायः॥ १६०॥
॥ कुन्त्युवाच ॥ न विषादस्त्वया कार्य्यो भयादस्मात्कथञ्चन। उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः।
एकस्तव सुतो बालः कन्या चैका तपस्विनी। न चैतयोस्तथा पत्न्या गमनं तव रोचये।
मम पञ्च सुता ब्रह्मंस्तेषामेको गमिष्यति। त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः।
ब्राह्मण उवाच। नाहमेतत्करिष्यामि जीवितार्थी कथञ्चन। ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणैर्वियोजनं। न त्वेतदकुलीनासु
नाधर्म्मिष्ठासु विद्यते। १२२५
यद्ब्राह्मणार्थे विसृजेदात्मानमपि चात्मजं। आत्मनस्तु मया श्रेयो बोद्धव्यमिति रोचये।
ब्रह्मवध्यात्मवध्या वा श्रेयानात्मवधो मम। ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते।
अबुद्धिपूर्व्वं कृत्वाऽपि वरमात्मवधो मम। न त्वहं वधमाकाङ्क्षे स्वयमेवात्मनः शुभे। परैः कृते वधे पापं न किञ्चिन्मयि विद्यते।
अभिसन्धिकृते तस्मिन् ब्राह्मणस्य वधे मया। निष्कृतिं न प्रपश्यामि नृशंसं क्षुद्रमेव च।
आगतस्य गृहं त्यागस्तथैव शरणार्थिनः। याचमानस्य च वधो नृशंसो गर्हितो बुधैः। १२३०
कुर्य्यान्न निन्दितं कर्म्म न नृशंसं कथञ्चन। इति पूर्व्वे महात्मान आपद्धर्म्मविदो विदुः।
श्रेयांस्तु सहदारस्य विनाशोऽद्य मम स्वयं। ब्राह्मणस्य वधं नाहमनुमंस्ये कदाचन।
॥ कुन्त्युवाच ॥ ममाप्येषा मतिर्ब्रह्मन्विप्रा रक्ष्या इति स्थिरा। न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत्।

नचासौ राक्षसः शक्तो मम पुत्त्रविनाशने। वीर्य्यवान्मन्त्रसिद्धश्च तेजस्वी च सुतो मम।
राक्षसाय च तत्सर्वं प्रापयिष्यति भोजनं। मोक्षयिष्यति चात्मानमिति मे निश्चिता मतिः। ६२३५
समागताश्च वीरेण दृष्टपूर्व्वाश्च राक्षसाः। बलवन्तो महाकाया निहताश्चाप्यनेकशः।
न त्विदं केषुचिद्ब्रह्मन्व्याहर्त्तव्यं कथञ्चन। विद्यार्थिनो हि मे पुत्त्रान्विप्रकुर्य्युः कुतूहलात्।
गुरुणा चाननुज्ञातो ग्राहयेद्यं सुतो मम। न स कुर्य्यात्तथा कार्य्यं विद्ययेति सतां मतं।
एवमुक्तस्तु पृथया स विप्रो भार्य्यया सह। हृष्टः सम्पूजयामास तद्वाक्यममृतोपमं।
ततः कुन्ती च विप्रश्च सहितावनिलात्मजं। तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ। ६२४०
इत्यादिपर्व्वणि बकवधपर्व्वणि भीमबकवधाङ्गीकारे एकषष्ट्यधिकशतोऽध्यायः ॥ १६१ ॥
॥ वैशम्पायन उवाच ॥ करिष्य इति भीमेन प्रतिज्ञातेऽथ भारत। आजग्मुस्ते ततः सर्व्वे भैक्षमादाय पाण्डवाः।
आकारेणैव तं ज्ञात्वा पाण्डुपुत्त्रो युधिष्ठिरः। रहः समुपविश्यैकस्ततः पप्रच्छ मातरं।
॥ युधिष्ठिर उवाच ॥ किं चिकीर्षत्ययं कर्म्म भीमो भीमपराक्रमः। भवत्यनुमते कच्चिदयं वा कर्त्तुमिच्छति।
॥ कुन्त्युवाच ॥ ममैव वचनादेष करिष्यति परन्तपः। ब्राह्मणार्थे महत्कृत्यं मोक्षाय नगरस्य च।
॥ युधिष्ठिर उवाच ॥ किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतं। परित्यागं हि पुत्त्रस्य न प्रशंसन्ति साधवः। ६२४५
कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि। लोकवेदविरुद्धं हि पुत्त्रत्यागात्कृतं त्वया।
यस्य बाहू समाश्रित्य सुखं सर्व्वे स्वपामहे। राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः।
यस्य दुर्य्योधनो वीर्य्यं चिन्तयन्नमितौजसः। न शेते रजनीः सर्व्वा दुःखाच्छकुनिना सह।
यस्य वीरस्य वीर्य्येण मुक्ता जतुगृहाद्वयं। अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः।
यस्य वीर्य्यं समाश्रित्य वसुपूर्णां वसुन्धरां। इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान्। ६२५०
तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया। कच्चिन्नु दुःखैर्बुद्धिस्ते विलुप्ता गतचेतसः।
॥ कुन्त्युवाच ॥ युधिष्ठिर न सन्तापस्त्वया कार्य्यो वृकोदरे। नचायं बुद्धिदौर्ब्बल्याद्व्यवसायः कृतो मया।
इह विप्रस्य भवने वयं पुत्त्र सुखोषिताः। अज्ञाता धार्त्तराष्ट्राणां सत्कृता वीतमन्यवः।
तस्य प्रतिक्रिया पार्थ मयेयं प्रसमीक्षिता। एतावानेव पुरुषः कृतं यस्मिन्न नश्यति।
यावच्च कुर्य्यादन्योऽस्य कुर्य्याद्बहुगुणं ततः। दृष्ट्वा भीमस्य विक्रान्तं तदा जतुगृहे महत्। ६२५५
हिडिम्बस्य वधाच्चैव विश्वासो मे वृकोदरे। बाह्वोर्बलं हि भीमस्य नागायुतसमं महत्।
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात्। वृकोदरेण सदृशो बलेनान्यो न विद्यते। यो व्यतीयाद्युधि श्रेष्ठमपि वज्रधरं स्वयं।
जातमात्रः पुरा चैव ममाङ्कात् पतितो गिरौ। शरीरगौरवादस्य शिला गात्रैर्व्विचूर्णिता।
तदहं प्रज्ञया ज्ञात्वा बलं भीमस्य पाण्डव। प्रतिकार्य्ये च विप्रस्य ततः कृतवती मतिं।
नेदं लोभान्न चाज्ञानान्न च मोहाद्विनिश्चितं। बुद्धिपूर्व्वन्तु धर्म्मस्य व्यवसायः कृतो मया। ६२६०
अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः। प्रतीकारश्च वासस्य धर्म्मश्च चरितो महान्।

यो ब्राह्मणस्य साहाय्यं कुर्य्यादर्थेषु कर्हिचित्। क्षत्रियः स शुभाल्लोकान् प्राप्नुयादिति मे मतिः।
क्षत्रियस्यैव कुर्व्वाणः क्षत्रियो वधमोक्षणं। विपुलां कीर्त्तिमाप्नोति लोकेऽस्मिंश्च परत्र च।
वैश्यस्यार्थे च साहाय्यं कुर्व्वाणः क्षत्रियो भुवि। स सर्व्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवं।
शूद्रन्तु मोक्षयेद्राजा शरणार्थिनमागतं। प्राप्नोतीह कुले जन्म सद्द्रव्ये राजपूजिते। ६२६५
एवं मां भगवान् व्यासः पुरा पौरवनन्दन। प्रोवाचासुकरप्रज्ञस्तस्मादेवं चिकीर्षितं।
इत्यादिपर्व्वणि बकवधपर्व्वणि कुन्तीयुधिष्ठिरवाक्ये द्विषष्ट्यधिकशततमोऽध्यायः॥ १६२ ॥
॥ युधिष्ठिर उवाच॥ उपपन्नमिदं मातस्त्वया यद्बुद्धिपूर्व्वकं। आर्त्तस्य ब्राह्मणस्यैतदनुक्रोशादिदं कृतं।
ध्रुवमेष्यति भीमोऽयं निहत्य पुरुषादकं। सर्व्वथा ब्राह्मणस्यार्थे यदनुक्रोशवत्यसि।
यथा त्विदं न विन्देयुर्नरा नगरवासिनः। तथाऽयं ब्राह्मणो वाच्यः परिग्राह्यश्च यत्नतः।
॥ वैशम्पायन उवाच॥ ततो रात्र्यां व्यतीतायामन्नमादाय पाण्डवः। भीमसेनो ययौ तत्र यत्रासौ पुरुषादकः। ६२७०
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली। आजुहाव ततो नाम्ना तदन्नमुपपादयन्।
ततः स राक्षसः क्रुद्धो भीमस्य वचनात्तदा। आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः।
महाकायो महावेगो दारयन्निव मेदिनीं। लोहिताक्षः करालश्च लोहितश्मश्रुमूर्द्धजः।
आकर्णाद्भिन्नवक्त्रश्च शङ्कुकर्णो विभीषणः। त्रिशिखां भ्रुकुटीं कृत्वा सन्दश्य दशनच्छदं।
भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः। विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत्। ६२७५
कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितं। पश्यतो मम दुर्ब्बुद्धिर्यियासुर्यमसादनं।
भीमसेनस्ततः श्रुत्वा प्रहसन्निव भारत। राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः।
रवं स भैरवं कृत्वा समुद्यम्य करावुभौ। अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः।
तथाऽपि परिभूयैनं प्रेक्षमाणो वृकोदरः। राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा।
अमर्षेण तु संपूर्णः कुन्तीपुत्रं वृकोदरं। जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः। ६२८०
तथा बलवता भीमः पाणिभ्यां भृशमाहतः। नैवावलोकयामास राक्षसं भुङ्क्त एव सः।
ततः स भूयः संक्रुद्धो वृक्षमादाय राक्षसः। ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली।
ततो भीमः शनैर्भुक्त्वा तदन्नं पुरुषर्षभः। वार्य्युपस्पृश्य संहृष्टस्तस्थौ युधि महाबलः।
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्य्यवान्। सव्येन पाणिना भीमः प्रहसन्निव भारत।
ततः स पुनरुद्यम्य वृक्षान् बहुविधान् बली। प्राहिणोद्भीमसेनाय तस्मै भीमश्च पाण्डवः। ६२८५
तद्वृक्षयुद्धमभवन्महीरुहविनाशनं। घोररूपं महाराज नरराक्षसराजयोः।
नाम विश्राव्य तु बकः समभिद्रुत्य पाण्डवं। भुजाभ्यां परिजग्राह भीमसेनं महाबलं।
भीमसेनोऽपि तद्रक्षः परिरभ्य महाभुजः। विस्फुरन्तं महाबाहुं विचकर्ष बलाद्बली।
स कृष्यमाणो भीमेन कर्षमाणश्च पाण्डवं। समयुज्यत तीव्रेण श्रमेण पुरुषादकः।
तयोर्व्वेगेन महता पृथिवी समकम्पत। पादपांश्च महाकायांश्चूर्णयामासतुस्तदा। ६२९०

हीयमानन्तु तद्रक्षः समीक्ष्य पुरुषादकं । निष्पिष्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः ।
ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव । बाहुना परिजग्राह दक्षिणेन शिरोधरां ।
सव्येन च कटीदेशे गृह्य वाससि पाण्डवः । तद्रक्षो द्विगुणं चक्रे रुवन्तं भैरवं रवं ।
ततोऽस्य रुधिरं वक्त्रात्प्रादुरासीद्विशाम्पते । भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः ।
इत्यादिपर्व्वणि वकवधपर्व्वणि वकभीमयुद्धे त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
॥ वैशम्पायन उवाच ॥ ततः स भग्नपार्श्वाङ्गो नदित्वा भैरवं रवं । शैलराजप्रतीकाशो गतासुरभवद्वकः । ६२९५
तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः । निष्पपात गृहाद्राजन् सहैव परिचारिभिः ।
तान् भीतान् विगतज्ञानान् भीमः प्रहरतां वरः । सान्त्वयामास बलवान् समये च न्यवेशयत् ।
न हिंस्या मानुषा भूयो युष्माभिरिह कर्हिचित् । हिंसतां हि वधः शीघ्रमेवमेव भवेदिति ।
तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत । एवमस्त्विति तं प्राहुर्जगृहुः समयञ्च तं ।
ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत । नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः । ६३००
ततो भीमस्तमादाय गतासुं पुरुषादकं । द्वारदेशे विनिक्षिप्य जगामानुपलक्षितः ।
दृष्ट्वा भीमबलोद्भूतं वकं विनिहतं तदा । ज्ञातयोऽस्य भयोद्विग्नाः प्रतिजग्मुस्ततस्ततः ।
ततः स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत् । आचचक्षे यथावृत्तं राज्ञः सर्व्वमशेषतः ।
ततो नरा विनिष्क्रान्ता नगरात्काल्यमेव तु । ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितं ।
तमद्रिकूटसदृशं विनिकीर्णं भयानकं । दृष्ट्वा संहृष्टरोमाणो बभूवुस्तत्र नागराः । ६३०५
एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः पुरे । ततः सहस्रशो राजन्नरा नगरवासिनः ।
तत्राजग्मुर्वकं द्रष्टुं सस्त्रीवृद्धकुमारकाः । ततस्ते विस्मिताः सर्व्वे कर्म्म दृष्ट्वाऽतिमानुषं । दैवतान्यर्च्चयाञ्चक्रुः सर्व्व एव विशाम्पते ।
ततः प्रगणयामासुः कस्य वारोऽद्य भोजने । ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व्व एव ते ।
एवं पृष्टः स बहुशो रक्षमाणश्च पाण्डवान् । उवाच नागरान् सर्व्वानिदं विप्रर्षभस्तदा ।
आज्ञापितं मामशने रुदन्तं सह बन्धुभिः । ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महामनाः । ६३१०
परिपृच्छ्य स मां पूर्व्वं परिक्लेशं पुरस्य च । अब्रवीद्ब्राह्मणश्रेष्ठो विश्वास्य प्रहसन्निव ।
प्रापयिष्याम्यहं तस्मा अन्नमेतद्दुरात्मने । मन्निमित्तं भयं चापि न कार्य्यमिति चाऽब्रवीत् ।
स तदन्नमुपादाय गतो वकवनं प्रति । तेन नूनं भवेदेतत्कर्म्म लोकहितं कृतं ।
ततस्ते ब्राह्मणाः सर्व्वे क्षत्रियाश्च सुविस्मिताः । वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा ।
ततो जानपदाः सर्व्वे आजग्मुर्नगरं प्रति । तदद्भुततमं दृष्ट्वा पार्थास्तत्रैव चावसन् । ६३१५
इत्यादिपर्व्वणि वकवधपर्व्वणि वकवधे चतुःषष्ट्यधिकशततमोऽध्यायः समाप्तञ्च वकवधपर्व्व ॥ १६४ ॥

## ॥ अथ चैत्ररथपर्व्व ॥ ११ ॥

॥ जनमेजय उवाच ॥ ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसं । अत ऊर्द्ध्वं ततो ब्रह्मन् किमकुर्व्वत पाण्डवाः ।
॥ वैशम्पायन उवाच ॥ तत्रैव न्यवसन् राजन्निहत्य बकराक्षसं । अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने ।
ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः । प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्याजगाम ह ।
स सम्यक् पूजयित्वा तं विप्रं विप्रर्षभस्तदा । ददौ प्रतिश्रयं तस्मै सदा सर्व्वातिथिव्रतः ।
ततस्ते पाण्डवाः सर्व्वे सह कुन्त्या नरर्षभाः । उपासाञ्चक्रिरे विप्रं कथयन्तं कथाः शुभाः । ६३२०
कथयामास देशांश्च तीर्थानि सरितस्तथा । राज्ञश्च विविधाश्चर्य्यान् देशांश्चैव पुराणि च ।
स तत्राकथयद्विप्रः कथान्ते जनमेजय । पाञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयम्बरं ।
धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिञ्च शिखण्डिनः । अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ।
तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः । विस्तरेणैव पप्रच्छुः कथान्ते पुरुषर्षभाः ।
॥ पाण्डवा ऊचुः ॥ कथं द्रुपदपुत्त्रस्य धृष्टद्युम्नस्य पावकात् । वेदीमध्याच्च कृष्णायाः सम्भवः कामद्भुतः । ६३२५
कथं द्रोणान्महेष्वासात् सर्व्वाण्यस्त्राण्यशिक्षत । कथं विप्र सखायौ तौ भिन्नौ कस्य कृतेन वा ।
॥ वैशम्पायन उवाच ॥ एवं तैश्चोदितो राजन् स विप्रः पुरुषर्षभैः । कथयामास तत्सर्व्वं द्रौपदीसम्भवं तदा ।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि द्रौपदीसम्भवे पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
॥ ब्राह्मण उवाच ॥ गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः । भरद्वाजो महाप्राज्ञः सततं संशितव्रतः ।
सोऽभिषेक्तुं ततो गङ्गां पूर्व्वमेवागतां सतीं । ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः ।
तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा । अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तदा । ६३३०
तस्यां संसक्तमनसः कौमारब्रह्मचारिणः । चिरस्यरेतश्चस्कन्द तदृषिर्द्रोण आदधे ।
ततः समभवद्द्रोणः कुमारस्तस्य धीमतः । अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्व्वशः ।
भारद्वाजस्य तु सखा पृषतो नाम पार्थिवः । तस्यापि द्रुपदो नाम तदा समभवत्सुतः ।
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः । चिक्रीडाध्ययनं चैव चकार क्षत्त्रियर्षभः ।
ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत् । द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्व्वशः । ६३३५
वनन्तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् । आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तम ।
॥ राम उवाच ॥ शरीरमात्रमेवाद्य मया समवशेषितं । अस्त्राणि वा शरीरं वा ब्रह्मन्नेकतमं वृणु ।
॥ द्रोण उवाच ॥ अस्त्राणि चैव सर्व्वाणि तेषां संहारमेव च । प्रयोगञ्चैव सर्व्वेषां दातुमर्हति मे भवान् ।
॥ ब्राह्मण उवाच ॥ तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः । प्रतिगृह्य तदा द्रोणः कृतकृत्योऽभवत्तदा ।
संप्रहृष्टमना द्रोणो रामात्परमसम्मतं । ब्रह्मास्त्रं समनुप्राप्य नरेष्वभ्यधिकोऽभवत् । ६३४०
ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् । अब्रवीत्पुरुषव्याघ्रः सखायं विद्धि मामिति ।
॥ द्रुपद उवाच ॥ नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा । नाराजा पार्थिवस्यापि सखिपूर्व्वं किमिष्यते ।
॥ ब्राह्मण वाच ॥ स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान् । जगाम कुरुमुख्यानां नगरं नागसाह्वयं ।

तस्मै पौत्रान्समादाय वसूनि विविधानि च। प्राप्ताय प्रददौ भीष्मः शिष्यान्द्रोणाय धीमते।

द्रोणः शिष्यांस्ततः पार्थानिदं वचनमब्रवीत्। समानीय तु तान् शिष्यान् द्रुपदस्यासुखाय वै। ६३४५

आचार्य्य वेतनं किञ्चिद्धृदि यद्वर्त्तते मम। कृतास्त्रैस्तत्प्रदेयं स्यात्तदृतं वदतानघाः। सोऽर्जुनप्रमुखैरुक्तस्तथाऽस्त्विति गुरुस्तदा।

यदा च पाण्डवाः सर्व्वे कृतास्त्राः कृतनिश्चयाः। ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः।

पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः। तस्मादाकृष्य तद्राज्यं मम शीघ्रं प्रदीयतां।

ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि। द्रोणाय दर्शयामासुर्ब्बद्ध्वा ससचिवं तदा।

द्रोण उवाच॥ प्रार्थयामि त्वया सख्यं पुनरेव नराधिप। अराजा किल नो राज्ञः सखा भवितुमर्हति। ६३५०

अतः प्रयतितं राज्ये यज्ञसेन त्वया सह। राजाऽसि दक्षिणे कूले भागीरथ्याऽहमुत्तरे।

॥ ब्राह्मण उवाच ॥ एवमुक्तो हि पाञ्चालो भारद्वाजेन धीमता। उवाचास्त्रविदां श्रेष्ठो द्रोणं ब्राह्मणसत्तमं।

एवं भवतु भद्रन्ते भारद्वाज महामते। सख्यं तदेव भवतु यथा त्वमभिमन्यसे।

एवमन्योन्यमुक्त्वा तौ कृत्वा सख्यमनुत्तमं। जग्मतुर्द्रोणपाञ्चालौ यथागतमरिन्दमौ।

असत्कारः स तु महान्मुहूर्त्तमपि तस्य तु। नापैति हृदयाद्राज्ञो दुर्म्मनाः स कृशोऽभवत्। ६३५५

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि द्रौपदीसम्भवे षट्षष्ट्यधिकशतोऽध्यायः॥ १६६ ॥

ब्राह्मण उवाच। अमर्षी द्रुपदो राजा कर्म्मसिद्धान्द्विजर्षभान्। अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून्।

पुत्रजन्म परीप्सन्वै शोकोपहतचेतनः। नास्ति श्रेष्ठमपत्यं मे इति नित्यमचिन्तयत्।

जातान्पुत्रांश्च निर्व्वेदाद्धिग्बन्धूनिति चाब्रवीत्। निःश्वासपरमश्चासीद्द्रोणं प्रतिचिकीर्षया।

प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च। क्षात्रेण च बलेनास्य चिन्तयन्नाध्यगच्छत।

प्रतिकर्त्तुं नृपश्रेष्ठो यतमानोऽपि भारत। अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन्। ६३६०

ब्राह्मणावसथं पुण्यमाससाद महीपतिः। तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः।

तथैव च महाभागः सोऽपश्यत्संशितव्रतौ। याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ।

संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ। तारणेयौ युक्तरूपौ ब्राह्मणावृषिसत्तमौ।

स तावामन्त्रयामास सर्व्वकामैरतन्द्रितः। बुद्ध्वा बलं तयोस्तत्र कनीयांसमुपह्वरे।

प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतं। पादशुश्रूषणे युक्तः प्रियवाक् सर्व्वकामदः। ६३६५

अर्च्चयित्वा यथान्यायमुपयाजमुवाच सः। येन मे कर्म्मणा ब्रह्मन्पुत्रः स्यात् द्रोणमृत्यवे। उपयाज कृते तस्मिन् गवां दाताऽस्मि तेऽर्ब्बुदं।

यदा तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत्। सर्व्वं तत्ते प्रदाताऽहं नहि मेऽत्रास्ति संशयः।

इत्युक्तो नाहमित्येवं तमृषिः प्रत्यभाषत। आराधयिष्यन्द्रुपदः स तं पर्य्यचरत्पुनः।

ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः। उपयाजोऽब्रवीत्काले राजन्मधुरया गिरा।

ज्येष्ठो भ्राता ममागृह्णाद्विचरन्गहने वने। अपरिज्ञातशौचायां भूमौ निपतितं फलं। ६३७०

तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन्। विमर्शं सङ्करादाने नायं कुर्य्यात्कदाचन।

मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी। नीलोत्पलसमो गन्धो यस्याः क्रोशात् प्रधावति। १८००
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि। देवदानवयक्षाणामीप्सितां देवरूपिणीं।
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी। सर्व्वयोषिद्वरा कृष्णा निनीषुः क्षत्रियान् क्षयं।
सुरकार्य्यमियं काले करिष्यति सुमध्यमा। अस्या हेतोः कौरवाणां महदुत्पत्स्यते भयं।
तच्छ्रुत्वा सर्व्वपाञ्चालाः प्रणेदुः सिंहसंघवत्। न चैतान्हर्षसम्पूर्णानियं सेहे वसुन्धरा।
तौ दृष्ट्वा पार्षती याजं प्रपेदे वै सुतार्थिनी। न वै मदन्यां जननीं जानीयातामिमाविति। १८०५
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया। तयोश्च नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः। धृष्टत्वादतिधृष्णुत्वाद्धुमाद्युत्सम्भवादपि। धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भविष्यति।
कृष्णेत्येवाब्रुवन्कृष्णां कृष्णा भूता हि वर्णतः। तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे।
धृष्टद्युम्नन्तु पाञ्चाल्यमानीय स्वं निवेशनं। उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान्।
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः। तथा तत्कृतवान्द्रोण आत्मकीर्त्त्यनुरक्षणात्।
इत्यादि पर्व्वणि चैत्ररथपर्व्वणि सप्तषष्ट्यधिकशततमोऽध्यायः॥१६७॥
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु कौन्तेयाः शल्यविद्धा इवाभवन्। सर्व्वे चास्वस्थमनसो बभूवुस्ते महाबलाः। १८१०
ततः कुन्ती सुतान्दृष्ट्वा सर्व्वांस्तद्गतचेतसः। युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी।
॥ कुन्त्युवाच ॥ चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने। रममाणाः पुरे रम्ये लब्धभैक्षा महात्मनः।
यानीह रमणीयानि वनान्युपवनानि च। सर्व्वाणि तानि दृष्टानि पुनःपुनररिन्दम।
पुनर्दृष्टुं हि तानीह प्रीणयन्ति न नस्तथा। भैक्ष्यञ्च न तथा वीर लभ्यते कुरुनन्दन।
ते वयं साधु पाञ्चालान्गच्छाम यदि मन्यसे। अपूर्व्वदर्शनं वीर रमणीयं भविष्यति। १८१५
सुभिक्षाश्चैव पाञ्चालाः श्रूयन्ते शत्रुकर्षण। यज्ञसेनश्च राजाऽसौ ब्रह्मण्य इति शुश्रुम।
एकत्र चिरवासश्च क्षमो न च मतो मम। ते तत्र साधु गच्छामो यदि त्वं पुत्र मन्यसे।
॥ युधिष्ठिर उवाच ॥ भवत्या यन्मतं कार्य्यं तदस्माकं परं हितं। अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः।
॥ वैशम्पायन उवाच ॥ ततः कुन्ती भीमसेनमर्ज्जुनं यमजौ तथा। उवाच गमनं ते च तथेत्येवाब्रुवंस्तदा।
तत आमन्त्र्य तं विप्रं कुन्ती राजसुतैः सह। प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मन। १८२०
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि पाञ्चालदेशयात्रायामष्टषष्ट्यधिकशततमोऽध्यायः॥१६८॥
॥ वैशम्पायन उवाच ॥ वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महात्मसु। आजगामाथ तान्द्रष्टुं व्यासः सत्यवतीसुत।
तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परन्तपाः। प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा।
समनुज्ञाप्य तान्सर्व्वानासीनान्मुनिरब्रवीत्। प्रच्छन्नं पूजितः पार्थैः प्रीतिपूर्व्वमिदं वचः।
अपि धर्म्मेण वर्त्तध्वं शास्त्रेण च परन्तपाः। अपि विप्रेषु पूजा वः पूजार्हेषु न हीयते।
अथ धर्म्मार्थवद्वाक्यमुक्त्वा स भगवानृषिः। विचित्राश्च कथास्तास्ताः पुनरेवेदमब्रवीत्। १८२५
॥ व्यास उवाच ॥ आसीत्तपोवने काचिदृषेः कन्या महात्मनः। विलग्नमध्या सुश्रोणी सुभ्रूः सर्व्वगुणान्विता।

कर्म्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत । नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ।
तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः । तोषयामास तपसा सा किलोग्रेण शङ्करं ।
तस्याः स भगवांस्तुष्टस्तामुवाच यशस्विनीं । वरं वरय भद्रं ते वरदोऽस्मीति शङ्करः ।
अथेश्वरमुवाचेदमात्मनः सा वचो हितं । पतिं सर्व्वगुणोपेतमिच्छामीति पुनः पुनः । ६४१०
तामथ प्रत्युवाचेदमीशानो वदतां वरः । पञ्च ते पतयो भद्रे भविष्यन्तीति भारताः ।
एवमुक्ता ततः कन्या देवं वरदमब्रवीत् । एकमिच्छाम्यहं देव त्वत्प्रसादात्पतिं प्रभो ।
पुनरेवाब्रवीद्देव इदं वचनमुत्तमं । पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः ।
देहमन्यद्गतायास्ते यथोक्तं तद्भविष्यति । द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी । निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ।
पाञ्चालनगरे तस्मान्निवसध्वं महाबलाः । सुखिनस्तामनुप्राप्य भविष्यथ न संशयः । ६४१५
एवमुक्त्वा महाभागः पाण्डवानां पितामहः । पार्थानामन्त्र्य कुन्तीञ्च प्रातिष्ठत महातपाः ।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि ऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
वैशम्पायन उवाच ॥ गते भगवति व्यासे पाण्डवा हृष्टमानसाः । ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः ।
समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टं परन्तपाः । ते त्वगच्छन्नहोरात्रात्तीर्थं सोमाश्रयायणं ।
आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः । उल्मुकन्तु समुद्यम्य तेषामग्रे धनञ्जयः । प्रकाशार्थं ययौ तत्र रक्षार्थञ्च महारथः ।
तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन् स्त्रियः । ईर्षुर्गन्धर्व्वराजो वै जलक्रीडामुपागतः । ६४२०
शब्दं तेषां स शुश्राव नदीं समुपसर्पतां । तेन शब्देन चाविष्टश्चुक्रोध बलवद्बली ।
स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा परन्तपान् । विस्फारयन्धनुर्घोरमिदं वचनमब्रवीत् ।
सन्ध्या संरज्यते घोरा पूर्व्वरात्रागमेषु या । अशीतिभिर्लवैर्हीनं तन्मुहूर्त्तं प्रचक्षते ।
विहितं कामचाराणां यक्षगन्धर्व्वरक्षसां । शेषमन्यन्मनुष्याणां कर्म्मचारेषु वै स्मृतं ।
लोभात्प्रचारं चरतस्तासु वेलासु वै नरान् । उपक्रान्ता निगृह्णीमो राक्षसैः सह बालिशान् । ६४२५
अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः । गर्हयन्ति नरान्सर्व्वान् बलस्थान्नृपतीनपि ।
आरात्तिष्ठत मा मह्यं समीपमुपसर्पत । कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलं ।
अङ्गारपर्णं गन्धर्व्वं वित्त मां स्वबलाश्रयं । अहं हि मानी चेर्षुश्च कुवेरस्य प्रियः सखा ।
अङ्गारपर्णमित्येवं ख्यातं चेदं वनं मम । अनुगङ्गं चरन्कामांश्चित्रं यत्र रमाम्यहं ।
न कौणपाः शृङ्गिणो वा न देवा नच मानुषाः । इदं समुपसर्पन्ति तत्किं समनुसर्पथ । ६४३०
॥ अर्जुन उवाच ॥ समुद्रे हिमवत्पार्श्वे नद्यामस्याञ्च दुर्म्मते । रात्रावहनि सन्ध्यायां कस्य गुप्तः परिग्रहः ।
भुक्तो वाऽप्यथ वाऽभुक्तो रात्रावहनि खेचर । न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वरां ।
वयञ्च शक्तिसम्पन्ना अकाले त्वामधृष्णुम । अशक्ता हि रणे क्रूर युष्मानर्चन्ति मानवाः ।
पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिःसृता । गङ्गा गत्वा समुद्राम्भः सप्तधा समपद्यत ।

गङ्गाञ्च यमुनाञ्चैव शुचज्जातां सरस्वतीं। रथस्थां सरयूञ्चैव गोमतीं गण्डकीं तथा। ६५५५

अपर्य्युषितपापास्ते नदीः सप्त पिबन्ति ये। इयं भूत्वा चैकवप्रा शुचिराकाशगा पुनः। देवेषु गङ्गा गन्धर्व्व प्राप्नोत्यलक नन्दतां।

तथा पितृन्वैतरणी दुस्तरा पापकर्म्मभिः। गङ्गा भवति वै प्राप्य कृष्णद्वैपायनोऽब्रवीत्।
असम्बाधा देवनदी स्वर्गसम्पादनी शुभा। कथमिच्छसि तां रोद्धुं नैष धर्म्मः सनातनः।
अनिवार्य्यमसम्बाधं तव वाचा कथं वयं। न स्पृशेम यथाकामं पुण्यं भागीरथीजलं।
॥ वैशम्पायन उवाच ॥ अङ्गारपर्णस्तच्छ्रुत्वा क्रुद्ध आनम्य कार्मुकं। मुमोच बाणान्निशितानहीनाशीविषानिव। ६५६०
उल्मुकं भ्रामयंस्तूर्णं पाण्डवश्चर्म्मचोत्तरं। व्यपोहत शरांस्तस्य सर्व्वानेव धनञ्जयः।
अर्जुन उवाच॥ बिभीषिका वै गन्धर्व्व नास्त्रज्ञेषु प्रयुज्यते। अस्त्रज्ञेषु प्रयुक्तेयं फेनवत्प्रविलीयते।
मानुषानतिगन्धर्व्वान्सर्व्वान्गन्धर्व्व लक्षये। तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया।
पुराऽस्त्रमिदमाग्नेयं प्रादात्किल बृहस्पतिः। भरद्वाजाय गन्धर्व्व गुरुर्म्मान्यः शतक्रतोः।
भरद्वाजादग्निवेश्य अग्निवेश्याद्गुरुर्म्मम। साध्विदं मह्यमददद्द्रोणो ब्राह्मणसत्तमः। ६५६५
वैशम्पायन उवाच॥ इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्व्वाय मुमोच ह। प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथन्तु तत्।
विरथं विप्लुतं तन्तु स गन्धर्व्वं महाबलं। अस्त्रतेजःप्रमूढञ्च प्रपतन्तमवाङ्मुखं।
शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः। भ्रातृन्प्रति चकर्षाथ सोऽस्त्रपातादचेतसं।
युधिष्ठिरं तस्य भार्य्या प्रपेदे शरणार्थिनी। नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती।
॥ गन्धर्व्युवाच॥ त्रायस्व मां महाभाग पतिं चेमं विमुञ्च मे। गन्धर्व्वी शरणं प्राप्ता नाम्ना कुम्भीनसी प्रभो। ६५७०
॥ युधिष्ठिर उवाच॥ युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमं। को निहन्याद्रिपुं तात मुञ्चेमं रिपुसूदन।
अर्जुन उवाच॥ जीवितं प्रतिपद्यस्व गच्छ गन्धर्व्व माशुचः। प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः।
॥ गन्धर्व्व उवाच ॥ जितोऽहं पूर्व्वकं नाम मुञ्चाम्यङ्गारपर्णतां। न च श्लाघे बलेनाङ्ग न नाम्ना जनसंसदि।
साध्विमं लब्धवाँल्लाभं योऽहं दिव्यास्त्रधारिणं। गान्धर्व्व्या मायवेच्छामि संयोजयितुमर्ज्जुनं।
अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः। सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवं। ६५७५
सम्भृता चैव विद्येयं तपसेह मया पुरा। निवेदयिष्ये तामद्य प्राणदाय महात्मने।
संस्तम्भयित्वा तरसा जितं शरणमागतं। यो रिपुं योजयेत्प्राणैः कल्याणं किं न सोऽर्हति।
चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः। ददौ स विश्वावसवे मम विश्वावसुर्ददौ।
सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति। आगमोऽस्या मया प्रोक्तो वीर्य्यं प्रति निबोध मे।
यच्चक्षुषा द्रष्टुमिच्छेत्त्रिषु लोकेषु किञ्चन। तत्पश्येद्यादृशं चेच्छेत्तादृशं द्रष्टुमर्हति। ६५८०
एकपादेन षण्मासान्स्थितो विद्यां लभेदिमां। अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रतेऽकृते।
विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः। अविशिष्टाश्च देवानामनुभावप्रदर्शिनः।
गन्धर्व्वजानामश्वानामहं पुरुषसत्तम। भ्रातृभ्यस्तव तुभ्यञ्च पृथग्दाता शतं शतं।

देवगन्धर्व्ववाहास्ते दिव्यवर्णा मनोजवाः। क्षीणाक्षीणा भवन्त्येते नहीयन्ते च रंहसः।
पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणं। दशधा शतधा चैव तच्छीर्णं वृत्रमूर्द्धनि। ६४८५
ततो भागीकृतो देवैर्वज्रभाग उपास्यते। लोके यशोधनं किञ्चित्सा वै वज्रतनुः स्मृता।
वज्रपाणिर्ब्राह्मणः स्यात्क्षत्रं वज्ररथं स्मृतं। वैश्या वै दानवज्राश्च कर्म्मवज्रा यवीयसः।
वर्ज्जं वज्रस्य भागेन अवध्या वाजिनः स्मृताः। रथाङ्गं वडवा सूते शूरास्त्वाश्वेषु ये मताः।
कामवर्णाः कामजवाः कामतः समुपस्थिताः। इति गन्धर्व्वजाः कामं पूरयिष्यन्ति मे हयाः।
अर्ज्जुन उवाच॥ यदि प्रीतेन मे दत्तं संशये जीवितस्य वा। विद्याधनं श्रुतं वाऽपि न तद्गन्धर्व्व रोचये। ६४९०
गन्धर्व्व उवाच। संयोगो वै प्रीतिकरो महत्सु प्रतिदृश्यते। जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते।
त्वत्तोऽप्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमं। तथैव योग्यं बीभत्सो चिराय भरतर्षभ।
अर्ज्जुन उवाच। त्वत्तोऽस्त्रेण वृणोम्यश्वान्संयोगः शाश्वतोऽस्तु नौ। सखे तद्ब्रूहि गन्धर्व्व युष्मभ्यो यद्भयं भवेत्।
कारणं ब्रूहि गन्धर्व्व किं तदेन स्म धर्षिताः। यान्तो वेदविदः सर्व्वे सन्तो रात्रावरिन्दमाः।
गन्धर्व्व उवाच। अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः। यूयं ततो धर्षिताः स्थ मया वै पाण्डुनन्दनाः। ६४९५
यक्षराक्षसगन्धर्व्वाः पिशाचोरगदानवाः। विस्तरं कुरुवंशस्य धीमन्तः कथयन्ति ते।
नारदप्रभृतीनान्तु देवर्षीणां मया श्रुतं। गुणान् कथयतां वीर पूर्व्वेषां तव धीमतां।
स्वयंचापि मया दृष्टश्चरता सागराम्बरां। इमां वसुमतीं कृत्स्नां प्रभावः सुकुलस्य ते।
वेदे धनुषि चाचार्य्यमभिजानामिऽते र्ज्जुन। विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनं।
धर्म्मं वायुञ्च शक्रञ्च विजानाम्यश्विनौ तथा। पाण्डुञ्च कुरुशार्दूल षडेतान्कुरुवर्द्धनान्। पितॄनेतानहं पार्थ देवमानुषसत्तमान्। ६५००
दिव्यात्मानो महात्मानः सर्व्वशस्त्रभृतांवराः। भवन्तो भ्रातरः शूराः सर्व्वे सुचरितव्रताः।
उत्तमाञ्च मनोबुद्धिं भवतां भावितात्मनां। जानन्नपि च वः पार्थ कृतवानिह धर्षणं।
स्त्रीसकाशे च कौरव्य न पुमान्क्षन्तुमर्हति। धर्षणामात्मनः पश्यन् बाहुद्रविणमाश्रितः।
नक्तञ्च बलमस्माकं भूय एवाभिवर्द्धते। यतस्ततो मां कौन्तेय सदारं मन्युराविशत्।
सोऽहं त्वयेह विजितः संख्ये तापत्यवर्द्धन। येन तेनेह विधिना कीर्त्यमानं निबोध मे। ६५०५
ब्रह्मचर्य्यं परो धर्म्मः स चापि नियतस्त्वयि। यस्मात्तस्मादहं पार्थ रणेऽस्मि विजितस्त्वया।
यस्तु स्यात्क्षत्रियः कश्चित्कामवृत्तः परन्तप। नक्तञ्च युधि युध्येत न स जीवेत्कथञ्चन।
यस्तु स्यात्कामवृत्तोऽपि पार्थ ब्रह्मपुरस्कृतः। जयेन्नक्तञ्चरान्सर्व्वान्सपुरोहितधूर्गतः।
तस्मात्तापत्य यत्किञ्चिन्नृणां श्रेय इहेप्सितं। तस्मिन् कर्म्मणि योक्तव्या दान्तात्मानः पुरोहिताः।
वेदे षडङ्गे निरताः शुचयः सत्यवादिनः। धर्म्मात्मानः कृतात्मानः स्युर्नृपाणां पुरोहिताः। ६५१०
जयश्च नियतो राज्ञः स्वर्गश्च तदनन्तरं। यस्य स्याद्धर्म्मविद्वाग्मी पुरोधाः शीलवान् शुचिः।
लाभं लब्धुमलब्धं वा लब्धं वा परिरक्षितुं। पुरोहितं प्रकुर्व्वीत राजा गुणसमन्वितं।
पुरोहितमते तिष्ठेद्य इच्छेद्भूतिमात्मनः। प्राप्तुं वसुमतीं सर्व्वां सर्व्वशः सागराम्बरां।

नहि केवलशौर्य्येण तापत्याभिजनेन च। जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित्।
तस्मादेवं विजानीहि कुरूणां वंशवर्द्धन। ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरं। ६५१५

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि गन्धर्व्ववाक्ये सप्तत्यधिकशततमोऽध्यायः॥ १७०॥

॥ अर्जुन उवाच॥ तापत्य इति यद्वाक्यमुक्तवानसि मामिह। तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयं।
तपती नाम का चैषा तापत्या यत्कृते वयं। कौन्तेया हि वयं साधो तत्त्वमिच्छामि वेदितुं।
॥ वैशम्पायन उवाच॥ एवमुक्तः स गन्धर्व्वः कुन्तीपुत्रं धनञ्जयं। विश्रुतं त्रिषु लोकेषु श्रावयामास वै कथां।
॥ गन्धर्व्व उवाच॥ हन्त ते कथयिष्यामि कथामेतां मनोरमां। यथावदखिलां पार्थ सर्व्वबुद्धिमतां वर।
उक्तवानस्मि येन त्वां तापत्य इति यद्वचः। तत्तेऽहं कथयिष्यामि शृणुष्वैकमना भव। ६५२०
य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा। एतस्य तपती नाम बभूव सदृशी सुता।
विवस्वतो वै देवस्य सावित्र्यवरजा विभो। विश्रुता त्रिषु लोकेषु तपती तपसा युता।
न देवी नासुरी चैव न यक्षी नच राक्षसी। नाप्सरा नच गन्धर्व्वी तथा रूपेण काचन।
सुविभक्ताऽनवद्याङ्गी स्वसितायतलोचना। स्वाचारा चैव साध्वी च सुवेशा चैव भामिनी।
न तस्याः सदृशं किञ्चित्त्रिषु लोकेषु भारत। भर्त्तारं सविता मेने रूपशीलगुणश्रुतैः। ६५२५
सम्प्राप्तयौवनां पश्यन्देयां दुहितरन्तु तां। नोपलेभे ततः शान्तिं सम्प्रदानं विचिन्तयन्।
अथर्क्षपुत्रः कौन्तेय कुरूणामृषभो बली। सूर्य्यमाराधयामास नृपः सम्बरणस्तदा।
अर्घ्यमाल्योपहाराद्यैर्गन्धैश्च नियतः शुचिः। नियमैरुपवासैश्च तपोभिर्व्विविधैरपि।
शुश्रूषुरनहंवादी शुचिः पौरवनन्दनः। अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान्।
ततः कृतज्ञं धर्म्मज्ञं रूपेणासदृशं भुवि। तपत्याः सदृशं मेने सूर्य्यः सम्बरणं पतिं। ६५३०
दातुमैच्छत्ततः कन्यां तस्मै सम्बरणाय तां। नृपोत्तमाय कौरव्य विश्रुताभिजनाय च।
यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा। तथा भुवि महीपालो दीप्त्या सम्बरणोऽभवत्।
यथाऽर्च्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः। तथा सम्बरणं पार्थ ब्राह्मणावरजाः प्रजाः।
स सोममतिकान्तत्वादादित्यमतितेजसा। बभूव नृपतिः श्रीमान्सुहृदां दुर्हृदामपि।
एवंगुणस्य नृपतेस्तथावृत्तस्य कौरव। तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयं। ६५३५
स कदाचिदथो राजा श्रीमानमितविक्रमः। चचार मृगयां पार्थ पर्व्वतोपवने किल।
चरतो मृगयां तस्य क्षुत्पिपासासमन्वितः। ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः।
स मृताश्वश्चरन् पार्थ पद्भ्यामेव गिरौ नृपः। ददर्शासदृशीं लोके कन्यामायतलोचनां।
स एक एकामासाद्य कन्यां परबलार्द्दनः। तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः।
स हि तां तर्कयामास रूपतो नृपतिः श्रियं। पुनः सन्तर्कयामास रवेर्भ्रष्टामिव प्रभां। ६५४०
वपुषा वर्चसा चैव शिखामिव विभावसोः। प्रसन्नत्वेन कान्त्या च चन्द्ररेखामिवामलां।
गिरिपृष्ठे तु सा यस्मिन् स्थिता स्वसितलोचना। विभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी।

तस्या रूपेण स गिरिर्वेषेण च विशेषतः। स सवृक्षक्षुपलतो हिरण्मय इवाऽभवत्।
अवमेने च तां दृष्ट्वा सर्व्वलोकेषु योषितः। अवाप्तं चात्मनो मेने स राजा चक्षुषः फलं।
जन्मप्रभृति यत्किञ्चिद्दृष्टवान्स महीपतिः। रूपं न सदृशं तस्यास्तर्कयामास किञ्चन। ६५४५
तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा। न चचाल ततो देशाद्बुबुधे नच किञ्चन।
अस्या नूनं विशालाक्ष्याः सदेवासुरमानुषं। लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतं।
एवं स तर्कयामास रूपद्रविणसम्पदा। कन्यामसदृशीं लोके नृपः संवरणस्तदा।
ताञ्च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः। जगाम मनसा चिन्तां कामबाणेन पीडितः।
दह्यमानः स तीव्रेण नृपतिर्मन्मथाग्निना। अप्रगल्भां प्रगल्भस्तां तदोवाच मनोहरां। ६५५०
काऽसि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि। कथञ्च निर्जनेऽरण्ये चरस्येका शुचिस्मिते।
त्वं हि सर्व्वानवद्याङ्गी सर्व्वाभरणभूषिता। विभूषणमिवैतेषां भूषणानामभीप्सितं।
न देवीं नासुरीं चैव न यक्षीं नच राक्षसीं। नच भोगवतीं मन्ये न गन्धर्व्वीं न मानुषीं।
या हि दृष्टा मया काश्चिच्छ्रुता वाऽपि वराङ्गनाः। न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि।
दृष्ट्वैव चारुवदने चन्द्रात्कान्ततरं तव। वदनं पद्मपत्राक्षं मां मथ्नातीव मन्मथः। ६५५५
एवं तां स महीपालो बभाषे न तु सा तदा। कामार्त्तं निर्जनेऽरण्ये प्रत्यभाषत किञ्चन।
ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा। सौदामिनीव चाभ्रेषु तत्रैवान्तरधीयत।
तामन्वेष्टुं स नृपतिः परिचक्राम सर्व्वतः। वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा।
अपश्यमानः स तु तां बहु तत्र विलप्य च। निश्चेष्टः पार्थिवश्रेष्ठो मुहूर्त्तं स व्यतिष्ठत।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि तपत्युपाख्याने एकसप्तत्यधिकशततमोऽध्यायः॥ १७१ ॥
गन्धर्व्व उवाच ॥ अथ तस्यामदृश्यायां नृपतिः काममोहितः। पातनः शत्रुसङ्घानां पपात धरणीतले। ६५६०
तस्मिन्निपतिते भूमावथ सा चारुहासिनी। पुनः पीनायतश्रोणी दर्शयामास तं नृपं।
अथावभाषे कल्याणी वाचा मधुरया नृपं। तं कुरूणां कुलकरं कामाभिहतचेतसं।
उवाच मधुरं वाक्यं तपती प्रहसन्निव। उत्तिष्ठोत्तिष्ठ भद्रन्ते न त्वमर्हस्यरिन्दम।
मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ। एवमुक्तोऽथ नृपतिर्व्वाचा मधुरया तदा। ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थितां।
अथ तामसितापाङ्गीमाबभाषे स पार्थिवः। मन्मथाग्निपरीतात्मा सन्दिग्धाक्षरया गिरा। ६५६५
साधु त्वमसितापाङ्गि कामार्त्तं मत्तकाशिनि। भजस्व भजमानं मां प्राणा हि प्रजहन्ति मां।
त्वदर्थं हि विशालाक्षि मामयं निशितैः शरैः। कामः कमलगर्भाभे प्रति विध्यन्न शाम्यति।
दष्टमेवमनाक्रन्दे भद्रे काममहाहिना। सा त्वं पीनायतश्रोणि मामाप्नुहि वरानने।
त्वदधीना हि मे प्राणाः किन्नरोद्गीतभाषिणि। चारुसर्व्वानवद्याङ्गि पद्मेन्दुप्रतिमानने।
न ह्यहं त्वदृते भीरु शक्ष्यामि खलु जीवितुं। कामः कमलपत्राक्षि प्रतिविध्यति मामयं। ६५७०

तस्मात्कुरु विशालाक्षि मय्यनुक्रोशमङ्गने। भक्तं मामसितापाङ्गि न परित्यक्तुमर्हसि।
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भाविनि। त्वद्दर्शनकृतस्नेहं मनश्चलति मे भृशं।
न त्वां दृष्ट्वा पुनरन्यां द्रष्टुं कल्याणि रोचते। प्रसीद वशगोऽहं ते भक्तं मां भज भाविनि।
दृष्ट्वैव त्वां वरारोहे मन्मथो भृशमङ्गने। अन्तर्गतं विशालाक्षि विध्यति स्म पतत्रिभिः।
मन्मथाग्निसमुद्भूतं दाहं कमललोचने। प्रीतिसंयोगयुक्ताभिरद्भिः प्रह्लादयस्व मे। ६५७५
पुष्पायुधं दुराधर्षं प्रचण्डशरकार्मुकं। त्वद्दर्शनसमुद्भूतं विध्यन्तं दुःसहैः शरैः।
उपशामय कल्याणि आत्मदानेन भाविनि। गान्धर्व्वेण विवाहेन मामुपेहि वराङ्गने।
विवाहानां हि रम्भोरु गान्धर्व्वः श्रेष्ठ उच्यते। तपत्युवाच। नाहमीशात्मनो राजन् कन्या पितृमती ह्यहं। मयि चेदस्ति
ते प्रीतिर्याचस्व पितरं मम। यथा हि ते मया प्राणाः संगृहीता नरेश्वर। दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः।
न चाहमीशा देहस्य तस्मान्नृपतिसत्तम। समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः।
का हि सर्व्वेषु लोकेषु विश्रुताभिजनं नृपं। कन्या नाभिलषेन्नाथं भर्त्तारं भक्तवत्सलं। ६५८०
तस्मादेव गते काले याचस्व पितरं मम। आदित्यं प्रणिपातेन तपसा नियमेन च।
स चेत्कामयते दातुं तव मामरिसूदन। भविष्याम्यद्य ते राजन्सततं वशवर्त्तिनी।
अहं हि तपती नाम सावित्र्यवरजा सुता। अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि तपत्युपाख्याने द्विसप्तत्यधिकशततोऽध्यायः॥ १७२॥
॥ गन्धर्व्व उवाच॥ एवमुक्त्वा ततस्तूर्णं जगामोर्द्ध्वमनिन्दिता। स तु राजा पुनर्भूमौ तत्रैव निपपात ह।
अन्वेषमाणः सबलस्तं राजानं नृपोत्तमं। अमात्यः सानुयात्रश्च तं ददर्श महावने। ६५८५
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितं। तं हि दृष्ट्वा महेष्वासं निरस्तं पतितं भुवि।
बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना। त्वरया चोपसङ्गम्य स्नेहादागतसम्भ्रमः।
तं समुत्थापयामास नृपतिं काममोहितं। भूतलाद्भूमिपालेशं पितेव पतितं सुतं।
प्रज्ञया वयसा चैव वृद्धः कीर्त्त्या नयेन च। अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः।
उवाच चैनं कल्याण्या वाचा मधुरयोत्थितं। माभैर्मनुजशार्दूल भद्रमस्तु तवानघ। ६५९०
क्षुत्पिपासापरिश्रान्तं तर्कयामास वै नृपं। पतितं पातनं संख्ये शात्रवाणां महीतले।
वारिणा च सुशीतेन शिरस्तस्याभ्यषेचयत्। अस्फुटत् मुकुटं राज्ञः पुण्डरीकसुगन्धिना।
तत. प्रत्यागतप्राणस्तद्बलं बलवान्नृपः। सर्व्वं विसर्ज्जयामास तमेकं सचिवं विना।
ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलं। स तु राजा गिरिप्रस्थे तस्मिन्पुनरुपाविशत्।
ततस्तस्मिन्गिरिवरे शुचिर्भूत्वा कृताञ्जलिः। आरिराधयिषुः सूर्य्यं तस्थावूर्द्ध्वमुखः क्षितौ। ६५९५
जगाम मनसा चैव वशिष्ठमृषिसत्तमं। पुरोहितममित्रघ्नं तदा संवरणो नृपः।
नक्तन्दिनमथैकत्र स्थिते तस्मिन् जनाधिप। अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि।
स विदित्वैव नृपतिं तपत्या हृतमानसं। दिव्येन विधिना ज्ञात्वा भावितात्मा महानृषिः।

तथा तु नियतात्मानं तं नृपं मुनिसत्तमः। आवभाषे स धर्म्मात्मा तस्यैवार्थचिकीर्षया।

स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः। ऊर्द्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः। ६६००

सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः। वशिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत्।

तमुवाच महातेजा विवस्वान्मुनिसत्तमं। महर्षे स्वागतं तेऽस्तु कथयस्व यथेप्सितं।

यदिच्छसि महाभाग मत्तः प्रवदतांवर। तत्ते दद्यामभिप्रेतं यद्यपि स्यात्सुदुष्करं।

एवमुक्तः स तेनर्षिर्वशिष्ठः प्रत्यभाषत। प्रणिपत्य विवस्वन्तं भानुमन्तं महातपाः।

॥ वशिष्ठ उवाच ॥ यैषा ते तपती नाम सावित्र्यवरजा सुता। तां त्वां संवरणस्यार्थे वरयामि विभावसो। ६६०५

स हि राजा बृहत्कीर्त्तिर्धर्म्मार्थविदुदारधीः। युक्तः संवरणो भर्त्ता दुहितुस्ते विहङ्गम।

इत्युक्तः स तदा तेन ददानीत्येव निश्चितः। प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः।

वरः संवरणो राज्ञां त्वमृषीणां वरो मुने। तपती योषितां श्रेष्ठा किमन्यदपवर्ज्जनात्।

ततः सर्व्वानवद्याङ्गीं तपतीं तपनः स्वयं। ददौ संवरणस्यार्थे वशिष्ठाय महात्मने।

प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा। वशिष्ठोऽथ विसृष्टस्तु पुनरेवाजगाम ह। ६६१०

यत्र विख्यातकीर्त्तिः स कुरूणामृषभोऽभवत्। स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना।

दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीं। वशिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ।

रुरुचे साऽधिकं सुभ्रूरापतन्ती नभस्तलात्। सौदामिनीव विभ्रष्टा द्योतयन्ती दिशस्त्विषा।

कृच्छ्राद्द्वादशरात्रे तु तस्य राज्ञः समाहिते। आजगाम विशुद्धात्मा वशिष्ठो भगवानृषिः।

तपसाराध्य वरदं देवं गोपतिमीश्वरं। लेभे संवरणो भार्य्यां वशिष्ठस्यैव तेजसा। ६६१५

ततस्तस्मिन्गिरिश्रेष्ठे देवगन्धर्व्वसेविते। जग्राह विधिवत्पाणिं तपत्याः स नरर्षभः।

वशिष्ठेनाभ्यनुज्ञातस्तस्मिन्नेव धराधरे। सोऽकामयत राजर्षिर्विहर्त्तुं सह भार्य्यया।

ततः पुरे च राष्ट्रे च वनेषूपवनेषु च। आदिदेश महीपालस्तमेव सचिवं तदा।

नृपतिं त्वभ्यनुज्ञाप्य वशिष्ठोऽथापचक्रमे। सोऽथ राजा गिरौ तस्मिन्विजहारामरो यथा।

ततो द्वादशवर्षाणि काननेषु वनेषु च। रेमे तस्मिन्गिरौ राजा तयैव सह भार्य्यया। ६६२०

तस्य राज्ञः पुरे तस्मिन्समा द्वादश सत्तम। न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य भारत।

ततस्तस्यामनावृष्ट्यां प्रवृत्तायामरिन्दम। प्रजाः क्षयमुपाजग्मुः सर्व्वाः सस्थाणुजङ्गमाः।

तस्मिंस्तथाविधे काले वर्त्तमाने सुदारुणे। नावश्यायः पपातोर्व्व्यां ततः सस्यानि नारुहन्।

ततो विभ्रान्तमनसो जनाः क्षुद्भयपीडिताः। गृहाणि संपरित्यज्य बभ्रमुः प्रदिशो दिशः।

ततस्तस्मिन्पुरे राष्ट्रे त्यक्तदारपरिग्रहाः। परस्परममर्य्यादाः क्षुधार्त्ता जघ्निरे जनाः। ६६२५

तत्क्षुधार्त्तैर्निराहारैः शवभूतैस्तथा नरैः। अभवत्प्रेतराजस्य पुरं प्रेतैरिवावृतं।

ततस्तु तादृशं दृष्ट्वा स एव भगवानृषिः। अभ्यवर्षत धर्म्मात्मा वशिष्ठो मुनिसत्तमः।

तञ्च पार्थिवशार्दूलमानयामास तत्पुरं। तपत्या सहितं राजन् व्युषितं शाश्वतीः समाः।

ततः प्रविष्टस्तत्रासौ यथापूर्व्वं सुरारिहा । तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः ।
प्रववर्ष सहस्राक्षः शस्यानि जनयन्प्रभुः । ततः सराष्ट्रं मुमुदे तत्पुरं परया मुदा । तेन पार्थिवमुख्येन भावितं भावितात्मना । ११३०
ततो द्वादशवर्षाणि पुनरीजे नराधिपः । तपत्या सहितः पत्न्या यथा शच्या मरुत्पतिः ।
॥ गन्धर्व्व उवाच ॥ एवमासीन्महाभागा तपती नाम पौर्व्विकी । तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः ।
तस्यां सञ्जनयामास कुरुं संवरणो नृपः । तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्ज्जुन ।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि तापत्ये त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ वैशम्पायन उवाच ॥ स गन्धर्व्ववचः श्रुत्वा तत्तदा भरतर्षभ । अर्ज्जुनः परया भक्त्या पूर्णचन्द्र इवाबभौ ।
उवाच च महेष्वासो गन्धर्व्वं कुरुसत्तमः । जातकौतूहलोऽतीव वशिष्ठस्य तपोबलात् । ११३५
वशिष्ठ इति यस्यैतदृषेर्नाम त्वयेरितं । एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ।
य एष गन्धर्व्वपते पूर्व्वेषां नः पुरोहितः । आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ।
गन्धर्व्व उवाच ॥ ब्रह्मणो मानसः पुत्रो वशिष्ठोऽरुन्धतीपतिः । तपसा निर्ज्जितौ शश्वदजेयावमरैरपि ।
कामक्रोधावुभौ यस्य चरणौ संववाहतुः । यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः । विश्वामित्रापराधेन धारयन्मन्युमुत्तमं ।
पुत्रव्यसनसन्तप्तः शक्तिमानप्यशक्तवत् । विश्वामित्रविनाशाय न चक्रे कर्म्म दारुणं । ११४०
मृतांश्च पुनराहर्त्तुं यः स पुत्रान्यमक्षयात् । कृतान्तं नातिचक्राम वेलामिव महोदधिः ।
यं प्राप्य विजितात्मानं महात्मानं नराधिपाः । इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमां ।
पुरोहितमिमं प्राप्य वशिष्ठमृषिसत्तमं । ईजिरे क्रतुभिश्चैव नृपास्ते कुरुनन्दन ।
स हि तान्याजयामास सर्व्वान्नृपतिसत्तमान् । ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ।
तस्माद्धर्म्मप्रधानात्मा वेदधर्म्मविदीप्सितः । ब्राह्मणो गुणवान् कश्चित्पुरोधाः प्रतिदृश्यतां । ११४५
क्षत्रियेणाभिजातेन पृथिवीं जेतुमिच्छता । पूर्व्वं पुरोहितः कार्य्यः पार्थ राज्याभिवृद्धये ।
महीं जिगीषता राज्ञा ब्रह्म कार्य्यं पुरःसरं ।
तस्मात्पुरोहितः कश्चिद्गुणवान्विजितेन्द्रियः । विद्वान्भवतु वो विप्रो धर्म्मकामार्थतत्त्ववित् ।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि पुरोहितकरणकथने चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
अर्ज्जुन उवाच । किंनिमित्तमभूद्वैरं विश्वामित्रवशिष्ठयोः । वसतोराश्रमे दिव्ये शंस नः सर्व्वमेव तत् ।
गन्धर्व्व उवाच । इदं वाशिष्ठमाख्यानं पुराणं परिचक्षते । पार्थ सर्व्वेषु लोकेषु यथावत्तन्निबोध मे । ११५०
कान्यकुब्जे महानासीत्पार्थिवो भरतर्षभ । गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः ।
तस्य धर्म्मात्मनः पुत्रः समृद्धबलवाहनः । विश्वामित्र इतिख्यातो बभूव रिपुमर्द्दनः ।
स चचार सहामात्यो मृगयां गहने वने । मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ।
व्यायामकर्षितः सोऽथ मृगलिप्सुः पिपासितः । आजगाम नरश्रेष्ठ वशिष्ठस्याश्रमं प्रति ।
तमागतमभिप्रेक्ष्य वशिष्ठः श्रेष्ठभागृषिः । विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया । ११५५

पाद्यार्घ्याचमनीयेन स्वागतेन च भारत । तथैव परिजग्राह वन्येन हविषा तथा ।
तस्याथ कामधुग्धेनुर्वशिष्ठस्य महात्मनः । उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे तदा ।
ग्राम्यारण्याश्चौषधीश्च दुदुहे पय एव च । षड्रसं चामृतनिभं रसायनमनुत्तमं ।
भोजनीयानि पेयानि भक्ष्याणि विविधानि च । लेह्यान्यमृतकल्पानि चोष्याणि च तथाऽर्जुन ।
रत्नानि च महार्हाणि वासांसि विविधानि च । तैः कामैः सर्व्वसंपूर्णैः पूजितश्च महीपतिः । सामात्यः सबलश्चैव तुतोष स भृशं तदा । ६६६०
षडुन्नतां सुपार्श्वोरुं पृथुपञ्चसमावृतां । मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दितां ।
सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमां । पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य तां ।
अभिनन्द्य स तां राजन्नन्दिनीं गाधिनन्दनः । अब्रवीच्च भृशं तुष्टः स राजा तमृषिं तदा ।
अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः । नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ।
॥ वशिष्ठ उवाच ॥ देवताऽतिथिपित्रर्थं याज्यार्थञ्च पयस्विनी । अदेया नन्दिनीयं वै राज्येनापि तवानघ । ६६६५
॥ विश्वामित्र उवाच ॥ क्षत्रियोऽहं भवान्विप्रस्तपःस्वाध्यायसाधनः । ब्राह्मणेषु कुतो वीर्य्यं प्रशान्तेषु धृतात्मसु ।
अर्ब्बुदेन गवां यस्त्वं न ददासि ममेप्सितं । स्वधर्म्मं न प्रहास्यामि नेष्यामि च बलेन गां ।
॥ वशिष्ठ उवाच ॥ बलस्थश्चासि राजा च बाहुवीर्य्यश्च क्षत्रियः । यथेच्छसि तथा क्षिप्रं कुरु मा त्वं विचारय
॥ गन्धर्व्व उवाच ॥ एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव । हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गां ।
कशादण्डप्रणुदितां काल्यमानामितस्ततः । हम्भायमाना कल्याणी वशिष्ठस्याथ नन्दिनी । ६६७०
आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी । भृशञ्च ताड्यमाना वै न जगामाश्रमात्ततः ।
॥ वशिष्ठ उवाच ॥ शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः । ह्रियसे त्वं बलाद्भद्रे विश्वामित्रेण नन्दिनि
किंकर्त्तव्यं मया तत्र क्षमावान्ब्राह्मणो ह्यहं ।
॥ गन्धर्व्व उवाच ॥ सा भयान्नन्दिनी तेषां बलानां भरतर्षभ । विश्वामित्रभयोद्विग्ना वशिष्ठं समुपागमत् ।
॥ गौरुवाच ॥ कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् । विश्वामित्रबलैर्घोरैर्भगवन्किमुपेक्षसे ।
॥ गन्धर्व्व उवाच ॥ नन्दिन्यामेवं क्रन्दन्त्यां धर्षितायां महामुनिः । न चुक्षुभे तदा धैर्य्यान्न चचाल धृतव्रतः । ६६७५
॥ वशिष्ठ उवाच ॥ क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलं । क्षमा मां भजते यस्माद्गम्यतां यदि रोचते ।
॥ नन्दिन्युवाच ॥ किन्नु त्यक्ताऽस्मि भगवन्यदेवं त्वं प्रभाषसे । अत्यक्ताऽहं त्वया ब्रह्मन्नेतुं शक्या नवै बलात् ।
॥ वशिष्ठ उवाच ॥ न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते । दृढेन दाम्ना बद्ध्वैष वत्सस्ते ह्रियते बलात् ।
॥ गन्धर्व्व उवाच ॥ स्थीयतामिति तच्छ्रुत्वा वशिष्ठस्य पयस्विनी । ऊर्द्ध्वाञ्चितशिरोग्रीवा प्रबभौ रौद्रदर्शना ।
क्रोधरक्तेक्षणा सा गौर्हम्भारवघनस्वना । विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्व्वशः । ६६८०
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः । क्रोधरक्तेक्षणा क्रोधं भूय एव समादधे ।
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्ब्बभौ । अङ्गारवर्षं मुञ्चन्ती मुहुर्व्वालधितो महत् ।
असृजत्पह्लवान्पुच्छात्प्रस्रवाद्द्राविडाञ्छकान् । योनिदेशाच्च यवनान् शकृतः शवरान्बहून् ।

मुखतश्चासृजत्काचीञ्छकृतः शबरांस्तथा। मूत्रतश्चासृजच्चापि पौण्ड्रान्किरातान्यवनान्सिंहलान्बर्ब्बरान् खसान्।
चिबुकांश्च पुलिन्दांश्च चीनान्हूणान्सकेरलान्। ससर्ज फेनतः सा गौर्म्लेच्छान्बहुविधानपि। ६६८५

तैर्विसृष्टैर्महासैन्यैर्नानाम्लेच्छगणैस्तदा। नानावरणसंछन्नैर्नानायुधधरैस्तथा।
अवाकीर्य्यत संरब्धैर्विश्वामित्रस्य पश्यतः। एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः।
अस्त्रवर्षेण महता बध्यमानं बलं तदा। प्रभग्नं सर्व्वतस्त्रस्तं विश्वामित्रस्य पश्यतः।
न च प्राणैर्वियुज्यन्ते केचित्तत्रास्य सैनिकाः। विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ।
सा गौस्तत्सकलं सैन्यं कालयामास दूरतः। विश्वामित्रस्य तत्सैन्यं काल्यमानं त्रियोजनं। ६६९०

क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत। दृष्ट्वा तन्महदाश्चर्य्यं ब्रह्मतेजोभवं तदा।
विश्वामित्रः क्षत्रभावान्निर्व्विण्णो वाक्यमब्रवीत्। धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलं।
बलाबलं विनिश्चित्य तप एव परं बलं। स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियं।
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे। स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा।
तताप सर्व्वान्दीप्तौजा ब्राह्मणत्वमवाप्तवान्। अपिबच्च ततः सोममिन्द्रेण सह कौशिकः। ६६९५

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि वाशिष्ठे विश्वामित्रपराभवे पञ्चसप्तत्यधिकशततोऽध्यायः॥ १७५॥

॥ गन्धर्व्व उवाच॥ कल्माषपाद इत्येवं लोके राजा बभूव ह। इक्ष्वाकुवंशजः पार्थ तेजसाऽसदृशो भुवि।
स कदाचिद्वनं राजा मृगयां निर्य्ययौ पुरात्। मृगान्विध्यन्वराहांश्च चचार रिपुमर्द्दनः।
तस्मिन् वने महाघोरे खड्गांश्च बहुशोऽहनत्। हत्वा च सुचिरं श्रान्तो राजा निववृते ततः।
अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान्। स तु राजा महात्मानं वाशिष्ठमृषिसत्तमं।
तृष्णार्त्तश्च क्षुधार्त्तश्च एकायनगतः पथि। अपश्यदजितः संख्ये मुनिं प्रतिमुखागतं। ६७००

शक्तिं नाम महाभागं वशिष्ठकुलवर्द्धनं। ज्येष्ठं पुत्रं पुत्रशताद्वशिष्ठस्य महात्मनः।
अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत्। तथा ऋषिरुवाचैनं सान्त्वयन् श्लक्ष्णया गिरा।
मम पन्था महाराज धर्म्म एष सनातनः। राज्ञा सर्व्वेषु धर्म्मेषु देयः पन्था द्विजातये।
एवं परस्परं तौ तु पथोऽर्थं वाक्यमूचतुः। अपसर्प्पापसर्प्पेति वागुत्तरमकुर्व्वतां।
ऋषिस्तु नापचक्राम तस्मिन्धर्म्मपथे स्थितः। नापि राजा मुनेर्म्मानात्क्रोधाच्चापि जगाम ह। ६७०५

अमुञ्चन्तन्तु पन्थानं तमृषिं नृपसत्तमः। जघान कशया मोहात्तदा राक्षसवन्मुनिं।
कशाप्रहाराभिहतस्ततः स मुनिसत्तमः। तं शशाप नृपश्रेष्ठं वाशिष्ठः क्रोधमूर्च्छितः।
हंसि राक्षसवद्यस्माद्राजापसद तापसं। तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यसि।
मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमां। गच्छ राजाधमेत्युक्तः शक्तिना वीर्य्यशक्तिना।
ततो याज्यनिमित्तन्तु विश्वामित्रवशिष्ठयोः। वैरमासीत्तदा तन्तु विश्वामित्रोऽन्वपद्यत। ६७१०

तयोर्विवदतोरेवं समीपमुपचक्रमे। ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान्।
ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः। ऋषेः पुत्रं वशिष्ठस्य वशिष्ठमिव तेजसा।

अन्तर्द्धाय ततोऽऽत्मानं विश्वामित्रोऽपि भारत। तावुभावतिचक्राम चिकीर्षन्नात्मनः प्रियं।
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः। जगाम शरणं शक्तिं प्रसादयितुमैहयत्।
तस्य भावं विदित्वा स नृपतेः कुरुसत्तम। विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति। ६७१५
शापात्तस्य तु विप्रर्षेर्विश्वामित्रस्य चाज्ञया। राक्षसः किङ्करो नाम विवेश नृपतिं तदा।
रक्षसा तं गृहीतं तु विदित्वा मुनिसत्तमः। विश्वामित्रोऽप्यपाक्रामत्तस्माद्देशादरिन्दम।
ततः स नृपतिस्तेन रक्षसान्तर्गतेन च। बलवत्पीडितः पार्थ नान्वबुध्यत किञ्चन।
ददर्शाथ द्विजः कश्चिद्राजानं प्रस्थितं वनं। ययाचे क्षुधापन्नः स मांसं भोजनं तदा।
तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा। आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्त्तं प्रतिपालय। ६७२०
निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितं। इत्युक्त्वा प्रययौ राजा तस्थौ स द्विजसत्तमः।
ततो राजा परिक्रम्य यथाकामं यथासुखं। निवृत्तोऽन्तःपुरं पार्थ प्रविवेश महामनाः।
ततोऽर्द्धरात्र उत्थाय सूदमानाय्य सत्वरं। उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतं।
गच्छामुष्मिन्वनोद्देशे ब्राह्मणो मां प्रतीक्षते। अन्नार्थी तं त्वमन्नेन समांसेनोपपादय।
॥ गन्धर्व्व उवाच ॥ एवमुक्तस्ततः सूदः सोऽनासाद्यामिषं क्वचित्। निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः। ६७२५
राजा तु रक्षसाविष्टः सूदमाह गतव्यथः। अप्येनं नरमांसेन भोजयेति पुनः पुनः।
तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनां। गत्वा जहार त्वरितो नरमांसमपेतभीः।
स तत्संस्कृत्य विधिवदन्नोपहितमाशु वै। तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने।
स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः। अभोज्यमिदमित्याह क्रोधपर्य्याकुलेक्षणः।
॥ ब्राह्मण उवाच ॥ यस्मादभोज्यमन्नं मे ददाति स नृपाधमः। तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा। ६७३०
सक्ता मानुषमांसेषु यथोक्तः शक्तिना पुरा। उद्वेजनीयो भूतानां चरिष्यति महीमिमां।
द्विरनुव्याहृते राज्ञः स शापो बलवानभूत्। रक्षोबलसमाविष्टो विसंज्ञश्चाभवन्नृपः।
ततः स नृपतिश्रेष्ठो रक्षसाऽपहृतेन्द्रियः। उवाच शक्तिं तं दृष्ट्वा नचिरादिव भारत।
यस्मादसदृशः शापः प्रयुक्तोऽयं मयि त्वया। तस्मात्त्वत्तः प्रवर्त्तिष्ये खादितुं पुरुषानहं।
एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयुज्य च। शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितं। ६७३५
शक्तिं तन्तु मृतं दृष्ट्वा विश्वामित्रः पुनः पुनः। वशिष्ठस्यैव पुत्रेषु तद्रक्षः सन्दिदेश ह।
स तानवरजान्पुत्रान्वशिष्ठस्य महात्मनः। भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव।
वशिष्ठो घातितान्श्रुत्वा विश्वामित्रेण तान्सुतान्। धारयामास तं शोकं महाद्रिरिव मेदिनीं।
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः। नत्वेव कौशिकोच्छेदं मेने मतिमतां वरः।
स मेरुकूटादात्मानं मुमोच भगवानृषिः। गिरेस्तस्य शिलायान्तु तूलराशाविवापतत्। ६७४०
न ममार च पातेन स यदा तेन पाण्डव। तदाग्निमिद्धं भगवान्संविवेश महावने।
तं तदा सुसमिद्धोऽपि न ददाह हुताशनः। दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः।

स समुद्रमभिप्रेक्ष्य शोकाविष्टो महामुनिः। बद्ध्वा कण्ठे शिलां गुर्व्वीं निपपात तदाम्भसि।
स समुद्रोर्म्मिवेगेन स्थले न्यस्तो महामुनिः। जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि वाशिष्ठे वशिष्ठशोके षट्सप्तत्यधिकशततमोऽध्यायः ॥१७६॥
॥ गन्धर्व्व उवाच ॥ ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्म्मुनिः। निर्ज्जगाम सुदुःखार्त्तः पुनरप्याश्रमात्ततः। ६७०५
सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा। वृक्षान्बहुविधान्पार्थ हरन्तीं तीरजान् बहून्।
अथ चिन्तां समापेदे पुनः कौरवनन्दन। अम्भस्यस्यां निमज्जेयमिति दुःखसमन्वितः।
ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः। तस्या जले महानद्या निममज्ज सुदुःखितः।
अथ छित्त्वा नदी पाशांस्तस्यारिबलसूदन। स्थलस्थं तमृषिं कृत्वा विपाशं समवासृजत्।
उत्ततार ततः पाशैर्व्विमुक्तः स महानृषिः। विपाशेति च नामास्या नद्याश्चक्रे महानृषिः। ६७१०
शोके बुद्धिं तदा चक्रे न चैकत्र व्यतिष्ठत। सोऽगच्छत्पर्व्वतांश्चैव सरितश्च सरांसि च।
दृष्ट्वा स पुनरेवर्षिर्नदीं हैमवतीं तदा। चण्डग्राहवतीं भीमां तस्याः स्रोतस्यपातयत्।
सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा। शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता।
ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना। मर्त्तुं न शक्यामीत्युक्त्वा पुनरेवाश्रमं ययौ।
स गत्वा विविधान् शैलान्देशान् बहुविधांस्तथा। अदृश्यन्त्याख्यया वध्वाऽथाश्रमेऽनुसृतोऽभवत्। ६७१५
अथ शुश्राव संस्कृत्या वेदाध्ययननिःस्वनं। पृष्ठतः परिपूर्णार्थं षड्भिरङ्गैरलङ्कृतं।
अनुव्रजति कोऽन्वेष मामित्येवाथ सोऽब्रवीत्। अहमित्यदृश्यन्तीमं सा स्नुषा प्रत्यभाषत। शक्तेर्भार्य्या महाभाग तपोयुक्ता तपस्विनी।
वशिष्ठ उवाच ॥ पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः। पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः।
अदृश्यन्त्युवाच। अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते। समा द्वादश तस्येह वेदानभ्यस्यतो मुने।
गन्धर्व्व उवाच। एवमुक्तस्तया हृष्टो वशिष्ठः श्रेष्ठभागृषिः। अस्ति सन्तानमित्युक्त्वा मृत्योः पार्थ न्यवर्त्तत। ६७२०
ततः प्रतिनिवृत्तः स तया वध्वा सहानघ। कल्माषपादमासीनं ददर्श विजने वने।
स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत। आविष्टो रक्षसोग्रेण इयेषात्तुं तदा मुनिं।
अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्म्माणमग्रतः। भयसंविग्नया वाचा वशिष्ठमिदमब्रवीत्।
असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः। प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति दारुणः।
तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन। त्वदृतेऽद्य महाभाग सर्व्ववेदविदांवर। ६७२५
पाहि मां भगवन् पापादस्माद्दारुणदर्शनात्। राक्षसोऽयमिहात्तुं वै नूनमावां समीहते
वशिष्ठ उवाच। माभैः पुत्रि न भेतव्यं राक्षसात्तु कथञ्चन। नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितं।
राजा कल्माषपादोऽयं वीर्य्यवान्प्रथितो भुवि। स एषोऽस्मिन्वनोद्देशे निवसत्यतिभीषणः।
गन्धर्व्व उवाच। तमापतन्तं संप्रेक्ष्य वशिष्ठो भगवानृषिः। वारयामास तेजस्वी हुङ्कारेणैव भारत।
मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा। मोक्षयामास वै शापात्तस्माद्योगान्नराधिपं। ६७३०

स हि द्वादशवर्षाणि वशिष्ठस्यैव तेजसा । ग्रस्त आसीद्गृहेणेव पर्व्वकाले दिवाकरः ।

रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् । तेजसा रञ्जयामास सन्ध्याभ्रमिव भास्करः ।

प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलिः । उवाच नृपतिः काले वशिष्ठमृषिसत्तमं ।

सौदासोऽहं महाभाग याज्यस्ते मुनिसत्तम । अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ।

वशिष्ठ उवाच ॥ वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि वै । ब्राह्मणांश्च मनुष्येन्द्र माऽवमंस्थाः कदाचन । ६७७५

राजोवाच ॥ नावमंस्ये महाभाग कदाचिद्ब्राह्मणर्षभान् । त्वन्निदेशे स्थितः सम्यक्पूजयिष्याम्यहं द्विजान् ।

इक्ष्वाकूणाञ्च येनाहमनृणः स्यां द्विजोत्तम । तत्त्वत्तः प्राप्तुमिच्छामि सर्व्ववेदविदांवर ।

अपत्यमीप्सितं मह्यं दातुमर्हसि सत्तम । शीलरूपगुणोपेतमिक्ष्वाकुकुलवृद्धये ।

गन्धर्व्व उवाच ॥ ददानीत्येव तं तत्र राजानं प्रत्युवाच ह । वशिष्ठः परमेष्वासं सत्यसन्धो द्विजोत्तमः ।

ततःप्रतिययौ काले वशिष्ठः सह तेन वै । ख्यातां पुरीमिमां लोकेष्वयोध्यां मनुजेश्वर । ६७८०

तं प्रजाः प्रतिमोदन्त्यः सर्व्वाः प्रत्युद्गतास्तदा । विपाप्मानं महात्मानं दिवौकस इवेश्वरं ।

सुचिराय मनुष्येन्द्रो नगरीं पुण्यलक्षणां । विवेश सहितस्तेन वशिष्ठेन महर्षिणा ।

ददृशुस्तं महीपालमयोध्यावासिनो जनाः । पुरोहितेन सहितं दिवाकरमिवोदितं ।

स च तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः । अयोध्यां व्योमशीतांशुः शरत्काल इवोदितः ।

संसिक्तमृष्टपन्थानं पताकाध्वजशोभितं । मनः प्रह्लादयामास तस्य तत्पुरमुत्तमं । ६७८५

तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन । अशोभत तदा तेन शक्रेणेवामरावती ।

ततः प्रविष्टे राजर्षौ तस्मिंस्तत्पुरमुत्तमं । राज्ञस्तस्याज्ञया देवी वशिष्ठमुपचक्रमे ।

महर्षिः संविदं कृत्वा सम्बभूव तया सह । देव्या दिव्येन विधिना वशिष्ठः श्रेष्ठभागृषिः ।

ततस्तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः । राज्ञाऽभिवादितस्तेन जगाम मुनिराश्रमं ।

दीर्घकालेन सा गर्भं सुषुवे न तु तं यदा । तदा देव्यश्मना कुक्षिं निर्ब्बिभेद यशस्विनी । ६७९०

ततोऽपि द्वादशे वर्षे स जज्ञे पुरुषर्षभः । अश्मको नाम राजर्षिः पौदन्यं यो न्यवेशयत् ।

इत्यादिपर्व्वणि चैत्ररथपर्व्वणि वाशिष्ठे सौदाससुतोत्पत्तौ सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

॥ गन्धर्व्व उवाच ॥ आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत । शक्तेः कुलकरं राजन्द्वितीयमिव शक्तिणं ।

जातकर्म्मादिकास्तस्य क्रियाः स मुनिसत्तमः । पौत्रस्य भरतश्रेष्ठ चकार भगवान्स्वयं ।

परासुः स यतस्तेन वशिष्ठः स्थापितो मुनिः । गर्भस्थेन ततो लोके पराशर इति स्मृतः ।

अमन्यत स धर्म्मात्मा वशिष्ठं पितरं मुनिं । जन्मप्रभृति तस्मिंस्तु पितरीवान्ववर्त्तत । ६७९५

स तात इति विप्रर्षिं वशिष्ठं प्रत्यभाषत । मातुः समक्षं कौन्तेय अदृश्यन्त्याः परन्तप ।

तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः । अदृश्यन्त्यश्रुपूर्णाक्षी शृण्वती तमुवाच ह ।

मा तात तात तातेति ब्रूह्येनं पितरं पितुः । रक्षसा भक्षितस्तात तव तातो वनान्तरे ।

मन्यसे यन्तु तातेति नैष तातस्तवानघ । आर्य्य एष पिता तस्य पितुस्तव यशस्विनः ।

स एवमुक्तो दुःखार्त्तः सत्यवागृषिसत्तमः। सर्व्वलोकविनाशाय मतिञ्चक्रे महामनाः। ६८००
तं तथा निश्चितात्मानं स महात्मा महातपाः। ऋषिर्ब्रह्मविदांश्रेष्ठो मैत्रावरुणिरन्वधीः।
वशिष्ठो वारयामास हेतुना येन तच्छृणु। वशिष्ठ उवाच। कृतवीर्य्य इति ख्यातो बभूव पृथिवीपतिः। याज्यो वेदविदां लोके
भृगूणां पार्थिवर्षभः।
स तानग्रभुजस्तात धान्येन च धनेन च। सोमान्ते तर्पयामास विपुलेन विशाम्पते।
तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथञ्चन। बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितं।
भृगूणान्तु धनं ज्ञात्वा राजानः सर्व्व एव ते। याचिष्णवोऽभिजग्मुस्तांस्ततो भार्गवसत्तमान्। ६८०५
भूमौ तु निदधुः केचिद्भृगवो धनमक्षयं। ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयं।
भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितं। क्षत्रियाणां तदा तात कारणान्तरदर्शनात्।
ततो महीतलं तात क्षत्रियेण यदृच्छया। खनताऽधिगतं वित्तं केनचिद्भृगुवेश्मनि।
तद्वित्तं ददृशुः सर्व्वे समेताः क्षत्रियर्षभाः। अवमन्य ततः क्रोधाद्भृगूंस्ताञ्छरणागतान्।
निजघ्नुः परमेष्वासाः सर्व्वांस्तान्निशितैः शरैः। आगर्भादवकृन्तन्तश्चेरुः सर्व्वां वसुन्धरां। ६८१०
तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा। भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे।
तासामन्यतमा गर्भं भयाद्दध्रे महौजसं। ऊरुणैकेन वामोरुर्भर्त्तुः कुलविवृद्धये।
तद्गर्भमुपलभ्याशु ब्राह्मणी या भयार्द्दिता। गत्वैका कथयामास क्षत्रियाणामुपह्वरे।
ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः। ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा।
अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्ज्जगाम ह। मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः। ६८१५
ततश्चक्षुर्व्विहीनास्ते गिरिदुर्गेषु बभ्रमुः। ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः। ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं
तामनिन्दितां।
ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः। ज्योतिःप्रहीणा दुःखार्त्ताः शान्तार्च्चिष इवाग्नयः।
भगवत्याः प्रसादेन गच्छेत्क्षत्रं सचक्षुषं। उपारम्य च गच्छेम सहिताः पापकर्म्मिणः।
सपुत्रा त्वं प्रसादं नः कर्त्तुमर्हसि शोभने। पुनर्दृष्टिप्रसादेन राज्ञः सन्त्रातुमर्हसि।
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि और्व्वोपाख्यानेऽष्टसप्तत्यधिकशततोऽध्यायः॥ १७८ ॥
॥ ब्राह्मण्युवाच ॥ नाहं गृह्णामि वस्तात दृष्टीर्नास्मि रुषान्विता। अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः। ६८२०
तेन चक्षूंषि वस्तात व्यक्तं कोपान्महात्मना। स्मरता निहतान्बन्धूनादत्तानि न संशयः।
गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः। तदायमूरुणा गर्भो मया वर्षशतं धृतः।
षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह। विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया।
सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति। तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः।
तमिमं तात याचध्वमौर्व्वं मम सुतोत्तमं। अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति। ६८२५
॥ वशिष्ठ उवाच ॥ एवमुक्तास्ततः सर्व्वे राजानस्ते तमूरुजं। ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः।

अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः । स और्व्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ।
चक्षूंषि प्रतिलभ्याथ च प्रतिजग्मुस्ततो नृपाः । भार्गवस्तु मुनिर्म्मेने सर्व्वलोकपराभवं ।
स चक्रे तात लोकानां विनाशाय महामनाः । सर्व्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ।
इच्छन्नपचितिं कर्त्तुं भृगूणां भृगुनन्दनः । सर्व्वलोकविनाशाय तपसा महतैधितः । ६८३०
तापयामास तांल्लोकान्सदेवासुरमानुषान् । तपसोग्रेण महता नन्दयिष्यन्पितामहान् ।
ततस्तं पितरस्तात विज्ञाय कुलनन्दनं । पितृलोकादुपागम्य सर्व्वे ऊचुरिदं वचः ।
॥ पितर ऊचुः ॥ और्व्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक । प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः ।
नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः । बधो ह्युपेक्षितः सर्व्वैः क्षत्रियाणां विहिंसतां ।
आयुषा विप्रकृष्टेन यदा नः खेद आविशत् । तदाऽस्माभिर्व्वधस्तात क्षत्त्रियैरीप्सितः स्वयं । ६८३५
निखातं यच्च वै वित्तं केनचिद्भृगुवेश्मनि । वैरायैव तदा न्यस्तं क्षत्त्रियान्कोपयिष्णुभिः ।
किं हि वित्तेन नः कार्य्यं स्वर्गेप्सूनां द्विजोत्तम । यदस्माकं धनाध्यक्षः प्रभूतं धनमाहरत् ।
यदा तु मृत्युरादातुं न नः शक्नोति सर्व्वशः । तदाऽस्माभिरयं दृष्ट उपायस्तात संमतः ।
आत्महा च पुमांस्तात न लोकाल्लभते शुभान् । ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा निपातितः ।
न चैतन्नः प्रियं तात यदिदं कर्त्तुमिच्छसि । नियच्छेदं मनः पापात्सर्व्वलोकपराभवात् । ६८४०
मावधीः क्षत्त्रियांस्तात न लोकान्सप्त पुत्रक । दूषयन्तं तपस्तेजः क्रोधमुत्पतितं जहि ।
इत्यादिपर्व्वणि चैत्ररथपर्व्वण्यौर्व्ववारणे ऊनाशीत्यधिकशततोऽध्यायः ॥ १७९ ॥
॥ और्व्व उवाच ॥ उक्तवानस्मि यां क्रोधात्प्रतिज्ञां पितरस्तदा । सर्व्वलोकविनाशाय न सा मे वितथा भवेत् ।
वृथारोषप्रतिज्ञो वै नाहं भवितुमुत्सहे । अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिं ।
यो हि कारणतः क्रोधं सञ्जातं क्षन्तुमर्हति । नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुं ।
अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता । स्थाने रोषः प्रयुक्तः स्यान्नृपैः सर्व्वजिगीषुभिः । ६८४५
अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा । आरावं मातृवर्गस्य भृगूणां क्षत्त्रियैर्व्वधे ।
संहारो हि यदा लोके भृगूणां क्षत्त्रियाधमैः । आगर्भोच्छेदनात्क्रान्तस्तदा मां मन्युराविशत् ।
संपूर्णकोशाः किल मे मातरः पितरस्तथा । भयात्सर्व्वेषु लोकेषु नाधिजग्मुः परायणं ।
तान् भृगूणां यदा दारान्कश्चिन्नाभ्युपपद्यत । माता तदा दधारेयमूरुणैकेन मां शुभा ।
प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते । तदा सर्व्वेषु लोकेषु पापकृन्नोपपद्यते । ६८५०
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् । तिष्ठन्ति बहवो लोकास्तदा पापेषु कर्म्मसु ।
जानन्नपि च यः पापं शक्तिमान्न नियच्छति । ईशः सन्सोऽपि तेनैव कर्म्मणा संप्रयुज्यते ।
राजभिश्चेश्वरैश्चैव यदि वै पितरो मम । शक्तैर्न शकितास्त्रातुमिष्टं मत्वेह जीवितं ।
अत एषामहं क्रुद्धो लोकानामीश्वरो ह्यहं । भवताञ्च वचो नालमहं समभिवर्त्तितुं ।
ममापि चेद्भवेदेवमीश्वरस्य सतो महत् । उपेक्षमाणस्य पुनर्ल्लोकानां किल्बिषाद्भयं । ६८५५

यस्यायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति। दहेदेव च मामेव निगृहीतः स्वतेजसा।
भवताञ्च विजानामि सर्व्वलोकहितेप्सुतां। तस्माद्विधद्ध्व यच्छ्रेयो लोकानां मम चेश्वराः।
॥ पितर ऊचुः ॥ य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति। अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः।
आपोमयाः सर्व्वरसाः सर्व्वमापोमयं जगत्। तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम।
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ। मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः। ६८९०
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति। नचैवं सामरा लोका गमिष्यन्ति पराभवं।
॥ वशिष्ठ उवाच ॥ ततस्तं क्रोधजं तातं और्व्वोऽग्निं वरुणालये। उत्ससर्ज्ज स चैवाप उपयुङ्क्ते महोदधौ।
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः। तमग्निमुद्गिरन्वक्त्रात्पिबत्यापो महोदधौ।
तस्मात्त्वमपि भद्रं ते न लोकान्हन्तुमर्हसि। पराशर परांल्लोकाञ्जानन् ज्ञानवतां वर।
इत्यादिपर्व्वणि चैत्ररथपर्व्वण्यौर्व्वोपाख्यानेऽशीत्यधिकशतोऽध्यायः ॥ १८० ॥
॥ गन्धर्व्व उवाच ॥ एवमुक्तः स विप्रर्षिर्व्वशिष्ठेन महात्मना। न्ययच्छदात्मनः क्रोधं सर्व्वलोकपराभवात्। ६८९५
ईजे च स महातेजाः सर्व्ववेदविदांवरः। ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः।
ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः। ददाह वितते यज्ञे शक्तेर्व्वधमनुस्मरन्।
नहि तं वारयामास वशिष्ठो रक्षसां वधात्। द्वितीयामस्य माभाङ्क्षं प्रतिज्ञामिति निश्चयात्।
त्रयाणां पावकानाञ्च सत्रे तस्मिन्महामुनिः। आसीत्पुरस्ताद्दीप्तानाञ्चतुर्थ इव पावकः।
तेन यज्ञेन शुभ्रेण हूयमानेन शक्तिजः। तद्विदीपितमाकाशं सूर्य्येणेव घनात्यये। ६९००
तं वशिष्ठादयः सर्व्वे मुनयस्तत्र मेनिरे। तेजसा दीप्यमानं वै द्वितीयमिव भास्करं।
ततः परमदुष्प्रापमन्यैर्ऋषिरुदारधीः। समापिपयिषुः सत्रं तमत्रिः समुपागमत्।
तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुः। तत्राजग्मुरमित्रघ्न रक्षसां जीवितेप्सया।
पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ। उवाचेदं वचः पार्थ पराशरमरिन्दमं।
कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक। अजानतामदोषाणां सर्व्वेषां रक्षसां वधात्। ६९०५
प्रजोच्छेदमिमं मह्यं नहि कर्त्तुं त्वमर्हसि। नैष तात द्विजातीनां धर्म्मो दृष्टस्तपस्विनां।
शम एव परो धर्म्मस्तमाचर पराशर। अधर्म्मिष्ठं वरिष्ठः सन्कुरुषे त्वं पराशर।
शक्तिञ्चापि हि धर्म्मज्ञं नातिक्रान्तुमिहार्हसि। प्रजानाञ्च ममोच्छेदं नचैवं कर्त्तुमर्हसि।
शापाद्धि शक्तेर्व्वाशिष्ठ तदा तदुपपादितं। आत्मजेन स दोषेण शक्तिर्नीत इतो दिवं।
नहि तं राक्षसः कश्चिच्छक्तो भक्षयितुं मुने। आत्मनैवात्मनस्तेन दृष्टो मृत्युस्तदाऽभवत्। ६९१०
निमित्तमात्रन्तत्रासीद्विश्वामित्रः पराशर। राजा कल्माषपादश्च दिवमारुह्य मोदते।
ये च शक्त्यवराः पुत्रा वशिष्ठस्य महामुनेः। ते च सर्व्वे मुदायुक्ता मोदन्ते सहिताः सुरैः।
सर्व्वमेतद्वशिष्ठस्य विदितं वै महामुने। रक्षसाञ्च समुच्छेद एष तात तपस्विनां।
निमित्तभूतस्त्वं चात्र क्रतौ वाशिष्ठनन्दन। तत्सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते।

॥ गन्धर्व्व उवाच ॥ एवमुक्तः पुलस्त्येन वशिष्ठेन च धीमता । तदा समापयामास सत्रं शाक्तो महामुनिः । १८८५
सर्व्वराक्षससत्राय सम्भृतं पावकं तदा । उत्तरे हिमवत्पार्श्वे उत्ससर्ज्ज महावने ।
स तत्राद्यापि रक्षांसि वृक्षानश्मन एव च । भक्षयन्दृश्यते वह्निः सदा पर्व्वणि पर्व्वणि ।
इत्यादिपर्व्वणि चैत्ररथपर्व्व और्व्वोपाख्याने एकाशीत्यधिकशततोऽध्यायः ॥ १८१ ॥
॥ अर्ज्जुन उवाच ॥ राज्ञा कल्माषपादेन गुरौ ब्रह्मविदांवरे । कारणं किं पुरस्कृत्य भार्य्या वै सन्नियोजिता ।
जानता वै परं धर्म्मं वशिष्ठेन महात्मना । अगम्यागमनं कस्मात्कृतं तेन महर्षिणा ।
अधर्म्मिष्ठं वशिष्ठेन कृतञ्चापि पुरा सखे । एतन्मे संशयं सर्व्वं छेत्तुमर्हसि पृच्छतः । १८९०
॥ गन्धर्व्व उवाच ॥ धनञ्जय निबोधेदं यन्मां त्वं परिपृच्छसि । वशिष्ठं प्रति दुर्धर्ष तथामित्रसहं नृपं ।
कथितं ते मया सर्व्वं यथाशप्तः स पार्थिवः । शक्तिना भरतश्रेष्ठ वाशिष्ठेन महात्मना ।
स तु शापवशं प्राप्तः क्रोधपर्य्याकुलेक्षणः । निर्ज्जगाम पुराद्राजा सहदारः परन्तपः ।
अरण्यं निर्ज्जनं गत्वा सदारः परिचक्रमे । नानामृगगणाकीर्णं नानासत्त्वसमाकुलं ।
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतं । अरण्यं घोरसन्नादं शापग्रस्तः परिभ्रमन् । १८९५
स कदाचित्क्षुधाविष्टो मृगयन्भक्ष्यमात्मनः । ददर्श सुपरिक्लिष्टः कस्मिंश्चिन्निर्ज्जने वने ।
ब्राह्मणं ब्राह्मणीञ्चैवमिथुनायोपसङ्गतौ । तौ तं वीक्ष्य सुवित्रस्तावकृतार्थौ प्रधावितौ ।
तयोः प्रद्रवतोर्व्विप्रं जग्राह नृपतिर्ब्बलात् । दृष्ट्वा गृहीतं भर्त्तारमथ ब्राह्मण्यभाषत ।
शृणु राजन्मम वचो यत्त्वां वक्ष्यामि सुव्रत । आदित्यवंशप्रभवस्त्वं हि लोके परिश्रुतः ।
अप्रमत्तः स्थितो धर्म्मे गुरुशुश्रूषणे रतः । शापोपहतदुर्धर्ष न पापं कर्त्तुमर्हसि । १९००
ऋतुकाले तु सम्प्राप्ते भर्त्तृव्यसनकर्षिता । अकृतार्था ह्यहं भर्त्त्रा प्रसवार्थं समागता ।
प्रसीद नृपतिश्रेष्ठ भर्त्ताऽयं मे विसृज्यतां । एवं विक्रोशमानायास्तस्यास्तु स नृशंसवत । भर्त्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितं ।
तस्याः क्रोधाभिभूताया यान्यश्रूण्यपतन्भुवि । सोऽग्निः समभवद्दीप्तस्तञ्च देशं व्यदीपयत् ।
ततः सा शोकसन्तप्ता भर्त्तृव्यसनकर्षिता । कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा ।
यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत् । प्रेक्षन्त्या भक्षितो मेऽद्य प्रियो भर्त्ता महायशाः । १९०५
तस्मात्त्वमपि दुर्ब्बुद्धे मच्छापपरिविक्षतः । पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितं ।
यस्य चर्षेर्व्वशिष्ठस्य त्वया पुत्त्रा विनाशिताः । तेन सङ्गम्य ते भार्य्या तनयं जनयिष्यति ।
स ते वंशकरः पुत्त्रो भविष्यति नृपाधम । एवं शप्त्वा तु राजानं सा तमाङ्गिरसी शुभा । तस्यैव सन्निधौ दीप्तं प्रविवेश हुताशनं ।
वशिष्ठश्च महाभागः सर्व्वमेतदवैक्षत । ज्ञानयोगेन महता तपसा च परन्तप ।
मुक्तशापश्च राजर्षिः कालेन महता ततः । ऋतुकालेऽभिपतितो मदयन्त्या निवारितः । १९१०
नहि सस्मार स नृपस्तं शापं काममोहितः । देव्याः सोऽथ वचः श्रुत्वा सम्भ्रान्तो नृपसत्तमः । तं शापमनुसंस्मृत्य पर्य्यतप्यद्भृशं तदा ।

एतस्मात्कारणाद्राजा वसिष्ठं संन्ययोजयत्। स्वदारेषु नरश्रेष्ठ शापदोषसमन्वितः॥
इत्यादिपर्व्वणि चैत्ररथपर्व्वणि वसिष्ठोपाख्याने द्व्यशीत्यधिकशततमोऽध्यायः॥ १८२ ॥
॥ अर्जुन उवाच ॥ अस्माकमनुरूपो वै यः स्याद्गन्धर्व्व वेदवित्। पुरोहितस्तमाचक्ष्व सर्व्वं हि विदितं तव।
॥ गन्धर्व्व उवाच ॥ यवीयान्देवलस्यैष वने भ्राता तपस्यति। धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ।
॥ वैशम्पायन उवाच ॥ ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि। गन्धर्व्वाय तदा प्रीतो वचनं चेदमब्रवीत्। ६९९५
त्वय्येव तावत् तिष्ठन्तु हया गन्धर्व्वसत्तम। कार्य्यकाले ग्रहीष्यामः स्वस्ति तेऽस्त्विति चाब्रवीत्।
तेऽन्योन्यमभिसंपूज्य गन्धर्व्वः पाण्डवाश्च ह। रम्याद्भागीरथीतीराद्यथाकामं प्रतस्थिरे।
तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमन्तु ते। तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत।
तान् धौम्यः प्रतिजग्राह सर्व्ववेदविदांवरः। वन्येन फलमूलेन पौरोहित्येन चैव ह।
ते समाशंसिरे लब्धां श्रियं राज्यञ्च पाण्डवाः। ब्राह्मणं तं पुरस्कृत्य पाञ्चालीञ्च स्वयम्वरे। ६९२०
पुरोहितेन तेनाथ गुरुणा सङ्गतास्तदा। नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः।
स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः। तेन धर्म्मविदा पार्थां याज्या धर्म्मविदा कृताः।
वीरांस्तु स हिताम्मेने प्राप्तराज्यान्स्वधर्म्मतः। बुद्धिवीर्य्यबलोत्साहैर्युक्तान्देवानिव द्विजः।
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः। मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयम्वरं।
इत्यादिपर्व्वणि धौम्यपुरोहितकरणे त्र्यशीत्यधिकशततमोऽध्यायः समाप्तञ्च चैत्ररथपर्व्व॥ १८३ ॥

## ॥ अथ स्वयम्बरपर्व्व ॥

॥ वैशम्पायन उवाच ॥ ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः। प्रययुर्द्रौपदीं द्रष्टुं तञ्च देशं महोत्सवं। ६९२५
ते प्रयाता नरव्याघ्राः सह मात्रा परन्तपाः। ब्राह्मणान्ददृशुर्मार्गे गच्छतः सङ्गतान्बहून्।
त ऊचुर्ब्राह्मणा राजन्पाण्डवान्ब्रह्मचारिणः। क्व भवन्तो गमिष्यन्ति कुतो वाऽभ्यागता इह।
॥ युधिष्ठिर उवाच ॥ आगतानेकचक्रायाः सोदर्य्यानेकचारिणः। भवन्तो वै विजानन्तु सह मात्रा द्विजर्षभाः।
॥ ब्राह्मणा ऊचुः॥ गच्छतात्रैव पाञ्चालान्द्रुपदस्य निवेशने। स्वयम्वरो महांस्तत्र भविता सुमहाधनः।
एकसार्थंप्रयाताः स्म वयं तत्रैव गामिनः। तत्र ह्यद्भुतसङ्काशो भविता सुमहोत्सवः। ६९३०
यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः। वेदीमध्यात्समुत्पन्ना पद्मपत्रनिभेक्षणा।
दर्शनीयाऽनवद्याङ्गी सुकुमारी मनस्विनी। धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः।
यो जातः कवची खड्गी सशरः सशरासनः। सुसमिद्धे महाबाहुः पावके पावकोपमः।
स्वसा तस्यानवद्याङ्गी द्रौपदी तनुमध्यमा। नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवाति वै।
यज्ञसेनस्य च सुतां स्वयम्वरकृतक्षणां। गच्छामो वै वयं द्रष्टुं तच्च दिव्यं महोत्सवं। ६९३५
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः। स्वाध्यायवन्तः शुचयो महात्मानो यतव्रताः।
तरुणा दर्शनीयाश्च नानादेशसमागताः। महारथाः कृतास्त्राश्च समुपैष्यन्ति भूमिपाः।

ते तत्र विविधान्दायान्विजयार्थं नरेश्वराः । प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यञ्च सर्व्वशः ।
प्रतिगृह्य च तत्सर्व्वं दृष्ट्वा चैव स्वयम्वरं । अनुभूयोत्सवं चैव गमिष्यामो यथेप्सितं ।
नटा वैतालिकास्तत्र नर्त्तकाः सूतमागधाः । नियोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः । १९४०
एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च । सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ ।
दर्शनीयांश्च वः सर्व्वान्देवरूपानवस्थितान् । समीक्ष्य कृष्णा वरयेत्सङ्गत्यैकतमं वरं ।
अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः । नियुज्यमानो विजयेत्सङ्गत्या द्रविणं बहु ।
॥ युधिष्ठिर उवाच ॥ परमं भो गमिष्यामो द्रष्टुं चैव महोत्सवं । भवद्भिः सहिताः सर्व्वे कन्यायास्तं स्वयम्वरं ।
इत्यादि पर्व्वणि स्वयम्वरपर्व्वणि पाण्डवगमने चतुरशीत्यधिकशततोऽध्यायः ॥ १८४ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय । राज्ञा दक्षिणपाञ्चालान्द्रुपदेनाभिरक्षितान् । १९४५
ततस्तेषु महात्मानं शुद्धात्मानमकल्मषं । ददृशुः पाण्डवा वीरा मुनिं द्वैपायनं तदा ।
तस्मै यथावत्सत्कारं कृत्वा तेन च सत्कृताः । कथाऽन्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयं ।
पश्यन्तो रमणीयानि वनानि च सरांसि च । तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ।
स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः । आनुपूर्व्व्येण सम्प्राप्ताः पाञ्चालान्पाण्डुनन्दनाः ।
ते तु दृष्ट्वा पुरं तच्च स्कन्धावारञ्च पाण्डवाः । कुम्भकारस्य शालायां निवासञ्चक्रिरे तदा । १९५०
तत्र भैक्ष्यं समाजह्रुर्ब्राह्मीं वृत्तिमाश्रिताः । तान्सम्प्राप्तांस्तथा वीरान्जज्ञिरे न नराः क्वचित् ।
यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने । कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः ।
सोऽन्वेषमाणः कौन्तेयं पाञ्चाल्यो जनमेजय । दृढं धनुरनायम्यं कारयामास भारत ।
यन्त्रं वैहायसं चापि कारयामास कृत्रिमं । तेन यन्त्रेण सहितं राजा लक्ष्यं चकार सः ।
॥ द्रुपद उवाच ॥ इदं सज्यं धनुः कृत्वा सज्यैरेभिश्च सायकैः । अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति । १९५५
॥ वैशम्पायन उवाच ॥ इति स द्रुपदो राजा स्वयम्वरमघोषयत् । तच्छ्रुत्वा पार्थिवाः सर्व्वे समीयुस्तत्र भारत ।
ऋषयश्च महात्मानः स्वयम्वरदिदृक्षवः । दुर्य्योधनपुरोगाश्च सकर्णाः कुरवो नृप ।
ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् । ततोऽर्चिता राजगणा द्रुपदेन महात्मना ।
उपोपविष्टा मञ्चेषु द्रष्टुकामाः स्वयम्वरं । ततः पौरजनाः सर्व्वे सागरोद्धूतनिःस्वनाः ।
शिशुमारशिरः प्राप्य न्यविशंस्ते स्म पार्थिवाः । प्रागुत्तरेण नगराद्भूमिभागे समे शुभे । समाजवाटः शुशुभे भवनैः
सर्व्वतो वृतः । १९६०
प्राकारपरिखोपेतो द्वारतोरणमण्डितः । वितानेन विचित्रेण सर्व्वतः समलङ्कृतः ।
तूर्य्यौघशतसङ्कीर्णः परार्घ्यागुरुधूपितः । चन्दनोदकसिक्तश्च माल्यदामोपशोभितः ।
कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः । सर्व्वतः संवृतः शुभ्रैः प्रासादैः सुकृतोच्छ्रयैः ।
सुवर्णजालसम्वीतैर्मणिकुट्टिमभूषितैः । सुखारोहणसोपानैर्महासनपरिच्छदैः ।
अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः । हंसांशुवर्णैर्बहुभिरायोजनसुगन्धिभिः । १९६५

असम्बाधशतद्वारैः शयनासनशोभितैः। बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव।
तत्र नानाप्रकारेषु विमानेषु स्वलङ्कृताः। स्पर्द्धमानास्तदाऽन्योन्यं निषेदुः सर्व्वपार्थिवाः।
तत्रोपविष्टान्ददृशुर्महासत्त्वपराक्रमान्। राजसिंहान्महाभागान् कृष्णागुरुविभूषितान्।
महाप्रसादान् ब्रह्मण्यान् स्वराष्ट्रपरिरक्षिणः। प्रियान्सर्व्वस्य लोकस्य सुकृतैः कर्म्मभिः शुभैः।
मञ्चेषु च परार्द्ध्येषु पौरजानपदा जनाः। कृष्णादर्शनसिद्ध्यर्थं सर्व्वतः समुपाविशन्। १९००
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन्। ऋद्धिं पाञ्चालराजस्य पश्यन्तस्तामनुत्तमां।
ततः समाजो ववृधे स राजन्दिवसान् बहून्। रत्नप्रदानबहुलः शोभितो नटनर्त्तकैः।
वर्त्तमाने समाजे तु रमणीयेऽह्नि षोडशे। आप्लुताङ्गी सुवसना सर्व्वाभरणभूषिता।
मालाञ्च समुपादाय काञ्चनीं समलङ्कृतां। अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ।
पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः। परिस्तीर्य्य जुहावाग्निमाज्येन विधिवत्तदा। १९०५
स तर्पयित्वा ज्वलनं ब्राह्मणान् स्वस्तिवाच्य च। वारयामास सर्व्वाणि वादित्राणि समन्ततः।
निःशब्दे तु कृते तस्मिन् धृष्टद्युम्नो विशाम्पते। कृष्णामादाय विधिवन्मेघदुन्दुभिनिःस्वनः। रङ्गमध्ये गतस्तत्र मेघगम्भीरया।
गिरा। वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमं।
इदं धनुर्लक्ष्यमिमे च वाणाः शृण्वन्तु मे भूपतयः समेताः। छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्द्धैः।
एतन्महत्कर्म्म करोति यो वै कुलेन रूपेण बलेन युक्तः। तस्याद्य भार्य्या भगिनी ममेयं कृष्णा भवित्री न मृषा ब्रवीमि।
तानेवमुक्त्वा द्रुपदस्य पुत्रः पश्चादिदं तां भगिनीमुवाच। नाम्ना च गोत्रेण च कर्म्मणा च सङ्कीर्त्तयन्भूमिपतीन्समेतान्। १९१०
इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि धृष्टद्युम्नवाक्ये पञ्चाशीत्यधिकशततमोऽध्यायः॥ १८५॥
॥ धृष्टद्युम्न उवाच॥ दुर्य्योधनो दुर्व्विषहो दुर्म्मुखो दुःप्रधर्षणः। विविंशतिर्व्विकर्णश्च सहो दुःशासनस्तथा।
युयुत्सुर्व्वायुवेगश्च भीमवेगरवस्तथा। उग्रायुधो बलाकी च करकायुर्व्विरोचनः।
कुण्डकश्चित्रसेनश्च सुवर्च्चाः कनकध्वजः। नन्दको बाहुशाली च तुहुण्डो विकटस्तथा।
एते चान्ये च बहवो धार्त्तराष्ट्रा महाबलाः। कर्णेन सहिता वीरास्त्वदर्थं समुपागताः।
असङ्ख्याता महात्मानः पार्थिवाः क्षत्रियर्षभाः। शकुनिः सौबलश्चैव वृषकोऽथ बृहद्बलः। १९१५
एते गान्धारराजस्य सुताः सर्व्वे समागताः। अश्वत्थामा च भोजश्च सर्व्वशस्त्रभृतां वरौ।
समवेतौ महात्मानौ त्वदर्थे समलङ्कृतौ। बृहन्तो मणिमांश्चैव दण्डधारश्च पार्थिवः।
सहदेवजयत्सेनौ मेघसन्धिश्च पार्थिवः। विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च।
वार्द्धक्षेमिः सुशर्म्मा च सेनाबिन्दुश्च पार्थिवः। सुकेतुः सहपुत्रेण सुनाम्ना च सुवर्च्चसा।
सुचित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा। सूर्य्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा। १९२०
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः। समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान्।
जलसन्धः पितापुत्रौ विदण्डो दण्ड एव च। पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्य्यवान्।
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा। मद्रराजस्तथा शल्यः सहपुत्रो महारथः।

किरीटहाराङ्गदचक्रवालैर्विभूषिताङ्गाः पृथुबाहवस्ते। अनुक्रमं विक्रमसत्त्वयुक्ता बलेन वीर्य्येण च नर्द्दमानाः।
तत्कार्मुकं संहननोपपन्नं सज्यं न शेकुर्मनसाऽपि कर्त्तुं। ते विक्रमन्तः स्फुरता दृढेन विक्षिप्यमाणा धनुषा नरेन्द्राः।
विचेष्टमाना धरणीतलस्था यथाबलं शैक्ष्यगुणक्रमाश्च। गतौजसः स्रस्तकिरीटहारा विनिःश्वसन्तः शमयाम्बभूवुः।
हाहाकृतं तद्धनुषा दृढेन विस्रस्तहाराङ्गदचक्रवालं। कृष्णानिमित्तं विनिवृत्तकामं राज्ञां तदा मण्डलमार्त्तमासीत्।
सर्व्वान्नृपांस्तान् प्रसमीक्ष्य कर्णो धनुर्द्धराणां प्रवरो जगाम। उद्धृत्य तूर्णं धनुरुद्यतं तत् सज्यं चकाराशु युयोज बाणान्। ७०५५
दृष्ट्वा सूतं मेनिरे पाण्डुपुत्रा भित्त्वा नीतं लक्ष्यवरं धरायां। धनुर्द्धरा रागकृतप्रतिज्ञमत्यग्निसोमार्कमथार्कपुत्रं।
दृष्ट्वा तु तं द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतं। सामर्षहासं प्रसमीक्ष्य सूर्य्यं तत्याज कर्णः स्फुरितं धनुस्तत्।

एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः। चेदीनामधिपो वीरो बलवानन्तकोपमः।
दमघोषसुतो धीरः शिशुपालो महामतिः। धनुरादायमानस्तु जानुभ्यामगमन्महीं।
ततो राजा महावीर्य्यो जरासन्धो महाबलः। धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः। ७०६०
धनुषा पीड्यमानस्तु जानुभ्यामगमन्महीं। तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान्।
ततः शल्यो महावीर्य्यो मद्रराजो महाबलः। तदप्यारोप्यमाणस्तु जानुभ्यामगमन्महीं।
तस्मिंस्तु संभ्रान्तजने समाजे निक्षिप्तवादेषु जनाधिपेषु। कुन्तीसुतो जिष्णुरियेष कर्त्तुं सज्यं धनुस्तत् सशरं प्रवीरः।
इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि राजपराङ्मुखे सप्ताशीत्यधिकशततमोऽध्यायः॥ १८७ ॥

॥ वैशम्पायन उवाच ॥ यदा निवृत्ता राजानो धनुषः सज्यकर्म्मणि। अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः।
उदक्रोशन् विप्रमुख्या विधुन्वन्तोऽजिनानि च। दृष्ट्वा सम्प्रस्थितं पार्थमिन्द्रकेतुसमप्रभं। ७०६५
केचिदासन् विमनसः केचिदासन् मुदान्विताः। आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः।
यत्कर्ण्णशल्यप्रमुखैः क्षत्रियैर्लोकविश्रुतैः। नानतं बलवद्भिर्हि धनुर्वेदपरायणैः।
तत्कथं त्वकृतास्त्रेण प्राणतो दुर्ब्बलीयसा। बटुमात्रेण शक्यं हि सज्यं कर्त्तुं धनुर्द्विजाः।
अवहास्या भविष्यन्ति ब्राह्मणाः सर्व्वराजसु। कर्म्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते।
यद्येष दर्पाद्धर्षाद्वाऽप्यथ ब्रह्मणचापलात्। प्रस्थितो धनुरायन्तुं वार्य्यतां साधु मा गमत्। ७०७०
ब्राह्मणा ऊचुः॥ नावहास्या भविष्यामो न च लाघवमास्थिताः। न च विद्विष्टतां लोके गमिष्यामो महीक्षितां।
केचिदाहुर्युवा श्रीमान्नागराजकरोपमः। पीनस्कन्धोरुबाहुश्च धैर्य्येण हिमवानिव।
सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः। सम्भाव्यमस्मिन् कर्म्मेदमुत्साहाच्चानुमीयते।
शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत्। न च तद्विद्यते किञ्चित् कर्म्म लोकेषु यद्भवेत्। ब्राह्मणानामसाध्यं च नृषु संस्था-
नचारिषु।
अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः। दुर्ब्बला अपि विप्रा हि बलीयांसः स्वतेजसा। ७०७५
ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन्। सुखं दुःखं महद्ध्रस्वं कर्म्म यत् समुपागतं।
जामदग्न्येन रामेण निर्ज्जिताः क्षत्रिया युधि। पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा।
तस्माद्ब्रुवन्तु सर्व्वेऽत्र बटुरेष धनुर्ग्रहात्। आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः।

एवं तेषां विलपतां विप्राणां विविधा गिरः। अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः।

स तद्धनुः परिक्रम्य प्रदक्षिणमथाऽकरोत्। प्रणम्य शिरसा देवमीशानं वरदं प्रभुं। ७०५०

कृष्णञ्च मनसा कृत्वा जगृहे चार्जुनो धनुः। यत्पार्थिवै रुक्मसुनीथवक्रै राधेयदुर्य्योधनशल्यशाल्वैः। तदा धनुर्वेदपरैर्नृसिंहैः कृतं न सज्यं महतोऽपि यत्नात्।

तदर्ज्जुनो वीर्य्यवतां सदर्प्पस्तदैन्द्रिरिन्द्रावरजप्रभावः। सज्यञ्च चक्रे निमिषान्तरेण शरांश्च जग्राह दशार्द्धसंख्यान्।

विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसाऽतिविद्धं। ततोऽन्तरीक्षे च बभूव नादः समाजमध्ये च महानिनादः।

पुष्पाणि दिव्यानि ववर्ष देवः पार्थस्य मूर्द्ध्नि द्विषतां निहन्तुः।

चेलानि विव्यधुस्तत्र ब्राह्मणाश्च सहस्रशः। विलक्षितास्ततश्चक्रुर्हाहाकारांश्च सर्व्वशः। न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः। ७०५५

शताङ्गानि च तूर्य्याणि वादकाः समवादयन्। सूतमागधसङ्घाश्च अस्तुवंस्तत्र सुस्वराः।

तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः। सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः।

तस्मिंस्तु शब्दे महति प्रवृद्धे युधिष्ठिरो धर्म्मभृतां वरिष्ठः। आवासमेवोपजगाम शीघ्रं सार्द्धं यमाभ्यां पुरुषोत्तमाभ्यां।

विद्धन्तु लक्ष्यं प्रसमीक्ष्य कृष्णा पार्थञ्च शक्रप्रतिमं निरीक्ष्य। आदाय शुक्लाम्बरमाल्यदाम जगाम कुन्तीसुतमुत्स्मयन्ती।

स तामुपादाय विजित्य रङ्गे द्विजातिभिस्तैरभिपूज्यमानः। रङ्गान्निरक्रामदचिन्त्यकर्म्मा पत्न्या तया चाप्यनुगम्यमानः।७०६०

इत्यादि पर्व्वणि स्वयम्बरपर्व्वणि लक्ष्यच्छेदने ऽष्टाशीत्यधिकशतोऽध्यायः॥ १८८॥

॥ वैशम्पायन उवाच॥ तस्मै दित्सति कन्यान्तु ब्राह्मणाय तदा नृपे। कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात्।

अस्मानयमतिक्रम्य तृणीकृत्य च सङ्गतान्। दातुमिच्छति विप्राय द्रौपदीं योषितांवरां।

अवरोप्येह वृक्षन्तु फलकाले निपात्यते। निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते।

न ह्यर्हत्येष सम्मानं नापि वृद्धक्रमं गुणैः। हन्मैनं सह पुत्रेण दुराचारं नृपद्विषं।

अयं हि सर्व्वानाहूय सत्कृत्य च नराधिपान्। गुणवद्भोजयित्वाऽन्नं ततः पश्चान्न मन्यते। ७०६५

अस्मिन्राजसमावाये देवानामिव सन्नये। किमयं सदृशं कञ्चिन्नृपतिं नैव दृष्टवान्।

न च विप्रेष्वधीकारो विद्यते वरणं प्रति। स्वयम्बरः क्षत्रियाणामितीयं प्रथिता श्रुतिः।

अथवा यदि कन्येयं नच कञ्चिद्बुभूषति। अग्नावेनां प्रतिक्षिप्य याम राष्ट्राणि पार्थिवाः।

ब्राह्मणो यदि चापल्याल्लोभाद्वा कृतवानिदं। विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथञ्चन।

ब्राह्मणार्थं हि नो राज्यं जीवितं हि वसूनि च। पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनं। ७०७०

अवमानभयाच्चैव स्वधर्म्मस्य च रक्षणात्। स्वयम्बराणामन्येषां माभूदेवंविधा गतिः।

इत्युक्त्वा राजशार्दूला हृष्टाः परिघबाहवः। द्रुपदन्तु जिघांसन्तः सायुधाः समुपाद्रवन्।

तान्गृहीतशरावापान् क्रुद्धानापततो बहून्। द्रुपदो वीक्ष्य सन्त्रासाद्ब्राह्मणाञ्छरणं गतः।

वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान्। पाण्डुपुत्रौ महेष्वासौ प्रतियातावरिन्दमौ।

ततः समुत्पेतुरुदायुधास्ते महीक्षितो बद्धतलाङ्गुलित्राः। जिघांसमानाः कुरुराजपुत्रावमर्षयन्तोऽर्जुनभीमसेनौ। ७०७५

ततस्तु भीमोऽद्भुतभीमकर्म्मा महाबलो वज्रसमानसारः । उत्पाट्य दोर्भ्यां द्रुममेकवीरो निष्पत्रयामास यथा गजेन्द्रः ।
तं वृक्षमादाय रिपुप्रमाथी दण्डीव दण्डं पितृराज उग्रं । तस्थौ समीपे पुरुषर्षभस्य पार्थस्य पार्थः पृथुदीर्घबाहुः ।
तत्प्रेक्ष्य कर्म्मातिमनुष्यबुद्धिर्जिष्णुः सहि भ्रातुरचिन्त्यकर्म्मा । विसिस्मिये चापि भयं विहाय तस्थौ धनुर्गृह्य महेन्द्रकर्म्मा ।
तत्प्रेक्ष्य कर्म्मातिमनुष्यबुद्धिर्जिष्णोः सहभ्रातुरचिन्त्यकर्म्मा । दामोदरो भ्रातरमुग्रवीर्य्यं हलायुधं वाक्यमिदं बभाषे ।
य एष सिंहर्षभखेलगामी महद्धनुः कर्षति तालमात्रं । एषोऽर्जुनो नात्र विचार्य्यमस्ति यद्यस्मि सङ्कर्षण वासुदेवः । ७०८०
यस्त्वेष वृक्षं तरसाऽवभज्य राज्ञां निकारे सहसा प्रवृत्तः । वृकोदरान्नान्य इहैतदद्य कर्त्तुं समर्थः समरे पृथिव्यां ।
योऽसौ पुरस्तात्कमलायताक्षस्तनुर्महासिंहगतिर्व्विनीतः । गौरः प्रलम्बोज्ज्वलचारुघोणो विनिःसृतः सोऽच्युत धर्म्मपुत्रः ।
यौ तौ कुमाराविव कार्त्तिकेयौ द्वावश्विनेयाविति मे वितर्कः । मुक्ता हि तस्माज्जतुवेश्मदाहान्मया श्रुताः पाण्डुसुताः पृथा च ।
तमब्रवीन्निर्म्मलतोयदाभो हलायुधोऽनन्तरजं प्रतीतः । प्रीतोऽस्मि दृष्ट्वा हि पितृष्वसारं पृथां विमुक्तां सह कौरवाग्र्यैः ।

इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि कृष्णवाक्येऊननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

॥ वैशम्पायन उवाच ॥ अजिनानि विधुन्वन्तः करकांश्च द्विजर्षभाः । ऊचुस्ते भीर्न्न कर्त्तव्या वयं योत्स्यामहे परान् । ७०८५
तानेवं वदतो विप्रानर्जुनः प्रहसन्निव । उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ।
अहमेनानजिह्माग्रैः शतशो विकिरञ्छरैः । वारयिष्यामि संक्रुद्धान्मन्त्रैराशीविषानिव ।
इति तद्धनुरादाय शुल्कावाप्तं महाबलः । भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ।
ततः कर्णमुखान्दृष्ट्वा क्षत्रियान्युद्धदुर्म्मदान् । सम्पेततुरभीतौ तौ गजौ प्रति गजाविव ।
ऊचुश्च वाचः परुषास्ते राजानो युयुत्सवः । आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः । ७०९०
इत्येवमुक्त्वा राजानः सहसा दुद्रुवुर्द्विजान् । ततः कर्णो महातेजा जिष्णुं प्रति ययौ रणे ।
युद्धार्थी वाशिताहेतोर्गजः प्रतिगजं यथा । भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ।
दुर्य्योधनादयः सर्व्वे ब्राह्मणैः सह सङ्गताः । मृदुपूर्व्वमयत्नेन प्रत्ययुध्यंस्तदाहवे ।
ततोऽर्जुनः प्रत्यविध्यदापतन्तं शितैः शरैः । कर्णं वैकर्त्तनं श्रीमान्विकृष्य बलवद्धनुः ।
तेषां शराणां वेगेन शितानां तिग्मतेजसां । विमुह्यमानो राधेयो यत्नात्तमनुधावति । ७०९५
तावुभावप्यनिर्द्देश्यौ लाघवाज्जयतां वरौ । अयुध्येतां सुसंरब्धावन्योऽन्यविजिगीषिणौ ।
कृते प्रतिकृतं पश्य पश्य बाहुबलञ्च मे । इति शूरार्थवचनैरभाषेतां परस्परं ।
ततोऽर्जुनस्य भुजयोर्वीर्य्यमप्रतिमं भुवि । ज्ञात्वा वैकर्त्तनः कर्णः संरब्धः समयोधयत् ।
अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा । प्रतिहत्य ननादोच्चैः सैन्यानि तदपूजयन् ।
॥ कर्ण उवाच ॥ तुष्यामि ते विप्रमुख्य भुजवीर्य्यस्य संयुगे । अविषादस्य चैवास्य शस्त्रास्त्रविजयस्य च । ७१००
किं त्वं साक्षाद्धनुर्व्वेदो रामो वा विप्रसत्तम । अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ।
आत्मप्रच्छादनार्थं वै बाहुवीर्य्यमुपाश्रितः । विप्ररूपं विधायेदं मन्ये मां प्रतियुध्यसे ।
नहि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः । पुमान् योधयितुं शक्तः पाण्डवाद्वा किरीटिनः ।
तमेवं वादिनं तत्र फाल्गुनः प्रत्यभाषत । नाऽस्मि कर्ण धनुर्व्वेदो नास्मि रामः प्रतापवान् ।

ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्व्वशस्त्रभृतांवरः। ब्राह्मे पौरन्दरे चास्त्रे निष्ठितो गुरुशासनात्। ७१०५

स्थितोऽस्म्यद्य रणे जेतुं त्वां वै वीर स्थिरो भव॥ वैशम्पायन उवाच॥ एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यवर्त्तत। ब्राह्मं तेजस्तदाऽजय्यं मन्यमानो महारथः।

अपरस्मिन्वनोद्देशे वीरौ शल्यवृकोदरौ। बलिनौ युद्धसम्पन्नौ विद्यया च बलेन च।

अन्योन्यमाह्वयन्तौ तु मत्ताविव महागजौ। मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरं।

प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः। आचकर्षतुरन्योन्यं मुष्टिभिश्चापि जघ्नतुः।

ततश्चटचटाशब्दः सुघोरो ह्यभवत्तयोः। पाषाणसम्पातनिभैः प्रहारैरभिजघ्नतुः। ७११०

मुहूर्त्तं तौ तदाऽन्योऽन्यं समरे पर्य्यकर्षतां। ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे। अपातयत्कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा।

तत्राश्चर्य्यं भीमसेनश्चकार पुरुषर्षभः। यच्छल्यं पातितं भूमौ नावधीद्बलिनं बली।

पातिते भीमसेनेन शल्ये कर्णे च शङ्किते। शङ्किताः सर्व्वराजानः परिवव्रुर्वृकोदरं।

ऊचुश्च सहितास्तत्र साध्विमौ ब्राह्मणर्षभौ। विज्ञायेतां क्वजन्मानौ क्वनिवासौ तथैव च।

को हि राधासुतं कर्णं शक्तो योधयितुं रणे। अन्यत्र रामाद्द्रोणाद्वा पाण्डवाद्वा किरीटिनः। ७११५

कृष्णाद्वा देवकीपुत्रात्कृपाद्वाऽपि शरद्वतः। को वा दुर्य्योधनं शक्तः प्रतियोधयितुं रणे।

तथैव मद्राधिपतिं शल्यं बलवतां वरं। बलदेवादृते वीरात्पाण्डवाद्वा वृकोदरात्।

वीराद्दुर्य्योधनाद्वाऽन्यः शक्तः पातयितुं रणे। क्रियतामवहारोऽस्माद्युद्धाद्ब्राह्मणसंवृतात्।

ब्राह्मणा हि सदा रक्ष्याः सापराधाऽपि नित्यदा। अथैनानुपलभ्येह पुनर्योत्स्याम हृष्टवत्।

तांस्तथा वादिनः सर्व्वान् प्रसमीक्ष्य क्षितीश्वरान्। अथान्यान्पुरुषांश्चापि कृत्वा तत्कर्म संयुगे। ७१२०

वैशम्पायन उवाच॥ तत्कर्म भीमस्य समीक्ष्य कृष्णः कुन्तीसुतौ तौ परिशङ्कमानः। निवारयामास महीपतींस्तान्धर्म्मेण लब्धेत्यनुनीय सर्व्वान्।

एवं ते विनिवृत्तास्तु युद्धाद्युद्धविशारदाः। यथावासं ययुः सर्व्वे विस्मिता राजसत्तमाः।

वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता। इति ब्रुवन्तः प्रययुर्ये तत्रासन्समागताः।

ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः। कृच्छ्रेण जग्मतुस्तौ तु भीमसेनधनञ्जयौ।

विमुक्तौ जनसम्बाधाच्छत्रुभिः परिविक्षतौ। कृष्णयाऽनुगतौ तत्र नृवीरौ तौ विरेजतुः। ७१२५

पौर्णमास्यां घनैर्मुक्तौ चन्द्रसूर्य्याविवोदितौ। तेषां माता बहुविधं विनाशं पर्य्यचिन्तयत्।

अनागच्छत्सु पुत्रेषु भैक्ष्यकालेऽभिगच्छति। धार्त्तराष्ट्रैर्हता न स्युर्विज्ञाय कुरुपुङ्गवाः।

मायान्वितैर्व्वा रक्षोभिः सुघोरैर्दृढवैरिभिः। विपरीतं मतं जातं व्यासस्यापि महात्मनः।

इत्येवं चिन्तयामास सुतस्नेहावृता पृथा। ततः सुप्तजनप्राये दुर्द्दिने मेघसंप्लुते।

महत्यथापराह्णे तु घनैः सूर्य्य इवावृतः। ब्राह्मणैः प्राविशत्तत्र जिष्णुर्भार्गववेश्म तत्। ७१३०

इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि पाण्डवप्रत्यागमने नवत्यधिकशततोऽध्यायः॥ १९० ॥

॥ वैशम्पायन उवाच ॥ गत्वा तु तां भार्गवकर्मशालां पार्थौ पृथां प्राप्य महानुभावौ। तां याज्ञसेनीं परमप्रतीतौ भिक्षेत्यथावेदयतां नराग्र्यौ।

कुटीगता सा त्वनवेक्ष्य पुत्रौ प्रोवाच भुङ्क्तेति समेत्य सर्व्वे। पश्चाच्च कुन्ती प्रसमीक्ष्य कन्यां कष्टं मया भाषितमित्युवाच।

सा धर्म्मभीता परिचिन्तयन्ती तां याज्ञसेनीं परमप्रतीतां। पाणौ गृहीत्वोपजगाम कुन्ती युधिष्ठिरं वाक्यमुवाच चेदं।

॥ कुन्त्युवाच ॥ इयन्तु कन्या द्रुपदस्य राज्ञस्तवानुजाभ्यां मयि सन्निसृष्टा। यथोचितं पुत्र मयाऽपि चोक्तं समेत्य भुङ्क्तेति नृप प्रमादात्।

मया कथं नानृतमुक्तमद्य भवेत्कुरूणामृषभ ब्रवीहि। पाञ्चालराजस्य सुतामधर्म्मो न चोपवर्त्तेत न विभ्रमेच्च। ७३३५॥

॥ वैशम्पायन उवाच ॥ स एवमुक्तो मतिमान्नृवीरो मात्रा मुहूर्त्तं तु विचिन्त्य राजा। कुन्तीं समाश्वास्य कुरुप्रवीरो धनञ्जयं वाक्यमिदं बभाषे।

त्वया जिता फाल्गुन याज्ञसेनी त्वयैव शोभिष्यति राजपुत्री। प्रज्वाल्यतामग्निरमित्रसाह गृहाण पाणिं विधिवत्त्वमस्याः।

॥ अर्जुन उवाच ॥ मा मां नरेन्द्र त्वमधर्म्मभाजं कृथा न धर्म्मोऽयमशिष्टदृष्टः। भवान्निवेश्यः प्रथमं ततोऽयं भीमो महाबाहुरचिन्त्यकर्म्मा।

अहं ततो नकुलोऽनन्तरो मे पश्चादयं सहदेवस्तरस्वी। वृकोदरोऽहञ्च यमौ च राजन्नियञ्च कन्या भवतो नियोज्या।

एवं गते यत्करणीयमत्र धर्म्म्यं यशस्यं कुरु तद्विचिन्त्य। पाञ्चालराजस्य हितञ्च यत्स्यात्प्रशाधि सर्व्वे स्म वशे स्थितास्ते। ७३४०

॥ वैशम्पायन उवाच ॥ जिष्णोर्व्वचनमाज्ञाय भक्तिस्नेहसमन्वितं। दृष्टिं निवेशयामासुः पाञ्चाल्यां पाण्डुनन्दनाः।

दृष्ट्वा ते तत्र पश्यन्तीं सर्व्वे कृष्णां यशस्विनीं। सम्प्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन्।

तेषान्तु द्रौपदीं दृष्ट्वा सर्व्वेषाममितौजसां। सम्प्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः।

काम्यं हि रूपं पाञ्चाल्या विधात्रा विहितं स्वयं। बभूवाधिकमन्याभ्यः सर्व्वभूतमनोहरं।

तेषामाकारभावज्ञः कुन्तीपुत्रो युधिष्ठिरः। द्वैपायनवचः कृत्स्नं सस्मार मनुजर्षभः। ७३४५॥

अब्रवीत्स हि तान्भ्रातॄन्मिथो भेदभयान्नृपः। सर्व्वेषां द्रौपदी भार्य्या भविष्यति हि नः शुभा।

॥ वैशम्पायन उवाच ॥ भ्रातुर्व्वचस्तत्प्रसमीक्ष्य सर्व्वे ज्येष्ठस्य पाण्डोस्तनयास्तदानीं। तमेवार्थं ध्यायमाना मनोभिः सर्व्वे च ते तस्थुरदीनसत्त्वाः।

वृष्णिप्रवीरस्तु कुरुप्रवीरानाशङ्कमानः सहरौहिणेयः। जगाम तां भार्गवकर्म्मशालां यत्रासते ते पुरुषप्रवीराः।

तत्रोपविष्टं पृथुदीर्घबाहुं ददर्श कृष्णः सहरौहिणेयः। अजातशत्रुं परिवार्य्य तांश्चाप्युपोपविष्टान् ज्वलनप्रकाशान्।

ततोऽब्रवीद्वासुदेवोऽभिगम्य कुन्तीसुतं धर्म्मभृतांवरिष्ठं। कृष्णोऽहमस्मीति निपीड्य पादौ युधिष्ठिरस्याजमीढस्य राज्ञः। ७३५०

तथैव तस्याप्यनु रौहिणेयस्तौ चापि हृष्टाः कुरवोऽभ्यनन्दन्। पितृष्वसुश्चापि यदुप्रवीरावगृह्णतां भारतमुख्य पादौ।

अजातशत्रुश्च कुरुप्रवीरः पप्रच्छ कृष्णं कुशलं विलोक्य। कथं वयं वासुदेव त्वयेह गूढा वसन्तो विदिताश्च सर्व्वे।

तमब्रवीद्वासुदेवः प्रहस्य गूढोऽप्यग्निर्ज्ञायत एव राजन्। तं विक्रमं पाण्डवेयानतीत्य कोऽन्यः कर्त्ता विद्यते मानुषेषु।

दिष्ट्या सर्व्वे पावकाद्विप्रमुक्ता यूयं घोरात्पाण्डवाः शत्रुसाहाः। दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः सहामात्यो न सकामोऽभविष्यत्।

भद्रं वोऽस्तु निहितं यद्गुहायां विवर्द्धध्वं ज्वलनादेधमानाः। मा वो विदुः पार्थिवाः केचिदेव यास्यावहे शिबिरायैव तावत्।
सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः प्रायाच्छीघ्रं बलदेवेन सार्द्धं। ७१५५

इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि रामकृष्णागमने एकनवत्यधिकशततमोऽध्यायः॥ १९१ ॥

॥ वैशम्पायन उवाच॥ धृष्टद्युम्नस्तु पाञ्चाल्यः पृष्ठतः कुरुनन्दनौ। अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशने।
सोऽज्ञायमानः पुरुषानवधाय समन्ततः। स्वयमारान्निलीनोऽभूद्भार्गवस्य निवेशने।
सायञ्च भीमस्तु रिपुप्रमाथी जिष्णुर्यमौ चापि महानुभावौ। भैक्षं चरित्वा तु युधिष्ठिराय निवेदयाञ्चक्रुरदीनसत्त्वाः।
ततस्तु कुन्ती द्रुपदात्मजां तामुवाच काले वचनं वदान्या। त्वमग्रमादाय कुरुष्व भद्रे बलिञ्च विप्राय च देहि भिक्षां।
ये चान्नमिच्छन्ति ददस्व तेभ्यः परिश्रिता ये परितो मनुष्याः। ततश्च शेषं प्रविभज्य शीघ्रमर्द्धं चतुर्णां मम चात्मनश्च। ७१६०
अर्द्धन्तु भीमाय च देहि भद्रे य एष नागर्षभतुल्यरूपः। गौरो युवा संहननोपपन्न एषो हि वीरो बहुभुक् सदैव।
सा हृष्टरूपेव तु राजपुत्त्री तस्या वचः साधु विशङ्कमाना। यथावदुक्तं प्रचकार साध्वी ते चापि सर्व्वे बुभुजुस्तदन्नं।
कुशैस्तु भूमौ शयनं चकार माद्रीपुत्त्रः सहदेवस्तरस्वी। यथा स्वकीयान्यजिनानि सर्व्वे संस्तीर्य्य वीराः सुषुपुर्द्धरण्यां।
अगस्त्यशास्तामभितो दिशन्तु शिरांसि तेषां कुरुसत्तमानां। कुन्ती पुरस्तात्तु बभूव तेषां पादान्तरे चाथ बभूव
कृष्णा।
अशेत भूमौ सह पाण्डुपुत्त्रैः पादोपधानीव कृता कुशेषु। नतत्र दुःखं मनसाऽपि तस्या न चावमेने कुरुपुङ्गवांस्तान्। ७१६५
ते तत्र शूराः कथयाम्बभूवुः कथा विचित्राः पृतनाधिकाराः। अस्त्राणि दिव्यानि रथांश्च नागान् खड्गान्गदाश्चापि
परश्वधांश्च।
तेषां कथास्ताः परिकीर्त्त्यमानाः पञ्चालराजस्य सुतस्तदानीं। शुश्राव कृष्णां च तदा निषण्णां ते चापि सर्व्वे ददृशुर्
म्मनुष्याः।
धृष्टद्युम्नो राजपुत्त्रस्तु सर्व्वं वृत्तं तेषां कथितञ्चैव रात्रौ। सर्व्वं राज्ञे द्रुपदायाखिलेन निवेदयिष्यंस्त्वरितो जगाम।
पाञ्चालराजस्तु विषण्णरूपस्तान्पाण्डवानप्रतिविन्दमानः। धृष्टद्युम्नं पर्य्यपृच्छन्महात्मा क्व सा गता केन नीता च कृष्णा।
कच्चिन्न शूद्रेण न हीनजेन वैश्येन वा करदेनोपपन्ना। कच्चित्पदं मूर्द्ध्नि न पङ्कदिग्धं कच्चिन्न माला पतिता
श्मशाने। ७१७०
कच्चित्सवर्णप्रवरो मनुष्य उद्रिक्तवर्णोऽप्युत एव कच्चित्। कच्चिन्न वामो मम मूर्द्ध्नि पादः कृष्णाऽभिमर्शेन कृतोऽद्य पुत्त्र।
कच्चिच्च पक्षे परमप्रतीतः संयुज्य पार्थेन नरर्षभेण। वदस्व तत्त्वेन महानुभाव कोऽसौ विजेता दुहितुर्म्ममाद्य।
विचित्रवीर्य्यस्य सुतस्य कच्चित्कुरुप्रवीरस्य ध्रियन्ति पुत्त्राः। कच्चित्तु पार्थेन यवीयसाऽद्य धनुर्गृहीतं निहतञ्च लक्ष्यं।

इत्यादिपर्व्वणि स्वयम्बरपर्व्वणि धृष्टद्युम्नप्रत्यागमने द्विनवत्यधिकशततमोऽध्यायः समाप्तञ्च स्वम्बरपर्व्व ॥ १९२ ॥

---

## ॥ अथ वैवाहिकपर्व्व ॥

॥ वैशम्पायन उवाच ॥ ततस्तथोक्तः परिहृष्टरूपः पित्रे शशंसाथ स राजपुत्रः। धृष्टद्युम्नः सोमकानां प्रवर्हो वृत्तं यथा येन हृता च कृष्णा।

॥ धृष्टद्युम्न उवाच ॥ योऽसौ युवा व्यायतलोहिताक्षः कृष्णाजिनी देवसमानरूपः। यः कार्मुकाग्र्यं कृतवानधिज्यं लक्ष्यञ्च यः पातितवान्पृथिव्यां। ७१७५

असज्जमानश्च ततस्तरस्वी वृतो द्विजाग्र्यैरभिपूज्यमानः। चक्रामवज्रीव दितेः सुतेषु सर्व्वैश्च देवैरृषिभिश्च जुष्टः।
कृष्णा प्रगृह्याजिनमन्वयात्तं नागं यथा नागवधूः प्रहृष्टा। अमृष्यमाणेषु नराधिपेषु क्रुद्धेषु वै तत्र समापतत्सु।
ततोऽपरः पार्थिवसंघमध्ये प्रवृद्धमारुज्य महीप्ररोहं। प्रकालयन्नेव स पार्थिवौघान् क्रुद्धोऽन्तकः प्राणभृतो यथैव।
तौ पार्थिवानां मिषतां नरेन्द्र कृष्णामुपादाय गतौ नराग्र्यौ। विभ्राजमानाविव चन्द्रसूर्य्यौ बाह्यां पुराद्भार्गवकर्म्मशालां।

तत्रोपविष्टार्च्चिरिवानलस्य तेषां जनित्रीति मम प्रतर्कः। तथाविधैरेव नरप्रवीरैरुपोपविष्टैस्त्रिभिरग्निकल्पैः। ७१८०
तस्यास्ततस्तावभिवाद्य पादौ उक्ता च कृष्णा त्वभिवादयेति। स्थिताश्च तत्रैव निवेद्य कृष्णां भिक्षाप्रचाराय गता नराग्र्याः।
तेषान्तु भैक्ष्यं प्रतिगृह्य कृष्णा दत्त्वा बलिं ब्राह्मणसाच्च कृत्वा। ताञ्चैव वृद्धां परिवेश्य तांश्च नरप्रवीरान् स्वयमप्यभुङ्क्त।

सुप्तास्तु ते पार्थिव सर्व्व एव कृष्णा च तेषां चरणोपधाने। आसीत्पृथिव्यां शयनञ्च तेषां दर्भाजिनाग्र्यास्तरणोपपन्नं।
ते नर्दमाना इव कालमेघाः कथा विचित्राः कथयाम्बभूवुः। न वैश्यशूद्रौपयिकीः कथास्ता नच द्विजानां कथयन्ति वीराः।
निःसंशयं क्षत्रियपुङ्गवास्ते यथा हि युद्धं कथयन्ति राजन्। आशा हि नो व्यक्तमियं समृद्धा मुक्तान् हि पार्थान् शृणुमोऽग्निदाहात्। ७१८५
यथा हि लक्ष्यं निहतं धनुश्च सज्यं कृतं तेन तथा प्रसह्य। यथा च भाषन्ति परस्परन्ते छन्ना ध्रुवं ते प्रचरन्ति पार्थाः।
ततः स राजा द्रुपदः प्रहृष्टः पुरोहितं प्रेषयामास तेषां। विद्याम युष्मानिति भाषमाणो महात्मनः पाण्डुसुतास्तु कच्चित्।

गृहीतवाक्यो नृपतेः पुरोधा गत्वा प्रशंसामभिधाय तेषां। वाक्यं समग्रं नृपतेर्यथावदुवाच चानुक्रमविक्रमेण।
विज्ञातुमिच्छत्यवनीश्वरो वः पाञ्चालराजो वरदो वरार्हाः। लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा हर्षस्य नान्तं प्रतिपद्यते सः।
आख्यात च ज्ञातिकुलानुपूर्व्वीं पदं शिरःसु द्विषतां कुरुध्वं। प्रह्लादयध्वं हृदयं ममेदं पाञ्चालराजस्य च सानुगस्य। ७१९०
पाण्डुर्हि राजा द्रुपदस्य राज्ञः प्रियः सखा चात्मसमो बभूव। तस्यैष कामो दुहिता ममेयं स्नुषां प्रदास्यामि हि कौरवाय।
अयं हि कामो द्रुपदस्य राज्ञो हृदि स्थितो नित्यमनिन्दिताङ्गाः। यदर्जुनो वै पृथुदीर्घबाहुर्धर्म्मेण विन्देत सुतां ममेतां।
कृतं हि तत्स्यात्सुकृतं ममेदं यशश्च पुण्यञ्च हितं तदेतत्। अथोक्तवाक्यं हि पुरोहितं स्थितं ततो विनीतं समुदीक्ष्य राजा।

समीपतो भीममिदं शशास प्रदीयतां पाद्यमर्घं तथाऽस्मै। मान्यः पुरोधा द्रुपदस्य राज्ञस्तस्मै प्रयोज्याऽभ्यधिका हि पूजा।
भीमस्ततस्तत्कृतवान्नरेन्द्र तां चैव पूजां प्रतिगृह्य हर्षात्। सुखोपविष्टन्तु पुरोहितं तदा युधिष्ठिरो ब्राह्मणमित्युवाच। ७१९५
पाञ्चालराजेन सुता निसृष्टा स्वधर्म्मदृष्टेन यथा न कामात्। प्रदिष्टशुल्का द्रुपदेन राज्ञा सा तेन वीरेण तथाऽनुवृत्ता।
न तत्र वर्णेषु कृता विवक्षा नचापि शीले न कुले न गोत्रे। कृतेन सज्येन हि कार्मुकेन विद्धेन लक्ष्येण हि विप्रकृष्टा।

सेयं तथा तेन महात्मनेह कृष्णा जिता पार्थिवसंघमध्ये । नैवं गते सौमकिरद्य राजा सन्तापमर्हत्यसुखाय कर्त्तुं ।
कामश्च योऽसौ द्रुपदस्य राज्ञः स चापि संपत्स्यति पार्थिवस्य । संप्राप्तरूपां हि नरेन्द्रकन्यामिमामहं ब्राह्मण साधु मन्ये ।
न तद्धनुर्मन्दबलेन शक्यं मौर्व्या समायोजयितुं तथाऽपि । न चाकृतास्त्रेण न हीनजेन लक्ष्यं तथा पातयितुं हि शक्यं । ७२००
तस्मान्न तापं दुहितुर्निमित्तं पञ्चालराजोऽर्हति कर्त्तुमद्य । नचापि तत्पातनमन्यथेह कर्त्तुं हि शक्यं भुवि मानवेन ।
एवं ब्रुवत्येव युधिष्ठिरे तु पाञ्चालराजस्य समीपतोऽन्यः । तत्राजगामाशु नरो द्वितीयो निवेदयिष्यन्निह सिद्धमन्नं ।
इत्यादिपर्व्वणि वैवाहिकपर्व्वणि पुरोहितागमने त्रिनवत्यधिकशततोऽध्यायः ॥ १९३ ॥
॥ दूत उवाच ॥ जन्यार्थमन्नं द्रुपदेन राज्ञा विवाहहेतोरुपसंस्कृतञ्च । तदाप्नुवध्वं कृतसर्व्वकार्य्याः कृष्णाच तत्रैव चिरं न कार्य्यं ।
इमे रथाः काञ्चनपद्मचित्राः सदश्वयुक्ता वसुधाधिपार्हाः । एतान्समारुह्य परैत सर्व्वे पाञ्चालराजस्य निवेशनं तत् ।
॥ वैशम्पायन उवाच ॥ ततः प्रयाताः कुरुपुङ्गवास्ते पुरोहितं तं परियाप्य सर्व्वे । आस्थाय यानानि महान्ति तानि कुन्ती च कृष्णा च सहैकयाने । ७२०५
श्रुत्वा तु वाक्यानि पुरोहितस्य तान्युक्तवान्भारतधर्म्मराजः । जिज्ञासयैवाथ कुरूत्तमानां द्रव्याण्यनेकान्युपसंजहार ।
फलानि माल्यानि च संस्कृतानि वर्म्माणि चर्म्माणि तथासनानि । गाश्चैव राजन्नथ चैव रज्जुर्बीजानि चान्यानि कृषीनिमित्तं ।
अन्येषु शिल्पेषु च यान्यपि स्युः सर्व्वाणि कृत्यान्यखिलेन तत्र । क्रीडानिमित्तान्यपि यानि तत्र सर्व्वाणि तत्रोपजहार राजा ।
वर्म्माणि चर्म्माणि च भानुमन्ति खड्गा महान्तोऽश्वरथाश्च चित्राः । धनूंषि चाग्र्याणि शराश्च चित्राः शक्त्यृष्टयः काञ्चनभूषणाश्च ।
प्रासा भुशुण्ड्यश्च परश्वधाश्च सांग्रामिकञ्चैव तथेह सर्व्वं । शय्यासनान्युत्तमवस्तुवन्ति तथैव वासो विविधञ्च तत्र । ७२१०
कुन्ती तु कृष्णां परिगृह्य साध्वीमन्तःपुरं द्रुपदस्याविवेश । स्त्रियश्च तां कौरवराजपत्नीं प्रत्यर्चयामासुरदीनसत्त्वाः ।
तान्सिंहविक्रान्तगतीन्निरीक्ष्य महर्षभाक्षानजिनोत्तरीयान् । गूढोत्तरांसान् भुजगेन्द्रभोगप्रलम्बबाहून्पुरुषप्रवीरान् ।
राजा च राज्ञः सचिवाश्च सर्व्वे पुत्त्राश्च राज्ञः सुहृदस्तथैव । प्रेष्याश्च सर्व्वे निखिलेन राजन् हर्षं समापेतुरतीव तत्र ।
ते तत्र वीराः परमासनेषु सपादपीठेष्वविशङ्कमानाः । यथानुपूर्व्वं विविशुर्नराग्र्यास्तथा महार्हेषु न विस्मयन्तः ।
उच्चावचं पार्थिवभोजनीयं पात्रीषु जाम्बूनदराजतीषु । दासाश्च दास्यश्च सुमृष्टवेशाः सम्भोजकाश्चाप्युपजह्रुरन्नं । ७२१५
ते तत्र भुक्त्वा पुरुषप्रवीरा यथात्मकामं सुभृशं प्रतीताः । उत्क्रम्य सर्व्वाणि वसूनि राजन् सांग्रामिकं ते विविशुर्नृवीराः ।
तल्लक्षयित्वा द्रुपदस्य पुत्त्रो राजा च सर्व्वैः सह मन्त्रिमुख्यैः । समर्थयामासुरुपेत्य हृष्टाः कुन्तीसुतान् पार्थिव राजपुत्त्रान् ।
इत्यादिपर्व्वणि वैवाहिकपर्व्वणि सांग्रामिकद्रव्यग्रहणे चतुर्नवत्यधिकशततोऽध्यायः ॥ १९४ ॥
॥ वैशम्पायन उवाच ॥ तत आहूय पाञ्चाल्यो राजपुत्त्रं युधिष्ठिरं । परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः ।
पर्य्यपृच्छददीनात्मा कुन्तीपुत्त्रं सुवर्चसं । कथञ्जानीम भवतः क्षत्त्रियान् ब्राह्मणानुत ।
वैश्यान्वा गुणसम्पन्नानथवा शूद्रयोनिजान् । मायामास्थाय वा विप्राश्चरतः सर्व्वतो दिशं । ७२२०
कृष्णाहेतोरनुप्राप्ता देवाः सन्दर्शनार्थिनः । ब्रवीतु नो भवान्सत्यं सन्देहो ह्यत्र नो महान् ।
अपि नः संशयस्यान्ते मनःसन्तुष्टिमावहेत् । अपि नो भागधेयानि शुभानि स्युः परन्तप ।

इच्छया ब्रूहि तत्सत्यं सत्यं राजसु शोभते। इष्टापूर्त्तेन च तथा वक्तव्यमनृतं न तु।

श्रुत्वा ह्यमरसङ्काश तव वाक्यमरिन्दम। ध्रुवं विवाहकरणमास्थास्यामि विधानतः।

॥ युधिष्ठिर उवाच ॥ मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते। ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयं। ७२२५

वयं हि क्षत्रिया राजन् पाण्डोः पुत्त्रा महात्मनः। ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ।

आभ्यां तव सुता राजन्निर्ज्जिता राजसंसदि। यमौ च तत्र कुन्ती च यत्र कृष्णा व्यवस्थिता।

व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ। पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता।

इति तथ्यं महाराज सर्व्वमेतद्ब्रवीमि ते। भवान् हि गुरुरस्माकं परमञ्च परायणं।

॥ वैशम्पायन उवाच ॥ ततः स द्रुपदो राजा हर्षव्याकुललोचनः। प्रतिवक्तुं मुदा युक्तो नाशकत्तं युधिष्ठिरं। ७२३०

यत्नेन तु स तं हर्षं संनिगृह्य परन्तपः। अनुरूपं तदा वाचा प्रत्युवाच युधिष्ठिरं।

पप्रच्छ चैनं धर्म्मात्मा यथा ते प्रद्रुताः पुरात्। स तस्मै सर्व्वमाचख्यावानुपूर्व्व्येण पाण्डवः।

तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्त्रस्य भाषितं। विगर्हयामास तदा धृतराष्ट्रं नरेश्वरं।

आश्वासयामास च तं कुन्तीपुत्त्रं युधिष्ठिरं। प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः।

ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि। यमौ च राज्ञा सन्दिष्टं विविशुर्भवनं महत्। ७२३५

तत्र ते न्यवसन्राजन्यज्ञसेनेन पूजिताः। प्रत्याश्वस्तस्ततो राजा सह पुत्त्रैरुवाच तं।

गृह्णातु विधिवत् पाणिमद्यायं कुरुनन्दनः। पुण्येऽहनि महाबाहुरर्ज्जुनः कुरुतां क्षणं।

॥ वैशम्पायन उवाच ॥ तमब्रवीत्ततो राजा धर्म्मात्मा च युधिष्ठिरः। ममापि दारसम्बन्धः कार्य्यस्तावद्विशाम्पते।

॥ द्रुपद उवाच ॥ भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्म्मम। यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश।

॥ युधिष्ठिर उवाच ॥ सर्व्वेषां महिषी राजन्द्रौपदी नो भविष्यति। एवं प्रव्याहृतं पूर्व्वं मम मात्रा विशाम्पते। ७२४०

अहञ्चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः। पार्थेन विजिता चैषा रत्नभूता सुता तव।

एष नः समयो राजन् रत्नस्य सह भोजनं। न च तं हातुमिच्छामः समयं राजसत्तम।

सर्व्वेषां धर्म्मतः कृष्णा महिषी नो भविष्यति। आनुपूर्व्व्येण सर्व्वेषां गृह्णातु ज्वलने करान्।

॥ द्रुपद उवाच ॥ एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन। नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित।

लोकवेदविरुद्धं त्वं नाधर्म्मं धर्म्मविच्छुचिः। कर्त्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी। ७२४५

॥ युधिष्ठिर उवाच ॥ सूक्ष्मो धर्म्मो महाराज नास्य विद्मो वयं गतिं। पूर्व्वेषामानुपूर्व्व्येण यातं वर्त्मानुयामहे।

न मे वागनृतं प्राह नाधर्म्मे धीयते मनः। एवञ्चैव वदत्यम्बा मम चैतन्मनोगतं।

एष धर्म्मो ध्रुवो राजंश्चरैनमविचारयन्। मा च शङ्का तत्र ते स्यात्कथञ्चिदपि पार्थिव।

॥ द्रुपद उवाच ॥ त्वञ्च कुन्ती च कौन्तेय धृष्टद्युम्नश्च मे सुतः। कथयन्त्वितिकर्त्तव्यं श्वःकाले करवामहे।

॥ वैशम्पायन उवाच ॥ ते समेत्य ततः सर्व्वे कथयन्ति स्म भारत। ७२५०

अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया।

इत्यादिपर्व्वणि वैवाहिकपर्व्वणि द्वैपायनागमने पञ्चनवत्यधिकशतोऽध्यायः॥ १९५ ॥

॥ वैशम्पायन उवाच ॥ ततस्ते पाण्डवाः सर्व्वे पाञ्चाल्यश्च महायशाः । प्रत्युत्थाय महात्मानं कृष्णं सर्व्वेऽभ्यवादयन् ।

प्रतिनन्द्य स तां पूजां पृष्ट्वा कुशलमन्ततः । आसने काञ्चने शुभ्रे निषसाद महामनाः ।

अनुज्ञातास्तु ते सर्व्वे कृष्णेनामिततेजसा । आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ।

ततो मुहूर्त्तान्मधुरां वाणीमुच्चार्य्य पार्षतः । पप्रच्छ तं महात्मानं द्रौपद्यर्थे विशाम्पते । ७२५५

कथमेका बहूनां स्याद्धर्म्मपत्नी न सङ्करः । एतन्मे भगवान्सर्व्वं प्रब्रवीतु यथातथं ।

॥ व्यास उवाच ॥ अस्मिन्धर्म्मे विप्रलब्धे लोकवेदविरोधके । यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ।

॥ द्रुपद उवाच ॥ अधर्म्मोऽयं मम मतो विरुद्धो लोकवेदयोः । न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ।

न चाप्याचरितः पूर्व्वैरयं धर्म्मो महात्मभिः । न चाप्यधर्म्मो विद्वद्भिश्चरितव्यः कथञ्चन ।

ततोऽहं न करोम्येनं व्यवसायं क्रियां प्रति । धर्म्मः सदैव सन्दिग्धः प्रतिभाति हि मे त्वयं । ७२६०

॥ धृष्टद्युम्न उवाच ॥ यवीयसः कथं भार्य्यां ज्येष्ठो भ्राता द्विजर्षभ । ब्रह्मन्समभिवर्त्तेत सद्वृत्तः संस्तपोधन ।

न तु धर्म्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथञ्चन । अधर्म्मो धर्म्म इति वाप्यवसायो न शक्यते ।

कर्त्तुमस्मद्विधैर्ब्रह्मंस्ततोऽयं न व्यवस्यति । पञ्चानां महिषी कृष्णा भवत्विति कथञ्चन ।

॥ युधिष्ठिर उवाच ॥ न मे वागनृतं प्राह नाधर्म्मे धीयते मतिः । वर्त्तते हि मनो मेऽत्र नैषोऽधर्म्मः कथञ्चन ।

श्रूयते हि पुराणेऽपि जटिला नाम गौतमी । ऋषीनध्यासितवती सप्त धर्म्मभृताम्वरा । ७२६५

तथैव मुनिजा वार्क्षी तपोभिर्भावितात्मनः । संगताऽभूद्दश भ्रातृनेकनाम्नः प्रचेतसः ।

गुरोर्हि वचनं प्राहुर्धर्म्म्यं धर्म्मज्ञसत्तम । गुरूणाञ्चैव सर्व्वेषां माता परमको गुरुः ।

सा चाप्युक्तवती वाचं भैक्ष्यवद्भुज्यतामिति । तस्मादेतदहं मन्ये परं धर्म्मं द्विजोत्तम ।

॥ कुन्त्युवाच ॥ एवमेतद्यथा प्राह धर्म्मचारी युधिष्ठिरः । अनृतान्मे भयं तीव्रं मुच्येऽहमनृतात्कथं ।

॥ व्यास उवाच ॥ अनृतान्मोक्ष्यसे भद्रे धर्म्मश्चैष सनातनः । न तु वक्ष्यामि सर्व्वेषां पाञ्चाल शृणु मे स्वयं । ७२७०

यथाऽयं विहितो धर्म्मो यतश्चायं सनातनः । यथा च प्राह कौन्तेयस्तथा धर्म्मो न संशयः ।

॥ वैशम्पायन उवाच ॥ तत उत्थाय भगवान्व्यासो द्वैपायनः प्रभुः । करे गृहीत्वा राजानं राजवेश्म समाविशत ।

पाण्डवाश्चापि कुन्ती च धृष्टद्युम्नश्च पार्षतः । विविशुर्यत्र तत्रैव प्रतीक्षन्ते स्म तावुभौ ।

ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने । आचख्यौ तद्यथाधर्म्मो बहूनामेकपत्निता ।

इत्यादिपर्व्वणि वैवाहिकपर्व्वणि व्यासवाक्ये षण्णवत्यधिकशततोऽध्यायः ॥ १९६ ॥

॥ व्यास उवाच ॥ पुरा वै नैमिषारण्ये देवाः सत्रमुपासते । तत्र वैवस्वतो राजन् शामित्रमकरोत्तदा । ७२७५

ततो यमो दीक्षितस्तत्र राजन्नामारयत्किञ्चिदपि प्रजानां । ततः प्रजास्ता बहुला बभूवुः कालातिपातान्मरणप्रहीणाः ।

सोमश्च शक्रो वरुणः कुवेरः साध्या रुद्रा वसवोऽथाश्विनौ च । प्रणेतारं भुवनस्य प्रजापतिं समाजग्मुस्तत्र देवास्तथाऽन्ये ।

ततोऽब्रुवन्लोकगुरुं समेता भयात्तीव्रान्मानुषाणां विवृद्ध्या । तस्माद्भयादुद्विजन्तः सुखेप्सवः प्रयाम सर्व्वे शरणं भवन्तं ।

॥ पितामह उवाच ॥ किं वो भयं मानुषेभ्यो यूयं सर्व्वे यदाऽमराः । मा वो मर्त्यसकाशाद्वै भयं भवितुमर्हति ।

॥ देवा ऊचुः ॥ मर्त्या अमर्त्याः संवृत्ता न विशेषोऽस्ति कश्चन। अविशेषादुद्विजन्तो विशेषार्थमिहागताः। ७२८०

॥ भगवानुवाच ॥ वैवस्वतो व्यापृतः सत्रहेतोस्तेन त्विमे न म्रियन्ते मनुष्याः। तस्मिन्नेकाग्ये कृतसर्व्वकार्य्ये तत एषां भवितैवान्तकालः।

वैवस्वतस्यैव तनुर्व्विभूषिता वीर्य्येण युष्माकमुत प्रवृद्धा। सैषामन्तो भविता ह्यन्तकाले न तत्र वीर्य्यं भविता नरेषु।

॥ व्यास उवाच ॥ ततस्तु ते पूर्व्वजदेववाक्यं श्रुत्वा जग्मुर्यत्र देवा यजन्ते। समासीनास्ते समेता महाबला भागीरथ्यां ददृशुः पुण्डरीकं।

दृष्ट्वा च तद्विस्मितास्ते बभूवुस्तेषामिन्द्रस्तत्र शूरो जगाम। सोऽपश्यद्योषामथ पावकप्रभां यत्र देवी गङ्गा सततं प्रभूता।

सा तत्र योषा रुदती जलार्थिनी गङ्गां देवीं व्यवगाह्य व्यतिष्ठत्। ७२८५

तस्याश्रुबिन्दुः पतितो जले यस्तत्पद्ममासीदथ तत्र काञ्चनं।

तदद्भुतं प्रेक्ष्य वज्री तदानीमपृच्छत्तां योषितमन्तिकाद्वै। का त्वं भद्रे रोदिषि कस्य हेतोर्व्वाक्यं तथ्यं कामयेऽहं ब्रवीहि।

॥ स्त्र्युवाच ॥ त्वं वेत्स्यसे मामिह याऽस्मि शक्र यदर्थं चाहं रोदिमि मन्दभाग्या। आगच्छ राजन्पुरतो गमिष्ये द्रष्टाऽसि तद्रोदिमि यत्कृतेऽहं।

॥ व्यास उवाच ॥ तां गच्छन्तीमन्वगच्छत्तदानीं सोऽपश्यदाराक्तरुणं दर्शनीयं। सिंहासनस्थं युवतीसहायं क्रीडन्तमक्षैर्गिरिराजमूर्द्ध्नि।

तमब्रवीद्देवराजो ममेदं त्वं विद्धि विद्वन्भुवनं वशे स्थितं। ईशोऽहमस्मीति समन्युरब्रवीद्दृष्ट्वा तमक्षैः सुभृशं प्रमत्तं। ७२९०

क्रुद्धञ्च शक्रं प्रसमीक्ष्य देवो जहास शक्रञ्च शनैरुदैक्षत। संस्तम्भितोऽभूदथ देवराजस्तेनेक्षितः स्थाणुरिवावतस्थे।

यदा तु पर्य्याप्तमिहास्य क्रीडया तदा देवीं रुदतीं तामुवाच। आनीयतामेष यतोऽहमाराच्चैनं दर्पः पुनरप्याविशेत।

ततः शक्रः स्पृष्टमात्रस्तया तु स्रस्तैरङ्गैः पतितोऽभूद्धरण्यां। तमब्रवीद्भगवानुग्रतेजा मैवं पुनः शक्र कृथाः कथञ्चित्।

निवर्त्तयैनञ्च महाद्रिराजं बलञ्च वीर्य्यञ्च तथाऽप्रमेयं। छिद्रस्य चैवाविश मध्यमस्य यत्रासते त्वद्विधाः सूर्य्यभासः।

स तद्विवृत्य विवरं महागिरेस्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श। स तानभिप्रेक्ष्य बभूव दुःखितः कच्चिन्नाहं भविता वै यथेमे। ७२९५

ततो देवो गिरिशो वज्रपाणिं विवृत्य नेत्रे कुपितोऽभ्युवाच। दरीमेतां प्रविश त्वं शतक्रतो यन्मां बाल्यादवमंस्थाः पुरस्तात्।

उक्तस्त्वेवं विभुना देवराजः प्रावेपतार्त्तो भृशमेवाभिषङ्गात्। स्रस्तैरङ्गैरनिलेनेव नुन्नमश्वत्थपत्रं गिरिराजमूर्द्ध्नि।

स प्राञ्जलिर्व्वै वृषवाहनेन प्रवेपमानः सहसैवमुक्तः। उवाच देवं बहुरूपमुग्रं द्रष्टाऽशेषस्य भुवनस्य त्वं भवाद्य।

तमब्रवीदुग्रवर्चाः प्रहस्य नैवंशीलाः शेषमिहाप्नुवन्ति। एतेऽप्येवं भवितारः पुरस्तात्तस्मादेतां दरीमाविश्याशेध्वं।

तत्र ह्येवं भवितारो न संशयो योनिं सर्व्वे मानुषीमाविशध्वं। तत्र यूयं कर्म्म कृत्वाऽविषह्यं बहूनन्यान्निधनं प्रापयित्वा। ७३००

आगन्तारः पुनरेवेन्द्रलोकं स्वकर्म्मणा पूर्व्वजितं महार्हं। सर्व्वं मया भाषितमेतदेवं कर्त्तव्यमन्यद्विविधार्थयुक्तं।

पूर्व्वेन्द्रा ऊचुः ॥ गमिष्यामो मानुषं देवलोकाद्दुराधरो विहितो यत्र मोक्षः। देवास्त्वस्मानादधीरन् जनन्यां धर्म्मो वायुर्म्मघवानश्विनौ च।

॥ व्यास उवाच ॥ एतच्छ्रुत्वा वज्रपाणिर्व्वचस्तु देवश्रेष्ठं पुनरेवेदमाह। वीर्य्येणाहं पुरुषं कार्य्यहेतोर्दद्यामेषां पञ्चमं मत्प्रसूतं।

विश्वभुग्भूतधामा च शिविरिन्द्रः प्रतापवान्। शान्तिश्चतुर्थस्तेषां वै तेजस्वी पञ्चमः स्मृतः।

तेषां कामं भगवानुग्रधन्वा प्रादादिष्टं सन्निसर्गाद्यथोक्तं। तां चाप्येषां योषितं लोककान्तां श्रियं भार्य्यां व्यदधान्मानुषेषु। ७२०५

तैरेव सार्द्धन्तु ततः स देवो जगाम नारायणमप्रमेयं। अनन्तमव्यक्तमजं पुराणं सनातनं विश्वमनन्तरूपं।

स चापि तद्व्यदधात्सर्व्वमेव ततः सर्व्वे सम्बभूवुर्द्धरण्यां। स चापि केशौ हरिरुद्वबर्ह शुक्लमेकमपरं चापि कृष्णं।

तौ चापि केशौ निविशेतां यदूनां कुले स्त्रियौ देवकीं रोहिणीञ्च। तयोरेको बलदेवो बभूव योऽसौ श्वेतस्तस्य देवस्य केशः। कृष्णो द्वितीयः केशवः सम्बभूव केशो योऽसौ वर्णतः कृष्ण उक्तः।

ये ते पूर्व्वं शक्ररूपा निबद्धाः तस्यां दर्य्यां पर्व्वतस्योदरस्य। इहैव ते पाण्डवा वीर्य्यवन्तः शक्रस्यांशः पाण्डवः सव्यसाची।

एवमेते पाण्डवाः सम्बभूवुर्य्ये ते राजन्पूर्व्वमिन्द्रा बभूवुः। लक्ष्मीश्चैषां पूर्व्वमेवोपदिष्टा भार्य्या यैषा द्रौपदी दिव्यरूपा। ७२१०

कथं हि स्त्री कर्म्मणोऽन्ते महीतलात्समुत्तिष्ठेदन्यतो दैवयोगात्। यस्या रूपं सोमसूर्य्यप्रकाशं गन्धश्चास्याः क्रोशमात्रात्प्रवाति।

इदं चान्यत्प्रीतिपूर्व्वं नरेन्द्र ददानि ते दिव्यमत्यद्भुतञ्च। दिव्यञ्चक्षुः पश्य कुन्तीसुतांस्त्वं पुण्यैर्द्दिव्यैः पूर्व्वदेहैरुपेतान्।

॥ वैशम्पायन उवाच ॥ ततो व्यासः परमोदारकर्म्मा शुचिर्व्विप्रस्तपसा तस्य राज्ञः। चक्षुर्दिव्यं प्रददौ तांश्च सर्व्वान्राजाऽपश्यत्पूर्व्वदेहैर्य्यथावत्।

ततो दिव्यान्हेमकिरीटमालिनः शक्रप्रख्यान्पावकादित्यवर्णान्। बद्धापीडांश्चारुरूपांश्च यूनो व्यूढोरस्कांस्तालमात्रान्ददर्श।

दिव्यैर्व्वस्त्रैररजोभिः सुगन्धैर्माल्यैश्चाग्र्यैः शोभमानानतीव। साक्षात्त्र्यक्षान्वा वसूंश्चापि रुद्रानादित्यान्वा सर्व्वगुणोपपन्नान्। ७२१५

तान्पूर्व्वेन्द्रानभिवीक्ष्याभिरूपाञ्शक्रात्मजं चेन्द्ररूपं निशम्य। प्रीतो राजा द्रुपदो विस्मितश्च दिव्यां मायां तामवेक्ष्याप्रमेयां।

तां चैवाग्र्यां स्त्रियमतिरूपयुक्तां दिव्यां साक्षात्सोमवह्निप्रकाशां। योग्यां तेषां रूपतेजोयशोभिः पत्नीं मत्वा हृष्टवान्पार्थिवेन्द्रः।

स तद्दृष्ट्वा महदाश्चर्य्यरूपं जग्राह पादौ सत्यवत्याः सुतस्य। नैतच्चित्रं परमर्षे त्वयीति प्रसन्नचेताः स उवाच चैनं।

॥ व्यास उवाच ॥ आसीत्तपोवने काचिदृषेः कन्या महात्मनः। नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती।

तोषयामास तपसा सा किलोग्रेण शङ्करं। तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयं। ७२२०

सैवमुक्ताऽब्रवीत्कन्या देवं वरदमीश्वरं। पतिं सर्व्वगुणोपेतमिच्छामीति पुनः पुनः।

ददौ तस्यै स देवेशस्तं वरं प्रीतमानसः। पञ्च ते पतयो भद्रे भविष्यन्तीति शङ्करः।

सा प्रसादयती देवमिदं भूयोऽभ्यभाषत। एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति शङ्कर।

तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः। पञ्चकृत्वस्त्वयोक्तोऽहं पतिं देहीति वै पुनः।

तत्तथा भविता भद्रे वचस्तद्भद्रमस्तु ते। देहमन्यं गतायास्ते सर्व्वमेतद्भविष्यति। ७२२५

द्रुपदैषा हि सा जज्ञे सुता वै देवरूपिणी। पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता।

स्वर्गश्रीः पाण्डवार्थन्तु समुत्पन्ना महामखे। सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता।

सैषा देवी रुचिरा देवजुष्टा पञ्चानामेका स्वकृतेनेह कर्म्मणा। सृष्टा स्वयं देवपत्नी स्वयम्भुवा श्रुत्वा राजन्द्रुपदेष्टं कुरुष्व।

इत्यादिपर्व्वणि वैवाहिकपर्व्वणि पञ्चेन्द्रोपाख्याने सप्तनवत्यधिकशतोऽध्यायः॥ १९७ ॥

॥ द्रुपद उवाच ॥ अश्रुत्वैवं वचनं ते महर्षे मया पूर्व्वं यतितं संविधातुं। नैव शक्यं विहितस्यापयानं तदेवेदमुपपन्नं विधानं।
दिष्टस्य ग्रन्थिरनिवर्त्तनीयः स्वकर्म्मणा विहितं नेह किञ्चित्। कृतं निमित्तं हि वरैकहेतोस्तदेवेदमुपपन्नं विधानं। ७२३०
यथैव कृष्णोक्तवती पुरस्तान्नैकान्पतीन्मे भगवान्ददातु। स चाप्येवं वरमित्यब्रवीत्तां देवो हि वेत्ता परमं यदत्र।
यदि चैवं विहितः शङ्करेण धर्म्मोऽधर्म्मो वा नात्र ममापराधः। गृह्णन्त्विमे विधिवत्पाणिमस्या यथोपजोषं विहितैषां
　　हि कृष्णा।
॥ वैशम्पायन उवाच ॥ ततोऽब्रवीद्भगवान्धर्म्मराजमद्यैव पुण्याहमुत वः पाण्डवेयाः। अद्य पौष्यं योगमुपैति चन्द्रमाः पाणिं
　　कृष्णायास्त्वं गृहाणाद्य पूर्व्वं।
ततो राजा यज्ञसेनः सपुत्रो जन्यार्थमुक्तं बहु तत्तदग्र्यं। समानयामास सुताञ्च कृष्णामाप्लाव्य रत्नैर्ब्बहुभिर्व्विभूष्य।
ततस्तु सर्व्वे सुहृदो नृपस्य समाजग्मुः सहिता मन्त्रिणश्च। द्रष्टुं विवाहं परमप्रतीता द्विजाश्च पौराश्च यथाप्रधानाः। ७२३५
ततोऽस्य वेश्माग्र्यजनोपशोभितं विकीर्णपद्मोत्पलभूषिताजिरं। बलौघरत्नौघविचित्रमाबभौ नभो यथा निर्म्मलतारकाचितं।
ततस्तु ते कौरवराजपुत्रा विभूषिताः कुण्डलिनो युवानः। महार्हवस्त्राम्बरचन्दनोक्षिताः कृताभिषेकाः कृतमङ्गल
　　क्रियाः।
पुरोहितेनाग्निसमानवर्च्चसा सहैव धौम्येन यथाविधि प्रभो। क्रमेण सर्व्वे विविशुस्ततः सदो महर्षभा गोष्ठमिवाभिन
　　न्दिनः।
ततः समाधाय स वेदपारगो जुहाव मन्त्रैर्ज्वलितं हुताशनं। युधिष्ठिरं चाप्युपनीय मन्त्रविन्नियोजयामास सहैव
　　कृष्णया।
प्रदक्षिणं तौ प्रगृहीतपाणी परीणयामास स वेदपारगः। ततोऽभ्यनुज्ञाय तमाजिशोभिनं पुरोहितो राजगृहाद्विनिर्ययौ। ७२४०
क्रमेण चानेन नराधिपात्मजा वरस्त्रियस्ते जगृहुस्तदा करं। अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्द्धनाः।
इदञ्च तत्राद्भुतरूपमुत्तमं जगाद देवर्षिरतीव मानुषं। महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽ
　　हनि।
कृते विवाहे द्रुपदो धनं ददौ महारथेभ्यो बहुरूपमुत्तमं। शतं रथानां वरहेममालिनां चतुर्युजां हेमखलीनमालिनां।
शतं गजानामपि पद्मिनां तथा शतं गिरीणामिव हेमशृङ्गिणां। तथैव दासीशतमग्र्ययौवनं महार्हवेशाभरणाम्बरस्रजं।
पृथक्पृथग्दिव्यदृशां पुनर्ददौ तदा धनं सौमकिरग्निसाक्षिकं। तथैव वस्त्राणि विभूषणानि प्रभावयुक्तानि महानुभावः। ७२४५
कृते विवाहे तु ततस्तु पाण्डवाः प्रभूतरत्नामुपलभ्य तां श्रियं। विजह्रुरिन्द्रप्रतिमा महाबलाः पुरे तु पाञ्चालनृपस्य
　　तस्य ह।

इत्यादिपर्व्वणि वैवाहिकपर्व्वणि द्रौपदीविवाहे अष्टनवत्यधिकशततोऽध्यायः ॥ १९८ ॥

॥ वैशम्पायन उवाच ॥ पाण्डवैः सह संयोगं गतस्य द्रुपदस्य ह। न बभूव भयं किञ्चिद्देवेभ्योऽपि कथञ्चन।
कुन्तीमासाद्य ता नार्य्यो द्रुपदस्य महात्मनः। नाम सङ्कीर्त्तयन्त्योऽस्याः जग्मुः पादौ स्वमूर्द्धनि।
कृष्णा च क्षौमसम्वीता कृतकौतुकमङ्गला। कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलिः।
रूपलक्षणसम्पन्नां शीलाचारसमन्वितां। द्रौपदीमवदत्प्रेम्णा पृथाशीर्व्वचनं स्नुषां।　　७२५०

यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ। रोहिणी च यथा सोमे दमयन्ती यथा नले।
यथा वैश्रवणे भद्रा वशिष्ठे चाप्यरुन्धती। यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्त्तृषु।
जीवसूर्व्वीरसूर्भद्रे बहुसौख्यसमन्विता। सुभगा भोगसम्पन्ना यज्ञपत्नी पतिव्रता।
अतिथीनागतान् साधून् वृद्धान् बालांस्तथा गुरून्। पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः।
कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च। अनु त्वमभिषिच्यस्व नृपतिं धर्म्मवत्सला। ७१८५
पतिभिर्न्निर्ज्जितामुर्व्वीं विक्रमेण महाबलैः। कुरु ब्राह्मणसात् सर्व्वामश्वमेधे महाक्रतौ।
पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते। तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतं।
यथा च त्वाऽभिनन्दामि वध्वद्य क्षौमसंवृतां। तथा भूयोऽभिनन्दिष्ये जातपुत्त्रां गुणान्वितां।
॥ वैशम्पायन उवाच ॥ ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः। वैदूर्य्यमणिचित्राणि हैमान्याभरणानि च।
वासांसि च महार्हाणि नानादेश्यानि माधवः। कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च। ७१९०
शयनासनयानानि विविधानि महान्ति च। वैदूर्य्यवज्रचित्राणि शतशो भाजनानि च।
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलङ्कृताः। प्रेष्याः सम्प्रददौ कृष्णो नानादेश्याः स्वलङ्कृताः।
गजान् विनीतान् भद्रांश्च सदश्वांश्च स्वलङ्कृतान्। रथांश्च दान्तान् सौवर्णैः शुभ्रैः पट्टैरलङ्कृतान्।
कोटिशश्च सुवर्णञ्च तेषामकृतकं तथा। वीथीकृतममेयात्मा प्राहिणोन्मधुसूदनः।
तत् सर्व्वं प्रतिजग्राह धर्म्मराजो युधिष्ठिरः। मुदा परमया युक्तो गोविन्दप्रियकाम्यया। ७१९५
इत्यादिपर्व्वणि वैवाहिकपर्व्वणि ऊननवत्यधिकशततोऽध्यायः समाप्तञ्च वैवाहिकपर्व्व ॥ १८९ ॥

## ॥ अथ विदुरागमनपर्व्व ॥ १४ ॥

॥ वैशम्पायन उवाच ॥ ततो राज्ञां चरैराप्तैः प्रवृत्तिरुपनीयत। पाण्डवैरुपसम्पन्ना द्रौपदी पतिभिः शुभा।
येन तद्धनुरायम्य लक्ष्यं विद्धं महात्मना। सोऽर्ज्जुनो जयतां श्रेष्ठो महाबाणधनुर्द्धरः। यः शल्यं मद्रराजं वै प्रोत्क्षिप्या
पातयद्बली।
त्रासयामास संक्रुद्धो वृक्षेण पुरुषान् रणे। न चास्य संभ्रमः कश्चिदासीत्तत्र महात्मनः। भीमो भीमसंस्पर्शः शत्रुसेनाङ्ग
पातनः।
ब्रह्मरूपधरान् श्रुत्वा प्रशान्तान् पाण्डुनन्दनान्। कौन्तेयान् मनुजेन्द्राणां विस्मयः समजायत।
सपुत्त्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता। पुनर्ज्जातानिव च तान् तेऽमन्यन्त नराधिपाः। ७२००
धिगकुर्व्वंस्तदा भीष्मं धृतराष्ट्रञ्च कौरवं। कर्म्मणाऽतिनृशंसेन पुरोचनकृतेन वै।
वृत्ते स्वयम्वरे चैव राजानः सर्व्व एव ते। यथागतं विप्रजग्मुर्व्विदित्वा पाण्डवान् वृतान्।
अथ दुर्य्योधनो राजा विमना भ्रातृभिः सह। अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च।
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनं। तन्तु दुःशासनो व्रीडन्मन्दं मन्दमिवाब्रवीत्।
यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः। नहि तं तत्त्वतो राजन् वेद कश्चिद्धनञ्जयं। ७२०५

दैवञ्च परमं मन्ये पौरुषं चाप्यनर्थकं। धिगस्तु पौरुषं तात श्रियन्ते यत्र पाण्डवाः।
एवं सम्भाषमाणास्ते निन्दन्तश्च पुरोचनं। विविशुर्हास्तिनपुरं दीना विगतचेतसः।
त्रस्ता विगतसङ्कल्पा दृष्ट्वा पार्थान्महौजसः। मुक्तान्हव्यभुजश्चैव संयुक्तान्द्रुपदेन च।
धृष्टद्युम्नं तु सञ्चिन्त्य तथैव च शिखण्डिनं। द्रुपदस्यात्मजांश्चान्यान्सर्व्वयुद्धविशारदान्।
विदुरस्त्वथ तां श्रुत्वा द्रौपदीं पाण्डवैर्वृतां। व्रीडितान् धार्त्तराष्ट्रांश्च भग्नदर्पानुपागतान्। ७३८०
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशाम्पते। उवाच दिष्ट्या कुरवो वर्द्धन्त इति विस्मितः।
वैचित्रवीर्य्यस्तु नृपो निशम्य विदुरस्य तत्। अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत।
मन्यते स वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया। दुर्य्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः।
अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु। आनीयतां वै कृष्णेति पुत्रं दुर्य्योधनं तदा।
अथास्य पश्चाद्विदुर आचख्यौ पाण्डवान् वृतान्। सर्व्वान् कुशलिनो वीरान् पूजितान्द्रुपदेन ह। ७३८५
तेषां सम्बन्धिनश्चान्यान् बहून् बलसमन्वितान्। समागतान् पाण्डवैस्तस्मिन्नेव स्वयम्बरे।
॥ धृतराष्ट्र उवाच॥ यथैव पाण्डोः पुत्रास्तु तथैवाभ्यधिका मम। यथा चाभ्यधिका बुद्धिर्म्मम तान् प्रति तच्छृणु।
यत्ते कुशलिनो वीरा मित्रवन्तश्च पाण्डवाः। तेषां सम्बन्धिनश्चान्ये बहवश्च महाबलाः।
को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवं। न बुभूषेद्भवेनार्थी गतश्रीरिव पार्थिवः।
॥ वैशम्पायन उवाच॥ तं तथा भाषमाणन्तु विदुरः प्रत्यभाषत। नित्यं भवतु ते बुद्धिरेषा राजन् शतं समाः। ७३९०
ततो दुर्य्योधनश्चापि राधेयश्च विशाम्पते। धृतराष्ट्रमुपागम्य वचो ब्रूतामिदं तदा।
सन्निधौ विदुरस्य त्वां दोषं वक्तुं न शक्नुवः। विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितं।
सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः। अभिष्टौषि च यत् क्षत्तुः समीपे द्विषतां वर।
अन्यस्मिन्नृप कर्त्तव्ये त्वमन्यत्कुरुषेऽनघ। तेषां बलविघातो हि कर्त्तव्यस्तात नित्यशः।
ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे। यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान्। ७३९५
इत्यादिपर्व्वणि विदुरागमनपर्व्वणि दुर्य्योधनवाक्ये द्विशतोऽध्यायः॥ २०० ॥
॥ धृतराष्ट्र उवाच॥ अहमप्येवमेवैतच्चिकीर्षामि यथा युवां। विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति।
ततस्तेषां गुणानेव कीर्त्तयामि विशेषतः। नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः।
यच्च त्वं मन्यसे प्राप्तं तद्ब्रवीहि सुयोधन। राधेय मन्यसे यच्च प्राप्तकालं वदाशु मे।
॥ दुर्य्योधन उवाच॥ अद्य तान् कुशलैर्विप्रैः सुगुप्तैराप्तकारिभिः। कुन्तीपुत्रान् भेदयामो माद्रीपुत्रौ च पाण्डवौ।
अथ वा द्रुपदो राजा महद्भिर्व्वित्तसञ्चयैः। पुत्राश्चास्य प्रलोभ्यन्ताममात्याश्चैव सर्व्वशः। ७४००
परित्यजेद्यथा राजा कुन्तीपुत्रं युधिष्ठिरं। अथ तत्रैव वा तेषां निवासं रोचयन्तु ते।
इहैषां दोषवद्वासं वर्णयन्तु पृथक् पृथक्। ते भिद्यमानास्तत्रैव मनः कुर्व्वन्तु पाण्डवाः।
अथवा कुशलाः केचिदुपायनिपुणा नराः। इतरेतरतः पार्थान् भेदयन्त्वनुरागतः।
व्युत्थापयन्तु वा कृष्णां बहुत्वात्सुकरं हि तत्। अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च तां।

भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः । मृत्युर्विधीयतां छन्नैः स हि तेभ्यो बलाधिकः । ७४०५
तमाश्रित्य हि कौन्तेयः पुरा चास्मान्न मन्यते । स हि तीक्ष्णश्च शूरश्च तेषाञ्चैव परायणं ।
तस्मिंस्त्वभिहते राजन् हतोत्साहा हतौजसः । यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ।
अजेयो ह्यर्जुनः संख्ये पृष्ठगोपे वृकोदरे । तमृते फाल्गुनो युद्धे राधेयस्य न पादभाक् ।
ते जानानास्तु दौर्बल्यं भीमसेनमृते महत् । अस्मान् बलवतो ज्ञात्वा न यतिष्यन्ति दुर्बलाः ।
इहागतेषु वा तेषु निदेशवशवर्त्तिषु । प्रवर्त्तिष्यामहे राजन्यथाशास्त्रं निबर्हणं । ७४१०
अथ वा दर्शनीयाभिः प्रमदाभिर्विलोभ्यतां । एकैकस्तत्र कौन्तेयस्ततः कृष्णा विरज्यतां ।
प्रेष्यतां चैव राधेय तेषामागमनाय वै । तैस्तैः प्रकारैः सन्नीय पात्यन्तामाप्तकारिभिः ।
एतेषामप्युपायानां यस्ते निर्दोषवान्मतः । तस्य प्रयोगमातिष्ठ पुरा कालोऽतिवर्त्तते ।
यावद्ध्यकृतविश्वासा द्रुपदे पार्थिवर्षभे । तावदेव हि ते शक्या न शक्यास्तु ततः परं ।
एषा मम मतिस्तात निग्रहाय प्रवर्त्तते । साध्वी वा यदि वाऽसाध्वी किम्वा राधेय मन्यसे । ७४१५
इत्यादिपर्व्वणि विदुरागमनपर्व्वणि दुर्योधनवाक्ये एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
॥ कर्ण उवाच ॥ दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः । न ह्युपायेन ते शक्याः पाण्डवाः कुरुवर्द्धन ।
पूर्व्वमेव हि ते सूक्ष्मैरुपायैर्यतितास्त्वया । निग्रहीतुं तदा वीर न चैव शकितास्त्वया ।
इहैव वर्त्तमानास्ते समीपे तव पार्थिव । अजातपक्षाः शिशवः शकिता नैव बाधितुं ।
जातपक्षा विदेशस्था विवृद्धाः सर्व्वशोऽद्य ते । नोपायसाध्याः कौन्तेया ममैषा मतिरच्युता ।
न च ते व्यसनैर्योक्तुं शक्या दिष्टकृतेन च । शकिताश्चेप्सवश्चैव पितृपैतामहं पदं । ७४२०
परस्परेण भेदश्च नाधातुं तेषु शक्यते । एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परं ।
न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः । परिद्यूनान्वृतवती किमुताद्य मृजावतः ।
ईप्सितश्च गुणः स्त्रीणामेकस्या बहुभर्तृता । तञ्च प्राप्तवती कृष्णा न सा भेदयितुं क्षमा ।
आर्य्यव्रतश्च पाञ्चालो न स राजा धनप्रियः । न संत्यक्ष्यति कौन्तेयान् राज्यदानैरपि ध्रुवं ।
तथाऽस्य पुत्रो गुणवाननुरक्तश्च पाण्डवान् । तस्मान्नोपायसाध्यांस्तानहं मन्ये कथञ्चन । ७४२५
इदं त्वद्य क्षमं कर्त्तुमस्माकं पुरुषर्षभ । यावन्न कृतमूलास्ते पाण्डवेया विशाम्पते । तावत्प्रहरणीयास्ते तत्तुभ्यं तात रोचतां ।
अस्मत्पक्षो महान्यावद्यावत्पाञ्चालको लघुः । तावत्प्रहरणं तेषां क्रियतां मा विचारय ।
वाहनानि प्रभूतानि मित्राणि च कुलानि च । यावन्न तेषां गान्धारे तावद्विक्रम पार्थिव ।
यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः । सह पुत्रैर्महावीर्य्यैस्तावद्विक्रम पार्थिव ।
यावन्नायाति वार्ष्णेयः कर्षन्यादववाहिनीं । राज्यार्थे पाण्डवेयानां पाञ्चाल्यसदनं प्रति । ७४३०
वसूनि विविधान् भोगान् राज्यमेव च केवलं । नात्याज्यमस्ति कृष्णस्य पाण्डवार्थे कथञ्चन ।
विक्रमेण मही प्राप्ता भरतेन महात्मना । विक्रमेण च लोकांस्त्रीन् जितवान् पाकशासनः ।

विक्रमञ्च प्रशंसन्ति क्षत्रियस्य विशाम्पते। स्वको हि धर्म्मः शूराणां विक्रमः पार्थिवर्षभ।
ते बलेन वयं राजन्महता चतुरङ्गिणा। प्रमथ्य द्रुपदं शीघ्रमानयामेह पाण्डवान्।
नहि साम्ना न दानेन न भेदेन च पाण्डवाः। शक्याः साधयितुं तस्माद्विक्रमेणैव तान् जहि। ७४३५
तान्विक्रमेण जित्वेमामखिलां भुङ्क्ष्व मेदिनीं। अतो नान्यं प्रपश्यामि कार्य्योपायं जनाधिप।
॥ वैशम्पायन उवाच ॥ श्रुत्वा तु राधेयवचो धृतराष्ट्रः प्रतापवान्। अभिपूज्य ततः पश्चादिदं वचनमब्रवीत्।
उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने। त्वयि विक्रमसम्पन्नमिदं वचनमीदृशं।
भूय एव तु भीष्मश्च द्रोणो विदुर एव च। युवाञ्च कुरुतं बुद्धिं भवेद्या नः सुखोदया।
तत आनाय्य तान्सर्व्वान्मन्त्रिणः सुमहायशाः। धृतराष्ट्रो महाराज मन्त्रयामास वै तदा। ७४४०
इत्यादिपर्व्वणि विदुरागमनपर्व्वणि धृतराष्ट्रमन्त्रणे द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥
॥ भीष्म उवाच ॥ न रोचते विग्रहो मे पाण्डुपुत्रैः कथञ्चन। यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयः।
गान्धार्य्याश्च यथा पुत्रास्तथा कुन्तीसुता मम। यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव।
यथा च मम राज्ञश्च तथा दुर्य्योधनस्य ते। तथा कुरूणां सर्व्वेषामन्येषामपि पार्थिव।
एवं गते विग्रहं तैर्न्नरोचे सन्धाय वीरैर्द्दीयतामर्द्धभूमिः। तेषामपीदं प्रपितामहानां राज्यं पितुश्चैव कुरूत्तमानां।
दुर्य्योधन यथाराज्यं त्वमिदं तात पश्यसि। मम पैतृकमित्येवं तेऽपि पश्यन्ति पाण्डवाः। ७४४५
यदि राज्यं न ते प्राप्ताः पाण्डवेया यशस्विनः। कुत एव तवापीदं भारतस्यापि कस्यचित्।
अथ धर्म्मेण राज्यं त्वं प्राप्तवान्भरतर्षभ। तेऽपि राज्यमनुप्राप्ताः पूर्व्वमेवेति मे मतिः।
मधुरेणैव राज्यस्य तेषामर्द्धं प्रदीयतां। एतद्धि पुरुषव्याघ्र हितं सर्व्वजनस्य च।
अतोऽन्यथा चेत्क्रियते न हितं नो भविष्यति। तवाप्यकीर्त्तिः सकला भविष्यति न संशयः।
कीर्त्तिरक्षणमातिष्ठ कीर्त्तिर्हि परमं बलं। नष्टकीर्त्तेर्म्मनुष्यस्य जीवितं ह्यफलं स्मृतं। ७४५०
यावत्कीर्त्तिर्मनुष्यस्य न प्रणश्यति कौरव। तावज्जीवति गान्धारे नष्टकीर्त्तिस्तु नश्यति।
तमिमं समुपातिष्ठ धर्म्मं कुरु कुलोचितं। अनुरूपं महाबाहो पूर्व्वेषामात्मनः कुरु।
दिष्ट्या ध्रियन्ते पार्था हि दिष्ट्या जीवति सा पृथा। दिष्ट्या पुरोचनः पापो न सकामोऽत्ययं गतः।
यदा प्रभृति दग्धास्ते कुन्तिभोजसुतासुताः। तदा प्रभृति गान्धारे न शक्नोम्यभिवीक्षितुं।
लोके प्राणभृतां कञ्चिच्छ्रुत्वा कुन्तीं तथागतां। नचापि दोषेण तथा लोको मन्येत्पुरोचनं। तथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति। ७४५५
तदिदं जीवितं तेषां तव किल्बिषनाशनं। सम्मन्तव्यं महाराज पाण्डवानाञ्च दर्शनं।
नचापि तेषां वीराणां जीवतां कुरुनन्दन। पित्र्योंऽशः शक्य आदातुमपि वज्रभृता स्वयं।
ते सर्व्वेऽवस्थिता धर्म्मे सर्व्वे चैवैकचेतसः। अधर्म्मेण निरस्ताश्च तुल्ये राज्ये विशेषतः।
यदि धर्म्मस्त्वया कार्य्यो यदि कार्य्यं प्रियञ्च मे। क्षेमञ्च यदि कर्त्तव्यं तेषामर्द्धं प्रदीयतां।
इत्यादिपर्व्वणि विदुरागमनपर्व्वणि भीष्मवाक्ये त्र्यधिकद्विशततोऽध्यायः॥ २०३ ॥

॥ द्रोण उवाच ॥ मन्त्राय समुपानीतैर्धृतराष्ट्र हितैर्नृप । धर्म्म्यमर्थ्यं यशस्यञ्च वाच्यमित्यनुशुश्रुमः । ७४६०
ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः । संविभज्यास्तु कौन्तेया धर्म्म एष सनातनः ।
प्रेष्यतां द्रुपदायाशु नरः कश्चित्प्रियम्वदः । बहुलं रत्नमादाय तेषामर्थाय भारत ।
मिथः कृत्यञ्च तस्मै स आदाय वसु गच्छतु । वृद्धिञ्च परमां ब्रूयात्त्वत्संयोगोद्भवां तथा ।
संप्रीयमाणं त्वां ब्रूयाद्राजन् दुर्य्योधनं तदा । असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ।
उचितत्वं प्रियत्वञ्च योगस्यापि च वर्णयेत् । पुनः पुनश्च कौन्तेयान्माद्रीपुत्रौ च सान्त्वयन् । ७४६५
हिरण्मयानि शुभ्राणि बहून्याभरणानि च । वचनात्तव राजेन्द्र द्रौपद्याः संप्रयच्छतु ।
तथा द्रुपदपुत्राणां सर्व्वेषां भरतर्षभ । पाण्डवानाञ्च सर्व्वेषां कुन्त्या युक्तानि यानि च ।
एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैः सह । उक्त्वा सोऽनन्तरं ब्रूयात्तेषामागमनं प्रति ।
अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनं । दुःशासनो विकर्णश्चाप्यानेतुं पाण्डवानिह ।
ततस्ते पाण्डवाः श्रेष्ठाः पूज्यमानाः सदा त्वया । प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके । ७४७०
एतत्तव महाराज पुत्रेषु तेषु चैव हि । वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ।
॥ कर्ण उवाच ॥ योजितावर्थमानाभ्यां सर्व्वकार्य्येष्वनन्तरौ । न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ।
दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना । ब्रूयान्निःश्रेयसं नाम कथं कुर्य्यात्सतां मतं ।
न मित्राण्यर्थकृच्छ्रेषु श्रेयसे वेतराय वा । विधिपूर्व्वं हि सर्व्वस्य दुःखं वा यदि वा सुखं ।
कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः । ससहायोऽसहायश्च सर्व्वं सर्व्वत्र विन्दति । ७४७५
श्रूयते हि पुरा कश्चिदम्बुवीच इतीश्वरः । आसीद्राजगृहे राजा मागधानां महीक्षितां ।
स हीनः करणैः सर्व्वैरुच्छ्वासपरमो नृपः । अमात्यसंस्थः सर्व्वेषु कार्य्येष्वेवाभवत्तदा ।
तस्यामात्यो महाकर्णिर्बभूवैकेश्वरस्तदा । स लब्धबलमात्मानं मन्यमानोऽवमन्यते ।
स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च । आददे सर्व्वशो मूढ ऐश्वर्य्यञ्च स्वयं तदा ।
तदादाय च लुब्धस्य लाभाल्लोभोऽप्यवर्द्धत । तथा हि सर्व्वमादाय राज्यमस्य जिहीर्षति । ७४८०
हीनस्य करणैः सर्व्वैरुच्छ्वासपरमस्य च । यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतं ।
किमन्यद्विहिता नूनं तस्य सा पुरुषेन्द्रता । यदि ते विहितं राज्यं भविष्यति विशाम्पते ।
मिषतः सर्व्वलोकस्य स्थास्यते त्वयि तद्ध्रुवं । अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ।
एवं विद्वन्नुपादत्स्व मन्त्रिणां साध्वसाधुतां । दुष्टानाञ्चैव बोद्धव्यमदुष्टानाञ्च भाषितं ।
॥ द्रोण उवाच ॥ विद्म ते भावदोषेण यदर्थमिदमुच्यते । दुष्टः पाण्डवहेतोस्त्वं दोषमाख्यापयस्युत । ७४८५
हितन्तु परमं कर्ण ब्रवीमि कुलवर्द्धनं । अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितं ।
अतोऽन्यथा चेत् क्रियते यद्ब्रवीमि परं हितं । कुरवो वै विनङ्क्ष्यन्ति न चिरेणेव मे मतिः ।
इत्यादिपर्व्वणि विदुरागमनपर्व्वणि द्रोणवाक्ये चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

॥ विदुर उवाच ॥ राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः। नत्वशुश्रूषमाणे वै वाक्यं संप्रतितिष्ठति।
प्रियं हितञ्च तद्वाक्यमुक्तवान् कुरुसत्तमः। भीष्मः शान्तनवो राजन् प्रतिगृह्णाति तन्न च।
तथा द्रोणेन बहुधा भाषितं हितमुत्तमं। तच्च राधासुतः कर्णो मन्यते न हितं तव। ७४९०
चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमं। आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाऽधिकः।
इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च। समौ च त्वयि राजेन्द्र तथा पाण्डुसुतेषु च।
धर्मे चानवरौ राजन् सत्यतायाञ्च भारत। रामाद्दाशरथेश्चैव गयाच्चैव न संशयः।
न चोक्तवन्तावश्रेयः पुरस्तादपि किञ्चन। न चाप्यपकृतं किञ्चिदनयोर्लक्ष्यते त्वयि।
तावुभौ पुरुषव्याघ्रावनागसि नृपे त्वयि। न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ। ७४९५
प्रज्ञावन्तौ नरश्रेष्ठावस्मिंल्लोके नराधिप। त्वन्निमित्तमतो नेमौ किञ्चिज्जिह्मं वदिष्यतः।
इति मे नैष्ठिकी बुद्धिर्वर्त्तते कुरुनन्दन। न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितं।
एतद्धि परमं श्रेयो मन्येऽहं तव भारत। दुर्य्योधनप्रभृतयः पुत्रा राजन्यथा तव। तथैव पाण्डवेयास्ते पुत्रा राजन्न संशयः।
तेषु चेदहितं किञ्चिन्मन्त्रयेयुरतद्विदः। मन्त्रिणस्ते न च श्रेयः प्रपश्यन्ति विशेषतः।
अथ ते हृदये राजन् विशेषः स्वेषु वर्त्तते। अन्तरस्थं विवृण्वानाः श्रेयः कुर्य्युर्न ते ध्रुवं। ७५००
एतदर्थमिमौ राजन् महात्मानौ महाद्युती। नोचतुर्विवृतं किञ्चिन्नह्येष तव निश्चयः।
यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ। तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते।
कथं हि पाण्डवः श्रीमान् सव्यसाची धनञ्जयः। शक्यो विजेतुं संग्रामे राजन्मघवताऽपि हि।
भीमसेनो महाबाहुर्नागायुतबलो महान्। कथं स युधि शक्येत विजेतुममरैरपि।
तथैव कृतिनौ युद्धे यमौ यमसुताविव। कथं विजेतुं शक्यौ तौ रणे जीवितुमिच्छता। ७५०५
यस्मिन् धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः। नित्यानि पाण्डवे ज्येष्ठे स जीयेत रणे कथं।
येषां पक्षधरो रामो येषां मन्त्री जनार्द्दनः। किन्नु तैरजितं संख्ये येषां पक्षे च सात्यकिः।
द्रुपदः श्वशुरो येषां येषां श्यालाश्च पार्षताः। धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः।
सोऽशक्यतां च विज्ञाय तेषामग्रे च भारत। दायाद्यतां च धर्म्मेण सम्यक् तेषु समाचर।
इदं निर्दिष्टमयशः पुरोचनकृतं महत्। तेषामनुग्रहेणाद्य राजन् प्रक्षालयात्मनः। ७५१०
तेषामनुग्रहश्चायं सर्व्वेषाञ्चैव नः कुले। जीवितञ्च परं श्रेयः क्षत्रस्य च विवर्द्धनं।
द्रुपदोऽपि महान् राजा कृतवैरश्च नः पुरा। तस्य संग्रहणं राजन् स्वपक्षस्य विवर्द्धनं।
बलवन्तश्च दाशार्हा बहवश्च विशाम्पते। यतः कृष्णस्ततः सर्व्वे यतः कृष्णस्ततो जयः।
यच्च साम्नैव शक्येत कार्य्यं साधयितुं नृप। को दैवशप्तस्तत्कार्य्यं विग्रहेण समाचरेत्।
श्रुत्वा च जीवतः पार्थान् पौरजानपदा जनाः। बलवद्दर्शने हृष्टास्तेषां राजन् प्रियं कुरु। ७५१५
दुर्य्योधनश्च कर्णश्च शकुनिश्चापि सौबलः। अधर्म्मयुक्ता दुःप्रज्ञा बाला मैषां वचः कृथाः।

उक्तमेतत्पुरा राजन्मया गुणवतस्तव। दुर्य्योधनापराधेन प्रजेयं वै विनङ्क्ष्यति।

इत्यादिपर्व्वणि विदुरागमनपर्व्वणि विदुरवाक्ये पञ्चाधिकद्विशततोऽध्यायः॥ २०५ ॥

॥ धृतराष्ट्र उवाच ॥ भीष्मः शान्तनवो विद्वान्द्रोणश्च भगवानृषिः। हितञ्च परमं वाक्यं त्वञ्च सत्यं ब्रवीषि मां।
यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः। तथैव धर्म्मतः सर्व्वे मम पुत्रा न संशयः।
यथैव मम पुत्राणामिदं राज्यं विधीयते। तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः। ७५२०
क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान्। तया च देवरूपिण्या कृष्णया सह भारत।
दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा। दिष्ट्या द्रुपदकन्याञ्च लब्धवन्तो महारथाः।
दिष्ट्या वर्द्धामहे सर्व्वे दिष्ट्या शान्तः पुरोचनः। दिष्ट्या मम परं दुःखमपनीतं महाद्युते।
॥ वैशम्पायन उवाच ॥ ततो जगाम विदुरो धृतराष्ट्रस्य शासनात्। सकाशं यज्ञसेनस्य पाण्डवानाञ्च भारत।
समुपादाय रत्नानि वसूनि विविधानि च। द्रौपद्याः पाण्डवानाञ्च यज्ञसेनस्य चैव ह। ७५२५
तत्र गत्वा स धर्म्मज्ञः सर्व्वशास्त्रविशारदः। द्रुपदं न्यायतो राजन्संयुक्तमुपतस्थिवान्।
स चापि प्रतिजग्राह धर्म्मेण विदुरं ततः। चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदं।
ददर्श पाण्डवांस्तत्र वासुदेवञ्च भारत। स्नेहात्परिष्वज्य स तानपृच्छदनामयं ततः।
तैश्चाप्यमितबुद्धिः स पूजितो हि यथाक्रमं। वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनः पुनः।
पप्रच्छानामयं राजंस्ततस्तान् पाण्डुनन्दनान्। प्रददौ चापि रत्नानि विविधानि वसूनि च। ७५३०
पाण्डवानाञ्च कुन्त्याश्च द्रौपद्याश्च विशाम्पते। द्रुपदस्य च पुत्राणां यथा दत्तानि कौरवैः।
प्रोवाच चामितमतिः प्रश्रितं विनयान्वितः। द्रुपदं पाण्डुपुत्राणां सन्निधौ केशवस्य च।
॥ विदुर उवाच ॥ राजन् शृणु सहामात्यः सपुत्रश्च वचो मम। धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः।
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनः पुनः। प्रीतिमांस्ते दृढञ्चापि सम्बन्धेन नराधिप।
तथा भीष्मः शान्तनवः कौरवैः सह सर्व्वशः। कुशलं त्वां महाप्राज्ञः सर्व्वतः परिपृच्छति। ७५३५
भारद्वाजो महाप्राज्ञो द्रोणः प्रियसखस्तव। समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति।
धृतराष्ट्रश्च पाञ्चाल्य त्वया सम्बन्धमीयिवान्। कृतार्थं मन्यते त्मानं तथा सर्व्वेऽपि कौरवाः।
न तथा राज्यसंप्राप्तिस्तेषां प्रीतिकरी मता। यथा सम्बन्धकं प्राप्य यज्ञसेन त्वया सह।
एतद्विदित्वा तु भवान् प्रस्थापयतु पाण्डवान्। द्रष्टुं हि पाण्डुपुत्रांश्च त्वरन्ति कुरवो भृशं।
विप्रोषिता दीर्घकालमेते चापि नरर्षभाः। उत्सुका नगरं द्रष्टुं भविष्यन्ति तथा पृथा। ७५४०
कृष्णामपि च पाञ्चालीं सर्व्वाः कुरुवरस्त्रियः। द्रष्टुकामाः प्रतीक्षन्ते पुरञ्च विषयाश्च नः।
स भवान् पाण्डुपुत्राणामाज्ञापयतु माचिरं। गमनं सहदाराणामेतदत्र मतं मम।
निसृष्टेषु त्वया राजन् पाण्डवेषु महात्मसु। ततोऽहं प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान्।
आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया।

इत्यादिपर्व्वणि विदुरागमनपर्व्वणि विदुरसंवादे षडधिकद्विशततोऽध्यायः समाप्तञ्च विदुरागमनपर्व्व॥ २०६ ॥

## ॥ अथ राज्यलाभपर्व्व ॥ १५ ॥

॥ द्रुपद उवाच ॥ एवमेतन्महाप्राज्ञ यथात्थ विदुराद्य मां। ममापि परमो हर्षः सम्बन्धेऽस्मिन् कृते प्रभो। ७५४५
गमनं चापि युक्तं स्याद्गृहमेषां महात्मनां। न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा।
यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः। भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ।
रामकृष्णौ च धर्म्मज्ञौ तदा गच्छन्तु पाण्डवाः। एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ।
॥ युधिष्ठिर उवाच ॥ परवन्तो वयं राजंस्त्वयि सर्व्वे सहानुगाः। यथा वक्ष्यसि नः प्रीत्या तत्करिष्यामहे वयं।
॥ वैशम्पायन उवाच ॥ ततोऽब्रवीद्वासुदेवो गमनं रोचते मम। यथा वा मन्यते राजा द्रुपदः सर्व्वधर्म्मवित्। ७५५०
॥ द्रुपद उवाच ॥ यथैव मन्यते वीरो दाशार्हः पुरुषोत्तमः। प्राप्तकालं महाबाहुः सा बुद्धिर्निश्चिता मम।
यथैव हि महाभागाः कौन्तेया मम साम्प्रतं। तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः।
न तद्ध्यायति कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः। यथैषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः।
॥ वैशम्पायन उवाच ॥ ततस्ते समनुज्ञाता द्रुपदेन महात्मना। पाण्डवाश्चैव कृष्णश्च विदुरश्च महीपते।
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीं। सविहारं सुखं जग्मुर्नगरं नागसाह्वयं। ७५५५
श्रुत्वा चाप्यागतान्वीरान् धृतराष्ट्रो जनेश्वरः। प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान्।
विकर्णञ्च महेष्वासं चित्रसेनञ्च भारत। द्रोणञ्च परमेष्वासं गौतमं कृपमेव च।
तैस्ते परिवृता वीराः शोभमाना महाबलाः। नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा।
कौतूहलेन नगरं दीर्य्यमाणमिवाभवत्। तत्र ते पुरुषव्याघ्राः शोकदुःखविनाशनाः।
तत उच्चावचा वाचः पौरैः प्रियचिकीर्षुभिः। उदीरिता अशृण्वंस्ते पाण्डवा हृदयङ्गमाः। ७५६०
अयं स पुरुषव्याघ्रः पुनरायाति धर्म्मवित्। यो नः स्वानिव दायादान् धर्म्मेण परिरक्षति।
अद्य पाण्डुर्महाराजो वनादिव जनप्रियः। आगतः प्रियमस्माकं चिकीर्षुर्नात्र संशयः।
किन्नु नाद्य कृतं तात सर्व्वेषां नः परं प्रियं। यन्नः कुन्तीसुता वीरा नगरं पुनरागताः।
यदि दत्तं यदि हुतं विद्यते यदि नस्तपः। तेन तिष्ठन्तु नगरे पाण्डवाः शरदां शतं।
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः। अन्येषाञ्च तदर्हाणां चक्रुः पादाभिवन्दनं। ७५६५
कृत्वा तु कुशलप्रश्नं सर्व्वेण नगरेण च। न्यविशन्ताथ वेश्मानि धृतराष्ट्रस्य शासनात्।
विश्रान्तास्ते महात्मानः कञ्चित्कालं महाबलाः। आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च।
॥ धृतराष्ट्र उवाच ॥ भ्रातृभिः सह कौन्तेय निबोध गदतो मम। पुनर्वो विग्रहो माभूत् खाण्डवप्रस्थमाविश।
न च वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुं। संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा। अर्द्धं राज्यस्य सम्प्राप्य खाण्डवप्रस्थमाविश।
॥ वैशम्पायन उवाच ॥ प्रतिगृह्य तु तद्वाक्यं नृपं सर्व्वे प्रणम्य च। प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः। ७५७०
अर्द्धं राज्यस्य सम्प्राप्य खाण्डवप्रस्थमाविशन्। ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः।
मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गवदच्युताः। ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः।

नगरं मापयामासुर्द्वैपायनपुरोगमाः। सागरप्रतिरूपाभिः परिखाभिरलङ्कृतं।
प्राकारेण च सम्पन्नं दिवमावृत्य तिष्ठता। पाण्डुराभ्रप्रकाशेन हिमरश्मिनिभेन च।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा। द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितं। ७५७५
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः। विविधैरपिनिर्विद्धैः शस्त्रोपेतैः सुसंवृतैः।
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः। तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितं।
तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितं। आयसैश्च महाचक्रैः शुशुभे तत्पुरोत्तमं।
सुविभक्तमहारथ्यं देवताबाधवर्ज्जितं। विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः।
तत्त्रिपिष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत। मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतं। ७५८०
तत्र रम्ये शिवे देशे कौरवस्य निवेशनं। शुशुभे धनसम्पूर्णं धनाध्यक्षक्षयोपमं।
तत्रागच्छन् द्विजा राजन्सर्व्ववेदविदाम्वराः। निवासं रोचयन्ति स्म सर्व्वभाषाविदस्तथा।
वणिजश्चाभ्ययुस्तत्र नानादिग्भ्यो धनार्थिनः। सर्व्वशिल्पविदस्तत्र वासायाभ्यागमंस्तदा।
उद्यानानि च रम्याणि नगरस्य समन्ततः। आम्रैराम्रातकैर्नीपैरशोकैश्चम्पकैस्तथा।
पुन्नागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा। शालतालतमालैश्च वकुलैश्च सकेतकैः। ७५८५
मनोहरैः सुपुष्पैश्च फलभारावनामितैः। प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपुष्पितैः।
जम्बुभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः। करवीरैः पारिजातैरन्यैश्च विविधैर्द्रुमैः।
नित्यपुष्पफलोपेतैर्न्नानाद्विजगणायुतैः। मत्तबर्हिणसंघुष्टं कोकिलैश्च सदामदैः।
गृहैरादर्शविमलैर्व्विविधैश्च लतागृहैः। मनोहरैश्चित्रगृहैस्तथाऽजगतिपर्व्वतैः।
वापीभिर्व्विविधाभिश्च पूर्णाभिः परमाम्भसा। सरोभिरतिरम्यैश्च पद्मोत्पलसुगन्धिभिः। ७५९०
हंसकारण्डवयुतैश्चक्रवाकोपशोभितैः। रम्याश्च विविधास्तत्र पुष्करिण्यो वनावृताः। तडागानि च रम्याणि वृहन्ति सुबहूनि च।
तेषां पुण्यजनोपेतं राष्ट्रमाविशतां महत्। पाण्डवानां महाराज शश्वत्प्रीतिरवर्द्धत।
तत्र भीष्मेण राज्ञा च धर्म्मप्रणयने कृते। पाण्डवाः समपद्यन्त खाण्डवप्रस्थवासिनः।
पञ्चभिस्तैर्म्महेष्वासैरिन्द्रकल्पैः समन्वितं। शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा।
तां निवेश्य ततो वीरो रामेण सह केशवः। ययौ द्वारवतीं राजन् पाण्डवानुमते तदा। ७५९५
इत्यादिपर्व्वणि राज्यलाभपर्व्वणि कृष्णगमने सप्ताधिकद्विशततोऽध्यायः॥ २०६॥
॥ जनमेजय उवाच॥ एवं सम्प्राप्य राज्यन्तदिन्द्रप्रस्थं तपोधन। अत ऊर्द्धं महात्मानः किमकुर्व्वत पाण्डवाः।
सर्व्व एव महासत्त्वा मम पूर्व्वपितामहाः। द्रौपदी धर्म्मपत्नी च कथं तानन्ववर्त्तत।
कथञ्च पञ्च कृष्णायामेकस्यां ते नराधिपाः। वर्त्तमाना महाभागा नाभिद्यन्त परस्परं।
श्रोतुमिच्छाम्यहं सर्व्वं विस्तरेण तपोधन। तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया सह।
॥ वैशम्पायन उवाच॥ धृतराष्ट्राभ्यनुज्ञाताः कृष्णया सह पाण्डवाः। रेमिरे खाण्डवप्रस्थे प्राप्तराज्याः परन्तपाः। ७६००

प्राप्य राज्यं महातेजाः सत्यसन्धो युधिष्ठिरः। पालयामास धर्म्मेण पृथिवीं भ्रातृभिः सह।

जितारयो महाप्राज्ञाः सत्यधर्म्मपरायणाः। मुदं परमिकां प्राप्तास्तत्रोषुः पाण्डुनन्दनाः।

कुर्व्वाणाः पौरकार्य्याणि सर्व्वाणि पुरुषर्षभाः। आसाञ्चक्रुर्महार्हेषु पार्थिवेष्वासनेषु च।

अथ तेषूपविष्टेषु सर्व्वेष्वेव महात्मसु। नारदस्त्वथ देवर्षिराजगाम यदृच्छया। आसनं रुचिरं तस्मै प्रददौ स्वं युधिष्ठिरः।

देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि। प्रादाद्युधिष्ठिरो धीमान् राज्यं तस्मै न्यवेदयत्। ७१०५

प्रतिगृह्य तु तां पूजामृषिः प्रीतमनास्तदा। आशीर्भिर्व्वर्द्धयित्वा च तमुवाचास्यतामिति।

निषसादाभ्यनुज्ञातस्ततो राजा युधिष्ठिरः। प्रेषयामास कृष्णायै भगवन्तमुपस्थितं।

श्रुत्वैतद्द्रौपदी चापि शुचिर्भूत्वा समाहिता। जगाम तत्र यत्रास्ते नारदः पाण्डवैः सह।

तस्याभिवाद्य चरणौ देवर्षेर्धर्म्मचारिणी। कृताञ्जलिः सुसंवीता स्थिताऽथ द्रुपदात्मजा।

तस्याश्चापि स धर्म्मात्मा सत्यवागृषिसत्तमः। आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः। गम्यतामिति होवाच भगवां-

स्तामनिन्दितां। ७११०

गतायामथ कृष्णायां युधिष्ठिरपुरोगमान्। विविक्ते पाण्डवान्सर्व्वानुवाच भगवानृषिः।

॥ नारद उवाच ॥ पाञ्चाली भवतामेका धर्म्मपत्नी यशस्विनी। यथा वो नात्र भेदः स्यात्तथा नीतिर्व्विधीयतां।

सुन्दोपसुन्दौ हि पुरा भ्रातरौ सहितावुभौ। आस्तामवध्यावन्येषां त्रिषु लोकेषु विश्रुतौ।

एकराज्यावेकगृहावेकशय्यासनाशनौ। तिलोत्तमायास्तौ हेतोरन्योऽन्यमभिजघ्नतुः।

रक्ष्यतां सौहृदं तस्मादन्योऽन्यप्रीतिभावकं। यथा वो नात्र भेदः स्यात्तत्कुरुष्व युधिष्ठिर। ७११५

॥ युधिष्ठिर उवाच ॥ सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने। उत्पन्नश्च कथं भेदः कथञ्चान्योऽन्यमघ्नतां।

अप्सरा देवकन्या वै कस्य चैषा तिलोत्तमा। यस्याः कामेन सम्मत्तौ जघ्नतुस्तौ परस्परं।

एतत्सर्व्वं यथावृत्तं विस्तरेण तपोधन। श्रोतुमिच्छामहे ब्रह्मन् परं कौतूहलं हि नः।

इत्यादिपर्व्वणि राज्यलाभपर्व्वणि युधिष्ठिरनारदसंवादे ऽष्टाधिकद्विशततमो ऽध्यायः॥ २०८ ॥

॥ नारद उवाच ॥ शृणु मे विस्तरेणेममितिहासं पुरातनं। भ्रातृभिः सहितः पार्थ यथावृत्तं युधिष्ठिर।

महासुरस्यान्ववाये हिरण्यकशिपोः पुरा। निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत्। ७१२०

तस्य पुत्रौ महावीर्य्यौ जातौ भीमपराक्रमौ। सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ।

तावेकनिश्चयौ दैत्यावेककार्य्यार्थसम्मतौ। निरन्तरमवर्त्तेतां समदुःखसुखावुभौ।

विनाऽन्योऽन्यं न भुञ्जाते विनाऽन्योऽन्यं न जग्मतुः। अन्योऽन्यस्य प्रियकरावन्योऽन्यस्य प्रियंवदौ।

एकशीलसमाचारौ द्विधैवैकोऽभवत्कृतः। तौ विवृद्धौ महावीर्य्यौ कार्य्येष्वप्येकनिश्चयौ।

त्रैलोक्यविजयार्थाय समाधायैकनिश्चयं। दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः। ७१२५

तौ तु पूर्व्वेण कालेन तपोयुक्तौ बभूवतुः। क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ।

मलोपचितसर्व्वाङ्गौ वायुभक्षौ बभूवतुः। आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ। ऊर्द्ध्वबाहू चानिमिषौ दीर्घकालं

धृतव्रतौ।

तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः । धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत् ।
ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः । तपोविघातार्थमथो देवा विघ्नानि चक्रिरे ।
रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः । न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ । ७६२०
अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः । भगिन्यो मातरो भार्य्यास्तयोश्चात्मजनस्तथा ।
प्रपात्यमाना विस्रस्ताः शूलहस्तेन रक्षसा । स्रस्ताभरणकेशान्ता स्रस्ताभरणवाससः ।
अभिभाष्य ततः सर्व्वास्तौ त्राहीति विचुक्रुशुः । न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ।
यदा क्षोभं नोपयाति नार्त्तिमन्यतरस्तयोः । ततः स्त्रियस्ता भूतञ्च सर्व्वमन्तरधीयत ।
ततः पितामहः साक्षादभिगम्य महासुरौ । वरेण छन्दयामास सर्व्वलोकहितः प्रभुः । ७६२५
ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ । दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा ।
ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा । आवयोस्तपसाऽनेन यदि प्रीतः पितामहः ।
मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ । उभावप्यमरौ स्याव प्रसन्नो यदि नौ प्रभुः ।
॥ ब्रह्मोवाच ॥ ऋतेऽमरत्वं युवयोः सर्व्वमुक्तं भविष्यति । अन्यद्वृणीतं मृत्योश्च विधानममरैः समं ।
प्रभविष्याव इति यन्महदभ्युद्यतं तपः । युवयोर्हेतुनाऽनेन नामरत्वं विधीयते । ७६३०
त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः । हेतुनाऽनेन दैत्येन्द्रौ न वां कामं करोम्यहं ।
सुन्दोपसुन्दौ ऊचतुः ॥ त्रिषु लोकेषु यद्भूतं किञ्चित्स्थावरजङ्गमं । सर्व्वस्मान्नौ भयं न स्यादृतेऽन्योऽन्यं पितामह ।
॥ पितामह उवाच ॥ यत्प्रार्थितं यथोक्तञ्च काममेतद्ददानि वां । मृत्योर्व्विधानमेतच्च यथावद्वां भविष्यति ।
॥ नारद उवाच ॥ ततः पितामहो दत्त्वा वरमेतत्तदा तयोः । निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह ।
लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ । अवध्यौ सर्व्वलोकस्य स्वमेव भवनं गतौ । ७६३५
तौ तु लब्धवरौ दृष्ट्वा कृतकामौ मनस्विनौ । सर्व्वः सुहृज्जनस्ताभ्यां प्रहर्षमुपजग्मिवान् ।
ततस्तौ तु जटा भित्त्वा मौलिनौ सम्बभूवतुः । महार्हाभरणोपेतौ विरजोऽम्बरधारिणौ ।
अकालकौमुदीं चैव चक्रतुः सार्व्वकालिकीं । नित्यप्रमुदितः सर्व्वस्तयोश्चैव सुहृज्जनः ।
भक्ष्यतां भुज्यतां नित्यं दीयतां रम्यतामिति । गीयतां पीयतां चेति शब्दश्चासीद्गृहे गृहे ।
तत्र तत्र महानादैरुत्कृष्टतलनादितैः । हृष्टं प्रमुदितं सर्व्वं दैत्यानामभवत्पुरं । ७६४०
तैस्तैर्व्विहारैर्ब्बहुभिर्द्दैत्यानां कामरूपिणां । समाः सङ्क्रीडतां तेषामहरेकमिवाभवत् ।
इत्यादिपर्व्वणि राज्यलाभपर्व्वणि सुन्दोपसुन्दोपाख्याने नवाधिकद्विशततोऽध्यायः ॥ २०९ ॥
॥ नारद उवाच ॥ उत्सवे वृत्तमात्रे तु त्रैलोक्याकाङ्क्षिणावुभौ । मन्त्रयित्वा ततः सेनां तावाज्ञापयतां तदा ।
सुहृद्भिरभ्यनुज्ञातौ दैत्यैर्वृद्धैश्च मन्त्रिभिः । कृत्वा प्रास्थानिकं रात्रौ मघासु ययतुस्तदा ।
गदापट्टिशधारिण्या शूलमुद्गरहस्तया । प्रस्थितौ सहधर्म्मिण्या महत्या दैत्यसेनया ।
मङ्गलैः स्तुतिभिश्चापि विजयप्रतिसंहितैः । चारणैः स्तूयमानौ तौ जग्मतुः परया मुदा । ७६४५
तावन्तरीक्षमुत्पत्य दैत्यौ कामगमावुभौ । देवानामेव भवनं जग्मतुर्युद्धदुर्म्मदौ ।

तयोरागमनं ज्ञात्वा वरदानञ्च तत्प्रभोः । हित्वा त्रिपिष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः ।
तामिन्द्रलोकं निर्ज्जित्य यक्षरक्षोगणांस्तदा । खेचराण्यपि भूतानि जग्मतुस्तीव्रविक्रमौ ।
अन्तर्भूमिगतान्नागान् जित्वा तौ च महारथौ । समुद्रवासिनीः सर्व्वा म्लेच्छजातीर्व्विजिग्यतुः ।
ततः सर्व्वां महीं जेतुमारब्धावुग्रशासनौ । सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः । ७६६०
राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः । तेजोबलञ्च देवानां वर्द्धयन्ति श्रियं तथा ।
तेषामेवं प्रवृत्तानां सर्व्वेषामसुरद्विषां । सम्भूय सर्व्वैरस्माभिः कार्य्यः सर्व्वात्मना वधः ।
एवं सर्व्वान्समादिश्य पूर्व्वतीरे महोदधेः । क्रूरां मतिं समास्थाय जग्मतुः सर्व्वतोमुखौ ।
यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः । तान्सर्व्वान्प्रसभं हत्वा बलिनौ जग्मतुस्ततः ।
आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनां । गृहीत्वा प्रक्षिपन्त्यप्सु विस्रब्धं सैनिकास्तयोः । ७६६५
तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः । नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः ।
नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव । नियमान् संपरित्यज्य व्यद्रवन्त द्विजातयः ।
पृथिव्यां ये तपःसिद्धा दान्ताः शमपरायणाः । तयोर्भयात् दुद्रुवुस्ते वैनतेयादिवोरगाः ।
मथितैराश्रमैर्भग्नैर्व्विकीर्णकलसस्रुवैः । शून्यमासीज्जगत्सर्व्वं कालेनेव हतं तदा ।
ततो राजन्नदृश्यद्भिर्ऋषिभिश्च महासुरौ । उभौ विनिश्चयं कृत्वा विकुर्व्वाते वधैषिणौ । ७६७०
प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ । संलीनमपि दुर्गेषु निन्यतुर्यमसादनं ।
सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ । तैस्तैरुपायैस्तौ क्रूरावृषीन् दृष्ट्वा निजघ्नतुः ।
निवृत्तयज्ञस्वाध्याया प्रणष्टनृपतिद्विजा । उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ।
हाहाभूता भयार्त्ता च निवृत्तविपणापणा । निवृत्तदेवकार्य्या च पुण्योद्वाहविवर्ज्जिता ।
निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा । अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना । ७६७५
निवृत्तपितृकार्य्यञ्च निर्व्वषट्कारमङ्गलं । जगत्प्रतिभयाकारं दुःप्रेक्ष्यमभवत्तदा ।
चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः । जग्मुर्विषादं तत्कर्म दृष्ट्वा सुन्दोपसुन्दयोः ।
एवं सर्व्वा दिशो दैत्यौ जित्वा क्रूरेण कर्म्मणा । निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः ।
इत्यादिपर्व्वणि राज्यलाभपर्व्वणि सुन्दोपसुन्दोपाख्याने दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥
॥ नारद उवाच ॥ ततो देवर्षयः सर्व्वे सिद्धाश्च परमर्षयः । जग्मुस्तदा परामार्त्तिं दृष्ट्वा तत्कदनं महत् ।
तेऽभिजग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः । पितामहस्य भवनं जगतः कृपया तदा । ७६८०
ततो ददृशुरासीनं सह देवैः पितामहं । सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात्परिवारितं ।
तत्र देवो महादेवस्तत्राग्निर्व्वायुना सह । चन्द्रादित्यौ च शक्रश्च पारमेष्ठ्यास्तथर्षयः ।
वैखानसा वालखिल्या वानप्रस्था मरीचिपाः । अजाश्चैवाविमूढाश्च तेजोगर्भास्तपस्विनः । ऋषयः सर्व्व एवैते पितामहमुपागमन् ।
ततोऽभिगम्य ते दीनाः सर्व्व एव महर्षयः । सुन्दोपसुन्दयोः कर्म्म सर्व्वमेव शशंसिरे ।
यथा हृतं यथा चैव कृतं येन क्रमेण च । न्यवेदयंस्ततः सर्व्वमखिलेन पितामहे । ७६८५

ततो देवगणाः सर्व्वे तेचैव परमर्षयः। तमेवार्थं पुरस्कृत्य पितामहमचोदयन्।
ततः पितामहः श्रुत्वा सर्व्वेषां तद्वचस्तदा। मुहूर्त्तमिव संचिन्त्य कर्त्तव्यस्य च निश्चयं।
तयोर्व्वधं समुद्दिश्य विश्वकर्म्माणमाह्वयत्।
दृष्ट्वा च विश्वकर्म्माणं व्यादिदेश पितामहः। सृज्यतां प्रार्थनीयैका प्रमदेति महातपाः।
पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च। निर्म्ममे योषितं दिव्यां चिन्तयित्वा पुनः पुनः। ७६८०
त्रिषु लोकेषु यत्किञ्चिद्भूतं स्थावरजङ्गमं। समानयद्दर्शनीयंतत्तदत्र स विश्ववित्।
कोटिशश्चैव रत्नानि तस्या गात्रे न्यवेशयत्। तां रत्नसङ्घातमयीमसृजद्देवरूपिणीं।
सा प्रयत्नेन महता निर्म्मिता विश्वकर्म्मणा। त्रिषु लोकेषु नारीणां रूपेणाऽप्रतिमाऽभवत्।
न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसम्पदा। नियुक्ता यत्र वा दृष्टिर्न्न सज्जति निरीक्षतां।
सा विग्रहवतीव श्रीः कामरूपा वपुष्मती। जहार सर्व्वभूतानां चक्षूंषि च मनांसि च। ७६८५
तिलं तिलं समानीय रत्नानां यद्विनिर्म्मिता। तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः।
ब्रह्माणं सा नमस्कृत्य प्राञ्जलिर्व्वाक्यमब्रवीत्। किं कार्य्यं मयि भूतेश येनास्म्यद्येह निर्म्मिता।
॥ पितामह उवाच ॥ गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे। प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनं।
त्वत्कृते दर्शनादेव रूपसम्पत्कृतेन वै। विरोधः स्याद्यथा ताभ्यामन्योऽन्येन तथा कुरु।
॥ नारद उवाच ॥ सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहं। चकार मण्डलं तत्र विबुधानां प्रदक्षिणं। ७६९०
प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः। देवाश्चैवोत्तरेणासन् सर्व्वतस्त्वृषयोऽभवन्।
कुर्व्वत्या तं तया तत्र मण्डलं तत्प्रदक्षिणं। इन्द्रः स्थाणुश्च भगवान्धैर्य्येण प्रत्यवस्थितौ।
द्रष्टुकामस्य चात्यर्थं गतया पार्श्वतस्तथा। अन्यदञ्चितपक्ष्मान्तं दक्षिणं निःसृतं मुखं।
पृष्ठतः परिवर्त्तन्त्या पश्चिमं निःसृतं मुखं। गतायाश्चोत्तरं पार्श्वमुत्तरं निःसृतं मुखं।
महेन्द्रस्यापि नेत्राणां पृष्ठतः पार्श्वतोऽग्रतः। रक्तान्तानां विशालानां सहस्रं सर्व्वतोऽभवत्। ७६९५
एवं चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरा। तथा सहस्रनेत्रश्च बभूव बलसूदनः।
तथा देवनिकायानां महर्षीणाञ्च सर्व्वशः। मुखानि चाभ्यवर्त्तन्त येन याता तिलोत्तमा।
तस्या गात्रे निपतिता दृष्टिस्तेषां महात्मनां। सर्व्वेषामेव भूयिष्ठमृते देवं पितामहं।
गच्छन्त्या तु तया सर्व्वे देवाश्च परमर्षयः। कृतमित्येव तत्कार्य्यं मेनिरे रूपसम्पदा।
तिलोत्तमायां तस्यान्तु गतायां लोकभावनः। सर्व्वान् विसर्ज्जयामास देवानृषिगणांश्च तान्। ७७००
इत्यादिपर्व्वणि राज्यलाभपर्व्वणि तिलोत्तमाप्रस्थापने एकादशाधिकद्विशततोऽध्यायः॥ २११ ॥
॥ नारद उवाच ॥ जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ। कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः।
देवगन्धर्व्वयक्षाणां नागपार्थिवरक्षसां। आदाय सर्व्वरत्नानि परां तुष्टिमुपागतौ।
यदा न प्रतिषेद्धारस्तयोः सन्तीह केचन। निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव।
स्त्रीभिर्म्माल्यैश्च गन्धैश्च भक्ष्यभोज्यैः सुपुष्कलैः। पानैश्च विविधैर्हृद्यैः परां प्रीतिमवापतुः।

अन्तःपुरवनोद्याने पर्व्वतेषु वनेषु च। यथेप्सितेषु देशेषु विजह्रातेऽमराविव। ७७१५
ततः कदाचिद्विन्ध्यस्य प्रस्थे समशिलातले। पुष्पिताग्रेषु शालेषु विहारमभिजग्मतुः।
दिव्येषु सर्व्वकामेषु समानीतेषु तावुभौ। वरासनेषु संहृष्टौ सह स्त्रीभिर्निषेदतुः।
ततो वादित्रनृत्याभ्यामुपातिष्ठन्त तौ स्त्रियः। गीतैश्च स्तुतिसंयुक्तैः प्रीत्या समुपजग्मिरे।
ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती। वेषं साक्षिप्तमाधाय रक्तेनैकेन वाससा।
नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती। शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ। ७७२०
तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ। दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः।
तावुत्पत्यासनं हित्वा जग्मतुर्यत्र सा स्थिता। उभौ च कामसम्मत्तावुभौ प्रार्थयतश्च ताम्।
दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना। उपसुन्दोऽपि जग्राह वामे पाणौ तिलोत्तमाम्।
वरप्रदानमत्तौ तावौरसेन बलेन च। धनरत्नमदाभ्याञ्च सुरापानमदेन च।
सर्व्वैरेतैर्मदैर्मत्तावन्योऽन्यं भ्रुकुटीकृतौ। मदकामसमाविष्टौ परस्परमथोचतुः। ७७२५
मम भार्य्या तव गुरुरिति सुन्दोऽभ्यभाषत। मम भार्य्या तव वधूरुपसुन्दोऽभ्यभाषत।
नैषा तव ममैषेति तत्र तौ मन्युराविशत्। तस्या रूपेण सम्मत्तौ विगतस्नेहसौहृदौ।
तस्या हेतोर्गदे भीमे संगृहीतावुभौ तदा। प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ।
अहं पूर्व्वमहं पूर्व्वमित्यन्योऽन्यं निजघ्नतुः। तौ गदाऽभिहतौ भीमौ पेततुर्धरणीतले।
रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ। ततस्ता विद्रुता नार्य्यः स च दैत्यगणस्तथा। ७७३०
पातालमगमत् सर्व्वो विषादभयकम्पितः।
ततः पितामहस्तत्र सह देवैर्महर्षिभिः। आजगाम विशुद्धात्मा पूजयंश्च तिलोत्तमाम्।
वरेण च्छन्दयामास भगवान् प्रपितामहः। वरं दित्सुः स तत्रैनां प्रीतः प्राह पितामहः।
आदित्यचरिताल्लोकान् विचरिष्यसि भामिनि। तेजसा च सुदृष्टां त्वां न करिष्यति कश्चन।
एवं तस्यै वरं दत्त्वा सर्व्वलोकपितामहः। इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः। ७७३५
॥ नारद उवाच ॥ एवं तौ संहतौ भूत्वा सर्व्वार्थेष्वेकनिश्चयौ। तिलोत्तमार्थं संक्रुद्धावन्योऽन्यमभिजघ्नतुः।
तस्माद्ब्रवीमि वः स्नेहात् सर्व्वान् भरतसत्तमाः। यथा वो नात्र भेदः स्यात् सर्व्वेषां द्रौपदीकृते।
तथा कुरुत भद्रं वो मम चेत् प्रियमिच्छथ।
॥ वैशम्पायन उवाच ॥ एवमुक्ता महात्मानो नारदेन महर्षिणा। समयं चक्रिरे राजंस्तेऽन्योऽन्येन समागताः।
समक्षं तस्य देवर्षेर्नारदस्यामितौजसः। द्रौपद्या नः सहासीनानन्योऽन्यं योऽभिदर्शयेत्। ७७४०
स नो द्वादशवर्षाणि ब्रह्मचारी वने वसेत्। कृते तु समये तस्मिन् पाण्डवैर्धर्म्मचारिभिः। नारदोऽप्यगमत् प्रीत इष्टं देशं महामुनिः।
एवं तैः समयः पूर्व्वं कृतो नारदचोदितैः। न चाभिद्यन्त ते सर्व्वे तदाऽन्योऽन्येन भारत।
इत्यादिपर्व्वणि राज्यलाभपर्व्वणि सुन्दोपसुन्दोपाख्याने द्वादशाधिकद्विशततमोऽध्यायः। समाप्तञ्च राज्यलाभपर्व्व॥२१२॥

## ॥ अथार्ज्जुनवनवासपर्व्व ॥ १६ ॥

॥ वैशम्पायन उवाच ॥ एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः । वशे शस्त्रप्रतापेन कुर्व्वन्तोऽन्यान्महीक्षितः ।

तेषां मनुजसिंहानां पञ्चानाममितौजसां । बभूव कृष्णा सर्व्वेषां पार्थानां वशवर्त्तिनी ।

ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः । बभूव परमप्रीता नागैरिव सरस्वती । ७७३५

वर्त्तमानेषु धर्म्मेण पाण्डवेषु महात्मसु । व्यवर्द्धन् कुरवः सर्व्वे हीनदोषाः सुखान्विताः ।

अथ दीर्घेण कालेन ब्राह्मणस्य विशाम्पते । कस्यचित्तस्करा जह्रुः केचिद्गा नृपसत्तम ।

ह्रियमाणे धने तस्मिन् ब्राह्मणः क्रोधमूर्च्छितः । आगम्य खाण्डवप्रस्थमुदक्रोशत पाण्डवान् ।

ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः । प्रसह्य चास्मद्विषयादभ्यधावत पाण्डवाः ।

ब्राह्मणस्य प्रशान्तस्य हविर्ध्वांक्षैः प्रलुप्यते । शार्दूलस्य गुहां शून्यां नीचः क्रोष्टाऽभिमर्दति । ७७४०

अरक्षितारं राजानं बलिषड्भागहारिणं । तमाहुः सर्व्वलोकस्य समग्रं पापचारिणं ।

ब्राह्मणस्वे हृते चौरैर्धर्म्मार्थे च विलोपिते । रोरूयमाणे च मयि क्रियतां हस्तधारणा ।

॥ वैशम्पायन उवाच ॥ रोरूयमाणस्याभ्याशे भृशं विप्रस्य पाण्डवः । तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः ।

श्रुत्वैव च महाबाहुर्म्माभैरित्याह तं द्विजं । आयुधानि च यत्रासन् पाण्डवानां महात्मनां । कृष्णया सह तत्रास्ते धर्म्मराजो युधिष्ठिरः ।

सम्प्रवेशाय चाशक्तो गमनाय च पाण्डवः । तस्य चार्त्तस्य तैर्व्वाक्यैश्चोद्यमानः पुनः पुनः । ७७४५

आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः । ह्रियमाणे धने तस्मिन् ब्राह्मणस्य तपस्विनः ।

अश्रुप्रमार्जनं तस्य कर्त्तव्यमिति निश्चयः । उपप्रेक्षणजोऽधर्म्मः सुमहान् स्यान्महीपतेः ।

यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणं । अनास्तिक्यञ्च सर्व्वेषामस्माकमपि रक्षणे ।

प्रतितिष्ठेत लोकेऽस्मिन्नधर्म्मश्चैव नो भवेत् । अनादृत्य तु राजानं गते मयि न संशयः ।

अजातशत्रोर्नृपतेर्म्मम चैवानृतं भवेत् । अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम । ७७५०

सर्व्वमन्यत्परिहृतं धर्षणात्तु महीपतेः । अधर्म्मो वै महानस्तु वने वा मरणं मम । शरीरस्य विनाशेन धर्म्म एव विशिष्यते ।

एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः । अनुप्रविश्य राजानमापृच्छ्य च विशाम्पते ।

धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत । ब्राह्मणागम्यतां शीघ्रं यावत्परधनैषिणः ।

न दूरे ते गताः क्षुद्रास्तावद्गच्छावहे सह । यावन्निवर्त्तयाम्यद्य चौरहस्ताद्धनं तव ।

सोऽनुसृत्य महाबाहुर्धन्वी वर्म्मी रथी ध्वजी । शरैर्व्विध्वस्य तांश्चौरानवजित्य च तद्धनं । ब्राह्मणं समुपाकृत्य यशः प्राप्य च पाण्डवः । ७७५५

ततस्तद्गोधनं पार्थो दत्त्वा तस्मै द्विजातये । आजगाम पुरं वीरः सव्यसाची धनञ्जयः ।

सोऽभिवाद्य गुरून् सर्व्वान् सर्व्वैश्चाप्यभिनन्दितः । धर्म्मराजमुवाचेदं व्रतमादिश मे प्रभो ।

समयः समतिक्रान्तो भवत्सन्दर्शने मया । वनवासं गमिष्यामि समयो ह्येष नः कृतः ।
इत्युक्तो धर्म्मराजस्तु सहसा वाक्यमप्रियं । कथमित्यब्रवीद्वाचा शोकार्त्तः सज्जमानया ।
युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतं । उवाच दीनो राजा च धनञ्जयमिदं वचः । ७७७०
प्रमाणमस्मि यदि ते मत्तः शृणु वचोऽनघ । अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियं ।
सर्व्वं तदनुजानामि व्यलीकं न च मे हृदि । गुरोरनुप्रवेशो हि नोपघातो यवीयसः । यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधि लोपकः ।
निवर्त्तस्व महाबाहो कुरुष्व वचनं मम । नहि ते धर्म्मलोपोऽस्ति न च ते धर्षणा कृता ।
॥ अर्जुन उवाच ॥ न व्याजेन चरेद्धर्म्ममिति मे भवतः श्रुतं । न सत्याद्विचलिष्यामि सत्येनायुधमालभे ।
॥ वैशम्पायन उवाच ॥ सोऽभ्यनुज्ञाप्य राजानं वनचर्य्याय दीक्षितः । वने द्वादशवर्षाणि वासायानुजगाम ह । ७७७५
इत्यादिपर्व्वण्यर्ज्जुनवनवासपर्व्वणि अर्ज्जुनतीर्थयात्रायां त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥
॥ वैशम्पायन उवाच ॥ तं प्रयातं महाबाहुं कौरवाणां यशस्करं । अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः ।
वेदवेदाङ्गविद्वांसस्तथैवाध्यात्मचिन्तकाः । भैक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये ।
कथकाश्चापरे राजन् श्रमणाश्च वनौकसः । दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ।
एतैश्चान्यैश्च बहुभिः सहायैः पाण्डुनन्दनः । वृतः श्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ।
रमणीयानि चित्राणि वनानि च सरांसि च । सरितः सागरांश्चैव देशानपि च भारत । ७७८०
पुण्यान्यपि च तीर्थानि ददर्श भरतर्षभः । स गङ्गाद्वारमाश्रित्य निवेशमकरोत्प्रभुः ।
तत्र तस्याद्भुतं कर्म्म शृणु त्वं जनमेजय । कृतवान्यद्विशुद्धात्मा पाण्डूनां प्रवरो हि सः ।
निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत । अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ।
तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च । कृतपुष्पोपहारेषु तीरान्तरगतेषु च ।
कृताभिषेकैर्विद्वद्भिर्नियतैः सत्पथे स्थितैः । शुशुभेऽतीव तद्राजन् गङ्गाद्वारं महात्मभिः । ७७८५
तथापर्य्याकुले तस्मिन्निवेशे पाण्डवर्षभः । अभिषेकाय कौन्तेयो गङ्गामवततार ह ।
तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान् । उत्तितीर्षुर्ज्जलाद्राजन्नग्निकार्य्यचिकीर्षया ।
अपकृष्टो महाबाहुर्नागराजस्य कन्यया । अन्तर्ज्जले महाराज उलूप्या कामयानया ।
ददर्श पाण्डवस्तत्र पावकं सुसमाहितः । कौरव्यस्याथ नागस्य भवने परमार्च्चिते ।
तत्राग्निकार्य्यं कृतवान् कुन्तीपुत्रो धनञ्जयः । अशङ्कमानेन हुतस्तेनातुष्यद्धुताशनः । ७७९०
अग्निकार्य्यं स कृत्वा तु नागराजसुतां तदा । प्रहसन्निव कौन्तेय इदं वचनमब्रवीत् ।
किमिदं साहसं भीरु कृतवत्यसि भाविनि । कश्चायं सुभगे देशः का च त्वं कस्य चात्मजा ।
॥ उलूप्युवाच ॥ ऐरावतकुले जातः कौरव्यो नाम पन्नगः । तस्यास्मि दुहिता राजन् उलूपी नाम पन्नगी ।
साऽहं त्वामभिषेकार्थमवतीर्णं समुद्रगां । दृष्ट्वैव पुरुषव्याघ्र कन्दर्पेणाभिमूर्च्छिता ।
तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन । अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ । ७७९५

॥ अर्जुन उवाच ॥ ब्रह्मचर्य्यमिदं भद्रे मम द्वादशवार्षिकं। धर्मराजेन चादिष्टं नाहमस्मि स्वयंवशः।
तव चापि प्रियं कर्त्तुमिच्छामि जलचारिणि। अनृतं नोक्तपूर्व्वञ्च मया किञ्चन कर्हिचित्।
कथञ्च नानृतं मे स्यात्तव चापि प्रियं भवेत्। न च पीड्येत मे धर्मस्तथा कुर्य्यां भुजङ्गमे।
॥ उलूप्युवाच ॥ जानाम्यहं पाण्डवेय यथा चरसि मेदिनीं। यथा च ते ब्रह्मचर्य्यमिदमादिष्टवान् गुरुः।
परस्परं वर्त्तमानान् द्रुपदस्यात्मजां प्रति। यो नोऽनुप्रविशेन्मोहात् स वै द्वादशवार्षिकं। ७८००
वने चरेद्ब्रह्मचर्य्यमिति वः समयः कृतः। तदिदं द्रौपदीहेतोरन्योऽन्यस्य प्रवासनं।
कृतवांस्तत्र धर्मार्थमत्र धर्मो न दुष्यति। परित्राणञ्च कर्त्तव्यमार्त्तानां पृथुलोचन।
कृत्वा मम परित्राणं तव धर्मो न लुप्यते। यदि वाऽप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः।
स च ते धर्म एव स्याद्दत्त्वा प्राणान्ममार्जुन। भक्ताञ्च भज मां पार्थ सतामेतन्मतं प्रभो।
न करिष्यसि चेदेवं मृतां मामुपधारय। प्राणदानान्महाबाहो चर धर्ममनुत्तमं। ७८०५
शरणञ्च प्रपन्नाऽस्मि त्वामद्य पुरुषोत्तम। दीनाननाथान् कौन्तेय परिरक्षसि नित्यशः। साऽहं शरणमभ्येमि रोरवीमि च दुःखिता।
याचे त्वां चाभिकामाऽहं तस्मात्कुरु मम प्रियं। स त्वमात्मप्रदानेन सकामां कर्त्तुमर्हसि।
॥ वैशम्पायन उवाच। एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया। कृतवांस्तत्तथा सर्व्वं धर्ममुद्दिश्य कारणं।
स नागभवने रात्रिं तामुषित्वा प्रतापवान्। उदितेऽभ्युत्थितः सूर्य्ये कौरव्यस्य निवेशनात्।
आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह। परित्यज्य गता साध्वी उलूपी निजमन्दिरं। ७८१०
दत्त्वा वरमजेयत्वं जले सर्व्वत्र भारत। साध्या जलचराः सर्व्वे भविष्यन्ति न संशयः।
इत्यादिपर्व्वण्यर्ज्जुनवनवासपर्व्वणि उलूपीसङ्गे चतुर्दशाधिकद्विशततमोऽध्यायः॥ २१४ ॥
॥ वैशम्पायन उवाच। कथयित्वा च तत्सर्व्वं ब्राह्मणेभ्यः स भारत। प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः।
अगस्त्यवटमासाद्य वशिष्ठस्य च पर्व्वतं। भृगुतुङ्गे च कौन्तेयः कृतवान् शौचमात्मनः।
प्रददौ गोसहस्राणि सुबहूनि च भारत। निवेशांश्च द्विजातिभ्यः सोऽददत् कुरुसत्तमः।
हिरण्यविन्दोस्तीर्थे च स्नात्वा पुरुषसत्तमः। दृष्टवान् पाण्डवश्रेष्ठः पुण्यान्यायतनानि च। ७८१५
अवतीर्य्य नरश्रेष्ठो ब्राह्मणैः सह भारत। प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः।
आनुपूर्व्व्येण तीर्थानि दृष्टवान् कुरुसत्तमः। नदीं चोत्पलिनीं रम्यामरण्यं नैमिषं प्रति।
नन्दामपरनन्दाञ्च कौशिकीञ्च यशस्विनीं। महानदीं गयाञ्चैव गङ्गामपि च भारत।
एवं तीर्थानि सर्व्वाणि पश्यमानस्तथाश्रमान्। आत्मनः पावनं कुर्व्वन् ब्राह्मणेभ्यो ददौ च गाः।
अङ्गवङ्गकलिङ्गेषु यानि तीर्थानि कानिचित्। जगाम तानि सर्व्वाणि तीर्थान्यायतनानि च। ७८२०
दृष्ट्वा च विधिवत्तानि धनञ्चापि ददौ ततः। कलिङ्गराष्ट्रद्वारेषु ब्राह्मणाः पाण्डवानुगाः। अभ्यनुज्ञाय कौन्तेयमुपावर्त्तन्त भारत।
स तु तैरभ्यनुज्ञातः कुन्तीपुत्त्रो धनञ्जयः। सहायैरल्पकैः शूरः प्रययौ यत्र सागरः।

स कलिङ्गानतिक्रम्य देशानायतनानि च। हर्म्याणि रमणीयानि प्रेक्षमाणो ययौ प्रभुः।
महेन्द्रपर्व्वतं दृष्ट्वा तापसैरुपशोभितं। समुद्रतीरेण शनैर्म्मणिपूरं जगाम ह।
तत्र सर्व्वाणि तीर्थानि पुण्यान्यायतनानि च। अभिगम्य महाबाहुरभ्यगच्छन्महीपतिं। ७८२५
मणिपूरेश्वरं राजन् धर्म्मज्ञं चित्रवाहनं। तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना।
तां ददर्श पुरे तस्मिन् विचरन्तीं यदृच्छया। दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीं।
अभिगम्य च राजानमवदत्स्वं प्रयोजनं। देहि मे खल्विमां राजन् क्षत्त्रियाय महात्मने।
तच्छ्रुत्वा त्वब्रवीद्राजा कस्य पुत्त्रोऽसि नाम किं। उवाच तं पाण्डवोऽहं कुन्तीपुत्त्रो धनञ्जयः।
तमुवाचाथ राजा स सान्त्वपूर्व्वमिदं वचः। राजा प्रभञ्जनो नाम कुलेऽस्मिन् संबभूव ह। ७८३०
अपुत्त्रः प्रसवेनार्थी तपस्तेपे सउत्तमं। उग्रेण तपसा तेन देवदेवः पिनाकधृक्।
ईश्वरस्तोषितः पार्थ देवदेव उमापतिः। स तस्मै भगवान् प्रादादेकैकं प्रसवं कुले।
एकैकः प्रसवस्तस्माद्भवत्यस्मिन् कुले सदा। तेषां कुमाराः सर्व्वेषां पूर्व्वेषां मम जज्ञिरे।
एका च मम कन्येयं कुलस्योत्पादनी भृशं। पुत्त्रो ममायमिति मे भावना पुरुषर्षभ।
पुत्त्रिकाहेतुविधिना संज्ञिता भरतर्षभ। तस्मादेकः सुतो योऽस्यां जायते भारत त्वया। ७८३५
एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह। एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव।
स तथेति प्रतिज्ञाय तां कन्यां प्रतिगृह्य च। उवास नगरे तस्मिन् तिस्रः कुन्तीसुतः समाः।
तस्यां सुते समुत्पन्ने परिष्वज्य वराङ्गनां। आमन्त्र्य नृपतिं तन्तु जगाम परिवर्त्तितुं।
इत्यादिपर्व्वण्यर्ज्जुनवनवासपर्व्वणि चित्राङ्गदासंग्रहे पञ्चदशाधिकद्विशतोऽध्यायः ॥ २१५ ॥
॥ वैशम्पायन उवाच ॥ ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभः। अभ्यगच्छत्सुपुण्यानि शोभनानि तपस्विभिः।
वर्ज्जयन्ति स्म तीर्थानि तत्र पञ्च स्म तापसाः। अवकीर्णानि यान्यासन्पुरस्तात्तु तपस्विभिः। ७८४०
अगस्त्यतीर्थं सौभद्रं पौलोमञ्च सुपावनं। कारन्धमं प्रसन्नञ्च हयमेधफलञ्च तत्।
भारद्वाजस्य तीर्थन्तु पापप्रशमनं महत्। एतानि पञ्च तीर्थानि ददर्श कुरुषोत्तमः।
विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः। दृष्ट्वा च वर्ज्यमानानि मुनिभिर्द्धर्म्मबुद्धिभिः।
तपस्विनस्ततोऽपृच्छत्प्राञ्जलिः कुरुनन्दनः। तीर्थानीमानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः।
॥ तापसा ऊचुः ॥ ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान्। तत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन। ७८४५
॥ वैशम्पायन उवाच ॥ तेषां श्रुत्वा महाबाहुर्व्वार्य्यमाणस्तपोधनैः। जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः।
ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमं। विगाह्य सहसा शूरः स्नानञ्चक्रे परन्तपः।
अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान्। जग्राह चरणे ग्राहः कुन्तीपुत्त्रं धनञ्जयं।
स तमादाय कौन्तेयो विस्फुरन्तं जलेचरं। उदतिष्ठन्महाबाहुर्ब्बलेन बलिनांवरः।
उत्कृष्ट एव ग्राहस्तु सोऽर्जुनेन यशस्विना। बभूव नारी कल्याणी सर्व्वाभरणभूषिता। ७८५०
दीप्यमाना श्रिया राजन् दिव्यरूपा मनोरमा। तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्त्रो धनञ्जयः।

तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् । का वै त्वमसि कल्याणि कुतो वाऽसि जलेचरि ।
किमर्थञ्च महत्पापमिदं कृतवती पुरा ॥ वर्गोवाच ॥ अप्सराऽस्मि महाबाहो देवारण्यविहारिणी । इष्टा धनपतेर्नित्यं वर्गा नाम महाबल ।
मम सख्यश्चतस्रोऽन्याः सर्व्वाः कामगमाः शुभाः । ताभिः सार्द्धं प्रयाताऽस्मि लोकपालनिवेशनं ।
ततः पश्यामहे सर्व्वा ब्राह्मणं संशितव्रतं । रूपवन्तमधीयानमेकमेकान्तचारिणं । ७८०५
तस्यैव तपसा राजंस्तद्वनं तेजसा वृतं । आदित्य इव तं देशं कृत्स्नं सर्व्वं व्यकाशयत् ।
तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतमुत्तमं । अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया ।
अहञ्च सौरभेयी च समीची बुद्बुदा लता । यौगपद्येन तं विप्रमभ्यगच्छाम भारत ।
गायन्त्योऽथ हसन्त्यश्च लोभयित्वा च तं द्विजं । स च नास्मासु कृतवान्मनो वीर कथञ्चन ।
नाकम्पत महातेजाः स्थितस्तपसि निर्म्मले । सोऽशपत् कुपितोऽस्मासु ब्राह्मणः क्षत्रियर्षभ । ग्राहभूता जले यूयं चरिष्यथ शतं समाः । ७८१०

इत्यादिपर्व्वण्यर्ज्जुनवनवासपर्व्वणि तीर्थग्राहविमोचने षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

॥ वर्गोवाच ॥ ततो वयं प्रव्यथिताः सर्व्वा भरतसत्तम । अयाम शरणं विप्रं तं तपोधनमच्युतं ।
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः । अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज ।
एष एव वधोऽस्माकं सुपर्य्याप्तस्तपोधन । यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ।
अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्म्मचारिणः । तस्माद्धर्म्मेण वृद्धिं त्वं नास्मान् हिंसितुमर्हसि ।
सर्व्वभूतेषु धर्म्मज्ञ मैत्रो ब्राह्मण उच्यते । सत्यो भवतु कल्याण एष वादो मनीषिणां । ७८१५
शरणञ्च प्रपन्नानां शिष्टाः कुर्व्वन्ति पालनं । शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ।
॥ वैशम्पायन उवाच ॥ एवमुक्तः स धर्म्मात्मा ब्राह्मणः शुभकर्म्मकृत् । प्रसादं कृतवान्वीर रविसोमसमप्रभः ।
॥ ब्राह्मण उवाच ॥ शतं शतसहस्रन्तु सर्व्वमक्षय्यवाचकं । परिमाणं शतं त्वेतन्नेदमक्षय्यवाचकं ।
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषान् जले । उत्कर्षति जलात्तस्मात्स्थलं पुरुषसत्तमः ।
तदा यूयं पुनः सर्व्वाः स्वरूपं प्रतिपत्स्यथ । अनृतं नोक्तपूर्व्वं मे हसताऽपि कदाचन । ७८२०
तानि सर्व्वाणि तीर्थानि ततः प्रभृति चैव ह । नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्व्वशः । पुण्यानि च भविष्यन्ति पावनानि मनीषिणां ।
॥ वर्गोवाच ॥ ततोऽभिवाद्य तं विप्रं कृत्वा चापि प्रदक्षिणं । अचिन्तयामोऽपसृत्य तस्माद्देशात्सुदुःखिताः ।
क्व नु नाम वयं सर्व्वाः कालेनाल्पेन तं नरं । समागच्छेम यो नस्तद्रूपमापादयेत्पुनः ।
ता वयं चिन्तयित्वैव मुहूर्त्तादिव भारत । दृष्टवत्यो महाभागं देवर्षिमुत नारदं ।
सम्प्रहृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिं । अभिवाद्य च तं पार्थ स्थिताः स्म व्रीडितानना । ७८२५
स नोऽपृच्छत् दुःखमूलमुक्तवत्यो वयञ्च तं । श्रुत्वा तत्र यथावृत्तमिदं वचनमब्रवीत् ।
दक्षिणे सागरानूपे पञ्चतीर्थानि सन्ति वै । पुण्यानि रमणीयानि तानि गच्छत माचिरं ।

तत्राद्य पुरुषव्याघ्रः पाण्डवेयो धनञ्जयः । मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ।

तस्य सर्व्वा वयं वीर श्रुत्वा वाक्यमितो गताः । तदिदं सत्यमेवाद्य मोक्षिताऽहं त्वयाऽनघ ।

एतास्तु मम ताः सख्यस्तथैवान्या जले स्थिताः । कुरु कर्म्म शुभं वीर एताः सर्व्वा विमोचय । ७८८०

॥ वैशम्पायन उवाच ॥ ततस्ताः पाण्डवश्रेष्ठः सर्व्वा एव विशाम्पते । तस्माच्छापाददीनात्मा मोक्षयामास वीर्य्यवान् ।

उत्थाय च जलात्तस्मात् प्रतिलभ्य वपुः स्वकं । तास्तदाऽप्सरसो राजन्नदृश्यन्त यथा पुरा ।

तीर्थानि शोधयित्वा तु तथाऽनुज्ञाय ताः प्रभुः । चित्राङ्गदां पुनर्द्रष्टुं मणिपूरं पुनर्ययौ ।

तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनं । तं दृष्ट्वा पाण्डवो राजन् गोकर्णमभितोऽगमत् ।

इत्यादिपर्व्वण्यर्जुनवनवासपर्व्वण्यर्जुनतीर्थयात्रायां सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥

॥ वैशम्पायन उवाच ॥ सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च । सर्व्वाण्येवानुपूर्व्वेण जगामामितविक्रमः । ७८८५

समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च । तानि सर्व्वाणि गत्वा स प्रभासमुपजग्मिवान् ।

प्रभासदेशं सम्प्राप्तं वीभत्सुमपराजितं । सुपुण्यं रमणीयञ्च शुश्राव मधुसूदनः ।

ततोऽभ्यगच्छत्कौन्तेयं सखायं तत्र माधवः । ददृशाते तदाऽन्योन्यं प्रभासे कृष्णपाण्डवौ ।

तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने । आस्तां प्रियसखायौ तौ नरनारायणावृषी ।

ततोऽर्जुनं वासुदेवस्तां चर्य्यां पर्य्यपृच्छत । किमर्थं पाण्डवैतानि तीर्थान्यनुचरस्युत । ७८९०

ततोऽर्जुनो यथा वृत्तं सर्व्वमाख्यातवांस्तदा । श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ।

तौ विहृत्य यथा कामं प्रभासे कृष्णपाण्डवौ । महीधरं रैवतकं वासायैवाभिजग्मतुः ।

पूर्व्वमेव तु कृष्णस्य वचनात्तं महीधरं । पुरुषा मण्डयाञ्चक्रुरुपजह्रुश्च भोजनं ।

प्रतिगृह्यार्जुनः सर्व्वमुपभुज्य च पाण्डवः । सहैव वासुदेवेन दृष्टवान्नटनर्त्तकान् ।

अभ्यनुज्ञाय तान् सर्व्वानर्च्चयित्वा च पाण्डवः । सत्कृतं शयनं दिव्यमभ्यगच्छन्महामतिः । ७८९५

ततस्तत्र महाबाहुः शयानः शयने शुभे । नदीनां पल्वलानाञ्च पर्व्वतानां तथैव च । आपगानां वनानाञ्च कथयामास सात्वते ।

एवं स कथयन्नेव निद्रया जनमेजय । कौन्तेयोऽपि हृतस्तस्मिन् शयने स्वर्गसन्निभे ।

मधुरेणैव गीतेन वीणाशब्देन चैव ह । प्रबोध्यमानो बुबुधे स्तुतिभिर्म्मङ्गलैस्तथा ।

स कृत्वाऽवश्यकार्य्याणि वार्ष्णेयेनाभिनन्दितः । रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ।

अलङ्कृता द्वारका तु बभूव जनमेजय । कुन्तीपुत्रस्य पूजार्थमपि निष्कुटकेष्वपि । ७९००

दिदृक्षन्तश्च कौन्तेयं द्वारकावासिनो जनाः । नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ।

अवलोकेषु नारीणां सहस्राणि शतानि च । भोजवृष्ण्यन्धकानाञ्च समवायो महानभूत् ।

स तथा सत्कृतः सर्व्वैर्भोजवृष्ण्यन्धकात्मजैः । अभिवाद्याभिवाद्यांश्च सर्व्वैश्च प्रतिनन्दितः ।

कुमारैः सर्व्वशो वीरः सत्कारेणाभिचोदितः । समानवयसः सर्व्वानाश्लिष्य स पुनः पुनः ।

कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते । उवास सह कृष्णेन बहुलास्तत्र शर्व्वरीः । ७९०५

इत्यादिपर्व्वण्यर्जुनवनवासपर्व्वण्यर्जुनद्वारकागमनेऽष्टादशाधिकद्विशततोऽध्यायः ॥ समाप्तञ्चार्जुनवनवासपर्व्व ॥ २१८ ॥

## ॥ अथ सुभद्राहरणपर्व्व ॥ १७ ॥

॥ वैशम्पायन उवाच ॥ ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ। वृष्ण्यन्धकानामभवदुत्सवो नृपसत्तम।
तत्र दानं ददुर्वीरा ब्राह्मणेभ्यः सहस्रशः। भोजवृष्ण्यन्धकाश्चैव महेऽस्य गिरेस्तदा।
प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः। स देशः शोभितो राजन् कल्पवृक्षैश्च सर्व्वशः।
वादित्राणि च तत्रान्ये वादकाः समवादयन्। ननृतुर्नर्त्तकाश्चैव जगुर्गेयानि गायनाः।
अलङ्कृताः कुमाराश्च वृष्णीनां सुमहौजसां। यानैर्हाटकचित्रैश्च चञ्चूर्य्यन्ते स्म सर्व्वशः। ७९१०
पौराश्च पादचारेण यानैरुच्चावचैस्तथा। सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः।
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः। अनुगम्यमानो गन्धर्व्वैरचरत्तत्र भारत।
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान्। अनुगीयमानो गन्धर्व्वैः स्त्रीसहस्रसहायवान्।
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्म्मदौ। दिव्यमाल्याम्बरधरौ विजह्राते ऽमराविव।
अक्रूरः सारणश्चैव गदो बभ्रुर्विदूरथः। निशठश्चारुदेष्णश्च पृथुर्व्विपृथुरेव च। ७९१५
सत्यकः सात्यकिश्चैव भङ्गकारमहारवौ। हार्द्दिक्य उद्धवश्चैव ये चान्ये नानुकीर्त्तिताः।
एते परिवृताः स्त्रीभिर्गन्धर्व्वैश्च पृथक्पृथक्। तमुत्सवं रैवतके शोभयाञ्चक्रिरे तदा।
चित्रकौतूहले तस्मिन् वर्त्तमाने महाद्भुते। वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः।
तत्र चंक्रममाणौ तौ वसुदेवसुतां शुभां। अलङ्कृतां सखीमध्ये सुभद्रां ददृशतुस्तदा।
दृष्ट्वैव तामर्ज्जुनस्य कन्दर्पः समजायत। तं तदेकाग्रमनसं कृष्णः पार्थमलक्षयत्। ७९२०
अब्रवीत्पुरुषव्याघ्रः प्रहसन्निव भारत। वनेचरस्य किमिदं कामेनालोड्यते मनः।
ममैषा भगिनी पार्थ सारणस्य सहोदरा। सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता।
यदि ते वर्त्तते बुद्धिर्वक्ष्यामि पितरं स्वयं। अर्जुन उवाच। दुहिता वसुदेवस्य वासुदेवस्य च स्वसा। रूपेण चैषा सम्पन्ना कमिवैषा न मोहयेत्।
कृतमेव तु कल्याणं सर्व्वं मम भवेद्ध्रुवं। यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव।
प्राप्तौ तु क उपायः स्यात्तं ब्रवीहि जनार्द्दन। आस्थास्यामि तदा सर्व्वं यदि शक्यं नरेण तत्। ७९२५
॥ वासुदेव उवाच ॥ स्वयम्वरः क्षत्रियाणां विवाहः पुरुषर्षभ। स च संशयितः पार्थ स्वभावस्यानिमित्ततः।
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते। विवाहहेतुः शूराणामिति धर्म्मविदो विदुः।
स त्वमर्ज्जुन कल्याणीं प्रसह्य भगिनीं मम। हर स्वयम्वरे ह्यस्याः को वै वेद चिकीर्षितं।
ततोऽर्ज्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यतां। शीघ्रगान् पुरुषानन्यान्प्रेषयामासतुस्तदा।
धर्म्मराजाय तत्सर्व्वमिन्द्रप्रस्थगताय वै। श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः। ७९३०
इत्यादिपर्व्वणि सुभद्राहरणपर्व्वणि युधिष्ठिरानुज्ञायामूनविंशत्यधिकद्विशततमोऽध्यायः ॥२१९॥

॥ वैशम्पायन उवाच ॥ ततः संवादिते तस्मिन्ननुज्ञातो धनञ्जयः। गतां रैवतके कन्यां विदित्वा जनमेजय।
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यतां। कृष्णस्य मतमादाय प्रययौ भरतर्षभः।

रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि। शैब्यसुग्रीवयुक्तेन किङ्किणीजालमालिना।

सर्व्वशस्त्रोपपन्नेन जीमूतरवनादिना। ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना।

सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान्। मृगयाव्यपदेशेन प्रययौ पुरुषर्षभः। ७९३५

सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्यैव हि रैवतं। दैवतानि च सर्व्वाणि ब्राह्मणान् स्वस्ति वाच्य च।

प्रदक्षिणं गिरेः कृत्वा प्रययौ द्वारकां प्रति। तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथं।

सुभद्रां चारुसर्व्वाङ्गीं कामवाणप्रपीडितः। ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मितां। रथेन काञ्चनाङ्गेन प्रययौ स्वपुरं प्रति।

ह्रियमाणान्तु तां दृष्ट्वा सुभद्रां सैनिका जनाः। विक्रोशन्तोऽद्रवन् सर्व्वे द्वारकामभितः पुरीं।

ते समासाद्य सहिताः सुधर्म्मामभितः सभां। सभापालस्य तत्सर्व्वमाचख्युः पार्थविक्रमं। ७९४०

तेषां श्रुत्वा सभापालो भेरीं सान्नाहिकीं ततः। समाजघ्ने महाघोषां जाम्बूनदपरिष्कृतां।

क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा। अन्नपानमपास्याथ समापेतुः समन्ततः।

तत्र जाम्बूनदाङ्गानि स्पर्द्ध्यास्तरणवन्ति च। मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च।

भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः। सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः।

तेषां समुपविष्टानां देवानामिव सन्नये। आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः। ७९४५

तच्छ्रुत्वा वृष्णिवीरास्ते मदसंरक्तलोचनाः। अमृष्यमाणाः पार्थस्य समुत्पेतुरहङ्कृताः।

योजयध्वं रथानाशु प्रासानाहरतेति च। धनूंषि च महार्हाणि कवचानि बृहन्ति च।

सूतानुच्चुक्रुशुः केचिद्रथान्योजयतेति च। स्वयञ्च तुरगान् केचिदायुञ्जन् हेमभूषितान्।

रथेष्वानीयमानेषु कवचेषु ध्वजेषु च। अभिक्रन्दे नृवीराणां तदासीत् तुमुलं महत्।

वनमाली ततः क्षीवः कैलासशिखरोपमः। नीलवासा मदोत्सिक्त इदं वचनमब्रवीत्। ७९५०

किमिदं कुरुथाप्रज्ञास्तूष्णींभूते जनार्द्दने। अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः।

एष तावदभिप्रायमाख्यातु स्वं महामतिः। यदस्य रुचितं कर्त्तुं तत्कुरुध्वमतन्द्रिताः।

ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात्। तूष्णींभूतास्ततः सर्व्वे साधु साध्विति चाब्रुवन्।

समं वचो निशम्यैव बलदेवस्य धीमतः। पुनरेव सभामध्ये सर्व्वे ते समुपाविशन्।

ततोऽब्रवीद्वासुदेवं वचो रामः परन्तपः। किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्द्दन। ७९५५

सत्कृतस्त्वत्कृते पार्थः सर्व्वैरस्माभिरच्युत। न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः।

को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति। मन्यमानः कुले जातमात्मानं पुरुषः क्वचित्।

इच्छन्नेव हि सम्बन्धं कृतं पूर्व्वञ्च मानयन्। को हि नाम भवेनार्थी साहसेन समाचरेत्।

सोऽवमन्य तथाऽस्माकमनादृत्य च केशवं। प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः।

कथं हि शिरसो मध्ये कृतं तेन पदं मम। मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः। ७९६०

अद्य निष्कौरवामेकः करिष्यामि वसुन्धरां। नहि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः।

तं तथा गर्ज्जमानन्तु मेघदुन्दुभिनिस्वनं। अन्वपद्यन्त ते सर्व्वे भोजवृष्ण्यन्धकास्तथा।

इत्यादिपर्व्वणि सुभद्राहरणपर्व्वणि बलदेवक्रोधे विंशत्यधिकद्विशततोऽध्यायः॥ समाप्तञ्च सुभद्राहरणपर्व्व ॥ २२० ॥

## ॥ अथ हरणाहरणपर्व्व ॥ १८ ॥

॥ वैशम्पायन उवाच ॥ उक्तवन्तो यथावीर्य्यमसकृत् सर्व्ववृष्णयः। ततोऽब्रवीद्वासुदेवो वाक्यं धर्म्मार्थसंयुतं।

नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान्। सम्मानोऽभ्यधिकस्तेन प्रयुक्तोऽयं न संशयः।

अर्थलुब्धान् वः पार्थो मन्यते सात्वतान् सदा। स्वयम्बरमनाधृष्यं मन्यते चापि पाण्डवः। ७९९५

प्रदानमपि कन्यायाः पशुवत् कोऽनुमन्यते। विक्रयं चाप्यपत्यस्य कः कुर्य्यात् पुरुषो भुवि।

एतान् दोषांस्तु कौन्तेयो दृष्टवानिति मे मतिः। अतः प्रसह्य हृतवान् कन्यां धर्म्मेण पाण्डवः।

उचितश्चैव सम्बन्धः सुभद्रा च यशस्विनी। एष चापीदृशः पार्थः प्रसह्य हृतवानिति।

भरतस्यान्वये जातं शान्तनोश्च यशस्विनः। कुन्तिभोजात्मजापुत्त्रं को बुभूषेत नार्ज्जुनं।

न च पश्यामि यः पार्थं विजयेत रणे बलात्। वर्ज्जयित्वा विरूपाक्षं भगनेत्रहरं हरं। ८०००

अपि सर्व्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष। स च नाम रथस्तादृङ् मदीयास्ते च वाजिनः।

योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत्। तमभिद्रुत्य सान्त्वेन परमेण धनञ्जयं। न्यवर्त्तयत संहृष्टा ममैषा परमा मतिः।

यदि निर्जित्य वः पार्थो बलाद्गच्छेत् स्वकं पुरं। प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः।

तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप। निवृत्तश्चार्ज्जुनस्तत्र विवाहं कृतवान् प्रभुः।

उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः। विहृत्य च यथाकामं पूजितो वृष्णिनन्दनैः। ८००५

पुष्करे तु ततः शेषं कालं वर्त्तितवान् प्रभुः। पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमागतः।

अभिगम्य च राजानं नियमेन समाहितः। अभ्यर्च्य ब्राह्मणान् पार्थो द्रौपदीमभिजग्मिवान्।

तं द्रौपदी प्रत्युवाच प्रणयात् कुरुनन्दनं। तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा।

सुबद्धस्यापि भारस्य पूर्व्वबन्धः श्लथायते। तथाबहुविधं कृष्णां विलपन्तीं धनञ्जयः। सान्त्वयामास भूयश्च क्षमयामास चासकृत्।

सुभद्रां त्वरमाणश्च रक्तकौशेयवासिनीं। पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः। ८०१०

साऽधिकं तेन रूपेण शोभमाना यशस्विनी। भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना।

ववन्दे पृथुताम्राक्षी पृथां भद्रा यशस्विनी। तां कुन्ती चारुसर्व्वाङ्गीमुपाजिघ्रत मूर्द्धनि। प्रीत्या परमया युक्ता आशीर्भिर्युञ्जताऽतुलं।

ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना। ववन्दे द्रौपदीं भद्रा प्रेष्याऽहमिति चाब्रवीत्।

प्रत्युत्थाय तदा कृष्णा स्वसारं माधवस्य च। परिष्वज्यावदत् प्रीत्या निःसपत्नोऽस्तु ते पतिः।

तथैव मुदिता भद्रा तामुवाचैवमस्त्विति। ततस्ते हृष्टमनसः पाण्डवेया महारथाः। ८०१५

कुन्ती च परमप्रीता बभूव जनमेजय। श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वं पुरोत्तमं।

अर्ज्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा। आजगाम विशुद्धात्मा सह रामेण केशवः।

वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः। भ्रातृभिश्च कुमारैश्च योधैश्च बहुभिर्वृतः।

सैन्येन महता शौरिरभिगुप्तः परन्तपः। तत्र दानपतिर्धीमानाजगाम महायशाः।

अक्रूरो वृष्णिवीराणां सेनापतिररिन्दमः। अनाधृष्टिर्महातेजा उद्धवश्च महायशाः। ७९९०

साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महामनाः। सत्यकः सात्यकिश्चैव कृतवर्म्मा च सात्वतः।

प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च। चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च। सारणश्च महाबाहुर्गदश्च विदुषाम्वरः।

एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा। आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु।

ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतं। प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा।

ताभ्यां प्रतिगृहीतन्तु वृष्णिचक्रं महर्द्धिमत्। विवेश खाण्डवप्रस्थं पताकाध्वजशोभितं। ७९९५

संसृष्टसिक्तपन्थानं पुष्पप्रकरशोभितं। चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितं।

दह्यताऽगुरुणा चैव देशे देशे सुगन्धिना। हृष्टपुष्टजनाकीर्णं वणिग्भिरुपशोभितं।

प्रतिपेदे महाबाहुः सह रामेण केशवः। वृष्ण्यन्धकैस्तथा भोजैः समेतः पुरुषोत्तमः।

सम्पूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः। विवेश भवनं राज्ञः पुरन्दरगृहोपमं।

युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि। मूर्द्ध्नि केशवमाघ्राय बाहुभ्यां परिषस्वजे। ८०००

तं प्रीयमाणो गोविन्दो विनयेनाभ्यपूजयत्। भीमञ्च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत्।

तांश्च वृष्ण्यन्धकश्रेष्ठान् कुन्तीपुत्रो युधिष्ठिरः। प्रतिजग्राह सत्कारैर्यथाविधि यथागतं।

गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत्। कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः।

तेषां ददौ हृषीकेशो जन्यार्थे धनमुत्तमं। हरणे वै सुभद्राया ज्ञातिदेयं महायशाः।

रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनां। चतुर्युजामुपेतानां सूतैः कुशलशिक्षितैः। ८००५

सहस्रं प्रददौ कृष्णो गवामयुतमेव च। श्रीमन्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसां।

वडवानाञ्च शुद्धानां चन्द्रांशुसमवर्चसां। ददौ जनार्द्दनः प्रीत्या सहस्रं हेमभूषितं।

तथैवाश्वतरीणाञ्च दान्तानां वातरंहसां। शतान्यञ्जनकेशीनां श्वेतानां पञ्चपञ्च च।

स्नानपानोत्सवे चैव प्रयुक्तं वयसाऽन्वितं। स्त्रीणां सहस्रं गौरीणां सुवेशानां सुवर्चसां।

सुवर्णशतकण्ठीनामरोमाणां स्वलङ्कृतं। परिचर्य्यासु दक्षाणां प्रददौ पुष्करेक्षणः। ८०१०

पृष्ठ्यानामपि चाश्वानां वाह्लिकानां जनार्द्दनः। ददौ शतसहस्राख्यं कन्याधनमनुत्तमं।

कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः। मनुष्यभारान् दाशार्हो ददौ दश जनार्द्दनः।

गजानान्तु प्रभिन्नानां त्रिधाप्रस्रवतां मदं। गिरिकूटनिकाशानां समरेष्वनिवर्त्तिनां।

कॢप्तानां पटुघण्टानां चारूणां हेममालिनां। हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः।

रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली। प्रीयमाणो हलधरः सम्बन्धं प्रति मानयन्। ८०१५

स महाधनरत्नौघो वस्त्रकम्बलफेनवान्। महागजमहाग्राहः पताकाशैवलाकुलः।

पाण्डुसागरमाविद्धः प्रविवेश महाधनः। पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत्।

प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः। पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान्।

ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः। विजह्रुरमरावासे नराः सुकृतिनो यथा।

तत्र तत्र महानादैरुत्कृष्टतलनादितैः । यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः । ८०२०
एवमुत्तमवीर्य्यास्ते विहृत्य दिवसान् बहून् । पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं प्रति ।
रामं पुरस्कृत्य ययुर्वृष्ण्यन्धकमहारथाः । रत्नान्यादाय शुभ्राणि दत्तानि कुरुसत्तमैः ।
वासुदेवस्तु पार्थेन तत्रैव सह भारत । उवास नगरे रम्ये शक्रप्रस्थे महात्मना ।
व्यचरद्यमुनातीरे मृगयां स महायशाः । मृगान् विध्यन् वराहांश्च रेमे सार्द्धं किरीटिना ।
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा । जयन्तमिव पौलोमी ख्यातिमन्तमजीजनत् । ८०२५
दीर्घबाहुं महोरस्कं वृषभाक्षमरिन्दमं । सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभं ।
अभीश्च मन्युमांश्चैव ततस्तमरिमर्द्दनं । अभिमन्युमिति प्राहुरार्जुनिं पुरुषर्षभं ।
स सात्वत्यामतिरथः सम्बभूव धनञ्जयात् । मखे निर्मथनेनेव शमीगर्भाद्धुताशनः ।
यस्मिन् जाते महातेजाः कुन्तीपुत्त्रो युधिष्ठिरः । अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च भारत ।
दयितो वासुदेवस्य बाल्यात्प्रभृति चाभवत् । पितॄणाञ्चैव सर्व्वेषां प्रजानामिव चन्द्रमाः । ८०३०
जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाः शुभाः । स चापि ववृधे बालः शुक्लपक्षे यथा शशी ।
चतुष्पादं दशविधं धनुर्व्वेदमरिन्दमः । अर्जुनाद्वेद वेदज्ञः सकलं दिव्यमानुषं ।
विज्ञानेष्वपि चास्त्राणां सौष्ठवे च महाबलः । क्रियास्वपि च सर्व्वासु विशेषानभ्यशिक्षयत् ।
आगमे च प्रयोगे च चक्रे तुल्यमिवात्मना । तुतोष पुत्त्रं सौभद्रं प्रेक्षमाणो धनञ्जयः ।
सर्व्वसंहननोपेतं सर्व्वलक्षणलक्षितं । दुर्द्धर्षमृषभस्कन्धं व्यात्ताननमिवोरगं । ८०३५
सिंहदर्पं महेष्वासं मत्तमातङ्गविक्रमं । मेघदुन्दुभिनिर्घोषं पूर्णचन्द्रनिभाननं ।
कृष्णस्य सदृशं शौर्य्ये वीर्य्ये रूपे तथाकृतौ । ददर्श पुत्त्रं वीभत्सुर्म्मघवानिव तं यथा ।
पाञ्चाल्यपि तु पञ्चभ्यः पतिभ्यः शुभलक्षणा । लेभे पञ्च सुतान्वीरान् श्रेष्ठान्पञ्चाचलानि व ।
युधिष्ठिरात्प्रतिविन्ध्यं सुतसोमं वृकोदरात् । अर्जुनाच्छ्रुतकर्म्माणं शतानीकञ्च नाकुलिं ।
सहदेवाच्छ्रुतसेनमेतान् पञ्च महारथान् । पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा । ८०४०
शास्त्रतः प्रतिविन्ध्यन्तमूचुर्व्विप्रा युधिष्ठिरं । परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयं ।
सुते सोमसहस्रे तु सोमार्कसमतेजसं । सुतसोमं महेष्वासं सुषुवे भीमसेनतः ।
श्रुतं कर्म्म महत्कृत्वा निवृत्तेन किरीटिना । जातः पुत्त्रस्तथेत्येवं श्रुतकर्म्मा ततोऽभवत् ।
शतानीकस्य राजर्षेः कौरवस्य महात्मनः । चक्रे पुत्त्रं सनामानं नकुलः कीर्त्तिवर्द्धनं ।
ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते । सहदेवात्सुतं तस्माच्छ्रुतसेनेति यं विदुः । ८०४५
एकवर्षान्तरास्त्वेते द्रौपदेया यशस्विनः । अन्वजायन्त राजेन्द्र परस्परहितैषिणः ।
जातकर्म्माण्यानुपूर्व्यात् चूडोपनयनानि च । चकार विधिवद्धौम्यस्तेषां भरतसत्तम ।
कृत्वा च वेदाध्ययनं ततः सुचरितव्रताः । जगृहुः सर्व्वमिष्वस्त्रमर्जुनाद्दिव्यमानुषं ।
दिव्यगर्भोपमैः पुत्त्रैर्व्यूढोरस्कैर्महारथैः । अन्विता राजशार्द्दूल पाण्डवा मुदमाप्नुवन् ।
इत्यादिपर्व्वणि हरणाहरणपर्व्वणि एकविंशत्यधिकद्विशततमोऽध्यायः समाप्तञ्च हरणाहरणपर्व्व ॥ २२१ ॥

---

## ॥ अथ खाण्डवदाहनपर्व्व॥ १९ ॥

॥ वैशम्पायन उवाच॥ इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान् नराधिपान्। शासनाद्धृतराष्ट्रस्य राज्ञः शान्तनवस्य च। ८०५०
आश्रित्य धर्मराजानं सर्व्वलोकोऽवसत्सुखं। पुण्यलक्षणकर्माणं स्वदेहमिव देहिनः।
स समं धर्मकामार्थान् सिषेवे भरतर्षभ। त्रीनिवात्मसमान्बन्धून्नीतिमानिव मानयन्।
तेषां समविभक्तानां क्षितौ देहवतामिव। बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः।
अध्येतारं परं वेदान् प्रयोक्तारं महाध्वरे। रक्षितारं शुभान् लोकान् लेभिरे तं जनाधिपं।
अधिष्ठानवती लक्ष्मीः परायणवती मतिः। वर्द्धमानोऽखिलो धर्मस्तेनासीत्पृथिवीक्षितां। ८०५५
भ्रातृभिः सहितो राजा चतुर्भिरधिकं बभौ। प्रयुज्यमानैर्व्विततो वेदैरिव महाध्वरः।
तन्तु धौम्यादयो विप्राः परिवार्य्योपतस्थिरे। बृहस्पतिसमा मुख्याः प्रजापतिमिवामराः।
धर्मराजे ह्यतिप्रीत्या पूर्णचन्द्र इवामले। प्रजानां रेमिरे तुल्यं नेत्राणि हृदयानि च।
न तु केवलदैवेन प्रजाभावेन रेमिरे। यद्बभूव मनःकान्तं कर्म्मणा स चकार तत्।
न ह्ययुक्तं न चासत्यं नासह्यं न च वाऽप्रियं। भाषितं चारुभाषस्य जज्ञे पार्थस्य धीमतः। ८०६०
स हि सर्व्वस्य लोकस्य हितमात्मन एव च। चिकीर्षन् सुमहातेजा रेमे भरतसत्तम।
तथा तु मुदिताः सर्व्वे पाण्डवा विगतज्वराः। अवसन् पृथिवीपालांस्तापयन्तः स्वतेजसा।
ततः कतिपयाहस्य बीभत्सुः कृष्णमब्रवीत्। उष्णानि कृष्ण वर्त्तन्ते गच्छावो यमुनां प्रति।
सुहृज्जनवृतौ तत्र विहृत्य मधुसूदन। सायाह्ने पुनरेष्यावो रोचतां ते जनार्दन।
॥ वासुदेव उवाच॥ कुन्तीमातर्ममाप्येतद्रोचते यद्वयं जले। सुहृज्जनवृताः पार्थ विहरेम यथासुखं। ८०६५
॥ वैशम्पायन उवाच॥ आमन्त्र्य तौ धर्मराजमनुज्ञाप्य च भारत। जग्मतुः पार्थगोविन्दौ सुहृज्जनवृतौ ततः।
विहारदेशं संप्राप्य नानाद्रुमवदुत्तमं। गृहैरुच्चावचैर्युक्तं पुरन्दरपुरोपमं।
भक्ष्यैर्भोज्यैश्च पेयैश्च रसवद्भिर्महाधनैः। माल्यैश्च विविधैर्गन्धैर्युक्तं वार्ष्णेयपार्थयोः।
विवेशान्तःपुरं तूर्णं रत्नैरुच्चावचैः शुभैः। यथोपजोषं सर्व्वश्च जनश्चिक्रीड भारत।
स्त्रियश्च विपुलश्रोण्यश्चारुपीनपयोधराः। मदस्खलितगामिन्यश्चिक्रीडुर्व्वामलोचनाः। ८०७०
वने काश्चिज्जले काश्चित्काश्चिद्वेश्मसु चाङ्गनाः। यथादेशं यथाप्रीति चिक्रीडुः पार्थकृष्णयोः।
द्रौपदी च सुभद्रा च वासांस्याभरणानि च। प्रायच्छतां महाराज स्त्रीणां ते स्म मदोत्कटे।
काश्चित्प्रहृष्टा ननृतुश्चुक्रुशुश्च तथा पराः। जहसुश्च परा नार्य्यः पपुश्चान्या वरासवं।
रुरुधुश्चापरास्तत्र प्रजघ्नुश्च परस्परं। मन्त्रयामासुरन्याश्च रहस्यानि परस्परं।
वेणुवीणामृदङ्गानां मनोज्ञानाञ्च सर्व्वशः। शब्देन पूर्य्यते हर्म्यं तद्वनं सुमहर्द्धिमत्। ८०७५
तस्मिंस्तदा वर्त्तमाने कुरुदाशार्हनन्दनौ। समीपं जग्मतुः कञ्चिदुद्देशं सुमनोरमं।
तत्र गत्वा महात्मानौ कृष्णौ परपुरञ्जयौ। महार्हासनयोराजंस्ततस्तौ संनिषीदतुः।
तत्र पूर्व्वव्यतीतानि विक्रान्तानीतराणि च। बहूनि कथयित्वा तौ रेमाते पार्थमाधवौ।

तत्रोपविष्टौ मुदितौ नाकपृष्ठेऽश्विनाविव। अभ्यागच्छत्तदा विप्रो वासुदेवधनञ्जयौ।
बृहच्छालप्रतीकाशः प्रतप्तकनकप्रभः। हरिपिङ्गोज्ज्वलश्मश्रुः प्रमाणायामतः समः। ८०८०
तरुणादित्यसङ्काशश्चीरवासा जटाधरः। पद्मपत्राननः पिङ्गस्तेजसा प्रज्वलन्निव।
उपसृष्टन्तु तं कृष्णौ भ्राजमानं द्विजोत्तमं। अर्ज्जुनो वासुदेवश्च तूर्णमुत्पत्य तस्थतुः।
इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि ब्राह्मणरूप्यनलागमने द्वाविंशत्यधिकद्विशततमोऽध्यायः॥ २२२ ॥
॥ वैशम्पायन उवाच ॥ सोऽब्रवीदर्ज्जुनञ्चैव वासुदेवञ्च सात्वतं। लोकप्रवीरौ तिष्ठन्तौ खाण्डवस्य समीपतः।
ब्राह्मणो बहुभोक्ताऽस्मि भुञ्जेऽपरिमितं सदा। भिक्षे वार्ष्णेयपार्थौ वामेकां तृप्तिं प्रयच्छतां।
एवमुक्तौ तमब्रूतां ततस्तौ कृष्णपाण्डवौ। केनान्नेन भवांस्तृप्येत्तस्यान्नस्य यतावहे। ८०८५
एवमुक्तः स भगवानब्रवीत्तावुभौ ततः। भाषमाणौ तदा वीरौ किमन्नं क्रियतामिति।
॥ ब्राह्मण उवाच ॥ नाहमन्नं बुभुक्षे वै पावकं मां निबोधतं। यदन्नमनुरूपं मे तद्युवां सम्प्रयच्छतं।
इदमिन्द्रः सदा दावं खाण्डवं परिरक्षति। न च शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना।
वसत्यत्र सखा तस्य तक्षकः पन्नगः सदा। सगणस्तत्कृते दावं परिरक्षति वज्रभृत्।
तत्र भूतान्यनेकानि रक्ष्यतेऽस्य प्रसङ्गतः। तं दिधक्षुर्न शक्नोमि दग्धुं शक्रस्य तेजसा। ८०९०
स माम्प्रज्वलितं दृष्ट्वा मेघाम्भोभिः प्रवर्षति। ततो दग्धुं न शक्नोमि दिधक्षुर्दावमीप्सितं।
स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागतः। दहेयं खाण्डवं दावमेतदन्नं वृतं मया।
युवां ह्युदकधारास्ता भूतानि च समन्ततः। उत्तमास्त्रविदौ सम्यक् सर्व्वतो वारयिष्यथः।
॥ जनमेजय उवाच ॥ किमर्थं भगवानग्निः खाण्डवं दग्धुमिच्छति। रक्ष्यमाणं महेन्द्रेण नानासत्त्वसमायुतं।
नह्येतत्कारणं ब्रह्मन्नल्पं सम्प्रतिभाति मे। यद्ददाह सुसंक्रुद्धः खाण्डवं हव्यवाहनः। ८०९५
एतद्विस्तरशो ब्रह्मन् श्रोतुमिच्छामि तत्त्वतः। खाण्डवस्य पुरा दाहो यथासमभवन्मुने।
॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि पौराणीमृषिसंस्तुतां। कथामिमां नरश्रेष्ठ खाण्डवस्य विनाशिनीं।
पौराणः श्रूयते राजन् राजा हरिहयोपमः। श्वेतकिर्नाम विख्यातो बलविक्रमसंयुतः।
यज्वा दानपतिर्धीमान् यथा नान्योऽस्ति कश्चन। ईजे च स महायज्ञैः क्रतुभिश्चाप्तदक्षिणैः।
तस्य नान्याऽभवद्बुद्धिर्दिवसे दिवसे नृप। सत्रे क्रियासमारम्भे दानेषु विविधेषु च। ८१००
ऋत्विग्भिः सहितो धीमानेवमीजे स भूमिपः। ततस्तु ऋत्विजश्चास्य धूमव्याकुललोचनाः।
कालेन महता खिन्नास्तत्यजुस्तं नराधिपं। ततः प्रचोदयामास ऋत्विजस्तान्महीपतिः। चक्षुर्व्विकलतां प्राप्ता न प्रपेदुश्च ते क्रतुं।
ततस्तेषामनुमते तद्विप्रैस्तु नराधिपः। सत्रं समापयामास ऋत्विग्भिरपरैः सह।
तस्यैवं वर्त्तमानस्य कदाचित्कालपर्य्यये। सत्रमाहर्तुकामस्य सम्वत्सरशतं किल।
ऋत्विजो नाभ्यपद्यन्त समाहर्त्तुं महात्मनः। स च राजाऽकरोद्यत्नं महान्तं ससुहृज्जनः। ८१०५
प्रणिपातेन सान्त्वेन दानेन च महायशाः। ऋत्विजोऽनुनयामास भूयोभूयस्त्वतन्द्रितः।

ते चास्य तमभिप्रायं न चक्रुरमितौजसः। स चाप्यसक्तान् राजर्षिस्तानुवाच रुषाऽन्वितः।
यद्यहं पतितो विप्राः शुश्रूषायां न च स्थितः। आशु त्याज्योऽस्मि युष्माभिर्ब्राह्मणैश्च जुगुप्सितः।
तन्नार्हथ क्रतुश्रद्धां व्याघातयितुमद्य तां। अस्थाने वा परित्यागं कर्त्तुं मे द्विजसत्तमाः।
प्रपन्न एव वो विप्राः प्रसादं कर्त्तुमर्हथ। सान्त्वदानादिभिर्वाक्यैस्तत्त्वतः कार्य्यवत्तया। ८२१०
प्रसादयित्वा वक्ष्यामि यन्नः कार्य्यं द्विजोत्तमाः। अथवाऽहं परित्यक्तो भवद्भिर्द्वेषकारणात्।
ऋत्विजोऽन्यान् गमिष्यामि याजनार्थं द्विजोत्तमाः। एतावदुक्त्वा वचनं विरराम स पार्थिवः।
यदा न शेकू राजानं याजनार्थं परन्तपं। ततस्ते याजकाः क्रुद्धास्तमूचुर्नृपसत्तमं।
तव कर्म्माण्यजस्रं वै वर्त्तन्ते पार्थिवोत्तम। ततो वयं परिश्रान्ताः सततं कर्म्मवाहिनः।
श्रमादस्मात्परिश्रान्तान् स त्वं त्यक्तुमर्हसि। बुद्धिमोहं समास्थाय त्वरासम्भावितोऽनघ। ८२१५
गच्छ रुद्रसकाशं त्वं स हि त्वां याजयिष्यति। साधिक्षेपं वचः श्रुत्वा संक्रुद्धः श्वेतकिर्नृपः।
कैलासं पर्व्वतं गत्वा तप उग्रं समास्थितः। आराधयन्महादेवं नियतः संशितव्रतः। उपवासपरो राजन् दीर्घकालमतिष्ठत।
कदाचिद्द्वादशे काले कदाचिदपि षोडशे। आहारमकरोद्राजा मूलानि च फलानि च।
ऊर्द्ध्वबाहुस्त्वनिमिषस्तिष्ठन् स्थाणुरिवाचलः। षण्मासानभवद्राजा श्वेतकिः सुसमाहितः।
तं तथा नृपशार्दूलं तप्यमानं महत्तपः। शङ्करः परमप्रीत्या दर्शयामास भारत। ८२२०
प्रीतोऽस्मि नरशार्दूल तपसा ते परन्तप। वरं वृणीष्व भद्रन्ते यं त्वमिच्छसि पार्थिव।
एतच्छ्रुत्वा तु वचनं रुद्रस्यामिततेजसः। प्रणिपत्य महात्मानं राजर्षिः प्रत्यभाषत।
यदि मे भगवान् प्रीतः सर्व्वलोकनमस्कृतः। स्वयं मां देवदेवेश याजयस्व सुरेश्वर।
एतच्छ्रुत्वा तु वचनं राज्ञा तेन प्रभाषितं। उवाच भगवान् प्रीतः स्मितपूर्व्वमिदं वचः।
नास्माकमेतद्विषये वर्त्तते याजनं प्रति। त्वया च सुमहत्तप्तं तपो राजन्वरार्थिना। ८२२५
याजयिष्यामि राजंस्त्वां समयेन परन्तप। रुद्र उवाच। समा द्वादश राजेन्द्र ब्रह्मचारी समाहितः। सततं त्वाज्यधाराभिर्य-
दि तर्पयसेऽनलं।
कामं प्रार्थयसे यं त्वमत्तः प्राप्स्यसि तं नृप। एवमुक्तस्तु रुद्रेण श्वेतकिर्मनुजाधिपः।
तथा चचार तत्सर्व्वं यथोक्तं शूलपाणिना। पूर्णे तु द्वादशे वर्षे पुनरायान्महेश्वरं।
दृष्ट्वैव च स राजानं शङ्करो लोकभावनः। उवाच परमप्रीतः श्वेतकिं नृपसत्तमं।
तोषितोऽहं नृपश्रेष्ठ त्वयेहानेन कर्म्मणा। याजनं ब्राह्मणानान्तु विधिदृष्टं परन्तप। ८२३०
अतोऽहं त्वां स्वयं नाद्य याजयामि परन्तप।
ममांशस्तु क्षितितले महाभागो द्विजोत्तमः। दुर्व्वासा इति विख्यातः स हि त्वां याजयिष्यति।
मन्नियोगान्महातेजाः सम्भाराः सम्भ्रियन्तु ते। एतच्छ्रुत्वा तु वचनं रुद्रेण समुदाहृतं।
स्वपुरं पुनरागम्य सम्भारान् पुनरार्ज्जयत्। ततः सम्भृतसम्भारो भूयो रुद्रमुपागमत्।
सम्भृता मम सम्भाराः सर्व्वोपकरणानि च। त्वत्प्रसादान्महादेव श्वो मे दीक्षा भवेदिति। ८२३५

एतच्छ्रुत्वा तु वचनं तस्य राज्ञो महात्मनः । दुर्व्वाससं समाहूय रुद्रो वचनमब्रवीत् ।
एष राजा महाभागः श्वेतकिर्द्विजसत्तम । एनं याजय विप्रेन्द्र मन्नियोगेन भूमिपं ।
बाढमित्येव वचनं रुद्रं त्वृषिरुवाच ह । ततः सत्रं समभवत्तस्य राज्ञो महात्मनः ।
यथाकामं यथोक्तञ्च सर्व्वं सुबहुदक्षिणं । तस्मिन् परिसमाप्ते तु राज्ञः सत्रे महात्मनः ।
दुर्व्वाससाऽभ्यनुज्ञाता विप्रतस्थुः स्म याजकाः । ये तत्र दीक्षिताः सर्व्वे सदस्याश्च महौजसः । ८२४०
सोऽपि राजन्महाभागः स्वपुरं प्राविशत्तदा । ततो भगवतो वह्नेर्व्विकारः समजायत ।
तेजसा विप्रहीणस्य ग्लानिश्चैनं समाविशत् । स लक्षयित्वा चात्मानं तेजोहीनं-हुताशनः ।
जगाम सदनं पुण्यं ब्रह्मणो लोकपूजितं । तत्र ब्रह्माणमासीनमिदं वचनमब्रवीत् ।
तेजसा विप्रहीणोऽस्मि बलेन च जगत्पते । इच्छेयं त्वत्प्रसादेन चात्मनः प्रकृतिं स्थिरां ।
एतच्छ्रुत्वा हुतवहाद्भगवान् सर्व्वलोककृत् । हव्यवाहमिदं वाक्यमुवाच प्रहसन्निव । ८२४५
त्वया द्वादश वर्षाणि वसोर्द्धाराहुतं हविः । उपयुक्तं महाभाग तेन त्वां ग्लानिराविशत् ।
तेजसा विप्रहीणत्वात्सहसा हव्यवाहन । मागमस्त्वं यथा वह्ने प्रकृतिस्थो भविष्यसि ।
पुरा देवनियोगेन यत्त्वया भस्मसात्कृतं । आलयं देवशत्रूणां सुघोरं खाण्डवं वनं ।
तत्र सर्व्वाणि सत्त्वानि निवसन्ति विभावसो । तेषां त्वं मेदसा तृप्तः प्रकृतिस्थो भविष्यसि ।
गच्छ शीघ्रं प्रदग्धुं त्वं ततो मोक्ष्यसि किल्बिषात् । एतच्छ्रुत्वा तु वचनं परमेष्ठिमुखाच्च्युतं । ८२५०
उत्तमं जवमास्थाय प्रदुद्राव हुताशनः । आगम्य खाण्डवं दावमुत्तमं जवमास्थितः । सहसा प्राज्वलच्चाग्निः क्रुद्धो वायुसमीरितः ।
प्रदीप्तं खाण्डवं दृष्ट्वा ये स्युस्तत्र निवासिनः । परमं यत्नमातिष्ठन् पावकस्य प्रशान्तये ।
करैस्तु करिणः शीघ्रं जलमादाय सत्वराः । सिषिचुः पावकं क्रुद्धाः शतशोऽथ सहस्रशः ।
बहुशीर्षास्ततो नागाः शिरोभिर्जलसन्ततिं । मुमुचुः पावकाभ्याशे सत्वराः क्रोधमूर्च्छिताः ।
तथैवान्यानि सत्त्वानि नानाप्रहरणोद्यमैः । विलयं पावकं शीघ्रमनयन् भरतर्षभ । ८२५५
अनेन तु प्रकारेण भूयोभूयश्च प्रज्वलन् । सप्तकृत्वः प्रशमितः खाण्डवे हव्यवाहनः ।
इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि अग्निपराभवे चतुर्विंशत्यधिकद्विशततोऽध्यायः ॥ २२३ ॥
॥ वैशम्पायन उवाच ॥ स तु नैराश्यमापन्नः सदा ग्लानिसमन्वितः । पितामहमुपागच्छत्संक्रुद्धो हव्यवाहनः ।
तच्च सर्व्वं यथान्यायं ब्रह्मणे स न्यवेदयत् । उवाच चैनं भगवान्मुहूर्त्तं स विचिन्त्य तु ।
उपायः परिदृष्टो मे यथा त्वं धक्ष्यसेऽनघ । खाण्डवं दावमद्यैव मिषतोऽस्य शचीपतेः ।
नरनारायणौ यौ तौ पूर्व्वदेवौ विभावसो । संप्राप्तौ मानुषे लोके कार्य्यार्थं हि दिवौकसां । ८२६०
अर्ज्जुनं वासुदेवञ्च यौ तौ लोकोऽभिमन्यते । तावेतौ सहितावेहि खाण्डवस्य समीपतः ।
तौ त्वं याचस्व साहाय्ये दाहार्थं खाण्डवस्य च । ततो धक्ष्यसि तं दावं रक्षितं त्रिदशैरपि ।
तौ तु सत्त्वानि सर्व्वाणि यत्नतो वारयिष्यतः । देवराजञ्च सहितौ तत्र मे नास्ति संशयः ।

एतच्छ्रुत्वा तु वचनं त्वरितो हव्यवाहनः। कृष्णपार्थावुपागम्य समर्थं त्वभ्यभाषत।
तत्ते कथितवानस्मि पूर्व्वमेव नृपोत्तम। तच्छ्रुत्वा वचनं त्वग्नेर्बीभत्सुर्जातवेदसं। ८१९५
अब्रवीन्नृपशार्दूल तत्कालसदृशं वचः। दिधक्षुं खाण्डवं दावमकामस्य शतक्रतोः।
॥ अर्जुन उवाच ॥ उत्तमास्त्राणि मे सन्ति दिव्यानि च बहूनि च। यैरहं शक्नुयां योद्धुमपि वज्रधरान् बहून्।
धनुर्मे नास्ति भगवन् बाहुवीर्य्येण संमितं। कुर्व्वतः समरे यत्नं वेगं यद्विषहेन्मम।
शरैश्च मेऽर्थो बहुभिरक्षयैः क्षिप्रमस्यतः। नहि वोढुं रथः शक्तः शरान्मम यथेप्सितान्।
अश्वांश्च दिव्यानिच्छेयं पाण्डरान् वातरंहसः। रथञ्च मेघनिर्घोषं सूर्य्यप्रतिमतेजसं। ८२००
तथा कृष्णस्य वीर्य्येण नायुधं विद्यते समं। येन नागान् पिशाचांश्च निहन्यान्माधवो रणे।
उपायं कर्म्मसिद्धौ च भगवन्वक्तुमर्हसि। निवारयेयं येनेन्द्रं वर्षमाणं महावने।
पौरुषेण तु यत्कार्य्यं तत्कर्त्तारौ स्व पावक। करणानि समर्थानि भगवन् दातुमर्हसि।
इत्यादिपर्व्वणि खाण्डवदाहपर्व्वणि अर्ज्जुनाग्निसंवादे चतुर्व्विंशत्यधिकद्विशततमोऽध्यायः॥ २२४ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्तः स भगवान् धूमकेतुर्हुताशनः। चिन्तयामास वरुणं लोकपालं दिदृक्षया।
आदित्यमुदके देवं निवसन्तं जलेश्वरं। स च तच्चिन्तितं ज्ञात्वा दर्शयामास पावकं। ८२०५
तमब्रवीद्धूमकेतुः प्रतिपूज्य जलेश्वरं। चतुर्थं लोकपालानां देवदेवं सनातनं।
सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते। तत्प्रयच्छोभयं शीघ्रं रथञ्च कपिलक्षणं।
कार्य्यञ्च सुमहत्पार्थो गाण्डीवेन करिष्यति। चक्रेण वासुदेवश्च तन्ममाद्य प्रदीयतां।
ददानीत्येव वरुणः पावकं प्रत्यभाषत। तदद्भुतं महावीर्य्यं यशःकीर्त्तिविवर्धनं।
सर्व्वशस्त्रैरनाधृष्यं सर्व्वशस्त्रप्रमाथि च। सर्व्वायुधमहामात्रं परसैन्यप्रधर्षणं। ८२१०
एकं शतसहस्रेण संमितं राष्ट्रवर्धनं। चित्रमुच्चावचैर्व्वर्णैः शोभितं श्लक्ष्णमव्रणं।
देवदानवगन्धर्व्वैः पूजितं शाश्वतीः समाः। प्रादाच्चैव धनूरत्नमक्षय्यौ च महेषुधी।
रथञ्च दिव्याश्वयुजं कपिप्रवरकेतनं। उपेतं राजतैरश्वैर्गान्धर्व्वैर्हेममालिभिः।
पाण्डराभ्रप्रतीकाशैर्मनोवायुसमैर्जवे। सर्व्वोपकरणैर्युक्तमजय्यं देवदानवैः।
भानुमन्तं महाघोषं सर्व्वरत्नमनोरमं। ससर्ज्ज यं सुतपसा भौमनो भुवनप्रभुः। ८२१५
प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव। यं स्म सोमः समारुह्य दानवानजयत्प्रभुः।
नवमेघप्रतीकाशं ज्वलन्तमिव च श्रिया। आश्रितौ तौ रथश्रेष्ठं शक्रायुधसमावुभौ।
तापनीया सुरुचिरा ध्वजयष्टिरनुत्तमा। तस्यान्तु वानरो दिव्यः सिंहशार्दूलकेतनः।
दिधक्षन्निव तत्र स्म संस्थितो मूर्द्ध्न्यशोभत। ध्वजे भूतानि तत्रासन्विविधानि महान्ति च।
नादेन रिपुसैन्यानां श्रुत्वा संज्ञा प्रणश्यति। स तं नानापताकाभिः शोभितं रथसत्तमं। प्रदक्षिणमुपावृत्य दैवतेभ्यः प्रणम्य च। ८२२०
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रकः। आरुरोह तदा पार्थो विमानं सुकृती यथा।

तच्च दिव्यं धनुःश्रेष्ठं ब्रह्मणा निर्म्मितं पुरा। गाण्डीवमुपसंगृह्य बभूव मुदितोऽर्जुनः।
हुताशनं पुरस्कृत्य ततस्तदपि वीर्य्यवान्। जग्राह बलमास्थाय ज्यया च युयुजे धनुः।
मौर्व्यान्तु योज्यमानायां बलिना पाण्डवेन ह। येऽशृण्वन् कूजितं तत्र तेषां वै व्यथितं मनः।
लब्ध्वा रथं धनुश्चैव तथाऽक्षय्ये महेषुधी। बभूव कल्यः कौन्तेयः प्रहृष्टः सह्यकर्म्मणि। ८१९५
वज्रनाभं ततश्चक्रं ददौ कृष्णाय पावकः। आग्नेयमस्त्रं दयितं स च कल्योऽभवत्तदा।
अब्रवीत्पावकश्चैवमेतेन मधुसूदन। अमानुषानपि रणे जेष्यसि त्वमसंशयं।
अनेन तु मनुष्याणां देवानामपि चाहवे। रक्षःपिशाचदैत्यानां नागानाञ्चाधिकस्तथा।
भविष्यसि न सन्देहः प्रवरोऽपि निबर्हणे। क्षिप्तं क्षिप्तं रणे चैव त्वया माधव शत्रुषु। हत्वाऽप्रतिहतं संख्ये पाणिमेष्यति ते पुनः।
वरुणश्च ददौ तस्मै गदामशनिनिःस्वनां। दैत्यान्तकरणीं घोरां नाम्ना कौमोदकीं प्रभुः। ८२००
ततः पावकमब्रूतां प्रहृष्टावर्जुनाच्युतौ। कृतास्त्रौ शस्त्रसम्पन्नौ रथिनौ ध्वजिनावपि।
कल्यौ स्वो भगवन्योद्धुमपि सर्व्वैः सुरासुरैः। किं पुनर्व्वज्रिणैकेन पन्नगार्थे युयुत्सुना।
॥ अर्जुन उवाच ॥ चक्रपाणिर्हृषीकेशो विचरन् युधि वीर्य्यवान्। चक्रेण भस्मसात्सर्व्वं विसृष्टेन तु वीर्य्यवान्।
त्रिषु लोकेषु तन्नास्ति यन्न कुर्य्याज्जनार्द्दनः।
गाण्डीवं धनुरादाय तथाऽक्षय्ये महेषुधी। अहमप्युत्सहे लोकान् विजेतुं युधि पावक। ८२०५
सर्व्वतः परिवार्य्यैव दावमेतं महाप्रभो। कामं सम्प्रज्वलाद्यैव कल्यौ स्वः सह्यकर्म्मणि।
॥ वैशम्पायन उवाच ॥ एवमुक्तः स भगवान् दाशार्हेणार्जुनेन च। तैजसं रूपमास्थाय दावं दग्धुं प्रचक्रमे।
सर्व्वतः परिवार्य्याथ सप्तार्चिर्ज्ज्वलनस्तथा। ददाह खाण्डवं दावं युगान्तमिव दर्शयन्।
प्रतिगृह्य समाविश्य तद्वनं भरतर्षभ। मेघस्तनितनिर्घोषः सर्व्वभूतान्यकम्पयत्।
दह्यतस्तस्य च बभौ रूपं दावस्य भारत। मेरोरिव नगेन्द्रस्य कीर्णस्यांशुमतोंऽशुभिः। ८२१०
इत्यादिपर्व्वणि खाण्डवदाहनपर्व्वणि खाण्डवदाहे पञ्चविंशत्यधिकद्विशतोऽध्यायः ॥ २२५ ॥
॥ वैशम्पायन उवाच ॥ तौ रथाभ्यां रथश्रेष्ठौ दावस्योभयतःस्थितौ। दिक्षु सर्व्वासु भूतानां चक्राते कदनं महत्।
यत्र यत्र च दृश्यन्ते प्राणिनः खाण्डवालयाः। पलायन्तः प्रवीरौ तौ तत्र तत्राभ्यधावतां।
छिद्रं न स्म प्रपश्यन्ति रथयोराशुचारिणोः। आविद्धावेव दृश्येते रथिनौ तौ रथोत्तमौ।
खाण्डवे दह्यमाने तु भूतानि शतसंघशः। उत्पेतुर्भैरवान्नादान् विनदन्तः समन्ततः।
दग्धैकदेशा बहवो निष्टप्ताश्च तथा परे। स्फुटिताक्षा विशीर्णाश्च विप्लुताश्च तथा परे। ८२१५
समालिङ्ग्य सुतानन्ये पितॄन्भ्रातॄनथापरे। त्यक्तुं न शेकुः स्नेहेन तत्रैव निधनं गताः।
सन्दष्टदशनाश्चान्ये समुत्पेतुरनेकशः। ततस्तेऽतीव घूर्णन्तः पुनरग्नौ प्रपेदिरे।
दग्धपक्षाक्षिचरणा विचेष्टन्तो महीतले। तत्र तत्र स्म दृश्यन्ते विनश्यन्तः शरीरिणः।
जलाशयेषु तप्तेषु क्वाथ्यमानेषु वह्निना। गतसत्त्वाः स्म दृश्यन्ते कूर्म्ममत्स्याः समन्ततः।

शरीरैरपरैर्द्दीप्तै र्देहवन्त इवाग्नयः। अदह्यन्त वने तत्र प्राणिनः प्राणसङ्क्षये। ८२२०
कांश्चिदुत्पततः पार्थः शरैः सञ्छिद्य खण्डशः। पातयामास विहगान्प्रदीप्ते वसुवर्त्मनि।
ते शराचितसर्व्वाङ्गा निनदन्तो महारवान्। ऊर्द्ध्वमुत्पत्य वेगेन निपेतुः खाण्डवे पुनः।
शरैरभ्याहतानाञ्च सङ्घशः स्म वनौकसां। विरावः शुश्रुवे घोरः समुद्रस्येव मथ्यतः।
वह्नेश्चापि प्रदीप्तस्य खमुत्पेतुर्महार्च्चिषः। जनयामासुरुद्वेगं सुमहान्तं दिवौकसां।
तेनार्च्चिषा सुसन्तप्ता देवाः सर्षिपुरोगमाः। ततो जग्मुर्महात्मानः सर्व्व एव दिवौकसः। शतक्रतुं सहस्राक्षं देवेशमसुरार्द्दनं। ८२२५
॥ देवा ऊचुः॥ किन्त्विमे मानवाः सर्व्वे दह्यन्ते चित्रभानुना। कच्चिन्न सङ्क्षयः प्राप्तो लोकानाममरेश्वर।
॥ वैशम्पायन उवाच॥ तच्छ्रुत्वा वृत्रहा तेभ्यः स्वयमेवान्ववेक्ष्य च। खाण्डवस्य विमोक्षार्थं प्रययौ हरिवाहनः।
महता रथवृन्देन नानारूपेण वासवः। आकाशं समवाकीर्य्य प्रववर्ष सुरेश्वरः।
ततोऽक्षमात्रा व्यसृजन् धाराः शतसहस्रशः। चोदिता देवराजेन जलदाः खाण्डवं प्रति।
असंप्राप्तास्तु ता धारास्तेजसा जातवेदसः। ख एव समशुष्यन्त न काश्चित्पावकं गताः। ८२३०
ततो नमुचिहा क्रुद्धो भृशमर्च्चिष्मतस्तदा। पुनरेव महामेघैरम्भांसि व्यसृजद्बहु।
अर्च्चिर्द्धाराभिसम्बद्धं धूमविद्युत्समाकुलं। बभूव तद्वनं घोरं स्तनयित्नुसमाकुलं।
इत्यादिपर्व्वणि खाण्डवदाहनपर्व्वणि इन्द्रक्रोधे षड्विंशत्यधिकद्विशततोऽध्यायः॥ २२६॥
॥ वैशम्पायन उवाच॥ तस्याथ वर्षतो वारि पाण्डवः प्रत्यवारयत्। शरवर्षेण वीभत्सुरुत्तमास्त्राणि दर्शयन्।
खाण्डवञ्च वनं सर्व्वं पाण्डवो बहुभिः शरैः। प्राच्छादयदमेयात्मा नीहारेणेव चन्द्रमाः।
न च स्म किञ्चिच्छक्नोति भूतं निश्चरितुं ततः। सञ्छाद्यमाने खे बाणैरस्यता सव्यसाचिना। ८२३५
तक्षकस्तु न तत्रासीन्नागराजो महाबलः। दह्यमाने वने तस्मिन् कुरुक्षेत्रं गतो हि सः।
अश्वसेनोऽभवत्तत्र तक्षकस्य सुतो बली। स यत्नमकरोत्तीव्रं मोक्षार्थं जातवेदसः।
न शशाक स निर्गन्तुं निरुद्धोऽर्जुनपत्रिभिः। मोक्षयामास तं माता निगीर्य्य भुजगात्मजा।
तस्य पूर्व्वं शिरोग्रस्तं पुच्छमस्य निगीर्य्यते। निगीर्य्यमाणा साऽक्रामत्सुतं नागी मुमुक्षया।
तस्याः शरेण तीक्ष्णेन पृथुधारेण पाण्डवः। शिरश्चिच्छेद गच्छन्त्यास्तामपश्यच्छचीपतिः। ८२४०
तं मुमोचयिषुर्व्वज्री वातवर्षेण पाण्डवं। मोहयामास तत्कालमश्वसेनस्त्वमुच्यत।
ताञ्च मायां तदा दृष्ट्वा घोरां नागेन वञ्चितः। द्विधा त्रिधा च खगतान् प्राणिनः पाण्डवोऽच्छिनत्।
शशाप तञ्च संक्रुद्धो वीभत्सुर्जिह्मगामिनं। पावको वासुदेवश्चाप्यप्रतिष्ठो भविष्यसि।
ततो जिष्णुः सहस्राक्षं खं वितत्याशुगैः शरैः। योधयामास संक्रुद्धो वञ्चनां तामनुस्मरन्।
देवराजोऽपि तं दृष्ट्वा संरब्धं समरेऽर्जुनं। स्वमस्त्रमसृजत्तीव्रं छादयित्वाऽखिलं नभः। ८२४५
ततो वायुर्महाघोषः क्षोभयन् सर्व्वसागरान्। वियत्स्थो जनयन् मेघान् जलधारासमाकुलान्।
ततोऽशनिमुचो घोरांस्तडित्स्तनितनिःस्वनान्। तद्विघातार्थमसृजदर्जुनोऽप्यस्त्रमुत्तमं।
वायव्यमभिमन्त्र्याथ प्रतिपत्तिविशारदः। तेनेन्द्राशनिमेघानां वीर्य्यौजस्तद्विनाशितं।

जलधाराश्च ताः शोषं जग्मुर्नैव च विद्युतः । क्षणेन चाभवद्व्योम सम्प्रशान्तरजस्तमः ।
सुखशीतानिलवहं प्रकृतिस्थार्कमण्डलं । निष्प्रतीकारहृष्टश्च हुतभुग्विविधाकृतिः । ८१५०
सिच्यमानो वसौघैस्तैः प्राणिनां देहनिःसृतैः । प्रजज्वालाथ सोऽर्च्चिष्मान् स्वनादैः पूरयन् जगत् ।
कृष्णाभ्यां रक्षितं दृष्ट्वा तच्च दावमहङ्कृताः । खमुत्पेतुर्महाराज सुपर्णाद्याः पतत्त्रिणः ।
गरुत्मान् वज्रसदृशैः पक्षतुण्डनखैस्तथा । प्रहर्तुकामो न्यपतदाकाशात् कृष्णपाण्डवौ ।
तथैवोरगसंघाताः पाण्डवस्य समीपतः । उत्सृजन्तो विषं घोरं निष्पेतुर्ज्वलिताननाः ।
तांश्चकर्त्त शरैः पार्थः सरोषाग्निसमुक्षितैः । विविशुश्चापि तं दीप्तं देहाभावाय पावकं । ८१५५
ततोऽसुराः सगन्धर्व्वा यक्षराक्षसपन्नगाः । उत्पेतुर्नादमतुलमुत्सृजन्तो रणार्थिनः ।
अयःकणपचक्राश्मभुशुण्ड्युद्यतबाहवः । कृष्णपार्थौ जिघांसन्तः क्रोधसंमूर्च्छितौजसः ।
तेषामतिव्याहरतां शस्त्रवर्षञ्च मुञ्चतां । प्रममाथोत्तमाङ्गानि वीभत्सुर्निशितैः शरैः ।
कृष्णश्च सुमहातेजाश्चक्रेणारिविनाशनः । दैत्यदानवसंघानां चकार कदनं महत् ।
अथापरे शरैर्विद्धाश्चक्रवेगेरितास्तथा । वेलामिव समासाद्य व्यतिष्ठन्नमितौजसः । ८१६०
ततः शक्रोऽतिसंक्रुद्धस्त्रिदशानां महेश्वरः । पाण्डरं गजमास्थाय तावुभौ समुपाद्रवत् ।
वेगेनाशनिमादाय वज्रमस्त्रञ्च सोऽसृजत् । हतावेताविति प्राह सुरानसुरसूदनः ।
ततः समुद्यतां दृष्ट्वा देवेन्द्रेण महाशनिं । जगृहुः सर्व्वशस्त्राणि स्वानि स्वानि सुरास्तथा ।
कालदण्डं यमो राजन् गदाञ्चैव धनेश्वरः । पाशांश्च तत्र वरुणो विचित्राञ्च तथाऽशनिं ।
स्कन्दः शक्तिं समादाय तस्थौ मेरुरिवाचलः । ओषधीर्दीप्यमानाश्च जगृहातेऽश्विनावपि । ८१६५
जगृहे च धनुर्द्धाता मुषलन्तु जयस्तथा । पर्व्वतञ्चापि जग्राह क्रुद्धस्त्वष्टा महाबलः ।
अंशस्तु शक्तिं जग्राह मृत्युर्देवः परश्वधं । प्रगृह्य परिघं घोरं विचचारार्य्यमा अपि ।
मित्रश्च क्षुरपर्य्यन्तं चक्रमादाय तस्थिवान् । पूषा भगश्च संक्रुद्धः सविता च विशाम्पते ।
आत्तकार्मुकनिस्त्रिंशाः कृष्णपार्थौ प्रदुद्रुवुः । रुद्राश्च वसवश्चैव मरुतश्च महाबलाः ।
विश्वेदेवास्तथा साध्या दीप्यमानाः स्वतेजसा । एते चान्ये च बहवो देवास्तौ पुरुषोत्तमौ । कृष्णपार्थौ जिघांसन्तः प्रतीयुर्व्विविधायुधाः । ८१७०
तत्राद्भुतान्यदृश्यन्त निमित्तानि महाहवे । युगान्तसमरूपाणि भूतसंमोहनानि च ।
तथा दृष्ट्वा सुसंरब्धं शक्रं देवैः सहाच्युतौ । अभीतौ युधि दुर्द्धर्षौ तस्थतुः सज्यकार्मुकौ ।
आगच्छतस्ततो देवानुभौ युद्धविशारदौ । व्यताडयेतां संक्रुद्धौ शरैर्व्वज्रोपमैस्तदा ।
असकृद्भग्नसङ्कल्पाः सुराश्च बहुशः कृताः । भयाद्रणं परित्यज्य शक्रमेवाभिशिश्रियुः ।
दृष्ट्वा निवारितान् देवान् माधवेनार्जुनेन च । आश्चर्य्यमगमंस्तत्र मुनयो नभसि स्थिताः । ८१७५
शक्रश्चापि तयोर्वीर्य्यमुपलभ्यासकृद्रणे । बभूव परमप्रीतो भूयश्चैतावयोधयत् ।
ततोऽश्मवर्षं सुमहद्व्यसृजत्पाकशासनः । भूय एव तदा वीर्य्यं जिज्ञासुः सव्यसाचिनः ।

तच्छरैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षितः। विफलं क्रियमाणं तत्समवेक्ष्य शतक्रतुः।
भूयः संवर्द्धयामास तद्वर्षं पाकशासनः।
सोऽश्मवर्षं महावेगैरिषुभिः पाकशासनिः। विलयं गमयामास हर्षयन्पितरं तथा। [८२८०]
तत उत्पाद्य पाणिभ्यां मन्दराच्छिखरं महत्। सद्रुमं व्यसृजच्छक्रो जिघांसुः पाण्डुनन्दनं।
ततोऽर्जुनो वेगवद्भिर्ज्वलिताग्रैरजिह्मगैः। शरैर्व्विध्वंसयामास गिरेः शृङ्गं सहस्रधा।
गिरेर्व्विशीर्य्यमाणस्य तस्य रूपं तदा बभौ। सार्कचन्द्रग्रहस्येव नभसः परिशीर्य्यतः।
तेनाभिपतता दावं शैलेन महता भृशं। शृङ्गेण निहतास्तत्र प्राणिनः खाण्डवालयाः।
इत्यादिपर्व्वणि खाण्डवदाहनपर्व्वणि देवकृष्णार्ज्जुनयुद्धे सप्तविंशत्यधिकद्विशततोऽध्यायः॥ २२७ ॥
॥ वैशम्पायन उवाच॥ तथा शैलनिपातेन भीषिताः खाण्डवालयाः। दानवा राक्षसा नागास्तरक्ष्वृक्षवनौकसः। [८२८५]
द्विपाः प्रभिन्नाः शार्दूलाः सिंहाः केशरिणस्तथा। समुद्विग्ना विससृपुस्तथान्या भूतजातयः।
तं दावं समुदैक्षन्त कृष्णौ चाभ्युद्यतायुधौ। उत्पातनादशब्देन सन्त्रासित इव स्थिताः।
ते वनं प्रसमीक्ष्याथ दह्यमानमनेकधा। कृष्णमभ्युद्यतास्त्रञ्च नादं मुमुचुरुल्वणं।
तेन नादेन रौद्रेण नादेन च विभावसोः। ररास गगनं कृत्स्नमुत्पातजलदैरिव।
ततः कृष्णो महाबाहुः स्वतेजोभास्वरं महत्। चक्रं व्यसृजदत्युग्रं तेषां नाशाय केशवः। [८२९०]
तेनार्त्ता जातयः क्षुद्राः सदानवनिशाचराः। निकृत्ताः शतशः सर्व्वा निपेतुरनलं क्षणात्।
तत्रादृश्यन्त ते दैत्याः कृष्णचक्रविदारिताः। वसारुधिरसंपृक्ताः सन्ध्यायामिव तोयदाः।
पिशाचान्पक्षिणो नागान् पशूंश्चैव सहस्रशः। निघ्नंश्चरति वार्ष्णेयः कालवत्तत्र भारत।
क्षिप्तं क्षिप्तं पुनश्चक्रं कृष्णस्यामित्रघातिनः। छित्वा नैकानि सत्वानि पाणिमेति पुनःपुनः।
तथातु निघ्नतस्तस्य पिशाचोरगराक्षसान्। बभूव रूपमत्युग्रं सर्व्वभूतात्मनस्तदा। [८२९५]
समेतानान्तु सर्व्वेषां देवतानाञ्च सर्व्वशः। विजेता नाभवत्कश्चित्कृष्णपाण्डवयोर्म्मृधे।
तयोर्ब्बलात्परित्रातुं तञ्च दावं यदा सुराः। नाशक्नुवन् शमयितुं तदाऽभूवन् पराङ्मुखाः।
शतक्रतुस्तु संप्रेक्ष्य विमुखानमरांस्तथा। बभूव मुदितो राजन् प्रशंसन् केशवार्जुनौ।
निवृत्तेष्वथ देवेषु वागुवाचाशरीरिणी। शतक्रतुं समाभाष्य महागम्भीरनिस्वना।
न ते सखा संनिहतस्तक्षको भुजगोत्तमः। दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ। [८३००]
न च शक्यौ युधा जेतुं कथञ्चिदपि वासव। वासुदेवार्जुनावेतौ निबोध वचनान्मम।
नरनारायणावेतौ पूर्व्वदेवौ दिविश्रुतौ। भवानप्यभिजानाति यद्वीर्य्यौ यत्पराक्रमौ।
नैतौ शक्यौ दुराधर्षौ विजेतुमजितौ युधि। अपि सर्व्वेषु लोकेषु पुराणावृषिसत्तमौ।
पूजनीयतमावेतावपि सर्व्वैः सुरासुरैः। यक्षराक्षसगन्धर्व्वनरकिन्नरपन्नगैः।
तस्मादितः सुरैः सार्द्धं गन्तुमर्हसि वासव। दिष्टं चाप्यनुपश्यैतत् खाण्डवस्य विनाशनं। [८३०५]
इति वाक्यमुपश्रुत्य तथ्यमित्यमरेश्वरः। क्रोधामर्षौ समुत्सृज्य संप्रतस्थे दिवं तदा।

तं प्रस्थितं महात्मानं समवेक्ष्य दिवौकसः । सहिताः सेनया राजन्ननुजग्मुः पुरन्दरं ।
देवराजं तदा यान्तं सह देवैरवेक्ष्य तु । वासुदेवार्जुनौ वीरौ सिंहनादं विनेदतुः ।
देवराजे गते राजन् प्रहृष्टौ केशवार्जुनौ । निर्विशङ्कं वनं वीरौ दाहयामासतुस्तदा ।
स मारुत इवाभ्राणि नाशयित्वाऽर्जुनः सुरान् । व्यधमच्छरसङ्घातैर्देहिनः खाण्डवालयान् । ८२१०
न च स्म किञ्चिच्छक्नोति भूतं निश्चरितुं ततः । संछिद्यमानमिषुभिरस्यता सव्यसाचिना ।
नाशक्नुवंश्च भूतानि महान्त्यपि रणेऽर्जुनं । निरीक्षितुममोघास्त्रं योद्धुं चापि कुतो रणे ।
शतं चैकेन विव्याध शतेनैकं पतत्रिणा । व्यसवस्तेऽपतन्नग्नौ साक्षात्कालहता इव ।
न चालभन्त ते शर्म रोधःसु विषमेषु च । पितृदेवनिवासेषु सन्तापश्चाप्यजायत ।
भूतसंघाश्च बहवो दीनाश्चक्रुर्महास्वनं । रुरुदुर्वारणाश्चैव तथा मृगतरक्षवः । ८२१५
तेन शब्देन वित्रेसुर्गङ्गोदधिचरा झषाः । विद्याधरगणाश्चैव ये च तत्र वनौकसः ।
न त्वर्जुनं महाबाहो नापि कृष्णं जनार्दनं । निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुतः पुनः ।
एकायनगता येऽपि निष्पेतुस्तत्र केचन । राक्षसा दानवा नागा जघ्ने चक्रेण तान् हरिः ।
ते तु भिन्नशिरोदेहाश्चक्रवेगाद्गतासवः । पेतुरन्ये महाकायाः प्रदीप्ते वसुरेतसि ।
स मांसरुधिरौघैश्च वसाभिश्चापि तर्पितः । उपर्य्याकाशगो भूत्वा विधूमः समपद्यत । ८२२०
दीप्ताक्षो दीप्तजिह्वश्च सम्प्रदीप्तमहाननः । दीप्तोर्द्ध्वकेशः पिङ्गाक्षः पिबन् प्राणभृतां वसां ।
तां स कृष्णार्जुनकृतां सुधां प्राप्य हुताशनः । बभूव मुदितस्तृप्तः परां निर्वृतिमागतः ।
तथाऽसुरं मयं नाम तक्षकस्य निवेशनात् । विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ।
तमग्निः प्रार्थयामास दिधक्षुर्वातसारथिः । शरीरवान् जटी भूत्वा नदन्निव बलाहकः ।
जिघांसुर्वासुदेवस्तं चक्रमुद्यम्य धिष्ठितः । स चक्रमुद्यतं दृष्ट्वा दिधक्षन्तञ्च पावकं । ८२२५
अभिधावार्जुनेत्येवं मयस्त्राहीति चाब्रवीत् । तस्य भीतस्वनं श्रुत्वा माभैरिति धनञ्जयः ।
प्रत्युवाच मयं पार्थो जीवयन्निव भारत । तं न भेतव्यमित्याह मयं पार्थो दयापरः ।
तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयं । न हन्तु मैच्छद्दाशार्हः पावको न ददाह च ।
॥ वैशम्पायन उवाच ॥ तद्वनं पावको धीमान् दिनानि दश पञ्च च । ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात् ।
तस्मिन् वने दह्यमाने षडग्निर्न ददाह च । अश्वसेनं मयञ्चैव चतुरः शार्ङ्गकांस्तथा । ८२३०
इत्यादिपर्व्वणि खाण्डवदाहनपर्व्वणि मयदानवत्राणे अष्टाविंशत्यधिकद्विशतोऽध्यायः ॥ २२८ ॥
॥ जनमेजय उवाच ॥ किमर्थं शार्ङ्गकानग्निर्न ददाह तथागते । तस्मिन्वने दह्यमाने ब्रह्मन्नेतत्प्रचक्ष्व मे ।
अदाहे ह्यश्वसेनस्य दानवस्य मयस्य च । कारणं कीर्त्तितं ब्रह्मन् शार्ङ्गकाणां न कीर्त्तितं ।
तदेतदद्भुतं ब्रह्मन् शार्ङ्गकाणामनामयं । कीर्त्तयस्वाग्निसम्मर्दे कथन्ते न विनाशिताः ।
॥ वैशम्पायन उवाच ॥ यदर्थं शार्ङ्गकानग्निर्न ददाह तथागते । तत्ते सर्व्वं प्रवक्ष्यामि यथा भूतमरिन्दम ।
धर्म्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः । आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः । ८२३५

स मार्गमाश्रितो राजन्नृषीणामूर्द्ध्वरेतसां । स्वाध्यायवान् धर्म्मरतस्तपस्वी विजितेन्द्रियः ।
स गत्वा तपसः पारं देहमुत्सृज्य भारत । जगाम पितृलोकाय न लेभे तत्र तत्फलं ।
स लोकानफलान् दृष्ट्वा तपसा निर्ज्जितानपि । पप्रच्छ धर्म्मराजस्य समीपस्थान् दिवौकसः ।
॥ मन्दपाल उवाच ॥ किमर्थमावृता लोका ममैते तपसार्ज्जिताः । किं मया न कृतं तत्र यस्येदं कर्म्मणः फलं ।
तत्राहं तत्करिष्यामि यदर्थमिदमावृतं । फलमेतस्य तपसः कथयध्वं दिवौकसः । ८२१०
॥ देवा ऊचुः ॥ ऋणिनो मानवा ब्रह्मन् जायन्ते येन तच्छृणु । क्रियाभिर्ब्रह्मचर्य्येण प्रजया च न संशयः ।
तदपाक्रियते सर्व्वं यज्ञेन तपसा सुतैः । तपस्वी यज्ञकृच्चासि न च ते विद्यते प्रजा ।
त इमे प्रसवस्यार्थे तव लोकाः समावृताः । प्रजायस्व ततो लोकानुपभोक्तासि पुष्कलान् ।
पुन्नाम्नो नरकात्पुत्रस्त्रायते पितरं श्रुतिः । तस्मादपत्यसन्ताने यतस्व ब्रह्मसत्तम ।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा मन्दपालस्तु वचस्तेषां दिवौकसां । क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् । ८२१५
स चिन्तयन्नभ्यगच्छत्सुबहुप्रसवान् खगान् । शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् ।
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः । तानपास्य स तत्रैव जगाम लपितां प्रति ।
बालान् सुतानण्डगतान् सह मात्रा मुनिर्व्वने । तस्मिन् गते महाभागे लपितां प्रति भारत ।
अपत्यस्नेहसंयुक्ता जरिता बह्वचिन्तयत् । तेन त्यक्तानसन्त्याज्यानृषीनण्डगतान्वने । न जहौ पुत्रकानार्त्ता जरिता खाण्डवे सुतान् ।
बभार चैतान् सञ्जातान् स्ववृत्त्या स्नेहविक्लवा । ततोऽग्निं खाण्डवं दग्धुमायान्तं दृष्टवानृषिः । मन्दपालश्चरंस्तस्मिन् वने लपितया सह । ८२२०
तं सङ्कल्पं विदित्वाऽग्नेर्ज्ञात्वा पुत्रांश्च बालकान् । सोऽभितुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसं ।
पुत्रान् प्रति वदन् भीतो लोकपालं महौजसं ।
॥ मन्दपाल उवाच ॥ त्वमग्ने सर्व्वलोकानां मुखं त्वमसि हव्यवाट् । त्वमन्तः सर्व्वभूतानां गूढश्चरसि पावक ।
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः । त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ।
त्वया विश्वमिदं सृष्टं वदन्ति परमर्षयः । त्वदृते हि जगत्कृत्स्नं सद्यो नश्येद्धुताशन । ८२२५
तुभ्यं कृत्वा नमो विप्राः स्वकर्म्मविजितां गतिं । गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीं ।
त्वामग्ने जलदानाहुः खे विषक्तान् सविद्युतः । दहन्ति सर्व्वभूतानि त्वत्तो निष्क्रम्य हेतयः ।
जातवेदस्तवैवेदं विश्वं सृष्टं महाद्युते । तवैव कर्म्म विहितं भूतं सर्व्वं चराचरं ।
त्वयापो विहिताः पूर्व्वं त्वयि सर्व्वमिदं जगत् । त्वयि हव्यञ्च कव्यञ्च यथावत्सम्प्रतिष्ठितं ।
त्वमेव दहनो देव त्वं धाता त्वं बृहस्पतिः । त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः । ८२३०
॥ वैशम्पायन उवाच ॥ एवं स्तुतस्तदा तेन मन्दपालेन पावकः । तुतोष तस्य नृपते मुनेरमिततेजसः ।
उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते । तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनं । प्रदहन् खाण्डवं दावं मम पुत्रान् विसर्ज्जय ।

तथेति तत् प्रतिश्रुत्य भगवान् हव्यवाहनः। खाण्डवे तेन कालेन प्रजज्वाल दिधक्षया।

इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि शार्ङ्गकोपाख्याने ऊनत्रिंशदधिकद्विशततोऽध्यायः ॥ २२९ ॥

॥ वैशम्पायन उवाच। ततः प्रज्वलिते वह्नौ शार्ङ्गकास्ते सुदुःखिताः। व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणं।

निशम्य पुत्रकान् बालान् माता तेषां तपस्विनी। जरिता दुःखशोकार्त्ता विललाप सुदुःखिता। ८२९५

॥ जरितोवाच ॥ अयमग्निर्दहन् कक्षमित आयाति भीषणः। जगत्सन्दीपयन् भीमो मम दुःखविवर्द्धनः।

इमे च मां कर्षयन्ति शिशवो मन्दचेतसः। अबर्हाश्चरणैर्हीनाः पूर्व्वेषां नः परायणाः।

त्रासयंश्चायमायाति लेलिहानो महीरुहान्। अजातपक्षाश्च सुता न शक्ताः सरणे मम।

आदाय च न शक्नोमि पुत्रांस्तरितुमात्मना। न च त्यक्तुमहं शक्ता हृदयं दूयतीव मे।

कन्तु जह्यामहं पुत्रं कमादाय व्रजाम्यहं। किन्नु मे स्यात्कृतं कृत्ये किं वा मन्यत पुत्रकाः। ८३००

चिन्तयाना विमोक्षं वो नाधिगच्छामि किञ्चन। छादयिष्यामि वो गात्रैः करिष्ये मरणं सह।

जरितारौ कुलं ह्येतत् ज्येष्ठत्वेन प्रतिष्ठितं। सारिसृक्कः प्रजायेत पितॄणां कुलवर्द्धनः।

स्तम्बमित्रस्तपः कुर्य्यात् द्रोणो ब्रह्मविदाम्वरः। इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा।

कमुपादाय शक्येयं गन्तुं कष्टापदुत्तमा। किन्नु कृत्वा कृतं कार्य्यं भवेदिति च विक्लवा। नापश्यत् स्वधिया मोक्षं स्वसुतानां तदाऽनलात्।

॥ वैशम्पायन उवाच ॥ एवं ब्रुवाणं शार्ङ्गास्ते प्रत्यूचुरथ मातरं। स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट्। ८३०५

अस्मास्विह विनष्टेषु भवितारः सुतास्तव। त्वयि मातर्व्विनष्टायां नातः स्यात् कुलसन्ततिः।

अन्ववेक्ष्यैतदुभयं क्षेमं स्यात् यत्कुलस्य नः। तद्वै कर्त्तुं परः कालो मातरेष भवेत्तव।

मा त्वं सर्व्वविनाशाय स्नेहं कार्षीः सुतेषु नः। न हीदं कर्म्म मोघं स्याल्लोककामस्य नः पितुः।

॥ जरितोवाच ॥ इदमाखोर्व्विलं भूमौ वृक्षस्यास्य समीपतः। तदाविशध्वं त्वरिता वह्नेरत्र न वो भयं।

ततोऽहं पांशुना छिद्रमपिधास्यामि पुत्रकाः। एवं प्रतिकृतं मन्ये ज्वलतः कृष्णवर्त्मनः। ८३१०

तत एष्याम्यतीतेऽग्नौ विहन्तुं पांशुसञ्चयं। रोचतामेष वो वादो मोक्षार्थञ्च हुताशनात्।

शार्ङ्गा ऊचुः। अबर्हान्मांसभूतान्नः क्रव्यादाखुर्व्विनाशयेत्। पश्यमाना भयमिदं प्रवेष्टुं नात्र शक्नुमः।

कथमग्निर्नो न दहेत् कथमाखुर्न नाशयेत्। कथं न स्यात्पिता मोघः कथं माता ध्रियेत नः।

बिल आखोर्व्विनाशः स्यादग्नेराकाशचारिणां। अन्ववेक्ष्यैतदुभयं श्रेयान् दाहो न भक्षणं।

गर्हितं मरणं नः स्यादाखुना भक्षिते बिले। शिष्टादिष्टः परित्यागः शरीरस्य हुताशनात्। ८३१५

इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि जरिताविलापे त्रिंशदधिकद्विशततोऽध्यायः ॥ २३० ॥

॥ जरितोवाच ॥ अस्माद्बिलान्निष्पतितमाखुं श्येनो जहार तं। क्षुद्रं पद्भ्यां गृहीत्वा च यातो नात्र भयं हि वः।

॥ शार्ङ्गा ऊचुः ॥ न हृतं तं वयं विद्मः श्येनेनाखुं कथञ्चन। अन्येऽपि भवितारोऽत्र तेभ्योऽपि भयमेव नः।

संशयो वह्निरागच्छेद्दृष्टं वायोर्निवर्त्तनं। मृत्युर्नो बिलवासिभ्यो बिले स्यान्मात्र संशयः।

निःसंशयात्संशयितो मृत्युर्म्मातर्व्विशिष्यते। चर खे त्वं यथान्यायं पुत्रानाप्स्यसि शोभनान्।

जरितोवाच ॥ अहं वेगेन तं यान्तमद्राक्षं पततांवरं। बिलादाखुं समादाय श्येनं पुत्रा महाबलं। ८३९०

तं पतन्तं महावेगात्त्वरिता पृष्ठतोऽन्वगां। आशिषोऽस्य प्रयुञ्जाना हरतो मूषिकं बिलात्।

यो नो द्वेष्टारमादाय श्येनराज प्रधावसि। भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः।

स यदा भक्षितस्तेन श्येनेनाखुः पतत्रिणा। तदाऽहं तमनुज्ञाप्य प्रत्युपायां पुनर्गृहे।

प्रविशध्वं बिलं पुत्रा विश्रब्धा नास्ति वो भयं। श्येनेन मम पश्यन्त्या हृत आखुर्महात्मना।

॥ शार्ङ्गा ऊचुः ॥ न विद्महे हृतं मातः श्येनेनाखुं कथञ्चन। अविज्ञाय न शक्यामः प्रवेष्टुं विवरं भुवः। ८३९५

॥ जरितोवाच ॥ अहं तमभिजानामि हृतं श्येनेन मूषिकं। नास्ति वोऽत्र भयं पुत्राः क्रियतां वचनं मम।

॥ शार्ङ्गा ऊचुः ॥ न त्वं मिथ्योपचारेण मोक्षयेथा भयाद्धि नः। समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत्।

नचोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयं। पीड्यमाना बिभर्ष्यस्मान् का सती के वयं तव।

तरुणी दर्शनीयाऽसि समर्था भर्त्तुरेषणे। अनुगच्छ पतिं मातः पुत्रानाप्स्यसि शोभनान्।

वयमग्निं समाविश्य लोकानाप्स्याम शोभनान्। अथास्मान् न दहेदग्निरायास्त्वं पुनरेव नः। ८४००

॥ वैशम्पायन उवाच ॥ एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे। जगाम त्वरिता देशं क्षेममग्नेरनाश्रयं।

ततस्तीक्ष्णार्चिरभ्यागाज्ज्वलितो हव्यवाहनः। यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः।

ततस्तं ज्वलितं दृष्ट्वा ज्वलनं ते विहङ्गमाः। जरितारिस्ततो वाक्यं श्रावयामास पावकं।

इत्यादिपर्व्वणि खाण्डवदहनपर्व्वणि शार्ङ्गकोपाख्याने एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

॥ जरितारिरुवाच ॥ पुरतः कृच्छ्रकालस्य धीमान् जागर्त्ति पूरुषः। स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित्।

यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते। स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत्। ८४०५

॥ सारिसृक्क उवाच ॥ धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः। प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः।

॥ स्तम्बमित्र उवाच ॥ ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः। ज्येष्ठश्चेन्न प्रजानाति कनीयान् किं करिष्यति।

॥ द्रोण उवाच ॥ हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयं। सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति।

॥ वैशम्पायन उवाच ॥ एवं सम्भाष्य तेऽन्योऽन्यं मन्दपालस्य पुत्रकाः। तुष्टुवुः प्रयता भूत्वा यथाऽग्निं शृणु पार्थिव।

॥ जरितारिरुवाच ॥ आत्माऽसि वायोर्ज्वलन शरीरमसि वीरुधां। योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः। ८४१०

ऊर्द्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा। अर्च्चिषस्ते महावीर्य्य रश्मयः सवितुर्यथा।

॥ सारिसृक्क उवाच ॥ माता प्रनष्टा पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो। न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मांस्त्राहि बालांस्त्वमग्ने।

यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः। तेन नः परिपाहि त्वमार्त्तान्नः शरणैषिणः।

त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव। ऋषीनस्मान् बालकान् पालयस्व परेणास्मान् प्रैहि वै हव्यवाह।

॥ स्तम्बमित्र उवाच ॥ सर्व्वमग्ने त्वमेवैकस्त्वयि सर्व्वमिदं जगत्। त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च। ८४१५

त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः। मनीषिणस्त्वां जानन्ति बहुधा चैकधाऽपि च।

सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह काले प्राप्ते पचसि पुनः समिद्धः। त्वं सर्व्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा।

॥ द्रोण उवाच ॥ त्वमग्ने प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते । नित्यं प्रवृद्धः पचसि त्वयि सर्व्वं प्रतिष्ठितं ।
सूर्य्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजातान् रसांश्च । विश्वानादाय पुनरुत्सृज्य काले दृष्ट्वा वृष्ट्या भावयसीह शुक्र ।
त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः । जायन्ते पुष्करिण्यश्च समुद्रश्च महोदधिः । ८४२०
इदं वै सद्म तिग्मांशो वरुणस्य परायणं । शिवस्त्राता भवास्माकं माऽस्मानद्य विनाशय ।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन । परेण प्रैहि मुञ्चास्मान् सागरस्य गृहानिव ।
॥ वैशम्पायन उवाच ॥ एवमुक्तो जातवेदा द्रोणेन ब्रह्मवादिना । द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ।
॥ अग्निरुवाच ॥ ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया । ईप्सितं ते करिष्यामि न च ते विद्यते भयं ।
मन्दपालेन वै यूयं मम पूर्व्वं निवेदिताः । वर्जयेः पुत्रकान्मह्यं दहन् दावमिति स्म ह । ८४२५
तस्य तद्वचनं द्रोण त्वया यच्चेह भाषितं । उभयं मे गरीयस्तु ब्रूहि किं करवाणि ते । भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मंस्तो
त्रेण सत्तम ।
॥ द्रोण उवाच ॥ इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः । एतान् कुरुष्व दंष्ट्रांस्त्वं हुताशन सबान्धवान् ।
तथा तत्कृतवानग्निरभ्यनुज्ञाय शार्ङ्गकान् । ददाह खाण्डवं दावं समिद्धो जनमेजय ।
इत्यादिपर्व्वणि खाण्डवदाहनपर्व्वणि शार्ङ्गोपाख्याने द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥
॥ वैशम्पायन उवाच ॥ मन्दपालोऽपि कौरव्य चिन्तयामास पुत्रकान् । उक्त्वाऽपि च स तिग्मांशुं नैव शर्म्माधिगच्छति ।
स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत् । कथं न्वशक्ताः शरणे लपिते मम पुत्रकाः । ८४३०
वर्द्धमाने हुतवहे वाते चाशु प्रवायति । असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ।
कथं न्वशक्ता त्राणाय माता तेषां तपस्विनी । भविष्यति हि शोकार्त्ता पुत्रत्राणमपश्यती ।
कथमुड्डीयनेऽशक्तान् पतने च ममात्मजान् । सन्तप्यमाना बहुधा वाशमाना प्रधावति ।
जरितारिः कथं पुत्रः सारिसृक्वः कथञ्च मे । स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ।
लालप्यमानं तमृषिं मन्दपालं तथा वने । लपिता प्रत्युवाचेदं सासूयमिव भारत । ८४३५
न ते पुत्रेष्ववेक्षाऽस्ति यानृषीनुक्तवानसि । तेजस्विनो वीर्य्यवन्तो न तेषां ज्वलनाद्भयं ।
त्वयाऽग्नौ ते परीताश्च त्वयं हि मम सन्निधौ । प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ।
लोकपालो न तां वाचमुक्त्वा मिथ्या करिष्यति । समर्थं बन्धुकृत्येन तेन ते स्वस्थमानसं ।
तामेव तु ममामित्रां चिन्तयन् परितप्यसे । ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराऽभवत् ।
नहि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने । पीड्यमान उपद्रष्टुं शक्तेनात्मा कथञ्चन । ८४४०
गच्छ त्वं जरितामेव यदर्थं परितप्यसे । चरिष्याम्यहमप्येका यथा कुपुरुषाश्रिता ।
॥ मन्दपाल उवाच ॥ नाहमेवं चरे लोके यथा त्वमभिमन्यसे । अपत्यहेतोर्व्विचरे तच्च कृच्छ्रगतं मम ।
भूतं हित्वा च भाव्यर्थे योऽवलम्बेत मन्दधीः । अवमन्येत तं लोको यथेच्छसि तथा कुरु ।
एष हि प्रज्वलन्नग्निर्लेलिहानो महीरुहान् । आविग्ने हृदि सन्तापं जनयत्यशिवं तथा ।
॥ वैशम्पायन उवाच ॥ तस्माद्देशादतिक्रान्ते ज्वलने जरिता पुनः । जगाम पुत्रकानेव जरिता पुत्रगृद्धिनी । ८४४५

स तान् कुशलिनः सर्व्वान् विमुक्तान् जातवेदसः। रोरूयमाणान् ददृशे वने पुत्त्रानिरामयान्।
अश्रूणि मुमुचे तेषां दर्शनात्सा पुनः पुनः। एकैकशश्च तान् सर्व्वान् क्रोशमानाऽन्वपद्यत।
ततोऽभ्यगच्छत् सहसा मन्दपालोऽपि भारत। अथ ते सर्व्व एवैनं नाभ्यनन्दंस्तदा सुताः।
लालप्यमानमेकैकं जरिताञ्च पुनः पुनः। नचैवोचुस्तदा किञ्चित्तमृषिं साध्वसाधु वा।
॥ मन्दपाल उवाच ॥ ज्येष्ठः सुतस्ते कतमः कतमस्तस्य चानुजः। मध्यमः कतमश्चैव कनीयान् कतमश्च ते। ८४५०
एवं ब्रुवन्तं दुःखार्त्तं किं मां न प्रतिभाषसे। कृतवानपि हि त्यागं नैव शान्तिमितो लभे।
॥ जरितोवाच ॥ किन्नु ज्येष्ठेन ते कार्य्यं किमनन्तरजेन ते। किं वा मध्यमजातेन किं कनिष्ठेन वा पुनः।
यां त्वं मां सर्व्वतोहीनामुत्सृज्याऽसि गतः पुरा। तामेव लपिताङ्गच्छ तरुणीं चारुहासिनीं।
॥ मन्दपाल उवाच ॥ न स्त्रीणां विद्यते किञ्चिदमुत्र पुरुषान्तरात्। सापत्नकमृते लोके नान्यदर्थविनाशनं।
वैराग्निदीपनं चैव भृशमुद्वेगकारि च। सुव्रता चापि कल्याणी सर्व्वभूतेषु विश्रुता। ८४५५
अरुन्धती महात्मानं वशिष्ठं पर्य्यशङ्कत। विशुद्धभावमत्यन्तं सदा प्रियहिते रतं।
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिं। अपध्यानेन सा तेन धूमारुणसमप्रभा। लक्ष्याऽलक्ष्या नाभिरूपा निमित्तमिव पश्यति।
अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह। इष्टमेवं गते हि त्वं सा तथैवाद्य वर्त्तसे।
नहि भार्य्येति विश्वासः कार्य्यः पुंसा कथञ्चन। नहि कार्य्यमनुध्याति नारी पुत्त्रवती सती।
॥ वैशम्पायन उवाच ॥ ततस्ते सर्व्व एवैनं पुत्त्राः सम्यगुपासते। स च तानात्मजान् सर्व्वानाश्वासयितुमुद्यतः। ८४६०
इत्यादिपर्व्वणि खाण्डवदाहनपर्व्वणि शार्ङ्गोपाख्याने त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः॥ २३३ ॥
॥ मन्दपाल उवाच ॥ युष्माकमपवर्गार्थं विज्ञप्तो ज्वलनो मया। अग्निना च तथेत्येवं प्रतिज्ञातं महात्मना।
अग्नेर्व्वचनमादाय मातुर्धर्म्मज्ञताञ्च वः। भवताञ्च परं वीर्य्यं पूर्व्वं नाहमिहागतः।
न सन्तापो हि वः कार्य्यः पुत्त्रका यदि मां प्रति। ऋषीन् वेद हुताशोऽपि ब्रह्म तद्विदितञ्च वः।
॥ वैशम्पायन उवाच ॥ एवमाश्वासितान् पुत्त्रान् भार्य्यामादाय स द्विजः। मन्दपालस्ततो देशादन्यं देशं जगाम ह।
भगवानपि तिग्मांशुः समिद्धः खाण्डवं गतः। ददाह सह कृष्णाभ्यां जनयन् जगतो हितं। ८४६५
वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः। जगाम परमां तृप्तिं दर्शयामास चार्ज्जुनं।
ततोऽन्तरीक्षाद्भगवानवतीर्य्य पुरन्दरः। मरुद्गणैर्वृतः पार्थं केशवं चेदमब्रवीत्।
कृतं युवाभ्यां कर्म्मेदममरैरपि दुष्करं। वरं वृणीतं तुष्टोऽस्मि दुर्लभं पुरुषेष्विह।
॥ वैशम्पायन उवाच ॥ पार्थस्तु वरयामास शक्रादस्त्राणि सर्व्वशः। प्रदातुं तच्च शक्रस्तु कालं चक्रे महाद्युतिः।
यदा प्रसन्नो भगवान्महादेवो भविष्यति। तदा तुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्व्वशः। ८४७०
अहमेव च तं कालं वेत्स्यामि कुरुनन्दन। तपसा महता चापि दास्यामि भवतोऽप्यहं।
आग्नेयानि च सर्व्वाणि वायव्यानि च सर्व्वशः। मदीयानि च सर्व्वाणि ग्रहीष्यसि धनञ्जय।
वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीं। ददौ सुरपतिश्चैव वरं कृष्णाय धीमते।

एवं दत्त्वा वरं ताभ्यां सह देवैर्मरुत्पतिः। हुताशनमनुज्ञाप्य जगाम त्रिदिवं प्रभुः।

पावकश्च तदा दावं दग्ध्वा समृगपक्षिणं। अहानि पञ्च चैकञ्च विरराम सुतर्पितः। ८४०५

जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च। युक्तः परमया प्रीत्या तावुवाचाच्युतार्जुनौ।

युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखं। अनुजानामि वां वीरौ चरतं यत्र काङ्क्षितं।

एवं तौ समनुज्ञातौ पावकेन महात्मना। अर्जुनो वासुदेवश्च दानवश्च मयस्तथा।

परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ। रमणीये नदीकूले सहिताः समुपाविशन्॥ ८४०९

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्व्वणि खाण्डवदाहः समाप्तः चतुस्त्रिंशदधिकद्विशततमोऽध्यायः॥ २३४ ॥ समाप्तमादिपर्व्व॥



आदिपर्व्वणि सप्तविंशत्यधिकद्विशताध्याया द्वितीयाध्याये व्यासेन प्रतिज्ञाता किन्तु पूर्व्वतनलेखकप्रमादेन चतुस्त्रिंशदधिकद्विशताध्याया दृश्यन्ते बहुपुस्तकानां पुनः पाठसाम्यं विद्यत इति कुत्र कुत्राध्यायाधिक्यं जातं तन्निश्चयो न भवति श्लोकसङ्ख्याया अपि वैषम्यं तत्प्रमादेनैवेति॥



# श्रीमहाभारतं

## ॥ सभापर्व्व ॥

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्।

॥ वैशम्पायन उवाच ॥ ततोऽब्रवीन्मयः पार्थं वासुदेवस्य सन्निधौ। प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः।

अस्मात्कृष्णात्सुसंरब्धात्पावकाच्च दिधक्षतः। त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते।

॥ अर्जुन उवाच ॥ कृतमेव त्वया सर्व्वं स्वस्ति गच्छ महासुर। प्रीतिमान्भव मे नित्यं प्रीतिमन्तो वयञ्च ते।

॥ मय उवाच ॥ युक्तमेतत्त्वयि विभो यथात्थ पुरुषर्षभ। प्रीतिपूर्व्वमहं किञ्चित्कर्त्तुमिच्छामि भारत।

अहं हि विश्वकर्म्मा वै दानवानां महाकविः। सोऽहं वै त्वत्कृते किञ्चित्कर्त्तुमिच्छामि पाण्डव। ५

॥ अर्जुन उवाच ॥ प्राणकृच्छ्राद्विमुक्तं त्वमात्मानं मन्यसे ऽनघ। एवं गते न शक्ष्यामि किञ्चित्कारयितुं त्वया।

न चापि तव सङ्कल्पं मोघमिच्छामि दानव। कृष्णस्य क्रियतां किञ्चित्तथा प्रतिकृतं मयि।

चोदितो वासुदेवस्तु मयेन भरतर्षभ। मुहूर्त्तमिव सन्दध्यौ किमयं चोद्यतामिति।

ततो विचिन्त्य मनसा लोकनाथः प्रजापतिः। चोदयामास तं कृष्णः सभा वै क्रियतामिति।

यदि त्वं कर्त्तुकामोऽसि प्रियं शिल्पवताम्वर। धर्म्मराजस्य दैतेय यादृशीमिह मन्यसे। १०

यां कृतां नानुकुर्व्वन्ति मानवाः प्रेक्ष्य विष्ठिताः। मनुष्यलोके सकले तादृशीं कुरु वै सभां।

यत्र दिव्यानभिप्रायान् पश्येम हि कृतांस्त्वया। आसुरान्मानुषांश्चैव सभां तां कुरु वै मय।

॥ वैशम्पायन उवाच ॥ प्रतिगृह्य तु तद्वाक्यं सम्प्रहृष्टो मयस्तदा। विमानप्रतिमाञ्चक्रे पाण्डवस्य शुभां सभां।

ततः कृष्णश्च पार्थश्च धर्म्मराजे युधिष्ठिरे। सर्व्वमेतत समावेद्य दर्शयामासतुर्मयं।

तस्मै युधिष्ठिरः पूजां यथार्हामकरोत्तदा। स तु तां प्रतिजग्राह मयः सत्कृत्य भारत। १५

स पूर्व्वदेवचरितं तदा तत्र विशाम्पते। कथयामास दैतेयः पाण्डुपुत्रेषु भारत।

स कालं कञ्चिदाश्वस्य विश्वकर्म्मा विचिन्त्य तु। सभां प्रचक्रमे कर्त्तुं पाण्डवानां महात्मनां॥

अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः । पुण्येऽहनि महातेजाः कृतकौतुकमङ्गलः ।
तर्पयित्वा द्विजश्रेष्ठान् पायसेन सहस्रशः । धनं बहुविधं दत्त्वा तेभ्य एव च वीर्य्यवान् ।
सर्व्वर्त्तुगुणसम्पन्नां दिव्यरूपां मनोरमां । दशकिष्कुसहस्रां तां मापयामास सर्व्वतः । २०

इतिश्रीमहाभारते सभापर्व्वणि सभाक्रियापर्व्वणि सभास्थाननिर्णये प्रथमोऽध्यायः ॥ १ ॥

॥ वैशम्पायन उवाच ॥ उषित्वा खाण्डवप्रस्थे सुखवासं जनार्द्दनः । पार्थैः प्रीतिसमायुक्तैः पूजनार्होऽभिपूजितः ।
गमनाय मतिं चक्रे पितुर्द्दर्शनलालसः । धर्म्मराजमथामन्त्र्य पृथाञ्च पृथुलोचनः ।
ववन्दे चरणौ मूर्द्ध्ना जगद्वन्द्यः पितृष्वसुः । स तया मूर्द्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ।
ददर्शानन्तरं कृष्णो भगिनीं स्वां महायशाः । तामुपेत्य हृषीकेशः प्रीत्या वाष्पसमन्वितः ।
अर्थ्यं तथ्यं हितं वाक्यं लघुयुक्तमनुत्तरं । उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीं । ५
तया स्वजनगामीनि श्रावितो वचनानि सः । संपूजितश्चाप्यसकृच्छिरसा चाभिवादितः ।
तामनुज्ञाप्य वार्ष्णेयः प्रतिनन्द्य च भामिनीं । ददर्शानन्तरं कृष्णां धौम्यञ्चापि जनार्द्दनः ।
ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः । द्रौपदीं सान्त्वयित्वा च आमन्त्र्य च जनार्द्दनः ।
भ्रातॄनभ्यगमद्धीमान् पार्थेन सहितो बली । भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवामरैः ।
यात्राकालस्य योग्यानि कर्म्माणि गरुडध्वजः । कर्त्तुकामः शुचिर्भूत्वा स्नातवान् समलङ्कृतः । १०
अर्चयामास देवांश्च द्विजांश्च यदुपुङ्गवः । माल्यजाप्यनमस्कारैर्गन्धैरुच्चावचैरपि ।
स कृत्वा सर्व्वकार्य्याणि प्रतस्थे तस्थुषाम्वरः । उपेत्य स यदुश्रेष्ठो वाह्यकक्षां विनिर्गतः ।
स्वस्तिवाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः । वसु प्रदाय च ततः प्रदक्षिणमथाकरोत् ।
काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगं । गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतं शुभं ।
तिथावथ च नक्षत्रे मुहूर्त्ते च गुणान्विते । प्रययौ पुण्डरीकाक्षः शैव्यसुग्रीववाहनः । १५
अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः । अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमं ।
अभीषून्संप्रजग्राह स्वयं कुरुपतिस्तदा । उपारुह्यार्ज्जुनश्चापि चामरव्यजनं सितं ।
रुक्मदण्डं बृहद्दाऽऽर्द्विदधौ च प्रदक्षिणं । तथैव भीमसेनोऽपि यमाभ्यां सहितो बली ।
पृष्ठतोऽनुययौ कृष्णमृत्विक्पौरजनैःसह । स तया भ्रातृभिः सर्व्वैः केशवः परवीरहा ।
अन्वीयमानः शुशुभे शिष्यैरिव गुरुः प्रियैः । पार्थमामन्त्र्य गोविन्दः परिष्वज्य सुपीडितं । २०
युधिष्ठिरं पूजयित्वा भीमसेनं यमौ तथा । परिष्वक्तो भृशं ताभ्यां यमाभ्यामभिवादितः ।
योजनार्द्धमथो गत्वा कृष्णः परपुरञ्जयः । युधिष्ठिरं समामन्त्र्य निवर्त्तस्वेति भारत ।
ततोऽभिवाद्य गोविन्दः पादौ जग्राह धर्म्मवित् । उत्थाप्य धर्म्मराजस्तु मूर्द्ध्न्युपाघ्राय केशवं ।
पाण्डवो यादवश्रेष्ठं कृष्णं कमललोचनं । गम्यतामित्यनुज्ञाय धर्म्मराजो युधिष्ठिरः ।
ततस्तैः सम्विदं कृत्वा यथावन्मधुसूदनः । निवर्त्य च तथा कृच्छ्रात् पाण्डवान्सपदानुगान् । २५
स्वां पुरीं प्रययौ हृष्टो यथा शक्रोऽमरावतीं । लोचनैरनुजग्मुस्ते तमादृष्टिपथात्तदा ।

मनोभिरभिजग्मुस्ते कृष्णं प्रीतिसमन्वयात्। अदृष्टमनसामेव तेषां केशवदर्शने।
चिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः। अकामा एव पार्थास्ते गोविन्दगतमानसाः।
निवृत्योपययुस्तूर्णं स्वपुरं पुरुषर्षभाः। स्यन्दनेनाथ कृष्णोऽपि त्वरितं द्वारकामगात्।
सात्वतेन च वीरेण पृष्ठतो यायिना तदा। दारुकेण च सूतेन सहितो देवकीसुतः। २०
प्रययौ द्वारिकां शौरिर्गरुत्मानिव वेगवान्।
॥ वैशम्पायन उवाच ॥ निवृत्य धर्म्मराजस्तु सहभ्रातृभिरच्युतः। सुहृत्परिवृतो राजा प्रविवेश पुरोत्तमं।
विसृज्य सुहृदः सर्व्वान् भ्रातृन् पुत्रांश्च धर्म्मराट्। मुमोद पुरुषव्याघ्रो द्रौपद्या सहितो नृप।
॥ वैशम्पायन उवाच ॥ केशवोऽपि मुदा युक्तः प्रविवेश पुरोत्तमं। पूज्यमानो यदुश्रेष्ठैरुग्रसेनमुखैस्तथा।
आहुकं पितरं वृद्धं मातरञ्च यशस्विनीं। अभिवाद्य बलञ्चैव स्थितः कमललोचनः। २५
प्रद्युम्नशाम्बनिशठांश्चारुदेष्णं गदं तथा। अनिरुद्धञ्च भानुञ्च परिष्वज्य जनार्दनः।
स वृद्धैरभ्यनुज्ञातो रुक्मिण्या भवनं ययौ।
इति श्रीमहाभारते सभापर्व्वणि सभाक्रियापर्व्वणि भगवद्याने द्वितीयोऽध्यायः॥ २ ॥
॥ वैशम्पायन उवाच॥ अथाब्रवीन्मयः पार्थमर्जुनं जयताम्वरं। आपृच्छे त्वां गमिष्यामि पुनरेष्यामि चाप्यहं।
उत्तरेणतु कैलासं मैनाकं पर्व्वतं प्रति। यियक्षमाणेषु पुरा दानवेषु मया कृतं।
चित्रं मणिमयं भाण्डं रम्यं बिन्दुसरःप्रति। सभायां सत्यसन्धस्य यदासीद्वृषपर्व्वणः। ३०
आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत। ततः सभां करिष्यामि पाण्डवस्य यशस्विनीं।
मनः प्रह्लादिनीं चित्रां सर्व्वरत्नविभूषितां। अस्ति बिन्दुसरस्युग्रा गदा च कुरुनन्दन।
निहिता भावयाम्येवं राज्ञा हत्वा रणे रिपून्। सुवर्णविन्दुभिश्चित्रा गुर्वी भारसहा दृढा।
सा वै शतसहस्रस्य सम्मिता शत्रुघातिनी। अनुरूपा च भीमस्य गाण्डीवं भवतो यथा।
वारुणश्च महाशङ्खो देवदत्तः सुघोषवान्। सर्व्वमेतत्प्रदास्यामि भवते नात्र संशयः। ३५
इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीं दिशं गतः। अथोत्तरेण कैलासान्मैनाकं पर्व्वतं प्रति।
हिरण्यशृङ्गः सुमहान्महामणिमयो गिरिः। रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः।
द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः। यत्रेष्टं सर्व्वभूतानामीश्वरेण महात्मना।
आहृताः क्रतवो मुख्याः शतं भरतसत्तम। यत्र यूपा मणिमयाश्चैत्याश्चापि हिरण्मयाः।
शोभार्थं विहितास्तत्र नतु दृष्टान्ततः कृताः। यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शचीपतिः। ४०
यत्र भूतपतिः सृष्ट्वा सर्व्वान्लोकान्सनातनः। उपास्यते तिग्मतेजा स्थितो भूतैः सहस्रशः।
नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः। उपासते यत्र सत्रं सहस्रयुगपर्य्यये।
यत्रेष्टं वासुदेवेन सत्रैर्व्वर्षगणान् बहून्। श्रद्दधानेन सततं धर्म्मसम्प्रतिपत्तये।
सुवर्णमालिनो यूपांश्चैत्यांश्चाप्यतिभास्वरान्। ददौ यत्र सहस्राणि प्रयुतानि च केशवः।

तत्र गत्वा स जग्राह गदां शङ्खञ्च भारत । स्फाटिकञ्च सभाद्रव्यं यदासीद्वृषपर्व्वणः । ७५
किङ्करैः सह रक्षोभिर्यदरक्षन्महद्धनं । तदगृह्णान्मयस्तत्र गत्वा सर्व्वं महासुरः ।
तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभां । विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभां ।
गदाञ्च भीमसेनाय प्रददौ प्रवरां तदा । देवदत्तञ्चार्ज्जुनाय शङ्खप्रवरमुत्तमं ।
यस्य शङ्खस्य नादेन भूतानि प्रचकम्पिरे । सभा च सा महाराज शातकुम्भमयद्रुमा ।
दशकिष्कुसहस्राणि समन्तादायताऽभवत् । यथाऽग्नेर्यथाऽर्कस्य सोमस्य च यथा प्रभा । ८०
भ्राजमाना तथाऽत्यर्थं दधार परमं वपुः । प्रबाधमानेव प्रभया प्रभामर्कस्य भास्वरां ।
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्च्चसा । नवमेघप्रतीकाशा दिवमावृत्य विष्ठिता ।
आयता विपुला रम्या विपाप्मा विगतक्लमा । उत्तमद्रव्यसम्पन्ना रत्नप्राकारमालिनी ।
बहुवित्ता बहुधना निर्मिता विश्वकर्म्मणा । न दाशार्ही सुधर्म्मा वा ब्रह्मणो वाथ तादृशी ।
सभा रूपेण सम्पन्ना यां चक्रे मतिमान्मयः । तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च । ८५
सभामष्टौ सहस्राणि किङ्करा नाम राक्षसाः । अन्तरीक्षचरा घोरा महाकाया महाबलाः ।
रक्ताक्षाः पिङ्गलाक्षाश्च शुक्तिकर्णाः प्रहारिणः । तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ।
वैडूर्य्यपत्रविततां मणिनालोरुणाम्बुजां । पद्मसौगन्धिकवतीं नानाद्विजगणायुतां ।
पुष्पितैः पङ्कजैश्चित्रां कूर्म्ममत्स्यैश्च काञ्चनैः । चित्रस्फटिकसोपानां निष्पङ्कसलिलां शुभां ।
मन्दानिलसमुद्भूतां मुक्ताबिन्दुभिराचितां । महामणिशिलापट्टबद्धपर्य्यन्तवेदिकां । ९०
मणिरत्नचितां तान्तु केचिदभ्येत्य पार्थिवाः । दृष्ट्वाऽपि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ।
तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः । आसन्नानाविधा नीलाः शीतच्छाया मनोरमाः ।
काननानि सुगन्धीनि पुष्करिण्यश्च सर्व्वशः । हंसकारण्डवयुताश्चक्रवाकोपशोभिताः ।
जलजानाञ्च पद्मानां स्थलजानाञ्च सर्व्वशः । मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ।
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः । निष्ठितां धर्म्मराजाय मयो राजन्न्यवेदयत् । ९५
इति श्रीमहाभारते सभापर्व्वणि सभाक्रियापर्व्वणि सभानिर्म्माणे तृतीयोऽध्यायः ॥ ३ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रवेशनं तस्यां चक्रे राजा युधिष्ठिरः । अयुतं भोजयित्वा तु ब्राह्मणानां नराधिपः ।
साज्येन पायसेनैव मधुना मिश्रितेन च । कन्दैर्मूलैः फलैश्चैव मांसैर्वाराहहारिणैः ।
कृसरेणाथ जीवन्त्या हविष्येण च सर्व्वशः । मांसप्रकारैर्व्विविधैः खाद्यैश्चापि तथा नृप ।
चोष्यैश्च विविधै राजन्पेयैश्च बहुविस्तरैः । अहतैरेव वासोभिर्माल्यैरुच्चावचैरपि ।
तर्पयामास विप्रेन्द्रान्नानादिग्भ्यः समागतान् । ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः पुनः । १००
पुण्याहघोषस्तत्रासीत् दिवस्पृगिव भारत । वादित्रैर्व्विविधैर्दिव्यैर्गन्धैरुच्चावचैरपि ।
पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च । तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा । उपतस्थुर्महात्मानं धर्म्मपुत्रं युधिष्ठिरं ।
तथा स कृत्वा पूजां तां भ्रातृभिः सह पाण्डवः । तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ।

सभायामृषयस्तस्यां पाण्डवैः सह आसते। आसाञ्चक्रुर्नरेन्द्राश्च नानादेशसमागताः।
असितो देवलः सत्यः सर्प्पमाली महाशिराः। अर्व्वावसुः सुमित्रश्च मैत्रेयः शुनको बलिः। १०५
बको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः। सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयं।
तित्तिरिर्याज्ञवल्क्यश्च ससुतो लोमहर्षणः। अप्सुहोम्यश्च धौम्यश्च अणीमाण्डव्यकौशिकौ।
दामोष्णीषस्त्रैवणिश्च पर्णादो वरजानुकः। मौञ्जायनो वायुभक्षः पाराशर्य्यश्च सारिकः।
बलीवाकः शिलीवाकः सत्यपालः कृतश्रमः। जातूकर्णः शिखावांश्च आलम्बः पारिजातकः।
पर्व्वतश्च महाभागो मार्कण्डेयो महामुनिः। पवित्रपाणिः सावर्णो भालुकिर्गालवस्तथा। ११०
जङ्घाबन्धुश्च रैभ्यश्च कोपवेगस्तथा भृगुः। हरिबभ्रुश्च कौण्डिन्यो बभ्रुमाली सनातनः।
काक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः। पैङ्गो वराहः शुनकः शाण्डिल्यश्च महातपाः।
कुक्कुरो वेणुजङ्घोऽथ कालापः कठ एव च। मुनयो धर्म्मविद्वांसो धृतात्मानो जितेन्द्रियाः।
एते चान्ये च बहवो वेदवेदाङ्गपारगाः। उपासते महात्मानं सभायामृषिसत्तमाः। कथयन्तः कथाः पुण्या धर्म्मज्ञाः शुचयोऽमलाः।
तथैव क्षत्त्रियश्रेष्ठा धर्म्मराजमुपासते। ११५
श्रीमान्महात्मा धर्म्मात्मा मुञ्जकेतुर्विवर्द्धनः। संग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्य्यवान्।
कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः। काम्बोजराजः कमठः कम्पनश्च महाबलः। सततं कम्पयामास यवनानेक एव यः।
बलपौरुषसम्पन्नान्कृतास्त्रानमितौजसः। यथाऽसुरान् कालकेयान्देवो वज्रधरस्तथा।
जटासुरो मद्रकानाञ्च राजा कुन्तिः पुलिन्दश्च किरातराजः। तथाऽङ्गवङ्गौ सह पुण्ड्रकेण पाण्ड्योड्रराजौ च सहान्ध्रकेण।
अङ्गो वङ्गः सुमित्रश्च शैब्यश्चामित्रकर्षणः। किरातराजः सुमना यवनाधिपतिस्तथा। १२०
चाणूरो देवरातश्च भोजो भीमरथश्च यः। श्रुतायुधश्च कालिङ्गो जयसेनश्च मागधः।
सुकर्म्मा चेकितानश्च पुरुश्चामित्रकर्षणः। केतुमान्वसुदानश्च वैदेहोऽथ कृतक्षणः।
सुधर्म्मा चानिरुद्धश्च श्रुतायुश्च महाबलः। अनूपराजो दुर्द्धर्षः क्रमजिच्च सुदर्शनः।
शिशुपालः सहसुतः करूषाधिपतिस्तथा। वृष्णीनां चैव दुर्द्धर्षाः कुमारा देवरूपिणः।
आहुको विपृथुश्चैव गदः सारण एव च। अक्रूरः कृतवर्म्मा च सत्यकश्च शिनेः सुतः। १२५
भीष्मकोऽथाकृतिश्चैव द्युमत्सेनश्च वीर्य्यवान्। केकयाश्च महेष्वासा यज्ञसेनश्च सौमकिः।
केतुमान्वसुमांश्चैव कृतास्त्रश्च महाबलः। एते चान्ये च बहवः क्षत्त्रिया मुख्यसम्मताः।
उपासते सभायां स्म कुन्तीपुत्रं युधिष्ठिरं। अर्ज्जुनं ये च संश्रित्य राजपुत्रा महाबलाः। अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः।
तत्रैव शिक्षिता राजन् कुमारा वृष्णिनन्दनाः। रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः।
सुधर्म्मा चानिरुद्धश्च शैब्यश्च नरपुङ्गवः। धनञ्जयसखा चात्र नित्यमास्ते स्म तुम्बुरुः। १३०
चित्रसेनः सहामात्यो गन्धर्व्वाप्सरसस्तथा। गीतवादित्रकुशलाः शम्यातालविशारदाः।
प्रमाणेऽथ लयस्थाने किन्नराः कृतनिश्रमाः। सञ्चोदितास्तुम्बुरुणा गन्धर्व्वसहितास्तदा।
गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः। पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते।

तस्यां सभायामासीनाः सुव्रताः सत्यसङ्गराः । दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ।

इतिश्रीमहाभारतेसभापर्व्वणि सभाक्रियापर्व्वणि सभाप्रवेशोनामचतुर्थोऽध्यायः समाप्तञ्चसभाक्रियापर्व्व ॥ ४ ॥

## ॥ अथ लोकपालसभाख्यानपर्व्व ॥

॥ वैशम्पायन उवाच ॥ अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु । महत्सुचोपविष्टेषु गन्धर्व्वेषु च भारत । २२५

वेदोपनिषदां वेत्ता ऋषिःसुरगणार्चितः । इतिहासपुराणज्ञः पुराकल्पविशेषवित् ।

न्यायविद्धर्म्मतत्त्वज्ञः षडङ्गविदनुत्तमः । ऐक्यसंयोगनानात्वसमवायविशारदः ।

वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः । परावरविभागज्ञः प्रमाणकृतनिश्चयः ।

पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् । उत्तरोत्तरवक्ता च वदतोऽपि बृहस्पतेः ।

धर्म्मकामार्थमोक्षेषु यथावत्कृतनिश्चयः । तथा भुवनकोषस्य सर्व्वस्यास्य महामतिः । २३०

प्रत्यक्षदर्शी लोकस्य तिर्य्यगूर्द्ध्वमधस्तथा । सांख्ययोगविभागज्ञो निर्व्विवित्सुः सुरासुरान् ।

सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् । षाड्गुण्यविधियुक्तस्य सर्व्वशास्त्रविशारदः ।

युद्धगान्धर्व्वसेवीच सर्व्वत्राप्रतिघस्तथा । एतैश्चान्यैश्च बहुभिर्युक्तो गुणगणैर्मुनिः ।

लोकाननुचरन्सर्व्वानागमत्तां सभां नृप । नारदः सुमहातेजा ऋषिभिः सहितस्तदा ।

पारिजातेन राजेन्द्र रैवतेन च धीमता । सुमुखेन च सौम्येन देवर्षिरमितद्युतिः । २३५

सभास्थान्पाण्डवान् द्रष्टुं प्रीयमाणो मनोजवः । जयाशीर्भिस्तु तं विप्रो धर्म्मराजानमार्चयत् ।

तमागतमृषिं दृष्ट्वा नारदं सर्व्वधर्म्मवित् । सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः सह ।

अभ्यवादयत प्रीत्या विनयावनतस्तदा । तदर्हमासनं तस्मै सम्प्रदाय यथाविधि । गाञ्चैव मधुपर्कञ्च सम्प्रदायार्घ्यमेव च

अर्चयामास रत्नैश्च सर्व्वकामैश्च धर्म्मवित् । तुतोष च यथावच्च पूजां प्राप्य युधिष्ठिरात् ।

सोऽर्चितः पाण्डवैः सर्व्वैर्महर्षिर्व्वेदपारगः । धर्म्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरं । २४०

॥ नारद उवाच ॥ कच्चिदर्थाश्च कल्पन्ते धर्म्मे च रमते मनः । सुखानि चानुभूयन्ते मनश्च न विहन्यते ।

कच्चिदाचरितां पूर्व्वैर्नरदेव पितामहैः । वर्त्तसे वृत्तिमक्षुद्रां धर्म्मार्थसहितां त्रिषु ।

कच्चिदर्थेन वा धर्म्मं धर्म्मेणार्थमथाऽपि वा । उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ।

कच्चिदर्थञ्च धर्म्मञ्च कामञ्च जयताम्वर । विभज्य काले कालज्ञ समं वरद सेवसे ।

कच्चिद्राजगुणैःषड्भिः सप्तोपायांस्तथाऽनघ । बलाबलेन सम्यक्त्वंचतुर्द्दश परीक्षसे । २४५

कच्चिदात्मानमन्वीक्ष्य परांश्च जयताम्वर । तथा सन्धाय कर्म्माणि अष्टौ भारत सेवसे ।

कच्चित्प्रकृतयः सप्त नलुप्ता भरतर्षभ । आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्व्वशः ।

कच्चिन्न कृतकैर्दूतै र्ये चाप्यपरिशङ्किताः । त्वत्तो वा तव चामात्यैर्भिद्यते मन्त्रितन्तथा ।

मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितं । कच्चित्सन्धिं यथाकालं विग्रहं चोपसेवसे । कच्चिद्वृत्तिमुदासीने मध्यमेचानु मन्यसे ।

कच्चिदात्मसमा वृद्धाः शुद्धाः सम्बोधनक्षमाः। कुलीनाश्चानुरक्ताश्च कृतास्ते वीर मन्त्रिणः। १६०

विजयो मन्त्रमूलो हि राज्ञो भवति भारत। कच्चित्संवृतमन्त्रैस्ते अमात्यैः शास्त्रकोविदैः। राष्ट्रं सुरक्षितं तात शत्रुभिर्न विलुप्यते।

कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे। कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित्।

कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह। कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति।

कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान्। क्षिप्रमारभसे कर्त्तुं न विघ्नयसि तादृशान्।

कच्चिन्न सर्व्वे कर्म्मान्ताः परोक्षास्ते विशङ्किताः। सर्व्वे वा पुनरुत्सृष्टाः संसृष्टश्चात्र कारणं। १६५

आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः। कच्चिद्राजन् कृतान्येव कृतप्रायाणि वा पुनः।

विदुस्ते वीर कर्म्माणि नानवाप्तानि कानिचित्। कच्चित्कारणिका धर्म्मे सर्व्वशास्त्रेषु कोविदाः।

कारयन्ति कुमारांश्च योधमुख्यांश्च सर्व्वशः। कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितं।

पण्डितो ह्यर्थकृच्छ्रेषु कुर्य्यान्निःश्रेयसं परं। कच्चिद्दुर्गाणि सर्व्वाणि धनधान्यायुधोदकैः।

यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्द्धरैः। एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः। १७०

राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियं। कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च।

त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः। कच्चिद्द्विषामविदितः प्रतिपन्नश्च सर्व्वदा।

नित्ययुक्तो रिपून्सर्व्वान्वीक्षसे रिपुसूदन। कच्चिद्विनयसम्पन्नः कुलपुत्रो बहुश्रुतः।

अनसूयुरसङ्कीर्णः सत्कृतस्ते पुरोहितः। कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः।

हुतञ्च होष्यमाणञ्च काले वेदयते सदा। कच्चिदङ्गेषु निष्णातो ज्योतिषः प्रतिपादकः। १७५

उत्पातेषु हि सर्व्वेषु दैवज्ञः कुशलस्तव। कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः।

जघन्याश्च जघन्येषु भृत्याः कर्म्मसु योजिताः। अमात्यानुपधाऽतीतान्पितृपैतामहान् शुचीन्।

श्रेष्ठान् श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्म्मसु। कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः।

राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ। कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा।

उग्रं प्रतिग्रहीतारं कामयानमिव स्त्रियः। कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमान् शुचिः। कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तव। १८०

कच्चिद्बलस्य ते मुख्याः सर्व्वयुद्धविशारदाः। धृष्टावदाता विक्रान्तास्त्वया सत्कृत्य मानिताः।

कच्चिद्बलस्य भक्तञ्च वेतनञ्च यथोचितं। सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि।

कालातिक्रमणादेते भक्तवेतनयोर्भृताः। भर्तुः कुर्व्वन्ति दौर्गत्यात्सोऽनर्थः सुमहान् स्मृतः।

कच्चित्सर्व्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः। कच्चित्प्राणांस्तवार्थेषु सन्त्यजन्ति सदा युधि।

कच्चिन्नैको बहूनर्थान्सर्व्वशः साम्परायिकान्। अनुशास्ति यथाकामं कामात्मा शासनातिगः। १८५

कच्चित्पुरुषकारेण पुरुषः कर्म्म शोभयन्। लभते मानमधिकं भूयो वा भक्तवेतनं।

कच्चिद्विद्याविनीतांश्च नरान् ज्ञानविशारदान्। यथार्हं गुणतश्चैव दानेनाभ्युपपद्यसे।

कच्चिद्दाराम्मनुष्याणां तवार्थे मृत्युमीयुषां । व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ।
कच्चिद्भयादुपगतं क्षीणं वा रिपुमागतं । युद्धा वा विजितं पार्थ पुत्रवत्परिरक्षसि ।
कच्चित्त्वमेव सर्व्वस्याः पृथिव्याः पृथिवीपते । समश्चानभिशङ्क्यश्च यथा माता यथा पिता । १९०
कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ । अभियासि जवेनैव समीक्ष्य त्रिविधं बलं ।
यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम । पार्ष्णिमूलञ्च विज्ञाय व्यवसायं पराजयं । बलस्य च महाराज दत्त्वा वेतनमग्रतः ।
कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परन्तप । उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः ।
कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः । परान् जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ।
कच्चित्ते यास्यतः शत्रून् पूर्व्वं यान्ति स्वनुष्ठिताः । साम दानञ्च भेदश्च दण्डश्च विधिवद्गुणाः । १९५
कच्चिन्मूलं दृढं कृत्वा परान् यासि विशाम्पते । तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ।
कच्चिदष्टाङ्गसंयुक्ता चतुर्व्विधबला चमूः । बलमुख्यैः सुनीता ते द्विषतां प्रतिबार्हणी ।
कच्चिल्लवञ्च मुष्टिञ्च परराष्ट्रे परन्तप । अविहाय महाराज निहंसि समरे रिपून् ।
कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव । अर्थान्समधितिष्ठन्ति रक्षन्ति च परस्परं ।
कच्चिदभ्यवहार्य्याणि गात्रसंस्पर्शकानि च । घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव । २००
कच्चित्कोषश्च कोष्ठश्च वाहनं द्वारमायुधं । आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ।
कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते । रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् ।
कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च । प्रतिजानन्ति पूर्व्वाह्णे व्ययं व्यसनजं तव ।
कच्चिदायस्य चार्द्धेन चतुर्भागेन वा पुनः । पादभागैस्त्रिभिर्व्वाऽपि व्ययः संशोध्यते तव ।
कच्चित् ज्ञातीन् गुरून्वृद्धान् वणिजः शिल्पिनः श्रितान् । अभीक्ष्णमनुगृह्णासि धनधान्येन दुर्गतान् । २०५
कच्चिच्चायव्यये युक्ताः सर्व्वे गणकलेखकाः । अनुतिष्ठन्ति पूर्व्वाह्णे नित्यमायव्ययं तव ।
कच्चिदर्थेष्वसम्प्रौढान् हितकामाननुप्रियान् । नापकर्षसि कर्म्मभ्यः पूर्व्वमप्राप्य किल्बिषं ।
कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् । त्वं कर्म्मस्वनुरूपेषु नियोजयसि भारत ।
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते । अप्राप्तव्यवहारा वा तव कर्म्मस्वनुष्ठिताः ।
कच्चिन्न चौरैर्लुब्धैर्व्वा कुमारैः स्त्रीबलेन वा । त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीबलाः । २१०
कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च । भागशो विनिविष्टानि न कृषिर्देवमातृका ।
कच्चिन्न बीजं भक्तञ्च कर्षकस्यावसीदति । पादिकञ्च शतं वृद्ध्या ददास्यृणमनुग्रहं ।
कच्चित्स्वनुष्ठिता तात वार्त्ता ते साधुभिर्जनैः । वार्त्तायां संश्रितस्तात लोकोऽयं सुखमेधते ।
कच्चिच्छूराः कृतप्रज्ञाः पञ्च पञ्च स्वनुष्ठिताः । क्षेमं कुर्व्वन्ति संहत्य राजन् जनपदे तव ।
कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः । ग्रामवच्च कृताघोषास्ते च सर्व्वे त्वदर्पणाः । २१५
कच्चिद्बलेनानुगताः समानि विषमाणि च । पुराणि चौराः निघ्नन्तश्चरन्ति विषये तव ।
कच्चित् स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः । कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ।

कच्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च। प्रियाण्यनुभवन् शेषे न त्वमन्तःपुरे नृप।
कच्चिद्द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशाम्पते। सं चिन्तयसि धर्म्मार्थौ याम उत्थाय पश्चिमे।
कच्चिद्दर्शयसे नित्यं मनुष्यान्समलङ्कृतः। उत्थाय काले कालज्ञैः सह पाण्डव मन्त्रिभिः। २२०
कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलङ्कृताः। उपासते त्वामभितो रक्षणार्थमरिन्दम।
कच्चिद्दण्ड्येषु यमवत् पूज्येषु च विशाम्पते। परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च।
कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा। मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि।
कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः। सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा।
कच्चिन्न लोभान्मोहाद्वा मानाद्वापि विशाम्पते। अर्थिप्रत्यर्थिनः प्राप्तान् न पश्यसि कथञ्चन। २२५
कच्चिन्न लोभान्मोहाद्वा विश्रम्भात्प्रणयेन वा। आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि वै।
कच्चित्पौरा न सहिता ये च ते राष्ट्रवासिनः। त्वया सह विरुध्यन्ते परैः क्रीताः कथञ्चन।
कच्चिन्न दुर्ब्बलः शत्रुर्बलेन परिपीडितः। मन्त्रेण बलवान्कश्चिदुभाभ्याञ्च कथञ्चन।
कच्चित्सर्व्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः। कच्चित्प्राणांस्त्वदर्थेषु संत्यजन्ति त्वयादृताः।
कच्चित्ते सर्व्वविद्यासु गुणतोऽर्च्चा प्रवर्त्तते। ब्राह्मणानाञ्च साधूनां तव नैःश्रेयसी शुभा। २३०
कच्चिद्धर्म्मे त्रयीमूले पूर्व्वैराचरिते जनैः। यतमानस्तथा कर्तुं तस्मिन्कर्म्मणि वर्त्तसे।
कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः। गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणं।
कच्चित्क्रतूनेकचित्तो वाजपेयांश्च सर्व्वशः। पुण्डरीकांश्च कार्त्स्न्येन यतसे कर्तुमात्मवान्।
कच्चिज्ज्ञातीन् गुरून्वृद्धान्देवतांस्तापसानपि। चैत्यांश्च वृक्षान् कल्याणान् ब्राह्मणांश्च नमस्यसि।
कच्चिच्छोको न मन्युर्व्वा त्वया प्रोत्पाद्यतेऽनघ। अपि मङ्गलहस्तश्च जनः पार्श्वेऽनु तिष्ठति। २३५
कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ। आयुष्या च यशस्या च धर्म्मकामार्थदर्शिनी।
एतया वर्त्तमानस्य बुद्ध्या राष्ट्रं न सीदति। विजित्य च महीं राजा सोऽत्यन्तं सुखमेधते।
कच्चिदार्य्यो विशुद्धात्मा क्षारितश्चौरकर्म्मणि। अदृष्टशास्त्रकुशलैर्न लोभाद्वध्यते शुचिः।
दुष्टो गृहीतस्तत्कारी तज्ज्ञैर्दृष्टः सकारणः। कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ।
उत्पन्नान् कच्चिदाढ्यस्य दरिद्रस्य च भारत। अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः। २४०
नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रतां। अदर्शनं ज्ञानवतामालस्यं क्षिप्तचित्ततां।
एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनं। निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणं।
मङ्गलाद्यप्रयोगञ्च प्रत्युत्थानञ्च सर्व्वतः। कच्चित्त्वं वर्ज्जयस्येतान्राजदोषांश्चतुर्द्दश।
प्रायशो यैर्विनश्यन्ति कृतमूलाऽपि पार्थिवाः। कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनं।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतं। २४५
॥ युधिष्ठिर उवाच ॥ कथं वै सफला वेदाः कथं वै सफलं धनं। कथं वै सफला दाराः कथं वै सफलं श्रुतं।
॥ नारद उवाच ॥ अग्निहोत्रफला वेदाः दत्तभुक्तफलं धनं। रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतं।

॥ वैशम्पायन उवाच ॥ एतदाख्याय स मुनिर्नारदो वै महातपाः । पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरं ।

॥ नारद उवाच ॥ कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् । यथोक्तमवहार्य्यन्ते शुल्कं शुल्कोपजीविभिः ।

कच्चित्ते पुरुषा राजन्पुरे राष्ट्रे च मानिताः । उपानयन्ति पण्यानि उपधाभिरवञ्चिताः । २६०

कच्चिच्छृणोषि वृद्धानां धर्मार्थसहिता गिरः । नित्यमर्थविदां तात यथा धर्मार्थदर्शिनां ।

कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च । धर्मार्थञ्च द्विजातिभ्यो दीयते मधुसर्प्पिषी ।

द्रव्योपकरणं किञ्चित्सर्व्वदा सर्व्वशिल्पिनां । चातुर्मास्यावरं सम्यङ्नियतं सम्प्रयच्छसि ।

कच्चित्कृतं विजानीषे कर्त्तारञ्च प्रशंससि । सतां मध्ये महाराज सत्करोषि च पूजयन् ।

कच्चित्सूत्राणि सर्व्वाणि गृह्णासि भरतर्षभ । हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो । २६५

कच्चिदभ्यस्यते सम्यग्गृहे ते भरतर्षभ । धनुर्व्वेदस्य सूत्रं वै यन्त्रसूत्रञ्च नागरं ।

कच्चिदस्त्राणि सर्व्वाणि ब्रह्मदण्डश्च तेऽनघ । विषयोगास्तथा सर्व्वे विदिताः शत्रुनाशनाः ।

कच्चिदग्निभयाच्चैव सर्व्वं व्यालभयात्तथा । रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ।

कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान् । पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ।

षडनर्था महाराज कच्चित्ते पृष्ठतः कृताः । निद्रालस्यं भयं क्रोधो मार्द्दवं दीर्घसूत्रता । २७०

॥ वैशम्पायनउवाच ॥ ततः कुरूणामृषभो महात्मा श्रुत्वा गिरो ब्राह्मणसत्तमस्य । प्रणम्य पादावभिवाद्य तुष्टो राजाऽब्रवीन्नारदं देवरूपं ।

॥ युधिष्ठिरउवाच ॥ एवं करिष्यामि यथा त्वयोक्तं प्रज्ञा हि मे भूय एवाभिवृद्धा । उक्त्वा तथा चैव चकार राजा लेभे महीं सागरमेखलाञ्च ।

॥ नारदउवाच ॥ एवं यो वर्त्तते राजा चातुर्व्वर्ण्यस्य रक्षणे । स विहृत्येह सुसुखी शक्रस्यैति सलोकतां ।

इतिश्रीमहाभारतेसभापर्व्वणि लोकपालसभाख्यानपर्व्वणि कच्चिदध्यायोनाम पञ्चमोऽध्यायः ॥ ५ ॥

॥ वैशम्पायन उवाच ॥ संपूज्याथाभ्यनुज्ञातो महर्षेर्व्वचनात्परं । प्रत्युवाचानुपूर्व्व्येण धर्मराजो युधिष्ठिरः ।

भगवन्न्याय्यमाहैतं यथावद्धर्म्मनिश्चयं । यथाशक्ति यथान्यायं क्रियतेऽयं विधिर्म्मया । २७५

राजभिर्यद्यथा कार्य्यं पुरा वै तन्नसंशयः । यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ।

वयन्तु सत्पथं तेषां यातुमिच्छामहे प्रभो । नतु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ।

॥ वैशम्पायनउवाच ॥ तं तु विश्रान्तमालक्ष्य देवर्षिममितद्युतिं । एवमुक्त्वा स धर्मात्मा वाक्यं तदभिपूज्य च ।

मुहूर्त्तात्प्राप्तकालञ्च दृष्ट्वा लोकचरं मुनिं । नारदं सुखमासीनमुपासीनो युधिष्ठिरः ।

अपृच्छत्पाण्डवस्तत्र राजमध्ये महाद्युतिः । २८०

॥ युधिष्ठिरउवाच ॥ भवान्सञ्चरते लोकान्सदा नानाविधान्बहून् । ब्रह्मणा निर्म्मितान्पूर्व्वं प्रेक्षमाणो मनोजवः ।

ईदृशी भविता काच्चिद्दृष्टपूर्व्वा सभा क्वचित् । इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ।

॥ वैशम्पायनउवाच ॥ तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितं । पाण्डवं प्रत्युवाचेदं स्मयन्मधुरया गिरा ।

॥ नारद उवाच ॥ मानुषेषु न मे तात दृष्टपूर्व्वा नच श्रुता । सभा मणिमयी राजन्यथेयं तव भारत ।

सभान्तु पितृराजस्य वरुणस्य च धीमतः। कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च। २७५

ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमां। दिव्यां दिव्यैरभिप्रायैरुपेतां विश्वरूपिणीं।

देवैः पितृगणैः साध्यैर्यज्वभिर्नियतात्मभिः। जुष्टां मुनिगणैः शान्तैर्वेदयज्ञैः सदक्षिणैः। यदि ते श्रवणे बुद्धिर्व्वर्त्तते भरतर्षभ।

नारदेनैवमुक्तस्तु धर्म्मराजो युधिष्ठिरः। प्राञ्जलिर्भ्रातृभिः सार्द्धं तैश्च सर्व्वैर्द्विजोत्तमैः। नारदं प्रत्युवाचेदं धर्म्मराजो महामनाः।

॥ युधिष्ठिर उवाच ॥ सभाः कथय ताः सर्व्वाः श्रोतुमिच्छामहे वयं। किंद्रव्यास्ताः सभा ब्रह्मन् किंविस्ताराः किमायताः।

पितामहञ्च के तस्यां सभायां पर्य्युपासते। वासवं देवराजञ्च यमं वैवस्वतञ्च के। २८०

वरुणञ्च कुवेरञ्च सभायां पर्य्युपासते। एतत्सर्व्वं यथान्यायं ब्रह्मर्षे वदतस्तव। श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः।

एवमुक्तः पाण्डवेन नारदः प्रत्यभाषत। क्रमेण राजन् दिव्यास्ताः श्रूयन्तामिह नः सभाः।

इति श्रीमहाभारते सभापर्व्वणि लोकपालसभाख्यानपर्व्वणि सभाजिज्ञासानामषष्ठोऽध्यायः॥ ६ ॥

॥ नारद उवाच। शक्रस्य तु सभा दिव्या भास्वरा कर्म्मभिर्जिता। स्वयं शक्रेण कौरव्य निर्म्मिताऽर्कसमप्रभा।

विस्तीर्णा योजनशतं शतमध्यर्द्धमायता। वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता।

जराशोकक्लमापेता निरातङ्का शिवा शुभा। वेश्मासनवती रम्या दिव्यपादपशोभिता। २८५

तस्यां देवेश्वरः पार्थ सभायां परमासने। आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत।

बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः। विरजोऽम्बरचित्रमाल्यो ह्रीकीर्त्तिद्युतिभिः सह।

तस्यामुपासते नित्यं महात्मानं शतक्रतुं। मरुतः सर्व्वशो राजन् सर्व्वे च गृहमेधिनः।

सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा। मरुत्वन्तश्च सहिता भास्वन्तो हेममालिनः।

एते सानुचराः सर्व्वे दिव्यरूपाः स्वलङ्कृताः। उपासते महात्मानं देवराजमरिन्दमं। २९०

तथा देवर्षयः सर्व्वे पार्थ शक्रमुपासते। अमला धूतपाप्मानो दीप्यमाना इवाग्नयः। तेजस्विनः सोमयुतो विशोका विगतज्वराः।

पराशरः पर्व्वतश्च तथा सावर्णिगालवौ। शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः।

दुर्व्वासाः क्रोधनः श्येनस्तथा दीर्घतमा मुनिः। पवित्रपाणिः सावर्णिर्याज्ञवल्क्योऽथ भालुकिः।

उद्दालकः श्वेतकेतुस्ताण्ड्यो भाण्डायनिस्तथा। हविष्मांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः।

हृद्यश्चोदरशाण्डिल्यः पाराशर्य्यः कृषीवलः। वातस्कन्धो विशाखश्च विधाता काल एव च। २९५

करालदन्तस्त्वष्टा च विश्वकर्म्मा च तुम्बुरुः। अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः। ईशानं सर्व्वलोकस्य वज्रिणं समुपासते।

सहदेवः सुनीथश्च वाल्मीकिश्च महातपाः। शमीकः सत्यवाक्चैव प्रचेताः सत्यसङ्गरः।

मेधातिथिर्व्वामदेवः पुलस्त्यः पुलहः क्रतुः। मरुत्तश्च मरीचिश्च स्थाणुश्चात्रिर्महातपाः।

कक्षीवान् गौतमस्तार्क्ष्यस्तथा वैश्वानरो मुनिः। मुनिः कालकवृक्षीय आश्राव्योऽथ हिरण्मयः।

सम्वर्त्तो देवहव्यश्च विष्वक्सेनश्च वीर्य्यवान्। दिव्या आपस्तथौषध्यः श्रद्धा मेधा सरस्वती। ३००

अर्थो धर्म्मश्च कामश्च विद्युतश्चैव पाण्डव। जलवाहास्तथा मेघा वायवस्तनयित्नवः।

प्राची दिग्यज्ञवाहाश्च पावकाः सप्तविंशतिः। अग्नीषोमौ तथेन्द्राग्नी मित्रश्च सविताऽर्य्यमा।

भगो विश्वे च साध्याश्च गुरुः शुक्रस्तथैव च। विश्वावसुश्चित्रसेनः सुमनस्तरुणस्तथा।

यज्ञाश्च दक्षिणाश्चैव ग्रहास्ताराश्च भारत। यज्ञवाहाश्च ये मन्त्राः सर्व्वे तत्र समासते।

तथैवाप्सरसो राजन् गन्धर्व्वाश्च मनोरमाः। नृत्यवादित्रगीतैश्च हास्यैश्च विविधैरपि। रमयन्ति स्म नृपते देवराजं शतक्रतुं। २०५

स्तुतिभिर्म्मङ्गलैश्चैव स्तुवन्तः कर्म्मभिस्तथा। विक्रमैश्च महात्मानं बलवृत्रनिषूदनं।

ब्रह्मराजर्षयश्चैव सर्व्वे देवर्षयस्तथा। विमानैर्व्विविधैर्द्दिव्यैर्द्दीप्यमाना इवाग्नयः।

स्रग्विणो भूषिताःसर्व्वे यान्ति चायान्ति चापरे। बृहस्पतिश्च शुक्रश्च नित्यमास्तां हि तत्र वै।

एते चान्ये च बहवो महात्मानो यतव्रताः। विमानैश्चन्द्रसङ्काशैः सोमवत्प्रियदर्शनाः। ब्रह्मणः सदृशा राजन् भृगुः सप्तर्षयस्तथा।

एषा सभा मया राजन् दृष्टा पुष्करमालिनी। शतक्रतोर्म्महाबाहो याम्यामपि सभां शृणु। २१०

इति श्रीमहाभारते सभापर्व्वणि लोकपालसभाख्यानपर्व्वणि शक्रसभावर्णनं नाम सप्तमोऽध्यायः॥ ७॥

॥ नारद उवाच॥ कथयिष्ये सभां याम्यां युधिष्ठिर निबोध तां। वैवस्वतस्य यां पार्थ विश्वकर्म्मा चकार ह।

तैजसी सा सभा राजन् बभूव शतयोजना। विस्तारायामसम्पन्ना भूयसी चापि पाण्डव।

अर्कप्रकाशा भ्राजिष्णुः सर्व्वतः कामरूपिणी। नातिशीता न चात्युष्णा मनसश्च प्रहर्षिणी।

न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियं। न च दैन्यं क्लमो वाऽपि प्रतिकूलं न चाप्युत।

सर्व्वे कामाः स्थितास्तस्यां ये दिव्या ये च मानुषाः। रसवच्च प्रभूतञ्च भक्ष्यभोज्यमरिन्दम। २१५

लेह्यं चोष्यञ्च पेयञ्च हृद्यं स्वादु मनोहरं।

पुण्यगन्धाः स्रजस्तस्यां नित्यं कामफला द्रुमाः। रसवन्ति च तोयानि शीतान्युष्णानि चैव ह।

तस्यां राजर्षयः पुण्यास्तथा ब्रह्मर्षयोऽमलाः। यमं वैवस्वतं तात प्रहृष्टाः पर्य्युपासते।

ययातिर्न्नहुषः पूरुर्म्मान्धाता सोमको नृगः। त्रसदस्युश्च राजर्षिः कृतवीर्य्यः श्रुतश्रवाः।

अरिष्टनेमिः सिद्धश्च कृतवेगः कृतिर्न्निमिः। प्रतर्द्दनः शिबिर्म्मत्स्यः पृथुलाक्षो बृहद्रथः। २२०

वार्त्तो मरुत्तः कुशिकः साङ्काश्यः साङ्कृतिर्ध्रुवः। चतुरश्वः सदश्वोर्म्मिः कार्त्तवीर्य्यश्च पार्थिवः।

भरतः सुरथश्चैव सुनीथो निशठो नलः। दिवोदासश्च सुमना अम्बरीषो भगीरथः।

व्यश्वः सदश्वो वध्र्यश्वः पृथुवेगः पृथुश्रवाः। पृषदश्वो वसुमनाः क्षुपश्च सुमहाबलः।

रुषद्गुर्वृषसेनश्च पुरुकुत्सो ध्वजी रथी।

आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः। औशीनरिः पुण्डरीकः शर्य्यातिः शरभः शुचिः। २२५

अङ्गो रिष्टश्च वेनश्च दुष्मन्तः सञ्जयो जयः। भाङ्गासुरिः सुनीथश्च निषदोऽथ वहीनरः।

करन्धमो वाह्लिकश्च सुद्युम्नो बलवान्मधुः। ऐलो मरुत्तश्च तथा बलवान्पृथिवीपतिः।

कपोतरोमा तृणकः सहदेवार्ज्जुनौ तथा। व्यश्वः साश्वः कृशाश्वश्च शशबिन्दुश्च पार्थिवः।

रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्द्दनः। अलर्कः कक्षसेनश्च गयो गौराश्व एव च।

जामदग्न्योऽथ रामश्च नाभागसगरौ तथा। भूरिद्युम्नो महाश्वश्च पृथाश्वो जनकस्तथा। २३०

राजा वैण्यो वारिषेणः पुरुजिज्जनमेजयः। ब्रह्मदत्तस्त्रिगर्त्तश्च राजोपरिचरस्तथा।
इन्द्रद्युम्नो भीमजानुर्गौरपृष्ठोऽनलो गयः। पद्मोऽथ मुचुकुन्दश्च भूरिद्युम्नः प्रसेनजित्।
अरिष्टनेमिः सुद्युम्नः पृथुलाश्वोऽष्टकस्तथा। शतं मत्स्या नृपतयः शतं नीपाः शतं हयाः।
धृतराष्ट्राश्चैकशतं अशीतिर्जनमेजयाः। शतञ्च ब्रह्मदत्तानामीरिणाञ्च शतं तथा।
भीष्माणां द्वे शते साग्रे भीमानान्तु तथा शतं। शतञ्च प्रतिविन्ध्यानां शतं नागाः शतं हयाः। ३२५
पलाशानां शतं ज्ञेयं शतङ्काशकुशादयः। शान्तनुश्चैव राजेन्द्र पाण्डुश्चैव पिता तव।
उशद्गवः शतरथो देवराजो जयद्रथः। वृषदर्भश्च राजर्षि र्बुद्धिमान् सह मन्त्रिभिः।
अथापरे सहस्राणि ये गताः शशबिन्दवः। इष्ट्वाऽश्वमेधैर्ब्बहुभिर्महद्भिर्भूरिदक्षिणैः।
एते राजर्षयः पुण्याः कीर्त्तिमन्तो बहुश्रुताः। तस्यां सभायां राजेन्द्र वैवस्वतमुपासते।
अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च। यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः। ३३०
अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये। स्वधावन्तो बर्हिषदो मूर्त्तिमन्तस्तथा परे।
कालचक्रञ्च साक्षाच्च भगवान् हव्यवाहनः। नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः।
कालस्य नयने युक्ता यमस्य पुरुषाश्च ये। तस्यां शिंशपपालाशास्तथा काशकुशादयः।
उपासते धर्म्मराजं मूर्त्तिमन्तो जनाधिप। एते चान्ये च बहवः पितृराजसभासदः।
नशक्याः परिसंख्यातुं नामभिः कर्म्मभिस्तथा। असम्बाधा हि सा पार्थ रम्या कामगमा सभा। दीर्घकालं तपस्तप्त्वा निर्म्मिता विश्व
कर्म्मणा। ३३५
ज्वलन्ती भासमाना च तेजसा स्वेन भारत। तामुग्रतपसो यान्ति सुव्रताः सत्यवादिनः।
शान्ताः सन्न्यासिनः शुद्धाः पूताः पुण्येन कर्म्मणा। सर्व्वे भास्वरदेहाश्च सर्व्वे च विरजोऽम्बराः।
चित्राङ्गदाश्चित्रमाल्याः सर्व्वे ज्वलितकुण्डलाः। सुकृतैः कर्म्मभिः पुण्यैः पारिबर्हैश्च भूषिताः।
गन्धर्व्वाश्च महात्मानः संघशश्चाप्सरोगणाः। वादित्रं नृत्यगीतञ्च हास्यं लास्यञ्च सर्व्वशः।
पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः। दिव्यानि चैवमाल्यानि उपतिष्ठन्ति नित्यशः। ३४०
शतं शतसहस्राणि धर्म्मिणां तं प्रजेश्वरं। उपासते महात्मानं रूपयुक्ता मनस्विनः।
ईदृशी सा सभा राजन् पितृराज्ञो महात्मनः। वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीं।
इतिश्रीमहाभारते सभापर्व्वणि लोकपालसभाख्यानपर्व्वणि यमसभावर्णनंनामाष्टमोऽध्यायः॥ ८॥
॥ नारद उवाच ॥ युधिष्ठिर सभा दिव्या वरुणस्यामितप्रभा। प्रमाणेन यथा याम्या शुभ्रप्राकारतोरणा।
अन्तःसलिलमास्थाय विहिता विश्वकर्म्मणा। दिव्यै रत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता।
नीलपीतासितश्यामैः सितैर्लोहितकैरपि। अवतानैस्तथा गुल्मैः मञ्जरीजालधारिभिः। ३४५
तथा शकुनयस्तस्यां विचित्रा मधुरस्वराः। अनिर्देश्या वपुष्मन्तः शतशोऽथ सहस्रशः।
सा सभा सुखसंस्पर्शा न शीता न च घर्म्मदा। वेश्मासनवती रम्या सिता वरुणपालिता।
यस्यामास्ते स वरुणो वारुण्या च समन्वितः। दिव्यरत्नाम्बरधरो दिव्याभरणभूषितः।

स्रग्विणो दिव्यगन्धाश्च दिव्यगन्धानुलेपनाः । आदित्यास्तत्र वरुणं जलेश्वरमुपासते ।
वासुकिस्तक्षकश्चैव नागश्चैरावणस्तथा । कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्य्यवान् । ३१०
कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ । मणिमान्कुण्डधारश्च कर्कोटकधनञ्जयौ ।
प्राणिमान्कुण्डधारश्च बलवान्पृथिवीपते । प्रह्लादो मूषिकादश्च तथैव जनमेजयः ।
पताकिनो मण्डलिनः फणवन्तश्च सर्व्वशः । एते चान्ये च बहवः सर्पास्तस्यां युधिष्ठिर ।
उपासते महात्मानं वरुणं विगतक्लमाः । बलिर्वैरोचनो राजा नरकः पृथिवीञ्जयः ।
संह्रादो विप्रचित्तिश्च कालखञ्जाश्च दानवाः । सुहनु र्दुर्मुखः शङ्खः सुमनाः सुमतिस्तथा । ३१५
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा । विश्वरूपः स्वरूपश्च विरूपोऽथ महाशिराः ।
दशग्रीवश्च वाली च मेघवासा दशावरः । टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः ।
दैत्यदानवसंघाश्च सर्व्वे रुचिरकुण्डलाः । स्रग्विणो मौलिनश्चैव तथा दिव्यपरिच्छदाः ।
सर्व्वे लब्धवराः शूराः सर्व्वे विगतमृत्यवः । ते तस्यां वरुणं देवं धर्म्मपाशधरं सदा ।
उपासते महात्मानं सर्व्वे सुचरितव्रताः । तथा समुद्राश्चत्वारो नदी भागीरथी च सा । ३२०
कालिन्दी विदिशा वेण्णा नर्म्मदा वेगवाहिनी । विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती ।
इरावती वितस्ता च सिन्धुर्देवनदी तथा । गोदावरी कृष्णवेण्णा कावेरी च सरिद्वरा ।
किम्पुना च विशल्या च तथा वैतरणी नदी । तृतीया ज्येष्ठिला चैव शोणश्चापि महानदः । चर्म्मण्वती तथा चैव पर्णाशा च महानदी ।
सरयूर्वारवत्या च लाङ्गली च सरिद्वरा । करतोया तथा त्रेयी लौहित्यश्च महानदः ।
लघन्ती गोमती चैव सन्ध्या त्रिःस्रोतसी तथा । एताश्चान्याश्च राजेन्द्र सुतीर्था लोकविश्रुताः । ३२५
सरितः सर्व्वतश्चान्यास्तीर्थानि च सरांसि च । कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर ।
पल्वलानि तडागानि देहवन्त्यथ भारत । दिशस्तथा मही चैव तथा सर्व्वे महीधराः ।
उपासते महात्मानं सर्व्वे जलचरास्तथा । गीतवादित्रवन्तश्च गन्धर्व्वाप्सरसाङ्गणाः ।
स्तुवन्तो वरुणं तस्यां सर्व्व एव समासते । महीधरा रत्नवन्तो रसा येच प्रतिष्ठिताः ।
कथयन्तः सुमधुराः कथास्तत्र समासते । वारुणश्च तथा मन्त्री सुनाभः पर्य्युपासते । ३३०
पुत्रपौत्रैः परिवृतो गोनाम्ना पुष्करेण च । सर्व्वे विग्रहवन्तस्ते तमीश्वरमुपासते ।
एषा मया सम्पतता वारुणी भरतर्षभ । दृष्टपूर्व्वा सभा रम्या कुवेरस्य सभां शृणु ।
इतिश्री महाभारते सभापर्व्वणि लोकपालसभाख्यानपर्व्वणि वरुणसभावर्णनं नाम नवमोऽध्यायः ॥ ९ ॥
॥ नारद उवाच ॥ सभा वैश्रवणी राजन्शतयोजनमायता । विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा ।
तपसा निर्म्मिता राजन्स्वयं वैश्रवणेन सा । शशिप्रभा प्रावरणा कैलासशिखरोपमा ।
गुह्यकैरुह्यमाना सा खे विषक्तेव शोभते । दिव्या हेममयैरुच्चैःप्रासादैरुपशोभिता । ३३५
महारत्नवती चित्रा दिव्यगन्धा मनोरमा । सिताभ्रशिखराकारा प्लवमानेव दृश्यते ।
दिव्या हेममयैरङ्गैर्विद्युद्भिरिव चित्रिता । तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ।

स्त्रीसहस्रैर्वृतः श्रीमानास्ते ज्वलितकुण्डलः। दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते।

दिव्यपादोपधाने च निषण्णः परमासने। मन्दाराणामुदाराणां वनानि परिलोडयन्।

सौगन्धिकवनानाञ्च गन्धं गन्धवहो वहन्। नलिन्याश्चालकाख्याया नन्दनस्य वनस्य च। शीतो हृदयसंह्लादी वायुस्तमुपसेवते।३९०

तत्र देवाः सगन्धर्व्वाः गणैरप्सरसां वृताः। दिव्यतानैर्म्महाराज गायन्तिस्म सभागताः।

मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता। चारुनेत्रा घृताची च मेनका पुञ्जिकस्थला।

विश्वाची सहजन्या च प्रम्लोचा उर्व्वशी इरा।

वर्गा च सौरभेयी च समीची बुद्बुदा लता। एताः सहस्रशश्चान्या नृत्यगीतविशारदाः।

उपतिष्ठन्ति धनदं गन्धर्व्वाप्सरसाङ्गणाः। अनिशं दिव्यवादित्रैर्नृत्यगीतैश्च सा सभा। ३९५

अशून्या रुचिरा भाति गन्धर्व्वाप्सरसां गणैः। किन्नरा नाम गन्धर्व्वा नरा नाम तथा परे।

मणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः। कशेरको गण्डकण्डुः प्रद्योतश्च महाबलः। कुस्तुम्बरुः पिशाचश्च गजकर्णो विशालकः।

वराहकर्णस्ताम्रोष्ठः फलकक्षः फलोदकः। हंसचूडः शिखावर्त्तो हेमनेत्रो विभीषणः।

पुष्पाननः पिङ्गलकः शोणितोदः प्रवालकः। वृक्षवास्यनिकेतश्च चीरवासाश्च भारत। एते चान्ये च बहवो यक्षाः शत सहस्रशः।

सदा भगवती लक्ष्मीस्तत्रैव नलकूवरः। अहञ्च बहुशस्तस्यां भवन्त्यन्ये च मद्विधाः। ४००

ब्रह्मर्षयो भवन्त्यत्र तथा देवर्षयोऽपरे। क्रव्यादाश्च तथैवान्ये गन्धर्व्वाश्च महाबलाः। उपासते महात्मानं तस्यां धनदमीश्वरं।

भगवान् भूतसङ्घैश्च वृतः शतसहस्रशः। उमापतिः पशुपतिः शूलभृद्भगनेत्रहा।

त्र्यम्बको राजशार्दूल देवी च विगतक्लमा। वामनैर्व्विकटैः कुब्जैः क्षतजाक्षैर्म्महारवैः।

मेदोमांसाशनैरुग्रैरुग्रधन्वा महाबलः। नानाप्रहरणैरुग्रैर्व्वातैरिव महाजवैः।

वृतः सखायमन्वास्ते सदैव धनदं नृप। प्रहृष्टाः शतशश्चान्ये बहुशः सपरिच्छदाः। ४०५

गन्धर्व्वाणाञ्च पतयो विश्वावसुर्हाहाहुहूः। तुम्बुरुः पर्व्वतश्चैव शैलूषश्च तथापरः।

चित्रसेनश्च गीतज्ञः तथा चित्ररथोऽपि च। एते चान्ये च गन्धर्व्वा धनेश्वरमुपासते।

विद्याधराधिपश्चैव चक्रधर्म्मा सहानुजैः। उपाचरति तत्र स्म धनानामीश्वरं प्रभुं।

किन्नराः शतशस्तत्र धनानामीश्वरं प्रभुं। आसते चापि राजानो भगदत्तपुरोगमाः।

द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरं। राक्षसाधिपतिश्चैव महेन्द्रो गन्धमादनः। ४१०

सहयक्षैः सगन्धर्व्वैः सह सर्व्वैर्न्निशाचरैः। विभीषणश्च धर्म्मिष्ठ उपास्ते भ्रातरं प्रभुं।

हिमवान्पारिपात्रश्च विन्ध्यकैलासमन्दराः। मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः।

इन्द्रकीलः सुनाभश्च तथा दिव्यौ च पर्व्वतौ। एते चान्ये च बहवः सर्व्वे मेरुपुरोगमाः। उपासते महात्मानं धनानामीश्वरम्प्रभुं।

नन्दीश्वरश्च भगवान् महाकालस्तथैव। शङ्कुकर्णमुखाःसर्व्वे दिव्याः पारिषदास्तथा।

काष्ठः कुटीमुखो दन्ती विजयाच तपोऽधिका। श्वेतश्च वृषभस्तत्र नर्दन्नास्ते महाबलः। धनदं राक्षसाश्चान्ये पिशाचाश्च उपासते। ४१५

पारिषदैः परिवृतमुपायाति महेश्वरं । सदा हि देवदेवेशं शिवं त्रैलोक्यभावनं ।
प्रणम्य मूर्द्ध्ना पौलस्त्यो बहुरूपमुमापतिं । ततोऽभ्यनुज्ञां सम्प्राप्य महादेवाद्धनेश्वरः । आस्ते कदाचिद्भगवान् भवो धनपतेः सखा ।
निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ । सर्व्वान्निधीन्प्रगृह्याथ उपास्तां वै धनेश्वरं ।
सा सभा तादृशी रम्या मया दृष्टाऽन्तरीक्षगा । पितामहसभां राजन्कीर्त्तयिष्ये निबोध तां ।
इतिश्रीमहाभारते सभापर्व्वणि लोकपालसभाख्यानपर्व्वणि वैश्रवणसभावर्णनंनामदशमोऽध्यायः ॥ १० ॥
॥ नारद उवाच ॥ पितामहसभां तात कथ्यमानां निबोध मे । शक्यते या न निर्देष्टुमेवंरूपेति भारत । ४२०
पुरा देवयुगे राजन्नादित्यो भगवान्दिवः । आगच्छन्मानुषं लोकं दिदृक्षुर्व्विगतक्लमः ।
चरन्मानुषरूपेण सभां दृष्ट्वा स्वयम्भुवः । स तामकथयन्मह्यं दृष्ट्वा तत्त्वेन पाण्डव ।
अप्रमेयां सभां दिव्यां मानसीं भरतर्षभ । अनिर्देश्यां प्रभावेण सर्व्वभूतमनोरमां ।
श्रुत्वा गुणानहं तस्याः सभायाः पाण्डवर्षभ । दर्शनेप्सुस्तथा राजन्नादित्यमिदमब्रुवं ।
भगवन्द्रष्टुमिच्छामि पितामहसभां शुभां । येन वा तपसा शक्या कर्म्मणा वाऽपि गोपते । ४२५
औषधैर्व्वा तथा युक्तैरुत्तमा पापनाशनी । तन्ममाचक्ष्व भगवन्पश्येयं तां सभां यथा ।
स तन्मम वचः श्रुत्वा सहस्रांशुर्दिवाकरः । प्रोवाच भरतश्रेष्ठ व्रतं वर्षसहस्रिकं ।
ब्रह्मव्रतमुपास्स्व त्वं प्रयतेनान्तरात्मना । ततोऽहं हिमवत्पृष्ठे समारब्धो महाव्रतं ।
ततः स भगवान्सूर्य्यो मामुपादाय वीर्य्यवान् । आगच्छत्तां सभां ब्राह्मीं विपाप्मा विगतक्लमः ।
एवंरूपेति सा शक्या न निर्देष्टुं नराधिप । क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा । ४३०
न वेद परिमाणं वा संस्थानं चाऽपि भारत । न च रूपं मया तादृग्दृष्टपूर्व्वं कदाचन ।
सुसुखा सा सदा राजन्न शीता न च घर्म्मदा । न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ।
नानारूपैरिव कृता मणिभिः सा सुभास्वरैः । स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा । दिव्यैर्नानाविधैर्भावैर्भासद्भि रमितप्रभैः ।
अति चन्द्रञ्च सूर्य्यञ्च शिखिनञ्च स्वयंप्रभा । दीप्यते नाकपृष्ठस्था भर्त्सयन्तीव भास्करं ।
तस्यां स भगवानास्ते विदधद्देवमायया । स्वयमेकोऽनिशं राजन् सर्व्वलोकपितामहः । उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुं । ४३५
दक्षः प्रचेताः पुलहो मरीचिः कश्यपः प्रभुः । भृगुरत्रिर्व्वसिष्ठश्च गौतमोऽथ तथाऽङ्गिराः ।
पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्द्दमस्तथा । अथर्व्वाङ्गिरसश्चैव वालिखिल्या मरीचिपाः ।
मनोऽन्तरीक्षं विद्याश्च वायुस्तेजो जलं मही । शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत ।
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं भुवः । अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्य्यवान् ।
जमदग्निर्भरद्वाजः संवर्त्तश्च्यवनस्तथा । दुर्व्वासाश्च महाभाग ऋष्यशृङ्गश्च धार्म्मिकः । ४४०
सनत्कुमारो भगवान् योगाचार्य्यो महातपाः । असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित् ।
ऋषभोऽजितशत्रुश्च महावीर्य्यस्तथा मणिः । आयुर्व्वेदस्तथाऽष्टाङ्गो देहवांस्तत्र भारत ।

चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान्। वायवः क्रतवश्चैव सङ्कल्पः प्राण एव च।
मूर्त्तिमन्तो महात्मानो महाव्रतपरायणाः। एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः।
अर्थो धर्म्मश्च कामश्च हर्षो द्वेषस्तपो दमः। आयान्ति तस्यां सहिताः गन्धर्व्वाप्सरसां गणाः। ४४५
विंशतिः सप्त चैवान्ये लोकपालाश्च सर्व्वशः। शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च।
शनैश्चरश्च राहुश्च ग्रहाः सर्व्वे तथैव च। मन्त्रो रथन्तरश्चैव हरिमान्वसुमानपि।
आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः। मरुतो विश्वकर्म्मा च वसवश्चैव भारत।
तथा पितृगणाः सर्व्वे सर्व्वाणि च हवींष्यथ। ऋग्वेदः सामवेदश्च यजुर्व्वेदश्च पाण्डव।
अथर्व्ववेदश्च तथा सर्व्वशास्त्राणि चैव ह। इतिहासोपवेदाश्च वेदाङ्गानि च सर्व्वशः। ४५०
ग्रहा यज्ञाश्च सोमश्च देवताश्चापि सर्व्वशः। सावित्री दुर्गतरणी वाणी सप्तविधा तथा।
मेधा धृतिः स्मृतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा। सामानि स्तुतिशास्त्राणि गाथाश्च विविधास्तथा।
भाष्याणि तर्कयुक्तानि देहवन्ति विशाम्पते। नाटका विविधाः काव्याः कथाख्यायिककारिकाः।
तत्रतिष्ठन्ति ते पुण्या ये चान्ये गुरुपूजकाः। क्षणा लवा मुहूर्त्ताश्च दिवा रात्रिस्तथैवच।
अर्द्धमासाश्च मासाश्च ऋतवःषट्च भारत। सम्वत्सराः पञ्चयुगमहोरात्रश्चतुर्व्विधः। ४५५
कालचक्रश्च तद्दिव्यं नित्यमक्षयमव्ययं। धर्म्मचक्रं तथाचापि नित्यमास्ते युधिष्ठिर। अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा।
कालिका सुरभी देवी सरमा चाथ गौतमी। प्रभा कद्रुश्च वै देव्यौ देवतानाञ्च मातरः।
रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथा परा। पृथिवी गाङ्गता देवी ह्रीः स्वाहा कीर्त्तिरेव च।
सुरा देवी शची चैव तथा पुष्टिररुन्धती। सम्वृत्तिराशा नियतिःसृष्टिर्देवी रतिस्तथा। एताश्चान्याश्च वै देव्य उपतस्थुः प्रजापतिं।
आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि। विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः। ४६०
पितॄणाञ्च गणान्विद्धि सप्त वै पुरुषर्षभ। मूर्त्तिमन्तो वै चत्वारस्त्रयश्चाप्यशरीरिणः।
वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत। गार्हपत्या नाकचराः पितरो लोकविश्रुताः।
सोमपा एकशृङ्गाश्च चतुर्व्वेदाः कलास्तथा। एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप।
एतैराप्यायितैः पूर्व्वं सोमश्चाप्यायते पुनः। त एते पितरः सर्व्वे प्रजापतिमुपस्थिताः। उपासते च संहृष्टा ब्रह्माणममितौजसं।
राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा। नागाः सुपर्णाःपशवः पितामहमुपासते। ४६५
स्थावरा जङ्गमाश्चैव महाभूतास्तथापरे। पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः।
महादेवः सहोमोऽत्र सदा गच्छति सर्व्वशः। महासेनश्च राजेन्द्र सदोपास्ते पितामहं।
देवो नारायणस्तस्यां तथा देवर्षयश्च ये। ऋषयो वालिखिल्याश्च योनिजाऽयोनिजास्तथा।
यत्किञ्चित्त्रिलोकेऽस्मिन् दृश्यते स्थाणुजङ्गमं। सर्व्वं तस्यां मया दृष्टमिति विद्धि नराधिप।
अष्टाशीतिसहस्राणि ऋषीणामूर्द्ध्वरेतसां। प्रजावताञ्च पञ्चाशदृषीणामपि पाण्डव। ४७०
ते स्म तत्र यथा कामं दृष्ट्वा सर्व्वे दिवौकसः। प्रणम्य शिरसा तस्मै सर्व्वे यान्ति यथागतं।

अतिथीनागतान्देवान्दैत्यान्नागांस्तथा द्विजान् । यक्षान् सुपर्णान्कालेयान् गन्धर्व्वाप्सरसस्तथा ।
महाभागानमितधीर्ब्रह्मा लोकपितामहः । दयावान्सर्व्वभूतेषु यथार्हं प्रतिपद्यते ।
प्रतिगृह्य तु विश्वात्मा स्वयम्भुरमितद्युतिः । सान्त्वमानार्थसम्भोगैर्युनक्ति मनुजाधिप ।
तथा तैरुपयातैश्च प्रतिपद्भिश्च भारत । आकुला सा सभा तात भवति स्म सुखप्रदा । ४७५
सर्व्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता । ब्राह्म्या श्रिया दीप्यमाना शुशुभे विगतक्लमा ।
सा सभा तादृशी दृष्टा मया लोकेषु दुर्लभा । सभेयं राजशार्दूल मनुष्येषु यथा तव ।
एता मया दृष्टपूर्व्वाः सभा देवेषु भारत । सभेयं मानुषे लोके सर्व्वश्रेष्ठतमा तव ।
इति श्रीमहाभारते सभापर्व्वणि लोकपालसभाख्यानपर्व्वणि ब्रह्मसभावर्णनं नामैकादशोऽध्यायः ॥ ११ ॥
॥ युधिष्ठिर उवाच ॥ प्रायशो राजलोकस्ते कथितो वदताम्वर । वैवस्वतसभायां तु यथा वदसि मे प्रभो ।
वरुणस्य सभायां तु नागास्ते कथिता विभो । दैत्येन्द्राश्चापि भूयिष्ठाः सरितः सागरास्तथा । ४८०
तथा धनपतेर्यक्षा गुह्यका राक्षसास्तथा । गन्धर्व्वाप्सरसश्चैव भगवांश्च वृषध्वजः ।
पितामहसभायां तु कथितास्ते महर्षयः । सर्व्वे देवनिकायाश्च सर्व्वशास्त्राणि चैव ह ।
शक्रस्य तु सभायां तु देवाः सङ्कीर्त्तिताः मुने । उद्देशतश्च गन्धर्व्वा विविधाश्च महर्षयः ।
एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने । कथितस्ते सभायां वै देवेन्द्रस्य महात्मनः ।
किं कर्म्म तेनाचरितं तपो वा नियतव्रत । येनासौ सह शक्रेण स्पर्द्धते सुमहायशाः । ४८५
पितृलोकगतश्चैव त्वया विप्र पिता मम । दृष्टः पाण्डुर्महाभागः कथं वाऽपि समागतः ।
किमुक्तवांश्च भगवंस्तन्ममाचक्ष्व सुव्रत । त्वत्तः श्रोतुं सर्व्वमिदं परं कौतूहलं हि मे ।
॥ नारद उवाच ॥ यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो । तत्तेऽहं सम्प्रवक्ष्यामि माहात्म्यं तस्य धीमतः ।
स राजा बलवानासीत्सम्राट् सर्व्वमहीक्षितां । तस्य सर्व्वे महीपालाः शासनावनताः स्थिताः ।
तेनैकं रथमास्थाय जैत्रं हेमविभूषितं । शस्त्रप्रतापेन जिताः द्वीपाः सप्त जनेश्वर । ४९०
स निर्जित्य महीं कृत्स्नां सशैलवनकाननां । आजहार महाराज राजसूयं महाक्रतुं ।
तस्य सर्व्वे महीपाला धनान्याजह्रुराज्ञया । द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ।
प्रादाच्च द्रविणं प्रीत्या याचकानां नरेश्वरः । यथोक्तवन्तस्ते तस्मिंस्ततः पञ्चगुणाधिकं ।
अतर्पयच्च विविधैर्व्वसुभिर्ब्राह्मणांस्तदा । प्रसर्पकाले सम्प्राप्ते नानादिग्भ्यः समागतान् ।
भक्ष्यभोज्यैश्च विविधैर्यथाकामपुरस्कृतैः । रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतं । ४९५
तेजस्वी च यशस्वी च नृपेभ्योऽप्यधिकोऽभवत् । एतस्मात्कारणाद्राजन् हरिश्चन्द्रो विराजते ।
तेभ्यो राजसहस्रेभ्यः तद्विद्धि भरतर्षभ । समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ।
अभिषिक्तश्च शुशुभे साम्राज्येन नराधिप । ये चान्येच महीपाला राजसूयं महाक्रतुं ।
यजन्ते ते महेन्द्रेण मोदन्ते भरतर्षभ । ये चापि निधनं प्राप्ताः संग्रामेष्वपलायिनः ।
ते तत्सदनमासाद्य मोदन्ते भरतर्षभ । तपसा ये च तीव्रेण त्यजन्तीह कलेवरं । ५००

ते तत्स्थानं समासाद्य श्रीमन्तो भान्ति नित्यशः। पिता च त्वाह कौन्तेय पाण्डुः कौरवनन्दन।
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः। विज्ञाय मानुषं लोकमायान्तं मां नराधिप।
प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरं। समर्थोऽसि महीं जेतुं भ्रातरस्ते स्थिताः वशे।
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत। त्वयीष्टवति पुत्त्रेऽहं हरिश्चन्द्रवदाशु वै।
मोदिष्ये बहुलाः शश्वत्समाः शक्रस्य संसदि। एवम्भवतु वक्ष्येऽहं तव पुत्त्रं नराधिपं। ५०५
भूर्लोकं यदि गच्छेयमिति पाण्डुमथाब्रुवं। तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव।
गन्ताऽसि त्वं महेन्द्रस्य पूर्व्वैःसह सलोकतां। बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान्।
छिद्राण्यस्यतु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः। युद्धञ्च क्षत्त्रशमनं पृथिवीक्षयकारणं।
किञ्चिदेव निमित्तञ्च भवत्यत्र क्षयावहं। एतत्सञ्चिन्त्य राजेन्द्र यत्क्षेमं तत्समाचर।
अप्रमत्तोत्थितो नित्यं चातुर्व्वर्ण्यस्य रक्षणे। भव एधस्व मोदस्व धनैस्तर्पय च द्विजान्। ५१०
एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि। आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति।
॥ वैशम्पायनउवाच ॥ एवमाख्याय पार्थेभ्यो नारदो जनमेजय। जगाम तैर्वृतो राजनृषिभिर्यैः समागतः।
गते तु नारदे पार्थो भ्रातृभिः सह कौरव। राजसूयं क्रतुश्रेष्ठं चिन्तयामास पार्थिवः।
इति श्रीमहाभारते सभापर्व्वणि ब्रह्मसभावर्णनंनाम द्वादशोऽध्यायः समाप्तञ्चलोकपालसभाख्यानपर्व्व ॥ १२ ॥

## ॥ अथ राजसूयारम्भपर्व्व ॥ ३ ॥

॥ वैशम्पायन उवाच ॥ ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः। चिन्तयन्राजसूयेष्टिं न लेभे शर्म्म भारत।
राजर्षीणाञ्च तं श्रुत्वा महिमानं महात्मनां। यज्वनां कर्म्मभिः पुण्यैः लोकप्राप्तिं समीक्ष्य च। ५१५
हरिश्चन्द्रञ्च राजर्षिं रोचमानं विशेषतः। यज्वानं यज्ञमाहर्त्तुं राजसूयमियेष सः।
युधिष्ठिरस्ततः सर्व्वानर्चयित्वा सभासदः। प्रत्यर्चितश्च तैः सर्व्वैर्यज्ञायैव मनो दधे।
स राजसूयं राजेन्द्र कुरूणामृषभस्तदा। आहर्त्तुं प्रवणञ्चक्रे मनः सञ्चिन्त्य चासकृत्।
भूयश्चाद्भुतवीर्य्यौजा धर्म्ममेवानुचिन्तयन्। किं हितं सर्व्वलोकानां भवेदिति मनो दधे।
अनुगृह्णन्प्रजाः सर्व्वाः सर्व्वधर्म्मभृताम्बरः। अविशेषेण सर्व्वेषां हितं चक्रे युधिष्ठिरः। ५२०
सर्व्वेषां दीयतां देयं मुष्णन् कोपमदावुभौ। साधुधर्म्मेति धर्म्मेति नान्यत् श्रूयेत भाषितं।
एवं गते ततस्तस्मिन्पितरीवाश्वसन्जनाः। न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता।
परिग्रहान्नरेन्द्रस्य भीमस्य परिपालनात्। शत्रूणां क्षपणाच्चैव बीभत्सोः सव्यसाचिनः।
धीमतः सहदेवस्य धर्म्माणामनुशासनात्। वैनत्यात् सर्व्वतश्चैव नकुलस्य स्वभावतः। अविग्रहा वीतभयाः स्वकर्म्मनिरताः सदा।
निकामवर्षाः स्फीताश्च आसन् जनपदास्तथा। वार्द्धुषी यज्ञसत्त्वानि गोरक्षं कर्षणं वणिक्। ५२५
विशेषात्सर्व्वमेवैतत् संजज्ञे राजकर्म्मणा। अनुकर्षञ्च निष्कर्षं व्याधिपावकमूर्च्छनं।
सर्व्वमेव न तत्रासीद्धर्म्मनित्ये युधिष्ठिरे। दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति परस्परं।

राजन्वतमतस्यैव नाश्रूयत मृषाकृतं । प्रियं कर्त्तुमुपस्थातुं बलिकर्म्म स्वकर्म्मजं ।
अभिहर्त्तुं नृपाः षट्सु पृथक् जात्यैश्च नैगमैः । ववृधे विषयस्तत्र धर्म्मनित्ये युधिष्ठिरे ।
कामतोऽप्युपयुञ्जानै राजसैर्लोभजैर्जनैः । सर्व्वव्यापी सर्व्वगुणी सर्व्वसाहः स सर्व्वराट् । ५३०
यस्मिन्नधिकृतः सम्राड् भ्राजमानो महायशाः । यत्र राजन् दशदिशः पितृतो मातृतस्तथा । अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः ।
स मन्त्रिणः समानाय्य भ्रातॄंश्च वदतां वरः । राजसूयं प्रति तदा पुनः पुनरपृच्छत ।
ते पृच्छ्यमानाः सहिताः वचोऽर्थ्यं मन्त्रिणस्तदा । युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ।
येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति । तेन राजाऽपि सन् कृत्स्नं सम्राड्गुणमभीप्सति ।
तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन । राजसूयस्य समयं मन्यन्ते सुहृदस्तव । ५३५
तस्य यज्ञस्य समयः स्वाधीनः क्षत्रसम्पदा । साम्ना षडग्नयो यस्मिंश्चीयन्ते संशितव्रतैः ।
दर्व्वीहोमानुपादाय सर्व्वान् यः प्राप्नुते क्रतून् । अभिषेकञ्च यज्ञान्ते सर्व्वजित्तेन चोच्यते ।
समर्थोऽसि महाबाहो सर्व्वे ते वशगा वयं । अचिरात्त्वं महाराज राजसूयमवाप्स्यसि ।
अविचार्य्य महाराज राजसूये मनः कुरु । इत्येवं सुहृदः सर्व्वे पृथक् च सह चाब्रुवन् ।
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशाम्पते । धृष्टमिष्टं वरिष्ठञ्च जग्राह मनसाऽरिहा । ५४०
श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः क्षमं । पुनः पुनर्म्मनो दध्रे राजसूयाय भारत ।
स भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः । मन्त्रिभिश्चापि सहितो धर्म्मराजो युधिष्ठिरः । धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्रवित् ।
॥ युधिष्ठिर उवाच ॥ इयं या राजसूयस्य सम्राडर्हस्य सुक्रतोः । श्रद्दधानस्य वदतः स्पृहा मे सा कथं भवेत् ।
॥ वैशम्पायन उवाच ॥ एवमुक्तास्तु ते तेन राज्ञा राजीवलोचन । इदमूचुर्व्वचः काले धर्म्मराजं युधिष्ठिरं ।
अर्हस्त्वमसि धर्म्मज्ञ राजसूयं महाक्रतुं । अथैवमुक्ते नृपतावृत्विग्भिर्ऋषिभिस्तथा । ५४५
मन्त्रिणो भ्रातरश्चास्य तद्वचः प्रत्यपूजयन् । स तु राजा महाप्राज्ञः पुनरेवात्मनात्मवान् ।
भूयो विममृशे पार्थो लोकानां हितकाम्यया । सामर्थ्ययोगं संप्रेक्ष्य देशकालौ व्ययागमौ ।
विमृश्य सम्यक् च धिया कुर्व्वन् प्राज्ञो न सीदति । न हि यज्ञसमारम्भः केवलात्मविनिश्चयात् ।
भवतीति समाज्ञाय यत्नतः कार्य्यमुद्वहन् । स निश्चयार्थं कार्य्यस्य कृष्णमेव जनार्द्दनं ।
सर्व्वलोकात्परं मत्वा जगाम मनसा हरिं । अप्रमेयं महाबाहुं कामाज्जातमजं नृषु । ५५०
पाण्डवस्तर्कयामास कर्म्मभिर्देवसम्मितैः । नास्य किञ्चिदविज्ञातं नास्य किञ्चिदकर्म्मजं ।
न स किञ्चिन्न विषहेदिति कृष्णममन्यत । स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः । गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा ।
शीघ्रगेन रथेनाशु स दूतः प्राप्य यादवान् । द्वारकावासिनं कृष्णं द्वारवत्यां समासदत् ।
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाऽच्युतः । इन्द्रसेनेन सहित इन्द्रप्रस्थमगात्तदा ।
व्यतीत्य विविधान्देशांस्त्वरावान् क्षिप्रवाहनः । इन्द्रप्रस्थगतं पार्थमभ्यगच्छज्जनार्द्दनः । ५५५

स गृहे पितृवद्भ्रात्रा धर्म्मराजेन पूजितः। भीमेनच ततोऽपश्यत्स्वसारं प्रीतिमान्पितुः।
प्रीतः प्रीतेन सुहृदा रेमे स सहितस्तदा। अर्जुनेन यमाभ्याञ्च गुरुवत्पर्य्युपासितः।
तं विश्रान्तं शुभे देशे क्षणिनं कल्यमच्युतं। धर्म्मराजः समागम्याज्ञापयत्स्वं प्रयोजनं।
॥ युधिष्ठिर उवाच ॥ प्रार्थितो राजसूयो मे नचासौ केवलेप्सया। प्राप्यते येन तत्ते हि विदितं कृष्ण सर्व्वशः।
यस्मिन्सर्व्वं सम्भवति यश्च सर्व्वत्र पूज्यते। यश्च सर्व्वेश्वरो राजा राजसूयं स विन्दति। ५६०
तं राजसूयं सुहृदः कार्य्यमाहुः समेत्य ते। तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत्।
कचिद्धि सौहृदादेव न दोषं परिचक्षते। स्वार्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत।
प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितं। एवम्प्रायाश्च दृश्यन्ते जनवादाः प्रयोजने।
त्वन्तु हेतूनतीत्यैतान् कामक्रोधौ व्युदस्य च। परमं यत्क्षमं लोके यथावद्वक्तुमर्हसि।
इति श्रीमहाभारते सभापर्व्वणि राजसूयारम्भपर्व्वणि द्वादशोऽध्यायः॥ १२॥
॥ श्रीकृष्ण उवाच ॥ सर्व्वैर्गुणैर्म्महाराज राजसूयं त्वमर्हसि। जानतस्त्वेव ते सर्व्वं किञ्चिद्वक्ष्यामि भारत। ५६५
जामदग्न्येन रामेण क्षत्रं यदवशेषितं। तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितं।
कृतोऽयं कुलसङ्कल्पः क्षत्रियैर्व्वसुधाधिप। निदेशभाग्भिस्तत्तेहि विदितं भरतर्षभ।
ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते। राजानः श्रेणिबद्धाश्च तथाऽन्ये क्षत्रिया भुवि।
ऐलवंश्याश्च ये राजंस्तथैवेक्ष्वाकवो नृपाः। तानि चैकशतं विद्धि कुलानि भरतर्षभ।
ययातेस्त्वेव भोजानां विस्तरो गुणतो महान्। भजते ऽद्य महाराज विस्तरं स चतुर्दिशं। ५७०
तेषां तथैव तां लक्ष्मीं सर्व्वक्षत्रमुपासते। इदानीमेव वै राजन् जरासन्धो महीमतिः। अभिभूय श्रियं तेषां कुलानामभिषेचितः।
स्थितो मूर्द्ध्नि नरेन्द्राणामोजसाक्रम्य सर्व्वशः। सोऽवनिं मध्यमां भुक्त्वा मिथो भेदममन्यत।
प्रभुर्य्यस्तु परो राजा यस्मिन्नेकवशे जगत्। स साम्राज्यं महाराज प्राप्तो भवति योगतः।
तं स राजा जरासन्धं संश्रित्य किल सर्व्वशः। राजन्सेनापतिर्ज्जातः शिशुपालः प्रतापवान्।
तमेव च महाराज शिष्यवत्समुपस्थितः। वक्रः करूषाधिपतिर्म्मायायोधी महाबलः। ५७५
अपरौ च महावीर्य्यौ महात्मानौ समाश्रितौ। जरासन्धं महावीर्य्यं तौ हंसडिम्भकावुभौ।
दन्तवक्रः करूषश्च करभो मेघवाहनः। मूर्द्ध्ना दिव्यमणिं बिभ्रत्यमद्भुतमणिं विदुः।
मुरुञ्च नरकञ्चैव शास्ति यो यवनाधिपः। अपर्य्यन्तबलो राजा प्रतीच्यां वरुणो यथा।
भगदत्तो महाराज वृद्धस्तव पितुः सखा। स वाचा प्रणतस्तस्य कर्म्मणा च विशेषतः।
स्नेहबद्धश्च मनसा पितृवद्भक्तिमांस्त्वयि। प्रतीच्यां दक्षिणञ्चान्तं पृथिव्याः प्रति यो नृपः। ५८०
मातुलो भवतः शूरः पुरुजित्कुन्तिवर्धनः। स ते सन्नतिमानेकः स्नेहतः शत्रुसूदनः।
जरासन्धं गतस्त्वेव पुरा यो न मया हतः। पुरुषोत्तम विज्ञातो योऽसौ चेदिषु दुर्म्मतिः।
आत्मानं प्रति जानाति लोकेऽस्मिन्पुरुषोत्तमं। आदत्ते सततं मोहाद्यः स चिह्नञ्च मामकं।
वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः। पौण्ड्रको वासुदेवेति योऽसौ लोकेऽभिविश्रुतः।

चतुर्थभाङ्महाराज भोज इन्द्रसखो बली। विद्याबलाद्यो व्यजयत्स पाण्ड्यक्रथकैशिकान्। ५८५
भ्राता यस्याकृतिः शूरो जामदग्न्यसमोऽभवत्। स भक्तो मागधं राजा भीष्मकः परवीरहा।
प्रियाण्याचरतः प्रह्वान् सदा सम्बन्धिनः सतः। भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः।
न कुलं न बलं राजन्नभ्यजानात्तथात्मनः। पश्यमानो यशो दीप्तं जरासन्धमुपाश्रितः।
उदीच्याश्च तथा भोजाः कुलान्यष्टादश प्रभो। जरासन्धभयादेव प्रतीचीं दिशमाश्रिताः।
शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः। सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह। ५९०
शाल्वायनाश्च राजानः सोदर्य्यानुचरैः सह। दक्षिणा ये च पाञ्चालाः पूर्वाः कुन्तिषु कोशलाः।
तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः। मत्स्याः सन्न्यस्तपादाश्च दक्षिणां दिशमाश्रिताः।
तथैव सर्व्वपाञ्चाला जरासन्धभयार्दिताः। स्वराष्ट्रं सम्परित्यज्य विद्रुताः सर्व्वतो दिशं।
कस्यचित्त्वथ कालस्य कंसो निर्मथ्य यादवान्। बार्हद्रथसुते देव्यावुपागच्छद्वृथामतिः।
अस्तिः प्राप्तिश्च नाम्ना ते सहदेवानुजेऽबले। बलेन तेन स ज्ञातीनभिभूय वृथामतिः। ५९५
श्रैष्ठ्यं प्राप्तः स तस्यासीदतीवापनयो महान्। भोजराजन्यवृद्धैश्च पीड्यमानैर्दुरात्मना।
ज्ञातित्राणमभीप्सद्भिरस्मत्सम्भावना कृता। दत्त्वाऽक्रूराय सुतनुं तामाहुकसुतां तदा।
संकर्षणद्वितीयेन ज्ञातिकार्य्यं मया कृतं। हतौ कंससुनामानौ मया रामेण चाप्युत।
भये तु समतिक्रान्ते जरासन्धे समुद्यते। मन्त्रोऽयं मन्त्रितो राजन् कुलैरष्टादशावरैः।
अनारमन्तो निघ्नन्तो महास्त्रैः शत्रुघातिभिः। न हन्याम वयं तस्य त्रिभिर्वर्षशतैर्बलं। ६००
तस्य ह्यमरसङ्काशौ बलेन बलिनां वरौ। नामभ्यां हंसडिम्भकावशस्त्रनिधनावुभौ।
तावुभौ सहितौ वीरौ जरासन्धश्च वीर्य्यवान्। त्रयस्त्रयाणां लोकानां पर्य्याप्ता इति मे मतिः।
न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः। तथैव तेषामासीच्च बुद्धिर्बुद्धिमतांवर।
अथ हंस इति ख्यातः कश्चिदासीन्महानृपः। रामेण स हतस्तत्र संग्रामेऽष्टादशावरे।
हतो हंस इति प्रोक्तमथ केनापि भारत। तच्छ्रुत्वा डिम्भको राजन् यमुनाम्भस्यमज्जत। ६०५
विना हंसेन लोकेऽस्मिन्नाहं जीवितुमुत्सहे। इत्येतां मतिमास्थाय डिम्भको निधनं गतः।
तथा तु डिम्भकं श्रुत्वा हंसः परपुरञ्जयः। प्रपेदे यमुनामेव सोऽपि तस्यां न्यमज्जत।
तौ स राजा जरासन्धः श्रुत्वा च निधनं गतौ। पुरं शून्येन मनसा प्रययौ भरतर्षभ।
ततो वयममित्रघ्न तस्मिन् प्रतिगते नृपे। पुनरानन्दिनः सर्व्वे मथुरायां वसामहे।
यदा त्वभ्येत्य पितरं सा वै राजीवलोचना। कंसभार्य्या जरासन्धं दुहिता मागधं नृपं। ६१०
चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता। पतिघ्नं मे जहीत्येवं पुनःपुनररिन्दम।
ततो वयं महाराज तं मन्त्रं पूर्व्वमन्त्रितं। संस्मरन्तो विमनसो व्यपयाता नराधिप।
पृथक्त्वेन महाराज संक्षिप्य महतीं श्रियं। पलायामो भयात्तस्य ससुतज्ञातिबान्धवाः।
इति सञ्चिन्त्य सर्व्वे स्म प्रतीचीं दिशमाश्रिताः। कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभितां।

ततो निवेशं तस्यां च कृतवन्तो वयं नृप। तथैव दुर्गसंस्कारं देवैरपि दुरासदं। ६१५
स्त्रियोऽपि यस्यां युध्येयुः किमु वृष्णिमहारथाः। तस्यां वयममित्रघ्न निवसामोऽकुतोभयाः।
आलोच्य गिरिमुख्यं तं मागधं तीर्णमेव च। माधवाः कुरुशार्दूल परां मुदमवाप्नुवन्।
एवं वयं जरासन्धादभितः कृतकिल्बिषाः। सामर्थ्यवन्तः सम्बन्धाद्गोमन्तं समुपाश्रिताः।
त्रियोजनायतं सद्म त्रिस्कन्धं योजनादधि। योजनान्ते शतद्वारं वीरविक्रमतोरणं।
अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः। अष्टादशसहस्राणि भ्रातॄणां सन्ति नः कुले। ६२०
आहुकस्य शतं पुत्रा एकैकस्त्रिदशावरः। चारुदेष्णः सह भ्रात्रा चक्रदेवोऽथ सात्यकिः।
अहञ्च रौहिणेयश्च साम्बः शौरिसमो युधि। एवमेते रथाः सप्त राजन्नन्यान्निबोध मे।
कृतवर्म्मा ह्यनाधृष्टिः समीकः समितिञ्जयः। कङ्कः शङ्कुश्च कुन्तिश्च सप्तैते वै महारथाः।
पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश। वज्रसंहनना वीरा वीर्य्यवन्तो महारथाः।
स्मरन्तो मध्यमं देशं वृष्णिमध्ये व्यवस्थिताः। स त्वं सम्राड्गुणैर्युक्तः सदा भरतसत्तम। ६२५
क्षत्रे सम्राजमात्मानं कर्त्तुमर्हसि भारत। नतु शक्यं जरासन्धे जीवमाने महाबले।
राजसूयं त्वयाऽवाप्तुमेषा राजन्मतिर्मम। तेन रुद्धा हि राजानः सर्व्वे जित्वा गिरिव्रजे।
कन्दरे पर्व्वतेन्द्रस्य सिंहेनेव महाद्विपाः। स हि राजा जरासन्धो यियक्षुर्व्वसुधाधिपैः।
महादेवं महात्मानमुमापतिमरिन्दम। आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः।
प्रतिज्ञायाश्च पारं स गतः पार्थिवसत्तमः। स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान्। ६३०
पुरमानीय बद्ध्वा च चकार पुरुषव्रजं। वयञ्चैव महाराज जरासन्धभयात्तदा।
मथुरां सम्परित्यज्य गता द्वारवतीं पुरीं। यदि त्वेतन्महाराज यज्ञं प्राप्तुमभीप्ससि।
यतस्व तेषां मोक्षाय जरासन्धबधाय च। समारम्भो न शक्योऽयमन्यथा कुरुनन्दन।
राजसूयस्य कार्त्स्न्येन कर्त्तुं मतिमताम्बर। इत्येषा मे मतीराजन्यथा वा मन्यसेऽनघ। एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः।

इति श्रीमहाभरते सभापर्व्वणि राजसूयारम्भपर्व्वणि कृष्णवाक्ये त्रयोदशोऽध्यायः ॥ १३ ॥

॥ युधिष्ठिर उवाच॥ उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति। संशयानां हि निर्म्मोक्ता त्वं नान्यो विद्यते भुवि। ६३५
गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियङ्कराः। न च साम्राज्यमाप्तास्ते सम्राट्शब्दो हि कृच्छ्रभाक्।
कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति। परेण समवेतस्तु यः प्रशस्यः स पूज्यते।
विशाला बहुला भूमिर्व्बहुरत्नसमाचिता। दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह।
शममेव परं मन्ये शमात् क्षेमं भवेन्मम। आरम्भे पारमेष्ठ्यन्तु न प्राप्यमिति मे मतिः।
एवमेते हि जानन्ति कुले जाता मनस्विनः। कश्चित्कदाचिदेतेषां भवेच्छ्रेष्ठो जनार्दन। ६४०
वयञ्चैव महाभाग जरासन्धभयात्तदा। शङ्किताः स्म महाभाग दौरात्म्यात्तस्य चानघ।
अहं हि तव दुर्धर्ष भुजवीर्य्याश्रयः प्रभो। नात्मानं बलिनं मन्ये त्वयि तस्माद्विशङ्किते।

त्वत्सकाशाच्च रामाच्च भीमसेनाच्च माधव। अर्जुनाद्वा महाबाहो हन्तुं शक्यो न वेति वै।

एवं जानन् हि वार्ष्णेय विमृशामि पुनः पुनः। त्वं मे प्रमाणभूतोऽसि सर्व्वकार्य्येषु केशव। तच्छ्रुत्वा चाब्रवीद्भीमो वाक्यं वाक्यविशारदः।

॥ भीम उवाच ॥ अनारम्भपरो राजा वल्मीक इव सीदति। दुर्ब्बलश्चानुपायेन बलिनं योऽधितिष्ठति। ५४५

अतन्द्रितस्तु प्रायेण दुर्ब्बलो बलिनं रिपुं। जयेत्सम्यक्प्रयोगेण नीत्यार्थानात्मनो हितान्।

कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये। मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः।

॥ श्रीकृष्ण उवाच ॥ अर्थानारभते बालो नानुबन्धमवेक्षते। तस्मादरिं न मृष्यन्ति बालमर्थपरायणं।

हित्वा करान्यौवनाश्वः पालनाच्च भगीरथः। कार्त्तवीर्य्यस्तपोवीर्य्याद्बलात्तु भरतो विभुः।

ऋद्ध्या मरुत्तस्तान्पञ्च सम्राजस्त्वनुशुश्रुम। साम्राज्यमिच्छतस्ते तु सर्व्वाकारं युधिष्ठिर। ५५०

मन्यान् वश्याननुन्मत्तानेवमेव सतां युगे। निग्राह्यलक्षणं प्राप्तिः धर्म्मार्थनयलक्षणैः। बार्हद्रथो जरासन्धस्तद्विद्धि भरतर्षभ।

न चैनमनुरुध्यन्ते कुलान्येकशतं नृपाः। तस्मादिह बलादेव साम्राज्यं कुरुते हि सः।

रत्नभाजो हि राजानो जरासन्धमुपासते। न च तुष्यति तेनापि बाल्यादनयमास्थितः।

मूर्द्धाभिषिक्तं नृपतिं प्रधानपुरुषो बलात्। आदत्ते न च नो दृष्टोऽभागः पुरुषतः क्वचित्।

एवं सर्व्वान्वशे चक्रे जरासन्धः शतावरान्। तं दुर्ब्बलपरो राजा कथं पार्थ उपैष्यति। ५५५

प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे। पशूनामिव का प्रीतिर्जीविते भरतर्षभ।

क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः। ततः स्म मागधं संख्ये प्रतिबाधेम यद्वयं।

षडशीतिः समानीताः शेषा राजंश्चतुर्द्दश। जरासन्धेन राजानस्ततः क्रूरं प्रवर्त्स्यते।

प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत्। जयेद्यश्च जरासन्धं स सम्राण्नियतं भवेत्।

इति श्रीमहाभारते सभापर्व्वणि राजसूयारम्भपर्व्वणि कृष्णवाक्ये चतुर्द्दशोऽध्यायः॥ १४॥

॥ युधिष्ठिर उवाच ॥ सम्राड्गुणमभीप्सन्वै युष्मान्स्वार्थपरायणः। कथं प्रहिणुयां कृष्ण सोऽहं केवलसाहसात्। ५६०

भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्द्दनं। मनश्चक्षुर्व्विहीनस्य कीदृशं जीवितं भवेत्।

जरासन्धबलं प्राप्य दुष्पारं भीमविक्रमं। यमोऽपि न विजेताजौ तत्र वः किं विचेष्टितं।

अस्मिंस्त्वर्थान्तरे युक्तमनर्थः प्रतिपद्यते। तस्मान्न प्रतिपत्तिस्तु कार्य्या युक्ता मता मम।

यथाऽहं विमृशाम्येकस्तत्तावत् श्रूयतां मम। संन्यासं रोचये साधु कार्य्यस्यास्य जनार्द्दन। प्रतिहन्ति मनो मेऽद्य राजसूयो दुराहरः।

॥ वैशम्पायन उवाच ॥ पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी। रथं ध्वजं सभाञ्चैव युधिष्ठिरमभाषत। ५६५

॥ अर्जुन उवाच ॥ धनुःशस्त्रं शरा वीर्य्यं पक्षो भूमिर्यशो बलं। प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितं।

कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिश्चिताः। बलेन सदृशं नास्ति वीर्य्यन्तु मम रोचते।

कृतवीर्य्यकुले जातो निर्व्वीर्य्यः किं करिष्यति। निर्व्वीर्य्ये तु कुले जातो वीर्य्यवांस्तु विशिष्यते।

क्षत्रियः सर्व्वशो राजन्यस्य वृत्तिर्द्विषज्जये। सर्व्वैर्गुणैर्व्विहीनोऽपि वीर्य्यवान्हि तरेद्रिपून्।

सर्व्वैरपि गुणैर्युक्तो निर्व्वीर्य्यः किं करिष्यति । गुणीभूता गुणाः सर्व्वे तिष्ठन्ति हि पराक्रमे । ६००

जयस्य हेतुः सिद्धिर्हि कर्म्म दैवञ्च संश्रितं । संयुक्तो हि बलैः कश्चित्प्रमादान्नोपयुज्यते ।

तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः । दैन्यं यथाऽबलवति तथा मोहो बलान्विते । तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना ।

जरासन्धविनाशञ्च राज्ञाञ्च परिरक्षणं । यदि कुर्य्याम यज्ञार्थं किन्ततः परमं भवेत् ।

अनारम्भे हि नियतो भवेदगुणनिश्चयः । गुणान्निःसंशयाद्राजन्नैर्गुण्यं मन्यसे कथं ।

काषायं सुलभं पश्चान्मुनीनां शममिच्छतां । साम्राज्यन्तु भवेच्छक्यं वयं योत्स्यामहे परान् । ६०५

इतिश्रीमहाभारते सभापर्व्वणि राजसूयारम्भपर्व्वणि जरासन्धवधमन्त्रणे पञ्चदशोऽध्यायः ॥ १५ ॥

॥ वासुदेव उवाच ॥ जातस्य भारते वंशे तथा कुन्त्याः सुतस्य च । या वै युक्ता मतिः सेयमर्ज्जुनेन प्रदर्शिता ।

न स्म मृत्युं वयं विद्म रात्रौ वा यदि वा दिवा । न चापि कञ्चिदमरमयुद्धेनानुशुश्रुम ।

एतावदेव पुरुषैः कार्य्यं हृदयतोषणं । नयेन विधिदृष्टेन यदुपक्रमते परान् ।

सुनयस्यानपायस्य संयोगे परमः क्रमः । सङ्गत्या जायतेऽसाम्यं साम्यञ्च नभवेद्द्वयोः ।

अनयस्यानुपायस्य संयुगे परमः क्षयः । संशयो जायते साम्याज्जयश्च न भवेद्द्वयोः । ६१०

ते वयं नयमास्थाय शत्रुदेहसमीपगाः । कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः । पररन्ध्रे समाक्रान्ताः स्वरन्ध्रावरणे स्थिताः ।

व्यूढानीकैरतिबलैर्न युध्येदरिभिः सह । इति बुद्धिमतां नीतिस्तन्ममापीह रोचते ।

अनवद्या ह्यसम्बुद्धाः प्रविष्टाः शत्रुसद्म तत् । शत्रुदेहमुपाक्रम्य तं कामं प्राप्नुयामहे ।

एको ह्येव श्रियं नित्यं बिभर्त्ति पुरुषर्षभः । अन्तरात्मेव भूतानां तत्क्षयञ्चैव लक्षये ।

अथ वैनं निहत्याजौ शेषेणापि समाहताः । प्राप्नुयाम ततः स्वर्गं ज्ञातित्राणपरायणाः । ६१५

॥ युधिष्ठिर उवाच ॥ कृष्ण कोऽयं जरासन्धः किंवीर्य्यः किंपराक्रमः । यस्त्वां स्पृष्ट्वाऽग्निसदृशं न दग्धः शलभो यथा ।

॥ श्रीकृष्ण उवाच ॥ शृणु राजन् जरासन्धो यद्वीर्य्यो यत्पराक्रमः । यथा चोपेक्षितोऽस्माभि र्ब्बहुशः कृतविप्रियः ।

अक्षौहिणीनां तिसृणामासीत्समरदर्प्पितः । राजा बृहद्रथो नाम मगधाधिपतिर्ब्बली ।

रूपवान्वीर्य्यसम्पन्नः श्रीमानतुलविक्रमः । नित्यं दीक्षाङ्कितततनुः शतक्रतुरिवापरः ।

तेजसा सूर्य्यसङ्काशः क्षमया पृथिवीसमः । यमान्तकसमः क्रोधे श्रिया वैश्रवणोपमः । ६२०

तस्याभिजनसंयुक्तैर्गुणैर्भरतसत्तम । व्याप्तेयं पृथिवी सर्व्वा सूर्य्यस्येव गभस्तिभिः ।

स काशिराजस्य सुते यमजे भरतर्षभ । उपयेमे महावीर्य्यो रूपद्रविणसंयुते ।

तयोश्चकार समयं मिथः स पुरुषर्षभः । नातिवर्त्तिष्य इत्येवं पत्नीभ्यां सन्निधौ तदा ।

स ताभ्यां शुशुभे राजा पत्नीभ्यां वसुधाधिपः । प्रियाभ्यामनुरूपाभ्यां करेणुभ्यामिव द्विपः ।

तयोर्मध्यगतश्चापि रराज वसुधाधिपः । गङ्गायमुनयोर्मध्ये मूर्त्तिमानिव सागरः । ६२५

विषयेषु निमग्नस्य तस्य यौवनमभ्यगात् । न च वंशकरः पुत्त्रस्तस्याजायत कश्चन ।

मन्त्रैर्मूलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः। नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्द्धनं।
अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः। शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकं।
यदृच्छयागतं तन्तु वृक्षमूलमुपाश्रितं। पत्नीभ्यां सहितो राजा सर्व्वरत्नैरतोषयत्।
तमब्रवीत्सत्यधृतिः सत्यवागृषिसत्तमः। परितुष्टोऽस्मि राजेन्द्र वरं वरय सुव्रत। ७००
ततः सभार्य्यः प्रणतस्तमुवाच बृहद्रथः। पुत्रदर्शननैराश्याद्बाष्पसन्दिग्धया गिरा।
॥ राजोवाच ॥ भगवन्राज्यमुत्सृज्य प्रस्थितोऽहं तपोवनं। किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे।
॥ श्रीकृष्णउवाच ॥ एतच्छ्रुत्वा मुनिर्ध्यानमगमत्क्षुभितेन्द्रियः। तस्यैव चाम्रवृक्षस्य च्छायायां समुपाविशत्।
तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह। अवातमशुकादष्टमेकमाम्रफलं किल।
तत्प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च। राज्ञे ददावप्रतिमं पुत्रसम्प्राप्तिकारणं। ७०५
उवाच च महाप्राज्ञस्तं राजानं महामुनिः। गच्छ राजन्कृतार्थोऽसि निवर्त्तस्व नराधिप।
एतच्छ्रुत्वा मुनेर्व्वाक्यं शिरसा प्रणिपत्य च। मुनेःपादौ महाप्राज्ञः सनृपः स्वगृहं गतः।
यथा समयमाज्ञाय तदा स नृपसत्तमः। द्वाभ्यामेकं फलं प्रादात्पत्नीभ्यां भरतर्षभ।
ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे। भावित्वादपि चार्थस्य सत्यवाक्यतया मुनेः।
तयोः समभवद्गर्भः फलप्राशनसम्भवः। ते च दृष्ट्वा सनृपतिः परां मुदमवाप ह। ७१०
अथ काले महाप्राज्ञ यथासमयमागते। प्रजायेतामुभे राजन्शरीरशकले तदा।
एकाक्षिबाहुचरणे अर्द्धोदरमुखस्फिचे। दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशं।
उद्विग्ने सह सम्मन्त्र्य ते भगिन्यौ तदाऽबले। सजीवे प्राणिशकले तत्यजाते सुदुःखिते।
तयोर्धात्र्यौ सुसम्वीते ते कृत्वा गर्भसंप्लवे। निर्गम्यान्तःपुरद्वारात्समुत्सृज्याभिजग्मतुः।
ते चतुष्पथनिक्षिप्ते जरा नामाऽथ राक्षसी। जग्राह मनुजव्याघ्र मांसशोणितभोजना। ७१५
कर्त्तुकामा सुखवहे शकले सा तु राक्षसी। संयोजयामास तदा विधानबलचोदिता।
ते समानीतमात्रे तु शकले पुरुषर्षभ। एकमूर्त्तिधरो वीरः कुमारः समपद्यत।
ततः सा राक्षसी राजन् विस्मयोत्फुल्ललोचना। न शशाक समुद्वोढुं वज्रसारमयं शिशुं।
बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः। प्राक्रोशदतिसंरब्धः सतोय इव तोयदः।
तेन शब्देन संभ्रान्तः सहसाऽन्तः पुरे जनः। निर्जगाम नरव्याघ्र राज्ञा सह परन्तप। ७२०
ते चाबले परिम्लाने पयःपूर्णपयोधरे। निराशे पुत्रलाभाय सहसैवाभ्यगच्छतां।
तेऽथ दृष्ट्वा तथाभूते राजानं चेष्टसन्ततिं। तञ्च बालं सुबलिनं चिन्तयामास राक्षसी।
नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः। बालं पुत्रमिमं हन्तुं धार्म्मिकस्य महात्मनः।
सा तं बालमुपादाय मेघलेखेव भास्करं। कृत्वा च मानुषं रूपमुवाच वसुधाधिपं।
॥ राक्षस्युवाच ॥ बृहद्रथ सुतस्तेऽयं मया दत्तः प्रगृह्यतां। तव पत्नीद्वये जातो द्विजातिवरशासनात्। धात्रीजनपरित्यक्तो
मयाऽयं परिरक्षितः। ७२५

॥ श्रीकृष्ण उवाच ॥ ततस्ते भरतश्रेष्ठ काशिराजसुते शुभे । तं बालमभिपद्याशु प्रस्नवैरभ्यषिञ्चतां ।
ततः स राजा संहृष्टः सर्व्वं तदुपलभ्य च । अपृच्छद्धेमगर्भाभां राक्षसीं तामराक्षसीं ।
॥ राजोवाच ॥ का त्वं कमलगर्भाभे मम पुत्त्रप्रदायिनी । कामया ब्रूहि कल्याणि देवताप्रतिभासि मे ।
इति श्रीमहाभारते सभापर्व्वणि राजसूयारम्भपर्व्वणि जरासन्धोत्पत्तौ षोडशोऽध्यायः ॥ १६ ॥
॥ राक्षस्युवाच ॥ जरानामास्मि भद्रं ते राक्षसी कामरूपिणी । तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखं ।
गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी । गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा । ७१०
दानवानां विनाशाय स्थापिता दिव्यरूपिणी । यो मां भक्त्या लिखेत्कुड्ये सपुत्त्रां यौवनान्वितां ।
गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात् । त्वद्गृहे तिष्ठमाना तु पूजिताऽहं सदा विभो ।
लिखिता चैव कुड्येऽहं पुत्त्रैर्बहुभिरावृता । गन्धपुष्पैस्तथा धूपैर्भक्ष्यैर्भोज्यैः सुपूजिता ।
साऽहं प्रत्युपकारार्थं चिन्तयाम्यनिशं तव । तवेमे पुत्त्रशकले दृष्टवत्यस्मि धार्म्मिक ।
संश्लेषिते मया दैवात् कुमारः समपद्यत । तव भाग्यान्महाराज हेतुमात्रमहं त्विह । ७१५
मेरुं वा खादितुं शक्ता किं पुनस्तव बालकं । गृहसम्पूजनात्तुष्ट्या मया प्रत्यर्पितस्तव ।
॥ श्रीकृष्ण उवाच ॥ एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत । स संगृह्य कुमारं तं प्रविवेश गृहं नृपः ।
तस्य बालस्य यत्कृत्यं तच्चकार नृपस्तदा । आज्ञापयच्च राक्षस्या मगधेषु महोत्सवं ।
तस्य नामाकरोच्चैव पितामहसमः पिता । जरया सन्धितो यस्माज्जरासन्धो भवत्वयं ।
सोऽवर्द्धत महातेजाः मगधाधिपतेः सुतः । प्रमाणबलसम्पन्नो हुताहुतिरिवानलः । मातापित्रोर्नन्दिकरः शुक्लपक्षे यथा शशी । ७२०
इति श्रीमहाभारते सभापर्व्वणि राजसूयारम्भपर्व्वणि जरासन्धोत्पत्तौ सप्तदशोऽध्यायः ॥ १७ ॥
॥ श्रीकृष्ण उवाच ॥ कस्यचित्त्वथ कालस्य पुनरेव महातपाः । मागधेषूपचक्राम भगवांश्चण्डकौशिकः ।
तस्यागमनसंहृष्टः सामात्यः सपुरःसरः । सभार्य्यः सह पुत्त्रेण निर्जगाम बृहद्रथः ।
पाद्यार्घ्याचमनीयैस्तमर्च्चयामास भारत । स नृपो राज्यसहितं पुत्त्रं तस्मै न्यवेदयत् ।
प्रतिगृह्य तु तां पूजां पार्थिवाद्भगवानृषिः । उवाच मागधं राजन् प्रहृष्टेनान्तरात्मना ।
सर्व्वमेतन्मया ज्ञातं राजन्दिव्येन चक्षुषा । पुत्त्रस्तु शृणु राजेन्द्र यादृशोऽस्य भविष्यति । ७२५
अस्य रूपञ्च सत्त्वञ्च बलमूर्ज्जितमेव च । एष श्रिया समुदितः पुत्त्रस्तव न संशयः ।
प्रापयिष्यति तत्सर्व्वं विक्रमेण समन्वितः । अस्य वीर्य्यवतो वीर्य्यं नानुयास्यन्ति पार्थिवाः ।
पततो वैनतेयस्य गतिमन्ये यथा खगाः । विनाशमुपयास्यन्ति ये चास्य परिपन्थिनः । देवैरपि विसृष्टानि शस्त्राण्यस्य महीपते ।
न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः । सर्व्वमूर्द्धाभिषिक्तानामेष मूर्द्ध्नि ज्वलिष्यति ।
प्रभाहरोऽयं सर्व्वेषां ज्योतिषामिव भास्करः । एनमासाद्य राजानः समृद्धबलवाहनाः । विनाशमुपयास्यन्ति शलभा इव पावकं । ७३०
एष श्रियः समुदिताः सर्व्वराज्ञां ग्रहीष्यति । वर्षास्विवोद्धीर्णजला नदीर्नदनदीपतिः ।
एष धारयिता सम्यक् चातुर्वर्ण्यं महाबलः । शुभाशुभमिव स्फीता सर्व्वसस्यधरा धरा ।

अस्याज्ञावशगाः सर्व्वे भविष्यन्ति नराधिपाः। सर्व्वभूतात्मभूतस्य वायोरिव शरीरिणः।
एष रुद्रं महादेवं त्रिपुरान्तकरं हरं। सर्व्वलोकेष्वतिबलः साक्षात् द्रक्ष्यति मागधः।
एवं ब्रुवन्नेव मुनिः स्वकार्य्यमिव चिन्तयन्। विसर्जयामास नृपं बृहद्रथमथारिहन्। ७११
प्रविश्य नगरीञ्चापि ज्ञातिसम्बन्धिभिर्वृतः। अभिषिच्य जरासन्धं मगधाधिपतिस्तदा।
बृहद्रथो नरपतिः परां निर्वृतिमाययौ। अभिषिक्ते जरासन्धे तदा राजा बृहद्रथः।
पत्नीद्वयेनानुगतस्तपोवनचरोऽभवत्। ततोवनस्थे पितरि मात्रोश्चैव विशाम्पते। जरासन्धः स्ववीर्य्येण पार्थिवानकरोद्वशे।
॥ वैशम्पायनउवाच ॥ अथ दीर्घस्य कालस्य तपोवनचरो नृपः। सभार्य्यः स्वर्गमगमत्तपस्तप्त्वा बृहद्रथः।
जरासन्धोऽपि नृपतिर्यथोक्तं कौशिकेन तत्। वरप्रदानमखिलं प्राप्य राज्यमपालयत्। ७१०
निहते वासुदेवेन तदा कंसे महीपतौ। जातो वै वैरनिर्बन्धः कृष्णेन सह तस्य वै।
भ्रामयित्वा शतगुणमेकोनं येन भारत। गदा क्षिप्ता बलवता मागधेन गिरिव्रजात्।
तिष्ठतो मथुरायां वै कृष्णस्याद्भुतकर्म्मणः। एकोनयोजनशते सा पपात गदा शुभा।
दृष्ट्वा पौरैस्तदा सम्यग्गदा चैव निवेदिता। गदावसानं तत् ख्यातं मथुरायाः समीपतः।
तस्यास्तां हंसडिम्भकावशस्त्रनिधनावुभौ। मन्त्रे मतिमतां श्रेष्ठौ नीतिशास्त्रविशारदौ। ७१५
यौ तौ मया ते कथितौ पूर्व्वमेव महाबलौ। त्रयस्त्रयाणां लोकानां पर्य्याप्ता इति मे मतिः।
एवमेष तदा वीर बलिभिः कुकुरान्धकैः। वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः।
इतिश्रीमहाभारते सभापर्व्वणि राजसूयारम्भपर्व्वणि जरासन्धप्रशंसायामष्टादशोऽध्यायः समाप्तञ्च राजसूयारम्भपर्व्व ॥ १८ ॥

## ॥ अथ जरासन्धवधपर्व्व ॥ ४ ॥

॥ वासुदेव उवाच ॥ पतितौ हंसडिम्भकौ कंसश्च सगणो हतः। जरासन्धस्य निधने कालोऽयं समुपागतः।
न शक्योऽसौ रणे जेतुं सर्व्वैरपि सुरासुरैः। प्राणयुद्धेन जेतव्यः स इत्युपलभामहे।
मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः। मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः। ७२०
त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः। न सन्देहो यथा युद्धमेकेनाप्युपयास्यति।
अवमानाच्च लोभाच्च बाहुवीर्य्याच्च दर्पितः। भीमसेनेन युद्धाय ध्रुवमप्युपयास्यति।
अलमस्य महाबाहुर्भीमसेनो महाबलः। लोकस्य समुदीर्णस्य निधनायान्तको यथा।
यदि मे हृदयं वेत्सि यदि ते प्रत्ययो मयि। भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे।
॥ वैशम्पायन उवाच ॥ एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः। भीमार्जुनौ समालोक्य संप्रहृष्टमुखौ स्थितौ। ७२५
॥ युधिष्ठिर उवाच ॥ अच्युताच्युत मामेवं व्याहरामित्रकर्षण। पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयं।
यथा वदसि गोविन्द सर्व्वं तदुपपद्यते। नहि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी।
निहतश्च जरासन्धो मोचिताश्च महीक्षितः। राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः।
क्षिप्रमेव यथात्वेतत्कार्य्यं समुपपद्यते। अप्रमत्तो जगन्नाथ तथाकुरु नरोत्तम।

त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे। धर्म्मार्थकामरहितो रोगार्त इव दुःखितः। ७८०
न शौरिणा विना पार्थो न शौरिः पाण्डवं विना। नाजेयोऽस्त्यनयोर्लोके कृष्णयोरिति मे मतिः।
अयञ्च बलिनां श्रेष्ठः श्रीमानपि वृकोदरः। युवाभ्यां सहितो वीरः किं न कुर्य्यान्महायशाः।
सुप्रणीतो बलौघो हि कुरुते कार्य्यमुत्तमं। अन्धं बलं जडं प्राहुः प्रणेतव्यं विचक्षणैः।
यतो हि निम्नं भवति नयन्ति हि ततो जलं। यतश्छिद्रं ततश्चापि नयन्ते धीवरा जलं।
तस्मान्नयविधानज्ञं पुरुषं लोकविश्रुतं। वयमाश्रित्य गोविन्दं यतामः कार्य्यसिद्धये। ७८५
एवं प्रज्ञानयबलं क्रियोपायसमन्वितं। पुरस्कुर्व्वीत कार्य्येषु कृष्णं कार्य्यार्थसिद्धये।
एवमेव यदुश्रेष्ठ यावत्कार्य्यार्थसिद्धये। अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयं। नयो जयो बलञ्चैव विक्रमे सिद्धिमेष्यति।
॥ वैशम्पायन उवाच ॥ एवमुक्तास्ततः सर्व्वे भ्रातरो विपुलौजसः। वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं प्रति।
वर्च्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदं। आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः।
अमर्षादभितप्तानां ज्ञात्यर्थं मुख्यतेजसां। रविसोमाग्निवपुषां दीप्तमासीत्तदा वपुः। ७९०
हतं मेने जरासन्धं दृष्ट्वा भीमपुरोगमौ। एककार्य्यसमुद्यन्तौ कृष्णौ युद्धेऽपराजितौ।
ईशौ हि तौ महात्मानौ सर्व्वकार्य्यप्रवर्त्तिनौ। धर्म्मकामार्थलोकानां कार्य्याणाञ्च प्रवर्त्तकौ।
कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलं। रम्यं पद्मसरो गत्वा कालकूटमतीत्य च।
गण्डकीञ्च महाशोणं सदानीरान्तथैव च। एकपर्व्वतके नद्यः क्रमेणैत्याव्रजन्त ते।
उत्तीर्य्य सरयूं रम्यां दृष्ट्वा पूर्व्वांश्च कोशलां। अतीत्य जग्मुर्मिथिलां मालाञ्चर्म्मण्वतीं नदीं। ७९५
अतीत्य गङ्गां शोणञ्च त्रयस्ते प्राङ्मुखास्तदा। कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः।
ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमं। गोरथं गिरिमासाद्य ददृशुर्मागधं पुरं।
इतिश्री महाभारते सभापर्व्वणि जरासन्धवधपर्व्वणि कृष्णपाण्डवमागधयात्रायामूनर्विंशोऽध्यायः॥ १९ ॥
॥ श्रीवासुदेव उवाच ॥ एष पार्थ महान्भाति पशुमान्नित्यमम्बुमान्। निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः।
वैहारो विपुलः शैलो वराहो वृषभस्तथा। तथा ऋषिगिरिस्तात शुभाश्चैत्यकपञ्चमाः।
एते पञ्च महाशृङ्गाः पर्व्वताः शीतलद्रुमाः। रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजं। ८००
पुष्पवेष्टितशाखाग्रैर्गन्धवद्भिर्मनोरमैः। निगूढा इव लोध्राणां वनैः कामिजनप्रियैः।
शूद्रायां गौतमो यत्र महात्मा संशितव्रतः। औशीनर्य्यामजनयत्काक्षीवाद्यान्सुतान्मुनिः।
गौतमस्य क्षयात्तस्मादथाऽसौ तत्र सद्मनि। भजते मागधं वंशं स नृपाणामनुग्रहः।
अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः। गौतमक्षयमभ्येत्य रमन्ते स्म पुराऽर्जुन।
वनराजीस्तु पश्येमाः पिप्पलानां मनोरमाः। लोध्राणाञ्च शुभाः पार्थ गौतमौकःसमीपजाः। ८०५
अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ। स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः।
अपरिहार्य्या मेघानां मागधा मनुना कृताः। कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहं।
एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः। अर्थसिद्धिन्त्वनुपमां जरासन्धोऽभिमन्यते। वयमासादने तस्य दर्पमद्य हरेम हि।

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ततः सर्व्वे भ्रातरो विपुलौजसः। वार्ष्णेयः पाण्डवौ चैव प्रतस्थुर्म्मागधं पुरं।
हृष्टपुष्टजनोपेतं चातुर्व्वर्ण्यसमाकुलं। स्फीतोत्सवमनाधृष्यमासेदुश्च गिरिव्रजं। ८१०
ततो द्वारं समासाद्य पुरस्य गिरिमुच्छ्रितं। वार्हद्रथैः पूज्यमानं तथा नगरवासिभिः। मागधानान्तु रुचिरं चैत्यकान्तरमाद्रवन्।
यत्र मांसादमृषभमाससाद बृहद्रथः। तं हत्वा मासतालाभिस्तिस्रो भेरीरकारयत्।
स्वपुरे स्थापयामास तेन चानह्य चर्म्मणा। यत्र ताः प्राणदन्भेर्य्यो दिव्यपुष्पावचूर्णिताः।
भङ्क्त्वा भेरीत्रयं तेऽपि चैत्यप्राकारमाद्रवन्। द्वारतोऽभिमुखाः सर्व्वे ययुर्न्नानायुधास्तदा।
मागधानां सुरुचिरं चैत्यकन्तं समाद्रवन्। शिरसीव समाघ्नन्तो जरासन्धं जिघांसवः। ८१५
स्थिरं सुविपुलं शृङ्गं सुमहत्तत्पुरातनं। अर्च्चितं गन्धमाल्यैश्च सततं सुप्रतिष्ठितं।
विपुलैर्ब्बाहुभिर्व्वीरास्तेऽभिहत्याभ्यपातयन्। ततस्ते मागधं हृष्टाः पुरं प्रविविशुस्तदा।
एतस्मिन्नेव कालेतु ब्राह्मणा वेदपारगाः। दृष्ट्वा तु दुर्न्निमित्तानि जरासन्धमदर्शयन्।
पर्य्यग्न्यकुर्व्वंश्च नृपं द्विरदस्थं पुरोहिताः। ततस्तच्छान्तये राजा जरासन्धः प्रतापवान्।
दीक्षितो नियमस्थोऽसावुपवासपरोऽभवत्। स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः। ८२०
युयुत्सवः प्रविविशुर्ज्जरासन्धेन भारत। भक्ष्यमाल्यापणानाञ्च ददृशुः श्रियमुत्तमां।
स्फीतां सर्व्वगुणोपेतां सर्व्वकामसमृद्धिनीं। तान्तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः।
राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः। बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः।
विरागवसनाः सर्व्वे स्रग्विणो मृष्टकुण्डलाः। निवेशनमथाजग्मुर्ज्जरासन्धस्य धीमतः।
गोवासमिव वीक्षन्तः सिंहा हैमवता यथा। शालस्तम्भनिभास्तेषां चन्दनागुरुरूषिताः। ८२५
अशोभन्त महाराज बाहवो युद्धशालिनां। तान्दृष्ट्वा द्विरदप्रख्याञ्छालस्कन्धानिवोद्गतान्।
व्यूढोरस्कान्मागधानां विस्मयः समपद्यत। ते त्वतीत्य जनाकीर्णाः कक्ष्यास्तिस्रो नरर्षभाः।
अहङ्कारेण राजानमुपतस्थुर्गतव्यथाः। तान्पाद्यमधुपर्कार्हान्गवार्हान् सत्कृतिंगतान्।
प्रत्युत्थाय जरासन्ध उपतस्थे यथाविधि। उवाच चैतान्राजाऽसौ स्वागतं वोऽस्त्विति प्रभुः।
मौनमासीत्तदा पार्थभीमयोर्जनमेजय। तेषां मध्ये महाबुद्धिः कृष्णो वचनमब्रवीत्। ८३०
वक्तुं नायाति राजेन्द्र एतयोर्न्नियमस्थयोः। अर्व्वाङ्निशीथात् परतस्त्वया सार्द्धं वदिष्यतः।
यज्ञागारे स्थापयित्वा राजा राजगृहं गतः। ततोऽर्द्धरात्रे सम्प्राप्ते यातो यत्र स्थिता द्विजाः।
तस्य ह्येतद्व्रतं राजन्बभूव भुवि विश्रुतं। स्नातकान्ब्राह्मणान्प्राप्तान्श्रुत्वा स समितिञ्जयः।
अप्यर्धरात्रे नृपतिः प्रत्युद्गच्छति भारत। तांस्त्वपूर्व्वेण वेशेन दृष्ट्वा स नृपसत्तमः।
उपतस्थे जरासन्धो विस्मितश्चाभवत्तदा। ते तु दृष्ट्वैव राजानं जरासन्धं नरर्षभाः। ८३५
इदमूचुरमित्रघ्नाः सर्व्वे भरतसत्तम। स्वस्त्यस्तु कुशलं राजन्निति तत्र व्यवस्थिताः।
तं नृपं नृपशार्दूल प्रेक्षमाणाः परस्परं। तानब्रवीज्जरासन्धस्तथा पाण्डवयादवान्।
आस्यतामिति राजेन्द्र ब्राह्मणच्छद्मसंवृतान्। अथोपविविशुः सर्व्वे त्रयस्ते पुरुषर्षभाः।

सम्प्रदीप्तास्तथो लक्ष्म्या महाध्वर इवाग्नयः। तानुवाच जरासन्धः सत्यसन्धो नराधिपः।
विगर्हमाणः कौरव्य वेशग्रहणवैकृतान्। न स्नातकव्रता विप्रा वहिर्माल्यानुलेपनाः। ८४०
भवन्तीति नृलोकेऽस्मिन्विदितं मम सर्व्वशः। के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः।
बिभ्रतः चात्त्रमोजश्च ब्राह्मण्यं प्रतिजानथ। एवं विरागवसना वहिर्माल्यानुलेपनाः।
सत्यं वदत के यूयं सत्यं राजसु शोभते। चैत्यकस्य गिरेः शृङ्गं भित्त्वा किमिह छद्मना।
अद्वारेण प्रविष्टाःस्थ निर्भया राजकिल्बिषात्। वदध्वं वाचि वीर्य्यञ्च ब्राह्मणस्य विशेषतः।
कर्म्म चैतद्विलिङ्गस्थं किं वोऽद्य प्रसमीक्षितं। एवञ्च मामुपास्थाय कस्माच्च विधिनाऽर्हणां। ८४५
प्रणीतान्नानुगृह्णीत कार्य्यं किं वाऽस्मदागमे। एवमुक्ते ततः कृष्णः प्रत्युवाच महामनाः।
स्निग्धगम्भीरया वाचा वाक्यं वाक्यविशारदः।

॥ श्रीकृष्ण उवाच॥ स्नातकान्ब्राह्मणान्राजन् विद्ध्यस्मांस्त्वं नराधिप। स्नातक व्रतिनो राजन्ब्राह्मणा क्षत्त्रिया विशः।
विशेषनियमाश्चैषामविशेषाश्च सन्त्युत। विशेषवांश्च सततं क्षत्त्रियः श्रियमृच्छति।
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयं। क्षत्त्रियो बाहुवीर्य्यस्तु न तथा वाक्यवीर्य्यवान्। ८५०
अप्रगल्भं वचस्तस्य तस्माद्बार्हद्रथेरितं। स्ववीर्य्यं क्षत्त्रियाणान्तु बाह्वोर्धाता न्यवेशयत्।
तद्दिदृक्षसि चेद्राजन् द्रष्टाऽस्यद्य न संशयः। अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहान्।
प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्म्मतः। कार्य्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयं। प्रतिगृह्णीम तद्विद्धि एतन्नः शाश्वतं व्रतं।

॥ इति श्रीमहाभारते सभापर्व्वणि जरासन्धवधपर्व्वणि कृष्णजरासन्धसंवादे विंशोऽध्यायः ॥ २० ॥

॥ जरासन्ध उवाच॥ न स्मरामि कदा वैरं कृतं युष्माभिरित्युत। चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतं।
वैकृते वाऽसति कथं मन्यध्वं मामनागसं। अरिं वै ब्रूत हे विप्राः सतां समय एष हि। ८५५
अर्थधर्म्मोपघाताद्धि मनःसमुपतप्यते। योऽनागसि प्रसृजति क्षत्त्रियो हि न संशयः।
अतोऽन्यथा चरल्लोके धर्मज्ञः सन्महारथः। वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च।
त्रैलोक्ये क्षत्त्रधर्म्मो हि श्रेयान्वै साधुचारिणां। नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो जनाः।
तस्य मेऽद्य स्थितस्येह स्वधर्मे नियतात्मनः। अनागसःप्रजानाञ्च प्रमादादिव जल्पथ।
॥ श्रीकृष्ण उवाच॥ कुलकार्य्यं महाबाहो कश्चिदेकः कुलोद्वहः। वहते यस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि। ८६०
त्वया चोपहृता राजन् क्षत्त्रिया लोकवासिनः। तदागः क्रूरमुत्पाद्य मन्यसे किमनागसं।
राजा राज्ञः कथं साधून् हिंस्यान्नृपतिसत्तम। तद्राज्ञः सन्निगृह्य त्वं रुद्रायोपजिहीर्षसि।
अस्मांस्तदेनोपगच्छेत् कृतं बार्हद्रथ त्वया। वयं हि शक्ता धर्म्मस्य रक्षणे धर्म्मचारिणः।
मनुष्याणां समालम्भो न च दृष्टः कदाचन। स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करं।
सवर्णो हि सवर्णानां पशुसंज्ञां करिष्यसि। कोऽन्य एवं यथा हि त्वं जरासन्ध वृथामतिः। ८६५
यस्यां यस्यामवस्थायां यद्यत्कर्म्म करोति यः। तस्यां तस्यामवस्थायां तत्फलं समवाप्नुयात्।

ते त्वां ज्ञातिक्षयकरं वयमार्त्तानुसारिणः। ज्ञातिवृद्धिनिमित्तार्थं विनियन्तुमिहागताः।
नास्ति लोके पुमानन्यः क्षत्रियेष्विति चैव तत्। मन्यसे स च ते राजन् सुमहान्बुद्धिविप्लवः।
को हि जानन्नभिजनमात्मवान् क्षत्रियो नृपः। नाविशेत्स्वर्गमतुलं रणानन्तरमव्ययं।
स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः। जयन्ति क्षत्रिया लोकांस्तद्विद्धि मनुजर्षभ। ८७०
स्वर्गयोनिर्महद्ब्रह्म स्वर्गयोनिर्महद्यशः। स्वर्गयोनिस्तपो युद्धे मृत्युः सोऽव्यभिचारवान्।
एष ह्यैन्द्रो वैजयन्तो गुणैर्नित्यं समाहितः। येनासुरान्पराजित्य जगत्पाति शतक्रतुः।
स्वर्गमार्गाय कस्य स्याद्विग्रहो वै यथा तव। मागधैर्व्विपुलैः सैन्यैर्बाहुल्यबलदर्पितः।
माऽवमंस्थाः परान्राजन्नस्ति वीर्य्यं नरे नरे। समं तेजस्त्वया चैव विशिष्टं वा नरेश्वर।
यावदेतदसम्बुद्धं तावदेव भवेत्तव। विषह्यमेतदस्माकमतो राजन्ब्रवीमि ते। ८७५
जहि त्वं सदृशेष्वेव मानं दर्पञ्च मागध। मा गमः ससुतामात्यः सबलश्च यमक्षयं।
दम्भोद्भवः कार्त्तवीर्य्य उत्तरश्च बृहद्रथः। श्रेयसो ह्यवमन्येह विनेशुः सबला नृपाः।
युयुक्षमाणास्त्वत्तो हि न वयं ब्राह्मणा ध्रुवं। शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ।
त्वामाह्वयामहे राजन्स्थिरो युध्यस्व मागध। मुञ्च वा नृपतीन्सर्व्वान्गच्छ वा त्वं यमक्षयं।
॥ जरासन्ध उवाच ॥ नाजितान्वै नरपतीनहमादद्मि काश्चन। अजितः पर्य्यवस्थाता कोऽत्र यो न मया जितः। ८८०
क्षत्रियस्यैतदेवाहुर्धर्म्यं कृष्णोपजीवनं। विक्रम्य वशमानीय कामतो यत्समाचरेत्।
देवतार्थमुपाहृत्य राज्ञः कृष्ण कथं भयात्। अहमद्य विमुच्येयं क्षात्रं व्रतमनुस्मरन्।
सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः। द्वाभ्यां त्रिभिर्व्वा योत्स्येऽहं युगपत्पृथगेव वा।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा जरासन्धः सहदेवाभिषेचनं। आज्ञापयत्तदा राजा युयुत्सुर्भीमकर्म्मभिः।
स तु सेनापतिं राजा सस्मार भरतर्षभ। कौशिकं चित्रसेनञ्च तस्मिन्युद्ध उपस्थिते। ८८५
ययोस्ते नामनी राजन हंसेति डिम्भकेति च। पूर्व्वं सङ्कथिते पुंभिर्नृलोके लोकसत्कृते।
तन्तु राजन्विभुः शौरी राजानं बलिनाम्वरं। स्मृत्वा पुरुषशार्दूलः शार्दूलसमविक्रमं।
सत्यसन्धो जरासन्धं भुवि भीमपराक्रमं। भागमन्यस्य निर्द्दिष्टमवध्यं मधुभिर्म्मृधे।
नात्मनात्मवतां मुख्य इयेष मधुसूदनः। ब्राह्मीमाज्ञां पुरस्कृत्य हन्तुं हलधरानुजः।
इति श्रीमहाभारते सभापर्व्वणि जरासन्धवधपर्व्वणि जरासन्धयुद्धोद्योगे एकविंशतितमोऽध्यायः ॥ २१ ॥
॥ वैशम्पायन उवाच ॥ ततस्तं निश्चितात्मानं युद्धाय यदुनन्दनः। उवाच वाग्मी राजानं जरासन्धमधोक्षजः। ८९०
॥ श्रीकृष्ण उवाच ॥ त्रयाणां केन ते राजन्योद्धुमुत्सहते मनः। अस्मदन्यतमेनेह सज्जीभवतु को युधि।
एवमुक्तः स नृपतिर्युद्धं वव्रे महाद्युतिः। जरासन्धस्ततो राजा भीमसेनेन मागधः।
आदाय रोचनां माल्यं मङ्गल्यान्यपराणि च। धारयन्नगदान् मुख्यान् निर्वृतीर्व्वेदनानि च। उपतस्थे जरासन्धं युयुत्सुं वै पुरोहितः।

कृतस्वस्त्ययनो राजा ब्राह्मणेन यशस्विना । समनह्य जरासन्धः क्षात्त्रं धर्म्ममनुस्मरन् ।
अवमुच्य किरीटं स केशान् समनुगृह्य च । उदतिष्ठज्जरासन्धो वेगातिग इवार्णवः । ८९५
उवाच मतिमान्राजा भीमं भीमपराक्रमः । भीम योत्स्ये त्वया सार्द्धं श्रेयसा निर्जितं वरं ।
एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः । प्रत्युद्ययौ महातेजाः शक्रं बल इवासुरः ।
ततः सम्मन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली । भीमसेनो जरासन्धमाससाद युयुत्सया ।
ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः । वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ।
करग्रहणपूर्व्वन्तु कृत्वा पादाभिवन्दनं । कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः । ९००
स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः । अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो ।
चित्रहस्तादिकं कृत्वा कक्षाबन्धञ्च चक्रतुः । गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिं ।
बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ । उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ ।
करसम्पीडनं कृत्वा गर्ज्जन्तौ वारणाविव । नर्द्दन्तौ मेघसंकाशौ बाहुप्रहरणावुभौ ।
तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ । सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यतां । ९०५
अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि । आवृत्य बाहुभिश्चापि उदरञ्च प्रचक्रतुः ।
उभौ कक्ष्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ । अधोहस्तं स्वकण्ठेतूदरस्योरसि चाक्षिपत् ।
सर्व्वातिक्रान्तमर्य्यादं पृष्ठभङ्गञ्च चक्रतुः । सम्पूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः ।
तृणपीडं यथाकामं पूर्णयोगं समुष्टिकं । एवमादीनि युद्धानि प्रकुर्व्वन्तौ परस्परं ।
तयोर्युद्धं ततो द्रष्टुं समेताः पुरवासिनः । ब्राह्मणा वणिजश्चैव क्षत्रियाश्च सहस्रशः । ९१०
शूद्राश्च नरशार्दूल स्त्रियो वृद्धाश्च सर्वशः । निरन्तरमभूत्तत्र जनौघैरभिसंवृतं ।
तयोरथ भुजाघातान्निग्रहप्रग्रहात्तथा । आसीत्सुभीमः सम्पातो वज्रपर्व्वतयोरिव ।
उभौ परमसंहृष्टौ बलेन बलिनांवरौ । अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ।
तद्भीममुत्सार्य्य जनं युद्धमासीदुपह्वरे । बलिनोः संयुगे राजन् वृत्रवासवयोरिव ।
प्रकर्षणाकर्षणाभ्यामनुकर्षविकर्षणैः । आचकर्षतुरन्योऽन्यं जानुभिश्चावजघ्नतुः । ९१५
ततः शब्देन महता भर्त्सयन्तौ परस्परं । पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ । बाहुभिः समसज्जेतामायसैः परिघैरिव ।
कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि । अनाहारं दिवारात्रमविश्रान्तमवर्त्तत ।
तद्वृत्तन्तु त्रयोदश्यां समवेतं महात्मनोः । चतुर्द्दश्यां निशायान्तु निवृत्तो मागधः क्लमात् ।
तं राजानं तथा क्लान्तं दृष्ट्वा राजन्जनार्दनः । उवाच भीमकर्म्माणं भीमं सम्बोधयन्निव । ९२०
क्लान्तः शत्रुर्न कौन्तेय लभ्यः पीडयितुं रणे । पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः ।
तस्मात्ते नैव कौन्तेय पीडनीयो जनाधिप । सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ ।
एवमुक्तः स कृष्णेन पाण्डवः परवीरहा । जरासन्धस्य तद्रूपं ज्ञात्वा चक्रे मतिं वधे ।

ततस्तमजितं जेतुं जरासन्धं वृकोदरः। संरब्धं बलिनां श्रेष्ठो जग्राह कुरुनन्दनः।

इति श्रीमहाभारते सभापर्व्वणि जरासन्धवधपर्व्वणि जरासन्धक्लान्तौदार्व्विंशोऽध्यायः॥ २२ ॥

॥ वैशम्पायन उवाच ॥ भीमसेनस्ततः कृष्णमुवाच यदुनन्दनं। बुद्धिमास्थाय विपुलां जरासन्धवधेप्सया। ९२५

नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुं। प्राणेन यदुशार्दूल बद्धकक्षेण वाससा।

एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरं। त्वरयन् पुरुषव्याघ्रो जरासन्धवधेप्सया।

यत्ते दैवं परं सत्त्वं यच्च ते मातरिश्वनः। बलं भीम जरासन्धे दर्शयाद्य तदद्य वै।

एवमुक्तस्तदा भीमो जरासन्धमरिन्दम। उत्क्षिप्य भ्रामयामास बलवन्तं महाबलः।

भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ। बभञ्ज पृष्ठं संक्षिप्य निष्पिष्य विननाद च। करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः।९३०

तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्ज्जतः। अभवत्तुमुलो नादः सर्व्वप्राणिभयङ्करः।

वितेसुर्म्मागधाः सर्व्वे स्त्रीणां गर्भाश्च सुस्रुवुः। भीमसेनस्य नादेन जरासन्धस्य चैव ह।

किन्नु स्याद्धिमवान् भिन्नः किन्नु स्विद्दीर्य्यते मही। इति वै मागधा जज्ञुर्भीमसेनस्य निःस्वनात्।

ततो राजकुलद्वारि प्रसुप्तमिव तं नृपं। रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः।

जरासन्धरथं कृष्णो योजयित्वा पताकिनं। आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान्। ९३५

ते वै रत्नभुजं कृष्णं रत्नार्हाः पृथिवीश्वराः। राजानश्चक्रुराराद्य मोक्षिता महतो भयात्। अक्षतः शस्त्रसम्पन्नो जितारिः सह राजभिः।

रथमास्थाय तं दिव्यं निर्ज्जगाम गिरिव्रजात्। यः स सोदर्य्यवान्नाम द्वियोधः कृष्णसारथिः। अभ्यासघाती संदृश्यो दुर्जयः सर्व्वराजभिः।

भीमार्ज्जुनाभ्यां योधाभ्यामास्थितः कृष्णसारथिः। शुशुभे रथवर्य्योऽसौ दुर्जयः सर्व्वधन्विभिः।

शक्रविष्णू हि संग्रामे चेरतुस्तारकामये। रथेन तेन वै कृष्ण उपारुह्य ययौ तदा।

तप्तचामीकराभेण किङ्किणीजालमालिना। मेघनिर्घोषनादेन जैत्रेणामित्रघातिना। ९४०

येन शक्रो दानवानां जघान नवतीर्नव। तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः।

ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा। रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः।

हयैर्दिव्यैः समायुक्तो रथो वायुसमो जवे। अधिष्ठितः स शुशुभे कृष्णेनातीव भारत।

असङ्गो देवविहितस्तस्मिन् रथवरे ध्वजः। योजनाद्ददृशे श्रीमानिन्द्रायुधसमप्रभः।

चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात्। क्षणे तस्मिन् स तेनासीच्चैत्यवृक्ष इवोत्थितः। ९४५

व्यादितास्यैर्महानादैः सह भूतैर्ध्वजालयैः। तस्मिन् रथवरे तस्थौ गरुत्मान् पन्नगाशनः।

दुर्निरीक्ष्यो हि भूतानां तेजसाऽभ्यधिकं बभौ। आदित्य इव मध्याह्ने सहस्रकिरणावृतः।

न स सज्जति वृक्षेषु शस्त्रैश्चापि न रिष्यते। दिव्यो ध्वजवरो राजन् दृश्यते चेह मानुषैः।

तमास्थाय रथं दिव्यं पर्ज्जन्यसमनिःस्वनं। निर्ययौ पुरुषव्याघ्रः पाण्डवाभ्यां सहाच्युतः।

यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः। बृहद्रथात् क्रमेणैव प्राप्तो बार्हद्रथं नृपं। ९५०

स निर्याय महाबाहुः पुण्डरीकेक्षणस्ततः । गिरिव्रजाद्बहिस्तस्थौ समदेशे महायशाः ।
तत्रैनं नागराः सर्व्वे सत्कारेणाभ्ययुस्तदा । ब्राह्मणप्रमुखा राजन्विधिदृष्टेन कर्म्मणा ।
बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनं । पूजयामासुरूचुश्च स्तुतिपूर्व्वमिदं वचः ।
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दने । भीमार्जुनबलोपेते धर्म्मस्य प्रतिपालनं ।
जरासन्धह्रदे घोरे दुःखपङ्के निमज्जतां । राज्ञां समभ्युद्धरणं यदिदं कृतमद्य वै । ८८५
विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे । दिष्ट्या मोक्षाद्यशो दीप्तमाप्तं ते यदुनन्दन ।
किङ्कुर्म्मः पुरुषव्याघ्र शाधि नः प्रणतिस्थितान् । कृतमित्येव तद्विद्धि नृपैर्यद्यपि दुष्करं ।
तानुवाच हृषीकेशः समाश्वास्य महामनाः । युधिष्ठिरो राजसूयं क्रतुमाहर्त्तुमिच्छति ।
तस्य धर्म्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः । सर्व्वैर्भवद्भिर्व्विज्ञाय साहाय्यं क्रियतामिति ।
ततः सुप्रीतमनसस्ते नृपा नृपसत्तम । तथेत्येवाब्रुवन्सर्व्वे प्रतिगृह्यास्य तां गिरं । ८९०
रत्नभाजश्च दाशार्हं चक्रुस्ते पृथिवीश्वराः । कृच्छ्राज्जग्राह गोविन्दस्तेषां तदनुकम्पया ।
जरासन्धात्मजश्चैव सहदेवो महामनाः । निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितं ।
स नीचैःप्रणतो भूत्वा बहुरत्नपुरोगमः । सहदेवो नृणां देवं वासुदेवमुपस्थितः ।
भयार्ताय ततस्तस्मै कृष्णो दत्त्वाऽभयं तदा । आददेऽस्य महार्हाणि रत्नानि पुरुषोत्तमः ।
अभ्यषिञ्चत तत्रैव जरासन्धात्मजं मुदा । गत्वैकत्वञ्च कृष्णेन पार्थाभ्यां चैव सत्कृतः । ८९५
विवेश राजा द्युतिमान्बार्हद्रथपुरं नृप । अभिषिक्तो महाबाहुर्जारासन्धिर्म्महात्मभिः ।
कृष्णस्तु सह पार्थाभ्यां श्रिया परमया युतः । रत्नान्यादाय भूरीणि प्रययौ पुरुषर्षभः ।
इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः । समेत्य धर्म्मराजानं प्रीयमाणोऽभ्यभाषत ।
दिष्ट्या भीमेन बलवान्जरासन्धो निपातितः । राजानो मोक्षिताश्चैव बन्धनान्नृपसत्तम ।
दिष्ट्या कुशलिनौ चेमौ भीमसेनधनञ्जयौ । पुनः स्वनगरं प्राप्तावक्षताविति भारत । ९००
ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः । भीमसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे ।
ततः क्षीणे जरासन्धे भ्रातृभ्यां विहितं जयं । अजातशत्रुरासाद्य मुमुदे भ्रातृभिः सह ।
यथावयः समागम्य भ्रातृभिः सह पाण्डवः । सत्कृत्य पूजयित्वा च विससर्ज्ज नराधिपान् ।
युधिष्ठिराभ्यनुज्ञातास्ते नृपा हृष्टमानसाः । जग्मुः स्वदेशांस्त्वरिता यानैरुच्चावचैस्ततः ।
एवं पुरुषशार्दूलो महाबुद्धिर्जनार्द्दनः । पाण्डवैर्घातयामास जरासन्धमरिं तदा । ९०५
घातयित्वा जरासन्धं बुद्धिपूर्व्वमरिन्दमः । धर्म्मराजमनुज्ञाप्य पृथां कृष्णाञ्च भारत ।
सुभद्रां भीमसेनञ्च फाल्गुणं यमजौ तथा । धौम्यमामन्त्रयित्वा च प्रययौ स्वां पुरीं प्रति ।
तेनैव रथमुख्येन मनसस्तुल्यगामिना । धर्म्मराजविसृष्टेन दिव्येनानादयन्दिशः ।
ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ । प्रदक्षिणमकुर्व्वन्त कृष्णमक्लिष्टकारिणं ।
ततो गते भगवति कृष्णे देवकिनन्दने । जयं लब्ध्वा सुविपुलं राज्ञां दत्त्वाऽभयन्तदा । ९१०

संवर्धितं यशो भूयः कर्मणा तेन भारत। द्रौपद्याः पाण्डवा राजन्परां प्रीतिमवर्द्धयन्।
तस्मिन्काले तु यद्युक्तं धर्मकामार्थसंहितं। तद्राजा धर्मतश्चक्रे प्रजापालनकीर्त्तनं।
इतिश्रीमहाभारते सभापर्व्वणि जरासन्धवधपर्व्वणि जरासन्धवधे त्रयोविंशोऽध्यायः समाप्तञ्चजरासन्धवधपर्व्व ॥ २३ ॥

## ॥ अथ दिग्विजयपर्व्व ॥ ५ ॥

॥ वैशम्पायन उवाच ॥ पार्थः प्राप्य धनुः श्रेष्ठमक्षय्यौ च महेषुधी। रथं ध्वजं सभाञ्चैव युधिष्ठिरमभाषत।
॥ अर्जुन उवाच ॥ धनुरस्त्रं महावीर्यं पक्षो भूमिर्यशो बलं। प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितं।
तत्र कृत्यमहं मन्ये कोषस्य परिवर्द्धनं। करमाहारयिष्यामि राज्ञः सर्व्वान्नृपोत्तम। ९८५
विजयाय प्रयास्यामि दिशं धनदपालितां। तिथावथ मुहूर्त्ते च नक्षत्रे चाभिपूजिते।
॥ वैशम्पायन उवाच ॥ धनञ्जयवचः श्रुत्वा धर्मराजो युधिष्ठिरः। स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत।
स्वस्ति वाच्यार्हतो विप्रान्प्रयाहि भरतर्षभ। दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च।
विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्स्यसि। इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः।
अग्निदत्तेन दिव्येन रथेनाद्भुतकर्म्मणा। तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ। ९९०
ससैन्याः प्रययुः सर्व्वे धर्मराजेन पूजिताः। दिशं धनपतेरिष्टामजयत्पाकशासनिः।
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणां। प्रतीचीं नकुलो राजन्दिशं व्यजयतास्त्रवित्।
खाण्डवप्रस्थमध्यस्थो धर्मराजो युधिष्ठिरः। आसीत्परमया लक्ष्म्या सुहृद्गणवृतः प्रभुः।
इतिश्री महाभारते सभापर्व्वणि दिग्विजयपर्व्वणि दिग्विजयसंक्षेपकथने चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ जनमेजय उवाच ॥ दिशामभिजयं ब्रह्मन्विस्तरेणानुकीर्त्तय। नहि तृप्यामि पूर्व्वेषां शृण्वानश्चरितं महत्।
॥ वैशम्पायन उवाच ॥ धनञ्जयस्य वक्ष्यामि विजयं पूर्व्वमेव ते। यौगपद्येन पार्थैर्हि निर्जितेयं वसुन्धरा। ९९५
पूर्व्वं कुलिन्दविषये वशे चक्रे महीपतीन्। धनञ्जयो महाबाहुर्नातितीव्रेण कर्म्मणा।
आनर्त्तान् कालकूटांश्च कुलिन्दांश्च विजित्य सः। सुमण्डलञ्चावजितं कृतवान्सहसैनिकं।
स तेन सहितो राजन्सव्यसाची परन्तपः। विजिग्ये शाकलं द्वीपं प्रतिविन्ध्यञ्च पार्थिवं।
शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः। अर्जुनस्य च सैन्यैस्तैर्विग्रहस्तुमुलोऽभवत्।
स तानपि महेष्वासान् विजिग्ये भरतर्षभ। तैरेव सहितः सर्व्वैः प्राग्ज्योतिषमुपाद्रवत्। १०००
तत्र राजा महानासीद्भगदत्तो विशाम्पते। तेनासीत्सुमहद्युद्धं पाण्डवस्य महात्मनः।
स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत्। अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः।
ततः स दिवसानष्टौ योधयित्वा धनञ्जयं। प्रहसन्नब्रवीद्राजा संग्रामे विगतक्लमं।
उपपन्नं महाबाहो त्वयि पाण्डवनन्दन। पाकशासनदायादे वीर्य्यमाहवशोभिनि।
अहं सखा महेन्द्रस्य शक्रादनवरो रणे। न शक्यामि च ते तात स्थातुं प्रमुखतो युधि। १००५
त्वमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते। यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक।

॥ अर्जुन उवाच ॥ कुरूणामृषभो राजा धर्म्मपुत्त्रो युधिष्ठिरः। धर्म्मज्ञः सत्यसन्धश्च यज्वा विपुलदक्षिणः। तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयतां।
भवान्पितृसखा चैव प्रीयमाणो मयाऽपि च। ततो नाज्ञापयामि त्वां प्रीतिपूर्व्वं प्रदीयतां।
॥ भगदत्त उवाच ॥ कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः। सर्व्वमेतत्करिष्यामि किञ्चान्यत्करवाणि ते।
॥ इतिश्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि भगदत्तजये पञ्चविंशोऽध्यायः॥ २५॥
॥ वैशम्पायन उवाच ॥ एवमुक्तः प्रत्युवाच भगदत्तं धनञ्जयः। अनेनैव कृतं सर्व्वं भविष्यत्यनुजानता। १०१०
तं विजित्य महाबाहुः कुन्तीपुत्त्रो धनञ्जयः। प्रययावुत्तरां तस्माद्दिशं धनदपालितां।
अन्तर्गिरिञ्च कौन्तेय तथैव च बहिर्गिरिं। तथैवोपगिरिञ्चैव विजिग्ये पुरुषर्षभः।
विजित्य पर्व्वतान्सर्व्वान्ये च तत्र नराधिपाः। तान्वशे स्थापयित्वा स धनान्यादाय सर्व्वशः।
तैरेव सहितः सर्व्वैरनुरज्य च तान्नृपान्। उलूकवासिनं राजन्बृहन्तमुपजग्मिवान्।
मृदङ्गवरनादेन रथनेमिस्वनेन च। हस्तिनाञ्च निनादेन कम्पयन्वसुधामिमां। १०१५
ततो बृहन्तस्त्वरितो बलेन चतुरङ्गिणा। निष्क्रम्य नगरात्तस्माद्योधयामास फाल्गुनं।
सुमहान्सन्निपातोऽभूद्धनञ्जयबृहन्तयोः। न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमं।
सोऽविषह्यतमं मत्वा कौन्तेयं पर्व्वतेश्वरः। उपावर्त्तत दुर्धर्षो धनान्यादाय सर्व्वशः।
सतद्राज्यमवस्थाप्य उलूकसहितो ययौ। सेनाबिन्दुमथो राजन्राज्यादाशु समाक्षिपत्।
मोदापुरं वामदेवं सुदामानं सुसङ्कुलं। उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत्। १०२०
तत्रस्थः पुरुषैरेव धर्म्मराजस्य शासनात्। किरीटी जितवान् राजन्देशानपञ्च गणांस्ततः।
स देवप्रस्थमासाद्य सेनाबिन्दोः पुरं प्रति। बलेन चतुरङ्गेण निवेशमकरोत्प्रभुः।
स तैः परिवृतः सर्व्वैर्विश्वगश्वं नराधिपं। अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभं।
विजित्य चाहवे शूरान्पार्व्वतीयान्महारथान्। जिगाय सेनया राजन् पुरं पौरवरक्षितं।
पौरवं युधि निर्जित्य दस्यून्पर्व्वतवासिनः। गणानुत्सवसङ्केतानजयत् सप्त पाण्डवः। ततः काश्मीरकान् वीरान् क्षत्रियान् क्षत्रियर्षभः। व्यजयल्लोहितञ्चैव मण्डलैर्दशभिः सह। १०२५
ततस्त्रिगर्तान्कौन्तेयं दार्व्वाः कोकनदास्तथा। क्षत्रिया बहवो राजन्नुपावर्तन्त सर्व्वशः।
अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः। उरगावासिनञ्चैव रोचमानं रणेऽजयत्।
ततः सिंहपुरं रम्यं चित्रायुधसुरक्षितं। प्राधमद्बलमास्थाय पाकशासनिराहवे।
ततः सुह्मं सुमालांश्च किरीटी पाण्डवर्षभः। सहितः सर्व्वसैन्येन प्रामथत्कुरुनन्दनः।
ततः परमविक्रान्तो वाह्लीकान्पाकशासनिः। महता परिमर्द्देन वशे चक्रे दुरासदान्। १०३०
गृहीत्वा तु बलं सारं फाल्गुनः पाण्डुनन्दनः। दरदान्सह काम्बोजैरजयत्पाकशासनिः।
प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः। निवसन्ति वने ये च तान्सर्व्वानजयत्प्रभुः।
लोहान् परमकाम्बोजानृषिकानुत्तरानपि। सहितांस्तान्महाराज व्यजयत्पाकशासनिः।

ऋषिकेष्वपि संग्रामो बभूवातिभयङ्करः। तारकामयसङ्काशः परमऋषिकपार्थयोः।
स विजित्य ततो राजन्नृषिकान् रणमूर्द्धनि। शुकोदरसमांस्तत्र हयानष्टौ समानयत्। १०२५
मयूरसदृशानन्यानुत्तरानपरानपि। जवनानाशुगांश्चैव करार्थं समुपानयत्।
स विनिर्जित्य संग्रामे हिमवन्तं सनिष्कुटं। श्वेतपर्व्वतमासाद्य न्यविशत्पुरुषर्षभः।
इति श्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि नानादेशजये षड्विंशोऽध्यायः ॥ २६ ॥
॥ वैशम्पायन उवाच ॥ स श्वेतपर्व्वतं वीरः समतिक्रम्य वीर्य्यवान्। देशं किम्पुरुषावासं द्रुमपुत्रेण रक्षितं।
महता सन्निपातेन क्षत्रियान्तकरेण ह। अजयत्पाण्डवश्रेष्ठः करे चैनं न्यवेशयत्।
तं जित्वा हाटकं नाम देशं गुह्यकरक्षितं। पाकशासनिरव्यग्रः सहसैन्यः समासदत्। १०३०
तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमं। ऋषिकुल्यास्तथा सर्व्वा ददर्श कुरुनन्दनः।
सरो मानसमासाद्य हाटकानभितः प्रभुः। गन्धर्व्वरक्षितं देशमजयत्पाण्डवस्ततः।
तत्र तित्तिरिकल्माषान् मण्डूकाख्यान् हयोत्तमान्। लेभे स करमत्यन्तं गन्धर्व्वनगरात्तदा।
उत्तरं हरिवर्षन्तु स समासाद्य पाण्डवः। इयेष जेतुं तं देशं पाकशासननन्दनः।
तत एनं महावीर्य्या महाकाया महाबलाः। द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन्। १०३५
पार्थ नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपावर्त्तस्व कल्याण पर्य्याप्तमिदमच्युत।
इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः। प्रीयामहे त्वया वीर पर्य्याप्तो विजयस्तव।
न चात्र किञ्चिज्जेतव्यमर्ज्जुनात्र प्रदृश्यते। उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते।
प्रविष्टोऽपि हि कौन्तेय नेह द्रक्ष्यसि किञ्चन। नहि मानुषदेहेन शक्यमत्राभिवीक्षितुं।
अथेह पुरुषव्याघ्र किञ्चिदन्यच्चिकीर्षसि। तत्प्रब्रूहि करिष्यामो वचनात्तव भारत। १०४०
ततस्तानब्रवीद्राजन्नर्ज्जुनः प्रहसन्निव। पार्थिवत्वं चिकीर्षामि धर्म्मराजस्य धीमतः।
न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः। युधिष्ठिराय यत्किञ्चित्करपण्यं प्रदीयतां।
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च। क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करं।
एवं स पुरुषव्याघ्रो विजित्य दिशमुत्तरां। संग्रामान्सुबहून्कृत्वा क्षत्रियैर्दस्युभिस्तथा।
स विनिर्ज्जित्य राज्ञस्तान्करे च विनिवेश्य तु। धनान्यादाय सर्व्वेभ्यो रत्नानि विविधानि च। १०४५
हयांस्तित्तिरिकल्माषाञ्छुकपत्रनिभानपि। मयूरसदृशानन्यान्सर्व्वाननिलरंहसः।
वृतः सुमहता राजन् बलेन चतुरङ्गिणा। आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमं।
धर्म्मराजाय तत्पार्थो धनं सर्व्वं सवाहनं। न्यवेदयदनुज्ञातस्तेन राज्ञा गृहान् ययौ।
इति श्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि अर्ज्जुनोत्तरदिग्विजये सप्तविंशोऽध्यायः ॥ २७ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्य्यवान्। धर्म्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति।
महता बलचक्रेण परराष्ट्रावमर्द्दिना। हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान्। १०५०
वृतो भरतशार्दूलो द्विषच्छोकविवर्द्धनः। स गत्वा नरशार्दूलः पञ्चालानां पुरं महत्।

पञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः। ततः स गण्डकाञ्छूरो विदेहान्भरतर्षभः।
विजित्याल्पेन कालेन दशार्णानजयत्प्रभुः। तत्र दाशार्णको राजा सुधर्म्मा लोमहर्षणं।
कृतवान्भीमसेनेन महद्युद्धं निरायुधं। भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म्म महात्मनः।
अधिसेनापतिं चक्रे सुधर्म्माणं महाबलं। ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः। १०६५
सैन्येन महता राजन्कम्पयन्निव मेदिनीं। सोऽश्वमेधेश्वरं राजन्रोचमानं सहानुगं।
जिगाय समरे वीरो बलेन बलिनाम्बरः। स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्म्मणा।
पूर्व्वदेशं महावीर्य्यो विजिग्ये कुरुनन्दनः। ततो दक्षिणमागम्य पुलिन्दनगरं महत्।
सुकुमारं वशे चक्रे सुमित्रञ्च नराधिपं। ततस्तु धर्म्मराजस्य शासनाद्भरतर्षभः। शिशुपालं महावीर्य्यमभ्यगाज्जनमेजय।
चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितं। उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परन्तपः। १०७०
तौ समेत्य महाराज कुरुचेदिवृषौ तदा। उभयोरात्मकुलयोः कौशल्यं पर्य्यपृच्छतां।
ततो निवेद्य तद्राष्ट्रं चेदिराजो विशाम्पते। उवाच भीमं प्रहसन्किमिदं कुरुषेऽनघ।
तस्य भीमस्तदाचख्यौ धर्म्मराजचिकीर्षितं। स च तं प्रतिगृह्यैव तथा चक्रे नराधिपः।
ततो भीमस्तत्र राजन्नुषित्वा त्रिदशक्षपाः। सत्कृतः शिशुपालेन ययौ स बलवाहनः।
इति श्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि प्राचीजयेऽष्टाविंशोऽध्यायः॥ २८ ॥
॥ वैशम्पायन उवाच॥ ततः कुमारविषये श्रेणिमन्तमथाजयत्। कोशलाधिपतिञ्चैव बृहद्बलमरिन्दमः। १०७५
अयोध्यायान्तु धर्म्मज्ञं दीर्घयज्ञं महाबलं। अजयत्पाण्डवश्रेष्ठो नातितीव्रेण कर्म्मणा।
ततो गोपालकक्षञ्च सोत्तरानपि कोशलान्। मल्लानामधिपञ्चैव पार्थिवञ्चाजयत्प्रभुः।
ततो हिमवतः पार्श्वं समभ्येत्य जलोद्भवं। सर्व्वमल्पेन कालेन देशं चक्रे वशं बली।
एवं बहुविधान् देशान् विजिग्ये भरतर्षभः। भल्लाटमभितो जिग्ये शुक्तिमन्तञ्च पर्व्वतं।
पाण्डवः सुमहावीर्य्यो बलेन बलिनां वरः। सकाशिराजं समरे सुबाहुमनिवर्त्तिनं। १०८०
वशे चक्रे महाबाहुर्भीमो भीमपराक्रमः। ततः सुपार्श्वमभितस्तथा राजपतिं क्रथं।
युध्यमानं बलात्सङ्ख्ये विजिग्ये पाण्डवर्षभः। ततो मत्स्यान्महातेजा मलदांश्च महाबलान्।
अनघानभयांश्चैव पशुभूमिञ्च सर्व्वशः। निवृत्य च महाबाहुर्मदधारं महीधरं।
सोमधेयांश्च निर्ज्जित्य प्रययावुत्तरामुखः। वत्सभूमिञ्च कौन्तेयो विजिग्ये बलवान्बलात्।
भर्गाणामधिपञ्चैव निषादाधिपतिं तथा। विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान्बहून्। १०८५
ततो दक्षिणमल्लांश्च भोगवन्तञ्च पर्व्वतं। तरसैवाजयद्भीमो नातितीव्रेण कर्म्मणा।
शर्म्मकान् वर्म्मकांश्चैव व्यजयत् सान्त्वपूर्व्वकं। वैदेहकञ्च राजानं जनकं जगतीपतिं।
विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्म्मणा। शकांश्च वर्व्वरांश्चैव अजयच्छद्मपूर्व्वकं।
वैदेहस्थस्तु कौन्तेय इन्द्रपर्व्वतमन्तिकात्। किरातानामधिपतीनजयत्सप्त पाण्डवः।
ततः सुह्मान्प्रसुह्मांश्च स्वपचानपि वीर्य्यवान्। विजित्य युधि कौन्तेयो मागधानभ्यधाद्बली। १०९०

दण्डञ्च दण्डधारञ्च विजित्य पृथिवीपतीन् । तैरेव सहितः सर्व्वैर्गिरिव्रजमुपाद्रवत् ।
जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह । तैरेव सहितः सर्व्वैः कर्णमभ्यद्रवद्बली ।
स कम्पयन्निव महीं बलेन चतुरङ्गिणा । युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ।
स कर्णं युधि निर्ज्जित्य वशे कृत्वा च भारत । ततो विजिग्ये बलवान् राज्ञः पर्व्वतवासिनः ।
अथ मोदागिरौ चैव राजानं बलवत्तरं । पाण्डवो बाहुवीर्य्येण निजघान महामृधे । १०९५
ततः पुण्ड्राधिपं वीरं वासुदेवं महाबलं । कौशिकीकच्छनिलयं राजानञ्च महौजसं ।
उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ । निर्ज्जित्याजौ महाराज वङ्गराजमुपाद्रवत् ।
समुद्रसेनं निर्ज्जित्य चन्द्रसेनञ्च पार्थिवं । ताम्रलिप्तञ्च राजानं कर्व्वटाधिपतिं तथा ।
सुह्मानामधिपञ्चैव ये च सागरवासिनः । सर्व्वान् म्लेच्छगणांश्चैव विजिग्ये भरतर्षभ ।
एवं बहुविधान् देशान् विजित्य पवनात्मजः । वसु तेभ्य उपादाय लौहित्यमगमद्बली । ११००
स सर्व्वान् म्लेच्छनृपतीन् सागरानूपवासिनः । करमाहारयामास रत्नानि विविधानि च ।
चन्दनागुरुवस्त्राणि मणिमौक्तिककम्बलं । काञ्चनं रजतञ्चैव विद्रुमञ्च महाधनं ।
ते कोटिशतसङ्ख्येन कौन्तेयं महता तदा । अभ्यवर्षन्महात्मानं धनवर्षेण पाण्डवं ।
इन्द्रप्रस्थमुपागम्य भीमो भीमपराक्रमः । निवेदयामास तदा धर्म्मराजाय तद्धनं ।
इति श्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि भीमप्राचीदिग्विजये ऊनत्रिंशोऽध्यायः ॥ २९ ॥
॥ वैशम्पायन उवाच ॥ तथैव सहदेवोऽपि धर्म्मराजेन पूजितः । महत्या सेनया राजन् प्रययौ दक्षिणां दिशं । ११०५
स शूरसेनान् कार्त्स्न्येन पूर्व्वमेवाजयत्प्रभुः । मत्स्यराजञ्च कौरव्यो वशे चक्रे बलाद्बली ।
अधिराजाधिपञ्चैव दन्तवक्रं महाबलं । जिगाय करदञ्चैव कृत्वा राज्ये न्यवेशयत् ।
सुकुमारं वशे चक्रे सुमित्रञ्च नराधिपं । तथैवापरमत्स्यांश्च व्यजयत्स पटच्चरान् ।
निषादभूमिं गोशृङ्गं पर्व्वतं प्रवरं तथा । तरसैवाजयद्धीमान् श्रेणिमन्तञ्च पार्थिवं ।
नवराष्ट्रञ्च निर्जित्य कुन्तिभोजमुपाद्रवत् । प्रीतिपूर्व्वञ्च तस्यासौ प्रतिजग्राह शासनं । १११०
ततश्चर्म्मण्वतीकूले जम्भकस्यात्मजं नृपं । ददर्श वासुदेवेन शेषितं पूर्व्ववैरिणा ।
चक्रे तेन स संग्रामं सहदेवेन भारत । स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ।
सेकानपरसेकांश्च व्यजयत्सुमहाबलः । करं तेभ्य उपादाय रत्नानि विविधानि च ।
ततस्तेनैव सहितो नर्म्मदामभितो ययौ । विन्दानुविन्दावावन्त्यौ सैन्येन महता वृतौ ।
जिगाय समरे वीरावाश्विनेयः प्रतापवान् । ततो रत्नान्युपादाय पुरं भोजकटं ययौ । १११५
तत्र युद्धमभूद्राजन् दिवसद्वयमच्युत । स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ।
कोशलाधिपतिञ्चैव तथा वेण्वातटाधिपं । कान्तारकांश्च समरे तथा प्राक्कोशलान्नृपान् ।
नाटकेयांश्च समरे तथा हेरम्बकान्युधि । मारुधञ्च विनिर्जित्य मुञ्जग्राममथो बलात् ।
नाचीनानर्व्वुकांश्चैव राजानश्च महाबलः । तांस्तानाटविकान् सर्व्वानजयत्पाण्डुनन्दनः ।

वाताधिपञ्च नृपतिं वशे चक्रे महाबलः । पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुरः । ११२०

युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः । तं जित्वा स महाबाहुः प्रययौ दक्षिणापथं ।

गुहामासादयामास किष्किन्धां लोकविश्रुतां । तत्र वानरराजाभ्यां मैन्देन द्विविदेन च । युयुधे दिवसान् सप्त न च तौ विक्रतिं गतौ ।

ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ । ऊचतुश्चैव संहृष्टौ प्रीतिपूर्व्वमिदं वचः । गच्छ पाण्डवशार्दूल रत्नान्यादाय सर्व्वशः । अविघ्नमस्तु कार्य्याय धर्म्मराजाय धीमते ।

ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ । तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ।

पाण्डवः परवीरघ्नः सहदेवः प्रतापवान् । ततोऽस्य सुमहद्युद्धं आसीद्भीरुभयङ्करं । ११२५

सैन्यक्षयकरञ्चैव प्राणानां संशयावहं । चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः ।

ततो रथा हया नागाः पुरुषाः कवचानि च । प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा ।

ततः सुसम्भ्रान्तमनाः बभूव कुरुनन्दनः । नोत्तरं प्रतिवक्तुञ्च शक्तोऽभूज्जनमेजय ।

॥ जनमेजय उवाच ॥ किमर्थं भगवान् वह्निः प्रत्यमित्रोऽभवद्युधि । सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ।

॥ वैशम्पायन उवाच ॥ तत्र माहीष्मतीवासी भगवान् हव्यवाहनः । श्रूयते हि गृहीतो वै पुरस्तात् पारदारिकः । ११३०

नीलस्य राज्ञो दुहिता बभूवातीव शोभना । साऽग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा ।

व्यजनैर्धूयमानोऽपि तावत्प्रज्वलते न सः । यावच्चारुपुटोष्ठेन वायुना न विधूयते ।

ततः स भगवानग्निश्चकमे तां सुदर्शनां । नीलस्य राज्ञः सर्व्वेषामुपनीतश्च सोऽभवत् ।

ततो ब्राह्मणरूपेण रममाणो यदृच्छया । चकमे तां वरारोहां कन्यामुत्पललोचनां ।

तन्तु राजा यथाशास्त्रमशासद्धार्म्मिकस्तदा । प्रजज्वाल ततः कोपाद्भगवान् हव्यवाहनः । ११३५

तं दृष्ट्वा विस्मितो राजा जगाम शिरसाऽवनिं । ततः कालेन तां कन्यां तथैव हि तदा नृपः ।

प्रददौ विप्ररूपाय वह्नये शिरसा नतः । प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा ।

चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः । वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः ।

अभयञ्च स जग्राह स्वसैन्ये वै महीपतिः । ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ।

जिगीषन्ति बलाद्राजन् ते दह्यन्ते स्म वह्निना । तस्या पुर्य्यां तदा चैव माहिष्मत्यां कुरूद्वह । ११४०

बभूवुरनतिग्राह्या योषितः छन्दतः किल । एवमग्निर्व्वरं प्रादात् स्त्रीणामप्रतिवारणे ।

स्वैरिण्यस्तत्र नार्य्यो हि यथेष्टं विचरन्त्युत । वर्जयन्ति च राजानस्तत्पुरं भरतर्षभ ।

भयादग्नेर्म्महाराज तदाप्रभृति सर्व्वदा । सहदेवस्तु धर्म्मात्मा सैन्यं दृष्ट्वा भयार्दितं ।

परीतमग्निना राजन् नाकम्पत यथाऽचलः । उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत् पावकं ततः ।

॥ सहदेव उवाच ॥ त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोऽस्तु ते । मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक । ११४५

पावनात्पावकश्चासि वहनाद्धव्यवाहनः । वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ।

चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो । स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी ।

वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः । कुमारसूस्त्वं भगवान् रुद्रगर्भो हिरण्यकृत् ।
अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे । पृथिवी बलमादध्याच्छिवञ्चापो दिशन्तु मे ।
अपांगर्भ महासत्त्व जातवेदः सुरेश्वर । देवानां मुखमग्ने त्वं सत्येन विपुनीहि मां । ११५०
ऋषिभिर्ब्राह्मणैश्चैव देवतैरसुरैरपि । नित्यं सुहुतयज्ञेषु सत्येन विपुनीहि मां ।
धूमकेतुः शिखी च त्वं पापहाऽनिलसम्भवः । सर्व्वप्राणिषु नित्यस्थः सत्येन विपुनीहि मां ।
एवं स्तुतोऽसि भगवन् प्रीतेन शुचिना मया । तुष्टिं पुष्टिं श्रुतिं चैव प्रीतिं चाग्ने प्रयच्छ मे ।
॥ वैशम्पायन उवाच ॥ इत्येवं मन्त्रमाग्नेयं पठन् यो जुहुयाद्विभुं । ऋद्धिमान् सततं दान्तः सर्व्वपापैः प्रमुच्यते ।
॥ सहदेव उवाच ॥ यज्ञविघ्नमिमं कर्त्तुं नार्हस्त्वं हव्यवाहन । एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य्य मेदिनीं । ११५५
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् । प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत ।
न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः । तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनं ।
सहदेवं नृणां देवं सान्त्वपूर्व्वमिदं वचः । उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं मया कृता ।
वेद्मि सर्व्वमभिप्रायं तव धर्म्मसुतस्य च । मयातु रक्षितव्येयं पुरी भरतसत्तम ।
यावद्राज्ञो हि नीलस्य कुले वंशधरा इति । ईप्सितन्तु करिष्यामि मनसस्तव पाण्डव । ११६०
तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसानतः । पूजयामास माद्रेयः पावकं भरतर्षभ ।
पावके विनिवृत्तेतु नीलो राजाऽभ्यगात्तदा । पावकस्याज्ञया चैनमर्च्चयामास पार्थिवः ।
सत्कारेण नरव्याघ्रं सहदेवं युधांपतिं । प्रतिगृह्य च तां पूजां करे च विनिवेश्य च । माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशं ।
त्रैपुरं स्ववशे कृत्वा राजानममितौजसं । निजग्राह महाबाहुस्तरसा पौरवेश्वरं ।
आकृतिं कौशिकाचार्य्यं यत्नेन महता ततः । वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तदा । ११६५
सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे । राज्ञे भोजकटस्थाय महामात्राय धीमते ।
भीष्मकाय स धर्म्मात्मा साक्षादिन्द्रसखाय वै । स चास्य प्रतिजग्राह ससुतः शासनं तदा ।
प्रीतिपूर्व्वं महाराज वासुदेवमवेक्ष्य च । ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ।
ततः शूर्पारकञ्चैव तालाकटमथापि च । वशे चक्रे महातेजा दण्डकांश्च महाबलः ।
सागरद्वीपवासांश्च नृपतीन् म्लेच्छयोनिजान् । निषादान्पुरुषादांश्च कर्णप्रावरणानपि । ११७०
ये च कालमुखा नाम नरराक्षसयोनयः । कृत्स्नं कोलगिरिञ्चैव सुरभीपट्टनं तथा ।
द्वीपं ताम्राह्वयञ्चैव पर्व्वतं रामकं तथा । तिमिङ्गिलञ्च स नृपं वशे कृत्वा महामतिः ।
एकपादांश्च पुरुषान् केरकान वनवासिनः । नगरीं सञ्जयन्तीञ्च पाषण्डं करहाटकं ।
दूतैरेव वशे चक्रे करञ्चैनानदापयत् । पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः ।
अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् । आटवीञ्च पुरीं रम्यां यवनानां पुरं तथा । ११७५
दूतैरेव वशे चक्रे करं चैनानदापयत् । ततः कच्छगतो धीमान् दूतान् माद्रवतीसुतः ।
प्रेषयामास राजेन्द्र पौलस्त्याय महात्मने । विभीषणाय धर्म्मात्मा प्रीतिपूर्व्वमरिन्दमः ।

स चास्य प्रतिजग्राह शासनं प्रीतिपूर्व्वकं। तच्च कालकृतं धीमानभ्यमन्यत स प्रभुः।
ततः संप्रेषयामास रत्नानि विविधानि च। चन्दनागुरुकाष्ठानि दिव्यान्याभरणानि च
वासांसि च महार्हाणि मणींश्चैव महाधनान्। न्यवर्त्तत ततो धीमान् सहदेवः प्रतापवान्। ११८०
एवं निर्जित्य तरसा सान्त्वेन विजयेन च। करदान्पार्थिवान् कृत्वा प्रत्यागच्छदरिन्दमः।
धर्म्मराजाय तत्सर्व्वं निवेद्य भरतर्षभः। कृतकर्म्मा सुखं राजन्नुवास जनमेजय।
इति श्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि सहदेवदक्षिणदिग्विजये त्रिंशोऽध्यायः ॥ ३० ॥

॥ वैशम्पायन उवाच ॥ नकुलस्य तु वक्ष्यामि कर्म्माणि विजयं तथा। वासुदेवजितामाशां यथाऽसावजयत्प्रभुः।
निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशं। उद्दिश्य मतिमान् प्रायान्महत्या सेनया सह।
सिंहनादेन महता योधानां गर्ज्जितेन च। रथनेमिनिनादैश्च कम्पयन् वसुधामिमां। ११८५
ततो बहुधनं रम्यं गवाढ्यं धनधान्यवत्। कार्त्तिकेयस्य दयितं रोहीतकमुपाद्रवत्।
तत्र युद्धं महच्चासीच्छूरैर्मत्तमयूरकैः। मरुभूमिं स कार्त्स्न्येन तथैव बहुधान्यकं।
शैरीषकं महेत्थञ्च वशे चक्रे महाद्युतिः। आक्रोशञ्चैव राजर्षिं तेन युद्धमभून्महत्।
तान् दशार्णान् स जित्वा च प्रतस्थे पाण्डुनन्दनः। शिवींस्त्रिगर्त्तानम्बष्ठान् मालवान् पञ्च कर्प्पटान्।
तथा मध्यमकेयांश्च वाटधानान् द्विजानथ। पुनश्च परिवृत्याथ पुष्करारण्यवासिनः। ११९०
गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः। सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः।
शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीं। वर्त्तयन्ति च ये मत्स्यैर्ये च पर्व्वतवासिनः।
कृत्स्नं पञ्चनदञ्चैव तथैवामरपर्व्वतं। उत्तरज्योतिषञ्चैव तथा दिव्यकटं पुरं।
द्वारपालञ्च तरसा वशे चक्रे महाद्युतिः। रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः।
तान् सर्व्वान् स वशे चक्रे शासनादेव पाण्डवः। तत्रस्थः प्रेषयामास वासुदेवाय भारत। ११९५
स चास्य यादवैः सार्द्धं प्रतिजग्राह शासनं। ततः शाकलमभ्येत्य मद्राणां पुटभेदनं।
मातुलं प्रीतिपूर्व्वेण शल्यं चक्रे वशे बली। स तेन सत्कृतो राज्ञा सत्कारार्हो विशाम्पते।
रत्नानि भूरीण्यादाय सम्प्रतस्थे युधाम्पतिः। ततः सागरकुक्षिस्थान् म्लेच्छान् परमदारुणान्।
पह्लवान् बर्ब्बरांश्चैव किरातान् यवनाञ्छकान्। ततो रत्नान्युपादाय वशे कृत्वाच पार्थिवान्।
न्यवर्त्तत कुरुश्रेष्ठो नकुलश्चित्रमार्ग्गवित्। करभाणां सहस्राणि कोषं तस्य महात्मनः। १२००
ऊहुर्दश महाराज कृच्छ्रादिव महाधनं। इन्द्रप्रस्थगतं वीरमभ्येत्य स युधिष्ठिरं।
ततो माद्रीसुतः श्रीमान् धनं तस्मै न्यवेदयत्। एवं विजित्य नकुलो दिशं वरुणपालितां।
प्रतीचीं वासुदेवेन निर्ज्जितां भरतर्षभः।

इति श्रीमहाभारते सभापर्व्वणि दिग्विजयपर्व्वणि नकुलप्रतीचीविजये एकत्रिंशोऽध्यायः समाप्तञ्च दिग्विजयपर्व्व ॥ ३१ ॥

---

## ॥ अथ राजसूयिकपर्व्व ॥ ६ ॥

॥ वैशम्पायन उवाच ॥ रक्षणाद्धर्म्मराजस्य सत्यस्य परिपालनात् । शत्रूणां क्षपणाच्चैव स्वकर्म्मनिरताः प्रजाः ।
बलीनां सम्यगादानाद्धर्म्मतश्चानुशासनात् । निकामवर्षी पर्ज्जन्यः स्फीतो जनपदोऽभवत् । १२०५
सर्व्वारम्भाः सुप्रवृत्ताः गोरक्षा कर्षणं वणिक् । विशेषात् सर्व्वमेवैतत् सञ्जज्ञे राजकर्म्मणः ।
दस्युभ्यो वञ्चकेभ्यो वा राजन् प्रति परस्परं । राजवल्लभतश्चैव नाश्रूयन्त मृषा गिरः ।
अवर्षञ्चातिवर्षञ्च व्याधिपावकमूर्च्छनं । सर्व्वमेतत्तदा नासीद्धर्म्मनित्ये युधिष्ठिरे ।
प्रियं कर्त्तुमुपस्थातुं बलिकर्म्म स्वभावजं । अभिहर्त्तुं नृपा जग्मुर्नान्यैः कार्य्यैः कथञ्चन ।
धर्म्म्यैर्धनागमैस्तस्य ववृधे निचयो महान् । कर्त्तुं यस्य न शक्येत क्षयो वर्षशतैरपि । १२१०
स्वकोष्ठस्य परीमाणं कोषस्य च महीपतिः । विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ।
सुहृदश्चैव ये सर्व्वे पृथक् च सहिताब्रुवन् । यज्ञकालस्तव विभो क्रियतामत्र साम्प्रतं ।
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः । ऋषिः पुराणो वेदात्मा दृश्यश्चैव विजानतां ।
जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाव्ययश्च ह । भूतभव्यभवन्नाथः केशवः केशिसूदनः ।
प्राकारः सर्व्ववृष्णीनां आपत्स्वभयदोऽरिहा । बलाधिकारे निक्षिप्य सम्यमानकदुन्दुभिं । १२१५
उच्चावचमुपादाय धर्म्मराजाय माधवः । धनौघं पुरुषव्याघ्रो बलेन महता वृतः ।
तं धनौघमपर्य्यन्तं रत्नसागरमक्षयं । नादयन् रथघोषेण प्रविवेश पुरोत्तमं ।
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् । असूर्य्यमिव सूर्य्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरं । तं मुदाभिःसमागम्य सत्कृत्य च यथाविधि ।
स पृष्ट्वा कुशलञ्चैव सुखासीनं युधिष्ठिरः । धौम्यद्वैपायनमुखैर्ऋत्विग्भिः पुरुषर्षभः । १२२०
भीमार्ज्जुनयमैश्चैव सहितः कृष्णमब्रवीत् ॥ युधिष्ठिर उवाच ॥ त्वत्कृते पृथिवी सर्व्वा मद्वशे कृष्ण वर्त्तते ।
धनञ्च बहु वार्ष्णेय त्वत्प्रसादादुपार्ज्जितं । सोऽहमिच्छामि तत्सर्व्वं विधिवद्देवकीसुत ।
उपयोक्तुं द्विजाग्र्येभ्यो हव्यवाहे च माधव । तदहं यष्टुमिच्छामि दाशार्ह सहितस्त्वया ।
अनुजैश्च महाबाहो तदनुज्ञातुमर्हसि । तद्दीक्षापय गोविन्द त्वमात्मानं महाभुज ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहं । मां वाऽप्यभ्यनुजानीहि सहैभिरनुजैर्विभो । १२२५
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमं ॥ वैशम्पायन उवाच ॥ तं कृष्णः प्रत्युवाचेदं वर्णयन् गुणविस्तरं ।
त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुं । संप्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयं ।
यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते । नियुङ्क्ष्व त्वञ्च मां कृत्ये सर्व्वं कर्त्ताऽस्मि ते वचः ।
युधिष्ठिरउवाच ॥ सफलः कृष्ण सङ्कल्पः सिद्धिश्च नियता मम । यस्य मे त्वं हृषीकेश यथेप्सितमुपस्थितः ।
॥ वैशम्पायन उवाच ॥ अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह । ईहितुं राजसूयेन साधनान्युपचक्रमे । १२३०
ततस्त्वाज्ञापयामास पाण्डवोऽरिनिबर्हणः । सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्व्वशः ।

अस्मिन् क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः। तथोपकरणं सर्व्वं मङ्गलानि च सर्व्वशः।
अधियज्ञांश्च सम्भारान् धौम्योक्तान् क्षिप्रमेव हि। समानयन्तु पुरुषा यथायोगं यथाक्रमं।
इन्द्रसेनो विशोकश्च पुरुश्चार्ज्जुनसारथिः। अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया।
सर्व्वकामाश्च कार्य्यन्तां रसगन्धसमन्विताः। मनोहराः प्रीतिकरा द्विजानां कुरुसत्तम। १२३५
तद्वाक्यसमकालञ्च कृतं सर्व्वं न्यवेदयत्। सहदेवो युधां श्रेष्ठो धर्म्मराजे युधिष्ठिरे।
ततो द्वैपायनो राजन्नृत्विजः समुपानयत्। वेदानिव महाभागान् साक्षान्मूर्त्तिमतो द्विजान्।
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः। धनञ्जयानामृषभः सुसामा सामगोऽभवत्।
याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्य्युसत्तमः। पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत्।
एतेषां शिष्यवर्गाश्च पुत्राश्च भरतर्षभ। बभूवुर्होत्रगाः सर्व्वे वेदवेदाङ्गपारगाः। ते वाचयित्वा पुण्याहमूहयित्वा च तं विधिं। १२४०
शास्त्रोक्तं पूजयामासुस्तद्देवयजनं महत्। तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः।
गन्धवन्ति विशालानि वेश्मानीव दिवौकसां। तत आज्ञापयामास स राजा राजसत्तमः।
सहदेवं तदा सद्यो मन्त्रिणं पुरुषर्षभः। आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाशुगान् द्रुतं।
उपश्रुत्य वचो राज्ञः स दूतान् प्राहिणोत्तदा। आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान् भूमिपानथ।
विशश्च मान्यान् शूद्रांश्च सर्व्वानानयतेति च। १२४५
॥ वैशम्पायन उवाच॥ समाज्ञप्तास्ततो दूताः पाण्डवेयस्य शासनात्। आमन्त्रयाम्बभूवुश्च आनयंश्चापरान् द्रुतं। तथापरानपि नरानात्मनः शीघ्रगामिनः।
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरं। दीक्षयाञ्चक्रिरे विप्राः राजसूयाय भारत।
दीक्षितः स तु धर्म्मात्मा धर्म्मराजो युधिष्ठिरः। जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः।
भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिः सचिवैः सह। क्षत्त्रियैश्च मनुष्येन्द्रैर्नानादेशसमागतैः।
अमात्यैश्च नरश्रेष्ठो धर्म्मो विग्रहवानिव। आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः। १२५०
सर्व्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः। तेषामावसथांश्चक्रुर्धर्म्मराजस्य शासनात्।
बह्वन्नाच्छादनैर्युक्तान् सगणानां पृथक् पृथक्। सर्व्वर्त्तुगुणसम्पन्नान् शिल्पिनोऽथ सहस्रशः।
तेषु ते न्यवसन् राजन् ब्राह्मणा नृपसत्कृताः। कथयन्तः कथा बह्वीः पश्यन्तो नटनर्त्तकान्।
भुञ्जतां चैव विप्राणां वदताञ्च महास्वनः। अनिशं श्रूयते तत्र मुदितानां महात्मनां।
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति। एवम्प्रकाराः सञ्जल्पाः श्रूयन्ते स्मात्र नित्यशः। १२५५
गवां शतसहस्राणि शयनानाञ्च भारत। रुक्मस्य योषिताञ्चैव धर्म्मराजः पृथक् ददौ।
प्रावर्त्ततैवं यज्ञः स पाण्डवस्य महात्मनः। पृथिव्यामेकवीरस्य शक्रस्येव त्रिपिष्टपे।
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवं। नकुलं हास्तिनपुरं भीष्माय पुरुषर्षभः।
द्रोणाय धृतराष्ट्राय विदुराय कृपाय च। भ्रातॄणाञ्चैव सर्व्वेषां येऽनुरक्ता युधिष्ठिरे।
इति श्रीमहाभारते सभापर्व्वणि राजसूयिकपर्व्वणि राजसूयदीक्षायां द्वात्रिंशोऽध्यायः॥३२॥

॥ वैशम्पायन उवाच ॥ स गत्वा हास्तिनपुरं नकुलः समितिञ्जयः । भीष्ममामन्त्रयाञ्चक्रे धृतराष्ट्रञ्च पाण्डवः । १२६०
सत्कृत्यामन्त्रितास्तेन आचार्य्यप्रमुखास्ततः । प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरःसराः ।
संश्रुत्य धर्म्मराजस्य यज्ञं यज्ञविदस्तदा । अन्ये च शतशस्तुष्टैर्मनोभिर्भरतर्षभ ।
द्रष्टुकामाः सभाञ्चैव धर्म्मराजञ्च पाण्डवं । दिग्भ्यः सर्व्वे समापेतुः क्षत्रियास्तत्र भारत ।
समुपादाय रत्नानि विविधानि महान्ति च । धृतराष्ट्रश्च भीष्मश्च विदुरश्च महामतिः ।
दुर्य्योधनपुरोगाश्च भ्रातरः सर्व्व एव ते । गान्धारराजः सुबलः शकुनिश्च महाबलः । १२६५
अचलो वृषकश्चैव कर्णश्च रथिनांवरः । तथा शल्यश्च बलवान् बाह्लिकश्च महाबलः ।
सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाः शलः । अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः ।
यज्ञसेनः सपुत्त्रश्च शाल्वश्च वसुधाऽधिपः । प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महारथः ।
स तु सर्व्वैः सह म्लेच्छैः सागरानूपवासिभिः । पार्व्वतीयाश्च राजानो राजा चैव बृहद्बलः ।
पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा । आकर्षः कुन्तलश्चैव मालवाश्चान्ध्रकास्तथा । १२७०
द्राविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा । कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः ।
बाह्लिकाश्चापरे शूराः राजानः सर्व्व एव ते । विराटः सहपुत्त्राभ्यां मावेल्लश्च महाबलः ।
राजानो राजपुत्त्राश्च नानाजनपदेश्वराः । शिशुपालो महावीर्य्यः सहपुत्त्रेण भारत ।
आगच्छत्पाण्डवेयस्य यज्ञं समरदुर्म्मदः । रामश्चैवानिरुद्धश्च कङ्कश्च सहसारणः ।
गदप्रद्युम्नशाम्बाश्च चारुदेष्णश्च वीर्य्यवान् । उल्मुको निशठश्चैव वीरश्चाङ्गावहस्तथा । १२७५
वृष्णयो निखिलाश्चान्ये समाजग्मुर्महारथाः । एते चान्ये च बहवो राजानो मध्यदेशजाः ।
आजग्मुः पाण्डुपुत्त्रस्य राजसूयं महाक्रतुं । ददुस्तेषामावसथान् धर्म्मराजस्य शासनात् ।
बहुभक्ष्यान्वितान् राजन् दीर्घिकावृक्षशोभितान् । तथा धर्म्मात्मजः पूजां चक्रे तेषां महात्मनां ।
सत्कृताश्च यथोद्दिष्टान् जग्मुरावसथान्नृपाः । कैलासशिखरप्रख्यान् मनोज्ञान् द्रव्यभूषितान् ।
सर्व्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः । सुवर्णजालसम्वीतान् मणिकुट्टिमभूषितान् । १२८०
सुखारोहणसोपानान् महासनपरिच्छदान् । स्रग्दामसमवच्छन्नानुत्तमागुरुगन्धिनः ।
हंसेन्दुवर्णसदृशानायोजनसुदर्शनान् । असम्बाधान्समद्वारान्युतानुच्चावचैर्गुणैः ।
बहुधातुनिबद्धाङ्गान् हिमवच्छिखरानिव । विश्रान्तास्ते ततोऽपश्यन् भूमिपा भूरिदक्षिणं ।
वृतं सदस्यैर्बहुभिर्धर्म्मराजं युधिष्ठिरं । तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः ।
भ्राजते स्म तदा राजन् नाकपृष्ठं यथामरैः । १२८५
इतिश्रीमहाभारते सभापर्व्वणि राजसूयिकपर्व्वणि निमन्त्रितराजागमने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ वैशम्पायनउवाच ॥ पितामहं गुरुञ्चैव प्रत्युद्गम्य युधिष्ठिरः । अभिवाद्य ततो राजन्निदं वचनमब्रवीत ।
भीष्मं द्रोणं कृपं द्रौणिं दुर्य्योधनविविंशती । अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु सर्व्वशः ।
इदं वः सुमहच्चैव यदिहास्ति धनं मम । प्रणयन्तु भवन्तो मां यथेष्टमभिमन्त्रिताः ।

एवमुक्त्वा स तान् सर्वान् दीक्षितः पाण्डवाग्रजः। युयोज स यथायोगमधिकारेष्वनन्तरं।
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत्। परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान्। १२९०
राज्ञान्तु प्रतिपूजार्थं सञ्जयं संन्ययोजयत्। कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती।
हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे। दक्षिणानाञ्च वै दाने कृपं राजा न्ययोजयत्।
तथाऽन्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्नयोजयत्। बाह्लिको धृतराष्ट्रश्च सोमदत्तो जयद्रथः।
नकुलेन समानीताः स्वामिवत्तत्र रेमिरे। क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्व्वधर्म्मवित्।
दुर्य्योधनस्त्वर्हणानि प्रतिजग्राह सर्व्वशः। चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत्। १२९५
सर्व्वलोकसमावृत्तः पिप्रीषुः फलमुत्तमं। द्रष्टुकामः सभाञ्चैव धर्म्मराजं युधिष्ठिरं।
नकश्चिदाहरत्तत्र सहस्रावरमर्हणं। रत्नैश्च बहुभिस्तत्र धर्म्मराजमवर्द्धयत्।
कथन्नु मम कौरव्यो रत्नदानैः समाप्नुयात्। यज्ञमित्येव राजानः स्पर्द्धमाना ददुर्धनं।
भवनैः सविमानाग्रैः सोदर्कैर्ब्बलसंवृतैः। लोकराजविमानैश्च ब्राह्मणावसथैः सह।
कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा। विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः। १३००
राजभिश्च समावृत्तैरतीव श्रीसमृद्धिभिः। अशोभत ततो राजन् कौन्तेयस्य महात्मनः।
ऋद्ध्या च वरुणं देवं स्पर्द्धमानो युधिष्ठिरः। षडग्निनाऽथ यज्ञेन सोऽयजद्दक्षिणावता।
सर्व्वान् जनान् सर्व्वकामैः समृद्धैः समतर्पयत्। अन्नवान् बहुभक्ष्यश्च भुक्तवज्जनसंवृतः।
रत्नोपहारसम्पन्नो बभूव स समागमः। इडाज्यहोमाहुतिभिर्म्मन्त्रशिक्षाविशारदैः।
तस्मिन् हि ततृपुर्देवास्तते यज्ञे महर्षिभिः। यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः। १३०५
ततृपुः सर्व्ववर्णाश्च तस्मिन्यज्ञे मुदाऽन्विताः।
इति श्रीमहाभारते सभापर्व्वणि राजसूयिकपर्व्वणि यज्ञकरणे चतुस्त्रिंशोऽध्यायः समाप्तञ्चराजसूयिकपर्व्व ॥ ३४ ॥

---

## ॥ अथ अर्घाहरणपर्व्व ॥ ७ ॥

॥ वैशम्पायन उवाच ॥ ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह। अन्तर्व्वेदीं प्रविविशुः सत्कारार्हा महर्षयः।
नारदप्रमुखास्तस्यामन्तर्व्वेद्यां महात्मनः। समासीनाः शुशुभिरे सह राजर्षिभिस्तदा।
समेता ब्रह्मभवने देवा देवर्षयस्तथा। कर्म्मान्तरमुपासन्तो जजल्पुरमितौजसः।
एवमेतन्न चाप्येवमेवञ्चैतन्नचान्यथा। इत्यूचुर्ब्बहवस्तत्र वितण्डां वै परस्परं। १३१०
कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्व्वते। अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः। तत्र मेधाविनः केचिदर्थमन्यैरुदीरितं।
विचिक्षिपुर्यथा श्येना नभोगतमिवामिषं।
केचिद्धर्म्मार्थकुशलाः केचित्तत्र महाव्रताः। रेमिरे कथयन्तश्च सर्व्वभाष्यविदांवराः।
सा वेदिर्वेदसम्पन्नैर्देवद्विजमहर्षिभिः। आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवायता।
न तस्यां सन्निधौ शूद्रः कश्चिदासीन्न चाऽव्रती। अन्तर्व्वेद्यां तदा राजन् युधिष्ठिरनिवेशने।

तान्तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजां । तुतोष नारदः पश्यन् धर्म्मराजस्य धीमतः । १३१५
अथ चिन्तां समापेदे स मुनिर्म्मनुजाधिप । नारदस्तु तदा पश्यन् सर्व्वक्षत्रसमागमं ।
सस्मार च पुरावृत्तां कथान्तां पुरुषर्षभ । अंशावतरणे याऽसौ ब्रह्मणो भवनेऽभवत् ।
देवानां सङ्गमं तन्तु विज्ञाय कुरुनन्दन । नारदः पुण्डरीकाक्षं सस्मार मनसा हरिं ।
साक्षात् स विबुधारिघ्नः क्षत्रे नारायणो विभुः । प्रतिज्ञां पालयंश्चेमां जातः परपुरञ्जयः ।
सन्दिदेश पुरा योऽसौ विबुधान् भूतकृत् स्वयं । अन्योन्यमभिनिघ्नन्तः पुनर्ल्लोकानवाप्स्यथ । १३२०
इति नारायणः शम्भुर्भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्व्वानजायत यदुक्षये ।
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः । परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ।
यस्य बाहुबलं सेन्द्राः सुराः सर्व्व उपासते । सोऽयं मानुषवन्नाम हरिरास्तेऽरिमर्द्दनः ।
अहो बत महद्भूतं स्वयम्भूर्यदिदं स्वयं । आदास्यति पुनः क्षत्रमेवं बलसमन्वितं ।
इत्येतां नारदश्चिन्तां चिन्तयामास सर्व्ववित् । हरिं नारायणं ज्ञात्वा यज्ञैरिज्यन्तमीश्वरं । १३२५
तस्मिन् धर्म्मविदांश्रेष्ठो धर्म्मराजस्य धीमतः । महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ।
ततो भीष्मोऽब्रवीद्राजन् धर्म्मराजं युधिष्ठिरं । क्रियतामर्हणं राज्ञां यथार्हमिति भारत ।
आचार्य्यमृत्विजञ्चैव संयुजञ्च युधिष्ठिर । स्नातकञ्च प्रियं प्राहुः षडर्घ्यार्हान् नृपं तथा ।
एतानर्घ्यानभिगतानाहुः संवत्सरोषितान् । त इमे कालपूगस्य महतोऽस्मानुपागताः ।
एषामेकैकशो राजन्नर्घ आनीयतामिति । अथ चैषां वरिष्ठाय समर्थायोपनीयतां । १३३०
॥ युधिष्ठिर उवाच ॥ कस्मै भवान् मन्यतेऽर्घमेकस्मै कुरुनन्दन । उपनीयमानं युक्तञ्च तन्मे ब्रूहि पितामह ।
॥ वैशम्पायन उवाच ॥ ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्य्यवान् । वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ।
एष ह्येषां समस्तानां तेजोबलपराक्रमैः । मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ।
असूर्य्यमिव सूर्य्येण निर्व्वात इव वायुना । भासितं ह्लादितञ्चैव कृष्णेनेदं सदो हि नः ।
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् । उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घमुत्तमं । १३३५
प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्म्मणा । शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ।
स उपालभ्य भीष्मञ्च धर्म्मराजञ्च संसदि । अपाक्षिपद्वासुदेवं चेदिराजो महाबलः ।
इतिश्री महाभारते सभापर्व्वणि अर्घाभिहरणपर्व्वणि कृष्णार्घदाने पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ शिशुपाल उवाच ॥ नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु । महीपतिषु कौरव्य राजवत् पार्थिवार्हणं ।
नायं युक्तः समाचारः पाण्डवेषु महात्मसु । यत्कामात्पुण्डरीकाक्षं पाण्डवार्च्चितवानसि ।
बाला यूयं न जानीध्वं धर्म्मः सूक्ष्मो हि पाण्डवाः । अयञ्च स्मृत्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः । १३४०
त्वादृशो धर्म्मयुक्तो हि कुर्व्वाणः प्रियकाम्यया । भवत्यभ्यधिकं भीष्म लोकेष्ववमतः सतां ।
कथं ह्यराजा दाशार्हो मध्ये सर्व्वमहीक्षितां । अर्हणामर्हति तथा यथा युष्माभिरर्च्चितः ।
अथ वा मन्यसे कृष्णं स्थविरं कुरुपुङ्गव । वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ।

अथवा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान्। द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनं।
आचार्य्यं मन्यसे कृष्णमथवा कुरुनन्दन। द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि। १२४५
ऋत्विजं मन्यसे कृष्णमथवा कुरुनन्दन। द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया।
भीष्मे शान्तनवे राजन्स्थिते पुरुषसत्तमे। स्वच्छन्दमृत्युके राजन् कथं कृष्णोऽर्चितस्त्वया।
अश्वत्थाम्नि स्थिते वीरे सर्व्वशास्त्रविशारदे। कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन।
दुर्य्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे। कृपे च भारताचार्य्ये कथं कृष्णस्त्वयाऽर्चितः।
द्रुमं किम्पुरुषाचार्य्यमतिक्रम्य त्वयाऽर्चितः। भीष्मके चैव दुर्द्धर्षे पाण्डुवत्कृतलक्षणे। १२५०
नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च। शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयाऽर्चितः।
अयञ्च सर्व्वराज्ञां वै बलश्लाघी महाबलः। जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत।
येनात्मबलमाश्रित्य राजानो युधि निर्जिताः। तञ्च कर्णमतिक्रम्य कथं कृष्णस्त्वयाऽर्चितः।
नैव ऋत्विङ्नचाचार्य्यो न राजा मधुसूदनः। अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया।
अथवाऽभ्यर्चनीयोऽयं युष्माकं मधुसूदनः। किं राजभिरिहानीतैरवमानाय भारत। १२५५
वयन्तु न भयादस्य कौन्तेयस्य महात्मनः। प्रयच्छामः करान् सर्व्वे न लोभान्नच सान्त्वनात्।
अस्य धर्म्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः। करानस्मै प्रयच्छामः सोऽयमस्मान्नमन्यते।
किमन्यदवमानाद्धि यदेनं राजसंसदि। अप्राप्तलक्षणं कृष्णमर्घेणार्चितवानसि।
अकस्माद्धर्म्मपुत्रस्य धर्म्मात्मेति यशो गतं। को हि धर्म्मच्युते पूजामेवं युक्तां नियोजयेत्।
योऽयं वृष्णिकुले जातो राजानं हतवान् पुरा। जरासन्धं महात्मानमन्यायेन दुरात्मवान्। १२६०
अद्य धर्म्मात्मता चैव व्यपकृष्टा युधिष्ठिरात्। दर्शितं कृपणत्वञ्च कृष्णेऽर्घस्य निवेदनात्।
यदि भीतास्च कौन्तेयाः कृपणास्च तपस्विनः। ननु त्वयाऽपि बोद्धव्यं यां पूजां माधवार्हसि।
अथवा कृपणैरेतामुपनीतां जनार्दन। पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि।
अयुक्तामात्मनः पूजां त्वं पुनर्बहु मन्यसे। हविषः प्राप्य निस्यन्दं प्राशिता श्वेव निर्जने।
नत्वयं पार्थिवेन्द्राणामपमानः प्रयुज्यते। त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन। १२६५
क्लीवे दारक्रिया यादृगन्धे वा रूपदर्शनं। अराज्ञो राजवत्पूजा तथा ते मधुसूदन।
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मस्च यादृशः। वासुदेवोऽप्ययं दृष्टः सर्व्वमेतद्यथातथं।
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात्। निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा।
इति श्रीमहाभारते सभापर्व्वणि अर्घाभिहरणपर्व्वणि शिशुपालक्रोधे षट्त्रिंशोऽध्यायः॥ ३६ ॥
॥ वैशम्पायन उवाच॥ ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत्। उवाच चैव मधुरं सान्त्वपूर्व्वमिदं वचः।
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान्। अधर्म्मस्च परो राजन् पारुष्यञ्च निरर्थकं। १२७०
न हि धर्म्मं परं जातु नावबुध्येत पार्थिवः। भीष्मः शान्तनवस्त्वेनं माऽवमंस्थास्त्वमन्यथा।
पश्य चैतान्महीपालान् त्वत्तो वृद्धतरान् बहून्। मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि।

वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशं। नह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः।

॥ भीष्म उवाच ॥ नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनं। लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते।

क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः। यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः। १३७५

अस्यां हि समितौ राज्ञामेकमप्यजितं युधि। न पश्यामि महीपालं सात्वतीपुत्रतेजसा।

नहि केवलमस्माकमयमर्च्यतमोऽच्युतः। त्रयाणामपि लोकानामर्चनीयो महाभुजः।

कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः। जगत्सर्व्वञ्च वार्ष्णेये निखिलेन प्रतिष्ठितं।

तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्च्चाम नेतरान्। एवं वक्तुं न चार्हस्त्वं माभूत्ते बुद्धिरीदृशी।

ज्ञानवृद्धा मया राजन् बहवः पर्य्युपासिताः। तेषां कथयतां शौरेरहं गुणवतो गुणान्। १३८०

समागतानामश्रौषं बहून् बहुमतान् सतां। कर्म्माण्यपि हि यान्यस्य जन्मप्रभृति धीमतः।

बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे। न केवलं वयं कामाच्चेदिराज जनार्दनं।

न सम्बन्धं पुरस्कृत्य कृतार्थं वा कथञ्चन। अर्चामहेऽर्चितं सद्भिर्भुवि भूतसुखावहं।

यशः शौर्य्यं जयं चास्य विज्ञायार्च्चां प्रयुञ्महे। नच कश्चिदिहास्माभिः सुबालोऽप्यपरीक्षितः।

गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः। ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः। १३८५

वैश्यानां धान्यधनवान् शूद्राणामेव जन्मतः। पूज्यतायाञ्च गोविन्दे हेतू द्वावपि संस्थितौ।

वेदवेदाङ्गविज्ञानं बलं चाप्यधिकं तथा। नृणां लोके हि कोऽन्योऽस्ति विशिष्टः केशवादृते।

दानं दाक्ष्यं श्रुतं शौर्य्यं ह्रीः कीर्त्तिर्बुद्धिरुत्तमा। सन्नतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताऽच्युते।

तमिमं लोकसम्पन्नमाचार्य्यं पितरं गुरुं। अर्घ्यमर्चितमर्चार्हं सर्व्वे संक्षन्तुमर्हथ।

ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः। सर्व्वमेतद्धृषीकेशस्तस्मादभ्यर्चितोऽच्युतः। १३९०

कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः। कृष्णस्य हि कृते विश्वमिदं भूतं चराचरं।

एष प्रकृतिरव्यक्ता कर्त्ता चैव सनातनः। परश्च सर्व्वभूतेभ्यस्तस्मात्पूज्यतमोऽच्युतः।

बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या। चतुर्विधञ्च यद्भूतं सर्व्वं कृष्णे प्रतिष्ठितं।

आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये। दिशश्च विदिशश्चैव सर्व्वं कृष्णे प्रतिष्ठितं।

अग्निहोत्रमुखा वेदा गायत्री छन्दसां मुखं। राजा मुखं मनुष्याणां नदीनां सागरो मुखं। नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखं। पर्व्वतानां मुखं मेरुर्गरुडः पततां मुखं। १३९५

ऊर्द्ध्वन्तिर्य्यगधश्चैव यावती जगतो गतिः। सदेवकेषु लोकेषु भगवान् केशवो मुखं।

अयन्तु पुरुषो बालः शिशुपालो न बुध्यते। सर्व्वत्र सर्व्वदा कृष्णं तस्मादेवं प्रभाषते।

यो हि धर्म्मं विचिनुयादुत्कृष्टं मतिमान्नरः। स वै पश्येद्यथा धर्म्मं न तथा चेदिराडयं।

सवृद्धबालेष्वथवा पार्थिवेषु महात्मसु। को नार्हं मन्यते कृष्णं को वाऽप्येनं न पूजयेत्।

अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति। दुष्कृतायां यथान्यायं तथाऽयं कर्त्तुमर्हति। १४००

इति श्री महाभारते सभापर्व्वणि अर्घाभिहरणपर्व्वणि भीष्मवाक्ये सप्तत्रिंशोऽध्यायः॥ ३७ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ततो भीष्मो विरराम महाबलः । व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ।
केशवं केशिहन्तारमप्रमेयपराक्रमं । पूज्यमानं मया यो वः कृष्णं न सहते नृपः ।
सर्व्वेषां बलिनां मूर्द्ध्नि मयेदं निहितं पदं । एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ।
मतिमन्तश्च ये केचिदाचार्य्यं पितरं गुरुं । अर्च्यमर्च्चितमर्च्चार्हमनुजानन्तु ते नृपाः ।
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सतां । मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे । १४०५
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्द्धनि । अदृश्यरूपा वाचश्चाप्यब्रुवन् साधुसाध्विति ।
सर्व्वसंशयनिर्म्मोक्ता नारदः सर्व्वलोकवित् । उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ।
कृष्णं कमलपत्राक्षं नार्च्चयिष्यन्ति ये नराः । जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचन ।
॥ वैशम्पायन उवाच ॥ पूजयित्वा च पूजार्हान् ब्रह्मक्षत्रविशेषवित् । सहदेवो नृणां देवः समापयत कर्म्म तत् ।
तस्मिन्नभ्यर्च्चिते कृष्णे सुनीथः शत्रुकर्षणः । अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् । १४१०
स्थितः सेनापतिर्योऽहं मन्यध्वं किन्नु साम्प्रतं । युधि तिष्ठाम सन्नह्य समेतान् वृष्णिपाण्डवान् ।
इति सर्व्वान् समुत्साह्य राज्ञस्तान् चेदिपुङ्गवः । यज्ञोपघाताय ततः सोऽमन्त्रयत राजभिः ।
तत्राहूतागताः सर्व्वे सुनीथप्रमुखा गणाः । समदृश्यन्त संक्रुद्धा विवर्णवदनास्तथा ।
युधिष्ठिराभिषेकञ्च वासुदेवस्य चार्हणं । न स्याद्यथा तथाकार्य्यं एवं सर्व्वे तदाऽब्रुवन् ।
निष्कर्षान्निश्चयात्सर्व्वे राजानः क्रोधमूर्च्छिताः । अब्रुवंस्तत्र राजानो निर्व्वेदादात्मनिश्चयात् । १४१५
सुहृद्भिर्व्वार्य्यमाणानां तेषां हि वपुराबभौ । आमिषादपकृष्टानां सिंहानामिव गर्ज्जतां ।
तं बलौघमपर्य्यन्तं राजसागरमक्षयं । कुर्व्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ।
इतिश्री महाभारते सभापर्व्वणि अर्घाभिहरणपर्व्वणि राजमन्त्रणेऽष्टत्रिंशोऽध्यायः समाप्तञ्च अर्घाभिहरणपर्व्व ॥३८॥

## अथ शिशुपालवध पर्व्व ॥ ७ ॥

॥ वैशम्पायनउवाच ॥ ततः सागरसङ्काशं दृष्ट्वा नृपतिमण्डलं । रोषात्प्रचलितं सर्व्वमिदमाह युधिष्ठिरः ।
भीष्मं मतिमतां मुख्यं वृद्धं कुरुपितामहं । वृहस्पतिं वृहत्तेजाः पुरुहूत इवारिहा ।
असौ रोषात्प्रचलितो महान्नृपतिसागरः । अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह । १४२०
यज्ञस्य च न विघ्नःस्यात्प्रजानाञ्च हितं भवेत् । यथा सर्व्वत्र तत्सर्व्वं ब्रूहि मेऽद्य पितामह ।
इत्युक्तवति धर्म्मज्ञे धर्म्मराजे युधिष्ठिरे । उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ।
माभैस्त्वं कुरुशार्दुल श्वा सिंहं हन्तुमर्हति । शिवः पन्थाः सुनीतोऽत्र मया पूर्व्वतरं वृतः ।
प्रसुप्ते हि यथा सिंहे श्वानस्तस्मिन् समागताः । भवेयुः सहिताः सर्व्वे तथेमे वसुधाधिपाः ।
वृष्णिसिंहस्य सुप्तस्य तथाऽमी प्रमुखे स्थिताः । भषन्ते तात संक्रुद्धाः श्वानः सिंहस्य सन्निधौ । १४२५
नहि सम्बुध्यते यावत्सुप्तः सिंह इवाच्युतः । तेन सिंहीकरोत्येतान् नृसिंहश्चेदिपुङ्गवः ।
पार्थिवान् पार्थिवश्रेष्ठः शिशुपालोऽप्यचेतनः । सर्व्वान् सर्व्वात्मना तात नेतुकामो यमक्षयं ।

नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः । यदस्य शिशुपालस्य तेजस्तिष्ठति भारत ।
विपुला चास्य भद्रन्ते बुद्धिर्बुद्धिमताम्बर । चेदिराजस्य कौन्तेय सर्व्वेषाञ्च महीक्षितां ।
आदातुञ्च नरव्याघ्रो यं यमिच्छत्ययं तदा । तस्य विप्लवते बुद्धिरेवं चेदिपतेर्य्यथा । १४२०
चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः । प्रभवश्चैव सर्व्वेषां निधनञ्च युधिष्ठिर ।
॥ वैशम्पायन उवाच ॥ इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः । भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ।
इति महाभारते सभापर्व्वणि शिशुपालवधपर्व्वणि युधिष्ठिराश्वासने ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ शिशुपाल उवाच ॥ विभीषिकाभिर्बह्वीभिर्भीषयन् सर्व्वपार्थिवान् । न व्यपत्रपसे कस्माद्वृद्धः सन् कुलपांसनः ।
युक्तमेतत्तृतीयायां प्रकृतौ वर्त्तता त्वया । वक्तुं धर्म्मादपेतार्थं त्वं हि सर्व्वकुरूत्तम ।
नावि नौरिव सम्बद्धा यथाऽन्धो वाऽन्धमन्वियात् । तथा भूता हि कौरव्या येषां भीष्म त्वमग्रणीः । १४२५
पूतनाघातपूर्व्वाणि कर्म्माण्यस्य विशेषतः । त्वया कीर्त्तयताऽस्माकं भूयः प्रव्यथितं मनः ।
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः । कथं भीष्म न ते जिह्वा शतधेयं विदीर्य्यते ।
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः । तमिमं ज्ञानवृद्धः सन् गोपं संस्तोतुमिच्छसि ।
यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किं । तौ वाऽश्ववृषभौ भीष्म यौ न युद्धविशारदौ ।
चेतनारहितं काष्ठं यद्यनेन निपातितं । पादेन शकटं भीष्म तत्र किं कृतमद्भुतं । १४३०
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः । तदा गोवर्द्धनो भीष्म न तच्चित्रं मतं मम ।
भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्द्धनि । इति ते भीष्म शृण्वानाः परं विस्मयमागताः ।
यस्य चानेन धर्म्मज्ञ भुक्तमन्नं बलीयसः । स चानेन हतः कंस इत्येतन्न महाद्भुतं ।
न ते श्रुतमिदं भीष्म नूनं कथयतां सतां । यद्वक्ष्ये त्वामधर्म्मज्ञ वाक्यं कुरुकुलाधम ।
स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च । यस्य चान्नानि भुञ्जीत यस्य च स्यात्प्रतिश्रयः । १४३५
इति सन्तोऽनुशासन्ति सज्जनं धर्म्मिणः सदा । भीष्म लोके हि तत्सर्व्वं वितथं त्वयि दृश्यते ।
ज्ञानवृद्धञ्च वृद्धञ्च भूयांसं केशवं मम । अजानत इवाख्यासि संस्तुवन् कौरवाधम ।
गोघ्नः स्त्रीघ्नश्च सन् भीष्म त्वद्वाक्याद्यदि पूज्यते । एवम्भूतश्च यो भीष्म कथं संस्तवमर्हति ।
असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः । सम्भावयति चाप्येवं त्वद्वाक्याच्च जनार्द्दनः ।
एवमेतत्सर्व्वमिति तत्सर्व्वं वितथं ध्रुवं । न गाथागाथिनं शास्ति बहु चेदपि गायति । प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्य्यथा । १४४०
नूनं प्रकृतिरेषा ते जघन्या नात्र संशयः । अतः पापीयसी चैषां पाण्डवानामपीष्यते ।
येषामर्च्यतमः कृष्णस्त्वञ्च येषां प्रदर्शकः । धर्म्मवांस्त्वमधर्म्मज्ञः सतां मार्गादवप्लुतः ।
को हि धर्म्मिणमात्मानं जानन् ज्ञानविदां वरः । कुर्य्याद्यथा त्वया भीष्म कृतं धर्म्ममवेक्षता ।
अन्यकामा हि धर्म्मज्ञा कन्यका प्राज्ञमानिना । अम्बा नामेति भद्रन्ते कथं साऽपहृता त्वया ।
तां त्वयाऽपहृतां भीष्म कन्यां नैषितवान् यतः । भ्राता विचित्रवीर्य्यस्ते सतां मार्गमनुष्ठितः । १४४५

दारयोर्य्यस्य चान्येन मिषतः प्राज्ञमानिनः। तव जातान्यपत्यानि सज्जनाचरिते पथि।
को हि धर्म्मोऽस्ति ते भीष्म ब्रह्मचर्य्यमिदं वृथा। यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः।
न त्वहं तव धर्म्मज्ञ पश्याम्युपचयं क्वचित्। न हि ते सेविता वृद्धा य एवं धर्म्ममब्रवीः।
इष्टं दत्तमधीतञ्च यज्ञाश्च बहुदक्षिणाः। सर्व्वमेतदपत्यस्य कलां नार्हति षोडशीं।
व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत्। सर्व्वं तदनपत्यस्य मोघं भवति निश्चयात्। १४६०
सोऽनपत्यश्च वृद्धश्च मिथ्याधर्म्मानुसारकः। हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधं।
एवं हि कथयन्त्यन्ये नराः ज्ञानविदः पुरा। भीष्म यत्तदहं सम्यग्वक्ष्यामि तव शृण्वतः।
वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत्पुरा। धर्म्मवागन्यथावृत्तः पक्षिणः सोऽनुशास्ति च।
धर्म्मं चरत मा धर्म्ममिति तस्य वचः किल। पक्षिणः शुश्रुवुर्भीष्म सततं सत्यवादिनः।
अथास्य भक्ष्यमाजह्रुः समुद्रजलचारिणः। अण्डजा भीष्म तस्यान्ये धर्म्मार्थमिति शुश्रुम। १४६५
ते च तस्य समभ्याशे निक्षिप्याण्डानि सर्व्वशः। समुद्राम्भस्यमज्जन्त चरन्तो भीष्म पक्षिणः।
तेषामण्डानि सर्व्वेषां भक्षयामास पापकृत्। स हंसः सम्प्रमत्तानामप्रमत्तः स्वकर्म्मणि।
ततः प्रक्षीयमाणेषु तेषु तेष्वण्डजोऽपरः। अशङ्कत महाप्राज्ञः स कदाचिद्ददर्श ह।
ततः स कथयामास दृष्ट्वा हंसस्य किल्विषं। तेषां परमदुःखार्त्तः स पक्षी सर्व्वपक्षिणां।
ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समीपगाः। निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूत्तम। १४७०
ते त्वां हंससधर्म्माणमपीमे वसुधाधिपाः। निहन्युर्भीष्म संक्रुद्धाः पक्षिणस्तमिवाण्डजं।
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः। भीष्म यान्ताञ्च ते सम्यक् कथयिष्यामि भारत।
अन्तरात्मन्यभिहते रौषि पत्ररथाशुचि। अण्डभक्षणकर्म्मैतत्तव वाचमतोयते।
इति श्रीमहाभारते सभापर्व्वणि शिशुपालबधपर्व्वणि शिशुपालवाक्ये चत्वारिंशोऽध्यायः॥ ४० ॥
॥ शिशुपाल उवाच ॥ स मे बहुमतो राजा जरासन्धो महाबलः। योऽनेन युद्धं नेयेष दासोऽयमिति संयुगे।
केशवेन कृतं कर्म्म जरासन्धबधे तदा। भीमसेनार्जुनाभ्याञ्च कस्तत्साध्विति मन्यते। १४७५
अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना। दृष्टः प्रभावः कृष्णेन जरासन्धस्य भूपतेः।
येन धर्म्मात्मनात्मानं ब्रह्मण्यमविजानता। नेषितं पाद्यमस्मै तद्दातुमग्रे दुरात्मने।
भुज्यतामिति तेनोक्ताः कृष्णभीमधनञ्जयाः। जरासन्धेन कौरव्य कृष्णेन विकृतं कृतं।
यद्ययं जगतः कर्त्ता यथैनं मूर्ख मन्यसे। कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति।
इदं त्वाश्चर्य्यभूतं मे यदीमे पाण्डवास्त्वया। अपकृष्टाः सतां मार्गान् मन्यन्ते तच्च साध्विति। १४८०
अथ वा नैतदाश्चर्य्यं येषां त्वमसि भारत। स्त्रीसधर्म्मा च वृद्धश्च सर्व्वार्थानां प्रदर्शकः।
॥ वैशम्पायन उवाच ॥ तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु। चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान्।
तथा पद्मप्रतीकाशे स्वभावायतविस्तृते। भूयः क्रोधाभिताम्राक्षे रक्ते नेत्रे बभूवतुः।
त्रिशिखां भ्रूकुटीं चास्य ददृशुः सर्व्वपार्थिवाः। ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव।

दन्तान् सन्दशतस्तस्य कोपाद्ददृशुराननं। युगान्ते सर्व्वभूतानि कालस्येव दिधक्षतः। १४८५
उत्पतन्तन्तु वेगेन जग्राहैनं मनस्विनं। भीष्म एव महाबाहुर्महासेनमिवेश्वरः।
तस्य भीमस्य भीष्मेण वार्य्यमाणस्य भारत। गुरुणा विविधैर्व्वाक्यैः क्रोधः प्रशममागतः।
नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः। समुद्धूतो घनापाये वेलामिव महोदधिः।
शिशुपालस्तु संक्रुद्धे भीमसेने जनाधिप। नाकम्पत तदा वीरः पौरुषे स्वे व्यवस्थितः।
उत्पतन्तन्तु वेगेन पुनःपुनररिन्दम। न स तं चिन्तयामास सिंहः क्रुद्धो मृगं यथा। १४९०
प्रहसंश्चाब्रवीद्वाक्यं चेदिराजः प्रतापवान्। भीमसेनमभिक्रुद्धं दृष्ट्वा भीमपराक्रमं।
मुञ्चैनं भीष्म पश्यन्तु यावदेनं नराधिपाः। मत्प्रभावविनिर्द्दग्धं पतङ्गमिव वह्निना।
ततश्चेदिपतेर्व्वाक्यं श्रुत्वा तत्कुरुसत्तमः। भीमसेनमुवाचेदं भीष्मो मतिमतां वरः।
इति श्रीमहाभारते सभापर्व्वणि शिशुपालवधपर्व्वणि भीमक्रोधे एकचत्वारिंशोऽध्यायः॥ ४१ ॥
॥ भीष्म उवाच॥ चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः। रासभारावसदृशं रुराव च ननाद च।
तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ। वैकृतं तस्य तौ दृष्ट्वा त्यागाय कुरुतां मतिं। १४९५
ततः सभार्य्यं नृपतिं सामात्यं सपुरोहितं। चिन्तासंमूढहृदयं वागुवाचाशरीरिणी।
एष ते नृपते पुत्रः श्रीमान् जातो बलाधिकः। तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुं।
न च वैतस्य मृत्युर्व्वै न कालः प्रत्युपस्थितः। मृत्युर्हन्ताऽस्य शस्त्रेण स चोत्पन्नो नराधिप।
संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः। पुत्रस्नेहाभिसन्तप्ता जननी वाक्यमब्रवीत्।
येनेदमीरितं वाक्यं ममैतं तनयं प्रति। प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्व्वचः। १५००
याथातथ्येन भगवान् देवो वा यदि वेतरः। श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति।
अन्तर्भूतं ततो भूतमुवाचेदं पुनर्व्वचः। यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ।
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ। तृतीयमेतद्बालस्य ललाटस्थं तु लोचनं।
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति। त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतं।
पृथिव्यां पार्थिवाः सर्व्वे अभ्यागच्छन् दिदृक्षवः। तान् पूजयित्वा संप्राप्तान् यथार्हं स महीपतिः। १५०५
एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा। एवं राजसहस्राणां पृथक्त्वेन यथाक्रमं।
शिशुरङ्के समारूढो न तत्प्राप निदर्शनं। एतदेव तु संश्रुत्य द्वारवत्यां महाबलौ।
ततश्चेदिपुरीं प्राप्तौ सङ्कर्षणजनार्द्दनौ। यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा।
अभिवाद्य यथान्यायं यथाश्रेष्ठं नृपञ्च तां। कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ।
साऽभ्यर्च्चितौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः। पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात् स्वयं। १५१०
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ। पेततुस्तच्च नयनं न्यमज्जत ललाटजं।
तद्दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत। ददस्व मे वरं कृष्ण भयार्त्ताया महाभुज।
त्वं ह्यार्त्तानां समाश्वासो भीतानामभयप्रदः। एवमुक्तस्ततः कृष्णः सोऽब्रवीद्यदुनन्दनः।

माभैस्त्वं देवि धर्म्मज्ञे न मत्तोऽस्ति भयं तव। ददामि किं वरं किञ्च करवाणि पितृष्वसः।
शक्यं वा यदि वाऽशक्यं करिष्यामि वचस्तव। एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनं। १५१५
शिशुपालस्यापराधान् क्षमेथास्त्वं महाबल। मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो।
॥ कृष्ण उवाच॥ अपराधशतं क्षाम्य मया ह्यस्य पितृष्वसः। पुत्त्रस्य ते वधार्हस्य मा त्वं शोके मनःकृथाः।
॥ भीष्म उवाच॥ एवमेष नृपः पापः शिशुपालःसुमन्दधीः। त्वां समाह्वयते वीर गोविन्दवरदर्पितः।
इति श्रीमहाभारते सभापर्व्वणि शिशुपालवधपर्व्वणि शिशुपालवृत्तान्तकथने द्विचत्वारिंशोऽध्यायः॥ ४२॥
॥ भीष्म उवाच॥ नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतं। नूनमेष जगद्भर्त्तुः कृष्णस्यैव विनिश्चयः।
को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः। क्षेप्तुं कालपरीतात्मा यथैष कुलपांसनः। १५२०
एष ह्यस्य महाबाहुस्तेजोंशश्च हरेर्ध्रुवं। तमेव पुनरादातुमिच्छत्युत तथा विभुः।
येनैष कुरुशार्दूल शार्दूल इव चेदिराट्। गर्जत्यतीव दुर्बुद्धिः सर्व्वानस्मानचिन्तयन्।
॥ वैशम्पायन उवाच॥ ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा। उवाच चैनं संक्रुद्धः पुनर्भीष्ममथोत्तरं।
॥ शिशुपाल उवाच॥ द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः। यस्य संस्तववक्ता त्वं बन्दिवत्सततोत्थितः।
संस्तवेच मनो भीष्म परेषां रमते यदि। तदा संस्तौषि राज्ञस्त्वमिमं हित्वा जनार्दनं। १५२५
दरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमं। जायमानेन येनेयमभवद्दारिता मही।
वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले। स्तुहि कर्णमिमं भीष्म महाचापविकर्षणं।
यस्येमे कुण्डले दिव्ये सहजे देवनिर्म्मिते। कवचञ्च महाबाहो बालार्कसदृशप्रभं।
वासवप्रतिमो येन जरासन्धोऽतिदुर्जयः। विजितो बाहुयुद्धेन देहभेदञ्च लम्भितः।
द्रोणं द्रौणिञ्च साधु त्वं पितापुत्त्रौ महारथौ। स्तुहि स्तुत्यावुभौ भीष्म सततं द्विजसत्तमौ। १५३०
ययोरन्यतरो भीष्म संक्रुद्धः सचराचरं। इमां वसुमतीं कुर्य्यान्निःशेषामिति मे मतिः।
द्रोणस्य हि समं युद्धे न पश्यामि नराधिपं। नाश्वत्थाम्नःसमं भीष्म नच तौ स्तोतुमिच्छसि।
पृथिव्यां सागरान्तायां यो वै प्रतिसमो भवेत्। दुर्य्योधनं तं राजेन्द्रमतिक्रम्य महाभुजं।
जयद्रथञ्च राजानं कृतास्त्रं दृढविक्रमं। द्रुमं किम्पुरुषाचार्य्यं लोके प्रथितविक्रमं।
वृद्धञ्च भारताचार्य्यं तथा शारद्वतं कृपं। १५३५
अतिक्रम्य महावीर्य्यं किं प्रशंससि केशवं। धनुर्धराणां प्रवरं रुक्मिणं पुरुषोत्तमं।
अतिक्रम्य महावीर्य्यं किं प्रशंससि केशवं। भीष्मकञ्च महावीर्य्यं दन्तवक्रञ्च भूमिपं।
भगदत्तं यूपकेतुं जयत्सेनञ्च मागधं। विराटद्रुपदौ चोभौ शकुनिञ्च बृहद्बलं।
विन्दानुविन्दावावन्त्यौ पाण्ड्यं श्वेतमथोत्तमं। शङ्खञ्च सुमहाभागं वृषसेनञ्च मानिनं।
एकलव्यञ्च विक्रान्तं कालिङ्गञ्च महारथं। अतिक्रम्य महावीर्य्यं किं प्रशंससि केशवं। शल्यादीनपि कस्मात्त्वं न स्तौषि वसुधाधिपान्। १५४०
स्तवाय यदि ते बुद्धिर्व्वर्त्तते भीष्म सर्व्वदा। किं हि शक्यं मया कर्त्तुं यद्वृद्धानां त्वया नृप। पुरा कथयतां नूनं न श्रुतं धर्म्मवादिनां।

आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः । अनाचरितमार्य्याणामिति ते भीष्म नः श्रुतं ।
यदसत्यमिदं मन्ये मोहात्संस्तौषि भक्तितः । केशवं तच्च ते भीष्म न कश्चिदनुमन्यते ।
कथं भोजस्य पुरुषे वर्गपाले दुरात्मनि । समावेशयसे सर्व्वं जगत्केवलकाम्यया ।
अथ वैषा न ते बुद्धिः प्रकृतिं याति भारत । मयैव कथितं पूर्व्वं भूलिङ्गशकुनिर्य्यथा । १५४५
भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे । भीष्म तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः ।
मा साहसमितीदं सा सततं वाशते किल । साहसं चात्मनाऽतीव चरन्ती नावबुध्यते ।
सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः । दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ।
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयं । तद्वत्त्वमप्यधर्म्मिष्ठ सदा वाचः प्रभाषसे ।
इच्छतां भूमिपालानां भीष्म जीवस्यसंशयं । लोकविद्विष्टकर्म्मा हि नान्योऽस्ति भवता समः । १५५०
॥ वैशम्पायन उवाच ॥ ततश्चेदिपतेः श्रुत्वा भीष्मः सकटुकं वचः । उवाचेदं वचो राजंश्चेदिराजस्य शृण्वतः ।
इच्छतां किल नामाहं जीवाम्येषां महीक्षितां । सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान् ।
एवमुक्ते तु भीष्मेण ततः सञ्चुक्रुशुर्नृपाः । केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ।
केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य तद्वचः । पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमां ।
हन्यतां दुर्म्मतिर्भीष्मः पशुवत्साध्वयं नृपाः । सर्व्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना । १५५५
इति तेषां वचः श्रुत्वा ततः कुरुपितामहः । उवाच मतिमान् भीष्मस्तानेव वसुधाधिपान् ।
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये । यत्तु वक्ष्यामि तत्सर्व्वं शृणुध्वं वसुधाधिपाः ।
पशुवद्घातनं वा मे दहनं वा कटाग्निना । क्रियतां मूर्द्ध्नि वो न्यस्तं मयेदं सकलं पदं ।
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः । यस्य वा त्वरते बुद्धिर्म्मरणाय स माधवं ।
कृष्णमाह्वयतामद्य युद्धे शार्ङ्गगदाधरं । यावदस्यैव देवस्य देहं विशतु पातितः । १५६०
इतिश्रीमहाभारते सभापर्व्वणि शिशुपालवधपर्व्वणि भीष्मवाक्ये चत्वारिंशोऽध्यायः॥ ४३ ॥
॥ वैशम्पायन उवाच॥ ततःश्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः । युयुत्सुर्व्वासुदेवेन वासुदेवमुवाच ह ।
आह्वये त्वां रणं गच्छ मया सार्द्धं जनार्दन । यावदद्य निहन्मि त्वां सहितं सर्व्वपाण्डवैः ।
सह त्वया हि मे वध्याः सर्व्वथा कृष्ण पाण्डवाः । नृपतीन् समतिक्रम्य यैरराजा त्वमर्च्चितः ।
ये त्वां दासमराजानं बाल्यादर्च्चन्ति दुर्म्मतिं । अनर्हमर्हवत्कृष्ण वध्यास्त इति मे मतिः ।
इत्युक्त्वा राजशार्दूल तस्थौ गर्ज्जन्नमर्षणः। एवमुक्ते ततः कृष्णो मृदुपूर्व्वमिदं वचः । उवाच पार्थिवान् सर्व्वान् स समक्षञ्च पाण्डवान् । १५६१
एष नः शत्रुरत्यन्तं पार्थिवाः सात्वतीसुतः । सात्वतानां नृशंसात्मा न हितो ऽनपकारिणां ।
प्राग्ज्योतिषपुरं यातानस्मान् ज्ञात्वा नृशंसकृत् । अदहद्द्वारकामेष स्वस्रीयः सन्नराधिपाः । क्रीडतो भोजराजस्य एष रैवतके गिरौ ।
हत्वा बद्ध्वा च तान् सर्व्वानुपायात् स्वपुरं पुरा । अश्वमेधे हयं मेध्यं उत्सृष्टं रक्षिभिर्वृतं ।

पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः। सौवीरान् प्रतियातांश्च बभ्रोरेष तपस्विनः। भार्य्यामभ्यहरन्मोहादकामां तामितो गतां।
एष मायाप्रतिच्छन्नः कारूषार्थे तपस्विनीं। जहार भद्रां वैशालीं मातुलस्य नृशंसकृत्। १५७०
पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहं। दिष्ट्या त्विदं सर्व्वराज्ञां सन्निधावद्य वर्त्तते।
पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमं। कृतानि तु परोक्षं मे यानि तानि निबोधत।
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमं। अवलेपाद्वधार्हस्य समग्रे राजमण्डले।
रुक्मिण्यामस्य मूढस्य प्रार्थनासीन्मुमूर्षतः। न च तां प्राप्तवान् मूढः शूद्रो वेदश्रुतीमिव।
॥ वैशम्पायन उवाच ॥ एवमादि ततः सर्व्वे सहितास्ते नराधिपाः। वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन्। १५७५
तस्य तद्वचनं श्रुत्वा शिशुपालः प्रतापवान्। जहास स्वनवद्धासं वाक्यं चेदमुवाच ह।
मत्पूर्व्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्त्तयन्। विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथं।
मन्यमानो हि कः सत्सु पुरुषः परिकीर्त्तयेत्। अन्यपूर्व्वां स्त्रियं जातु त्वदन्यो मधुसूदन।
क्षम वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम। क्रुद्धाद्वाऽपि प्रसन्नाद्वा किं मे त्वत्तो भविष्यति।
तथा ब्रुवत एवास्य भगवान् मधुसूदनः। मनसाऽचिन्तयच्चक्रं दैत्यगर्व्वनिसूदनं। १५८०
एतस्मिन्नेव काले तु चक्रे हस्तगते सति। उवाच भगवानुच्चैर्व्वाक्यं वाक्यविशारदः।
शृण्वन्तु मे महीपाला येनैतत्क्षमितं मया। अपराधशतं क्षाम्यं मातुरस्यैव याचने।
दत्तं मया याचितञ्च तद्वै पूर्णं हि पार्थिवाः। अधुना वधयिष्यामि पश्यतां वो महीक्षितां।
एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात्। व्यपाहरत् शिरः क्रुद्धश्चक्रेणामित्रकर्षणः।
स पपात महाबाहुर्व्वज्राहत इवाचलः। ततश्चेदिपतेर्द्देहात्तेजोऽग्र्यं ददृशुर्नृपाः। १५८५
उत्पतन्तं महाराज गगनादिव भास्करं। ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतं।
ववन्दे तत्तदा तेजो विवेश च नराधिप। तदद्भुतममन्यन्त दृष्ट्वा सर्व्वे महीक्षितः।
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमं। अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताशनिः।
कृष्णेन निहते चैद्ये चचाल च वसुन्धरा। ततः केचिन्महीपाला नाब्रुवंस्तत्र किञ्चन।
अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनं। हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नमर्षिताः। १५९०
अपरे दशनैरोष्ठानदशन् क्रोधमूर्च्छिताः। रहस्य केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः।
केचिदेव सुसंरब्धा मध्यस्थास्त्वपरेऽभवन्। प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः।
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः। शशंसुर्निर्वृताः सर्व्वे दृष्ट्वा कृष्णस्य विक्रमं।
पाण्डवस्त्वब्रवीत् भ्रातॄन् सत्कारेण महीपतिं। दमघोषात्मजं वीरं संस्कारयत माचिरं।
तथा च कृतवन्तस्ते भ्रातुर्व्वै शासनं तदा। चेदीनामाधिपत्ये च पुत्त्रमस्य महीपतेः। १५९५
अभ्यषिञ्चत्तदा पार्थः सह तैर्व्वसुधाधिपैः। ततः स कुरुराजस्य क्रतुः सर्व्वसमृद्धिमान्।
यूनां प्रीतिकरो राजन् स बभौ विपुलौजसः। शान्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान्।
अन्नवान् बहुभक्ष्यश्च केशवेन सुरक्षितः। समापयामास च तं राजसूयं महाक्रतुं।

तन्तु यज्ञं महाबाहुरासमाप्तेर्जनार्दनः । ररक्ष भगवाञ्छौरिः शार्ङ्गचक्रगदाधरः ।
ततस्त्ववभृथस्नातं धर्म्मात्मानं युधिष्ठिरं । समस्तं पार्थिवं क्षत्रमुपगम्येदमब्रवीत् । १६००
दिष्ट्या वर्द्धसि धर्म्मज्ञ साम्राज्यं प्राप्तवानसि । आजमीढाजमीढानां यशः संवर्धितं त्वया ।
कर्म्मणैतेन राजेन्द्र धर्म्मश्च सुमहान् कृतः । आपृच्छामो नरव्याघ्र सर्व्वकामैः सुपूजिताः ।
स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि । श्रुत्वा तु वचनं राज्ञां धर्म्मराजो युधिष्ठिरः ।
यथाऽर्हं पूज्य नृपतीन् भ्रातॄन्सर्व्वाननुवाच ह । राजानः सर्व्व एवैते प्रीत्याऽस्मान् समुपागताः ।
प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परन्तपाः । तेऽनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान् । १६०५
भ्रातुर्व्वचनमाज्ञाय पाण्डवा धर्म्मचारिणः । यथाऽर्हं नृपतीन् सर्व्वानेकैकं समनुव्रजन् । विराटमन्वयात्तूर्णं धृष्टद्युम्नः प्रतापवान् ।
धनञ्जयो यज्ञसेनं महात्मानं महारथं । भीष्मञ्च धृतराष्ट्रञ्च भीमसेनो महाबलः ।
द्रोणन्तु ससुतं वीरं सहदेवो युधाम्पतिः । नकुलः सुबलं राजन् सहपुत्रं समन्वयात् ।
द्रौपदेयाः ससौभद्राः पार्व्वतीयान् महारथान् । अन्वगच्छंस्तथैवान्यान् क्षत्रियान् क्षत्रियर्षभाः ।
एवं सुपूजिताः सर्व्वे जग्मुर्व्विप्राः सहस्रशः । गतेषु पार्थिवेन्द्रेषु सर्व्वेषु ब्राह्मणेषु च । १६१०
युधिष्ठिरमुवाचेदं वासुदेवः प्रतापवान् । आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ।
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि । तमुवाचैवमुक्तस्तु धर्म्मराजो जनार्द्दनं ।
तव प्रसादाद्गोविन्द प्राप्तः क्रतुवरो मया । क्षत्रं समग्रमपि च त्वत्प्रसादाद्वशे स्थितं ।
उपादाय बलिं मुख्यं मामेव समुपस्थितं । कथं त्वद्गमनार्थं मे वाणी वितरतेऽनघ ।
न ह्यहं त्वामृते वीर रतिं प्राप्नोमि कर्हिचित् । अवश्यञ्चैव गन्तव्या भवता द्वारका पुरी । १६१५
एवमुक्तः स धर्म्मात्मा युधिष्ठिरसहायवान् । अभिगम्याब्रवीत्प्रीतः पृथां पृथुयशा हरिः । साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य पितृष्वसः ।
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि । अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ।
सुभद्रां द्रौपदीञ्चैव सभाजयत केशवः । निष्क्रम्यान्तःपुरात्तस्माद्युधिष्ठिरसहायवान् ।
स्नातश्च कृतजप्यश्च ब्राह्मणान्स्वस्ति वाच्य च । ततो मेघवपुःप्रख्यं स्यन्दनञ्च सुकल्पितं ।
योजयित्वा महाबाहुर्दारुकः समुपस्थितः । उपस्थितं रथं दृष्ट्वा तार्क्ष्यप्रवरकेतनं । १६२०
प्रदक्षिणमुपावृत्य समारुह्य महामनाः । प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीं ।
तं पद्भ्यामनुवव्राज धर्म्मराजो युधिष्ठिरः । भ्रातृभिः सहितः श्रीमान् वासुदेवं महाबलं ।
ततो मुहूर्त्तं संगृह्य स्यन्दनप्रवरं हरिः । अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरं ।
अप्रमत्तः स्थितो नित्यं प्रजाः पाहि विशाम्पते । पर्जन्यमिव भूतानि महाद्रुमिव द्विजाः ।
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः । कृत्वा परस्परेणैव संविदं कृष्णपाण्डवौ । १६२५
अन्योन्यं समनुज्ञाप्य जग्मतुः स्वगृहान् प्रति । गते द्वारवतीं कृष्णे सात्वतप्रवरे नृप ।

एको दुर्य्योधनो राजा शकुनिश्चापि सौबलः। तस्यां सभायां दिव्यायामूषतुस्तौ नरर्षभौ ।

इतिश्रीमहाभारते सभापर्व्वणि शिशुपालवधपर्व्वणि शिशुपालवधे चतुश्चत्वारिंशोऽध्यायः समाप्तञ्च शिशुपालवधपर्व्व ॥ ४४ ॥

---

## ॥ अथ द्यूतपर्व्व ॥ ८ ॥

॥ वैशम्पायन उवाच ॥ समाप्ते राजसूये तु क्रतुश्रेष्ठे सुदुर्लभे। शिष्यैः परिवृतो व्यासः पुरस्तात्समपद्यत ।
सोऽभ्ययादासनात्तूर्णं भ्रातृभिः परिवारितः। पाद्येनासनदानेन पितामहमपूजयत् ।
अथोपविश्य भगवान् काञ्चने परमासने। आस्यतामिति चोवाच धर्म्मराजं युधिष्ठिरं। १६१०
अथोपविष्टं राजानं भ्रातृभिः परिवारितं। उवाच भगवान्व्यासस्तत्तद्वाक्यविशारदः ।
दिष्ट्या वर्धसि कौन्तेय साम्राज्यं प्राप्य दुर्लभं। वर्धिताः कुरवः सर्व्वे त्वया कुरुकुलोद्वह ।
आपृच्छे त्वां गमिष्यामि पूजितोऽस्मि विशाम्पते। एवमुक्तः स कृष्णेन धर्म्मराजो युधिष्ठिरः।
अभिवाद्योपसङ्गृह्य पितामहमथाब्रवीत्। युधिष्ठिर उवाच। संशयो द्विपदां श्रेष्ठ ममोत्पन्नः सुदुर्लभः।
तस्य नान्योऽस्ति वक्ता वै त्वामृते द्विजपुङ्गव। उत्पातांस्त्रिविधान् प्राह नारदो भगवानृषिः। १६१५
दिव्यांश्चैवान्तरीक्षांश्च पार्थिवांश्च पितामह। अपि चैद्यस्य पतनाच्छन्नमौत्पातिकं महत् ।
॥ वैशम्पायन उवाच ॥ राज्ञस्तु वचनं श्रुत्वा पराशरसुतः प्रभुः। कृष्णद्वैपायनो व्यास इदं वचनमब्रवीत्।
त्रयोदश समा राजन्नुत्पातानां फलं महत्। सर्व्वक्षत्रविनाशाय भविष्यति विशाम्पते।
त्वामेकं कारणं कृत्वा कालेन भरतर्षभ। समेतं पार्थिवं क्षत्रं क्षयं यास्यति भारत।
दुर्य्योधनापराधेन भीमार्जुनबलेन च। स्वप्ने द्रक्ष्यसि राजेन्द्र क्षपाऽन्ते त्वं वृषध्वजं। १६२०
नीलकण्ठं भवं स्थाणुं कपालिं त्रिपुरान्तकं।
उग्रं रुद्रं पशुपतिं महादेवमुमापतिं। हरं सर्व्वं वृषं शूलिं पिनाकिं कृत्तिवाससं।
कैलासकूटप्रतिमं वृषभेऽवस्थितं शिवं। निरीक्षमाणं सततं पितृराजाश्रितां दिशं।
एवमीदृशकं स्वप्नं द्रक्ष्यसि त्वं विशाम्पते। मा तत्कृते ह्यनुध्याहि कालो हि दुरतिक्रमः।
स्वस्ति तेऽस्तु गमिष्यामि कैलासं पर्व्वतं प्रति। अप्रमत्तः स्थितो दान्तः पृथिवीं परिपालय। १६२५
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स भगवान् कैलासं पर्व्वतं ययौ। कृष्णद्वैपायनो व्यासः सह शिष्यैः श्रुतानुगैः।
गते पितामहे राजा चिन्ताशोकसमन्वितः। निःश्वसन्नुष्णमसकृत्तमेवार्थं विचिन्तयन्।
कथन्तु दैवं शक्येत पौरुषेण प्रबाधितुं। अवश्यमेव भविता यदुक्तं परमर्षिणा।
ततोऽब्रवीन्महातेजाः सर्व्वान्भ्रातॄन् युधिष्ठिरः। श्रुतं वै पुरुषव्याघ्रा यन्मां द्वैपायनोऽब्रवीत् ।
तदा तद्वचनं श्रुत्वा मरणे निश्चिता मतिः। सर्व्वक्षत्रस्य निधने यद्यहं हेतुरीप्सितः। १६३०
कालेन निर्म्मितस्तात को ममार्थोऽस्ति जीवतः। एवं ब्रुवन्तं राजानं फाल्गुनः प्रत्यभाषत।
मा राजन् कश्मलं घोरं प्राविशो बुद्धिनाशनं। सम्प्रधार्य्य महाराज यत्क्षेमं तत्समाचर।
ततोऽब्रवीत्सत्यधृतिर्भ्रातॄन् सर्व्वान् युधिष्ठिरः। द्वैपायनस्य वचनं तत्रैव समचिन्तयत्।

अद्य प्रभृति भद्रं वः प्रतिज्ञां मे निबोधत । त्रयोदशसमास्तात को ममार्थोऽस्ति जीवतः ।
न प्रवक्ष्यामि परुषं भ्रातॄनन्यांश्च पार्थिवान् । स्थितो निदेशे ज्ञातीनां योक्ष्ये तत्समुदाहरन् । १६५५
एवं मे वर्त्तमानस्य स्वसुतेष्वितरेषु च । भेदो न भविता लोके भेदमूलो हि विग्रहः ।
विग्रहं दूरतो रक्षन् प्रियाण्येव समाचरन् । वाच्यतां न गमिष्यामि लोकेषु मनुजर्षभाः ।
भ्रातुर्ज्येष्ठस्य वचनं पाण्डवाः सन्निशम्य तत् । तमेव समवर्त्तन्त धर्म्मराजहिते रताः ।
संसत्सु समयं कृत्वा धर्म्मराट् भ्रातृभिः सह । पितॄंस्तर्प्य यथान्यायं देवताश्च विशाम्पते ।
कृतमङ्गलकल्याणो भ्रातृभिः परिवारितः । गतेषु क्षत्रियेन्द्रेषु सर्व्वेषु भरतर्षभ । १६६०
युधिष्ठिरः सहामात्यः प्रविवेश पुरोत्तमं । दुर्य्योधनो महाराज शकुनिश्चापि सौबलः । सभायां रमणीयायां तत्रैवास्ते नराधिप ।

इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि युधिष्ठिरसमये पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ वैशम्पायन उवाच ॥ वसन् दुर्य्योधनस्तस्यां सभायां पुरुषर्षभः । शनैर्ददर्श तां सर्व्वां सभां शकुनिना सह ।
तस्यां दिव्यानभिप्रायान् ददर्श कुरुनन्दनः । न दृष्टपूर्व्वा ये तेन नगरे नागसाह्वये ।
स कदाचित्सभामध्ये धार्त्तराष्ट्रो महीपतिः । स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ।
स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः । दुर्म्मना विमुखश्चैव परिचक्राम तां सभां । १६६५
ततः स्थले निपतितो दुर्म्मना व्रीडितो नृपः । निश्वसन्विमुखश्चापि परिचक्राम तां सभां ।
ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभितां । वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ।
जले निपतितं दृष्ट्वा भीमसेनो महाबलः । जहास जहसुश्चैव किङ्कराश्च सुयोधनं ।
वासांसि च शुभान्यस्मै प्रददू राजशासनात् । तथागतन्तु तं दृष्ट्वा भीमसेनो महाबलः ।
अर्ज्जुनश्च यमौ चोभौ सर्व्वे ते प्राहसंस्तदा । नामर्षयत्ततस्तेषामवहासममर्षणः । १६७०
आकारं रक्षमाणस्तु न स तान् समुदैक्षत । पुनर्व्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलं ।
आरुरोह ततः सर्व्वे जहसुश्च पुनर्जनाः । द्वारन्तु पिहिताकारं स्फाटिकं प्रेक्ष्य भूमिपः ।
प्रविशन्नाहतो मूर्द्ध्नि व्याघूर्णित इव स्थितः । तादृशं चापरं द्वारं स्फाटिकोरुकपाटकं ।
विघट्टयन्कराभ्यान्तु निष्क्रम्याग्रे पपात ह । द्वारन्तु विततकारं समापेदे पुनश्च सः ।
तद्वृत्तं चेति मन्वानो द्वारस्थानादुपारमत् । एवं प्रलम्भान् विविधान् प्राप्य तत्र विशाम्पते । १६७५
पाण्डवेयाभ्यनुज्ञातस्ततो दुर्य्योधनो नृपः । अप्रहृष्टेन मनसा राजसूये महाक्रतौ । प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयं ।
पाण्डवश्रीप्रतप्तस्य ध्यायमानस्य गच्छतः । दुर्य्योधनस्य नृपतेः पापा मतिरजायत ।
पार्थान्सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान् । कृत्स्नं चापि हितं लोकमाकुमारं कुरूद्वह ।
महिमानं परञ्चापि पाण्डवानां महात्मनां । दुर्य्योधनो धार्त्तराष्ट्रो विवर्णः समपद्यत ।
स तु गच्छन्ननेकाग्रः सभामेकोऽन्वचिन्तयत् । श्रियञ्च तामनुपमां धर्म्मराजस्य धीमतः । १६८०

प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्य्योधनस्तदा। नाभ्यभाषत्सुबलजं भाषमाणं पुनः पुनः।
अनेकाग्रन्तु तं दृष्ट्वा शकुनिः प्रत्यभाषत। दुर्य्योधन कुतो मूलं निश्वसन्निव गच्छसि।
॥ दुर्य्योधन उवाच॥ दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगां। जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः।
तञ्च यज्ञं महाभ्रतं दृष्ट्वा पार्थस्य मातुल। यथा शक्रस्य देवेषु तथा भूतं महाद्युतेः।
अमर्षेण तु सम्पूर्णो दह्यमानो दिवानिशं। शुचिशुक्रागमे काले शुष्येत्तोयमिवाल्पकं। १८८५
पश्य सात्वतमुख्येन शिशुपालो निपातितः। न च तत्र पुमानासीत् कश्चित्तस्य पदानुगः।
दह्यमाना हि राजानः पाण्डवोत्थेन वह्निना। चान्तवन्तोऽपराधं ते को हि तत्चन्तुमर्हति।
वासुदेवेन तत्कर्म्म यथाऽयुक्तं महत्कृतं। सिद्धञ्च पाण्डुपुत्राणां प्रतापेन महात्मनां।
तथाहि रत्नान्यादाय विविधानि नृपा नृपं। उपातिष्ठन्त कौन्तेयं वैश्या इव करप्रदाः।
श्रियं तथागतां दृष्ट्वा ज्वलन्तीमिव पाण्डवे। अमर्षवशमापन्नो दह्यामि नतथोचितः। १८९०
एवं स निश्चयं कृत्वा ततो वचनमब्रवीत्। पुनर्गान्धारनृपतिं दह्यमान इवाग्निना।
वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषं। अपो वाऽपि प्रवेक्ष्यामि नहि शक्ष्यामि जीवितुं।
को हि नाम पुमान् लोके मर्षयिष्यति सत्त्ववान्। सपत्नानृध्यतो दृष्ट्वा हीनमात्मानमेव च।
सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि। योऽहं तां मर्षयाम्यद्य तादृशीं श्रियमागतां।
ईश्वरत्वं पृथिव्याश्च वसुमत्ताञ्च तादृशीं। यज्ञञ्च तादृशं दृष्ट्वा मादृशः को न संज्वरेत्। १८९५
अशक्तश्चैक एवाहं तामाहर्त्तुं नृपश्रियं। सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये।
दैवमेव परं मन्ये पौरुषञ्च निरर्थकं। दृष्ट्वा कुन्तीसुते शुद्धां श्रियं तां महतां यथा।
कृतो यत्नो मया पूर्व्वं विनाशे तस्य सौबल। तच्च सर्व्वमतिक्रम्य संवृद्धोऽप्स्विव पङ्कजं।
तेन दैवं परं मन्ये पौरुषञ्च निरर्थकं। धार्त्तराष्ट्रा हि हीयन्ते पार्था वर्द्धन्ति नित्यशः।
सोऽहं श्रियञ्च तां दृष्ट्वा सभां ताञ्च तथाविधां। रचिभिश्चावहासं तं परितप्ये यथाऽग्निना। १९००
स मामभ्यनुजानीहि मातुलाद्य सुदुःखितं। अमर्षञ्च समाविष्टं धृतराष्ट्रे निवेदय।
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे षट्चत्वारिंशोऽध्यायः॥ ४६॥
॥ शकुनिरुवाच॥ दुर्य्योधन न तेऽमर्षः कार्य्यः प्रति युधिष्ठिरं। भागधेयानि हि स्वानि पाण्डवा भुञ्जते सदा।
विधानं विविधाकारं परं तेषां विधानतः। अनेकैरभ्युपायैश्च त्वया न शकिताः पुरा।
आरब्धापि महाराज पुनः पुनररिन्दम। विमुक्ताश्च नरव्याघ्रा भागधेयपुरस्कृताः।
तैर्लब्धा द्रौपदी भार्य्या द्रुपदश्च सुतैः सह। सहायः पृथिवीलाभे वासुदेवश्च वीर्य्यवान्। १९०५
लब्धश्च नाभिभूतार्थैः पित्र्योंऽशः पृथिवीपते। विवृद्धस्तेजसा तेषां तत्र का परिदेवना।
धनञ्जयेन गाण्डीवमक्षय्यौ च महेषुधी। लब्धान्यस्त्राणि दिव्यानि तोषयित्वा हुताशनं।
तेन कार्म्मुकमुख्येन बाहुवीर्य्येण चात्मनः। कृता वशे महीपालास्तत्र का परिदेवना।
अग्निदाहान्मयञ्चापि मोचयित्वा स दानवं। सभां तां कारयामास सव्यसाची परन्तपः।

तेनचैव मयेनोक्ताः किङ्करा नाम राक्षसाः । वहन्ति तां सभां भीमास्तत्र का परिदेवना । १७१०
यच्चासहायतां राजन्नुक्तवानसि भारत । तन्मिथ्या भ्रातरो हीमे तव सर्व्वे वशानुगाः ।
द्रोणस्तव महेष्वासः सह पुत्रेण वीर्य्यवान् । सूतपुत्रश्च राधेयो गौतमश्च महारथः ।
अहञ्च सह सोदर्य्यैः सौमदत्तिश्च पार्थिवः । एतैस्त्वं सहितः सर्व्वैर्जय कृत्स्नां वसुन्धरां ।
॥ दुर्य्योधन उवाच ॥ त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः । एतानेव विजेष्यामि यदि त्वमनुमन्यसे ।
एतेषु विजितेष्वद्य भविष्यति मही मम । सर्व्वे च पृथिवीपालाः सभा सा च महाधना । १७१५
शकुनिरुवाच ॥ धनञ्जयो वासुदेवो भीमसेनो युधिष्ठिरः । नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः ।
नैते युधि पराजेतुं शक्या देवगणैरपि । महारथा महेष्वासाः कृतास्त्रा युद्धदुर्म्मदाः ।
अहन्तु तद्विजानामि विजेतुं येन शक्यते । युधिष्ठिरं स्वयं राजंस्तन्निबोध जुषस्व च ।
॥ दुर्य्योधन उवाच ॥ अप्रमादेन सुहृदामन्येषाञ्च महात्मनां । यदि शक्या विजेतुं ते तन्ममाचक्ष्व मातुल ।
॥ शकुनिरुवाच ॥ द्यूतप्रियश्च कौन्तेयो न स जानाति देवितुं । समाहूतश्च राजेन्द्रो न शक्ष्यति निवर्त्तितुं । १७२०
देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि । त्रिषु लोकेषु कौरव्य तं त्वं द्यूते समाह्वय ।
तस्याक्षकुशलो राजन्नादास्येऽहमसंशयं । राज्यं श्रियञ्च तां दीप्तां त्वदर्थं पुरुषर्षभ ।
इदन्तु सर्व्वं त्वं राज्ञे दुर्य्योधन निवेदय । अनुज्ञातस्तु ते पित्रा विजेष्ये तान्न संशयः ।
॥ दुर्य्योधन उवाच ॥ त्वमेव कुरुमुख्याय धृतराष्ट्राय सौबल । निवेदय यथा न्यायं नाहं शक्ष्ये निवेदितुं ।
इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ वैशम्पायन उवाच ॥ अनुभूय च राज्ञस्तं राजसूयं महाक्रतुं । युधिष्ठिरस्य नृपतेर्गान्धारीपुत्रसंयुतः । १७२५
प्रियकृन्मतमाज्ञाय पूर्व्वं दुर्य्योधनस्य तत् । प्रज्ञाचक्षुषमासीनं शकुनिः सौबलस्तदा ।
दुर्य्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपं । उपगम्य महाप्राज्ञं शकुनिर्व्वाक्यमब्रवीत् ।
॥ शकुनिरुवाच ॥ दुर्य्योधनो महाराज विवर्णो हरिणः कृशः । दीनश्चिन्तापरश्चैव तं विद्धि मनुजाधिप ।
न वै परीक्षसे सम्यगसह्यं शत्रुसम्भवं । ज्येष्ठपुत्रस्य हृच्छोकं किमर्थं नावबुध्यसे ।
॥ धृतराष्ट्र उवाच ॥ दुर्य्योधन कुतो मूलं भृशमार्त्तोऽसि पुत्रक । श्रोतव्यश्चेन्मया सोऽर्थो ब्रूहि मे कुरुनन्दन । १७३०
अयं त्वां शकुनिः प्राह विवर्णं हरिणं कृशं । चिन्तयंश्च न पश्यामि शोकस्य तव सम्भवं ।
ऐश्वर्य्यं हि महत्पुत्र त्वयि सर्व्वं प्रतिष्ठितं । भ्रातरः सुहृदश्चैव नाचरन्ति तवाप्रियं ।
आच्छादयसि प्रावारानश्नासि पिशितौदनं । आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ।
शयनानि महार्हाणि योषितश्च मनोरमाः । गुणवन्ति च वेश्मानि विहाराश्च यथासुखं ।
देवानामिव ते सर्व्वं वाचि बद्धं न संशयः । स दीन इव दुर्द्धर्ष कस्माच्छोचसि पुत्रक । १७३५
॥ दुर्य्योधन उवाच ॥ अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा । अमर्षं धारये चोग्रं निनीषुः कालपर्य्ययं ।
अमर्षणः स्वाः प्रकृतीरभिभूय परं स्थितः । क्लेशान्मुमुक्षुः परजान् स वै पुरुष उच्यते ।
सन्तोषो वै श्रियं हन्ति ह्यभिमानश्च भारत । अनुक्रोशभये चोभे यैर्वृतो नाश्नुते महत् ।

न मां प्रीणाति मद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे। अतिज्वलन्तीं कौन्तेये विवर्णकरणीं मम।
सपत्नानृध्यतोत्मानं हीयमानं निशम्य च। अदृश्यामपि कौन्तेयश्रियं पश्यन्निवोद्यताम्। १०४०
तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः। अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः।
त्रिंशद्दासीक एकैको यान्बिभर्त्ति युधिष्ठिरः। दशान्यानि सहस्राणि नित्यं तत्रान्नमुत्तमं।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने। कदलीमृगमोकानि कृष्णश्यामारुणानि च।
काम्बोजः प्राहिणोत्तस्मै परार्द्ध्यानपि कम्बलान्। गजयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः।
त्रिंशतं चोष्ट्रवामीनां शतानि विचरन्त्युत। राजन्या बलिमादाय समेता हि नृपक्षये। १०४५
पृथग्विधानि रत्नानि पार्थिवाः पृथिवीपते। आहरन् क्रतुमुख्येऽस्मिन् कुन्तीपुत्राय भूरिशः।
न क्वचिद्धि मया तादृग्दृष्टपूर्व्वो न च श्रुतः। यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः।
अपर्य्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप। शर्म्म नैवाधिगच्छामि चिन्तयानो विशाम्पते।
ब्राह्मणा वाटधानाश्च गोमन्तः शतसंघशः। त्रिखर्व्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः।
कमण्डलूनुपादाय जातरूपमयान् शुभान्। एतद्धनं समादाय प्रवेशं लेभिरे न च। १०५०
यथैव मधु शक्राय धारयन्त्यमरस्त्रियः। तदस्मै कांस्यमाहार्षीत् वारुणं कलशोदधिः।
शैक्यं रुक्मसहस्रस्य बहुरत्नविभूषितं। शङ्खप्रवरमादाय वासुदेवोऽभिषिक्तवान्।
दृष्ट्वा च मम तत्सर्व्वं ज्वररूपमिवाभवत्। गृहीत्वा तत्तु गच्छन्ति समुद्रौ पूर्व्वदक्षिणौ।
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ। उत्तरन्तु न गच्छन्ति विना तात पतत्त्रिणः।
तत्र गत्वाऽर्ज्जुनो दण्डमाजहारामितं धनं। इदं चाद्भुतमत्रासीत्तन्मे निगदतः शृणु। पूर्णे शतसहस्रे तु विप्राणां परिविष्यतां।।१०५५
स्थापिता तत्र संज्ञाऽभूच्छङ्खो ध्मायति नित्यशः। मुहुर्मुहुः प्रणदतस्तस्य शङ्खस्य भारत।
अनिशं शब्दमश्रौषं ततो रोमाणि मेऽहृषन्। पार्थिवैर्ब्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः।
अशोभत महाराज नक्षत्रैर्द्यौरिवामला। सर्व्वरत्नान्युपादाय पार्थिवा वै जनेश्वर।
यज्ञे तस्य महाराज पाण्डुपुत्रस्य धीमतः। वैश्या इव महीपाला द्विजातिपरिवेशकाः।
न सा श्रीर्द्देवराजस्य यमस्य वरुणस्य च। गुह्यकाधिपतेर्व्वाऽपि या श्री राजन्युधिष्ठिरे। १०६०
तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिकामहं। शान्तिं न परिगच्छामि दह्यमानेन चेतसा।
॥ शकुनिरुवाच ॥ यामेतामतुलां लक्ष्मीं दृष्टवानसि पाण्डवे। तस्याः प्राप्तावुपायं मे शृणु सत्यपराक्रम।
अहमक्षेष्वभिज्ञातः पृथिव्यामपि भारत। हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने।
द्यूतप्रियश्च कौन्तेयो नच जानाति देवितुं। आहूतश्चैष्यति व्यक्तं द्यूतादपि रणादपि।
नियतं तं विजेष्यामि कृत्वा तु कपटं विभो। आनयामि समृद्धिं तां दिव्यां चोपाह्वयस्व तं। १०६५
॥ वैशम्पायन उवाच ॥ एवमुक्तः शकुनिना राजा दुर्य्योधनस्ततः। धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत्।
अयमुत्सहते राजन् श्रियमाहर्त्तुमक्षवित्। द्यूतेषु पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि।
॥ धृतराष्ट्र उवाच ॥ क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि शासने। तेन सङ्गम्य वेत्स्यामि कार्य्यस्यास्य विनिश्चयं।

स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितं। उभयोः पक्षयोर्युक्तं वक्ष्यत्यर्थविनिश्चयं।

॥ दुर्योधन उवाच ॥ निवर्त्तयिष्यति त्वाऽसौ यदि क्षत्ता समेष्यति। निवृत्ते त्वयि राजेन्द्र मरिष्येऽहं न संशयः। १०००

स त्वं मयि मृते राजन्विदुरेण सुखी भव। भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि।

॥ वैशम्पायन उवाच ॥ आर्त्तवाक्यन्तु तत्तस्य प्रणयोक्तं निशम्य सः। धृतराष्ट्रोऽब्रवीत्प्रेष्यान् दुर्योधनमते स्थितः।

स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम। मनोरमां दर्शनीयामाशु कुर्वन्तु शिल्पिनः।

ततः संस्तीर्य्य रत्नैस्तां तक्ष्ण आनाय्य सर्वशः। सुकृतां सुप्रवेशाञ्च निवेदयत मे शनैः।

दुर्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः। धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै। १००५

अपृष्ट्वा विदुरं ह्यस्य नासीत्कश्चिद्विनिश्चयः। द्यूते दोषांश्च जानन्स पुत्रस्नेहादकृष्यत।

तच्छ्रुत्वा विदुरो धीमान् कलिद्वारमुपस्थितं। विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत्।

सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजं। मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत्।

॥ विदुर उवाच ॥ नाभिनन्दामि ते राजन् व्यवसायमिमं प्रभो। पुत्रैर्भेदो यथा न स्यात् द्यूतहेतोस्तथा कुरु।

॥ धृतराष्ट्र उवाच ॥ क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति। यदि देवाः प्रसादं नः करिष्यन्ति न संशयः। १०१०

अशुभं वा शुभं वाऽपि हितं वा यदिवाऽहितं। प्रवर्त्ततां सुहृद्द्यूतं दिष्टमेतन्न संशयः।

मयि सन्निहिते द्रोणे भीष्मे त्वयि च भारत। अनयो दैवविहितो न कथञ्चिद्भविष्यति।

गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे। खाण्डवप्रस्थमद्यैव समानय युधिष्ठिरं।

न वार्य्यो व्यवसायो मे विदुरैतद्ब्रवीमि ते। दैवमेव परं मन्ये येनैतदुपपद्यते।

इत्युक्तो विदुरो धीमान्नेदमस्तीति चिन्तयन्। आपगेयं महाप्राज्ञमभ्यगच्छत् सुदुःखितः। १०१५

इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्योधनसन्तापे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ जनमेजय उवाच ॥ कथं समभवद्द्यूतं भ्रातॄणां तन्महात्ययं। यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः।

के च तत्र सभास्तारा राजानो ब्रह्मवित्तम। के चैनमन्वमोदन्त के चैनं प्रत्यषेधयन्।

विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज। मूलं ह्येतद्विनाशस्य पृथिव्या द्विजसत्तम।

॥ वैशम्पायन उवाच ॥ शृणु मे विस्तरेणेमां कथां भरतसत्तम। भूय एव महाराज यदि ते श्रवणे मतिः।

विदुरस्य मतं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः। दुर्योधनमिदं वाक्यमुवाच विजने पुनः। १०२०

अलं द्यूतेन गान्धारे विदुरो न प्रशंसति। न ह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति।

हितं हि परमं मन्ये विदुरो यत् प्रभाषते। क्रियतां पुत्र तत्सर्वमेतन्मन्ये हितं तव।

देवर्षिर्वासवगुरुर्देवराजाय धीमते। यत्प्राह शास्त्रं भगवान् बृहस्पतिरुदारधीः। तद्वेद विदुरः सर्वं सरहस्यं महाकविः।

स्थितस्तु वचने तस्य सदाऽहमपि पुत्रक। विदुरो वाऽपि मेधावी कुरूणां प्रवरो मतः।

उद्धवो वा महाबुद्धिर्वृष्णीनामर्चितो नृप। तदलं पुत्र द्यूतेन द्यूते भेदो हि दृश्यते। १०२५

भेदे विनाशो राज्यस्य तत्पुत्र परिवर्ज्जय। पित्रा मात्रा च पुत्रस्य यद्वै कार्य्यं परं स्मृतं।

प्राप्तस्त्वमसि तत्तात पितृपैतामहं पदं। अधीतवान् कृती शास्त्रे लालितः सततं गृहे।

भ्रातृज्येष्ठः स्थितो राज्ये विन्दसे किं न शोभनम्। पृथग्जनैरलभ्यं यद्भोजनाच्छादनं परम्।

तत्प्राप्तोऽसि महाबाहो कस्माच्छोचसि पुत्रक। स्फीतं राष्ट्रं महाबाहो पितृपैतामहं महत्।

नित्यमाज्ञापयन् भासि दिवि देवेश्वरो यथा। तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम्। समुत्थितं दुःखकरं तन्मे शंसितु मर्हसि। १८००

॥ दुर्य्योधन उवाच ॥ अश्नाम्याच्छादयामीति प्रपश्यन् पापपूरुषः। नामर्षं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः।

न मां प्रीणाति राजेन्द्र लक्ष्मीः साधारणी विभो। ज्वलितामिव कौन्तेये श्रियं दृष्ट्वा च विव्यथे।

सर्व्वाञ्च पृथिवीञ्चैव युधिष्ठिरवशानुगाम्। स्थिरोऽस्मि योऽहं जीवामि दुःखादेतद्ब्रवीमि ते।

आवर्ज्जिता इवाभान्ति नीपाश्चित्रककौकुराः। कारस्करा लोहजङ्घा युधिष्ठिरनिवेशने।

हिमवत्सागरानूपाः सर्व्वे रत्नाकरास्तथा। अन्त्याः सर्व्वे पर्य्युदस्ता युधिष्ठिरनिवेशने। १८०५

ज्येष्ठोऽयमिति मां मत्वा श्रेष्ठश्चेति विशाम्पते। युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे।

उपस्थितानां रत्नानां श्रेष्ठानामर्घहारिणाम्। नादृश्यत परः पारो नापरस्तत्र भारत।

न मे हस्तः समभवद्वसु तत् प्रतिगृह्णतः। अतिष्ठन्त मयि श्रान्ते गृह्य दूराहृतं वसु।

कृतां बिन्दुसरोरत्नैर्म्मयेन स्फाटिकच्छदाम्। अपश्यन्नलिनीं पूर्णामुदकस्येव भारत।

वस्त्रमुत्कर्षति मयि प्राहसत् स वृकोदरः। शत्रोर्ऋद्धिविशेषेण विमूढं रत्नवर्ज्जितम्। १८१०

तत्र स्म यदि शक्तः स्यां पातयेऽहं वृकोदरम्। यदि कुर्य्यां समारम्भं भीमं हन्तुं नराधिप।

शिशुपाल इवास्माकं गतिः स्यान्नात्र संशयः। सपत्नेनावहासो मे स मां दहति भारत।

पुनश्च तादृशीमेव वापीं जलजशालिनीम्। मत्वा शिलासमां तोये पतितोऽस्मि नराधिप।

तत्र मां प्राहसत् कृष्णः पार्थेन सह सुस्वरम्। द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम।

क्लिन्नवस्त्रस्य तु जले किङ्करा राजचोदिताः। ददुर्व्वासांसि मेऽन्यानि तच्च दुःखं परं मम। १८१५

प्रलम्भञ्च शृणुष्वान्यद्वदतो मे नराधिप। अद्वारेण विनिर्गच्छन् द्वारसंस्थानरूपिणा। अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः।

तत्र मां यमजौ दूरादालोक्याभिहतं तदा। बाहुभिः परिगृह्णीतां शोचन्तौ सहितावुभौ।

उवाच सहदेवस्तु तत्र मां विस्मयन्निव। इदं द्वारमितो गच्छ राजन्निति पुनःपुनः।

भीमसेनेन तत्रोक्तो धृतराष्ट्रात्मजेति च। सम्बोध्य प्रहसित्वा च इतो द्वारं नराधिप।

नामधेयानि रत्नानां पुरस्तान्न श्रुतानि मे। यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे। १८२०

इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ दुर्य्योधन उवाच । यन्मया पाण्डवेयानां दृष्टं तच्छृणु भारत। आहृतं भूमिपालैर्हि वसु मुख्यं ततस्ततः।

नाविदं मूढमात्मानं दृष्ट्वाऽहं तदरेर्धनम्। फलतो भूमितो वाऽपि प्रतिपद्यस्व भारत।

और्णान् बैलान् वार्षदंशान् जातरूपपरिष्कृतान्। प्रावाराजिनमुख्यांश्च काम्बोजः प्रददौ बहून्।

अंशांस्तित्तिरिकल्माषांस्त्रिशतं शुकनासिकान्। उष्ट्रवामीस्त्रिशतश्च पुष्टाः पीलुशमीङ्गुदैः।
गोवासना ब्राह्मणाश्च दासनीयाश्च सर्व्वशः। प्रीत्यर्थं ते महाराज धर्म्मराज्ञो महात्मनः। १८२५
त्रिखर्व्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः। ब्राह्मणा वाटधानाश्च गोमन्तः शतसङ्घशः।
कमण्डलूनुपादाय जातरूपमयान् शुभान्। एवं बलिं समादाय प्रवेशं लेभिरे नच।
शतं दासीसहस्राणां कार्प्पासिकनिवासिनां।
श्यामास्तन्व्यो दीर्घकेश्यो हेमाभरणभूषिताः। शूद्रा विप्रोत्तमार्हाणि राङ्कवाण्यजिनानि च।
बलिञ्च कृत्स्नमादाय भरुकच्छनिवासिनः। उपनिन्युर्महाराज हयान् गान्धारदेशजान्। १८३०
इन्द्रकृष्टैर्व्वर्त्तयन्ति धान्यैर्ये च नदीमुखैः। समुद्रनिष्कुटे जाताः पारेसिन्धु च मानवाः।
ते वैरामाः पारदाश्च आभीराः कितवैः सह। विविधं बलिमादाय रत्नानि विविधानि च।
अजाविकं गोहिरण्यं खरोष्ट्रं फलजं मधु। कम्बलान् विविधांश्चैव द्वारि तिष्ठन्ति वारिताः।
प्राग्ज्योतिषाधिपः शूरो म्लेच्छानामधिपो बली। यवनैः सहितो राजा भगदत्तो महारथः।
आजानेयान् हयान् शीघ्रानादायानिलरंहसः। बलिञ्च कृत्स्नमादाय द्वारि तिष्ठति वारितः। १८३५
अश्मसारमयं भाण्डं शुद्धदन्तत्सरूनसीन्। प्राग्ज्योतिषाधिपो दत्त्वा भगदत्तोऽव्रजत्तदा।
द्व्यक्षांस्त्र्यक्षान् ललाटाक्षान्नानादिग्भ्यः समागतान्। औष्णीकानन्तवासांश्च रोमकान् पुरुषादकान्।
एकपादांश्च तत्राहमपश्यं द्वारि वारितान्। राजानो बलिमादाय नानावर्णाननेकशः।
कृष्णग्रीवान्महाकायान् रासभान् दूरपातिनः। आजह्रुर्दशसाहस्रान् विनीतान् दिक्षु विश्रिता ।
प्रमाणरागसम्पन्नान् वङ्क्षुतीरसमुद्भवान्। बल्यर्थं ददतस्तस्मै हिरण्यं रजतं बहु। १८४०
दत्त्वा प्रवेशं प्राप्तास्ते युधिष्ठिरनिवेशने। इन्द्रगोपकवर्णाभान् शुकवर्णान्मनोजवान्।
तथैवेन्द्रायुधनिभान् सन्ध्याभ्रसदृशानपि। अनेकवर्णानारण्यान् गृहीत्वाऽश्वान् महाजवान्।
जातरूपमनर्घ्यञ्च ददुस्तस्यैकपादकाः। चीनान् शकांस्तथा चोड्रान् वर्व्वरान् वनवासिनः।
वार्ष्णेयान् हारहूणांश्च कृष्णान् हैमवतांस्तथा। नीपानूपानधिगतान् विविधान् द्वारि वारितान्।
बल्यर्थं ददतस्तस्य नानारूपाननेकशः। कृष्णग्रीवान्महाकायान् रासभान् शतपातिनः। १८४५
आहार्षुर्दशसाहस्रान् विनीतान् दिक्षु विश्रुतान्। प्रमाणरागसंस्पर्शान् * वङ्क्षुतीरनिवासिनः।
ऊर्णजं राङ्कवञ्चैव कीटजं पट्टजं तथा। कुटीकृतं तथैवात्र कमलाभं सहस्रशः।
श्लक्ष्णं वस्त्रमकार्पासमाविकं मृदु चाजिनं। निशितांश्चैव दीर्घासीनृष्टिशक्तिपरश्वधान्।
अपरान्तसमुद्भूतांस्तथैव परशून् शितान्। रसान् गन्धांश्च विविधान् रत्नानि च सहस्रशः।
बलिञ्च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः। शकास्तुखाराः कङ्काश्च रोमशाः शृङ्गिणो नराः। १८५०
महागजान् दूरगमान् गणितानर्बुदान् हयान्। शतशश्चैव बहुशः सुवर्णं पद्मसम्मितं।
बलिमादाय विविधं द्वारि तिष्ठन्ति वारिताः। आसनानि महार्हाणि यानानि शयनानि च।
मणिकाञ्चनचित्राणि गजदन्तमयानि च। कवचानि विचित्राणि शस्त्राणि विविधानि च।

* वङ्क्षु इति क्वचित्पाठः।

रथांश्च विविधाकारान् जातरूपपरिष्कृतान्। हयैर्व्विनीतैः सम्पन्नान् वैयाघ्रपरिवारितान्।
विचित्रांश्च परिस्तोमान् रत्नानि विविधानि च। नाराचानर्द्धनाराचान् शस्त्राणि विविधानि च। १८५५
एतद्दत्त्वा महद्द्रव्यं पूर्व्वदेशाधिपा नृपाः। प्रविष्टा यज्ञसदनं पाण्डवस्य महात्मनः।
इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे पञ्चाशोऽध्यायः॥ ५० ॥
॥ दुर्य्योधन उवाच ॥ दायन्तु विविधं तस्मै शृणु मे गदतोऽनघ। यज्ञार्थं राजभिर्द्दत्तं महान्तं धनसञ्चयं।
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीं। ये ते कीचकवेणूनां छायां रम्यामुपासते।
खसा एकासनाश्च ह्यर्हाः प्रदरा दीर्घवेणवः। पारदाश्च कुलिन्दाश्च तङ्गणाः परतङ्गणाः।
तद्वै पिपीलिकं नाम उद्धृतं यत् पिपीलिकैः। जातरूपं द्रोणमेयमहार्षुः पुञ्जशो नृपाः। १८६०
कृष्णान् ललामांश्चमरान् शुक्लांश्चान्यान् शशिप्रभान्। हिमवत्पुष्पजञ्चैव स्वादु क्षौद्रं तथा बहु।
उत्तरेभ्यः कुरुभ्यश्चाप्यपोढं माल्यमम्बुभिः। उत्तरादपि कैलासादोषधीः सुमहाबलाः।
पार्व्वतीया बलिञ्चान्यमाहृत्य प्रणताः स्थिताः। अजातशत्रोर्नृपतेर्द्वारि तिष्ठन्ति वारिताः।
ये परार्द्धे हिमवतः सूर्य्योदयगिरौ नृपाः। कारूषे च समुद्रान्ते लौहित्यमभितश्च ये।
फलमूलाशना ये च किराताश्चर्म्मवाससः। क्रूरशस्त्राः क्रूरकृतस्तांश्च पश्याम्यहं प्रभो। १८६५
चन्दनागुरुकाष्ठानां भारान् कालीयकस्य च। चर्म्मरत्नसुवर्णानां गन्धानाञ्चैव राशयः।
कैरातकीनामयुतं दासीनाञ्च विशाम्पते। आहृत्य रमणीयार्थान् दूरजान् मृगपक्षिणः।
निचितं पर्व्वतेभ्यश्च हिरण्यं भूरिवर्च्चसं। बलिञ्च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः।
कैराता दरदा दर्व्वाः शूरा वैयमकास्तथा। औदुम्बरा दुर्व्विभागाः पारदा वाह्लिकैः सह।
काश्मीराश्च कुमाराश्च घोरका हंसकायनाः। शिबित्रिगर्त्तयौधेया राजन्या मद्रकेकयाः। १८७०
अम्बष्ठाः कौकुरास्तार्क्ष्या वस्त्रपाः पह्लवैः सह। वशातयश्च मौलेयाः सह क्षुद्रकमालवैः।
पौण्ड्रिकाः कुक्कुराश्चैव शकाश्चैव विशाम्पते। अङ्गा वङ्गाश्च पुण्ड्राश्च शाणवत्या गयास्तथा।
सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रधारिणः। आहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे।
वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः। दौवालिकाः सागरकाः पत्रोर्णाः शैशवास्तथा।
कर्णप्रावरणाश्चैव बहवस्तत्र भारत। तत्रस्था द्वारपालैस्ते प्रोच्यन्ते राजशासनात्। १८७५
कृतकालाः सुबलयस्ततो द्वारमवाप्स्यथ।
ईषादन्तान् हेमकक्षान् पद्मवर्णान् कुथावृतान्। शैलाभान्नित्यमत्तांश्चाप्यभितः काम्यकं सरः।
दत्त्वैकैको दशशतान् कुञ्जरान् कवचावृतान्। क्षमावतः कुलीनांश्च द्वारेण प्राविशंस्तथा।
एते चान्ये च बहवो गणा दिग्भ्यः समागताः। अन्यैश्चोपाहृतान्यत्र रत्नानीह महात्मभिः।
राजा चित्ररथो नाम गन्धर्व्वो वासवानुगः। शतानि चत्वार्य्यददद्धयानां वातरंहसां। १८८०
तुम्बुरुस्तु प्रमुदितो गन्धर्व्वो वाजिनां शतं। आम्रपत्रसवर्णानामददद्धेममालिनां।
कृती राजा च कौरव्य शूकराणां विशाम्पते। अददद्गजरत्नानां शतानि सुबहून्यथ।

विराटेन तु मत्स्येन बल्यर्थं हेममालिना । कुञ्जराणां सहस्रे द्वे मत्तानां समुपाहृते ।
पांशुराष्ट्राद्वसुदानो राजा षड्विंशतिं गजान् । अश्वानाञ्च सहस्रे द्वे राजन् काञ्चनमालिनां ।
जवसत्त्वोपपन्नानां वयःस्थानां नराधिप । बलिञ्च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् । १८८५
यज्ञसेनेन दासीनां सहस्राणि चतुर्द्दश । दासानामयुतञ्चैव सदाराणां विशाम्पते ।
गजयुक्ता महाराज रथाः षड्विंशतिस्तथा ।
राज्यञ्च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितं । वासुदेवोऽपि वार्ष्णेयो मानं कुर्व्वन् किरीटिनः ।
अददद्गजमुख्यानां सहस्राणि चतुर्द्दश । आत्मा हि कृष्णः पार्थस्य कृष्णस्यात्मा धनञ्जयः ।
यद्ब्रूयादर्ज्जुनः कृष्णं सर्व्वं कुर्य्यादसंशयं । कृष्णो धनञ्जयस्यार्थे स्वर्गलोकमपि त्यजेत् । १८९०
तथैव पार्थः कृष्णार्थे प्राणानपि परित्यजेत् । सुरभींश्चन्दनरसान् हेमकुम्भसमास्थितान् ।
मलयाद्दर्दुराच्चैव चन्दनागुरुसञ्चयान् । मणिरत्नानि भास्वन्ति काञ्चनं सूक्ष्मवस्त्रकं ।
चोलपाण्ड्यावपि द्वारं न लेभाते ह्युपस्थितौ । समुद्रसारं वैदूर्य्यं मुक्तासंघांस्तथैव च ।
शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन् । संवृता मणिचीरैस्तु श्यामास्ताम्रान्तलोचनाः ।
ता गृहीत्वा नरास्तत्र द्वारि तिष्ठन्ति वारिताः । प्रीत्यर्थं ब्राह्मणाश्चैव क्षत्रियाश्च विनिर्ज्जिताः । १८९५
उपाजह्रुर्व्विशश्चैव शूद्राः शुश्रूषवस्तथा । प्रीत्या च बहुमानाच्चाप्युपागच्छन् युधिष्ठिरं ।
सर्व्वे म्लेच्छाः सर्व्ववर्णा आदिमध्यान्तजास्तथा । नानादेशसमुत्थैश्च नानाजातिभिरेव च ।
पर्य्यस्त इव लोकोऽयं युधिष्ठिरनिवेशने । उच्चावचानुपग्राहान् राजभिः प्रापितान् बहून् ।
शत्रूणां पश्यतो दुःखात् मुमूर्षा मे व्यजायत । भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि पार्थिव ।
येषामामञ्च पक्वञ्च संविधत्ते युधिष्ठिरः । अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः । १९००
रथानामर्ब्बुदञ्चापि पादाता बहवस्तथा । प्रमीयमाणमामञ्च पच्यमानं तथैव च ।
विसृज्यमानञ्चान्यत्र पुण्याहस्वन एव च । नाभुक्तवन्तं नापीतं नालङ्कृतमसत्कृतं ।
अपश्यं सर्व्ववर्णानां युधिष्ठिरनिवेशने । अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः । सुप्रीताः परितुष्टाश्च तेऽप्याशंसन्त्यरिक्षयं ।
दशान्यानि सहस्राणि यतीनामूर्द्ध्वरेतसां । भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने । १९०५
अभुक्तं भुक्तवद्वापि सर्व्वमाकुब्जवामनं । अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशाम्पते ।
द्वौ करौ न प्रयच्छेतां कुन्तीपुत्राय भारत । साम्बन्धिकेन पाञ्चालाः सख्येनान्धकवृष्णयः ।
इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
॥ दुर्य्योधन उवाच ॥ आर्य्यास्तु ये वै राजानः सत्यसन्धा महाव्रताः । पर्य्याप्तविद्या वक्तारो वेदान्तावभृथप्लुताः ।
धृतिमन्तो ह्रीनिषेवा धर्म्मात्मानो यशस्विनः । मूर्द्धाभिषिक्तास्ते चैनं राजानः पर्य्युपासते ।
दक्षिणार्थं समानीता राजभिः कांस्यदोहनाः । आरण्या बहुसाहस्रा अपश्यंस्तत्र तत्र गाः । १९१०
आजह्रुस्तत्र सत्कृत्य स्वयमुद्यम्य भारत । अभिषेकार्थमव्यग्रा भाण्डमुच्चावचं नृपाः ।

वाह्लीको रथमाहार्षीज्जाम्बूनदविभूषितं । सुदक्षिणस्तु युयुजे श्वेतैः काम्बोजजैर्हयैः ।
सुनीथः प्रीतिमांश्चैव ह्यनुकर्षं महाबलः । ध्वजञ्चेदिपतिश्चैवमाहार्षीत् स्वयमुद्यतं ।
दाक्षिणात्यः सन्नहनं स्रगुष्णीषे च मागधः । वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनं ।
मत्स्यः स्वक्षान् हेमनद्धानेकलव्य उपानहौ । आवन्त्यस्त्वभिषेकार्थमापो बहुविधास्तथा । १९१५
चेकितान उपासङ्गं धनुः काश्य उपाहरत् । असिञ्च सुत्सरुं शल्यः शैक्यं काञ्चनभूषणं ।
अभ्यषिञ्चत्ततो धौम्यो व्यासश्च सुमहातपाः । नारदञ्च पुरस्कृत्य देवलञ्चासितं मुनिं ।
प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्षयः । जामदग्न्येन सहितास्तथाऽन्ये वेदपारगाः ।
अभिजग्मुर्महात्मानो मन्त्रवद्भूरिदक्षिणं । महेन्द्रमिव देवेन्द्रं दिवि सप्तर्षयो यथा ।
अधारयच्छत्त्रमस्य सात्यकिः सत्यविक्रमः । धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः । १९२०
चामरे चापि शुद्धे द्वे यमौ जगृहतुस्तदा । उपागृह्णाद्यमिन्द्राय पुराकल्पे प्रजापतिः ।
तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः । शैक्यं निष्कसहस्रेण सुकृतं विश्वकर्म्मणा ।
तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् ।
गच्छन्ति पूर्व्वादपरं समुद्रञ्चापि दक्षिणं । उत्तरन्तु न गच्छन्ति विना तात पतत्त्रिभिः ।
**तत्र स्म दध्मुः शतशः शङ्खान् मङ्गलकारकान् । प्राणदन्त समाध्माता स्ततो रोमाणि मेऽहृषन् ।** १९२५
प्रापतन् भूमिपालाश्च ये तु हीनाः स्वतेजसा । धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ।
सत्त्वस्था वीर्य्यसम्पन्ना ह्यन्योऽन्यप्रियदर्शनाः । विसंज्ञान् भूमिपान् दृष्ट्वा माञ्च ते प्राहसंस्तदा ।
ततः प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनां । शतान्यनडुहां पञ्च द्विजमुख्येषु भारत ।
न रन्तिदेवो नाभागो यौवनाश्वो मनुर्न च । न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः ।
ययातिर्नहुषो वाऽपि यथा राजा युधिष्ठिरः । यथाऽतिमात्रं कौन्तेयः श्रिया परमया युतः । १९३०
राजसूयमवाप्यैवं हरिश्चन्द्र इव प्रभुः । एतां दृष्ट्वा श्रियं पार्थे हरिश्चन्द्रे यथा विभो ।
कथन्नु जीवितं श्रेयो मम पश्यसि भारत । अन्धेनैव युगं नद्धं विपर्य्यस्तं नराधिप । कनीयांसो विवर्द्धन्ते ज्येष्ठा हीयन्त एव च ।
एवं दृष्ट्वा नाभिविन्दामि शर्म्म समीक्षमाणोऽपि कुरुप्रवीर । तेनाहमेवं कृशतां गतश्च विवर्णताञ्चैव सशोकताञ्च ।
इतिश्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥
॥ धृतराष्ट्र उवाच ॥ त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्त्र मा पाण्डवान् द्विष । द्वेष्टा ह्यसुखमादत्ते यथैव निधनं तथा ।
अव्युत्पन्नं समानार्थं तुल्यमित्रं युधिष्ठिरं । अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ । १९३५
तुल्याभिजनवीर्य्यश्च कथं भ्रातुः श्रियं नृप । पुत्त्र कामयसे मोहान्मैवं भूः शाम्य मा शुचः ।
अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ । ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरं ।
आहरिष्यन्ति राजानस्तवापि विपुलं धनं । प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ।
अनार्य्याचरितं तात परस्वस्पृहणं भृशं । स्वसन्तुष्टः स्वधर्म्मस्थो यः स वै सुखमेधते ।
अव्यापारः परार्थेषु नित्योद्योगः स्वकर्म्मसु । रक्षणं समुपात्तानामेतद्वैभवलक्षणं । १९४०

विपत्स्वव्यथो दक्षो नित्यमुत्थानवान्नरः। अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति।
बाहूनिवैतान्माच्छैत्सीः पाण्डुपुत्रास्तथैव ते। भ्रातॄणां तद्धनार्थं वै मित्रद्रोहस्य मा कुरु।
पाण्डोः सुतान्मा द्विषस्वेह राजंस्तथैव ते भ्रातृधनं समग्रं। मित्रद्रोहे तात महानधर्म्मः पितामहा ये तव तेऽपि तेषां।
अन्तर्वेद्यां ददद्वित्तं कामाननुभवन् प्रियान्। क्रीडन् स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ।
इतिश्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे त्रिपञ्चाशत्तमोऽध्यायः॥ ५३॥
॥ दुर्य्योधन उवाच॥ यस्य नास्ति निजा प्रज्ञा केवलन्तु बहुश्रुतः। न स जानाति शास्त्रार्थं दर्व्वी सूपरसानिव। १९४५
जानन् वै मोहयसि मां नावि नौरिव संयता। स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान्।
न सन्तीमे धार्त्तराष्ट्रा येषां त्वमनुशासिता। भविष्यमर्थमाख्यासि सर्व्वदा कृत्यमात्मनः।
परनेयोऽग्रणीर्यस्य स मार्गान् प्रतिमुह्यति। पन्थानमनुगच्छेयुः कथं तस्य पदानुगाः।
राजन् परिणतप्रज्ञो वृद्धसेवी जितेन्द्रियः। प्रतिपन्नान् स्वकार्य्येषु संमोहयसि नो भृशं।
लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः। तस्माद्राज्ञाऽप्रमत्तेन स्वार्थश्चिन्त्यः सदैव हि। १९५०
क्षत्रियस्य महाराज जये वृत्तिः समाहिता। स वै धर्म्मस्त्वधर्म्मो वा स्ववृत्तौ का परीक्षणा।
प्रकालयेद्दिशः सर्व्वाः प्रतोदेनेव सारथिः। प्रत्यमित्रश्रियं दीप्तां जिघृक्षुर्भरतर्षभ।
प्रच्छन्नो वा प्रकाशो वा योगो योऽरिं प्रबाधते। तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतं।
शत्रुश्चैव हि मित्रञ्च न लेख्यं न च मातृका। यो वै सन्तापयति यं स शत्रुः प्रोच्यते नृप।
असन्तोषः श्रियो मूलं तस्मात्तं कारयाम्यहं। समुच्छ्रये यो यतते स राजन् परमो नयः। १९५५
ममत्वं हि न कर्त्तव्यमैश्वर्य्ये वा धनेऽपि वा। पूर्व्वावाप्तं हरन्त्यन्ये राजधर्म्मं हि तं विदुः।
अद्रोहसमयं कृत्वा चिच्छेद नमुचेः शिरः। शक्रः साऽभिमता तस्य रिपौ वृत्तिः सनातनी।
द्वावेतौ ग्रसते भूमिः सर्प्पो बिलशयानिव। राजानञ्चाविरोद्धारं ब्राह्मणञ्चाप्रवासिनं।
नास्ति वै जातितः शत्रुः पुरुषस्य विशाम्पते। येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः।
शत्रुपक्षं समृध्यन्तं यो मोहात् समुपेक्षते। व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः। १९६०
अल्पोऽपि ह्यरिरत्यर्थं वर्द्धमानः पराक्रमैः। वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात्।
आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत। एष भारः सत्त्ववतां नयः शिरसि धिष्ठितः।
जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते। एधते ज्ञातिषु स वै सद्योवृद्धिर्हि विक्रमः।
नाप्राप्य पाण्डवैश्वर्य्यं संशयो मे भविष्यति। अवाप्स्ये वा श्रियं तां हि शेष्ये वा निहतो युधि।
अतादृशस्य किं मेऽद्य जीवितेन विशाम्पते। वर्द्धन्ते पाण्डवा नित्यं वयन्त्वस्थिरवृद्धयः। १९६५
इतिश्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि दुर्य्योधनसन्तापे चतुःपञ्चाशोऽध्यायः॥ ५४॥
॥ शकुनिरुवाच॥ यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे। तप्यसे तां हरिष्यामि द्यूतेन जयतांवर।
आहूयतां परं राजन् कुन्तीपुत्रो युधिष्ठिरः। अक्षान् क्षिपन्नक्षतः सन् विद्वानविदुषो जयेत्।
ग्लहान् धनूंषि मे विद्धि शरानक्षांश्च भारत। अक्षाणां हृदयं मे ज्या रथं विद्धि ममास्तुरं।

॥ दुर्य्योधन उवाच ॥ अयमुत्सहते राजन् श्रियमाहर्त्तुमक्षवित्। द्यूतेन पाण्डुपुत्रेभ्यस्तदनुज्ञातुमर्हसि।

॥ धृतराष्ट्र उवाच ॥ स्थितोऽस्मि शासने भ्रातुर्व्विदुरस्य महात्मनः। तेन सङ्गम्य वेत्स्यामि कार्य्यस्यास्य विनिश्चयं। १९७०

॥ दुर्य्योधन उवाच ॥ व्यपनेष्यति ते बुद्धिं विदुरो मुक्तसंशयः। पाण्डवानां हिते युक्तो न तथा मम कौरव।

नारभेतान्यसामर्थ्यात् पुरुषः कार्य्यमात्मनः। मतिसाम्यं द्वयोर्न्नास्ति कार्य्येषु कुरुनन्दन।

भयं परिहरन्मन्द आत्मानं परिपालयन्। वर्षासु क्लिन्नकटवत्तिष्ठन्नेवावसीदति।

न व्याधयो नापि यमः प्राप्तुं श्रेयः प्रतीक्षते। यावदेव भवेत् कल्पस्तावच्छ्रेयः समाचरेत्।

॥ धृतराष्ट्र उवाच ॥ सर्व्वथा पुत्र बलिभिर्व्विग्रहो मे न रोचते। वैरं विकारं सृजति तद्वै शस्त्रमनायसं। १९७५

अनर्थमर्थं मन्यसे राजपुत्र सङ्ग्रन्थनं कलहस्यातिघोरं। तद्वै प्रवृत्तन्तु यथाकथञ्चित् सृजेदसीन्निशितान् सायकांश्च।

॥ दुर्य्योधन उवाच ॥ द्यूते पुराणैर्व्यवहारः प्रणीतस्तत्रात्ययो नास्ति न सम्प्रहारः। तद्रोचतां शकुनेर्व्वाक्यमद्य सभां क्षिप्रं त्वमिहाज्ञापयस्व।

स्वर्गद्वारं दीव्यतां नो विशिष्टं तद्वर्त्तिनां चापि तथैव युक्तं। भवेदेवं ह्यात्मना तुल्यमेवं दुरोदरं पाण्डवैस्त्वं कुरुष्व।

॥ धृतराष्ट्र उवाच ॥ वाक्यं न मे रोचते यत्त्वयोक्तं यत्ते प्रियं तत् क्रियतां नरेन्द्र। पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं न हीदृशं भावि वचो हि धर्म्म्यं।

दृष्टं ह्येतद्विदुरेणैव सर्व्वं विपश्चिता बुद्धिविद्यानुगेन। तदेवैतदवशस्याभ्युपैति महद्भयं क्षत्रियजीवघाति। १९८०

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा धृतराष्ट्रो मनीषी दैवं मत्वा परमं दुस्तरञ्च। शशासोच्चैः पुरुषान् पुत्रवाक्ये स्थितो राजा दैवसंमूढचेताः।

सहस्रस्तम्भां हेमवैदूर्य्यचित्रां शतद्वारां तोरणस्फाटिकाख्यां। सभामग्र्यां क्रोशमात्रायतां मे तद्विस्तारामाशु कुर्व्वन्तु युक्ताः।

श्रुत्वा तस्य त्वरिता निर्व्विशङ्काः प्राज्ञा दक्षास्तां तदा चक्रुराशु। सर्व्वद्रव्याण्युपजह्रुः सभायां सहस्रशः शिल्पिनश्चैव युक्ताः।

कालेनाल्पेनाथ निष्ठां गतां तां सभां रम्यां बहुरत्नां विचित्रां। चित्रैर्हैमैरासनैरभ्युपेतामाचख्युस्ते तस्य राज्ञः प्रतीताः।

ततो विद्वान् विदुरं मन्त्रिमुख्यमुवाचेदं धृतराष्ट्रो नरेन्द्रः। युधिष्ठिरं राजपुत्रञ्च गत्वा मद्वाक्येन क्षिप्रमिहानयस्व। १९८५

सभेयं मे बहुरत्ना विचित्रा शय्यासनैरुपपन्ना महार्हैः। सा दृश्यतां भ्रातृभिः सार्द्धमेत्य सुहृद्द्यूतं वर्त्ततामत्र चेति।

इतिश्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि युधिष्ठिरानयने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ वैशम्पायन उवाच ॥ मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः। मत्वा च दुस्तरं दैवमेतद्राजंश्चकार ह।

अन्यायेन तथोक्तस्तु विदुरो विदुषाम्बरः। नाभ्यनन्दद्वचो भ्रातुर्व्वचनञ्चेदमब्रवीत्।

॥ विदुर उवाच ॥ नाभिनन्दे नृपते प्रैषमेतं मैवं कृथाः कुलनाशाद्बिभेमि। पुत्रैर्भिन्नैः कलहस्ते ध्रुवं स्यादेतच्छङ्के द्यूतकृते नरेन्द्र।

॥ धृतराष्ट्र उवाच ॥ नेह क्षत्तः कलहस्तापयते मां न चेद्दैवं प्रतिलोमं भविष्यत्। धात्रानुशिष्टस्य वशे किलेदं सर्व्वं जगत्तिष्ठति न स्वतन्त्रं। १९९०

तदद्य विदुर प्राप्य राजानं मम शासनात्। क्षिप्रमानय दुर्द्धर्षं कुन्तीपुत्रं युधिष्ठिरं।

इतिश्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि युधिष्ठिरानयने षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रायाद्विदुरोऽश्वैरुदारैर्महाजवैर्बलिभिः साधुदान्तैः। बलान्नियुक्तो धृतराष्ट्रेण राज्ञा मनीषिणां पाण्डवानां सकाशे।

सोऽभिपद्य तदध्वानमासाद्य नृपतेः पुरं। प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः।

स राजगृहमासाद्य कुवेरभवनोपमं। अभ्यागच्छत धर्म्मात्मा धर्म्मपुत्रं युधिष्ठिरं।

तं वै राजा सत्यधृतिर्म्महात्मा अजातशत्रुर्व्विदुरं यथावत्। पूजापूर्व्वं प्रतिगृह्याजमीढस्ततोऽपृच्छद्धृतराष्ट्रं सपुत्त्रं। १९९५

॥ युधिष्ठिर उवाच ॥ विज्ञायते ते मनसोऽप्रहर्षः कच्चित् क्षत्तः कुशलेनागतोऽसि। कच्चित् पुत्त्राः स्थविरस्यानुलोमा वशानुगाश्चापि विशोऽथ कच्चित्।

॥ विदुर उवाच ॥ राजा महात्मा कुशली सपुत्त्र आस्ते वृतो ज्ञातिभिरिन्द्रकल्पः। प्रीतो राजन् पुत्त्रगणैर्व्विनीतो विशोक एवात्मरतिर्द्दृढात्मा।

इदन्तु त्वां कुरुराजोऽभ्युवाच पूर्व्वं पृष्ट्वा कुशलञ्चाव्ययञ्च। इयं सभा त्वत्सभातुल्यरूपा भ्रातॄणां ते दृश्यतामेत्य पुत्त्र।

समागम्य भ्रातृभिः पार्थ तस्यां सुहृद्द्यूतं क्रियतां रम्यताञ्च। प्रीयामहे भवतां सङ्गमेन समागताः कुरवश्चापि सर्व्वे।

दुरोदरा विहिता ये तु तत्र महात्मना धृतराष्ट्रेण राज्ञा। तान् द्रक्ष्यसे कितवान् सन्निविष्टानित्यागतोऽहं नृपते तज्जुषस्व। २०००

॥ युधिष्ठिर उवाच ॥ द्यूते क्षत्तः कलहो विद्यते नः को वै द्यूतं रोचते बुध्यमानः। किं वा भवान् मन्यते युक्तरूपं भवद्वाक्ये सर्व्व एव स्थिताः स्म।

॥ विदुर उवाच ॥ जानाम्यहं द्यूतमनर्थमूलं कृतश्च यत्नोऽस्य मया निवारणे। राजा च मां प्राहिणोत्त्वत्सकाशं श्रुत्वा विद्वन् श्रेय इहाचरस्व।

॥ युधिष्ठिर उवाच ॥ के तत्रान्ये कितवा दीव्यमाना विना राज्ञो धृतराष्ट्रस्य पुत्त्रैः। पृच्छामि त्वां विदुर ब्रूहि नस्तान् यैर्दीव्यामः शतशः सन्निपत्य।

॥ विदुर उवाच ॥ गान्धारराजः शकुनिर्व्विशाम्पते राजाऽतिदेवी कृतहस्तो मताक्षः। विविंशतिश्चित्रसेनश्च राजा सत्यव्रतः पुरुमित्रो जयश्च।

॥ युधिष्ठिर उवाच ॥ महाभयाः कितवाः सन्निविष्टा मायोपधा देवितारोऽत्र सन्ति। धात्रा तु दिष्टस्य वशे किलेदं सर्व्वं जगत्तिष्ठति न स्वतन्त्रं। २००५

नाहं राज्ञो धृतराष्ट्रस्य शासनान्नगन्तुमिच्छामि कवे दुरोदरं। इष्टो हि पुत्त्रस्य पिता सदैव तदस्मि कर्त्ता विदुरात्थ मां यथा।

न चाकामः शकुनिना देविताऽहं न चेन्मां जिष्णुराह्वयिता सभायां। आहूतोऽहं न निवर्त्ते कदाचित्तदा हितं शाश्वतं वै व्रतं मे।

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा रिदुरं धर्म्मराजः प्रायात्रिकं सर्व्वमाज्ञाप्य तूर्णं। प्रायाच्छ्वोभूते सगणः सानुयात्रः सह स्त्रीभिर्द्रौपदीमादि कृत्वा।

दैवं हि प्रज्ञां मुष्णाति चक्षुस्तेज इवापतत्। धातुश्च वशमन्वेति पाशैरिव नरः सितः।

इत्युक्त्वा प्रययौ राजा सह क्षत्त्रा युधिष्ठिरः। अमृष्यमाणस्तस्याथ समाह्वानमरिन्दमः। २०१०

वाह्लीकेन रथं दत्तमास्थाय परवीरहा। परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः।
राजश्रिया दीप्यमानो ययौ ब्रह्मपुरःसरः। धृतराष्ट्रेण चाहूतः कालस्य समयेन च।
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ। समियाय च धर्म्मात्मा धृतराष्ट्रेण पाण्डवः।
तथा भीष्मेण द्रोणेन कर्णेन च कृपेण च। समियाय यथान्यायं द्रौणिना च विभुः सह।
समेत्य च महाबाहुः सोमदत्तेन चैव ह। दुर्य्योधनेन शल्येन सौबलेन च वीर्य्यवान्। २०१९
ये चान्ये तत्र राजानः पूर्व्वमेव समागताः। दुःशासनेन वीरेण सर्व्वैर्भ्रातृभिरेव च।
जयद्रथेन च तथा कुरुभिश्चापि सर्व्वशः। ततः सर्व्वैर्महाबाहुर्भ्रातृभिः परिवारितः।
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः। ददर्श तत्र गान्धारीं देवीं पतिमनुव्रतां।
स्नुषाभिः संवृतां शश्वत्ताराभिरिव रोहिणीं।
अभिवाद्य स गान्धारीं तया च प्रतिनन्दितः। ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरं। २०२०
राज्ञा मूर्द्धन्युपाघ्रातास्ते च कौरवनन्दनाः। चत्वारः पाण्डवा राजन् भीमसेनपुरोगमाः।
ततो हर्षः समभवत् कौरवाणां विशाम्पते। तान् दृष्ट्वा पुरुषव्याघ्रान् पाण्डवान् प्रियदर्शनान्।
विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाणि च। ददृशुश्चोपयातांस्तान् द्रौपदीप्रमुखाः स्त्रियः।
याज्ञसेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव। स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन्।
ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदं। कृत्वा व्यायामपूर्व्वाणि कृत्यानि प्रतिकर्म्म च। २०२१
ततः कृताह्निकाः सर्व्वे दिव्यचन्दनभूषिताः। कल्याणमनसश्चैव ब्राह्मणान् स्वस्ति वाच्य च।
मनोज्ञमन्नं भुक्त्वा विविशुः शरणान्यथ। उपगीयमाना नारीभिरस्वपन् कुरुपुङ्गवाः। जगाम तत् प्राप्य प्रीताः पर पुरञ्जयाः।
जगाम तेषां सा रात्रिः पुण्या रतिविहारिणां। स्तूयमानाश्च विश्रान्ताः काले निद्रामथात्यजन्।
सुखोषितास्ते रजनीं प्रातः सर्व्वे कृताह्निकाः। सभां रम्यां प्रविविशुः कितवैरभिनन्दिताः।
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि युधिष्ठिरसभागमनं सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ वैशम्पायन उवाच ॥ प्रविश्य तां सभां पार्था युधिष्ठिरपुरोगमाः। समेत्य पार्थिवान् सर्व्वान् पूजार्हानभिपूज्य च। २०२०
यथावयः समेयाना उपविष्टा यथार्हतः। आसनेषु पवित्रेषु स्पर्द्ध्यास्तरणवत्सु च।
तेषु तत्रोपविष्टेषु सर्व्वेष्वथ नृपेषु च। शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत।
॥ शकुनिरुवाच ॥ उपस्तीर्णा सभा राजन् सर्व्वे त्वयि कृतक्षणाः। अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर।
॥ युधिष्ठिर उवाच ॥ निकृतिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः। न च नीतिर्ध्रुवा राजन् किं त्वं द्यूतं प्रशंससि।
नहि मानं प्रशंसन्ति निकृतौ कितवस्य हि। शकुने मैव नो जैषीरमार्गेण नृशंसवत्। २०२५
॥ शकुनिरुवाच ॥ यो वेत्ति संख्यां निकृतौ विधिज्ञश्चेष्टास्वखिन्नः कितवोऽक्षजासु। महामतिर्य्यश्च जानाति द्यूतं स वै सर्व्वं सहते प्रक्रियासु।
अक्षग्लहः सोऽभिभवेत् परं नस्तेनैव दोषो भवतीह पार्थ। दीव्यामहे पार्थिव मा विशङ्कां कुरुष्व पाणञ्च चिरञ्च मा कृथाः।

॥ युधिष्ठिर उवाच ॥ एवमाहायमसितो देवलो मुनिसत्तमः । इमानि लोकद्वाराणि यो वै संचरते सदा ।
इदं वै देवनं पापं निकृत्या कितवैः सह । धर्मेण तु जयो युद्धे तत्परं न तु देवनं ।
नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत । अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतं । २०४०
शक्तितो ब्राह्मणार्थाय शिक्षितुं प्रयतामहे । तद्वै वित्तं माऽतिदेवीर्मा जैषीः शकुने परान् ।
निकृत्या कामये नाहं सुखान्युत धनानि वा । कितवस्याप्यनिकृतेर्वृत्तमेतन्न पूज्यते ।
॥ शकुनिरुवाच ॥ श्रोत्रियः श्रोत्रियानेति निकृत्यैव युधिष्ठिर । विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ।
अक्षैर्हि शिक्षितोऽभ्येति निकृत्यैव युधिष्ठिर । विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ।
अकृतास्त्रं कृतास्त्रश्च दुर्बलं बलवत्तरः । एवं कर्मसु सर्वेषु निकृत्यैव युधिष्ठिर । २०४५
एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे । देवनाद्विनिवर्त्तस्व यदि ते विद्यते भयं ।
॥ युधिष्ठिर उवाच ॥ आहूतो न निवर्त्तेयमिति मे व्रतमाहितं । विधिश्च बलवान् राजन् दिष्टस्यास्मि वशे स्थितः ।
अस्मिन् समागमे केन देवनं मे भविष्यति । प्रतिपाणश्च कोऽन्योऽस्ति ततो द्यूतं प्रवर्त्ततां ।
॥ दुर्य्योधन उवाच ॥ अहं दातास्मि रत्नानां धनानाञ्च विशाम्पते । मदर्थे देविता चायं शकुनिर्मातुलो मम ।
॥ युधिष्ठिर उवाच ॥ अन्येनान्यस्य वै द्यूतं विषमं प्रतिभाति मे । एतद्विद्वन्नुपादत्स्व काममेवं प्रवर्त्ततां । २०५०
॥ वैशम्पायन उवाच ॥ उपोह्यमाने द्यूते तु राजानः सर्व्व एव ते । धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः ।
भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः । नातिप्रीतेन मनसा तेऽन्ववर्त्तन्त भारत ।
ते द्वन्द्वशः पृथक्चैव सिंहग्रीवा महौजसः । सिंहासनानि भूरीणि विचित्राणि विभेजिरे ।
शुशुभे सा सभा राजन् राजभिस्तैः समागतैः । देवैरिव महाभागैः समवेतैस्त्रिविष्टपं ।
सर्व्वे वेदविदः शूराः सर्व्वे भास्वरमूर्त्तयः । प्रावर्त्तत महाराज सुहृद्द्यूतमनन्तरं । २०५५
॥ युधिष्ठिर उवाच ॥ अयं बहुधनो राजन् सागरावर्त्तसम्भवः । मणिर्हारोत्तरः श्रीमान् कनकोत्तमभूषणः ।
एतद्राजन् मम धनं प्रतिपाणोऽस्ति कस्तव । येन मां त्वं महाराज धनेन प्रतिदीव्यसे ।
॥ दुर्य्योधन उवाच ॥ सन्ति मे मणयश्चैव धनानि सुबहूनि च । मत्सरश्च न मेऽर्थेषु जयस्वैनं दुरोदरं ।
॥ वैशम्पायन उवाच ॥ ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित् । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि द्यूतारम्भे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ युधिष्ठिर उवाच ॥ मत्तः कैतवकेनैव यज्जितोऽस्मि दुरोदरे । शकुने हन्त दीव्यामो ग्लहमानाः परस्परं । २०६०
सन्ति निष्कसहस्रस्य भाण्डिन्यो भरिताः शुभाः । कोशो हिरण्यमक्षय्यं जातरूपमनेकशः । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ।
॥ वैशम्पायन उवाच ॥ कौरवाणां कुलकरं ज्येष्ठं पाण्डवमच्युतं । इत्युक्तः शकुनिः प्राह जितमित्येव तं नृपं ।
॥ युधिष्ठिर उवाच ॥ अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः । सुचक्रोपस्करः श्रीमान् किङ्किणीजालमण्डितः ।
संह्रादनो राजरथो य इहास्मानुपावहत् । जैत्रो रथवरः पुण्यो मेघसागरनिःस्वनः ।
अष्टौ यं कुररच्छायाः सदश्वा राष्ट्रसम्मताः । वहन्ति नैषां मुच्येत पदा भूमिमुपस्पृशन् । एतद्राजन् धनं मह्यं तेन दीव्याम्यहं त्वया । २०६५

॥ वैशम्पायन उवाच ॥ एवं श्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

॥ युधिष्ठिर उवाच ॥ शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः। कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः।

महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोचिताः। मणीन् हेम च बिभ्रत्यश्चतुःषष्टिविशारदाः।

अनुसेवाञ्चरन्तीमाः कुशला नृत्यसामसु। स्नातकानाममत्यानां राज्ञाञ्च मम शासनात्। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत। २०७०

॥ युधिष्ठिर उवाच ॥ एतावन्ति च दासानां सहस्राण्युत सन्ति मे। प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा।

प्राज्ञा मेधाविनो दान्ता युवानो मृष्टकुण्डलाः। पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत।

एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

॥ युधिष्ठिर उवाच ॥ सहस्रसङ्ख्या नागा मे मत्तास्तिष्ठन्ति सौबल। हेमकक्षाः कृतापीडाः पद्मिनो हेममालिनः। २०७५

सुदान्ता राजवहनाः सर्व्वशब्दक्षमा युधि। ईषादन्ता महाकायाः सर्व्वे चाष्टकरेणवः।

सर्व्वे च पुरभेत्तारो नवमेघनिभा गजाः। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ इत्येवं वादिनं पार्थं प्रहसन्निव सौबलः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

॥ युधिष्ठिर उवाच ॥ रथास्तावन्त एवेमे हेमदण्डाः पताकिनः। हयैर्व्विनीतैः सम्पन्ना रथिभिश्चित्रयोधिभिः।

एकैको ह्यत्र लभते सहस्रपरमां भृतिं। युध्यतोऽयुध्यतो वाऽपि वेतनं मासकालिकं। २०८०

एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ इत्येवमुक्ते वचने कृतवैरो दुरात्मवान्। जितमित्येव शकुनिर्युधिष्ठिरमभाषत॥

॥ युधिष्ठिर उवाच ॥ अश्वांस्तित्तिरिकल्माषान् गान्धर्व्वान्हेममालिनः। ददौ चित्ररथस्तुष्टो यांस्तान् गाण्डीवधन्वने।

युद्धे जितः पराभूतः प्रीतिपूर्व्वमरिन्दमः। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत। २०८५

॥ युधिष्ठिर उवाच ॥ रथानां शकटानाञ्च श्रेष्ठानाञ्चायुतानि मे। युक्तान्येव हि तिष्ठन्ति वाहैरुच्चावचैस्तथा।

एवं वर्णस्य वर्णस्य समुच्चीय सहस्रशः। तथा समुदिता वीराः सर्व्वे वीरपराक्रमाः।

क्षीरं पिबन्तस्तिष्ठन्ति भुञ्जानाः शालितण्डुलान्। षष्टिस्तानि सहस्राणि सर्व्वे विपुलवक्षसः।

एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत। २०९०

॥ युधिष्ठिर उवाच ॥ ताम्रलोहैः परिवृता निधयो ये चतुःशताः। पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै।

जातरूपस्य मुख्यस्य अनर्घेयस्य भारत। एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत।

इति श्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि देवने एकोनषष्टोऽध्यायः॥ ५९॥

॥ वैशम्पायन उवाच ॥ एवं प्रवर्त्तिते द्यूते घोरे सर्व्वापहारिणि । सर्व्वसंशयनिर्म्मोक्ता विदुरो वाक्यमब्रवीत् ।

॥ विदुर उवाच ॥ महाराज विजानीहि यत्त्वां वक्ष्यामि भारत । मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतं । २०९५

यद्वै पुरा जातमात्रो रुराव गोमायुवद्विस्वरं पापचेताः । दुर्य्योधनो भारतानां कुलघ्नः सोऽयं युक्तो भविता कालहेतुः ।

गृहे वसन्तं गोमायुं त्वं वै मोहान्न बुध्यसे । दुर्य्योधनस्य रूपेण शृणु काव्यां गिरं मम ।

मधु वै माध्विको लब्ध्वा प्रपातं नैव बुध्यते । आरुह्य तं मज्जति वा पतनं वाधिगच्छति ।

सोऽयं मत्तोऽक्षद्यूतेन मधुवन्न परीक्षते । प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ।

विदितं मे महाप्राज्ञ भोजेष्वेवासमञ्जसं । पुत्रं सन्त्यक्तवान् पूर्व्वं पौराणां हितकाम्यया । २१००

अन्धका यादवा भोजाः समेताः कंसमत्यजन् । नियोगात्तु हते तस्मिन् कृष्णेनामित्रघातिना ।

एवं ते ज्ञातयः सर्व्वे मोदमानाः शतं समाः । त्वन्नियुक्तः सव्यसाची निगृह्णातु सुयोधनं ।

निग्रहादस्य पापस्य मोदन्तां कुरवः सुखं । काकेनेमांश्चित्रबर्हान् शार्दूलान् क्रोष्टुकेन च । क्रीणीष्व पाण्डवान्राजन् मा मज्जीः शोकसागरे ।

त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।

सर्व्वज्ञः सर्व्वभावज्ञः सर्व्वशत्रुभयङ्करः । इति स्म भाषते काव्यो जम्भत्यागे महासुरान् । २१०५

हिरण्यष्ठीविनः कांश्चित् पक्षिणो वनगोचरान् । गृहे किल कृतावासान् लोभाद्राजा न्यपीडयत् । सदोपभोगलोभान्धो हिरण्यार्थी परन्तप ।

आयतिञ्च तदात्वञ्च उभे सद्यो व्यनाशयत् । तदर्थकामः पाण्डवान् मा द्रुहः कुरुसत्तम ।

मोहात्मा तप्यसे पश्चात् पक्षिहा पुरुषो यथा । जातं जातं पाण्डवेभ्यः पुष्पमादत्स्व भारत ।

मालाकार इवारामे स्नेहं कुर्व्वन् पुनः पुनः । वृक्षानङ्गारकारीव मैनान् धाक्षीः समूलकान् ।

मागमः ससुतामात्यः सबलश्च यमक्षयं । समवेतान् हि कः पार्थान् प्रतियुध्येत भारत । मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः । २११०

इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि विदुरहितवाक्ये षष्टोऽध्यायः ॥ ६० ॥

॥ विदुर उवाच ॥ द्यूतं मूलं कलहस्याभ्युपैति मिथो भेदं महतो वै भयाय । तदास्थितोऽयं धृतराष्ट्रस्य पुत्रो दुर्य्योधनः सृजते वैरमुग्रं ।

प्रातिपेयाः शान्तनवा भीमसेनाः सबाह्लिकाः । दुर्य्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्व्वशः ।

दुर्य्योधनो मदेनैव क्षेमं राष्ट्रादपोहति । विषाणं गौरिव मदात् स्वयमारुजते त्मनः ।

यश्चित्तमन्वेति परस्य राजन् वीरः कविः स्वामवमन्य दृष्टिं । नावं समुद्र इव बालनेत्रामारुह्य घोरे व्यसने निमज्जेत् ।

दुर्य्योधनो ग्लहते पाण्डवेन प्रीयायसे त्वं जयतीति तच्च । अतिनर्म्मो जायते सम्प्रहारो यतो विनाशः समुपैति पुंसां । २११५

आकर्षस्तेऽवाक्फलः सुप्रणीतो हृदि प्रौढो मन्त्रपदः समाधिः । युधिष्ठिरेण कलहस्तवायमचिन्तितोऽभिमतः स्वबन्धुना ।

प्रातिपेयाः शान्तनवाः शृणुध्वं काव्यां वाचं संसदि कौरवाणां । वैश्वानरं प्रज्वलितं सुघोरं मा यास्यध्वं मन्दमनुप्रपन्नाः ।

यदा मन्युं पाण्डवोऽजातशत्रुर्न्न संयच्छेदक्षमदाभिभूतः। वृकोदरः सव्यसाची यमौ च कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीं।
महाराज प्रभवस्त्वं धनानां पुरा द्यूतान् मनसा यावदिच्छेः। बहुवित्तान् पाण्डवांश्चेज्जयस्त्वं किन्ते तत् स्याद्वसु विन्देह पार्थान्।
जानीमहे देवितं सौबलस्य वेद द्यूते निकृतिं पार्व्वतीयः। यतः प्राप्तः शकुनिस्तत्र यातु मायायुधो भारत पाण्डवेयान्। २११०

इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि विदुरवाक्ये एकषष्टितमोऽध्यायः॥ ६१॥

॥ दुर्य्योधन उवाच॥ परेषामेव यशसा श्लाघसे त्वं सदा चत्तः कुत्सयन् धार्त्तराष्ट्रान्। जानीमहे विदुर यत्प्रियस्त्वं बालानिवास्मानवमन्यसे नित्यमेव।
स विज्ञेयः पुरुषोऽन्यत्रकामो निन्दाप्रशंसे हि तथा युनक्ति। जिह्वा मनस्ते हृदयं व्यनक्ति ज्यायोऽन्तरात्मनसः प्रातिकूल्यं।
उत्सङ्गे च व्याल इवाहितोऽसि मार्ज्जारवत्पोषकञ्चोपहंसि। भर्त्तृघ्नत्वान्नहि पापीयमाहुस्तस्मात् चत्तः किं न बिभेषि पापात्।
जित्वा शत्रून् फलमाप्तं महद्वै माऽस्मान् चत्तः परुषाणीह वोचः। द्विषद्भिस्त्वं सम्प्रयोगाभिनन्दी मुहुर्द्वेषं यासि नः सम्प्रमोहात्।
अमित्रतां याति नरोऽचमं ब्रुवन्निगूहते गुह्यममित्रसंस्तवे। तदाश्रितोऽपत्रप किन्नु बाधसे यदिच्छसि त्वं तदिहाभिभाषसे। २११५
मा नोऽवमंस्था विद्म मनस्तवेदं शिचस्व बुद्धिं स्थविराणां सकाशात्। यशो रचस्व विदुर सम्प्रणीतं मा व्याप्टतः परकार्य्येषु भूस्त्वं।
अहं कर्त्तेति विदुर माऽवमंस्था मा नो नित्यं परुषाणीह वोचः। न त्वां पृच्छामि विदुर यद्धितं मे स्वस्ति चत्तर्मा तितिचून् चिणु त्वं।
एकः शास्ता न द्वितीयोऽस्ति शास्ता गर्भे शयानं पुरुषं शास्ति शास्ता। तेनानुशिष्टः प्रवणादिवाम्भो यथा नियुक्तोऽस्मि तथा भवामि।
भिनत्ति शिरसा शैलमहिं भोजयते च यः। धीरेव कुरुते तस्य कार्य्याणामनुशासनं। यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति।
मित्रतामनुवृत्तन्तु समुपेचेत पण्डितः। प्रदीप्य यः प्रदीप्ताग्निं प्राक्चिरं नाभिधावति। भस्मापि स न विन्देत शिष्टं क्वच न भारत। २१२०
न वासयेत् पारवर्ग्यं द्विषन्तं विशेषतः चत्तरहितं मनुष्यं। स यत्रेच्छसि विदुर तत्र गच्छ सुसान्त्विता ह्यसती स्त्री जहाति।
॥ विदुर उवाच॥ एतावता पुरुषं ये त्यजन्ति तेषां सख्यमन्तवद्ब्रूहि राजन्। राज्ञां हि चित्तानि परिप्लुतानि सान्त्वं दत्त्वा मुषलैर्घातयन्ति।

अबालत्वं मन्यसे राजपुत्र बालोऽहमित्येव सुमन्दबुद्धे। यः सौहृदे पुरुषं स्थापयित्वा पश्चादेनं दूषयते स बालः।

न श्रेयसे नीयते मन्दबुद्धिः स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा। ध्रुवं न रोचेद्भरतर्षभस्य पतिः कुमार्य्या इव षष्टिवर्षः।

अतः प्रियञ्चेदनुकाङ्क्षसे त्वं सर्व्वेषु कार्य्येषु हिताहितेषु। स्त्रियश्च राजन् जडपङ्गुकांश्च पृच्छ त्वं वै तादृशांश्चैव सर्व्वान्। २१२५

लभ्यते खलु पापीयान्नरः सुप्रियवागिह। अप्रियस्य हि पथ्यस्य वक्ता श्रोता हि दुर्लभः।

यस्तु धर्म्मपरश्च स्याद्धित्वा भर्त्तुः प्रियाप्रिये। अप्रियाण्याह पथ्यानि तेन राजा सहायवान्।

अव्याधिजं कटुकं तीक्ष्णमुष्णं यशोमुषं परुषं पूतिगन्धि। सतां पेयं यन्न पिबन्त्यसन्तो मन्युं महाराज पिब प्रशाम्य।

वैचित्रवीर्य्यस्य यशो धनञ्च वाञ्छाम्यहं सहपुत्त्रस्य शश्वत्। यथातथा तेऽस्तु नमश्च तेऽस्तु ममापि च स्वस्ति दिशन्तु विप्राः।

आशीविषांस्त्वं विषान् कोपयिष्ठा च पण्डितः । एवं ते ऽहं वदामीदं प्रयतः कुरुनन्दन । २२००

इति श्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि विदुरहितवाक्ये द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ शकुनिरुवाच ॥ बहु वित्तं पराजैषीः पाण्डवानां युधिष्ठिर । आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितं ।

॥ युधिष्ठिर उवाच ॥ मम वित्तमसंख्येयं यदहं वेद सौबल । अथ त्वं शकुने कस्माद्वित्तं समनुपृच्छसि ।

अयुतं प्रयुतञ्चैव पद्मं खर्ब्बमथार्ब्बुदं । शङ्खञ्चैव महापद्मं निखर्ब्बं कोटिरेव च ।

मध्यञ्चैव परार्द्धञ्च सपरञ्चात्र पण्यतां । एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत । २२०५

॥ युधिष्ठिर उवाच ॥ गवाश्वं बहुधेनूकमसंख्येयमजाविकं । यत्किञ्चिदनुपर्णाशां प्राक्सिन्धोरपि सौबल । एतन्मम धनं सर्व्वं तेन दीव्याम्यहं त्वया ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।

॥ युधिष्ठिर उवाच ॥ पुरं जनपदो भूमिरब्राह्मणधनैः सह । अब्राह्मणाश्च पुरुषा राजन् शिष्टं धनं मम । एतद्राजन् मम धनं तेन दीव्याम्यहं त्वया ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।

॥ युधिष्ठिर उवाच ॥ राजपुत्रा इमे राजन् शोभन्ते येन भूषिताः । कुण्डलानि च निष्काश्च सर्व्वराजविभूषणं । एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया । २२१०

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।

॥ युधिष्ठिर उवाच ॥ श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः । नकुलो ग्लह एवैको विद्ध्येतन्मम तद्धनं ।

॥ शकुनिरुवाच ॥ प्रियस्ते नकुलो राजन् राजपुत्रो युधिष्ठिर । अस्माकं वशतां प्राप्तो भूयः केनेह दीव्यसे ।

॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु तानक्षान् शकुनिः प्रत्यपद्यत । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।

॥ युधिष्ठिर उवाच ॥ अयं धर्म्मान् सहदेवोऽनुशास्ति लोके ह्यस्मिन् पण्डिताख्यां गतश्च । अनर्हता राजपुत्रेण तेन दीव्याम्यहं चाप्रियवत् प्रियेण । २२१५

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।

॥ शकुनिरुवाच ॥ माद्रीपुत्रौ प्रियौ राजंस्तवेमौ विजितौ मया । गरीयांसौ तु ते मन्ये भीमसेनधनञ्जयौ ।

॥ युधिष्ठिर उवाच ॥ अधर्म्मं चरसे नूनं यो नावेक्षसि वै नयं । यो नः सुमनसां मूढ विभेदं कर्त्तुमिच्छसि ।

॥ शकुनिरुवाच ॥ गर्त्ते मत्तः प्रपतते प्रमत्तः स्थाणुमृच्छति । ज्येष्ठो राजन् वरिष्ठोऽसि नमस्ते भरतर्षभ ।

स्वप्ने तानि न पश्यन्ति जाग्रतो वा युधिष्ठिर । कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव । २२२०

॥ युधिष्ठिर उवाच ॥ यो नः संख्ये नौरिव पारनेता जेता रिपूणां राजपुत्रस्तरस्वी । अनर्हता लोकवीरेण तेन दीव्याम्यहं शकुने फाल्गुनेन ।

॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।

अयं मया पाण्डवानां धनुर्द्धरः पराजितः पाण्डवः सव्यसाची । भीमेन राजन् दयितेन दीव्य यत् कैतवं पाण्डव तेऽवशिष्टं ।

॥ युधिष्ठिर उवाच ॥ यो नो नेता यो युधि नः प्रणेता यथा वज्री दानवशत्रुरेकः। तिर्य्यक्प्रेची सन्नतभ्रूर्म्महात्मा सिंहस्कन्धो यश्च सदाऽत्यमर्षी।
बलेन तुल्यो यस्य पुमान्न विद्यते गदाभृतामग्र्य इहारिमर्द्दनः। अनर्हता राजपुत्रेण तेन दीव्याम्यहं भीमसेनेन राजन्। २१६५
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत।
॥ शकुनिरुवाच ॥ बहुवित्तं पराजैषी भ्रातॄंश्च सहयद्विपान्। आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितं।
॥ युधिष्ठिर उवाच ॥ अहं विशिष्टः सर्व्वेषां भ्रातॄणां दयितस्तथा। कुर्य्यामहं जितः कर्म्म स्वयमात्मन्युपप्लुते।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः। जितमित्येव शकुनिर्युधिष्ठिरमभाषत।
॥ शकुनिरुवाच ॥ एतत् पापिष्ठमकरोर्यदात्मानं पराजये। शिष्टे सति धने राजन् पाप आत्मपराजयः। २१७०
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा मताचस्तान् ग्लहे सर्व्वानवस्थितान्। पराजयल्लोकवीरानुक्त्वा राज्ञां पृथक् पृथक्।
॥ शकुनिरुवाच ॥ अस्ति ते वै प्रिया राजन् ग्लह एकोऽपराजितः। पणस्व कृष्णां पाञ्चालीं तयात्मानं पुनर्जय।
॥ युधिष्ठिर उवाच ॥ नैव ह्रस्वा न महती न कृशा नापि रोहिणी। नीलकुञ्चितकेशी च तया दीव्याम्यहं त्वया।
शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया। शारदोत्पलसेविन्या रूपेण श्रीसमानया।
तथैव स्यादानृशंस्यात्तथा स्याद्रूपसम्पदा। तथा स्याच्छीलसम्पत्त्या यामिच्छेत्पुरुषः स्त्रियं। २१७५
सर्व्वैर्गुणैर्हि सम्पन्नामनुकूलां प्रियंवदां। यादृशीं धर्म्मकामार्थसिद्धिमिच्छेन्नरः स्त्रियं।
चरमं संविशति या प्रथमं प्रतिबुध्यते। आगोपालाविपालेभ्यः सर्व्वं वेद कृताकृतं।
आभाति पद्मवद्वक्त्रं सस्वेदं मल्लिकेव च। वेदीमध्या दीर्घकेशी ताम्राक्षी नातिलोमशा।
तयैवं विधया राजन् पाञ्चाल्याऽहं सुमध्यया। ग्लहं दीव्यामि चार्व्वङ्ग्या द्रौपद्या हन्त सौबल।
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने धर्म्मराजेन धीमता। धिग्धिगित्येव वृद्धानां सभ्यानां निःसृता गिरः। २१८०
चुक्षुभे सा सभा राजन् राज्ञां सञ्जज्ञिरे शुचः। भीष्मद्रोणकृपादीनां स्वेदश्च समजायत।
शिरो गृहीत्वा विदुरो गतसत्त्व इवाभवत्। आस्ते ध्यायन्नधोवक्त्रो निश्वसन्निव पन्नगः।
धृतराष्ट्रस्तु संहृष्टः पर्य्यपृच्छत् पुनः पुनः। किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत।
जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः। इतरेषान्तु सभ्यानां नेत्रेभ्यः प्रापतज्जलं।
सौबलस्त्वभिधायैवं जितकाशी मदोत्कटः। जितमित्येव तानक्षान् पुनरेवान्वपद्यत। २१८५
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि द्रौपदीपराजये त्रिषष्टितमोऽध्यायः॥ ६३ ॥
॥ दुर्य्योधन उवाच ॥ एहि क्षत्तर्द्रौपदीमानयस्व प्रियां भार्य्यां सम्मतां पाण्डवानां। सम्मार्जतां वेश्म परैतु शीघ्रं तत्रास्तु दासीभिरपुण्यशीला।
॥ विदुर उवाच ॥ दुर्व्विभाषं भाषितं त्वादृशेन न मन्द सम्बुध्यसि पाशबद्धः। प्रपाते त्वं लम्बमानो न वेत्सि व्याघ्रान् मृगः कोपयसेऽतिवेलं।
आशीविषास्ते शिरसि पूर्णकोपा महाविषाः। माकोपिष्ठाः सुमन्दात्मन्मागमस्त्वं यमक्षयं।
नहि दासीत्वमापन्ना कृष्णा भवितुमर्हति। अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः।

अयं धत्ते वेणुरिवात्मघाती फलं राजा धृतराष्ट्रस्य पुत्रः। द्यूतं हि वैराय महाभयाय मत्तो न बुध्यत्ययमन्तकाले। २१९०

नारुन्तुदः स्यान्नृशंसवादी न हीनतः परमभ्याददीत। ययाऽस्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्यां

समुच्चरन्त्यतिवादाश्च वक्त्राद्यैराहतः शोचति रात्र्यहानि। परस्य नामर्म्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेषु।

अजो हि शस्त्रमगिलत् किलैकः शस्त्रे विपन्ने शिरसाऽस्य भूमौ। निकृन्तनं स्वस्य कण्ठस्य घोरं तद्वद्वैरं माकृथाः पाण्डुपुत्रैः।

न किञ्चिदित्थं प्रवदन्ति पार्था वनेचरं वा गृहमेधिनं वा। तपस्विनं वा परिपूर्णविद्यं भषन्ति हैवं श्वनराः सदैव।

द्वारं सुघोरं नरकस्य जिह्मं न बुध्यते धृतराष्ट्रस्य पुत्रः। तमन्वेतारो बहवः कुरूणां द्यूतोदये सह दुःशासनेन। २१९५

मज्जन्त्यलाबूनि शिलाः प्लवन्ते मुह्यन्ति नावोऽम्भसि शश्वदेव। मूढो राजा धृतराष्ट्रस्य पुत्रो न मे वाचः पथ्यरूपाः शृणोति

अन्तो नूनं भविताऽयं कुरूणां सुदारुणः सर्व्वहरो विनाशः। वाचः काव्याः सुहृदां पथ्यरूपा न श्रूयन्ते वर्द्धते लोभ एव।

इति श्री महाभारते सभापर्व्वणि द्यूतपर्व्वणि विदुरवाक्ये चतुःषष्टितमोऽध्यायः॥ ६४ ॥

॥ वैशम्पायन उवाच ॥ धिगस्तु क्षत्तारमिति ब्रुवाणो दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः। अवैक्षत प्रातिकामीं सभायामुवाच चैनं परमार्य्यमध्ये॥

॥ दुर्य्योधन उवाच ॥ त्वं प्रातिकामिन् द्रौपदीमानयस्व न ते भयं विद्यते पाण्डवेभ्यः। क्षत्ता ह्ययं विवदत्येव भीतो न चास्माकं वृद्धिकामः सदैव।

॥ वैशम्पायन उवाच ॥ एवमुक्तः प्रातिककामी स सूतः प्रायाच्छीघ्रं राजवचो निशम्य। प्रविश्य च श्वेव हि सिंहगोष्ठं समासदन्महिषीं पाण्डवानां। २२००

॥ प्रातिकाम्युवाच ॥ युधिष्ठिरो द्यूतमदेन मत्तो दुर्य्योधनो द्रौपदि त्वामजैषीत्। सा त्वं प्रपद्यस्व धृतराष्ट्रस्य वेश्म नयामि त्वां कर्म्मणे याज्ञसेनि।

॥ द्रौपद्युवाच ॥ कथं त्वेवं वदसि प्रातिकामिन् को हि दीव्येद्भार्य्यया राजपुत्रः। मूढो राजा द्यूतमदेन मत्तो ह्यभून्नान्यत् कैतवमस्य किञ्चित्॥

॥ प्रातिकाम्युवाच ॥ यदा नाभूत् कैतवमन्यदस्य तदाऽदेवीत् पाण्डवोऽजातशत्रुः। न्यस्ताः पूर्व्वं भ्रातरस्तेन राज्ञा स्वयञ्चात्मा त्वमथो राजपुत्रि॥

॥ द्रौपद्युवाच ॥ गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज। किन्नु पूर्व्वं पराजैषीरात्मानमथ वा नु मां।

एतज्ज्ञात्वा समागच्छ ततो मां नय सूतज। ज्ञात्वा चिकीर्षितमहं राज्ञो यास्यामि दुःखिता। २२०५

॥ वैशम्पायन उवाच ॥ सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा। युधिष्ठिरं नरेन्द्राणां मध्ये स्थितमिदं वचः।

कस्येशो नः पराजैषीरिति त्वामाह द्रौपदी। किन्नु पूर्व्वं पराजैषीरात्मानमथ वाऽपि मां।

युधिष्ठिरस्तु निश्चेता गतसत्त्व इवाभवत्। न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा।

॥ दुर्य्योधन उवाच ॥ इहैवागत्य पाञ्चाली प्रश्नमेनं प्रभाषतां। इहैव सर्व्वे शृण्वन्तु तस्याश्चैतस्य यद्वचः।

॥ वैशम्पायन उवाच ॥ स गत्वा राजभवनं दुर्य्योधनवशानुगः। उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव। २२१०

॥ प्रातिकाम्युवाच ॥ सभ्यास्त्वमी राजपुत्र्याह्वयन्ति मन्ये प्राप्तः संक्षयः कौरवाणां। न वै समृद्धिं पालयते लघीयान् यत्त्वां सभामेष्यति राजपुत्रि॥

॥ द्रौपद्युवाच ॥ एवं नूनं व्यदधात् संविधाता स्पर्शावुभौ स्पृशतो वृद्धबालौ। धर्म्मन्त्वेकं परमं प्राह लोके स नः शमं धास्यति गोप्यमानः।

सोऽयं धर्म्मो माऽत्यगात् कौरवान् वै सभ्यान् गत्वा पृच्छ धर्म्म्यं वचो मे। ते मां ब्रूयुर्निश्चितं तत् करिष्ये धर्म्मात्मानो नीतिमन्तो वरिष्ठाः।

श्रुत्वा सूतस्तद्वचो याज्ञसेन्याः सभां गत्वा प्राह वाक्यं तदानीं। अधोमुखास्ते न च किञ्चिदूचुर्निर्ब्बन्धन्तं धार्त्तराष्ट्रस्य बुद्धा।

॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्तु तच्छ्रुत्वा दुर्य्योधनचिकीर्षितं। द्रौपद्याः सम्मतं दूतं प्राहिणोद्भरतर्षभ। २२१५

एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला। सभामागम्य पाञ्चाली श्वशुरस्याग्रतो भव।

स गत्वा त्वरितं दूतः कृष्णाया भवनं नृप। न्यवेदयन्मतं धीमान् धर्म्मराजस्य निश्चितं।

पाण्डवाश्च महात्मानो दीना दुःखसमन्विताः। सत्येनातिपरीताङ्गा नोदीक्षन्ते स्म किञ्चन।

ततस्तेषां मुखमालोक्य राजा दुर्य्योधनः सूतमुवाच हृष्टः। इहैवैतामानय प्रातिकामिन् प्रत्यक्षमस्याः कुरवो ब्रुवन्तु।

ततः सूतस्तस्य वशानुगामी भीतश्च कोपाद्द्रुपदात्मजायाः। विहाय मानं पुनरेव सभ्यानुवाच कृष्णां किमहं ब्रवीमि। २२२०

॥ दुर्य्योधन उवाच ॥ दुःशासनैष मम सूतपुत्त्रो वृकोदरादुद्विजतेऽल्पचेताः। स्वयं प्रगृह्यानय याज्ञसेनीं किन्ते करिष्यन्त्यवशाः सपत्नाः।

ततः समुत्थाय स राजपुत्त्रः श्रुत्वा भ्रातुः शासनं रक्तदृष्टिः। प्रविश्य तद्वेश्म महारथानामित्यब्रवीद्द्रौपदीं राजपुत्त्रीं।

एह्येहि पाञ्चालि जिताऽसि कृष्णे दुर्य्योधनं पश्य विमुक्तलज्जा। कुरून् भजस्वायतपद्मनेत्रे धर्म्मेण लब्धाऽसि सभां परैहि।

ततः समुत्थाय सुदुर्म्मनाः सा विवर्णमामृज्य मुखं करेण। आर्त्ता प्रदुद्राव यतः स्त्रियस्ता वृद्धस्य राज्ञः कुरुपुङ्गवस्य।

ततो जवेनाभिससार रोषाद्दुःशासनस्तामभिगर्ज्जमानः। दीर्घेषु नीलेष्वथ चोर्म्मिमत्सु जग्राह केशेषु नरेन्द्रपत्नीं। २२२५

ये राजसूयावभृथे जलेन महाक्रतौ मन्त्रपूतेन सिक्ताः। ते पाण्डवानां परिभूय वीर्य्यं बलात् प्रमृष्टा धृतराष्ट्रजेन।

स तां पराकृष्य सभासमीपमानीय कृष्णामतिदीर्घकेशीं। दुःशासनो नाथवतीमनाथवच्चकर्ष वायुः कदलीमिवार्त्तां।

सा कृष्यमाणा नमिताङ्गयष्टिः शनैरुवाचाथ रजस्वलाऽस्मि। एकञ्च वासो मम मन्दबुद्धे सभां नेतुं नार्हसि मामनार्य्य।

ततोऽब्रवीत्तां प्रसभं निगृह्य केशेषु कृष्णेषु तदा स कृष्णां। कृष्णञ्च जिष्णुञ्च हरिं नरञ्च त्राणाय विक्रोशति याज्ञसेनी।

॥ दुःशासन उवाच ॥ रजस्वला वा भव याज्ञसेनि एकाम्बरा वाऽप्यथ वा विवस्त्रा। द्यूते जिता चासि कृताऽसि दासी दासीषु वासश्च यथोपजोषं। २२३०

॥ वैशम्पायन उवाच ॥ प्रकीर्णकेशी पतितार्द्धवस्त्रा दुःशासनेन व्यवधूयमाना। ह्रीमत्यमर्षेण च दह्यमाना शनैरिदं वाक्यमुवाच कृष्णा।

॥ द्रौपद्युवाच ॥ इमे सभायामुपदिष्टशास्त्राः क्रियावन्तः सर्व्व एवेन्द्रकल्पाः। गुरुस्थाना गुरवश्चैव सर्व्वे तेषामग्रे नोत्सहे स्थातुमेवं।

नृशंसकर्म्मंस्त्वमनार्य्यवृत्त मा मां विवस्त्रां कुरु मा विकार्षीः। न मर्षयेयुस्तव राजपुत्त्राः सेन्द्रादिदेवा यदि ते सहायाः।

धर्म्मे स्थितो धर्म्मसुतो महात्मा धर्म्मश्च सूक्ष्मो निपुणोपलक्ष्यः। वाचाऽपि भर्त्तुः परमाणुमात्रमिच्छामि दोषं न गुणान् विसृज्य।

इदं त्वकार्य्यं कुरुवीरमध्ये रजस्वलां यत् परिकर्षसे मां । न चापि कश्चित् कुरुतेऽत्र कुत्सां ध्रुवं तवेदं मतमभ्युपेतः । २२३५

धिगस्तु नष्टः खलु भारतानां धर्म्मस्तथा क्षत्रविदाञ्च वृत्तं । यत्रात्यतीतां कुरुधर्म्मवेलां प्रेक्षन्ति सर्व्वे कुरवः सभायां ।

द्रोणस्य भीष्मस्य च नास्ति सत्त्वं क्षत्तुस्तथैवास्य महात्मनोऽपि । राज्ञस्तथा हीममधर्म्ममुग्रं न लक्षयन्ते कुरुवृद्धमुख्याः ।

॥ वैशम्पायन उवाच ॥ तथा ब्रुवन्ती करुणं सुमध्यमा भर्त्तॄन् कटाक्षैः कुपितानपश्यत् । सा पाण्डवान् कोपपरीतदेहान् सन्दीपयामास कटाक्षपातैः ।

हृतेन राज्येन तथा धनेन रत्नैश्च मुख्यैर्न तथा बभूव । यथा त्रपाकोपसमीरितेन कृष्णाकटाक्षेण बभूव दुःखं ।

दुःशासनश्चापि समीक्ष्य कृष्णामवेक्षमाणां कृपणान् पतींस्तान् । आधूय वेगेन विसंज्ञकल्पामुवाच दासीति हसन् सशब्दं । २२४०

कर्णस्तु तद्वाक्यमतीव हृष्टः सम्पूजयामास हसन् सशब्दं । गान्धारराजः सुबलस्य पुत्त्रस्तथैव दुःशासनमभ्यनन्दत् ।

सभ्यास्तु ये तत्र बभूवुरन्ये ताभ्यामृते धार्त्तराष्ट्रेण चैव । तेषामभूद्दुःखमतीव कृष्णां दृष्ट्वा सभायां परिकृष्यमाणां ।

॥ भीष्म उवाच ॥ न धर्म्मसौक्ष्म्यात् सुभगे विवेक्तुं शक्नोमि ते प्रश्नमिमं यथावत् । अस्वो ह्यशक्तः पणितुं परस्वं स्त्रियाश्च भर्त्तुर्व्वशतां समीक्ष्य ।

त्यजेत सर्व्वां पृथिवीं समृद्धां युधिष्ठिरो धर्म्ममथो न जह्यात् । उक्तं जितोऽस्मीति च पाण्डवेन तस्मान्न शक्नोमि विवेक्तुमेतत् ।

द्यूतेऽद्वितीयः शकुनिर्न्नरेषु कुन्तीसुतस्तेन निसृष्टकामः । न मन्यते तां निकृतिं युधिष्ठिरस्तस्मान्न ते प्रश्नमिमं ब्रवीमि । २२४५

॥ द्रौपद्युवाच ॥ आहूय राजा कुशलैरनार्य्यैर्दुष्टात्मभिर्न्नैकृतिकैः सभायां । द्यूतप्रियैर्न्नातिकृतप्रयत्नः कस्मादयं नाम निसृष्टकामः ।

अशुद्धभावैर्न्निकृतिप्रवृत्तैरबुध्यमानः कुरुपाण्डवाग्र्यः । सम्भूय सर्व्वैश्च जितोऽपि यस्मात् पश्चादयं कैतवमभ्युपेतः ।

तिष्ठन्ति चेमे कुरवः सभायामीशाः सुतानाञ्च तथा स्नुषाणां । समीक्ष्य सर्व्वे मम चापि वाक्यं विब्रूत मे प्रश्नमिमं यथावत् ।

॥ वैशम्पायन उवाच ॥ तथा ब्रुवन्तीं करुणं रुदन्तीमवेक्षमाणां कृपणान् पतींस्तान् । दुःशासनः परुषाण्यप्रियाणि वाक्यान्युवाचामधुराणि चैव ।

तां कृष्यमाणाञ्च रजस्वलाञ्च स्रस्तोत्तरीयामतदर्हमाणां । वृकोदरः प्रेक्ष्य युधिष्ठिरञ्च चकार कोपं परमार्त्तरूपः । २२५०

इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि द्रौपदीप्रश्ने पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

॥ भीम उवाच ॥ भवन्ति गेहे बन्धक्यः कितवानां युधिष्ठिर । न ताभिरुत दीव्यन्ति दया चैवास्ति तास्वपि ।

काश्यो यद्धनमाहार्षीद्द्रव्यं यच्चान्यदुत्तमं । तथाऽन्ये पृथिवीपाला यानि रत्नान्युपाहरन् ।

वाहनानि धनञ्चैव कवचान्यायुधानि च । राज्यमात्मा वयञ्चैव कैतवेन हृतं परैः ।

नच मे तत्र कोपोऽभूत् सर्व्वस्येशो हि नो भवान् । इमं त्वतिक्रमं मन्ये द्रौपदी यत्र पण्यते ।

एषा ह्यनर्हती बाला पाण्डवान् प्राप्य कौरवैः । त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैरकृतात्मभिः । २२५५

अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते । बाहू ते सम्प्रधक्ष्यामि सहदेवाग्निमानय ।

॥ अर्ज्जुन उवाच ॥ न पुरा भीमसेन त्वमीदृशीर्व्वदिता गिरः । परैस्ते नाशितं नूनं नृशंसैर्धर्म्मगौरवं ।

न सकामाः परे कार्य्या धर्म्ममेवाचरोत्तमं । भ्रातरं धार्म्मिकं ज्येष्ठं कोऽतिवर्त्तितुमर्हति ।

आहूतो हि परै राजा क्षात्रं व्रतमनुस्मरन् । दीव्यते परकामेन तन्नः कीर्त्तिकरं महत् ।

॥ भीमसेन उवाच ॥ एवमस्मिन् कृतं विद्यां यदि नाहं धनञ्जय। दीप्तेऽग्नौ सहितौ बाहू निर्द्दहेयं बलादिव। २२६०

॥ वैशम्पायन उवाच ॥ तथा तान् दुःखितान् दृष्ट्वा पाण्डवान् धृतराष्ट्रजः। क्लिश्यमानाञ्च पाञ्चालीं विकर्ण इदमब्रवीत्।
याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवाः। अविवेकेन वाक्यस्य नरकः सद्य एव नः।
भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ। समेत्य नाहतुः किञ्चिद्विदुरश्च महामतिः।
भारद्वाजश्च सर्व्वेषामाचार्य्यः कृप एव च। कुत एतावपि प्रश्नं नाहतुर्द्विजसत्तमौ।
ये त्वन्ये पृथिवीपालाः समेताः सर्व्वतो दिशः। कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति। २२६५
यदिदं द्रौपदी वाक्यमुक्तवत्यसकृच्छुभा। विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरं।
एवं स बहुशः सर्व्वानुक्तवांस्तान् सभासदः। नच ते पृथिवीपालास्तमूचुः साध्वसाधु वा।
उक्त्वा ऽसकृत्तथा सर्व्वान् विकर्णः पृथिवीपतीन्। पाणौ पाणिं विनिष्पिष्य निश्वसन्निदमब्रवीत्।
विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चन। मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः।
चत्वार्य्याहुर्न्नरश्रेष्ठा व्यसनानि महीक्षितां। मृगया पानमक्षाश्च ग्राम्ये चैवातिरक्तता। २२७०
एतेषु हि नरः सक्तो धर्म्ममुत्सृज्य वर्त्तते। तथायुक्तेन च कृतां क्रियां लोको न मन्यते।
तदयं पाण्डुपुत्रेण व्यसने वर्त्तता भृशं। समाहूतेन कितवैरास्थितो द्रौपदी पणः।
साधारणी च सर्व्वेषां पाण्डवानामनिन्दिता। जितेन पूर्व्वञ्चानेन पाण्डवेन कृतः पणः।
इयञ्च कीर्त्तिता कृष्णा सौबलेन पणार्थिना। एतत्सर्व्वं विचार्य्याहं मन्ये न विजितामिमां।
एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत। विकर्णं शंसमानानां सौबलञ्चापि निन्दतां। २२७५
तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्च्छितः। प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत्।
॥ कर्ण उवाच ॥ दृश्यन्ते वै विकर्णेह वैकृतानि बहून्यपि। तज्जातस्तद्विनाशाय यथाऽग्निररणीप्रजः
एते नकिञ्चिदप्याहुश्चोदिता ह्यपि कृष्णया। धर्म्मेण विजितामेतां मन्यन्ते द्रुपदात्मजां।
त्वन्तु केवलबाल्येन धार्त्तराष्ट्र विदीर्य्यसे। यद्ब्रवीषि सभामध्ये बालः स्थविरभाषितं।
न च धर्म्मं यथावत्त्वं वेत्सि दुर्य्योधनावर। यद्ब्रवीषि जितां कृष्णां न जितेति सुमन्दधीः। २२८०
कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज। यदा सभायां सर्व्वस्वं न्यस्तवान् पाण्डवाग्रजः।
अभ्यन्तरा च सर्व्वस्वे द्रौपदी भरतर्षभ। एवं धर्म्मजितां कृष्णां मन्यसे न जितां कथं।
कीर्त्तिता द्रौपदी वाचा अनुज्ञाता च पाण्डवैः। भवत्यविजिता केन हेतुनैषा मता तव।
मन्यसे वा सभमितामानीतामेकवाससं। अधर्म्मेणेति तत्रापि शृणु मद्वाक्यमुत्तमं।
एको भर्त्ता स्त्रिया देवैर्व्विहितः कुरुनन्दन। इयं त्वनेकवशगा बन्धकीति विनिश्चिता। २२८५
अस्याः सभामानयनं न चित्रमिति मे मतिः। एकाम्बरधरत्वं वाऽप्यथ वाऽपि विवस्त्रतां।
यच्चैषां द्रविणं किञ्चिद्याचैषा ये च पाण्डवाः। सौबलेनेह तत्सर्व्वं धर्म्मेण विजितं वसु।
दुःशासन सुबालोऽयं विकर्णः प्राज्ञवादिकः। पाण्डवानाञ्च वासांसि द्रौपद्याश्चाप्युपाहर।
तच्छ्रुत्वा पाण्डवाः सर्व्वे स्वानि वासांसि भारत। अवकीर्य्योत्तरीयाणि सभायां समुपाविशन्।

ततो दुःशासनो राजन् द्रौपद्या वसनं बलात् । सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे । २२९०

॥ वैशम्पायन उवाच ॥ आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः । गोविन्द द्वारकावासिन् कृष्ण गोपीजनप्रिय ।

कौरवैः परिभूतां मां किं न जानासि केशव । हे नाथ हे रमानाथ व्रजनाथार्त्तिनाशन ।

कौरवार्णवमग्नां मामुद्धरस्व जनार्द्दन । कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन । प्रपन्नां पाहि गोविन्द कुरुमध्येऽवसी

दतीं । इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरं । प्रारुदद्दुःखिता राजन् मुखमाच्छाद्य भामिनी ।

याज्ञसेन्या वचः श्रुत्वा कृष्णो गह्वरितोऽभवत् । त्यक्त्वा शय्यासनं पद्भ्यां कृपालुः कृपयाऽभ्यगात् ।

कृष्णञ्च विष्णुञ्च हरिं नरञ्च त्राणाय विक्रोशति याज्ञसेनी । ततस्तु धर्म्मोऽन्तरितो महात्मा समावृणोद्वै विविधैः सुवस्त्रैः ।२२९५

आकृष्यमाणे वसने द्रौपद्यास्तु विशाम्पते । तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ।

नानारागविरागाणि वसनान्यथ वै प्रभो । प्रादुर्भवन्ति शतशो धर्म्मस्य परिपालनात् ।

ततो हलहलाशब्दस्तत्रासीद्घोरनिस्वनः । तदद्भुततमं लोके वीक्ष्य सर्व्वे महीभृतः । शशंसुर्द्रौपदीं तत्र कुत्सन्तो धृतराष्ट्रजं ।

शशाप तत्र भीमस्तु राजमध्ये बृहत्स्वनः । क्रोधाद्विस्फुरमाणोष्ठो विनिष्पिष्य करे करं ।

॥ भीमसेन उवाच ॥ इदं मे वाक्यमादद्ध्वं क्षत्रिया लोकवासिनः । नोक्तपूर्व्वं नरैरन्यैर्न चान्यो यद्वदिष्यति । २३००

यद्येतदेवमुक्त्वाहं न कुर्य्यां पृथिवीश्वराः । पितामहानां पूर्व्वेषां नाहं गतिमवाप्नुयां ।

अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च । नापिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ।

॥ वैशम्पायन उवाच ॥ तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रहर्षणं । प्रचक्रुर्बहुलां पूजां कुत्सन्तो धृतराष्ट्रजं ।

यदा तु वाससां राशिः सभामध्ये समाचितः । ततो दुःशासनः श्रान्तो व्रीडितः समुपाविशत् ।

धिक्शब्दस्तु ततस्तत्र समभूल्लोमहर्षणः । सभ्यानां नरदेवानां दृष्ट्वा कुन्तीसुतांस्तथा । २३०५

न विब्रुवन्ति कौरव्याः प्रश्नमेतमिति स्म ह । सुजनः क्रोशति स्मात्र धृतराष्ट्रं विगर्हयन् ।

ततो बाहू समुत्क्षिप्य निवार्य्य च सभासदः । विदुरः सर्व्वधर्म्मज्ञ इदं वचनमब्रवीत् ।

॥ विदुर उवाच ॥ द्रौपदी प्रश्नमुक्त्वैवं रोरवीति त्वनाथवत् । न च विब्रूत तं प्रश्नं सभ्या धर्म्मोऽत्र पीड्यते ।

सभां प्रपद्यते ह्यार्त्तः प्रज्वलन्निव हव्यवाट् । तं वै सत्येन धर्म्मेण सभ्याः प्रशमयन्त्युत ।

धर्म्मप्रश्नमतो ब्रूयादार्य्यः सत्येन मानवः । विब्रूयुस्तत्र तं प्रश्नं कामक्रोधबलातिगाः । २३१०

विकर्णेन यथाप्रज्ञमुक्तः प्रश्नो नराधिपाः । भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ।

यो हि प्रश्नं न विब्रूयाद्धर्म्मदर्शी सभागतः । अनृते या फलावाप्तिस्तस्याः सोऽर्द्धं समश्नुते ।

यः पुनर्व्वितथं ब्रूयाद्धर्म्मदर्शी सभां गतः । अनृतस्य फलं कृत्स्नं स प्राप्नोतीति निश्चयः ।

अत्राप्युदाहरन्तीममितिहासं पुरातनं । प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ।

प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्त्रो विरोचनः । कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् । २३१५

अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा । तयोर्द्देवनमत्रासीत् प्राणयोरिति नः श्रुतं ।

तयोः प्रश्नविवादोऽभूत् प्रह्लादं तावपृच्छतां । ज्यायान् क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा ।

स वै विवदनाद्भीतः सुधन्वानं विलोकयन् । तं सुधन्वाऽब्रवीत् क्रुद्धो ब्रह्मदण्डइव ज्वलन् ।

यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि । शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति ।
सुधन्वना तथोक्तः सन् व्यथितोऽश्वत्थपर्णवत् । जगाम कश्यपं दैत्यः परिप्रष्टुं महौजसं ।　　२२२०
॥ प्रह्लाद उवाच ॥ त्वं वै धर्म्मस्य विज्ञाता दैवस्येहासुरस्य च । ब्राह्मणस्य महाभाग धर्म्मकृच्छ्रमिदं शृणु ।
यो वै प्रश्नं न विब्रूयाद्वितथञ्चैव निर्द्दिशेत् । के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः ।
॥ कश्यप उवाच ॥ जानन्नविब्रुवन् प्रश्नान् कामात् क्रोधाद्भयात्तथा । सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ।
साक्षी वा विब्रुवन् साक्ष्यं गोकर्णशिथिलश्चरन् । सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ।
तस्य सम्वत्सरे पूर्णे पाश एकः प्रमुच्यते । तस्मात् सत्यन्तु वक्तव्यं जानता सत्यमञ्जसा ।　　२२२५
विद्धो धर्म्मो ह्यधर्म्मेण सभां यत्रोपपद्यते । न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ।
अर्द्धं हरति वै श्रेष्ठः पादो भवति कर्त्तृषु । पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितं ।
अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः । एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ।
वितथन्तु वदेयुर्य्ये धर्म्मं प्रह्लाद पृच्छते । इष्टापूर्त्तञ्च ते घ्नन्ति सप्त सप्त परावरान् ।
हृतस्वस्य हि यद्दुःखं हतपुत्त्रस्य चैव यत् । ऋणिनः प्रति यच्चैव स्वार्थाद्भ्रष्टस्य चैव यत् ।　　२२३०
स्त्रियाः पत्या विहीनाया राज्ञा ग्रस्तस्य चैव यत् । अपुत्त्रायाश्च यद्दुःखं व्याघ्राघ्रातस्य चैव यत् ।
अध्यूढायाश्च यद्दुःखं साक्षिभिर्व्विहतस्य च । एतानि वै समान्याहुर्दुःखानि त्रिदिवेश्वराः ।
तानि सर्व्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन् । समक्षदर्शनात् साक्ष्यं श्रवणाच्चेति धारणात् ।
तस्मात् सत्यं ब्रुवन् साक्षी धर्म्मार्थाभ्यां न हीयते । कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्त्रमब्रवीत् ।
श्रेयान् सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः । माता सुधन्वनश्चापि मातृतः श्रेयसी तव । विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ।　　२२३५
॥ सुधन्वोवाच ॥ पुत्त्रस्नेहं परित्यज्य यस्त्वं धर्म्मे व्यवस्थितः । अनुजानामि ते पुत्त्रं जीवत्वेष शतं समाः ।
॥ विदुर उवाच ॥ एवं वै परमं धर्म्मं श्रुत्वा सर्व्वे सभासदः । यथाप्रश्नन्तु कृष्णाया मन्यध्वं तत्र किं परं ।
॥ वैशम्पायन उवाच ॥ विदुरस्य वचः श्रुत्वा नोचुः किञ्चन पार्थिवाः । कर्णो दुःशासनं त्वाह कृष्णां दासीं गृह नय ।
तां वेपमानां सव्रीडां प्रलपन्तीं स्म पाण्डवान् । दुःशासनः सभामध्ये विचकर्ष तपस्विनीं ।
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि द्रौपद्याकर्षणे षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ द्रौपद्युवाच ॥ तावत् प्रतीक्ष दुष्प्रज्ञ दुःशासन नराधम । पुरस्तात् करणीयं मे न कृतं कार्य्यमुत्तरं ।　　२२४०
विह्वलाऽस्मि कृताऽनेन कर्षिता बलिना बलात् । अभिवादं करोम्येषां कुरूणां कुरुसंसदि ।
न मे स्यादपराधोऽयं यदिदं न कृतं मया ।
॥ वैशम्पायन उवाच ॥ सा तेनच समाधूता दुःखेन च तपस्विनी । पतिता विललापेदं सभायामतथोचिता ।
॥ द्रौपद्युवाच ॥ स्वयम्बरे याऽस्मि नृपैर्दृष्टा रङ्गे सभागतैः । न दृष्टपूर्व्वा चान्यत्र साऽहमद्य सभां गता ।
यां न वायुर्नचादित्यो दृष्टवन्तौ पुरा गृहे । साऽहमद्य सभामध्ये दृश्यामि जनसंसदि ।　　२२४५
यां न मृष्यन्ति वातेन स्पृश्यमानां गृहे पुरा । स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना ।

मृष्यन्ति कुरवश्चेमे मन्ये कालस्य पर्य्ययं । स्नुषां दुहितरञ्चैव क्लिश्यमानामनर्हतीं ।
किन्त्वतः कृपणं भूयो यदहं स्त्री सती शुभा । सभामध्यं विगाहेऽद्य क्व नु धर्म्मो महीक्षितां । धर्म्याः स्त्रियं सभां पूर्व्वं न नयन्तीति नः श्रुतं ।
स नष्टः कौरवेयेषु पूर्व्वो धर्म्मः सनातनः । कथं हि भार्य्या पाण्डूनां पार्षतस्य स्वसा सती । वासुदेवस्य च सखी पार्थिवानां सभामियां ।
तामिमां धर्म्मराजस्य भार्य्यां सदृशवर्णजां । ब्रूत दासीमदासीं वा तत्करिष्यामि कौरवाः । २१५०
अयं मां सुदृढं क्षुद्रः कौरवाणां यशोहरः । क्लिश्नाति नाहं तत् सोढुं चिरं शक्ष्यामि कौरवाः ।
जितां वाऽप्यजितां वापि मन्यध्वे मां यथा नृपाः । तथा प्रत्युक्तमिच्छामि तत् करिष्यामि कौरवाः ।
॥ भीष्म उवाच ॥ उक्तवानस्मि कल्याणि धर्म्मस्य परमा गतिः । लोके न शक्यते ज्ञातुमपि विप्रैर्महात्मभिः ।
बलवांस्तु यथा धर्म्मं लोके पश्यति पूरुषः । स धर्म्मो धर्म्मवेलायां भवत्यभिहतः परः ।
न विवेक्तुञ्च ते प्रश्नमिमं शक्नोमि निश्चयात् । सूक्ष्मत्वाद्गहनत्वाच्च कार्य्यस्यास्य च गौरवात् । २१५५
नूनमन्तः कुलस्यास्य भविता न चिरादिव । तथाहि कुरवः सर्व्वे लोभमोहपरायणाः ।
कुलेषु जाताः कल्याणि व्यसनैराहता भृशं । धर्म्यान्मार्गान्न च्यवन्ते येषां नस्त्वं वधूः स्थिता ।
उपपन्नञ्च पाञ्चालि तवेदं वृत्तमीदृशं । यत् कृच्छ्रमपि संप्राप्ता धर्म्ममेवान्ववेक्षसे ।
एते द्रोणादयश्चैव वृद्धा धर्म्मविदो जनाः । शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः ।
युधिष्ठिरस्तु प्रश्नेऽस्मिन् प्रमाणमिति मे मतिः । अजितां वा जितां वेति स्वयं व्याहर्त्तुमर्हति । २१६०
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि भीष्मवाक्ये सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ वैशम्पायन उवाच ॥ तथा च दृष्ट्वा बहु तत्र देवीं रोरूयमाणां कुररीमिवार्त्तां । नोचुर्व्वचः साध्वथ वाऽप्यसाधु महीक्षितो धार्त्तराष्ट्रस्य भीताः ।
दृष्ट्वा तथा पार्थिवपुत्रपौत्रांस्तूष्णीम्भूतान् धृतराष्ट्रस्य पुत्रः । स्मयन्निवेदं वचनं बभाषे पाञ्चालराजस्य सुतां तदानीं ।
॥ दुर्य्योधन उवाच ॥ तिष्ठत्वयं प्रश्न उदारसत्त्वे भीमेऽर्ज्जुने सहदेवे तथैव । पत्यौ च ते नकुले याज्ञसेनि वदन्त्वेते वचनं त्वत्प्रसूतं ।
अनीश्वरं विब्रुवन्त्वार्य्यमध्ये युधिष्ठिरं तव पाञ्चालि हेतोः । कुर्व्वन्तु सर्व्वे चानृतं धर्म्मराजं पाञ्चालि त्वं मोक्ष्यसे दासभावात् ।
सर्व्वे स्थितो धर्म्मसुतो महात्मा स्वयञ्चेदं कथयत्विन्द्रकल्पः । ईशो वा ते ह्यनीशोऽथ वैष वाक्यादस्य क्षिप्रमेकं भजस्व । २१६५
सर्व्वे हीमे कौरवेयाः सभायां दुःखान्तरे वर्त्तमानास्तवैव । न विब्रुवन्त्यार्य्यसत्त्वा यथावत् पतींश्च ते समवेक्ष्याल्पभाग्यान् ।
॥ वैशम्पायन उवाच ॥ ततः सभ्याः कुरुराजस्य तस्य वाक्यं सर्व्वे प्रशशंसुस्तदोच्चैः । चेलावेधांश्चापि चक्रुर्नदन्तो हाहेत्यासीदपि चैवार्त्तनादः ।
श्रुत्वा तु तद्वाक्यमनोहरं तद्धर्षश्चासीत् कौरवाणां सभायां । सर्व्वे चासन् पार्थिवाः प्रीतिमन्तः कुरुश्रेष्ठं धार्म्मिकं पूजयन्तः ।
युधिष्ठिरञ्च ते सर्व्वे समुदैक्षन्त पार्थिवाः । किन्नु वक्ष्यति धर्म्मज्ञ इति साचीकृताननाः ।
किन्नु वक्ष्यति बीभत्सुरजितो युधि पाण्डवः । भीमसेनो यमौ चोभौ भृशं कौतूहलान्विताः । २१७०

तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदं। प्रमृज्य रुचिरं दिव्यं भुजं चन्दनचर्चितं।

॥ भीमसेन उवाच ॥ यद्येष गुरुरस्माकं धर्म्मराजो महामनाः। न प्रभुः स्यात् कुलस्यास्य न वयं मर्षयेमहि।

ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः। मन्यते जितमात्मानं यद्येष विजिता वयं।

नहि मुच्येत मे जीवन् पदा भूमिमुपस्पृशन्। मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्द्धजानिमान्।

पश्यध्वं ह्यायतौ वृत्तौ भुजौ मे परिघाविव। नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः। २२७५

धर्म्मपाशसितस्त्वेवं नाधिगच्छामि सङ्कटं। गौरवेण निरुद्धश्च निग्रहादर्ज्जुनस्य च।

धर्म्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव। धार्त्तराष्ट्रानिमान् पापान्निष्पिंषेयं तलासिभिः।

॥ वैशम्पायन उवाच ॥ तमुवाच तदा भीष्मो द्रोणो विदुर एव च। क्षम्यतामिदमित्येवं सर्व्वं सम्भाव्यते त्वयि।

इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि भीमवाक्ये अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

॥ कर्ण उवाच ॥ त्रयः किलेमे अधमाः सभायां भीष्मः क्षत्ता कौरवाणां गुरुश्च। ये स्वामिनं दुष्टतमं वदन्ति वाञ्छन्ति वृद्धिं नच विक्षिपन्ति।

त्रयः किलेमे अधना भवन्ति दासः पुत्रश्चास्वतन्त्रा च नारी। दासस्य पत्नी त्वधनस्य भद्रे हीनेश्वरे दासधनञ्च सर्व्वं। २२८०

प्रविश्य राज्ञः परिवारं भजस्व तत्ते कार्य्यं शिष्टमादिश्यतेऽत्र। ईशास्तु सर्व्वे तव राजपुत्रि भवन्ति वै धार्त्तराष्ट्रा न पार्थाः।

अन्यं वृणीष्व पतिमाशु भाविनि यस्माद्दास्यं न लभसि देवनेन। अवाच्या वै पतिषु कामवृत्तिर्नित्यं दास्ये विदितं तत्तवास्तु।

पराजितो नकुलो भीमसेनो युधिष्ठिरः सहदेवार्ज्जुनौ च। दासीभूता त्वं हि वै याज्ञसेनि पराजितास्ते पतयो नैव सन्ति।

प्रयोजनं जन्मनि किन्नु मन्यते पराक्रमं पौरुषञ्चैव पार्थः। पाञ्चाल्यस्य द्रुपदस्यात्मजामिमां सभामध्ये यो व्यदेवीद्ग्लहेषु।

॥ वैशम्पायन उवाच ॥ तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी भृशं निशश्वास तदार्त्तरूपः। राजानुगो धर्म्मपाशानुबद्धो दहन्निवैनं क्रोधसंरक्तदृष्टिः। २२८५

॥ भीमसेन उवाच ॥ नाहं कुप्ये सूतपुत्रस्य राजन्नेष सत्यं दासभावं प्रविष्टाः। किं विद्विषो वै मामेवं व्याहरेयुर्नादेवीस्त्वं यद्यनया नरेन्द्र।

॥ वैशम्पायन उवाच ॥ भीमसेनवचः श्रुत्वा राजा दुर्य्योधनस्तदा। युधिष्ठिरमुवाचेदं तूष्णींभूतमचेतनं।

भीमार्ज्जुनौ यमौ चैव स्थितौ ते नृप शासने। प्रश्नं ब्रूहि च कृष्णां त्वमजितां यदि मन्यसे।

एवमुक्त्वा तु कौन्तेयमपोह्य वसनं स्वकं। स्मयन्निवैक्ष्य पाञ्चालीमैश्वर्य्यमदमोहितः।

कदलीदण्डसदृशं सर्व्वलक्षणसंयुतं। गजहस्तप्रतीकाशं वज्रप्रतिमगौरवं। २२९०

अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव। द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत्।

भीमसेनस्तमालोक्य नेत्रे उत्फाल्य लोहिते। प्रोवाच राजमध्ये तं सभां विश्रावयन्निव।

पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः। यद्येतमूरुं गदया न भिन्द्यां ते महाहवे।

क्रुद्धस्य तस्य सर्व्वेभ्यः स्रोतोभ्यः पावकार्च्चिषः। वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः।

॥ विदुर उवाच ॥ परं भयं पश्यत भीमसेनात्तद्बुध्यध्वं पार्थिवाः प्रातिपेयाः। दैवेरितो नूनमयं पुरस्तात् परोऽनयो भरतेषूदपादि। २२९५

अतिद्यूतं कृतमिदं धार्त्तराष्ट्रा यस्मात् स्त्रियं विवदध्वं सभायां। योगक्षेमौ नश्यतो वः समग्रौ पापान्मन्त्रान् कुरवो मन्त्रयन्ति।
इमं धर्म्मं कुरवो जानताश्रु ध्वस्ते धर्म्मे परिषत् संप्रदुष्येत्। इमाञ्चेत् पूर्व्वं कितवोऽग्लहीष्यदीशोऽभविष्यदपराजितात्मा।
स्वप्ने यथैतद्विजितं धनं स्यादेवं मन्ये यस्य दीव्यत्यनीशः। गान्धारराजस्य वचो निशम्य धर्म्मादस्मात् कुरवो माऽपयात्।
॥ दुर्य्योधन उवाच ॥ भीमस्य वाक्ये तद्वदेवार्ज्जुनस्य स्थितोऽहं वै यमयोश्चैवमेव। युधिष्ठिरन्ते प्रवदन्त्वनीशमतो दास्यान्मोक्ष्यसे याज्ञसेनि।
॥ अर्ज्जुन उवाच ॥ ईशो राजा पूर्व्वमासीद्ग्लहे नः कुन्तीसुतो धर्म्मराजो महात्मा। ईशस्त्वयं कस्य पराजितात्मा तज्जानीध्वं कुरवः सर्व्व एव। २४००
॥ वैशम्पायन उवाच ॥ ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैर्व्याहरदग्निहोत्रे। तं रासभाः प्रत्यभाषन्त राजन् समन्ततः पक्षिणश्चैव रौद्राः।
तं वै शब्दं विदुरस्तत्त्ववेदी शुश्राव घोरं सुबलात्मजा च। भीष्मो द्रोणो गौतमश्चापि विद्वान् स्वस्ति स्वस्तीत्यपि चैवाहुरुच्चैः।
ततो गान्धारी विदुरश्चापि विद्वांस्तमुत्पातं घोरमालक्ष्य राज्ञे। निवेदयामासतुरार्त्तवत्तदा ततो राजा वाक्यमिदं बभाषे।
॥ धृतराष्ट्र उवाच ॥ हतोऽसि दुर्य्योधन मन्दबुद्धे यस्त्वं सभायां कुरुपुङ्गवानां। स्त्रियं समाभाषसि दुर्व्विनीत विशेषतो द्रौपदीं धर्म्मपत्नीं।
एवमुक्त्वा धृतराष्ट्रो मनीषी हितान्वेषी बान्धवानामपायात्। कृष्णां पाञ्चालीमब्रवीत् सान्त्वपूर्व्वं विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः। २४०५
॥ धृतराष्ट्र उवाच ॥ वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि। वधूनां हि विशिष्टा मे त्वं धर्म्मपरमा सती।
॥ द्रौपद्युवाच ॥ ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ। सर्व्वधर्म्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः।
मनस्विनमजानन्तो मैवं ब्रूयुः कुमारकाः। एष वै दासपुत्त्रोहि प्रतिविन्ध्यं ममात्मजं।
राजपुत्त्रः पुरा भूत्वा यथा नान्यः पुमान् क्वचित्। राजभिर्लालितस्यास्य न युक्ता दासपुत्त्रता।
॥ धृतराष्ट्र उवाच ॥ एवं भवतु कल्याणि यथा त्वमभिभाषसे। द्वितीयं ते वरं भद्रे ददानि वरयस्व ह। मनो हि मे वितरति नैकं त्वं वरमर्हसि। २४१०
॥ द्रौपद्युवाच ॥ सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ। यमौ च वरये राजन्नदासान् स्ववशानहं।
॥ धृतराष्ट्र उवाच ॥ तथाऽस्तु ते महाभागे यथा त्वं नन्दिनीच्छसि। तृतीयं वरयास्मत्तो नासि ताभ्यां सुसत्कृता। त्वं हि सर्व्वस्नुषाणां मे श्रेयसी धर्म्मचारिणी।
॥ द्रौपद्युवाच ॥ लोभो धर्म्मस्य नाशाय भगवन्नाहमुत्सहे। अनर्हा वरमादातुं तृतीयं राजसत्तम।
एकमाहुर्व्वैश्यवरं द्वौ तु क्षत्रस्त्रियो वरौ। त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः।
पापीयांस इमे भूत्वा सन्तीर्णाः पतयो मम। वेत्स्यन्ति चैव भद्राणि राजन् पुण्येन कर्म्मणा। २४१५
इतिश्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि द्रौपदीवरलाभे एकोनसप्ततितमोऽध्यायः॥ ६९ ॥
॥ कर्ण उवाच ॥ या नः श्रुता मनुष्येषु स्त्रियो रूपेण सम्मताः। तासामेतादृशं कर्म्म न कस्याश्चन शुश्रुम।

क्रोधाविष्टेषु पार्थेषु धार्त्तराष्ट्रेषु चाप्यति । द्रौपदी पाण्डुपुत्त्राणां कृष्णा शान्तिरिहाभवत् ।
अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जतां । पाञ्चाली पाण्डुपुत्त्राणां नौरेषा पारगाऽभवत् ।
॥ वैशम्पायन उवाच ॥ तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः । स्त्रीगतिः पाण्डुपुत्त्राणामित्युवाच सुदुर्म्मनाः ।
॥ भीम उवाच ॥ त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् । अपत्यं कर्म्म विद्या च यतः सृष्टाः प्रजास्ततः । २४२०
अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते । देहे त्रितयमेवैतत् पुरुषस्योपयुज्यते ।
तन्नो ज्योतिरभिहतं दाराणामभिमर्शनात् । धनञ्जय कथं स्वित्स्यादपत्यमभिमृष्टजं ।
॥ अर्ज्जुन उवाच ॥ न चैवोक्ता न चाऽनुक्ता हीनतः परुषा गिरः । भारत प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ।
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि । सन्तः प्रतिविजानन्तो लब्धसम्भावनाः स्वयं ।
॥ भीम उवाच ॥ इहैवैतांस्तुवा सर्व्वान् हन्मि शत्रून् समागतान् । अथ निष्क्रम्य राजेन्द्र समूलान् हन्मि भारत । २४२५
किं नो विवदितेनेह किमुक्तेन च भारत । अद्यैवैतान्निहन्मीह प्रशाधि पृथिवीमिमां ।
इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिः सह । मृगमध्ये यथा सिंहो मुहुर्मुहुरुदैक्षत ।
सान्त्व्यमानो वीक्ष्यमाणः पार्थेनाक्लिष्टकर्म्मणा । स्विद्यत्येव महाबाहुरन्तर्दाहेन वीर्य्यवान् ।
क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप । सधूमसस्फुलिङ्गार्च्चिः पावकः समजायत ।
भ्रुकुटीकृतदुःप्रेक्ष्यमभवत्तस्य तन्मुखं । युगान्तकाले संप्राप्ते कृतान्तस्येव रूपिणः । २४३०
युधिष्ठिरस्तमावार्य्य बाहुना बाहुशालिनं । मैवमित्यब्रवीच्चैनं जोषमास्स्वेति भारत ।
निवार्य्य च महाबाहुं कोपसंरक्तलोचनं । पितरं समुपातिष्ठद्धृतराष्ट्रं कृताञ्जलिः ।
इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि भीमक्रोधे सप्ततितमोऽध्यायः ॥ ७० ॥
॥ युधिष्ठिर उवाच ॥ राजन् किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः । नित्यं हि स्थातुमिच्छामस्तव भारत शासने ।
॥ धृतराष्ट्र उवाच ॥ अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत । अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ।
इदञ्चैवावबोद्धव्यं वृद्धस्य मम शासनं । मया निगदितं सर्व्वं पथ्यं निःश्रेयसं परं । २४३५
वेत्थ त्वं तात धर्म्माणां गतिं सूक्ष्मां युधिष्ठिर । विनीतोऽसि महाप्राज्ञ वृद्धानां पर्य्युपासिता ।
यतो बुद्धिस्ततः शान्तिः प्रशमं गच्छ भारत । नादारुणि पतेच्छस्त्रं दारुण्येतन्निपात्यते ।
न वैराण्यभिजानन्ति गुणान् पश्यन्ति नागुणान् । विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ।
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि । सन्तः परार्थं कुर्व्वाणा नावेक्षन्ते प्रतिक्रियां ।
संवादे परुषाण्याहुर्युधिष्ठिर नराधमाः । प्रत्याहुर्मध्यमास्त्वेतानुक्ताः परुषमुत्तरं । २४४०
नचोक्ता नैव चानुक्तास्त्वहिताः परुषा गिरः । प्रतिजल्पन्ति वै धीराः सदा तूत्तमपूरुषाः ।
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि । सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ।
असम्भिन्नार्थमर्य्यादाः साधवः प्रियदर्शनाः । तथाचरितमार्य्येण त्वयाऽस्मिन् सत्समागमे ।
दुर्य्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः । मातरञ्चैव गान्धारीं मां च त्वं गुणकाङ्क्षया ।
उपस्थितं वृद्धमन्धं पितरं पश्य भारत । प्रेक्षापूर्व्वं मया द्यूतमिदमासीदुपेक्षितं । २४४५

मित्राणि द्रष्टुकामेन पुत्राणाञ्च बलाबलं। अशोच्याः कुरवो राजन् येषां त्वमनुशासिता।
मन्त्री च विदुरो धीमान् सर्व्वशास्त्रविशारदः। त्वयि धर्म्मोऽर्ज्जुने धैर्य्यं भीमसेने पराक्रमः।
श्रद्धा च गुरुशुश्रूषा यमयोः पुरुषाग्र्ययोः। अजातशत्रो भद्रं ते खाण्डवप्रस्थमाविश।
भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्म्मे ते धीयतां मनः।
॥ वैशम्पायन उवाच ॥ इत्युक्तो भरतश्रेष्ठो धर्म्मराजो युधिष्ठिरः। कृत्वार्य्यसमयं सर्व्वं प्रतस्थे भ्रातृभिः सह। २१५०
ते रथान् मेघसङ्काशानास्थाय सह कृष्णया। प्रययुर्हृष्टमनस इन्द्रप्रस्थं पुरोत्तमं।

इति श्रीमहाभारते सभापर्व्वणि द्यूतपर्व्वणि खाण्डवप्रस्थप्रस्थाने एकसप्ततितमोऽध्यायः।७१। समाप्तञ्च द्यूतपर्व्व ॥ ६८ ॥

## ॥ अथानुद्यूतपर्व्व ॥ ९ ॥

॥ जनमेजय उवाच ॥ अनुज्ञातांस्तान् विदित्वा सरत्नधनसञ्चयान्। पाण्डवान् धार्त्तराष्ट्राणां कथमासीन्मनस्तदा।
॥ वैशम्पायन उवाच ॥ अनुज्ञातांस्तान्विदित्वा धृतराष्ट्रेण धीमता। राजन् दुःशासनः क्षिप्रं जगाम भ्रातरं प्रति।
दुर्य्योधनं समासाद्य सामात्यं भरतर्षभ। दुःखार्त्तो भरतश्रेष्ठ इदं वचनमब्रवीत्।
॥ दुःशासन उवाच ॥ दुःखेनैतत् समानीतं स्थविरो नाशयत्यसौ। शत्रुसाद्गमयद्द्रव्यं तद्बुध्यध्वं महारथाः। २१५५
अथ दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः। मिथः सङ्गम्य सहिताः पाण्डवान् प्रति मानिनः।
वैचित्रवीर्य्यं राजानं धृतराष्ट्रं मनीषिणं। अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन्।
॥ दुर्य्योधन उवाच ॥ न त्वयेदं श्रुतं राजन् यज्जगाद बृहस्पतिः। शक्रस्य नीतिं प्रवदन् विद्वान् देवपुरोहितः।
सर्व्वोपायैर्निहन्तव्याः शत्रवः शत्रुसूदन। पुरा युद्धाद्बलाद्वापि प्रकुर्व्वन्ति तवाहितं।
ते वयं पाण्डवधनैः सर्व्वान् संपूज्य पार्थिवान्। यदि तान् योधयिष्यामः किं वै नः परिहास्यति। २१६०
अहीनाशीविषान् क्रुद्धान्दंशाय समुपस्थितान्। कृत्वा कण्ठे च पृष्ठे च कः समुत्स्रष्टुमर्हति।
आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः। निःशेषं वः करिष्यन्ति क्रुद्धा ह्याशीविषा इव।
सन्नद्धो ह्यर्ज्जुनो याति विधृत्य परमेषुधी। गाण्डीवं मुहुरादत्ते निश्वसंश्च निरीक्षते।
गदां गुर्व्वीं समुद्यम्य त्वरितश्च वृकोदरः। स्वरथं योजयित्वाऽऽशु निर्य्यात इति नः श्रुतं।
नकुलः खड्गमादाय चर्म्म चाप्यर्द्धचन्द्रवत्। सहदेवश्च राजा च चक्रुराकारमिङ्गितैः। २१६५
ते त्वास्थाय रथान् सर्व्वे बहुशस्त्रपरिच्छदान्। अभिघ्नन्तो रथव्रातान् सेनायोगाय निर्ययुः।
न क्षंस्यन्ते तथाऽस्माभिर्जातु विप्रकृता हि ते। द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति।
पुनर्दीव्याम भद्रन्ते वनवासाय पाण्डवैः। एवमेतान् वशे कर्त्तुं शक्ष्यामः पुरुषर्षभ।
ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः। प्रविशेम महारण्यमजिनैः प्रतिवासिताः।
त्रयोदशं सजनेन अज्ञाताः प्रतिवत्सरं। ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश। २१७०
निवसेम वयं ते वा तथा द्यूतं प्रवर्त्तताम्। अक्षानुप्त्वा पुनर्द्यूतमिदं कुर्व्वन्तु पाण्डवाः
एतत् कृत्यतमं राजन्नस्माकं भरतर्षभ। अयं हि शकुनिर्व्वेद सविद्यामक्षसम्पदं।

दृढमूला वयं राज्ये मित्राणि परिरक्ष्य च । सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदं ।
ते च त्रयोदशं वर्षं पारयिष्यन्ति चेद्व्रतं । जेष्यामस्तान् वयं राजन् रोचतां ते परन्तप ।
॥ धृतराष्ट्र उवाच ॥ तूर्णं प्रत्यानयस्वैतान् कामं व्यध्वगतानपि । आगच्छन्तु पुनर्द्यूतमिदं कुर्व्वन्तु पाण्डवाः । २४७५
॥ वैशम्पायन उवाच ॥ ततो द्रोणः सोमदत्तो वाह्लीकश्चैव गौतमः । विदुरो द्रोणपुत्त्रश्च वैश्यापुत्त्रश्च वीर्य्यवान् ।
भूरिश्रवाः शान्तनवो विकर्णश्च महारथः । मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्व्वशः ।
अकामानाञ्च सर्व्वेषां सुहृदामर्थदर्शिनां । अकरोत् पाण्डवाह्वानं धृतराष्ट्रः सुतप्रियः ।
इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि पुनर्युधिष्ठिराह्वाने द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ वैशम्पायन उवाच ॥ अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरं । पुत्त्रहार्द्दाद्धर्म्मयुक्ता गान्धारी शोककर्षिता ।
जाते दुर्य्योधने क्षत्ता महामतिरभाषत । नीयतां परलोकाय साध्वयं कुलपांसनः । २४८०
व्यनदज्जातमात्रो हि गोमायुरिव भारत । अन्तो नूनं कुलस्यास्य तन्निबोधत भारत ।
मा निमज्जीः स्वदोषेण महाप्सु त्वं हि भारत । मा बालानामशिष्टानामभिमंस्था मतिं प्रभो ।
मा कुलस्य क्षये घोरे कारणं त्वं भविष्यसि । बद्धं सेतुं कोऽनुभिन्द्याद्धमेच्छान्तञ्च पावकं ।
शमे स्थितान् को नु पार्थान् कोपयेद्भरतर्षभ । स्मरन्तं त्वामाजमीढं स्मारयिष्याम्यहं पुनः ।
शास्त्रं न शास्ति दुर्ब्बुद्धिं श्रेयसे चेतराय च । न वै वृद्धो बालमतिर्भवेद्राजन् कथञ्चन । २४८५
त्वन्नेत्राः सन्तु ते पुत्त्रा मा त्वां दीर्णाः प्रहासिषुः । तस्मादयं मद्वचनात्त्यज्यतां कुलपांसनः ।
तथा ते न कृतं राजन् पुत्त्रस्नेहान्नराधिप । तस्य प्राप्तं फलं विद्धि कुलान्तकरणाय यत् ।
शमेन धर्म्मेण परस्य बुद्ध्या या ते बुद्धिः साऽस्तु ते मा प्रमादीः । प्रध्वंसिनी क्रूरसमाहिता श्रीर्मृदुप्रौढा गच्छति पुत्त्रपौत्त्रान् ।
अथाब्रवीन्महाराजो गान्धारीं धर्म्मदर्शिनीं । अन्तः कामं कुलस्यास्तु न शक्नोमि निवारितुं ।
यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः । पुनर्द्यूतञ्च कुर्व्वन्तु मामकाः पाण्डवैः सह । २४९०
इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि गान्धारीवाक्ये त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ वैशम्पायन उवाच ॥ ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरं । उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ।
उपास्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर । एहि पाण्डव दीव्येति पिता त्वाहेति भारत ।
॥ युधिष्ठिर उवाच ॥ धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभं । न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ।
अक्षद्यूते समाह्वानं नियोगात् स्थविरस्य च । जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ।
॥ वैशम्पायन उवाच ॥ असम्भवे हेममयस्य जन्तोस्तथापि रामो लुलुभे मृगाय । प्रायः समासन्नपराभवानां धियो विपर्य्यस्ततरा भवन्ति । २४९५
इति ब्रुवन्निववृते भ्रातृभिः सह पाण्डवः । जानंश्च शकुनेर्म्मायां पार्थो द्यूतमियात् पुनः ।
विविशुस्ते सभां तान्तु पुनरेव महारथाः । कथयन्ति स्म चेतांसि सुहृदां भरतर्षभाः ।
यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये । सर्व्वलोकविनाशाय दैवेनोपनिपीडिताः ।
॥ शकुनिरुवाच ॥ अमुञ्चत् स्थविरो यद्वो धनं पूजितमेव तत् । महाधनं ग्लहं त्वेकं शृणु भो भरतर्षभ ।

वयं वा द्वादशाब्दानि युष्माभिर्द्यूतनिर्जिताः। प्रविशेम महारण्यं रौरवाजिनवाससः। २५००
त्रयोदशञ्च सजने अज्ञाताः परिवत्सरं । ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ।
अस्माभिर्निर्जिता यूयं वने द्वादशवत्सरान्। वसध्वं कृष्णया सार्द्धमजिनैः प्रतिवासिताः।
त्रयोदशे च निर्वृत्ते पुनरेव यथोचितं । स्वराज्यं प्रतिपत्तव्यमितरैरथवेतरैः ।
अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर । अक्षानुप्त्वा पुनर्द्यूतमेहि दीव्यस्व भारत ।
अथ सभ्याः सभामध्ये समुच्छ्रितकरास्तदा । ऊचुरुद्विग्नमनसः संवेगात् सर्व्व एव हि । २५०५
॥ सभ्या ऊचुः ॥ अहो धिग्बान्धवा नैनं बोधयन्ति महद्भयं । बुद्ध्या बुद्ध्येन्नवाबुद्ध्येदयं वै भरतर्षभ ।
॥ वैशम्पायन उवाच ॥ जनप्रवादान् सुबहून् शृण्वन्नपि नराधिपः । ह्रिया च धर्म्मसंयोगात् पार्थो द्यूतमियात्पुनः।
जानन्नपि महाबुद्धिः पुनर्द्यूतमवर्त्तयत् । अप्यासन्नो विनाशः स्यात् कुरूणामिति चिन्तयन् ।
॥ युधिष्ठिर उवाच ॥ कथं वै मद्विधो राजा स्वधर्म्ममनुपालयन् । आहूतो विनिवर्त्तेत दीव्यामि शकुने त्वया ।
॥ शकुनिरुवाच ॥ गवाश्वं बहुधेनूकमपर्य्यन्तमजाविकं । गजाः कोषो हिरण्यञ्च दासीदासाश्च सर्व्वशः । २५१०
एष नो ग्लह एवैको वनवासाय पाण्डवाः । यूयं वयं वा विजिता वसेम वनमाश्रिताः ।
त्रयोदशञ्च वै वर्षमज्ञाताः सजने तथा । अनेन व्यवसायेन दीव्याम पुरुषर्षभाः ।
समुत्क्षेपेण चैकेन वनवासाय भारत । प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः । जितमित्येव शकुनिर्युधिष्ठिरमभाषत ।
इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि पुनर्युधिष्ठिरपराजये चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥
॥ वैशम्पायन उवाच ॥ ततः पराजिताः पार्था वनवासाय दीक्षिताः । अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमं।
अजिनैः संवृतान् दृष्ट्वा हृतराज्यानरिन्दमान् । प्रस्थितान् वनवासाय ततो दुःशासनोऽब्रवीत् । २५१५
प्रवृत्तं धार्त्तराष्ट्रस्य चक्रं राज्ञो महात्मनः । पराजिताः पाण्डवेया विपत्तिं परमां गताः ।
अद्य देवाः संप्रयाताः समैर्व्वर्त्मभिरस्थलैः । गुणज्येष्ठास्तथा श्रेष्ठा भूयांसो यद्वयं परैः ।
नरकं पातिताः पार्था दीर्घकालमनन्तकं । सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः ।
धनेन मत्ता ये ते स्म धार्त्तराष्ट्रान् प्रहासिषुः । ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ।
चित्रान् सन्नाहानवमुञ्चन्तु चैषां वासांसि दिव्यानि च भानुमन्ति । विवास्यन्तां रुरुचर्म्माणि सर्व्वे यथा ग्लहं सौबलस्याभ्युपेताः । २५२०
न सन्ति लोकेषु पुमांस ईदृशा इत्येव ये भावितबुद्धयः सदा । ज्ञास्यन्ति ते त्मानमिहाद्य पाण्डवा विपर्य्यये षण्ढतिला इवाफलाः ।
इदं हि वासो यदि वेदृशानां मनस्विनां रौरवमाहवेषु । अदीक्षितानामजिनानियद्वद्बलीयसां पश्यत पाण्डवानां।
महाप्राज्ञः सौमकिर्य्यज्ञसेनः कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय । अकार्षीद्वै सुकृतं नेह किञ्चित् क्लीवाः पार्थाः पतयो याज्ञसेन्याः ।
सूक्ष्मप्रावारानजिनोत्तरीयान् दृष्ट्वाऽरण्ये निर्धनानप्रतिष्ठान् । कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि पतिं वृणीष्वेहयमन्यमिच्छसि ।
एते हि सर्व्वे कुरवः समेताः क्षान्ता दान्ताः सुद्रविणोपपन्नाः । एषां वृणीष्वैकतमं पतित्वे न त्वां नयेत् कालविपर्य्ययोऽयं । २५२५

यथाऽफलाः षण्ढतिला यथा चर्म्ममया मृगाः। तथैव पाण्डवाः सर्व्वे यथा काकयवा इति।
किं पाण्डवांस्त्वं पतितानुपास्से मोघः श्रमः षण्ढतिलानुपास्य। एवं नृशंसः परुषाणि पार्थानश्रावयद्धृतराष्ट्रस्य पुत्त्रः।
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी निर्भर्त्स्योच्चैः सन्निगृह्यैव रोषात्। उवाच चैनं सहसैवोपगम्य सिंहो यथा हैमवतः शृगालं।
॥ भीमसेन उवाच। क्रूर पापजनैर्जुष्टमकृतार्थं प्रभाषसे। गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे।
यथा तुदसि मर्म्माणि वाक्शरैरिह नो भृशं। तथा स्मारयिता तेऽहं कृन्तन्मर्म्माणि संयुगे। २५३०
ये च त्वामनुवर्त्तन्ते क्रोधलोभवशानुगाः। गोप्तारः सानुबन्धांस्तान्नेताऽस्मि यमसादनं।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवाणमजिनैर्व्विवासितं दुःशासनस्तं परि नृत्यति स्म। मध्ये कुरूणां धर्म्मनिबन्धमार्गे गौर्गौरिति स्माह्वयन्मुक्तलज्जः।
॥ भीमसेन उवाच ॥ नृशंस परुषं वक्तुं शक्यं दुःशासन त्वया। निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति।
मास्म वै सुकृतान् लोकान् गच्छेत् पार्थो वृकोदरः। यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे।
धार्त्तराष्ट्रान् रणे हत्वा मिषतां सर्व्वधन्विनां। शमं गन्ताऽस्मि न चिरात् सत्यमेतद्ब्रवीमि ते। २५३५
॥ वैशम्पायन उवाच ॥ तस्य राजा सिंहगतेः सखेलं दुर्य्योधनो भीमसेनस्य हर्षात्। गतिं स्वगत्याऽनुचकार मन्दो निर्गच्छतां पाण्डवानां सभायाः।
नैतावता कृतमित्यब्रवीत्तं वृकोदरः सन्निवृत्तार्द्धकायः। शीघ्रं हि त्वां निहतं सानुबन्धं संस्मार्य्याहं प्रतिवक्ष्यामि मूढ।
एवं समीक्ष्यात्मनि चावमानं नियम्य मन्युं बलवान् स मानी। राजानुगः संसदि कौरवाणां विनिष्क्रामन् वाक्यमुवाच भीमः।
॥ भीम उवाच। अहं दुर्य्योधनं हन्ता कर्णं हन्ता धनञ्जयः। शकुनिञ्चाक्षकितवं सहदेवो हनिष्यति।
इदञ्च भूयो वक्ष्यामि सभामध्ये बृहद्वचः। सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति। २५४०
सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि। शिरः पादेन चास्याहमधिष्ठास्यामि भूतले।
वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः। दुःशासनस्य रुधिरं पाताऽस्मि मृगराडिव।
॥ अर्जुन उवाच॥ नैवं वाचा व्यवसितं भीम विज्ञायते सतां। इतश्चतुर्द्दशे वर्षे द्रष्टारो यद्भविष्यति।
॥ भीमसेन उवाच॥ दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः। दुःशासनचतुर्थानां भूमिः पास्यति शोणितं।
॥ अर्जुन उवाच ॥ असूयितारं द्वेष्टारं प्रवक्तारं विकत्थनं। भीमसेन नियोगात्ते हन्ताऽहं कर्णमाहवे। २५४५
अर्ज्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया। कर्णं कर्णानुगांश्चैव रणे हन्ताऽस्मि पत्रिभिः।
ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः। तांश्च सर्व्वानहं बाणैर्नेताऽस्मि यमसादनं।
चलेद्धि हिमवान् स्थानान्निष्प्रभः स्याद्दिवाकरः। शैत्यं सोमात् प्रणश्येत मत्सत्यं विचलेद्यदि।
न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्द्दशे। दुर्य्योधनोऽभिसत्कृत्य सत्यमेतद्भविष्यति।
॥ वैशम्पायन उवाच ॥ इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः। प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान्। २५५०
सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत्। क्रोधसंरक्तनयनो निश्वसन्निव पन्नगः।
॥ सहदेव उवाच ॥ अक्षान् यान्मन्यसे मूढ गान्धाराणां यशोहर। नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः।

यथा चैवोक्तवान् भीमस्त्वामुद्दिश्य सबान्धवं। कर्त्ताऽहं कर्म्मणस्तस्य कुरु कार्य्याणि सर्व्वशः।
हन्ताऽस्मि तरसा युद्धे त्वामेवेह सबान्धवं। यदि स्थास्यसि संग्रामे क्षत्रधर्म्मेण सौबल।
सहदेववचः श्रुत्वा नकुलोऽपि विशाम्पते। दर्शनीयतमो नृणामिदं वचनमब्रवीत्। २५५५
॥ नकुल उवाच ॥ सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन् धृतराष्ट्रजैः। यैर्व्वाचः श्राविता रूक्षाः स्थितैर्दुर्य्योधनप्रिये।
तान् धार्त्तराष्ट्रान् दुर्वृत्तान् मुमूर्षून् कालचोदितान्। गमयिष्यामि भूयिष्ठानहं वैवस्वतक्षयं।
निदेशाद्धर्म्मराजस्य द्रौपद्याः पदवीं चरन्। निर्धार्त्तराष्ट्रां पृथिवीं कर्त्ताऽस्मि न चिरादिव।
॥ वैशम्पायन उवाच ॥ एवं ते पुरुषव्याघ्राः सर्व्वे व्यायतबाहवः। प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन्।
इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रसमीपगमने पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ युधिष्ठिर उवाच ॥ आमन्त्रयामि भरतांस्तथा वृद्धं पितामहं। राजानं सोमदत्तञ्च महाराजञ्च वाह्लिकं। २५६०
द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च। विदुरं धृतराष्ट्रञ्च धार्त्तराष्ट्रांश्च सर्व्वशः।
युयुत्सुं सञ्जयञ्चैव तथैवान्यान् सभासदः। सर्व्वानामन्त्र्य गच्छामि द्रष्टाऽस्मि पुनरेत्य वः।
॥ वैशम्पायन उवाच ॥ न ते किञ्चिदथोचुस्तं ह्रियासन्ना युधिष्ठिरं। मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः।
॥ विदुर उवाच ॥ आर्य्या पृथा राजपुत्री नारण्यं गन्तुमर्हति। सुकुमारी च वृद्धा च नित्यञ्चैव सुखोचिता।
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि। इति पार्था विजानीध्वमगदं वोऽस्तु सर्व्वशः। २५६५
॥ पाण्डवा ऊचुः ॥ तथेत्युक्त्वाऽब्रुवन् सर्व्वे यथा नो वदसेऽनघ। त्वं पितृव्यः पितृसमो वयञ्च त्वत्परायणाः।
यथाज्ञापयसे विद्वंस्त्वं हि नः परमो गुरुः। यच्चान्यदपि कर्त्तव्यं तद्विधत्स्व महामते।
॥ विदुर उवाच ॥ युधिष्ठिर विजानीहि ममेदं भरतर्षभ। नाधर्म्मेण जितः कश्चिद्व्यथते वै पराजये।
त्वं वै धर्म्मं विजानीषे युद्धे जेता धनञ्जयः। हन्ताऽरीणां भीमसेनो नकुलस्त्वर्थसंग्रही।
संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः। धर्म्मार्थकुशला चैव द्रौपदी धर्म्मचारिणी। २५७०
अन्योऽन्यस्य प्रियाः सर्व्वे तथैव प्रियदर्शनाः। परैरभेद्याः सन्तुष्टाः को वो न स्पृहयेदिह।
एष वै सर्व्वकल्याणः समाधिस्तव भारत। नैनं शत्रुर्व्विषहते शक्रेणापि समोऽच्युत।
हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा। द्वैपायनेन कृष्णेन नगरे वारणावते।
भृगुतुङ्गे च रामेण दृषद्वत्याञ्च शम्भुना। अश्रौषीरसितस्यापि महर्षेरञ्जनं प्रति।
कल्माषीतीरसंस्थस्य गतस्त्वं शिष्यतां भृगोः। द्रष्टा सदा नारदस्ते धौम्यस्तेऽयं पुरोहितः। २५७५
माहासीः साम्पराये त्वं बुद्धिं तामृषिपूजितां। पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव।
शक्त्या जयसि राज्ञोऽन्यानृषीन् धर्म्मोपसेवया। ऐन्द्रे जये धृतमना याम्ये कोपविधारणे।
तथा विसर्गे कौवेरे वारुणे चैव संयमे। आत्मप्रदानं सौम्यं त्वमद्भ्यश्चैवोपजीवनं।
भूमेः क्षमाञ्च तेजश्च समग्रं सूर्य्यमण्डलात्। वायोर्ब्बलं विद्धि सत्त्वं भूतेभ्यश्चात्मसम्भवं।
अगदं वोऽस्तु भद्रं वो द्रष्टाऽस्मि पुनरागतान्। आपद्धर्म्मार्थकृच्छ्रेषु सर्व्वकार्य्येषु वा पुनः। २५८०
यथावत् प्रतिपद्येथाः काले काले युधिष्ठिर। आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत।

कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामः पुनरागतं। नहि वो वृजिनं किञ्चिद्वेद कश्चित् पुराकृतं।
॥ वैशम्पायन उवाच॥ एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः। भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः।
इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि युधिष्ठिरवनप्रस्थाने षट्सप्ततितमोऽध्यायः॥ ७६ ॥
॥ वैशम्पायन उवाच॥ तस्मिन् संप्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीं। अपृच्छद्भृशदुःखार्त्ता याश्चान्यास्तत्र योषितः।
यथाऽर्हं वन्दनाश्लेषान् कृत्वा गन्तुमियेष सा। ततो निनादः सुमहान् पाण्डवान्तःपुरेऽभवत्। २५८५
कुन्ती च भृशसन्तप्ता द्रौपदीं प्रेक्ष्य गच्छतीं। शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत्।
वत्से शोको न ते कार्य्यः प्राप्येदं व्यसनं महत्। स्त्रीधर्म्माणामभिज्ञाऽसि शीलाचारवती तथा।
न त्वां सन्देष्टुमर्हामि भर्त्तॄन् प्रति शुचिस्मिते। साध्वी गुणसमापन्ना भूषितं ते कुलद्वयं।
सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयाऽनघे। अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता।
भाविन्यर्थे हि सत्स्त्रीणां वैक्लव्यं नोपजायते। गुरुधर्म्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि। २५९०
सहदेवश्च मे पुत्त्रः सदाऽवेक्ष्यो वने वसन्। यथेदं व्यसनं प्राप्य नायं सीदेन्महामतिः।
तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला। शोणिताक्तैकवसना मुक्तकेशी विनिर्ययौ।
तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीं। अथापश्यत् सुतान् सर्व्वान् हृताभरणवाससः।
रुरुचर्म्मावृततनून् ह्रिया किञ्चिदवाङ्मुखान्। परैः परीतान् संहृष्टैः सुहृद्भिश्चानुशोचितान्।
तदवस्थान् सुतान् सर्व्वानुपसृत्यातिवत्सला। स्वजमानाऽवदच्छोकात्तत्तद्विलपती बहु। २५९५
॥ कुन्त्युवाच॥ कथं सद्धर्म्मचारित्रान् वृत्तस्थितिविभूषितान्। अक्षुद्रान् दृढभक्तांश्च दैवतेज्यापरान् सदा।
व्यसनं वः समभ्यागात् कोऽयं विधिविपर्य्ययः। कस्यापध्यानजञ्चेदमागः पश्यामि वो धिया।
स्यात्तु मद्भाग्यदोषोऽयं याऽहं युष्मानजीजनं। दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः।
कथं वत्स्यथ दुर्गेषु वने वृद्धिविनाकृताः। वीर्य्यसत्त्वबलोत्साहतेजोभिरकृशाः कृशाः।
यद्येतदेवमज्ञास्यं वने वासो हि वो ध्रुवं। शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयं। २६००
धन्यं वः पितरं मन्ये तपोमेधाऽन्वितं तथा। यः पुत्त्राधिमसंप्राप्य स्वर्गेच्छामकरोत् प्रियां।
धन्यां चातीन्द्रियज्ञानामिमां प्राप्तां परां गतिं। मन्ये तु माद्रीं धर्म्मज्ञां कल्याणीं सर्व्वथैव तु।
रत्या मत्या च गत्या च ययाऽहमभिसन्धिता। जीवितप्रियतां मह्यं धिङ्मां संक्लेशभागिनीं।
पुत्त्रका न विहास्ये वः कृच्छ्रलब्धान् प्रियान् सतः। साऽहं यास्यामि हि वनं हा कृष्ण किं जहासि मां।
अन्तवत्यसुधर्म्मेऽस्मिन् धात्रा किं नु प्रमादतः। ममान्तो नैव विहितस्तेनायुर्न जहाति मां। २६०५
हा कृष्ण द्वारकावासिन् क्वासि सङ्कर्षणानुज। कस्मान्न त्रायसे दुःखान्मां चेमांश्च नरोत्तमान्।
अनादिनिधनं ये त्वामनुध्यायन्ति वै नराः। तांस्त्वं पासीत्ययं वादः स गतो व्यर्थतां कथं।
इमे सद्धर्म्ममाहात्म्ययशोवीर्य्यानुवर्त्तिनः। नार्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया।
सेयं नीत्यर्थविज्ञेषु भीष्मद्रोणकृपादिषु। स्थितेषु कुलनाथेषु कथमापदुपागता।
हा पाण्डो हा महाराज क्वासि किं समुपेक्षसे। पुत्त्रान् विवास्यतः साधूनरिभिर्द्यूतनिर्जितान्। २६१०

सहदेव निवर्त्तस्व ननु त्वमसि मे प्रियः । शरीरादपि माद्रेय मां मात्याक्षीः कुपुत्रवत् ।
व्रजन्तु भ्रातरस्तेऽमी यदि सत्याभिसन्धिनः । मत्परित्राणजं धर्म्ममिहैव त्वमवाप्नुहि ।
॥ वैशम्पायन उवाच ॥ एवं विलपतीं कुन्तीमभिवाद्य प्रणम्य च । पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ।
विदुरश्चापि तामार्त्तां कुन्तीमाश्वास्य हेतुभिः । प्रावेशयद्गृहं क्षत्ता स्वयमार्त्ततरः शनैः ।
धार्त्तराष्ट्रस्त्रियस्ताश्च निखिलेनोपलभ्य तत् । गमनं परिकर्षञ्च कृष्णाया द्यूतमण्डले । २६१५
रुरुदुः सुस्वनं सर्व्वा विनिन्दन्त्यः कुरून् भृशं । दध्युश्च सुचिरं कालं करासक्तमुखाम्बुजाः ।
राजा च धृतराष्ट्रस्तु पुत्राणामनयं तदा । ध्यायन्नुद्विग्नहृदयो न शान्तिमधिजग्मिवान् ।
स चिन्तयन्ननेकाग्रः शोकव्याकुलचेतनः । क्षत्तुः संप्रेषयामास शीघ्रमागम्यतामिति ।
ततो जगाम विदुरो धृतराष्ट्रनिवेशनं । तं पर्य्यपृच्छत् संविग्नो धृतराष्ट्रो नराधिपः ।
इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रप्रश्ने सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
॥ वैशम्पायन उवाच ॥ तमागतमथो राजा विदुरं दीर्घदर्शिनं । साशङ्क इव पप्रच्छ धृतराष्ट्रोऽम्बिकासुतः । २६२०
॥ धृतराष्ट्र उवाच ॥ कथं गच्छति कौन्तेयो धर्म्मपुत्रो युधिष्ठिरः । भीमसेनः सव्यसाची माद्रीपुत्रौ च पाण्डवौ ।
धौम्यश्चैव कथं क्षत्तर्द्रौपदी च यशस्विनी । श्रोतुमिच्छाम्यहं सर्व्वं तेषां शंस विचेष्टितं ।
॥ विदुर उवाच ॥ वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः । बाहू विशालौ संपश्यन् भीमो गच्छति पाण्डवः ।
सिकता वपन् सव्यसाची राजानमनुगच्छति । माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ।
पांशूपलिप्तसर्व्वाङ्गो नकुलश्चित्तविह्वलः । दर्शनीयतमो लोके राजानमनुगच्छति । २६२५
कृष्णा च केशैः प्रच्छाद्य मुखमायतलोचना । दर्शनीया प्ररुदती राजानमनुगच्छति ।
धौम्यो याम्यानि सामानि रौद्राणि च विशाम्पते । गायन् गच्छति मार्गेषु कुशानादाय पाणिना ।
॥ धृतराष्ट्र उवाच ॥ विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः । तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ।
॥ विदुर उवाच ॥ निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च । न धर्म्माच्चलते बुद्धिर्धर्म्मराजस्य धीमतः ।
योऽसौ राजा घृणी नित्यं धार्त्तराष्ट्रेषु भारत । निकृत्या भ्रंशितः क्रोधान्नोन्मीलयति लोचने । २६३०
नाहं जनं निर्द्दहेयं दृष्ट्वा घोरेण चक्षुषा । स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ।
यथा च भीमो व्रजति तन्मे निगदतः शृणु । बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ।
बाहू विशालौ कृत्वाऽसौ तेन भीमोऽपि गच्छति । बाहू विदर्शयन् राजन् बाहुद्रविणदर्पितः ।
चिकीर्षन् कर्म्म शत्रुभ्यो बाहुद्रव्यानुरूपतः । प्रदिशन् शरसम्पातान् कुन्तीपुत्रोऽर्ज्जुनस्तदा ।
सिकता वपन् सव्यसाची राजानमनुगच्छति । असक्ताः सिकतास्तस्य यथा संप्रति भारत । २६३५
असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु । न मे कश्चिद्विजानीयान्मुखमद्येति भारत ।
मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति । नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो । पांशूपलिप्तसर्व्वाङ्गो नकुलस्तेन गच्छति ।
एकवस्त्रा प्ररुदती मुक्तकेशी रजस्वला । शोणितार्द्राक्तवसना द्रौपदी वाक्यमब्रवीत् ।

यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्द्दशे। हतपत्यो हतसुता हतबन्धुजनप्रियाः।
बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः। एवं कृतोदका भार्य्याः प्रवेक्ष्यन्ति गजाह्वयं। २१४०
कृत्वा तु नैर्ऋतान् दर्भान् धीरो धौम्यः पुरोहितः। सामानि गायन् याम्यानि पुरतो याति भारत।
हतेषु भरतेष्वाजौ कुरूणां गुरवस्तदा। एवं सामानि गास्यन्तीत्युक्त्वा धौम्योऽपि गच्छति।
हाहा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशं। अहो धिक्कुरुवृद्धानां बालानामिव चेष्टितं।
राष्ट्रेभ्यः पाण्डुदायादाल्लोभान्निर्व्वासयन्ति ये। अनाथाः स्म वयं सर्व्वे वियुक्ताः पाण्डुनन्दनैः।
दुर्व्विनीतेषु लुब्धेषु का प्रीतिः कौरवेषु नः। इति पौराः सुदुःखार्त्ताः क्रोशन्ति स्म पुनः पुनः। २१४५
एवमाकारलिङ्गैस्ते व्यवसायं मनोगतं। कथयन्तश्च कौन्तेया वनं जग्मुर्मनस्विनः।
एवं तेषु नराग्र्येषु निर्यत्सु गजसाह्वयात्। अनभ्रे विद्युतश्चासन् भूमिश्च समकम्पत।
राहुरग्रसदादित्यमपर्व्वणि विशाम्पते। उल्का चाप्यपसव्येन पुरं कृत्वा व्यशीर्य्यत।
प्रत्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः। देवायतनचैत्येषु प्राकाराट्टालकेषु च।
एवमेते महोत्पाताः प्रादुरासन् दुरासदः। भरतानामभावाय राजन् दुर्म्मन्त्रिते तव। २१५०
॥ वैशम्पायन उवाच ॥ एवम्प्रवदतोरेवं तयोस्तत्र विशाम्पते। धृतराष्ट्रस्य राज्ञश्च विदुरस्य च धीमतः।
नारदश्च सभामध्ये कुरूणामग्रतः स्थितः। महर्षिभिः परिवृतो रौद्रं वाक्यमुवाच ह।
इतश्चतुर्द्दशे वर्षे विनङ्क्ष्यन्तीह कौरवाः। दुर्य्योधनापराधेन भीमार्ज्जुनबलेन च।
इत्युक्त्वा दिवमाक्रम्य क्षिप्रमन्तरधीयत। ब्राह्मीं श्रियं सुविपुलां बिभ्रद्देवर्षिसत्तमः।
॥ वैशम्पायन उवाच ॥ ततो दुर्य्योधनः कर्णः शकुनिश्चापि सौबलः। द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयत्। २१५५
अथाब्रवीत्ततो द्रोणो दुर्य्योधनममर्षणं। दुःशासनञ्च कर्णञ्च सर्व्वानेव च भारतान्।
अवध्यान् पाण्डवानाहुर्द्देवपुत्त्रान् द्विजातयः। अहं वै शरणं प्राप्तान् वर्त्तमानो यथा बलं।
गतान् सर्व्वात्मना भक्त्या धार्त्तराष्ट्रान् सराजकान्। नोत्सहेयं परित्यक्तुं दैवं हि बलवत्तरं।
धर्म्मतः पाण्डुपुत्त्रा वै वनं गच्छन्ति निर्ज्जिताः। ते च द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः।
चरितब्रह्मचर्य्याश्च क्रोधामर्षवशानुगाः। वैरं निर्य्यातयिष्यन्ति महद्दुःखाय पाण्डवाः। २१६०
मया च भ्रंशितो राजन् द्रुपदः सखिविग्रहे। पुत्त्रार्थमयजद्राजा बधाय मम भारत।
याजोपयाजतपसा पुत्त्रं लेभे स पावकात्। धृष्टद्युम्नं द्रौपदीञ्च वेदीमध्यादनिन्दितां।
धृष्टद्युम्नस्तु पार्थानां श्यालः सम्बन्धिनो मतः। पाण्डवानां प्रियरतस्तस्मान्मां भयमाविशत्।
ज्वालावर्णो देवदत्तो धनुष्मान् कवची शरी। मर्त्यधर्म्मतया तस्मादद्य मे साध्वसो महान्।
गतो हि पक्षतां तेषां पार्षतः परवीरहा। रथातिरथसंख्यायां योऽग्रणीरर्ज्जुनो युवा। २१६५
सृष्टप्राणो भृशतरं तेन चेत्संयुगो मम। किमन्यद्दुःखमधिकं परमं भुवि कौरवाः।
धृष्टद्युम्नो द्रोणमृत्युरिति विप्रथितं वचः। मद्बधाय श्रुतोऽप्येष लोके चाप्यतिविश्रुतः।
सोऽयं नूनमनुप्राप्तस्त्वत्कृते काल उत्तमः। त्वरितं कुरुत श्रेयो नैतदेतावता कृतं।

मुहूर्त्तं सुखमेवैतत्तालच्छायेव हैमनी । यजध्वञ्च महायज्ञैर्भोगानश्नीत दत्त च ।
इतश्चतुर्द्दशे वर्षे महत् प्राप्स्यथ वैशसं । द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदं । २१७०

सम्यगाह गुरुः क्षत्तरुपावर्त्तय पाण्डवान् । यदि ते न निवर्त्तन्ते सत्कृता यान्तु पाण्डवाः । सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ।

इतिश्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रवाक्ये अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

॥ वैशम्पायन उवाच ॥ वनं गतेषु पार्थेषु निर्ज्जितेषु दुरोदरे । धृतराष्ट्रं महाराज तदा चिन्ता समाविशत् ।
तच्चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरं । निःश्वसन्तमनेकाग्रमिति होवाच सञ्जयः ।
॥ सञ्जय उवाच ॥ अवाप्य वसुसम्पूर्णां वसुधां वसुधाधिप । प्रव्राज्य पाण्डवान् राज्याद्राजन् किमनुशोचसि ।
॥ धृतराष्ट्र उवाच ॥ अशोच्यत्वं कुतस्तेषां येषां वैरं भविष्यति । पाण्डवैर्युद्धशौण्डैर्हि बलवद्भिर्महारथैः । २१७५
॥ सञ्जय उवाच ॥ तवेदं सुकृतं राजन्महद्वैरमुपस्थितं । विनाशो येन लोकस्य सानुबन्धो भविष्यति ।
वार्य्यमाणो हि भीष्मेण द्रोणेन विदुरेण च । पाण्डवानां प्रियां भार्य्यां द्रौपदीं धर्म्मचारिणीं ।
प्राहिणोदानयेहेति पुत्रो दुर्य्योधनस्तव । सूतपुत्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनं ।
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवं । बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ।
बुद्धौ कलुषभूतायां विनाशे समुपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति । २१८०
अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः । उत्तिष्ठन्ति विनाशाय नूनं तच्चास्य रोचते ।
न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् । कालस्य बलमेतावद्विपरीतार्थदर्शनं ।
आसादितमिदं घोरं तुमुलं लोमहर्षणं । पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीं ।
अयोनिजां रूपवतीं कुले जातां विभावसोः । को नु तां सर्व्वधर्म्मज्ञां परिभूय यशस्विनीं ।
पर्य्यानयेत् सभामध्ये विना दुर्द्यूतदेविनं । स्त्रीधर्म्मिणी वरारोहा शोणितेन परिप्लुता । २१८५
एकवस्त्राऽथ पाञ्चाली पाण्डवानभ्यवैक्षत । हृतस्वान् हृतराज्यांश्च हृतवस्त्रान् हृतश्रियः ।
विहीनान् सर्व्वकामेभ्यो दासभावमुपागतान् । धर्म्मपाशपरिक्षिप्तानशक्तानिव विक्रमे ।

क्रुद्धाञ्चामर्षितीं कृष्णां दुःखितां कुरुसंसदि । दुर्य्योधनश्च कर्णश्च कटुकान्यभ्यभाषतां । इति सर्व्वमिदं राजन्नाकुलं प्रतिभाति मे ।

॥ धृतराष्ट्र उवाच ॥ तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी । अपि शेषं भवेदद्य पुत्राणां मम सञ्जय ।
भरतानां स्त्रियः सर्व्वा गान्धार्य्या सह सङ्गताः । प्राक्रोशन् भैरवं तत्र दृष्ट्वा कृष्णां सभागतां । २१९०
धर्म्मिष्ठां धर्म्मपत्नीञ्च रूपयौवनशालिनीं । प्रजाभिः सह सङ्गम्य अनुशोचन्ति नित्यशः ।
अग्निहोत्राणि सायाह्ने न चाहूयन्त सर्व्वशः । ब्राह्मणाः कुपितास्चासन् द्रौपद्याः परिकर्षणे ।
आसीन्निष्टानको घोरो निर्घातश्च महानभूत् । दिव उल्काः पतन्त्यश्च राहुश्चार्कमुपाग्रसत् ।
अपर्व्वणि महाघोरं प्रजानां जनयन् भयं । तथैव रथशालासु प्रादुरासीद्धुताशनः ।
ध्वजाश्चापि व्यशीर्य्यन्त भरतानामभूतये । दुर्य्योधनस्याग्निहोत्रे प्राक्रोशन् भैरवं शिवाः । २१९५
तास्तदा प्रत्यभाषन्त रासभाः सर्व्वतो दिशः । प्रातिष्ठत ततो भीष्मो द्रोणेन सह सञ्जय ।

कृपस्य सोमदत्तस्य वाह्लीकस्य महात्मनः। ततोऽहमब्रुवं तत्र विदुरेण प्रचोदितः।
वरं ददानि कृष्णायै काङ्क्षितं यद्यदिच्छसि। अवृणोत्तत्र पाञ्चाली पाण्डवानामदासतां।
सरथान् सधनुष्कांश्चाप्यनुज्ञासिषमप्यहं। अथाब्रवीन्महाप्राज्ञो विदुरः सर्व्वधर्म्मवित्।
एतदन्तास्तु भरता यद्वः कृष्णा सभां गता। यैषा पाञ्चालराजस्य सुता सा श्रीरनुत्तमा। २०००
पाञ्चाली पाण्डवानेतान्दैवसृष्टोपसर्पति। तस्याः पार्थाः परिक्लेशं न क्षंस्यन्ते ह्यमर्षणाः।
वृष्णयो वा महेष्वासाः पाञ्चाला वा महारथाः। तेन सत्याभिसन्धेन वासुदेवेन रक्षिताः।
आगमिष्यति बीभत्सुः पाञ्चालैः परिवारितः। तेषां मध्ये महेष्वासो भीमसेनो महाबलः।
आगमिष्यति धुन्वानो गदां दण्डमिवान्तकः। ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमतः।
गदावेगञ्च भीमस्य नालं सोढुं नराधिपाः। तत्र मे रोचते नित्यं पार्थैः साम न विग्रहः। २००५
कुरुभ्यो हि सदा मन्ये पाण्डवान् बलवत्तरान्। तथा हि बलवान्राजा जरासन्धो महाद्युतिः।
बाहुप्रहरणेनैव भीमेन निहतो युधि। तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ।
उभयोः पक्षयोर्युक्तं क्रियतामविशङ्कया। एवं कृते महाराज परं श्रेयस्त्वमाप्स्यसि।
एवं गावल्गणे क्षत्ता धर्म्मार्थसहितं वचः। उक्तवान्न गृहीतं वै मया पुत्रहितैषिणा। २००९

इति श्रीमहाभारते सभापर्व्वणि अनुद्यूतपर्व्वणि धृतराष्ट्रचिन्तायां नवसप्ततितमोऽध्यायः। समाप्तमिदमनुद्यूतं पर्व्व ॥७९॥

॥ इति सभापर्व्व समाप्तं ॥

---

अत्रापि पूर्व्वपूर्व्वलिपिकरप्रमादादध्यायाधिक्यं श्लोकाधिक्यञ्च दृश्यते कुत्राधिक्यं जातं तन्निश्चयो न भवतीति ॥

---

# श्रीमहाभारतं

## ॥ वनपर्व्व ॥

॥ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

॥ जनमेजय उवाच ॥ एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः । धार्त्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम ।
श्राविताः परुषा वाचः सृजद्भिर्वैरमुत्तमं । किमकुर्व्वत कौरव्या मम पूर्व्वपितामहाः ।
कथञ्चैश्वर्य्यविभ्रष्टाः सहसा दुःखमेयुषः । वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः ।
के वै तानन्ववर्त्तन्त प्राप्तान् व्यसनमुत्तमं । किमाचाराः किमाहाराः क्व च वासो महात्मनां ।
कथञ्च द्वादश समा वने तेषां महामुने । व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामरिघातिनां । ५
कथञ्च राजपुत्त्री सा प्रवरा सर्व्वयोषितां । पतिव्रता महाभागा सततं सत्यवादिनी ।
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत । एतदाचक्ष्व मे सर्व्वं विस्तरेण तपोधन ।
श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसां । कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ।
॥ वैशम्पायन उवाच ॥ एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः । धार्त्तराष्ट्रैः सहामात्यैर्निर्य्ययुर्गजसाह्वयात् ।
वर्द्धमानपुरद्वारादभिनिष्क्रम्य पाण्डवाः । उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया । १०
इन्द्रसेनादयश्चैव भृत्याः परि चतुर्द्दश । रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्व्वशः ।
गतानेतान् विदित्वा तु पौराः शोकाभिपीडिताः । गर्हयन्तो ऽसकृद्भीष्मविदुरद्रोणगौतमान् ।
ऊचुर्व्विगतसन्त्रासाः समागम्य परस्परं । पौरा ऊचुः । नेदमस्ति कुलं सर्व्वं न वयं न च नो गृहाः ।
यत्र दुर्य्योधनः पापः सौबलेयेन पालितः । कर्णदुःशासनाभ्याञ्च राज्यमेतच्चिकीर्षति ।
न तत् कुलं न चाचारो न धर्म्मो ऽर्थः कुतः सुखं । यत्र पापसहायो ऽयं पापो राज्यञ्चिकीर्षति । १५
दुर्य्योधनो गुरुद्वेषी त्यक्ताचारसुहृज्जनः । अर्थलुब्धो ऽभिमानी च नीचः प्रकृतिनिर्घृणः ।
नेयमस्ति मही कृत्स्ना यत्र दुर्य्योधनो नृपः । साधु गच्छामहे सर्व्वे यत्र गच्छन्ति पाण्डवाः ।

सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः । ह्रीमन्तः कीर्त्तिमन्तश्च धर्म्माचारपरायणाः ।

॥ वैशम्पायन उवाच ॥ एवमुक्त्वाऽनुजग्मुस्ते पाण्डवांस्तान् समेत्य च । ऊचुः प्राञ्जलयः सर्व्वे कौन्तेयान्माद्रिनन्दनान् ।

क्व गमिष्यथ भद्रं वस्त्यक्त्वाऽस्मान् दुःखभागिनः । वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ । १०

अधर्म्मेण जितान् श्रुत्वा युष्मांस्त्यक्तघृणैः परैः । उद्विग्नाः स्मो भृशं सर्व्वे नास्मान् हातुमिहार्हथ ।

भक्तानुरक्तान् सुहृदः सदा प्रियहिते रतान् । कुराजाधिष्ठिते राज्ये न विनश्येम सर्व्वशः ।

श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः । शुभाशुभाधिवासेन संसर्गः कुरुते यथा ।

वस्त्रमापस्तिलान् भूमिं गन्धो वासयते यथा । पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ।

मोहजालस्य योनिर्हि मूढैरेव समागमः । अहन्यहनि धर्म्मस्य योनिः साधुसमागमः । १५

तस्मात् प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः । सद्भिश्च सह संसर्गः कार्य्यः शमपरायणैः ।

येषां त्रीण्यवदातानि विद्या योनिश्च कर्म्म च । तान् सेवेत्तैः समास्या हि शास्त्रेभ्यो हि गरीयसी ।

निरारम्भा अपि वयं पुण्यशीलेषु साधुषु । पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ।

असतां दर्शनात् स्पर्शात् संजल्पाच्च सहासनात् । धर्म्माचाराः प्रहीयन्ते सिद्ध्यन्ति च न मानवाः ।

बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् । मध्यमैर्म्मध्यतां याति श्रेष्ठतां याति चोत्तमैः । २०

अनीचैर्नाप्यविषयैर्नाधर्म्मिष्ठैर्व्विशेषतः । ये गुणाः कीर्त्तिता लोके धर्म्मकामार्थसम्भवाः । लोकाचारेषु सम्भूता वेदोक्ताः शिष्टसम्मताः ।

ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः । इच्छामो गुणवन्मध्ये वस्तुं श्रेयोऽभिकाङ्क्षिणः ।

॥ युधिष्ठिर उवाच ॥ धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः । असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ।

तदहं भ्रातृसहितः सर्व्वान् विज्ञापयामि वः । नान्यथा तद्धि कर्त्तव्यमस्मत्स्नेहानुकम्पया ।

भीष्मः पितामहो राजा विदुरो जननी च मे । सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये । २५

ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः । युष्माभिः सहिताः सर्व्वे शोकसन्तापविह्वलाः ।

निवर्त्ततागता दूरं समागमनशापिताः । स्वजने न्यासभूते मे कार्य्या स्नेहान्विता मतिः ।

एतद्धि मम कार्य्याणां परमं हृदि संस्थितं । कृता तेन तु तुष्टिर्म्मे सत्कारश्च भविष्यति ।

॥ वैशम्पायन उवाच ॥ तथाऽनुमन्त्रितास्तेन धर्म्मराजेन ताः प्रजाः । चक्रुरार्त्तस्वरं घोरं हा राजन्निति संहताः ।

गुणान् पार्थस्य संस्मृत्य दुःखार्त्ताः परमातुराः । अकामाः संन्यवर्त्तन्त समागम्याथ पाण्डवान् । ३०

निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः । आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटं ।

ते तं दिवसशेषेण वटं गत्वा तु पाण्डवाः । ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि ।

उदकेनैव तां रात्रिमूषुस्ते दुःखकर्षिताः । अनुजग्मुश्च तत्रैतान् स्नेहात् केचिद्द्विजातयः ।

साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः । स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः ।

तेषां प्रादुष्कृताग्नीनां मुहूर्त्ते रम्यदारुणे । ब्रह्मघोषपुरस्कारः संजल्पः समजायत । ३५

राजानन्तु कुरुश्रेष्ठं ते हंसमधुरस्वराः । आश्वासयन्तो विप्राग्र्याः क्षपां सर्व्वां व्यनोदयन् ।

इति श्रीमहाभारते आरण्यकेपर्व्वणि आरण्यपर्व्वणि पौरप्रत्यागमने प्रथमो ऽध्यायः ॥ १ ॥

॥ वैशम्पायन उवाच ॥ प्रभातायान्तु शर्व्वर्य्यां तेषामक्लिष्टकर्म्मणां । वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजो ऽग्रतः ।
तानुवाच ततो राजा कुन्तीपुत्त्रो युधिष्ठिरः । वयं हि हृतसर्व्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं गच्छाम दुःखिताः । वनञ्च दोषबहुलं बहुव्यालसरीसृपं ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति । ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत् । १०
किं पुनर्म्मामितो विप्रा निवर्त्तध्वं यथेष्टतः ॥ ब्राह्मणा ऊचुः । गतिर्या भवतां राजन् वयं हि गन्तुमुद्यताः ।
नार्हस्यस्मान् परित्यक्तुं भक्तान् सद्धर्म्मदर्शिनः । अनुकम्पां हि भक्तेषु दैवतान्यपि कुर्व्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ युधिष्ठिर उवाच ॥ ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस्त्वयं सादयतीव मां । आहरेयुरिमे येऽपि फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः । द्रौपद्या विप्रकर्षेण राज्यापहरणेन च । १५
दुःखार्द्दितानिमान् क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ब्राह्मणा ऊचुः । अस्मत्पोषणजा चिन्ता माभूत्ते हृदि पार्थिव ।
स्वयमाहृत्य चान्नानि उपयोक्ष्यामहे वयं । अनुध्यानेन जप्येन विधास्यामः शिवं तव ।
कथाभिश्चाभिरम्याभिः सह रंस्यामहे वयं ॥ युधिष्ठिर उवाच ॥ एवमेतन्न सन्देहो रमेऽहं सततं द्विजैः ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः । कथं द्रक्ष्यामि वः सर्व्वान् स्वयमाहृत्य भोजिनः ।
मद्भक्त्या क्लिश्यतोऽनर्हान् धिक्पापान् धृतराष्ट्रजान् ॥ वैशम्पायन उवाच ॥ इत्युक्त्वा स नृपः शोचन् निषसाद महीतले । २०
तमध्यात्मरतो विद्वान् शौनको नाम वै द्विजः । योगे सांख्ये च कुशलो राजानमिदमब्रवीत् ।
शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितं ।
नहि ज्ञानविरुद्धेषु बहुदोषेषु कर्म्मसु । श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ।
अष्टाङ्गां बुद्धिमाहुर्य्यां सर्व्वाश्रेयोऽभिघातिनीं । श्रुतिस्मृतिसमायुक्तां राजन् सा त्वय्यवस्थिता ।
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च । शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः । २५
श्रूयताञ्चाभिधास्यामि जनकेन यथा पुरा । आत्मव्यवस्थानकरा गीताः श्लोका महात्मना ।
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्द्दितं जगत् । तयोर्व्यासमासाभ्यां शमोपायमिमं शृणु ।
व्याधेरनिष्टसंस्पर्शात् श्रमादिष्टविवर्ज्जनात् । दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्त्तते ।
तदा तत्प्रतिकाराच्च सततं वाऽविचिन्तनात् । आधिव्याधिप्रशमनं क्रियायोगद्वयेन च ।
मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्व्वते । मानसस्य प्रियाख्यानैः सम्भोगोपनयैर्नृणां । ३०
मानसेन हि दुःखेन शरीरमुपतप्यते । अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकं ।
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना । प्रशान्ते मानसे ह्यस्य शारीरमुपशाम्यति ।
मनसो दुःखमूलन्तु स्नेह इत्युपलभ्यते । स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ।
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च । शोकहर्षौ तथायासः सर्व्वं स्नेहात् प्रवर्त्तते ।
स्नेहाद्भावोऽनुरागश्च प्रजज्ञे विषये तथा । अश्रेयस्कावुभावेतौ पूर्व्वस्तत्र गुरुः स्मृतः । ३५
कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् । धर्म्मार्थौ तु तथाऽल्पोऽपि रागदोषो विनाशयेत् ।

विप्रयोगे न तु त्यागी दोषदर्शी समागमे। विरागं भजते जन्तुर्निर्वैरो निरवग्रहः।
तस्मात् स्नेहं न लिप्सेत मित्रेभ्यो धनसञ्चयात्। स्वशरीरसमुत्थञ्च ज्ञानेन विनिवर्त्तयेत्।
ज्ञानान्वितेषु युक्तेषु शास्त्रज्ञेषु कृतात्मसु। न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकं।
रागाभिभूतः पुरुषः कामेन परिकृष्यते। इच्छा संजायते तस्य ततस्तृष्णा विवर्द्धते। ८०
तृष्णा हि सर्व्वपापिष्ठा नित्योद्वेगकरी स्मृता। अधर्म्मबहुला चैव घोरा पापानुबन्धिनी।
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं।
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणां। विनाशयति भूतानि अयो निज द्रवानलः
यथैधः स्वसमुत्थेन वह्निना नाशमर्च्छति। तथाऽकृतात्मा लोभेन सहजेन विनश्यति।
राजतः सलिलादग्नेश्चोरतः स्वजनादपि। भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव। ८५
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि। भक्ष्यते सलिले मत्स्यैस्तथा सर्व्वत्र वित्तवान्।
अर्थ एव हि केषाञ्चिदनर्थं भजते नृणां। अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः।
तस्मादर्थागमाः सर्व्वे लोभमोहविवर्द्धनाः। कार्पण्यं दर्पमानौ च भयमुद्वेग एव च।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनां। अर्थस्योत्पादने चैव पालने च तथा क्षये।
सहन्ति च महद्दुःखं घ्नन्ति चैवार्थकारणात्। अर्थाद्दुःखं परित्यक्तुं पालिताश्चैव शत्रवः। ९०
दुःखेन चाधिगम्यन्ते तस्मान्नाशं न चिन्तयेत्। असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः।
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखं। तस्मात् सन्तोषमेवेह परं पश्यन्ति पण्डिताः।
अनित्यं यौवनं रूपं जीवितं रत्नसञ्चयः। ऐश्वर्य्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः।
त्यजेत सञ्चयांस्तस्मात्तज्जान् क्लेशान् सहेत च। न हि सञ्चयवान् कश्चिद्दृश्यते निरुपद्रवः। अतश्च धार्म्मिकैः पुम्भिरनीहार्थः प्रशस्यते।
धर्म्मार्थं यस्य वित्तेहा वरन्तस्य निरीहता। प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणां। ९५
युधिष्ठिरैवं सर्व्वेषु न स्पृहां कर्त्तुमर्हसि। धर्म्मेण यदि ते कार्य्यं विमुक्तेच्छो भवार्थतः।
॥ युधिष्ठिर उवाच ॥ नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम। भरणार्थन्तु विप्राणां ब्रह्मन् काङ्क्षे न लोभतः।
कथमस्मद्विधो ब्रह्मन् वर्त्तमानो गृहाश्रमे। भरणं पालनं वाऽपि न कुर्य्यादनुयायिनां।
सम्विभागो हि भूतानां सर्व्वेषामेव दृश्यते। तथैवापचमानेभ्यः प्रदेयं गृहमेधिना।
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन। १००
देयमार्त्तस्य शयनं स्थितः श्रान्तस्य चासनं। तृषितस्य च पानीयं क्षुधितस्य च भोजनं।
चक्षुर्द्द्याम्मनो दद्याद्वाचं दद्यात् सुभाषितां। उत्थाय चासनं दद्यादेष धर्म्मः सनातनः।
प्रत्युत्थायाभिगमनं कुर्य्यान्न्यायेन चार्च्चनां। अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः।
पुत्त्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः। आत्मने पाचयेन्नान्नं न वृथा घातयेत् पशून्। न च तत् स्वयमश्नीयाद्विधिवद्यन्न निर्व्वपेत्।

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि। वैश्वदेवं हि नामैतत् सायं प्रातश्च दीयते। १०५
विघसाशी भवेत्तस्मान्नित्यञ्चामृतभोजनः। विघसो भुक्तशेषन्तु यज्ञशेषं तथाऽमृतं।
चक्षुर्द्द्यान्मनो दद्याद्वाचं दद्याच्च सूनृतां। अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः।
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते। श्रान्तायादृष्टपूर्व्वाय तस्य पुण्यफलं महत्।
एवं यो वर्त्तते वृत्तिं वर्त्तमानो गृहाश्रमे। तस्य धर्म्मं परं प्राहुः कथं वा विप्र मन्यसे।
॥ शौनक उवाच ॥ अहो वत महत्कष्टं विपरीतमिदं जगत्। येनापत्रपते साधुरसाधुस्तेन तुष्यति। ११०
शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु। मोहरागवशाक्रान्त इन्द्रियार्थवशानुगः।
ह्रियते बध्यमानोऽपि नरो हारिभिरिन्द्रियैः। विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः।
षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा। तदा प्रादुर्भवत्येषां पूर्व्वसङ्कल्पजं मनः।
मनो यस्येन्द्रियस्येह विषयान् याति सेवितुं। तस्यौत्सुक्यं सम्भवति प्रवृत्तिश्चोपजायते।
ततः सङ्कल्पवीजेन कामेन विषयेषुभिः। विद्धः पतति लोभाग्नौ ज्योतिर्लोभात् पतङ्गवत्। ११५
ततो विहारैराहारैर्मोहितश्च यथेप्सया। महामोहे सुखे मग्नो नात्मानमवबुध्यते।
एवं पतति संसारे तासु तास्विह योनिषु। अविद्याकर्म्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत्।
ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्त्तते। जले भुवि तथाकाशे जायमानः पुनः पुनः।
अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु। ये धर्म्मे श्रेयसि रता विमोक्षरतयो जनाः।
तदिदं वेदवचनं कुरु कर्म्म त्यजेति च। तस्माद्धर्म्मानिमान् सर्व्वान्नाभिमानात् समाचरेत्। १२०
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः। अलोभ इति मार्गोऽयं धर्म्मस्याष्टविधः स्मृतः।
अत्र पूर्व्वश्चतुर्व्वर्गः पितृयानपथे स्थितः। कर्त्तव्यमिति यत्कार्य्यं नाभिमानात् समाचरेत्।
उत्तरो देवयानस्तु सद्भिराचरितः सदा। अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत्।
सम्यक्सङ्कल्पसम्बन्धात् सम्यक्चेन्द्रियनिग्रहात्। सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात्।
सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात्। सम्यक्कर्म्मोपसंन्यासात् सम्यक् चित्तनिरोधनात्। १२५
एवं कर्म्माणि कुर्व्वन्ति संसारविजिगीषवः। रागद्वेषविनिर्म्मुक्ता ऐश्वर्य्यं देवता गताः।
रुद्राः साध्यास्तथादित्या वसवोऽथ तथाऽश्विनौ। योगैश्वर्य्येण संयुक्ता धारयन्ति प्रजा इमाः।
तथा त्वमपि कौन्तेय शममास्थाय पुष्कलं। तपसा सिद्धिमन्विच्छ योगसिद्धिञ्च भारत।
पितृमातृमयी सिद्धिः प्राप्ता कर्म्ममयी च ते। तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै।
सिद्धा हि यद्यदिच्छन्ति कुर्व्वते तदनुग्रहात्। तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथं। १३०
इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यके पर्व्वणि पाण्डवानां प्रव्रजनं नाम द्वितीयोऽध्यायः ॥ २ ॥
॥ वैशम्पायन उवाच ॥ शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः। पुरोहितमुपागम्य भ्रातृमध्ये ऽब्रवीदिदं।
प्रस्थितं माऽनुयान्तीमे ब्राह्मणा वेदपारगाः। न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः।
परित्यक्तुं न शक्तोऽस्मि दानशक्तिश्च नास्ति मे। कथमत्र मया कार्य्यं तद्ब्रूहि भगवन्मम।

॥ वैशम्पायन उवाच ॥ मुहूर्त्तमिव स ध्यात्वा धर्म्मेणान्विष्य तां गतिं । युधिष्ठिरमुवाचेदं धौम्यो धर्म्मभृताम्वरः ।

॥ धौम्यउवाच ॥ पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशं । ततोऽनुकम्पया तेषां सविता स्वपिता यथा ॥ १३५

गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः । दक्षिणायनमावृत्तो महीं निविशते रविः ।

क्षेत्रभूते ततस्तस्मिन् ओषधीरोषधीपतिः । दिवस्तेजः समुद्धृत्य जनयामास वारिणा ।

निषिक्तश्चन्द्रतेजोभिः सूयते निर्गते रविः । ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ।

एवं भानुमयं ह्यन्नं भूतानां प्राणधारणं । पितैष सर्व्वभूतानां तस्मात्तं शरणं व्रज ।

राजानो हि महात्मानो योनिकर्म्मविशोधिताः । उद्धरन्ति प्रजाः सर्व्वास्तप आस्थाय पुष्कलं । १४०

भीमेन कार्त्तवीर्य्येण वैन्येन नहुषेण च । तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ।

तथा त्वमपि धर्म्मात्मन् कर्म्मणा च विशोधितः । तप आस्थाय धर्म्मेण द्विजातीन् भर भारत ।

॥ जनमेजय उवाच ॥ कथं कुरूणामृषभः स तु राजा युधिष्ठिरः । विप्रार्थमाराधितवान् सूर्य्यमद्भुतदर्शनं ।

॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः । क्षणञ्च कुरु राजेन्द्र संप्रवक्ष्याम्यशेषतः ।

धौम्येन तु यथापूर्व्वं पार्थाय सुमहात्मने । नामाष्टशतमाख्यातं तच्छृणुष्व महामते । १४५

॥ धौम्य उवाच ॥ ओं सूर्य्योऽर्य्यमा भगस्त्वष्टा पूषाऽर्कः सविता रविः । गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ।

पृथिव्यापश्च तेजश्च खं वायुश्च परायणं । सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ।

इन्द्रो विवस्वान् दीप्तांशुः शुचिः शौरिः शनैश्चरः । ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वै वरुणो यमः ।

वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः । धर्म्मध्वजो वेदकर्त्ता वेदाङ्गो वेदवाहनः ।

कृतं त्रेता द्वापरश्च कलिः सर्व्वमलाश्रयः । कला काष्ठा मुहूर्त्ताश्च क्षपा यामस्तथा क्षणः । १५०

सम्वत्सरकरोऽश्वत्थः कालचक्रो विभावसुः । पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ।

कालाध्यक्षः प्रजाध्यक्षो विश्वकर्म्मा तमोनुदः । वरुणः सागरोंऽशश्च जीमूतो जीवनो ऽरिहा ।

भूताश्रयो भूतपतिः सर्व्वलोकनमस्कृतः । स्रष्टा सम्वर्त्तको वह्निः सर्व्वस्यादिरलोलुपः ।

अनन्तः कपिलो भानुः कामदः सर्व्वतोमुखः । जयो विशालो वरदः सर्व्वधातुनिषेचिता ।

मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारणः । धन्वन्तरिर्धूमकेतुरादिदेवो दितेःसुतः । १५५

द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः । स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपं ।

देहकर्त्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः । चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः ।

एतद्वै कीर्त्तनीयस्य सूर्य्यस्यामिततेजसः । नामाष्टशतकञ्चेदं प्रोक्तमेतत् स्वयम्भुवा ।

सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितं । वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करं ।

सूर्य्योदये यः सुसमाहितः पठेत् स पुत्त्रदारान् धनरत्नसञ्चयान् । लभेत जातिस्मरतां नरः सदा धृतिञ्च मेधाञ्च स विन्दते पुमान् । १६०

इमं स्तवं देववरस्य मानवः प्रकीर्त्तयेच्छुचिसुमनाः समाहितः । विमुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ।

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः। विप्रत्यागसमाधिस्थः संयतात्मा दृढव्रतः।
धर्म्मराजो विशुद्धात्मा तपआतिष्ठदुत्तमं। पुष्पोपहारैर्ब्बलिभिरर्च्चयित्वा दिवाकरं।
सोऽवगाह्य जलं राजा देवस्याभिमुखोऽभवत्। योगमास्थाय धर्म्मात्मा वायुभक्षो जितेन्द्रियः।
गाङ्गेयं पर्य्युपस्पृश्य प्राणायामेन तस्थिवान्। शुचिःप्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः। १६५
॥ युधिष्ठिर उवाच ॥ त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्व्वदेहिनां। त्वं योनिः सर्व्वभूतानां त्वमाचारः क्रियावतां।
त्वं गतिः सर्व्वसाङ्ख्यानां योगिनां त्वं परायणं। अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षतां।
त्वया संधार्य्यते लोकस्त्वया लोकः प्रकाश्यते। त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया।
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः। स्वशाखाविहितैर्म्मन्त्रैरर्च्चन्त्यृषिगणार्च्चितं।
तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः। सिद्धचारणगन्धर्व्वा यक्षगुह्यकपन्नगाः। १७०
त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः। सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः।
उपयान्त्यर्च्चयित्वा तु त्वां वै प्राप्तमनोरथाः। दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः।
गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः। ते पूजयित्वा त्वामेव गच्छन्त्याशु प्रधानतां।
वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः। वालिखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः।
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च। न तद्भूतमहं मन्ये यदर्क्कादतिरिच्यते। १७५
सन्ति चान्यानि सत्त्वानि वीर्य्यवन्ति महान्ति च। न तु तेषां तथा दीप्तिः प्रभावो वा यथा तव।
ज्योतींषि त्वयि सर्व्वाणि त्वं सर्व्वज्योतिषां पतिः। त्वयि सत्यञ्च सत्त्वञ्च सर्व्वे भावाश्च सात्त्विकाः।
त्वत्तेजसा कृतञ्चक्रं सुनाभं विश्वकर्म्मणा। देवारीणां मदो येन नाशितः शार्ङ्गधन्वना।
त्वमादायांशुभिस्तेजो निदाघे सर्व्वदेहिनां। सर्व्वौषधिरसानाञ्च पुनर्व्वर्षासु मुञ्चसि।
तपन्त्यन्ये दहन्त्यन्ये गर्ज्जन्त्यन्ये तथा घनाः। विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः। १८०
न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः। शीतवातार्द्दितं लोकं यथा तव मरीचयः।
त्रयोदशद्वीपवतीं गोभिर्भासयसे महीं। त्रयाणामपि लोकानां हितायैकः प्रवर्त्तसे।
तव यद्युदयो न स्यादन्धं जगदिदं भवेत्। न च धर्म्मार्थकामेषु प्रवर्त्तेरन्मनीषिणः।
आधानपशुबन्धेष्टिमन्त्रयज्ञतपःक्रियाः। त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्रविशां गणैः।
यदहो ब्रह्मणः प्रोक्तं सहस्रयुगसम्मितं। तस्य त्वमादिरन्तश्च कालज्ञैः परिकीर्त्तितः। १८५
मनूनां मनुपुत्त्राणां जगतो मानवस्य च। मन्वन्तराणां सर्व्वेषामीश्वराणां त्वमीश्वरः।
संहारकाले सम्प्राप्ते तव क्रोधविनिःसृतः। संवर्त्तकाग्निस्त्रैलोक्यं भस्मीकृत्वाऽवतिष्ठते।
त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः। सैरावताः साशनयः कुर्व्वन्त्याभूतसंप्लवं।
कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः। संहृत्यैकार्णवं सर्व्वं त्वं शोषयसि रश्मिभिः।
त्वामिन्द्रमाहुस्त्वं विष्णुस्त्वं रुद्रास्त्वं प्रजापतिः। त्वमग्निस्त्वं मनःसूक्ष्मं प्रभुस्त्वं ब्रह्म शाश्वतं। १९०
त्वं हंसः सविता भानुरंशुमाली वृषाकपिः। विवस्वान्मिहिरःपूषा मित्रो धर्म्मस्तथैव च।

सहस्ररश्मिरादित्यस्तपनस्त्वं गवाम्पतिः । मार्त्तण्डोऽर्क्को रविः सूर्य्यः शरण्यो दिनकृत्तथा ।
दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः । आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ।
सप्तम्यामथ वा षष्ठ्यां भक्त्या पूजां करोति यः । अनिर्व्विणोऽनहंकारी तं लक्ष्मीर्भजते नरं ।
न तेषामापदः सन्ति नाधयो व्याधयस्तथा । ये तवानन्यमनसः कुर्व्वते ह्यभिवन्दनं । १९९
सर्व्वरोगैर्व्विरहिताः सर्व्वपापविवर्ज्जिताः । त्वद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ।
त्वं ममाप्यन्नकामस्य सर्व्वातिथ्यं चिकीर्षतः । अन्नमन्नपते दातुमभितः श्रद्धयाऽर्हसि ।
ये च तेऽनुचराः सर्व्वे पादोपान्तं समाश्रिताः । माठरारुणदण्डाद्यास्तांस्तान् वन्देऽशनिक्षुभान् ।
क्षुभया सहिता मैत्री याश्चान्या भूतमातरः । ताश्च सर्व्वा नमस्यामि पान्तु मां शरणागतं ।
॥ वैशम्पायन उवाच ॥ ततो दिवाकरः प्रीतो दर्शयामास पाण्डवं । दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः । २००
॥ विवस्वानुवाच ॥ यत्तेऽभिलषितं किञ्चित्तत्त्वं सर्व्वमवाप्स्यसि । अहमन्नं प्रदास्यामि सप्तपञ्च च ते समाः ।
गृहीष्व पिठरं ताम्रं मया दत्तं नराधिप । यावद्वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ।
फलमूलामिषं शाकं संस्कृतं यन्महानसे । चतुर्व्विधं तदन्नाद्यमक्षय्यन्ते भविष्यति ।
इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत ।
इमं स्तवं प्रयतमनाः समाधिना पठेदिहान्योऽपि वरं समर्थयन् । तत्तस्य दद्याच्च रविर्मनीषितं तदाप्नुयाद्यद्यपि तत् सुदु
र्लभं । २०५
यश्चेदं धारयेन्नित्यं शृणुयाद्वाऽप्यभीक्ष्णशः । पुत्त्रार्थी लभते पुत्त्रं धनार्थी लभते धनं ।
विद्यार्थी लभते विद्यां पुरुषोऽप्यथ वा स्त्रियः । उभे सन्ध्ये पठेन्नित्यं नारी वा पुरुषो यदि ।
आपदं प्राप्य मुच्येत बद्धो मुच्येत बन्धनात् । एतद्ब्रह्मा ददौ पूर्व्वं शक्राय सुमहात्मने ।
शक्राच्च नारदः प्राप्तो धौम्यस्तु तदनन्तरं । धौम्याद्युधिष्ठिरः प्राप्य सर्व्वान् कामानवाप्तवान् ।
संग्रामे च जयेन्नित्यं विपुलञ्चाप्नुयाद्वसु । मुच्यते सर्व्वपापेभ्यः सूर्य्यलोकं स गच्छति । २१०
॥ वैशम्पायन उवाच ॥ लब्ध्वा वरन्तु कौन्तेयो जलादुत्तीर्य्य धर्म्मवित् । जग्राह पादौ धौम्यस्य भ्रातॄंश्च परिषस्वजे ।
द्रौपद्या सह सङ्गम्य वन्द्यमानस्तया प्रभो । महानसे तदानीन्तु साधयामास पाण्डवः ।
संस्कृतं प्रसवं याति स्वल्पमन्नञ्चतुर्व्विधं । अक्षय्यं वर्द्धते चान्नं तेन भोजयते द्विजान् ।
भुक्तवत्सु च विप्रेषु भोजयित्वाऽनुजानपि । शेषं विघससंज्ञन्तु पश्चाद्भुङ्क्ते युधिष्ठिरः ।
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती । द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च । २१५
एवं दिवाकरात् प्राप्य दिवाकरसमप्रभः । कामान् मनोऽभिलषितान् ब्राह्मणेभ्योऽददात् प्रभुः ।
पुरोहितपुरोगाश्च तिथिनक्षत्रपर्व्वसु । यज्ञियार्थाः प्रवर्त्तन्ते विधिमन्त्रप्रमाणतः ।
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः । द्विजसंघैः परिवृताः प्रययुः काम्यकं वनं ।
इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि काम्यकवनप्रवेशे तृतीयोऽध्यायः ॥ ३ ॥

॥ वैशम्पायन उवाच ॥ वनं प्रविष्टेष्वथ पाण्डवेषु प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः । धर्म्मात्मानं विदुरमगाधबुद्धिं सुखासीनो वाक्यमुवाच राजा ।

॥ धृतराष्ट्र उवाच ॥ प्रज्ञा च ते भार्गवस्येव शुद्धा धर्म्मञ्च त्वं परमं वेत्थ सूक्ष्मं । समश्च त्वं सम्मतः कौरवाणां पथ्यञ्चैषां मम चैव ब्रवीहि । २२०

एवं गते विदुर यदद्य कार्य्यं पौरास्त्विमे कथमस्मान् भजेरन् । ते चाप्यस्मान्नोद्धरेयुः समूलांस्तत्त्वं ब्रूयाः साधु कार्य्याणि वेत्सि ।

॥ विदुर उवाच ॥ त्रिवर्गोऽयं धर्म्ममूलो नरेन्द्र राज्यञ्चेदं धर्म्ममूलं वदन्ति । धर्म्मे राजन् वर्त्तमानः स्वशक्त्या पुत्त्रान् सर्व्वान् पाहि पाण्डोः सुतांश्च ।

स वै धर्म्मो विप्रलब्धः सभायां पापात्मभिः सौबलेयप्रधानैः । आहूय कुन्तीसुतमक्षवत्यां पराऽजैषीत् सत्यसन्धं सुतस्ते ।

एतस्य ते दुष्प्रणीतस्य राजन् शेषस्याहं परिपश्याम्युपायं । यथा पुत्त्रस्तव कौरव्य पापान्मुक्तो लोकेप्र तितिष्ठेत साधु ।

तद्वै सर्व्वं पाण्डुपुत्त्रा लभन्तां यत्तद्राजन्नभिसृष्टं त्वयासीत् । एष धर्म्मः परमो यत्स्वकेन राजा तुष्येन्न परस्वेषु गृध्येत् । २२५

यशो न नश्येज्ज्ञातिभेदश्च न स्याद्धर्म्मो नस्यान्नैव चैवं कृते त्वां । एतत् कार्य्यं तव सर्व्वप्रधानं तेषां तुष्टिः शकुनेश्चावमानः ।

एवं शेषं यदि पुत्त्रेषु ते स्यादेतद्राजंस्त्वरमाणः कुरुष्व । तथैतदेवं न करोषि राजन् ध्रुवं कुरूणां भविता विनाशः ।

न हि क्रुद्धो भीमसेनोऽर्ज्जुनो वा शेषं कुर्य्यात् शात्त्रवाणामनीके । येषां योद्धा सव्यसाची कृतास्त्रो धनुर्य्येषां गाण्डिवं लोकसारं ।

येषां भीमो बाहुशाली च योद्धा तेषां लोके किन्नु न प्राप्यमस्ति । उक्तं पूर्व्वं जातमात्रे सुते ते मया यत्ते हितमासीत्तदानीं ।

पुत्त्रं त्यजेममहितं कुलस्य हितं परं न च तत्त्वं चकर्थ । इदञ्च राजन् हितमुक्तं नचेत्त्वमेवं कर्त्ता परितप्ताऽसि पश्चात् । २३०

यद्येतदेवमनुमन्ता सुतस्ते संप्रीयमाणः पाण्डवैरेकराज्यं । तापो न ते भविता प्रीतियोगान्न चेन्निगृह्णीष्व सुतं सुखाय ।

दुर्य्योधनन्त्वहितं वै निगृह्य पाण्डोः पुत्त्रं प्रकुरुष्वाधिपत्ये । अजातशत्रुर्हि विमुक्तरागो धर्म्मेणेमां पृथिवीं शास्तु राजन् ।

ततो राजन् पार्थिवाः सर्व्व एव वैश्या इवास्मानुपतिष्ठन्तु सद्यः । दुर्य्योधनः शकुनिः सूतपुत्त्रः प्रीत्या राजन् पाण्डुपुत्त्रान भजन्तु ।

दुःशासनो याचतु भीमसेनं सभामध्ये द्रुपदस्यात्मजाञ्च । युधिष्ठिरं त्वं परिसान्त्वयस्व राज्ये चैनं स्थापयस्वाभिपूज्य । त्वया पृष्टः किमहमन्यद्वदेयमेतत् कृत्वा कृतकृत्योऽसि राजन् ।

॥ धृतराष्ट्र उवाच ॥ एतद्वाक्यं विदुर यत्ते सभायामिह प्रोक्तं पाण्डवान् प्राप्य माञ्च । हितं तेषामहितं मामकानामेतत् सर्व्वं मम नावैति चेतः । २३५

इदन्त्विदानीं गत एव निश्चितं तेषामर्थे पाण्डवानां यदात्थ । तेनाद्य मन्ये नासि हितो ममेति कथं हि पुत्त्रं पाण्डवार्थे त्यजेयं ।

असंशयं तेऽपि ममैव पुत्त्रा दुर्य्योधनस्तु मम देहात्प्रसूतः । स्वं वै देहं परहेतोस्त्यजेति कोऽनु ब्रूयात् समतामन्ववेक्ष्य ।

स मां जिह्मं विदुर सर्व्वं ब्रवीषि मानञ्च तेऽहमधिकं धारयामि । यथेच्छकं गच्छ वा तिष्ठ वा त्वं सुसान्त्व्यमाना ह्यसती स्त्री जहाति ।

॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्यदन्तर्वेश्म सहसोत्थाय राजन् । नेदमस्तीत्यथो विदुरो भाषमाणः सम्प्राद्र वद्यत्र पार्था बभूवुः ।

इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि विदुरवाक्ये चतुर्थोऽध्यायः ॥ ४ ॥

॥ वैशम्पायन उवाच ॥ पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः । प्रययुर्ज्जाह्नवीकूलात् कुरुक्षेत्रं सहानुगाः । २४०

सरस्वतीदृषद्वत्यौ यमुनाञ्च निषेव्य ते । ययुर्व्वनेनैव वनं सततं पश्चिमां दिशं ।

ततः सरस्वतीकूले समेषु मरुधन्वसु । काम्यकं नाम ददृशुर्व्वनं मुनिजनप्रियं ।

तत्र ते न्यवसन् वीरा वने बहुमृगद्विजे । अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत ।

विदुरस्त्वपि पाण्डूनां सदा दर्शनलालसः । जगामैकरथेनैव काम्यकं वनमृद्धिमत् ।

ततो गत्वा विदुरः काम्यकं तच्छीघ्रैरश्वैर्व्वाहिना स्यन्दनेन । ददर्शासीनं धर्म्मात्मानं विविक्ते सार्द्धं द्रौपद्या भ्रातृभि र्ब्राह्मणैश्च । २४१

ततोऽपश्यद्विदुरं तूर्णमाराद्भ्यायान्तं सत्यसन्धः स राजा । अथाब्रवीद्भ्रातरं भीमसेनं किं नु क्षत्ता वक्ष्यति नः समेत्य ।

कच्चिन्नायं वचनात् सौबलस्य समाह्वाता देवनायोपयातः । कच्चित् क्षुद्रः शकुनिर्नायुधानि जेष्यत्यस्मान् पुनरेवाक्षवत्यां ।

समाहूतः केनचिदाद्रवेति नाहं शक्तो भीमसेनापयातुं । गाण्डीवे च संशयिते कथं नु राज्यप्राप्तिः संशयिता भवेन्नः ।

॥ वैशम्पायन उवाच ॥ तत उत्थाय विदुरं पाण्डवेयाः प्रत्यगृह्णन्नृपते सर्व्व एव । तैः सत्कृतः स च तानाजमीढो यथोचितं पाण्डुपुत्त्रान् समेयात् ।

समाश्वस्तं विदुरं ते नरर्षभास्ततोऽपृच्छन्नागमनाय हेतुं । स चापि तेभ्यो विस्तरतः शशंस यथावृत्तो धृतराष्ट्रोऽम्बिकेयः । २५०

॥ विदुर उवाच ॥ अवोचन्मां धृतराष्ट्रोऽनुगुप्तमजातशत्रो परिगृह्याभिपूज्य । एवं गते समतामभ्युपेत्य पथ्यन्तेषां मम चैव ब्रवीहि ।

मयाऽप्युक्तं यत् क्षमं कौरवाणां हितं पथ्यं धृतराष्ट्रस्य चैव । तद्वै तस्मै न रुचामभ्युपैति ततश्चाहं क्षममन्यन्न मन्ये ।

परं श्रेयः पाण्डवेया मयोक्तं न मे तच्च श्रुतवानाम्बिकेयः । यथातुरस्येव हि पथ्यमन्नं न रोचतेस्मास्य तदुच्यमानं ।

न श्रेयसे नीयतेऽजातशत्रो स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा । ध्रुवं न रोचेद्भरतर्षभस्य पतिः कुमार्य्या इव षष्टिवर्षः ।

ध्रुवं विनाशो नृप कौरवाणां नवै श्रेयो धृतराष्ट्रः परैति । यथा च पर्णे पुष्करस्यावसिक्तं जलं न तिष्ठेत् पथ्यमुक्तं तथाऽस्मिन् । २५१

ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां यत्रास्मिन् श्रद्धा भारत तत्र याहि । नाहं भूयः कामये त्वां सहायं महीमिमां पालयितुं पुरं वा ।

सोऽहं त्यक्तो धृतराष्ट्रेण राज्ञा प्रशासितुं त्वामुपयातो नरेन्द्र । तद्वै सर्व्वं यन्मयोक्तं सभायां तद्धार्य्यतां तत् प्रवक्ष्यामि भूयः ।

क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः क्षमां कुर्व्वन् कालमुपासते यः । संवर्द्धयंस्तोकमिवाग्निमात्मवान् स वै भुङ्क्ते पृथिवीमेक एव ।

यस्याविभक्तं वसु राजन् सहायैस्तस्य दुःखेऽप्यंशभाजः सहायाः । सहायानामेष संग्रहणेऽभ्युपायः सहायाप्तौ पृथिवी प्राप्तिमाहुः ।

सत्यं श्रेयः पाण्डव विप्रलापं तुल्यञ्चान्नं सह भोज्यं सहायैः । आत्मा चैषामग्रतो न स्म पूज्य एवंवृत्तिर्व्वर्द्धते भूमिपालः । २६०

॥ युधिष्ठिर उवाच ॥ एवं करिष्यामि यथा ब्रवीषि परां बुद्धिमुपगम्याप्रमत्तः । यच्चाप्यन्यद्देशकालोपपन्नं तद्वै वाच्यं तत्करिष्यामि कृत्स्नं ।

इति श्रीमहारते आरण्यपर्व्वणि आरण्यकपर्व्वणि विदुरनिर्व्वासे पञ्चमोऽध्यायः ॥ ५ ॥

॥ वैशम्पायन उवाच॥ गते तु विदुरे राजन्नाश्रमं पाण्डवान् प्रति। धृतराष्ट्रो महाप्राज्ञः पर्य्यतप्यत भारत।
विदुरस्य प्रभावञ्च सन्धिविग्रहकारितं। विवृद्धिञ्च परां मत्वा पाण्डवानां भविष्यति।
स सभाद्वारमागम्य विदुरस्मारमोहितः। समक्षं पार्थिवेन्द्राणां पपाताविष्टचेतनः।
स तु लब्ध्वा पुनः संज्ञां समुत्थाय महीतलात्। समीपोपस्थितं राजा सञ्जयं वाक्यमब्रवीत्। २६५
भ्राता मम सुहृच्चैव साक्षाद्धर्म्म इवापरः। तस्य स्मृत्वाऽद्य सुभृशं हृदयं दीर्य्यतीव मे।
तमानयस्व धर्म्मज्ञं मम भ्रातरमाशु वै। इति ब्रुवन् स नृपतिः कृपणं पर्य्यदेवयत्।
पश्चात्तापाभिसन्तप्तो विदुरस्मारमोहितः। भ्रातृस्नेहादिदं राजा सञ्जयं वाक्यमब्रवीत्।
गच्छ सञ्जय जानीहि भ्रातरं विदुरं मम। यदि जीवति रोषेण मया पापेन निर्द्धुतः।
नहि तेन मम भ्रात्रा सुसूक्ष्ममपि किञ्चन। व्यलीकं कृतपूर्व्वं वै प्राज्ञेनामितबुद्धिना। २७०
स व्यलीकं परं प्राप्तो मत्तः परमबुद्धिमान्। त्यक्ष्यामि जीवितं प्राज्ञ तं गच्छानय सञ्जय।
तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च। सञ्जयो वाढमित्युक्त्वा प्राद्रवत् काम्यकं प्रति।
सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः। रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरं।
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः। भ्रातृभिश्चाभिसंगुप्तं देवैरिव पुरन्दरं।
युधिष्ठिरमुपागम्य पूजयामास सञ्जयः। भीमार्जुनयमाश्चापि तद्युक्तं प्रतिपेदिरे। २७५
राज्ञा पृष्टः स कुशलं सुखासीनश्च सञ्जयः। शशंसागमने हेतुमिदञ्चैवाब्रवीद्वचः।
॥ सञ्जय उवाच॥ राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः। तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवं।
सोऽनुमान्य नरश्रेष्ठान् पाण्डवान् कुरुनन्दन। नियोगाद्राजसिंहस्य गन्तुमर्हसि सत्तम।
॥ वैशम्पायन उवाच॥ एवमुक्तस्तु विदुरो धीमान् स्वजनवत्सलः। युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयं।
तमब्रवीन्महातेजा धृतराष्ट्रः प्रतापवान्। दिष्ट्या प्राप्तोऽसि धर्म्मज्ञ दिष्ट्या स्मरसि मेऽनघ। २८०
अद्य चाहं दिवारात्रौ त्वत्कृते भरतर्षभ। प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः।
सोऽङ्कमानीय विदुरं मूर्द्धन्याघ्राय चैव ह। क्षम्यतामिति चोवाच यदुक्तोऽसि मयाऽनघ।
॥ विदुर उवाच॥ क्षान्तमेव मया राजन् गुरुर्न्नः परमो भवान्। एषोऽहमागतः शीघ्रं त्वद्दर्शनपरायणः।
भवन्ति हि नरव्याघ्र पुरुषा धर्म्मचेतसः। दीनाभिपातिनो राजन्नात्र कार्य्या विचारणा।
पाण्डोः सुता यादृशा मे तादृशास्तव भारत। दीना इतीव मे बुद्धिरभिपन्नाऽद्य तान् प्रति। २८५
॥ वैशम्पायन उवाच॥ अन्योऽन्यमनुनीयैवं भ्रातरौ द्वौ महाद्युती। विदुरो धृतराष्ट्रश्च लेभाते परमां मुदं।
इति श्री महाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि विदुरप्रत्यागमनं नाम षष्ठोऽध्यायः॥ ६ ॥
॥ वैशम्पायन उवाच॥ श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितं। धृतराष्ट्रात्मजो राजा पर्य्यतप्यत दुर्म्मतिः।
स सौबलेयमानाय्य कर्णदुःशासनौ तथा। अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः।
एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य धीमतः। विदुरः पाण्डुपुत्त्राणां सुहृद्विद्वान् हिते रतः।
यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति। पाण्डवानयने तावन्मन्त्रयध्वं हितं मम। २९०

अथ पश्याम्यहं पार्थान् प्राप्तानिह कथञ्चन। पुनः शोषं गमिष्यामि निरसुर्निरवग्रहः।
विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनं। करिष्ये न हि तानृद्धान् पुनर्द्रष्टुमिहोत्सहे।
॥ शकुनिरुवाच ॥ किं बालिशमतिं राजन्नास्थितोऽसि विशाम्पते। गतास्ते समयं कृत्वा नैतदेवं भविष्यति।
सत्यवाक्ये स्थिताः सर्व्वे पाण्डवा भरतर्षभ। पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित्।
अथ वा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरं। निरस्य समयं सर्व्वे पणोऽस्माकं भविष्यति। १९५
सर्व्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्त्तिनः। छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः।
॥ दुःशासन उवाच ॥ एवमेतन्महाप्राज्ञ यथा वदसि मातुल। नित्यं हि मे कथयतस्तव बुद्धिर्हि रोचते।
॥ कर्ण उवाच ॥ काममीक्षामहे सर्व्वे दुर्योधन तवेप्सितं। ऐकमत्यं हि नो राजन् सर्व्वेषामेव लक्षये।
नागमिष्यन्ति ते धीरा अकृत्वा कालसंविदं। आगमिष्यन्ति चेन्मोहात् पुनर्द्यूतेन तान् जय।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा। नातिहृष्टमनाः क्षिप्रमभवत् स पराङ्मुखः। २००
उपलभ्य ततः कर्णो विवृत्य नयने शुभे। रोषाद्दुःशासनञ्चैव सौबलञ्च तमेव च।
उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना। अथो मम मतं यत्तु तन्निबोधत भूमिपाः।
प्रियं सर्व्वे करिष्यामो राज्ञः किङ्करपाणयः। न चास्य शक्नुमः स्थातुं प्रिये सर्व्वे ह्यतन्द्रिताः।
वयन्तु शस्त्राण्यादाय रथानास्थाय दंशिताः। गच्छामः सहिता हन्तुं पाण्डवान् वनगोचरान्।
तेषु सर्व्वेषु शान्तेषु गतेष्वविदितां गतिं। निर्व्विवादा भविष्यन्ति धार्त्तराष्ट्रास्तथा वयं। २०५
यावदेव परिद्यूना यावच्छोकपरायणाः। यावन्मित्रविहीनाश्च तावच्छक्या मतं मम।
तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः। बाढमित्येव ते सर्व्वे प्रत्यूचुः सूतजं तदा।
एवमुक्त्वा सुसंरब्धा रथैः सर्व्वे पृथक् पृथक्। निर्ययुः पाण्डवान् हन्तुं सहिताः कृतनिश्चयाः।
तान् प्रस्थितान् परिज्ञाय कृष्णद्वैपायनः प्रभुः। आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा।
प्रतिषिध्याथ तान् सर्व्वान् भगवान् लोकपूजितः। प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरं। २१०
इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि व्यासागमने सप्तमोऽध्यायः॥ ७ ॥
॥ व्यास उवाच ॥ धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम। वक्ष्यामि त्वां कौरवाणां सर्व्वेषां हितमुत्तमं।
न मे प्रियं महाबाहो यद्गताः पाण्डवा वनं। निकृत्या निकृताश्चैव दुर्योधनपुरोगमैः।
ते स्मरन्तः परिक्लेशान् वर्षे पूर्णे त्रयोदशे। विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत।
तदयं किन्नु पापात्मा तव पुत्रः सुमन्दधीः। पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति।
वार्य्यतां साध्वयं मूढः शमं गच्छतु ते सुतः। वनस्थांस्तानयं हन्तुमिच्छन् प्राणान् विमोक्ष्यति। २१५
यथाहि विदुरः प्राज्ञो यथा भीष्मो यथा वयं। तथा कृपश्च द्रोणश्च तथा साधुर्भवानपि।
विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः। अधर्म्म्यमयशस्यञ्च मा राजन् प्रतिपद्यथाः।
समीक्षा यादृशी यस्य पाण्डवान् प्रति भारत। उपेक्ष्यमाणा सा राजन् महान्तमनर्थं स्पृशेत्।
अथ वाऽयं सुमन्दात्मा वनं गच्छतु ते सुतः। पाण्डवैः सहितो राजन्नेक एवासहायवान्।

ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः । यदि स्यात् कृतकार्य्योऽद्य भवेस्त्वं मनुजेश्वर । २२०

अथ वा जायमानस्य यच्छीलमनुजायते । श्रूयते तन्महाराज नामृतस्यापसर्पति ।

कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोऽपि वा । भवान् वाऽत्र क्षमं कार्य्यं पुरा वोऽर्थो निवर्त्तते ।

इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि व्यासवाक्येऽष्टमोऽध्यायः ॥ ८ ॥

॥ धृतराष्ट्र उवाच ॥ भगवन्नाहमप्येतद्रोचये द्यूतसम्भवं । मन्ये तद्विधिनाक्रम्य कारितोऽस्मीति वै मुने ।

नैवरोचयते भीष्मो न द्रोणो विदुरो न च । गान्धारी नेच्छति द्यूतं तत्र मोहात् प्रवर्त्तितं ।

परित्यक्तुं न शक्नोमि दुर्य्योधनमचेतनं । पुत्रस्नेहेन भगवन् जानन्नपि प्रियव्रत । २२५

॥ व्यास उवाच ॥ वैचित्रवीर्य्य नृपते सत्यमाह यथा भवान् । दृढं विद्मः परं पुत्रं परं पुत्रान्न विद्यते ।

इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः । अन्यैः समृद्धैरप्यर्थैर्नसुतान्मन्यते परं ।

अत्र ते वर्त्तयिष्यामि महदाख्यानमुत्तमं । सुरभ्याश्चैव संवादमिन्द्रस्य च विशाम्पते ।

त्रिपिष्टपगता राजन् सुरभी प्रारुदत् किल । गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ।

॥ इन्द्र उवाच ॥ किमिदं रोदिषि शुभे कच्चित् चेमं दिवौकसां । मनुष्येष्वथ नागेषु नैतदल्पं भविष्यति । २३०

॥ सुरभिरुवाच ॥ विनिपातो न ते कश्चिद्दृश्यते त्रिदशाधिप । अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ।

पश्यैनं कर्षकं क्षुद्रं दुर्ब्बलं मम पुत्रकं । प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितं ।

निषीदमानं सोत्कण्ठं बध्यमानं सुराधिप । कृपाविष्टाऽस्मि देवेन्द्र मनश्चोद्विजते मम ।

एकस्तत्र बलोपेतो धुरमुद्वहते ऽधिकां । अपरोऽप्यबलप्राणः कृशो धमनिसन्ततः ।

कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव । बध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः । २३५

नैव शक्नोति तं भारमुद्वोढुं पश्य वासव । ततोऽहं तस्य शोकार्त्ता विरोमि भृशदुःखिता । अश्रूण्यावर्त्तयन्ती च नेत्राभ्यां करुणायती ।

॥ शक्र उवाच ॥ तव पुत्रसहस्रेषु पीड्यमानेषु शोभने । किं कृपायितमस्त्यत्र पुत्र एकत्र हन्यति ।

॥ सुरभिरुवाच ॥ यदि पुत्रसहस्राणि सर्व्वत्र सममेव मे । दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ।

॥ व्यासउवाच ॥ तदिन्द्रः सुरभीवाक्यं निशम्य भृशविस्मितः । जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजं ।

प्रववर्ष च तत्रैव सहसा तोयमुल्बणं । कर्षकस्याचरन् विघ्नं भगवान् पाकशासनः । २४०

तद्यथा सुरभिः प्राह सममेवास्तु ते तथा । सुतेषु राजन् सर्व्वेषु हीनेष्वभ्यधिका कृपा ।

यादृशो मे सुतः पाण्डुस्तादृशो मेऽसि पुत्रक । विदुरश्च महाप्राज्ञः स्नेहादेतद्ब्रवीम्यहं ।

चिराय तव पुत्राणां शतमेकश्च भारत । पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाः सुदुःखिताः ।

कथं जीवेयुरत्यन्तं कथं वर्द्धेयुरित्यपि । इति दीनेषु पार्थेषु मनो मे परितप्यते ।

यदि पार्थिव कौरव्यान् जीवमानानिहेच्छसि । दुर्य्योधनस्तव सुतः शमं गच्छतु पाण्डवैः । २४५

इति श्री महाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि सुरभ्युपाख्यानं नाम नवमोऽध्यायः ॥ ९ ॥

॥ धृतराष्ट्र उवाच ॥ एवमेतन्महाप्राज्ञ यथा वदसि नो मुने । अहञ्चैव विजानामि सर्व्वे चेमे नराधिपाः ।

भवांश्च मन्यते साधु यत्कुरूणां महोदयं । तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ।
यदि त्वहमनुग्राह्यः कौरव्येषु दया यदि । अनुशाधि दुरात्मानं पुत्रं दुर्य्योधनं मम ।
॥ व्यास उवाच ॥ अयमायाति वै राजन् मैत्रेयो भगवानृषिः । अन्विष्य पाण्डवान् भ्रातॄनितैवास्मद्दिदृक्षया ।
एष दुर्य्योधनं पुत्रं तव राजन् महानृषिः । अनुशास्ता यथान्यायं शमायास्य कुलस्य च । ३१०
ब्रूयाद्यदेष कौरव्य तत्कार्य्यमविशङ्कया । अक्रियायान्तु कार्य्यस्य पुत्रं ते शप्स्यते रुषा ।
॥ वैशम्पायन उवाच ॥ एवमुक्ता ययौ व्यासो मैत्रेयः प्रत्यदृश्यत । पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ।
अर्घ्याद्याभिः क्रियाभिर्व्वै विश्रान्तं मुनिसत्तमं । प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ।
सुखेनागमनं कच्चिद्भगवन् कुरुजाङ्गलात् । कच्चित् कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः ।
समये स्थातुमिच्छन्ति कच्चिच्च भरतर्षभाः । कच्चित् कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति । ३१५
॥ मैत्रेय उवाच ॥ तीर्थयात्रामनुक्रामन् प्राप्तोऽस्मि कुरुजाङ्गलान् । यदृच्छया धर्म्मराजं दृष्टवान् काम्यके वने ।
तं जटाजिनसंवीतं तपोवननिवासिनं । समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ।
तत्राश्रौषं महाराज पुत्राणां तव विभ्रमं । अनयं द्यूतरूपेण महाभयमुपस्थितं ।
ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया । सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो ।
नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति । यदन्योऽन्येन ते पुत्रा विरोधन्ते कथञ्चन । ३२०
मेढीभूतः स्वयं राजन्निग्रहप्रग्रहे भवान् । किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे ।
दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन । तेन न भ्राजसे राजंस्तापसानां समागमे ।
॥ वैशम्पायन उवाच ॥ ततो व्यावृत्य राजानं दुर्य्योधनममर्षणं । उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ।
॥ मैत्रेय उवाच ॥ दुर्य्योधन महाबाहो निबोध वदताम्बर । वचनं मे महाभाग ब्रुवतो यद्धितं तव ।
माद्रुहः पाण्डवान्राजन् कुरुष्व प्रियमात्मनः । पाण्डवानां कुरूणाञ्च लोकस्य च नरर्षभ । ३२५
ते हि सर्व्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः । सर्व्वे नागायुतप्राणा वज्रसंहनना दृढाः ।
सत्यव्रतधराः सर्व्वे सर्व्वे पुरुषमानिनः । हन्तारो देवशत्रूणां रक्षसां कामरूपिणां ।
हिडिम्बवकमुख्यानां किर्म्मीरस्य च रक्षसः । इतः प्रद्रवतां रात्रौ यः स तेषां महात्मनां ।
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः । तं भीमः समरश्लाघी बलेन बलिनाम्बरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा । पश्य दिग्विजये राजन् यथा भीमेन पातितः । ३३०
जरासन्धो महेष्वासो नागायुतबलो युधि । सम्बन्धी वासुदेवस्य श्यालाः सर्व्वे च पार्षताः ।
कस्तान् युधि समासीत जरामरणवान्नरः । तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
कुरु मे वचनं राजन् मा मन्युवशमन्वगाः ॥ वैशम्पायन उवाच ॥ एवन्तु ब्रुवतस्तस्य मैत्रेयस्य विशाम्पते ।
ऊरुं गजकराकारं करेणाभिजघान सः । दुर्य्योधनः स्मितं कृत्वा चरणेनोल्लिखन्महीं ।
न किञ्चिदुक्ता दुर्म्मेधास्तस्थौ किञ्चिदवाङ्मुखः । तमशुश्रूषमाणन्तु विलिखन्तं वसुन्धरां । ३३५
दृष्ट्वा दुर्य्योधनं राजन्मैत्रेयं कोप आविशत् । स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः ।

विधिना सम्प्रणुदितः शापायास्य मनो दधे। ततः स वार्य्युपस्पृश्य कोपसंरक्तलोचनः।
मैत्रेयो धार्त्तराष्ट्रं तमशपद्दुष्टचेतसं। यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि। तस्मादस्याभिमानस्य सद्यः फलमवाप्नुहि।
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत्। तत्र भीमो गदाघातैस्तवोरुं भेत्स्यते बली।
इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः। प्रसादयामास मुनिं नैतदेवं भविष्यति। ३८०
॥ मैत्रेय उवाच ॥ शमं यास्यति चेत्पुत्रस्तव राजन् यदा तदा। शापो न भविता तात विपरीते भविष्यति।
॥ वैशम्पायन उवाच ॥ विलक्षयंस्तु राजेन्द्रो दुर्य्योधनपिता तदा। मैत्रेयं प्राह किर्म्मीरः कथं भीमेन पातितः।
॥ मैत्रेय उवाच ॥ नाहं वक्ष्यामि ते भूयो न ते शुश्रूषते सुतः। एष ते विदुरः सर्व्वमाख्यास्यति गते मयि।
इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतं। किर्म्मीरवधसम्विग्नो वहिर्दुर्य्योधनो यथौ।
इतिश्री महाभारते आरण्यपर्व्वणि दशमोऽध्यायः समाप्तञ्चारण्यकंपर्व्व ॥ १० ॥

## ॥ अथकिर्म्मीरवधपर्व्व ॥ २ ॥

॥ धृतराष्ट्र उवाच ॥ किर्म्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यतां। रक्षसा भीमसेनस्य कथमासीत् समागमः। ३८५
॥ विदुर उवाच ॥ शृणु भीमस्य कर्म्मेदमतिमानुषकर्म्मणः। श्रुतपूर्व्वं मया तेषां कथान्तेषु पुनःपुनः।
इतःप्रयाता राजेन्द्र पाण्डवा द्यूतनिर्ज्जिताः। जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनं।
रात्रौ निशीथे स्वाभीले गतेऽर्द्धसमये नृप। प्रचारे पुरुषादानां रक्षसां घोरकर्म्मणां।
तद्वनं तापसा नित्यं गोपाश्च वनचारिणः। दूरात् परिहरन्ति स्म पुरुषादभयात् किल।
तेषां प्रविशतां तत्र मार्गमावृत्य भारत। दीप्ताक्षं भीषणं रक्षः सोल्मुकं प्रत्यपद्यत। ३९०
बाहू महान्तौ कृत्वा च तथास्यञ्च भयानकं। स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः।
स्पष्टाष्टदंष्ट्रं ताम्राक्षं प्रदीप्तोर्द्ध्वशिरोरुहं। सार्क्करश्मितडिच्चक्रं सबलाकमिवाम्बुदं।
सृजन्तं राक्षसीं मायां महानादनिनादितं। मुञ्चन्तं विपुलान्नादान् सतोयमिव तोयदं।
तस्य नादेन सन्त्रस्ताः पक्षिणः सर्व्वतो दिशं। विमुक्तनादाः सम्पेतुः स्थलजा जलजैः सह।
सम्प्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलं। तद्वनं तस्य नादेन सम्प्रस्थितमिवाभवत्। ३९५
तस्योरुवाताभिहतास्ताम्रपल्लवबाहवः। विदूरजाताश्च लताः समाश्लिष्यन्ति पादपान्।
तस्मिन् क्षणेऽथ प्रववौ मारुतो भृशदारुणः। रजसा संवृतं तेन नष्टज्योतिरभून्नभः।
पञ्चानां पाण्डुपुत्त्राणामविज्ञातो महारिपुः। पञ्चानामिन्द्रियार्थानां शोकावेश इवातुलः।
स दृष्ट्वा पाण्डवान् दूरात् कृष्णाजिनसमावृतान्। आवृणोत्तद्वनद्वारं मैनाक इव पर्व्वतः।
तं समासाद्य वित्रस्ता कृष्णा कमललोचना। अदृष्टपूर्व्वं संत्रासान्न्यमीलयत लोचने। ४००
दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा। पञ्चपर्व्वतमध्यस्था नदीवाकुलतां गता।
मोमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः। इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिं।
अथ तां राक्षसीं मायामुत्थितां घोरदर्शनां। रक्षोघ्नैर्विविधैर्म्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः।

पश्यतां पाण्डुपुत्राणां नाशयामास वीर्य्यवान् । स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः ।
काममूर्त्तिधरः क्रूरः कालकल्पो व्यदृश्यत । तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः । ४०५
को भवान् कस्य वा किं ते क्रियतां कार्य्यमुच्यतां । प्रत्युवाचाथ तद्रक्षो धर्म्मराजं युधिष्ठिरं ।
अहं बकस्य वै भ्राता किर्म्मीर इतिविश्रुतः । वनेऽस्मिन् काम्यके शून्ये निवसामि गतज्वरः ।
युधि निर्ज्जित्य पुरुषानाहारं नित्यमाचरन् । के यूयमभिसंप्राप्ता भक्ष्यभूता ममान्तिकं ।
युधि निर्ज्जित्य वः सर्व्वान् भक्षयिष्ये गतज्वरः ॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्व्वं गोत्रनामादि भारत ॥ युधिष्ठिर उवाच ॥ पाण्डवो धर्म्मराजोऽहं यदि ते श्रोत्रमागतः । ४१०
सहितो भ्रातृभिः सर्व्वैर्भीमसेनार्ज्जुनादिभिः । हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरमिदं तव परिग्रहं ॥ विदुर उवाच ॥ किर्म्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोगतं । भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनञ्चासादयाम्यहं । सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरं ।
अनेन हि मम भ्राता बको विनिहतः प्रियः । वेत्रकीयवने राजन् ब्राह्मणच्छद्मरूपिणा । ४१५
विद्याबलमुपाश्रित्य न ह्यस्यस्त्यौरसं बलं । हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनाऽनेन स्वसा चास्य हृता पुरा । सोऽयमभ्यागतो मूढो ममेदं गहनं वनं ।
प्रचारसमयेऽस्माकमर्द्धरात्रे स्थिते समे । अद्यास्य पातयिष्यामि तद्वैरं चिरसम्भृतं ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा । अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ।
शान्तिं लब्धाऽस्मि परमां हत्वा राक्षसकण्टकं । यदि तेन पुरामुक्तो भीमसेनो बकेन वै । ४२०
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर । एनं हि विपुलप्राणमद्य हत्वा वृकोदरं ।
संभक्ष्य जरयिष्यामि यथाऽगस्त्यो महासुरं । एवमुक्तस्तु धर्म्मात्मा सत्यसन्धो युधिष्ठिरः ।
नैतदस्तीति संक्रुद्धो भर्त्सयामास राक्षसं । ततो भीमो महाबाहुरारुज्य तरसा द्रुमं ।
दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा । चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवं ।
निमेषान्तरमात्रेण तथैव विजयोऽर्ज्जुनः । निवार्य्य भीमो जिष्णुं तं तद्रक्षो मेघनिस्वनं । ४२५
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत । इत्युक्त्वैनमभिक्रुद्धः कक्षामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटो बली । तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ।
यमदण्डप्रतीकाशं ततस्तं तस्य मूर्द्धनि । पातयामास वेगेन कुलिशं मघवानिव ।
असम्भ्रान्तन्तु तद्रक्षः समरे प्रत्यदृश्यत । चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव ।
तदुदस्तमलातन्तु भीमः प्रहरतां वरः । पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् । ४३०
किर्म्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवं । दण्डपाणिरिव क्रुद्धः समरे प्रत्यधावत ।
तद्वृक्षयुद्धमभवन्महीरुहविनाशनं । वालिसुग्रीवयोर्भ्रात्रोर्यथा स्त्रीकाङ्क्षिणोः पुरा ।
शीर्षयोः पतिता वृक्षा विभिदुर्नैकधा तयोः । यथैवोत्पलपद्मानि मत्तयोर्द्विपयोस्तथा ।

मुञ्जवल्वज्जर्जरीभूता बहवस्तत्र पादपाः। चीराणीव व्युदस्तानि रेजुस्तत्र महावने।
तद्वृक्षयुद्धमभवन्मुहूर्त्तं भरतर्षभ। राक्षसानाञ्च मुख्यस्य नराणामुत्तमस्य च। ४३५
ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः। प्राहिणोद्राक्षसः क्रुद्धो भीमसेनश्चचाल ह।
तं शिलाताडनजडं पर्य्यधावत राक्षसः। बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करं।
तावन्योऽन्यं समाश्लिष्य प्रकर्षन्तौ परस्परं। उभावपि चकाशेते प्रयुद्धौ वृषभाविव।
तयोरासीत् सुतुमुलः संप्रहारः सुदारुणः। नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः।
दुर्य्योधननिकाराच्च बाहुवीर्य्याच्च दर्पितः। कृष्णानयनदृष्टश्च व्यवर्द्धत वृकोदरः। ४४०
अभिपद्य च बाहुभ्यां प्रत्यगृह्णादमर्षितः। मातङ्गमिव मातङ्गः प्रभिन्नकरटामुखं।
स चाप्येनं ततो रक्षः प्रतिजग्राह वीर्य्यवान्। तमाक्षिपद्भीमसेनो बलेन बलिनाम्बरः।
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा। शब्दः समभवद्घोरो वेणुस्फोटसमो युधि।
अथैनमाक्षिप्य बलाद्गृह्य मध्ये वृकोदरः। धूनयामास वेगेन वायुश्चण्ड इव द्रुमं।
स भीमेन परामृष्टो दुर्ब्बलो बलिना रणे। व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवं। ४४५
तत एनं परिश्रान्तमुपलभ्य वृकोदरः। योक्त्रयामास बाहुभ्यां पशुं रशनया यथा।
विनदन्तं महानादं भिन्नभेरीस्वनं बली। भ्रामयामास सुचिरं विस्फुरन्तमचेतनं।
तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः। प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत्।
आक्रम्य च कटीदेशे जानुना राक्षसाधमं। पीडयामास पाणिभ्यां तस्य कण्ठं वृकोदरः।
अथ जर्ज्जरसर्व्वाङ्गं व्याविद्धनयनाम्बरं। भूतले भ्रामयामास वाक्यञ्चेदमुवाच ह। ४५०
हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनं। करिष्यसि गतश्चापि यमस्य सदनं प्रति।
इत्येवमुक्त्वा पुरुषप्रवीरस्तं राक्षसं क्रोधपरीतचेताः। विस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज्ज।
तस्मिन् हते तोयदतुल्यरूपे कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः। भीमं प्रशस्याथ गुणैरनेकैर्हृष्टास्ततो द्वैतवनाय जग्मुः।
॥ विदुर उवाच ॥ एवं विनिहतः संख्ये किर्म्मीरो मनुजाधिप। भीमेन वचनात्तस्य धर्म्मराजस्य कौरव।
ततो निष्कण्टकं कृत्वा वनं तदपराजितः। द्रौपद्या सह धर्म्मज्ञो वसतिं तामुवास ह। ४५५
समाश्वास्य च ते सर्व्वे द्रौपदीं भरतर्षभाः। प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरं।
भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः। विविशुस्ते वनं वीराः क्षेमं निहतकण्टकं।
स मया गच्छता मार्गे विनिकीर्णो भयावहः। वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः।
तत्राश्रौषं महच्चैतत् कर्म्म भीमस्य भारत। ब्राह्मणानां कथयतां ये तत्रासन् समागताः।
एवं विनिहतं संख्ये किर्म्मीरं रक्षसां वरं। श्रुत्वा ध्यानपरो राजा निशश्वासार्त्तवत्तदा। ४६०

इति श्रीमहाभारते आरण्यपर्व्वणि किर्म्मीरवधपर्व्वणि विदुरवाक्ये एकादशोऽध्यायः॥ ११ ॥ समाप्तञ्च किर्म्मीरवधपर्व्व ॥

---

## ॥ अथार्ज्जुनाभिगमनपर्व्व ॥ ३ ॥

॥ वैशम्पायन उवाच ॥ भोजाः प्रव्रजितान् श्रुत्वा वृष्णयश्चान्धकैः सह । पाण्डवान् दुःखसन्तप्तान् समाजग्मुर्महावने ।
पञ्चालस्य च दायादा धृष्टकेतुश्च चेदिपः । कैकेयाश्च महावीर्य्या भ्रातरो लोकविश्रुताः ।
वने द्रष्टुं ययुः पार्थान् क्रोधामर्षसमन्विताः । गर्हयन्तो धार्त्तराष्ट्रान् किं कुर्म्म इति चाब्रुवन् ।
वासुदेवं पुरस्कृत्य सर्व्वे ते क्षत्रियर्षभाः । परिवार्य्योपविविशुर्द्धर्म्मराजं युधिष्ठिरं । अभिवाद्य कुरुश्रेष्ठं विषणः केशवोऽब्रवीत् ।
॥ वासुदेव उवाच ॥ दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः । दुःशासनचतुर्थानां भूमिः पास्यति शोणितं । ४६५
एतान्निहत्य समरे ये च तेषां पदानुगाः । तांश्च सर्व्वान् विनिर्ज्जित्य सहितान् सनराधिपान् ।
ततः सर्व्वेऽभिषिञ्चामो धर्म्मराजं युधिष्ठिरं । निकृत्योपचरन् वध्य एव धर्म्मः सनातनः ।
॥ वैशम्पायन उवाच ॥ पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्द्दनं । अर्ज्जुनः शमयामास दिधक्षन्तमिव प्रजाः ।
संक्रुद्धं केशवं दृष्ट्वा पूर्व्वदेहेषु फाल्गुनः । कीर्त्तयामास कर्म्माणि सत्यकीर्त्तेर्महात्मनः ।
पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः । प्रजापतिपतेर्व्विष्णोर्लोकनाथस्य धीमतः । ४७०
॥ अर्ज्जुन उवाच ॥ दशवर्षसहस्राणि यत्र सायंगृहो मुनिः । व्यचरस्त्वं पुरा कृष्ण पर्व्वते गन्धमादने ।
दशवर्षसहस्राणि दशवर्षशतानि च । पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन् पुरा ।
ऊर्द्ध्वबाहुर्व्विशालायां बदर्य्यां मधुसूदन । अतिष्ठ एकपादेन वायुभक्षः शतं समाः ।
अपकृष्टोत्तरासङ्गः कृशो धमनिसन्ततः । आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके ।
प्रभासमप्यथासाद्य तीर्थं पुण्यजनोचितं । तथा कृष्ण महातेजा दिव्यं वर्षसहस्रकं । अतिष्ठस्त्वं यथैकेन पादेन नियमस्थितः । ४७५
लोकप्रवृत्तिहेतुस्त्वमिति व्यासो ममाब्रवीत् । क्षेत्रज्ञः सर्व्वभूतानामादिरन्तश्च केशव ।
निधानं तपसां कृष्ण यज्ञस्त्वञ्च सनातनः । निहत्य नरकं भौममाहृत्य मणिकुण्डले । प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ।
कृत्वा तत्कर्म्म लोकानामृषभः सर्व्वलोकजित् । अवधीस्त्वं रणे सर्व्वान् समेतान् दैत्यदानवान् ।
ततः सर्व्वेश्वरत्वञ्च सम्प्रदाय शचीपतेः । मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ।
स त्वं नारायणो भूत्वा हरिरासीः परन्तप । ब्रह्मा सोमश्च सूर्य्यश्च धर्म्मो धाता यमोऽनलः । ४८०
वायुर्व्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः । अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ।
परायणं देवमूर्द्ध क्रतुभिर्म्मधुसूदन । अयजो भूरितेजा वै कृष्ण चैत्ररथे वने ।
शतं शतसहस्राणि सुवर्णस्य जनार्द्दन । एकैकस्मिंस्तदा यज्ञे परिपूर्णानि भागशः ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दन । त्वं विष्णुरिति विख्यात इन्द्रादवरजो विभुः ।
शिशुर्भूत्वा दिवं खञ्च पृथिवीञ्च परन्तप । त्रिभिर्व्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा । ४८५
संप्राप्य दिवमाकाशमादित्यसदने स्थितः । अत्यरोचश्च भूतात्मन् भास्करं स्वेन तेजसा ।
प्रादुर्भावसहस्रेषु तेषु तेषु त्वया विभो । अधर्म्मरुचयः कृष्ण निहताः शतशोऽसुराः ।

सादिता मौरवाः पाशा निसुन्दनरकौ हतौ। कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति।
जारूथ्यामाहुतिः क्राथः शिशुपालो जनैः सह। जरासन्धश्च शैब्यश्च शतधन्वा च निर्ज्जितः।
तथा पर्ज्जन्यघोषेण रथेनादित्यवर्चसा। अवाप्सीर्महिषीं भोज्यां रणे निर्ज्जित्य रुक्मिणं। ४९०
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान्। हतः सौभपतिः शाल्वस्त्वया सौभञ्च पातितं।
इरावत्यां हतो भोजः कार्त्तवीर्य्यसमो युधि। गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ।
ताञ्च भोगवतीं पुण्यामृषिकान्तां जनार्द्दन। द्वारकामात्मसात् कृत्वा समुद्रं गमयिष्यसि।
न क्रोधो न च मात्सर्य्यं नानृतं मधुसूदन। त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजु।
आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा। आगम्य ऋषयः सर्व्वे ऽयाचन्ताभयमच्युत। ४९५
युगान्ते सर्व्वभूतानि संक्षिप्य मधुसूदन। आत्मनैवात्मसात् कृत्वा जगदास्से परन्तप।
युगादौ तव वार्ष्णेय नाभिपद्मादजायत। ब्रह्मा चराचरगुरुर्यस्येदं सकलं जगत्।
तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ। तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरेः।
ललाटाज्जातवान् शम्भुः शूलपाणिस्त्रिलोचनः। इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ।
त्वन्नियोगकरावेताविति मे नारदोऽब्रवीत। तथा नारायण पुरा क्रतुभिर्भूरिदक्षिणैः। ५००
इष्टवांस्त्वं महासत्रं कृष्ण चैत्ररथे वने। नैवं पूर्व्वे नापरे वा करिष्यन्ति कृतानि वा।
यानि कर्म्माणि देव त्वं बाल एव महाबलः। कृतवान् पुण्डरीकाक्ष बलदेवसहायवान्।
कैलासभवने चापि ब्राह्मणैर्न्यवसः सह ॥ वैशम्पायन उवाच ॥ एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्द्दनः। ममैव त्वं तवैवाहं ये मदीयास्तवैव ते।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु। नरस्त्वमसि दुर्द्धर्ष हरिर्नारायणो ह्यहं। ५०५
काले लोकमिमं प्राप्तौ नरनारायणावृषी। अनन्यः पार्थ मत्तस्त्वं त्वत्तश्चाहं तथैव च।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने केशवेन महात्मना।
तस्मिन् वीरसमावाये संरब्धेष्वथ राजसु। धृष्टद्युम्नमुखैर्व्वीरैर्भ्रातृभिः परिवारिता।
पाञ्चाली पुण्डरीकाक्षमासीनं भ्रातृभिः सह। अभिगम्याब्रवीत् क्रुद्धा शरण्यं शरणैषिणी।
॥ द्रौपद्युवाच ॥ पूर्व्वे प्रजाभिसर्गे त्वामाहुरेकं प्रजापतिं। स्रष्टारं सर्व्वलोकानामसितो देवलो ऽब्रवीत्। ५१०
विष्णुस्त्वमसि दुर्द्धर्ष त्वं यज्ञो मधुसूदन। यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाऽब्रवीत्।
ऋषयस्त्वां क्षमामाहुः सत्यञ्च पुरुषोत्तम। सत्याद्यज्ञोऽसि संभूतः कश्यपस्त्वां यथाऽब्रवीत्।
साध्यानामपि देवानां शिवानामीश्वरेश्वर। भूतभावन भूतेश यथा त्वां नारदोऽब्रवीत्।
ब्रह्मशङ्करशक्राद्यैर्द्देववृन्दैः पुनः पुनः। क्रीडसे त्वं नरव्याघ्र बालः क्रीडनकैरिव।
द्यौश्च ते शिरसा व्याप्ता पद्भ्याञ्च पृथिवी प्रभो। जठरं ते इमे लोकाः पुरुषोऽसि सनातनः। ५१५
विद्यातपोऽभितप्तानां तपसा भावितात्मनां। आत्मदर्शनतृप्तानामृषीणामसि सत्तमः।
राजर्षीणां पुण्यकृतामाहवेष्वनिवर्त्तिनां। सर्व्वधर्म्मोपपन्नानां त्वं गतिः पुरुषर्षभ। त्वं प्रभुस्त्वं विभुश्च त्वं भूतात्मा त्वं विचेष्टसे।

लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश। नभश्चन्द्रश्च सूर्य्यश्च त्वयि सर्व्वं प्रतिष्ठितं।
मर्त्यता चैव भूतानाममरत्वं दिवौकसां। त्वयि सर्व्वं महाबाहो लोककार्य्यं प्रतिष्ठितं।
सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन। ईशस्त्वं सर्व्वभूतानां ये दिव्या ये च मानुषाः। १२०
कथं नु भार्य्या पार्थानां तव कृष्ण सखी विभो। धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी।
स्त्रीधर्म्मिणी वेपमाना शोणितेन समुक्षिता। एकवस्त्रा विकृष्टाऽस्मि दुःखिता कुरुसंसदि।
राज्ञां मध्ये सभायान्तु रजसाऽभिपरिप्लुता। दृष्ट्वा च मां धार्त्तराष्ट्राः प्राहसन् पापचेतसः।
दासीभावेन मां भोक्तुमीषुस्ते मधुसूदन। जीवत्सु पाण्डुपुत्त्रेषु पाञ्चालेषु च वृष्णिषु।
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः। स्नुषा भवामि धर्म्मेण साऽहं दासीकृता बलात्। १२५
गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान्। यत्क्लिश्यमानां प्रेक्षन्ते धर्म्मपत्नीं यशस्विनीं।
धिग्बलं भीमसेनस्य धिक्पार्थस्य च गाण्डिवं। यौ मां विप्रकृतां क्षुद्रैर्म्मर्षयेतां जनार्द्दन।
शाश्वतोऽयं धर्म्मपथः सद्भिराचरितः सदा। यद्भार्य्यां परिरक्षन्ति भर्त्तारोऽल्पबला अपि।
भार्य्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता। प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः।
आत्मा हि जायते तस्यां तस्मात् जाया भवत्युत। भर्त्ता च भार्य्यया रक्ष्यः कथं जायान्ममोदरे। १३०
नन्विमे शरणं प्राप्तं न त्यजन्ति कदाचन। ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः।
पञ्चभिः पतिभिर्जाताः कुमारा मे महौजसः। एतेषामप्यवेक्षार्थं त्रातव्याऽस्मि जनार्द्दन।
प्रतिविन्ध्यो युधिष्ठिरात् सुतसोमो वृकोदरात्। अर्ज्जुनात् श्रुतकीर्त्तिस्तु शतानीकस्तु नाकुलिः।
कनिष्ठात् श्रुतकर्म्मा च सर्व्वे सत्यपराक्रमाः। प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः।
नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः। किमर्थं धार्त्तराष्ट्राणां सहन्ते दुर्ब्बलीयसां। १३५
अधर्म्मेण हृतं राज्यं सर्व्वे दासाः कृतास्तथा। सभायां परिकृष्टाऽहमेकवस्त्रा रजस्वला।
नाधिज्यमपि यत् शक्यं कर्त्तुमन्येन गाण्डिवं। अन्यत्रार्ज्जुनभीमाभ्यां त्वया वा मधुसूदन।
धिग्बलं भीमसेनस्य धिक्पार्थस्य च पौरुषं। यत्र दुर्य्योधनः कृष्ण मुहूर्त्तमपि जीवति।
य एतानाक्षिपद्राष्ट्रात् सह मात्राऽविहिंसकान्। अधीयानान् पुरा बालान् व्रतस्थान्मधुसूदन
भोजने भीमसेनस्य पापः प्राक्षेपयद्विषं। कालकूटं नवन्तीक्ष्णं सम्भृतं लोमहर्षणं। १४०
तज्जीर्णमविकारेण सहान्नेन जनार्द्दन। सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम।
प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरं। बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुनराव्रजत्।
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनं। उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः।
आशीविषैः कृष्ण सर्पैर्भीमसेनमदंशयत्। सर्व्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा।
प्रतिबुद्धस्तु कौन्तेयः सर्व्वान् सर्पानपोथयत्। सारथिञ्चास्य दयितमपहस्तेन जघ्निवान्। १४५
पुनः सुप्तानुपाधाक्षीद्वालकान् वारणावते। शयानानार्य्यया सार्द्धं को नु तत् कर्त्तुमर्हति।
यत्रार्य्या रुदती भीता पाण्डवानिदमब्रवीत्। महद्व्यसनमापन्ना शिखिना परिवारिता।

हा हताऽस्मि कुतो न्वद्य भवेच्छान्तिरिहानलात् । अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ।
तत्र भीमो महाबाहुर्व्वायुवेगपराक्रमः । आर्य्यामाश्वासयामास भ्रातृंश्चापि वृकोदरः ।
वैनतेयो यथा पक्षी गरुत्मान् पततांवरः । तथैवाभिपतिष्यामि भयं वो नेह विद्यते । ५८०
आर्य्यामङ्केन वामेन राजानं दक्षिणेन च । अंसयोश्च यमौ कृत्वा पृष्ठे वीभत्सुमेव च ।
सहसोत्पत्य वेगेन सर्व्वानादाय वीर्य्यवान् । भ्रातृनार्य्यांश्च बलवान् मोचयामास पावकात् ।
ते रात्रौ प्रस्थिताः सर्व्वे सह मात्रा यशस्विनः । अभ्यगच्छन्महारण्यं हिडिम्बवनमन्तिकात् ।
श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः । सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ।
सा दृष्ट्वा पाण्डवांस्तत्र सुप्तान्मात्रा सह क्षितौ । हृच्छयेनाभिभूतात्मा भीमसेनमकामयत् । ५८५
भीमस्य पादौ कृत्वा तु स्व उत्सङ्गे ततोऽबला । पर्य्यमर्द्दत संहृष्टा कल्याणी मृदुपाणिना ।
तामबुध्यदमेयात्मा बलवान् सत्यविक्रमः । पर्य्यपृच्छत तां भीमः किमिहेच्छस्यनिन्दिते ।
एवमुक्ता तु भीमेन राक्षसी कामरूपिणी । भीमसेनं महात्मानमाह चैवमनिन्दिता ।
पलायध्वमितः क्षिप्रं मम भ्रातैष वीर्य्यवान् । आगमिष्यति वो हन्तुं तस्माद्गच्छत मा चिरं ।
अथ भीमोऽभ्युवाचैनां साभिमानमिदं वचः । नोद्विजेयमहं तस्मान्निहनिष्येऽहमागतं । ५९०
तयोः श्रुत्वा तु संजल्पमागच्छद्राक्षसाधमः । भीमरूपो महानादान् विसृजन् भीमदर्शनः ।
॥ राक्षस उवाच ॥ केन सार्द्धं कथयसि आनयैनं ममान्तिकं । हिडिम्बे भक्षयिष्यावो न चिरं कर्त्तुमर्हसि ।
सा कृपासंगृहीतेन हृदयेन मनस्विनी । नैनमैच्छत्तदाख्यातुमनुक्रोशादनिन्दिता ।
स नादान् विनदन् घोरान् राक्षसः पुरुषादकः । अभ्यद्रवत वेगेन भीमसेनं तदा किल ।
तमभिद्रुत्य संक्रुद्धो वेगेन महता बली । अगृह्णात् पाणिना पाणिं भीमसेनस्य राक्षसः । ५९५
इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढं । संहृत्य भीमसेनाय व्याक्षिपत् सहसा करं ।
गृहीतं पाणिना पाणिं भीमसेनस्य रक्षसा । नामृष्यत महाबाहुस्तत्राक्रुध्यद्वृकोदरः ।
तदासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः । सर्व्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ।
विक्रीड्य सुचिरं भीमो राक्षसेन सहानघ । निजघान महावीर्य्यस्तं तदा निर्ब्बलं बली ।
हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह । हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः । ६००
ततः संप्राद्रवन् सर्व्वे सह मात्रा परन्तपाः । एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ।
प्रस्थाने व्यास एषाञ्च मन्त्री प्रियहिते रतः । ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ।
तत्राप्यासादयामासुर्व्वकं नाम महाबलं । पुरुषादं प्रतिभयं हिडिम्बेनैव सम्मितं ।
तञ्चापि विनिहत्योग्रं भीमः प्रहरतांवरः । सहितो भ्रातृभिः सर्व्वैर्द्रुपदस्य पुरं ययौ ।
लब्धाऽहमपि तत्रैव वसता सव्यसाचिना । यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा । ६०५
एवं सुयुद्धे पार्थेन जिताऽहं मधुसूदन । स्वयम्वरे महत्कर्म्म कृत्वा न सुकरं परैः ।
एवं क्लेशैः सुबहुभिः क्लिश्यमाना सुदुःखिता । निवसाम्यार्य्यया हीना कृष्ण धौम्यपुरःसरा ।

त इमे सिंहविक्रान्ता वीर्य्येणाभ्यधिकाः परैः। निहीनैः परिक्लिश्यन्तीं समुपेक्षन्ति मां कथं।
एतादृशानि दुःखानि सहन्ती दुर्बलीयसां। दीर्घकालं प्रदीप्तास्मि पापानां पापकर्म्मणां।
कुले महति जातास्मि दिव्येन विधिना किल। पाण्डवानां प्रिया भार्य्या स्नुषा पाण्डोर्महात्मनः। १३०
कचग्रहमनुप्राप्ता साऽस्मि कृष्ण वरा सती। पञ्चानां पाण्डुपुत्राणां प्रेक्षतां मधुसूदन।
इत्युक्त्वा प्रारुदत् कृष्णा मुखं प्रच्छाद्य पाणिना। पद्मकोषप्रकाशेन मृदुना मृदुभाषिणी।
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ। अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः।
चक्षुषी परिमार्ज्जन्ती निश्वसन्ती पुनः पुनः। वाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत्।
नैव मे पतयः सन्ति न पुत्त्रा नच बान्धवाः। न भ्रातरो नच पिता नैव त्वं मधुसूदन। १३५
ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत्। न च मे शाम्यते दुःखं कर्णो यत् प्राहसत्तदा।
चतुर्भिः कारणैः कृष्ण त्वया रक्ष्यास्मि नित्यशः। सम्बन्धाद्गौरवात् सख्यात् प्रभुत्वेनैव केशव।
॥ वैशम्पायन उवाच ॥ अथ तामब्रवीत् कृष्णस्तस्मिन् वीरसमागमे ॥ वासुदेव उवाच॥ रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भाविनि।
बीभत्सुशरसंच्छन्नान् शोणितौघपरिप्लुतान्। निहतान् वल्लभान् वीक्ष्य शयानान् वसुधातले।
यत्समर्थं पाण्डवानां तत्करिष्यामि मा शुच। सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि। १४०
पतेद्द्यौर्हिमवान् शीर्य्येत् पृथिवी शकलीभवेत्। शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत्।
तच्छ्रुत्वा द्रौपदी वाक्यं प्रतिवाक्यमथाच्युतात्। साचीकृतमवैक्षत् सा पाञ्चाली मध्यमं पतिं।
आबभाषे महाराजद्रौपदीमर्ज्जुनस्तदा। मारोदीः शुभताम्राक्षि यथाह मधुसूदनः।
तथा तद्भविता देवि नान्यथा वरवर्णिनि ॥ धृष्टद्युम्न उवाच ॥ अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहं।
दुर्य्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः। रामकृष्णौ व्यपाश्रित्य अजेयाः स्म रणे स्वसः। १४१
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ वैशम्पायन उवाच ॥ इत्युक्तेऽभिमुखा वीरा वासुदेवमुपस्थिताः। तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत्।
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्रौपद्याश्वासने द्वादशोऽध्यायः ॥ १२ ॥
॥ वासुदेव उवाच ॥ नैतत्कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप। यद्यहं द्वारकायां स्यां राजन्सन्निहितः पुरा।
आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः। आम्बिकेयेन दुर्द्धर्ष राज्ञा दुर्य्योधनेन च।
वारयेयमहं द्यूतं बहून् दोषान् प्रदर्शयन्। भीष्मद्रोणौ समानाय्य कृपं वाह्लीकमेव च।
वैचित्रवीर्य्यं राजानमलं द्यूतेन कौरव। पुत्त्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो। १००
तत्रावक्ष्यमहं दोषान् यैर्भवान् व्यतिरोपितः। वीरसेनसुतो यैस्तु राज्यात् प्रभ्रंशितः पुरा।
अतर्कितविनाशश्च देवनेन विशाम्पते। सातत्यञ्च प्रसङ्गस्य वर्णयेयं यथातथं।
स्त्रियोऽक्षा मृगया पानमेतत् कामसमुत्थितं। दुःखं चतुष्टयं प्रोक्तं यैर्नरो भ्रश्यते श्रियः।
तत्र सर्व्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः। विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः।

एकाहाद्द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च । अभुक्तनाशश्चार्थानां वाक्पारुष्यञ्च केवलं। ६०५
एतच्चान्यच्च कौरव्य प्रसङ्गिकटुकोदयं । द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतं ।
एवमुक्तो यदि मया गृह्णीयाद्वचनं मम । अनामयं स्याद्धर्म्मश्च कुरूणां कुरुवर्द्धन ।
न चेत् स मम राजेन्द्र गृह्णीयान्मधुरं वचः । पथ्यञ्च भरतश्रेष्ठ निगृह्णीयां बलेन तं ।
अथैनमपनीतेन सुहृदो नाम दुर्हृदः । सभासदोऽनुवर्त्तेरंस्तांश्च हन्यां दुरोदरान्।
असान्निध्यन्तु कौरव्य ममानर्त्तेष्वभूत्तदा । येनेदं व्यसनं प्राप्ता भवन्तो द्यूतकारितं । ६१०
सोऽहमेत्य कुरुश्रेष्ठ द्वारकां पाण्डुनन्दन । अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथं ।
श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः । तूर्णमभ्यागतोऽस्मि त्वां द्रष्टुकामो विशाम्पते।
अहो कृच्छ्रमनुप्राप्ताः सर्व्वे स्म भरतर्षभ । सोऽहं त्वां व्यसने मग्नं पश्यामि सह सोदरैः ।
इति श्रीमहाभारते आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि वासुदेववाक्ये त्रयोदशोऽध्यायः ॥ १३ ॥
॥ युधिष्ठिर उवाच ॥ असान्निध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन । क्व चासीद्विप्रवासस्ते किञ्चाकार्षीः प्रवासतः।
॥ कृष्ण उवाच ॥ शाल्वस्य नगरं सौभं गतोऽहं भरतर्षभ । निहन्तुं कौरवश्रेष्ठ तत्र मे शृणु कारणं । ६१५
महातेजा महाबाहुर्यः स राजा महायशाः । दमघोषात्मजो वीरः शिशुपालो मया हतः ।
यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति । स रोषवशमापन्नो नामृष्यत दुरात्मवान्।
श्रुत्वा तं निहतं शाल्वस्तीव्ररोषसमन्वितः । उपायाद्द्वारकां शून्यामिहस्थे मयि भारत ।
स तत्र योधितो राजन् कुमारैर्वृष्णिपुङ्गवैः । आगतः कामगं सौभमारुह्यैवं नृशंसवत् ।
ततो वृष्णिप्रवीरांस्तान् बालान् हत्वा बहूंस्तदा । पुरोद्यानानि सर्व्वाणि भेदयामास दुर्मतिः । ६२०
उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः । वासुदेवः स मन्दात्मा वसुदेवसुतो गतः ।
तस्य युद्धार्थिनो दर्पं युद्धे नाशयिताऽस्म्यहं । आनर्त्ताः सत्यमाख्यात तत्र गन्ताऽस्मि यत्र सः ।
तं हत्वा विनिवर्त्तिष्ये कंसकेशिनिसूदनं । अहत्वा न निवर्त्तिष्ये सत्येनायुधमालभे ।
क्वासौ क्वासाविति पुनस्तत्र तत्र प्रधावति । मया किल रणे योद्धुं काङ्क्षमाणः स सौभराट् ।
अद्य तं पापकर्म्माणं क्षुद्रं विश्वासघातिनं । शिशुपालवधामर्षाद्गमयिष्ये यमक्षयं । ६२५
मम पापस्वभावेन भ्राता येन निपातितः । शिशुपालो महीपालस्तं वधिष्ये महीतले ।
भ्राता बालश्च राजा च न च संग्राममूर्द्धनि । प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्द्दनं ।
एवमादि महाराज विलप्य दिवमास्थितः । कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन ।
तमश्रौषमहं गत्वा यथावृत्तः स दुर्मतिः । मयि कौरव्य दुष्टात्मा मार्त्तिकावतको नृपः ।
ततोऽहमपि कौरव्य रोषव्याकुलमानसः । निश्चित्य मनसा राजन् वधायास्य मनो दधे । ६३०
आनर्त्तेषु विमर्द्दञ्च क्षेपञ्चात्मनि कौरव । प्रवृद्धमवलेपञ्च तस्य दुष्कृतकर्म्मणः ।
ततः सौभवधायाहं प्रतस्थे पृथिवीपते । स मया सागरावर्त्ते दृष्ट आसीत् परीप्सता ।
ततः प्रध्माप्य जलजं पाञ्चजन्यमहं नृप । आहूय शाल्वं समरे युद्धाय समवस्थितः ।

तन्मुहूर्त्तमभूद्युद्धं तत्र मे दानवैः सह। वशीभूताश्च मे सर्व्वेभूतले च निपातिताः।
एतत्कार्य्यं महाबाहो येनाहं नागमं तदा। श्रुत्वैव हास्तिनपुरं द्यूतञ्चाविनयोत्थितं। द्रुतमागतवान् युष्मान्द्रष्टुकामः सुदुःखितान्। ६३५

इति श्रीमहाभारते आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने चतुर्द्दशो ऽध्यायः॥ १४ ॥

॥ युधिष्ठिर उवाच॥ वासुदेव महाबाहो विस्तरेण महामते। सौभस्य वधमाचक्ष्व नहि तृप्यामि कथ्यतः।
॥ वासुदेव उवाच॥ हतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृप। उपायाद्भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीं।
अरुन्धत्ता सुदुष्टात्मा सर्व्वतः पाण्डुनन्दन। शाल्वो वैहायसञ्चापि तत् पुरं व्यूह्य धिष्ठितः।
तत्रस्थोऽथ महीपालो योधयामास तां पुरीं। अभिसारेण सर्व्वेण तत्र युद्धमवर्त्तत।
पुरी समन्ताद्विहिता सपताका सतोरणा। सचक्रा सहुडा चैव सयन्त्रखनका तथा। ६४०
सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा। सचक्रग्रहणी चैव सोल्कालातावपोथिका।
सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका। सतोमराङ्कुशा राजन् सशतघ्नीकलाङ्गला।
सभुशुण्ड्यश्मगुडका सायुधा सपरश्वधा। लोहचर्म्मवती चापि साग्निः सगुडशृङ्गिका।
शास्त्रदृष्टेन विधिना संयुक्ता भरतर्षभ। रथैरनेकैर्व्विविधैर्गदशाम्बोद्धवादिभिः।
पुरुषैः कुरुशार्दूल समर्थैः प्रतिवारणे। अभिख्यातकुलैर्व्वीरैर्दृष्टवीर्य्यैश्च संयुगे। ६४५
मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता। उत्क्षिप्तगुल्मैश्च तथा हयैश्च सपताकिभिः।
आघोषितञ्च नगरे न पातव्या सुरेति वै। प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः।
प्रमत्तेष्वभिघातं हि कुर्य्याच्छाल्वो नराधिपः। इति कृत्वाऽप्रमत्तास्ते सर्व्वे वृष्ण्यन्धकाः स्थिताः।
आनर्त्ताश्च तथा सर्व्वे नटनर्त्तकगायनाः। बहिर्निर्वासिताः क्षिप्रं रक्षद्भिर्व्वित्तसञ्चयं।
संक्रमा भेदिताः सर्व्वे नावश्च प्रतिषेधिताः। परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः। ६५०
उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः। समन्तात् क्रोशमात्रञ्च कारिता विषमा च भूः।
प्रकृत्याविषमं दुर्गं प्रकृत्या च सुरक्षितं। प्रकृत्या चायुधोपेतं विशेषेण तदाऽनघ।
सुरक्षितं सुगुप्तञ्च सर्व्वायुधसमन्वितं। तत्पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा।
नचामुद्रोऽभिनिर्य्याति न चामुद्रः प्रवेश्यते। वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे।
अनुरथ्यासु सर्व्वासु चत्वरेषु च कौरव। बलं बभूव राजेन्द्र प्रभूतगजवाजिमत्। ६५५
दत्तवतनभक्तञ्च दत्तायुधपरिच्छदं। कृतोपधानञ्च तदा बलमासीन्महाभुज।
न कुप्यवेतनी कश्चिन्नचातिक्रान्तवेतनी। नानुग्रहभृतः कश्चिन्नचादृष्टपराक्रमः।
एवं सुविहिता राजन् द्वारका भूरिदक्षिणा। आहुकेन सुगुप्ता च राज्ञा राजीवलोचन।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने पञ्चदशो ऽध्यायः॥ १५ ॥

॥ कृष्ण उवाच॥ तां तूपयातो राजेन्द्र शाल्वः सौभपतिस्तदा। प्रभूतनरनागेन बलेनोपविवेश ह।
समे निविष्टा सा सेना प्रभूतसलिलाशये। चतुरङ्गबलोपेता शाल्वराजाभिपालिता। ६६०

वर्ज्जयित्वा श्मशानानि देवतायतनानि च। वल्मीकांश्चैत्यवृक्षांश्च तन्निविष्टमभूद्बलं।
अनीकानां विभागेन पन्थानः संवृताभवन्। प्रवणाश्च न चैवासन् शाल्वस्य शिविरे नृप।
सर्व्वायुधसमोपेतं सर्व्वशस्त्रविशारदं। रथनागाश्वकलिलं पदातिध्वजसङ्कुलं।
तुष्टपुष्टबलोपेतं वीरलक्षणलक्षितं। विचित्रध्वजसन्नाहं विचित्ररथकार्म्मुकं।
सन्निवेश्य च कौरव्य द्वारकायां नरर्षभ। अभिसारयामास तदा वेगेन पतगेन्द्रवत्। ६६५
तदापतन्तं संदृश्य बलं शाल्वपतेस्तदा। निर्य्याय योधयामासुः कुमारा वृष्णिनन्दनाः।
असहन्तोऽभियानं तत् शाल्वराजस्य कौरव। चारुदेष्णश्च शाम्बश्च प्रद्युम्नश्च महारथः।
ते रथैर्द्दंशिताः सर्व्वे विचित्राभरणध्वजाः। संसक्ताः शाल्वराजस्य बहुभिर्य्योधपुङ्गवैः।
गृहीत्वा कार्म्मुकं शाम्बः शाल्वस्य सचिवं रणे। योधयामास संहृष्टः क्षेमवृद्धिं चमूपतिं।
तस्य वाणमयं वर्षं जाम्बवत्याः सुतो महत्। मुमोच भरतश्रेष्ठ यथा वर्षं सहस्रदृक्। ६७०
तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः। क्षेमवृद्धिर्महाराज हिमवानिव निश्चलः।
ततः शाम्बाय राजेन्द्र क्षेमवृद्धिरपि स्वयं। मुमोच मायाविहितं शरजालं महत्तरं।
ततो मायामयं जालं माययैव विदार्य्य सः। शाम्बः शरसहस्रेण रथमस्याभ्यवर्षत।
ततः स विद्धः शाम्बेन क्षेमवृद्धिश्चमूपतिः। अपायाज्जवनैरश्वैः शाम्बवाणप्रपीडितः।
तस्मिन् विप्रद्रुते क्रूरे शाल्वस्याथ चमूपतौ। वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली। ६७५
अभिपन्नस्तु राजेन्द्र शाम्बो वृष्णिकुलोद्वहः। वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन्।
स वेगवति कौन्तेय शाम्बो वेगवतीं गदां। चिक्षेप तरसा वीरो व्याविध्य सत्यविक्रमः।
तया त्वभिहतो राजन् वेगवान् न्यपतद्भुवि। वातरुग्ण इव क्षुण्णो जीर्णमूलो वनस्पतिः।
तस्मिन् विनिहते वीरे गदानुन्ने महासुरे। प्रविश्य महतीं सेनां योधयामास मे सुतः।
चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः। महारथः समाज्ञातो महाराज महाधनुः। ६८०
ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः। वृत्रवासवयो राजन् यथा पूर्व्वं तथाऽभवत्।
अन्योऽन्यस्याभिसंक्रुद्धावन्योऽन्यं जघ्नतुः शरैः। विनदन्तौ महारावान् सिंहाविव महाबलौ।
रौक्मिणेयस्ततो वाणमग्न्यर्क्कोपमवर्चसं। अभिमन्त्र्य महास्त्रेण सन्दधे शत्रुनाशनं।
स विविन्ध्याय सक्रोधः समाहूय महारथः। चिक्षेप मे सुतो राजन् स गतासुरथापतत्।
विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूं। कामगेन स सौभेन शाल्वः पुनरुपागमत्। ६८५
ततो व्याकुलितं सर्व्वं द्वारकावासि तद्बलं। दृष्ट्वा शाल्वं महाबाहो सौभस्थं नृपते तदा।
ततो निर्य्याय कौरव्य अवस्थाप्य च तद्बलं। आनर्त्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत्।
सर्व्वे भवन्तस्तिष्ठन्तु सर्व्वे पश्यन्तु मां युधि। निवारयन्तं संग्रामे बलात् सौभं सराजकं।
अहं सौभपतेः सेनामायसैर्भुजगैरिव। धनुर्भुजविनिर्म्मुक्तैर्नाशयाम्यद्य यादवाः।
आश्वसध्वं न भीः कार्य्या सौभराडद्य नश्यति। मयाऽभिपन्नो दुष्टात्मा ससौभो विनशिष्यति। ६९०

तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः । रणादपाहरत्तूर्णं शिक्षितो दारुकिस्तदा ।
नातिदूरापयाते तु रथे रथवरप्रणुत् । धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदं । ७२०
सौते किमिदं व्यवसितं कस्माद्यासि पराङ्मुखः । नैष वृष्णिप्रवीराणामाहवे धर्म्म उच्यते ।
कच्चित् सौते न ते मोहः शाल्वं दृष्ट्वा महाहवे । विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथं ।
॥ सौतिरुवाच ॥ जानार्द्दने न मे मोहो नापि मां भयमाविशत् । अतिभारन्तु ते मन्ये शाल्वं केशवनन्दन ।
सोऽपयामि शनैर्व्वीर बलवानेष पापकृत् । मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ।
आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाऽप्यहं । रक्षितव्यो रथी नित्यमिति कृत्वाऽपयाम्यहं । ७२५
एकश्चासि महाबाहो बहवश्चापि दानवाः । न समं रौक्मिणेयाहं रणे मत्वाऽपयामि वै ।
॥ वासुदेव उवाच ॥ एवं ब्रुवति सूते तु तदा मकरकेतुमान् । उवाच सूतं कौरव्य निवर्त्तय रथं पुनः ।
॥ प्रद्युम्न उवाच ॥ दारुकात्मज मैवं त्वं पुनः कार्षीः कथञ्चन । व्यपयानं रणात् सौते जीवतो मम कर्हिचित् ।
न स वृष्णिकुले जातो यो वै त्यजति सङ्गरं । यो वा निपतितं हन्ति तवास्मीति च वादिनं ।
तथा स्त्रियञ्च यो हन्ति बालं वृद्धं तथैव च । विरथं विप्रकीर्णञ्च भग्नशस्त्रायुधं तथा । ७३०
त्वञ्च सूतकुले जातो विनीतः सूतकर्म्मणि । धर्म्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके ।
स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे । अपयानं पुनः सौते मैवं कार्षीः कथञ्चन ।
अपयातं हतं पृष्ठे भीतं रणपलायितं । गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ।
केशवस्याग्रजो वापि नीलवासा मदोत्कटः । किं वक्ष्यति महाबाहुर्बलदेवः समागतः ।
किं वक्ष्यति शिनेर्नप्ता नरसिंहो महाधनुः । अपयातं रणात् सूत शाम्बश्च समितिञ्जयः । ७३५
चारुदेष्णश्च दुर्द्धर्षस्तथैव गदसारणौ । अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे ।
शूरं सम्भावितं शान्तं नित्यं पुरुषमानिनं । स्त्रियश्च वृष्णिवीराणां किं मां वक्ष्यन्ति संहताः ।
प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवं । धिगेनमिति वक्ष्यन्ति न तु वक्ष्यन्ति साध्विति ।
धिग्वाचा परिहासोऽपि मम वा मद्विधस्य वा । मृत्युनाऽभ्यधिकः सौते स त्वं मा व्यपयाः पुनः ।
भारं हि मयि संन्यस्य यातो मधुनिहा हरिः । यज्ञं भारतसिंहस्य नहि शक्योऽद्य मर्षितुं । ७४०
कृतवर्म्मा मया वीरो निर्यास्यन्नेव वारितः । शाल्वं निवारयिष्येऽहं तिष्ठत्वमिति सूतज ।
स च सम्भावयन्मां वै निवृत्तो हृदिकात्मजः । तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथं ।
उपयान्तं दुराधर्षं शङ्खचक्रगदाधरं । पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजं ।
सात्यकिं बलदेवञ्च ये चान्ये ऽन्धकवृष्णयः । मया स्पर्द्धन्ति सततं किं नु वक्ष्यामि तानहं ।
त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः । त्वयाऽपनीतो विवशो न जीवेयं कथञ्चन । ७४५
सन्निवर्त्त रथेनाशु पुनर्द्दारुकनन्दन । न चैतदेवं कर्त्तव्यमथापत्सु कथञ्चन ।
न जीवितमहं सौते बहु मन्ये कथञ्चन । अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ।
कदा च सूतपुत्र त्वं जानीषे मां भयार्द्दितं । अपयातं रणं हित्वा यथा कापुरुषं तथा ।

न युक्तं भवता त्यक्तुं संग्रामं दारुकात्मज । मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणं ।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने अष्टादशोऽध्यायः ॥ १८ ॥

॥ वासुदेव उवाच ॥ एवमुक्तस्तु कौन्तेय सूतपुत्रस्ततोऽब्रवीत् । प्रद्युम्नं बलिनां श्रेष्ठं मधुरं श्लक्ष्णमञ्जसा । ७५०
न मे भयं रौक्मिणेय संग्रामे यच्छतो हयान् । युद्धज्ञोऽस्मि वृष्णीनां नात्र किञ्चिदतोऽन्यथा ।
आयुष्मन्नुपदेशस्तु सारथ्ये वर्त्ततां स्मृतः । सर्व्वार्थेषु रथी रक्ष्यस्त्वञ्चापि भृशपीडितः ।
त्वं हि शाल्वप्रयुक्तेन शरेणाभिहतो भृशं । कश्मलाभिहतो वीर ततोऽहमपयातवान् ।
स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया । पश्य मे हयसंयाने शिक्षां केशवनन्दन ।
दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः । वीतभीः प्रविशाम्येतां शाल्वस्य प्रथितां चमूं । ७५५
॥ वासुदेव उवाच ॥ एवमुक्त्वा ततो वीर हयान् सञ्चोद्य सङ्गरे । रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत्तदा ।
मण्डलानि विचित्राणि यमकानीतराणि च । सव्यानि च विचित्राणि दक्षिणानि च सर्व्वशः ।
प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः । उत्पतन्त इवाकाशे व्यचरंस्ते हयोत्तमाः ।
ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिं । दह्यमाना इव तदा नास्पृशंश्चरणैर्म्महीं ।
सोऽपसव्यां चमूं तस्य शाल्वस्य भरतर्षभ । चकार नातियत्नेन तदद्भुतमिवाभवत् । ७६०
अमृष्यमाणोऽपसव्यं प्रद्युम्नेन च सौभराट् । यन्तारमस्य सहसा त्रिभिर्ब्बाणैः समार्द्दयत् ।
दारुकस्य सुतस्तत्र बाणवेगमचिन्तयन् । भूय एव महाबाहो प्रययावपसव्यतः ।
ततो बाणान् बहुविधान् पुनरेव स सौभराट् । मुमोच तनये वीर मम रुक्मिणिनन्दने ।
तानप्राप्तान् शितैर्ब्बाणैश्चिच्छेद परवीरहा । रौक्मिणेयः स्मितं कृत्वा दर्शयन् हस्तलाघवं ।
छिन्नान् दृष्ट्वा तु तान् बाणान् प्रद्युम्नेन स सौभराट् । आसुरीं दारुणीं मायामास्थाय व्यसृजत् शरान् । ७६५
प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलं । ब्रह्मास्त्रेणान्तरा च्छित्वा मुमोचान्यान् पतत्त्रिणः ।
ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः । शिरस्युरसि वक्त्रे च स मुमोह पपात च ।
तस्मिन्निपतिते क्षुद्रे शाल्वे बाणप्रपीडिते । रौक्मिणेयोऽपरं बाणं सन्दधे शत्रुनाशनं ।
तमर्च्चितं सर्व्वदशार्हपूगैराशीर्विषाग्निज्वलनप्रकाशं । दृष्ट्वा शरं ज्यामभिनीयमानं बभूव हाहाकृतमन्तरीक्षं ।
ततो देवगणाः सर्व्वे सेन्द्राः सहधनेश्वराः । नारदं प्रेषयामासुः श्वसनञ्च मनोजवं । ७७०
तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसां । नैष वध्यस्त्वया वीर शाल्वराजः कथञ्चन ।
संहरस्व पुनर्ब्बाणमवध्योऽयं त्वया रणे । एतस्य च शरस्याजौ नावध्योऽस्ति पुमान् क्वचित् ।
मृत्युरस्य महाबाहो रणे देवकिनन्दनः । कृष्णः संकल्पितो धात्रा तन्न मिथ्या भवेदिति ।
ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमं । संजहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत् ।
तत उत्थाय राजेन्द्र शाल्वः समरदुर्म्मनाः । व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः । ७७५
स द्वारकां परित्यज्य क्रूरो वृष्णिभिरर्द्दितः । सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने ऊनविंशोऽध्यायः ॥ १९ ॥

॥ वासुदेव उवाच ॥ आनर्त्तनगरं मुक्तं ततोऽहमगमं तदा। महाक्रतौ राजसूये निवृत्ते नृपते तव।
अपश्यं द्वारकाञ्चाहं महाराज हतत्विषं। निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियं।
अनभिज्ञेयरूपाणि द्वारकोपवनानि च। दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजं।
अस्वस्थनरनारीकमिदं वृष्णिकुलं भृशं। किमिदं नरशार्दूल श्रोतुमिच्छामि तत्त्वतः। ७८०
एवमुक्तः स तु मया विस्तरेणेदमब्रवीत्। रोधं मोक्षञ्च शाल्वेन हार्द्दिक्यो राजसत्तम।
ततोऽहं भरतश्रेष्ठ श्रुत्वा सर्व्वमशेषतः। विनाशे शाल्वराजस्य तदैवाकरवं मतिं।
ततोऽहं भरतश्रेष्ठ समाश्वास्य पुरे जनं। राजानमाहुकञ्चैव तथैवानकदुन्दुभिं।
सर्व्वान् वृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा। अप्रमादः सदा कार्य्यो नगरे यादवर्षभाः।
शाल्वराजविनाशाय प्रयातं मां निबोधत। नाहत्वा तं निवर्त्तिष्ये पुरीं द्वारवतीं प्रति। ७८५
सशाल्वं सौभनगरं हत्वा द्रष्टाऽस्मि वः पुनः। त्रिःसामा हन्यतामेषा दुन्दुभी शत्रुभीषणा।
ते मयाश्वासिता वीरा यथावद्भरतर्षभ। सर्व्वे मामब्रुवन् हृष्टाः प्रयाहि जहि शात्रवान्।
तैः प्रहृष्टात्मभिर्व्वीरैराशीर्भिरभिनन्दितः। वाचयित्वा द्विजश्रेष्ठान् प्रणम्य शिरसा भवं।
शैव्यसुग्रीवयुक्तेन रथेनानादयन् दिशः। प्रध्माय शङ्खप्रवरं पाञ्चजन्यमहं नृप।
प्रयातोऽस्मि नरव्याघ्र बलेन महता वृतः। क्लृप्तेन चतुरङ्गेण यत्तेन जितकाशिना। ७९०
समतीत्य बहून् देशान् गिरींश्च बहुपादपान्। सरांसि सरितश्चैव मार्त्तिकावतमासदं।
तत्राश्रौषं नरव्याघ्र शाल्वं सागरमन्तिकात्। प्रयान्तं सौभमास्थाय तमहं पृष्ठतोऽन्वियां।
ततः सागरमासाद्य कुक्षौ तस्य महोर्म्मिणः। समुद्रनाभ्यां शाल्वोऽभूत् सौभमास्थाय शत्रुहन्।
स समालोक्य दूरान्मां स्मयन्निव युधिष्ठिर। आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः।
तस्य शार्ङ्गविनिर्मुक्तैर्ब्बहुभिर्मर्म्मभेदिभिः। पुरं नासाद्यत शरैस्ततो मां रोष आविशत्। ७९५
स चापि पापप्रकृतिर्दैतेयापसदो नृप। मय्यवर्षत दुर्द्धर्षः शरधाराः सहस्रशः।
सैनिकान्मम सूतञ्च हयांश्च स समाकिरत्। अचिन्तयन्तस्तु शरान् वयं युध्याम भारत।
ततः शतसहस्राणि शराणां नतपर्व्वणां। चिक्षिपुः समरे वीरा मयि शाल्वपदानुगाः।
ते हयांश्च रथञ्चैव तदा दारुकमेव च। छादयामासुरसुरा बाणैर्म्मर्म्मभेदिभिः।
न हया न रथो वीर न यन्ता मम दारुकः। अदृश्यन्त शरैश्छन्नास्तथाऽहं सैनिकाश्च मे। ८००
ततोऽहमपि कौन्तेय शराणामयुतान् बहून्। आमन्त्रितानां धनुषा दिव्येन विधिनाऽक्षिपं।
न तत्र विषयस्त्वासीन्मम सैन्यस्य भारत। खे विषक्तं हि तत् सौभं क्रोशमात्र इवाभवत्।
ततस्ते प्रेक्षकाः सर्व्वे रङ्गवाट इव स्थिताः। हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः।
मत्कराग्रविनिर्मुक्ता दानवानां शरास्तथा। अङ्गेषु रुधिराप्लुता विविशुः शलभा इव।
ततो हलहलाशब्दः सौभमध्ये व्यवर्द्धत। वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे। ८०५
ते निकृत्तभुजस्कन्धाः कबन्धाकृतिदर्शनाः। नदन्तो भैरवान्नादान्निपतन्ति स्म दानवाः।

पतितास्तेऽपि भज्यन्ते समुद्राम्भोनिवासिभिः । ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभं ।
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयं । तान् दृष्ट्वा पतितांस्तत्र शाल्वः सौभपतिस्ततः ।
मायायुद्धेन महता योधयामास मां युधि । ततो गदा हलाः प्रासाः शूलशक्तिपरश्वधाः ।
असयः शक्तिकुलिशपाशर्ष्टिकणपाः शराः । पट्टिशाश्च भुशुण्ड्यश्च प्रपतन्त्यनिशं मयि । ८१०
तामहं माययैवाशु प्रतिगृह्य व्यनाशयं । तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ।
ततोऽभवत्तम इव प्रकाश इव चाभवत् । दुर्द्दिनं सुदिनञ्चैव शीतमुष्णञ्च भारत ।
अङ्गारपांशुवर्षञ्च शस्त्रवर्षञ्च भारत । एवं मायां प्रकुर्व्वाणो योधयामास मां रिपुः ।
विज्ञाय तदहं सर्व्वं माययैव व्यनाशयं । यथाकालन्तु युद्धेन व्यधमं सर्व्वतः शरैः ।
ततो व्योम महाराज शतसूर्य्यमिवाभवत् । शतचन्द्रञ्च कौन्तेय सहस्रायुततारकं । ८१५
ततो नाज्ञायत तदा दिवारात्रं तथा दिशः । ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयं ।
ततस्तदस्त्रं कौन्तेय धूतं तूलमिवानिलैः । तथा तदभवद्युद्धं तुमुलं लोमहर्षणं । लब्धालोकस्तु राजेन्द्र पुनः शत्रुमयोधयं ।

इतिश्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने विंशोऽध्यायः ॥ २० ॥

॥ वासुदेव उवाच ॥ एवं स पुरुषव्याघ्र शाल्वराजो महारिपुः । युध्यमानो मया संख्ये वियदभ्यगमत् पुनः ।
ततः शतघ्नीश्च महागदाश्च दीप्तांश्च शूलान्मुषलानसींश्च । चिक्षेप रोषान्मयि मन्दबुद्धिः शाल्वो महाराज जयाभिकाङ्क्षी ।
तानाशुगैरापततोऽहमाशु निवार्य्य हन्तुं खगमान्ख एव । द्विधा त्रिधा चाच्छिनमाशु मुक्तैस्ततोऽन्तरीक्षे निनदो बभूव । ८२०
ततः शतसहस्रेण शराणां नतपर्व्वणां । दारुकं वाजिनश्चैव रथञ्च समवाकिरत् ।
ततो मामब्रवीद्वीर दारुको विह्वलन्निव । स्थातव्यमिति तिष्ठामि शाल्वबाणप्रपीडितः ।
अवस्थातुं न शक्नोमि अङ्गं मे व्यवसीदति इति तस्य निशम्याहं सारथेः करुणं वचः ।
अवेक्षमाणो यन्तारमपश्यं शरपीडितं । न तस्योरसि नो मूर्द्ध्नि न काये न भुजान्तरे ।
अन्तरं पाण्डवश्रेष्ठ पश्याम्यनिचितं शरैः । स तु बाणवरोत्पीडाद्विस्रवत्यसृगुल्बणं । ८२५
अभिवृष्टे यथा मेघे गिरिर्गैरिकधातुमान् । अभीषुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ।
अस्तम्भयं महाबाहो शाल्वबाणप्रपीडितं । अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ।
त्वरितो रथमारोप्य सौहृदादिव भारत । आहुकस्य वचो वीर तस्यैव परिचारकः ।
विषण्णः सन्नकण्ठेन तन्निबोध युधिष्ठिर । द्वारकाधिपतिर्व्वीर आह त्वामाहुको वचः ।
केशवेह विजानीष्व यत्त्वां पितृसखोऽब्रवीत् । उपयायाद्य शाल्वेन द्वारकां वृष्णिनन्दन । ८३०
विषक्ते त्वयि दुर्द्धर्ष हतः शूरसुतो बलात् । तदलं साधुयुद्धेन निवर्त्तस्व जनार्द्दन ।
द्वारकामेव रक्षस्व कार्य्यमेतन्महत्तव । इत्यहं तस्य वचनं श्रुत्वा परमदुर्म्मनाः ।
निश्चयं नाधिगच्छामि कर्त्तव्यस्येतरस्य वा । सात्यकिं बलदेवञ्च प्रद्युम्नञ्च महारथं ।
जगर्हे मनसा वीर तच्छ्रुत्वा महदप्रियं । अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ।

तेषु रक्षां समाधाय प्रयातः सौभपातिने । बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा । ८३५
सात्यकी रौक्मिणेयश्च चारुदेष्णश्च वीर्य्यवान् । शाम्बप्रभृतयश्चैवेत्यहमासं सुदुर्म्मनाः ।
एतेषु हि नरव्याघ्र जीवत्सु न कथञ्चन । शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयं ।
हतः शूरसुतो व्यक्तं व्यक्तञ्चैते परासवः । बलदेवमुखाः सर्व्वे इति मे निश्चिता मतिः ।
सोऽहं सर्व्वविनाशं तं चिन्तयानो मुहुर्म्मुहुः । सुविक्लवो महाराज पुनः शाल्वमयोधयं ।
ततोऽपश्यं महाराज प्रपतन्तमहं तदा । सौभात् शूरसुतं वीर ततो मां मोह आविशत् । ८४०
तस्य रूपं प्रपततः पितुर्म्मम नराधिप । ययातेः क्षीणपुण्यस्य स्वर्गादिव महीतलं ।
विशीर्णमलिनोष्णीषः प्रकीर्णाम्बरमूर्द्धजः । प्रपतन् दृश्यते ह स्म क्षीणपुण्य इव ग्रहः ।
ततः शार्ङ्गं धनुः श्रेष्ठं करात् प्रपतितं मम । मोहापन्नश्च कौन्तेय रथोपस्थ उपाविशं ।
ततो हाहाकृतं सर्व्वं सैन्यं मे गतचेतनं । मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ।
प्रसार्य्य बाहू पततः प्रसार्य्य चरणावपि । रूपं पितुर्म्मे विबभौ शकुनेः पततो यथा । ८४५
तं पतन्तं महाबाहो शूलपट्टिशपाणयः । अभिघ्नन्तो भृशं वीर मम चेतो ह्यकम्पयन् ।
ततो मुहूर्त्तात्प्रतिलभ्य सञ्ज्ञामहं तदा वीर महाविमर्द्दे । न तत्र सौभं न रिपुञ्च शाल्वं पश्यामि वृद्धं पितरं न चापि ।
ततो ममासीन्मनसि मायेयमिति निश्चितं । प्रबुद्धोऽस्मि ततो भूयः शतशोऽवाकिरञ्छरान् ।
इतिश्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने एकविंशोऽध्यायः ॥ २१ ॥
॥ वासुदेव उवाच ॥ ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः । शरैरपातयं सौभात् शिरांसि विबुधद्विषां ।
शरांश्चाशीविषाकारानूर्द्ध्वगांस्तिग्मतेजसः । प्रैषयं शाल्वराजाय शार्ङ्गमुक्तान् सुवाससः । ८५०
ततो नादृश्यत तदा सौभं कुरुकुलोद्वह । अन्तर्हितं माययाऽभूत्ततोऽहं विस्मितोऽभवं ।
अथ दानवसंघास्ते विकृताननमूर्द्धजाः । उदक्रोशन्महाराज धिष्ठिते मयि भारत ।
ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महारणे । अयोजयं तद्वधाय ततः शब्द उपारमत् ।
हतास्ते दानवाः सर्व्वे यैः स शब्द उदीरितः । शरैरादित्यसङ्काशैर्ज्वलितैः शब्दसाधनैः ।
तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् । शब्दोऽपरो महाराज तत्रापि प्राहरं शरैः । ८५५
एवं दशदिशः सर्व्वास्तिर्य्यगूर्द्ध्वञ्च भारत । नादयामासुरसुरास्ते चापि निहता मया ।
ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत । सौभं कामगमं वीर मोहयन्मम चक्षुषी ।
ततो लोकान्तकरणो दानवो दारुणाकृतिः । शिलावर्षेण महता सहसा मां समावृणोत् ।
सोऽहं पर्व्वतवर्षेण वध्यमानः पुनः पुनः । वल्मीक इव राजेन्द्र पर्व्वतोपचितोऽभवं ।
ततोऽहं पर्व्वतचितः सहयः सहसारथिः । अप्रख्यातिमियां राजन् सर्व्वतः पर्व्वतैश्चितः । ८६०
ततो वृष्णिप्रवीरा ये ममासन् सैनिकास्तदा । ते भयार्त्ता दिशः सर्व्वे सहसा विप्रदुद्रुवुः ।
ततो हाहाकृतमभूत् सर्व्वं किल विशाम्पते । द्यौश्च भूमिश्च खञ्चैवादृश्यमाने तथा मयि ।
ततो विषण्णमनसो मम राजन् सुहृज्जनाः । रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ।

द्विषताञ्च प्रहर्षोऽभूदार्त्तिश्चाद्विषतामपि । एवं विजितवान् वीर पश्चादश्रौषमच्युत ।
ततोऽहमिन्द्रदयितं सर्व्वपाषाणभेदनं । वज्रमुद्यम्य तान् सर्व्वान् पर्व्वतान् समशातयं । ८६५
ततः पर्व्वतभारार्त्ता मन्दप्राणविचेष्टिताः । हया मम महाराज वेपमाना इवाभवन् ।
मेघजाल इवाकाशे विदार्य्याभ्युदितं रविं । दृष्ट्वा मां बान्धवाः सर्व्वे हर्षमाहारयन् पुनः ।
ततः पर्व्वतभारार्त्तान् मन्दप्राणविचेष्टितान् । हयान् सन्दृश्य मां सूतः प्राह तत् कालिकं वचः ।
साधु सम्पश्य वार्ष्णेय शाल्वं सौभपतिं स्थितं । अलं कृष्णावमन्यैनं साधु यत्नं समाचर ।
मार्द्दवं सखिताञ्चैव शाल्वादद्य व्यपाहर । जहि शाल्वं महाबाहो मैनं जीवय केशव । ८७०
सर्व्वैः पराक्रमैर्व्वीर बध्यः शत्रुरमित्रहन् । न शत्रुरवमन्तव्यो दुर्ब्बलोऽपि बलीयसा ।
योऽपि स्यात् पीठगः कश्चित् किं पुनः समरे स्थितः । स त्वं पुरुषशार्द्दूल सर्व्वयत्नैरिमं प्रभो ।
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात् पुनः । नैष मार्द्दवसाध्यो वै मतो नापि सखा तव ।
येन त्वं योधितो वीर द्वारका चावमर्द्दिता । एवमादि तु कौन्तेय श्रुत्वाऽहं सारथेर्व्वचः ।
तत्त्वमेतदिति ज्ञात्वा युद्धेमतिमधारयं । बधाय शाल्वराजस्य सौभस्य च निपातने । ८७५
दारुकञ्चाब्रुवं वीर मुहूर्त्तं स्थीयतामिति । ततोऽप्रतिहतं दिव्यमभेद्यमतिवीर्य्यवान् ।
आग्नेयमस्त्रं दयितं सर्व्वसाहं महाप्रभं । योजयं तत्र धनुषा दानवान्तकरं रणे ।
यक्षाणां राक्षसानाञ्च दानवानाञ्च संयुगे । राज्ञाञ्च प्रतिलोमानां भस्मान्तकरणं महत् ।
क्षुरान्तममलं चक्रं कालान्तकयमोपमं । अनुमन्त्र्याहमतुलं द्विषतां विनिवर्हणं ।
जहि सौभं स्ववीर्य्येण ये चात्र रिपवो मम । इत्युक्त्वा भुजवीर्य्येण तस्मै प्राहिणवं रुषा । ८८०
रूपं सुदर्शनस्यासीदाकाशे पततस्तदा । द्वितीयस्येव सूर्य्यस्य युगान्ते प्रतपिष्यतः ।
तत्समासाद्य नगरं सौभं व्यपगतत्विषं । मध्येन पाटयामास क्रकचो दार्व्विवोच्छ्रितं ।
द्विधा कृतं ततः सौभं सुदर्शनबलाद्धतं । महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ।
तस्मिन्निपतिते सौभे चक्रमागात् करं मम । पुनस्तादाय वेगेन शाल्वायेत्यहमब्रुवं ।
ततः शाल्वं गदां गुर्व्वीमाविध्यन्तं महाहवे । द्विधा चकार सहसा प्रजज्वाल च तेजसा । ८८५
तस्मिन् विनिहते वीरे दानवास्त्रस्तचेतसः । हाहाभूता दिशो जग्मुरर्द्दिता मम शायकैः ।
ततोऽहं समवस्थाप्य रथं सौभसमीपतः । शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्य्यहर्षयं ।
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरं । दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ।
एवं निहत्य समरे सौभं शाल्वं निपात्य च । आनर्त्तान् पुनरागम्य सुहृदं प्रीतिमावहं ।
तदेतत् कारणं राजन् यदहं नागसाह्वयं । नागमं परवीरघ्न नहि जीवेत् सुयोधनः । ८९०
मय्यागतेऽथ वा वीर द्यूतं न भविता तथा । अद्याहं किं करिष्यामि भिन्नसेतुरिवोदकं ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः । आमन्त्र्य प्रययौ श्रीमान् पाण्डवान्मधुसूदनः ।
अभिवाद्य महाबाहुर्धर्म्मराजं युधिष्ठिरं । राज्ञा मूर्द्धन्युपाघ्रातो भीमेन च महाभुजः ।

परिष्वक्तश्चार्ज्जुनेन यमाभ्याञ्चाभिवादितः। सम्मानितश्च धौम्येन द्रौपद्या चार्च्चितोऽश्रुभिः।
सुभद्रामभिमन्युञ्च रथमारोप्य काञ्चनं। आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः। ८९९
शैब्यसुग्रीवयुक्तेन रथेनादित्यवर्च्चसा। द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरं।
ततः प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षतः। द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा।
धृष्टकेतुः स्वसारञ्च समादायाथ चेदिराट्। जगाम पाण्डवान् दृष्ट्वा रम्यां शुक्तिमतीं पुरीं।
केकयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसा। आमन्त्र्य पाण्डवान् सर्व्वान् प्रययुस्तेऽपि भारत।
ब्राह्मणाश्च विशश्चैव तथा विषयवासिनः। विसृज्यमानाः सुभृशं न त्यजन्ति स्म पाण्डवान्। ९००
समवायः स राजेन्द्र सुमहाद्भुतदर्शनः। आसीन्महात्मनां तेषां काम्यके भरतर्षभ।
युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः। शशास पुरुषान् काले रथान् योजयतेति वै।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि सौभवधोपाख्याने द्वाविंशतितमोऽध्यायः॥ २२ ॥

॥ वैशम्पायन उवाच॥ तस्मिन् दशार्हाधिपतौ प्रयाते युधिष्ठिरो भीमसेनार्ज्जुनौ च। यमौ च कृष्णा च पुरोहितश्च रथान्महार्हान् परमाश्वयुक्तान्।
आस्थाय वीराः सहिता वनाय प्रतस्थिरे भूतपतिप्रकाशाः। हिरण्यनिष्कान् वसनानि गाश्च प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः।
प्रेष्याः पुरो विंशतिरात्तशस्त्रा धनूंषि शस्त्राणि शरांश्च दीप्तान्। मौर्व्वीश्च यन्त्राणि च सायकांश्च सर्व्वे समादाय जघन्यमीयुः।९०५
ततश्च वासांसि च राजपुत्र्या धात्र्यश्च दास्यश्च विभूषणञ्च। तदिन्द्रसेनस्त्वरितः प्रगृह्य जघन्यमेवोपययौ रथेन।
ततः कुरुश्रेष्ठमुपेत्य पौराः प्रदक्षिणञ्चक्रुरदीनसत्त्वाः। तं ब्राह्मणाश्चाभ्यवदन् प्रसन्ना मुख्याश्च सर्व्वे कुरुजाङ्गलानां।
स चापि तानभ्यवदत् प्रसन्नः सहैव तैर्भ्रातृभिर्धर्म्मराजः। तस्थौ च तत्राधिपतिर्महात्मा दृष्ट्वा जनौघं कुरुजाङ्गलानां।
पितेव पुत्त्रेषु स तेषु भावञ्चक्रे कुरूणामृषभो महात्मा। ते चापि तस्मिन् भरतप्रबर्हे तदा बभूवुः पितरीव पुत्त्राः।
ततस्तमासाद्य महाजनौघाः कुरुप्रवीरं परिवार्य्य तस्थुः। हा नाथ हा धर्म्म इतिब्रुवाणा ह्रीताश्च सर्व्वेऽश्रुमुखाश्च राजन्। ९१०
वरः कुरूणामधिपः प्रजानां पितेव पुत्त्रानपहाय चास्मान्। पौरानिमान् जानपदांश्च सर्व्वान् हित्वा प्रयातः क्व नु धर्म्मराजः।
धिग्धार्त्तराष्ट्रं सुनृशंसबुद्धिं धिक् सौबलं पापमतिञ्च कर्णं। अनर्थमिच्छन्ति नरेन्द्र पापा ये धर्म्मनित्यस्य सतस्तवैवं।
स्वयं निवेश्याप्रतिमं महात्मा पुरं महादेवपुरप्रकाशं। शतक्रतुप्रस्थममेयकर्म्मा हित्वा प्रयातः क्व नु धर्म्मराजः।
चकार यामप्रतिमां महात्मा सभां मयो देवसभाप्रकाशां। तां देवगुप्तामिव देवमायां हित्वा प्रयातः क्व नु धर्म्मराजः।
तान् धर्म्मकामार्थविदुत्तमौजा बीभत्सुरुच्चैः सहितानुवाच। आदास्यते वासमिमं निरुष्य वनेषु राजा द्विषतां यशांसि। ९१५
द्विजातिमुख्याः सहिताः पृथक् च भवद्भिरासाद्य तपस्विनश्च। प्रसाद्य धर्म्मार्थविदश्च वाच्या यथाऽर्थसिद्धिः परमा भवेन्नः।
इत्येवमुक्ते वचनेऽर्ज्जुनेन ते ब्राह्मणाः सर्व्ववर्णाश्च राजन्। मुदाऽभ्यनन्दन् सहिताश्च चक्रुः प्रदक्षिणं धर्म्मभृतां वरिष्ठं।
आमन्त्र्य पार्थञ्च वृकोदरञ्च धनञ्जयं याज्ञसेनीं यमौ च। प्रतस्थिरे राष्ट्रमपेतहर्षा युधिष्ठिरेणानुमता यथास्वं।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्वैतवनप्रवेशे त्रयोविंशोऽध्यायः॥ २३ ॥

॥ वैशम्पायन उवाच॥ ततस्तेषु प्रयातेषु कौन्तेयः सत्यसङ्गरः। अभ्यभाषत धर्म्मात्मा भ्रातॄन् सर्व्वान् युधिष्ठिरः।

द्वादशेमाः समाऽस्माभिर्व्वस्तव्यं निर्ज्जने वने । समीक्षध्वं महारण्ये देशं बहुमृगद्विजं । ९१०
बहुपुष्पफलं रम्यं शिवं पुण्यजनावृतं । यत्रेमाः शरदः सर्व्वाः सुखं प्रतिवसेमहि ।
एवमुक्ते प्रत्युवाच धर्म्मराजं धनञ्जयः । गुरुवन्मानवगुरुं मानयित्वा मनस्विनं ।
॥ अर्ज्जुन उवाच ॥ भवानेव महर्षीणां वृद्धानां पर्य्युपासिता । अज्ञातं मानुषे लोके भवतो नास्ति किञ्चन ।
त्वया ह्युपासिता नित्यं ब्राह्मणा भरतर्षभ । द्वैपायनप्रभृतयो नारदश्च महातपाः ।
यः सर्व्वलोकद्वाराणि नित्यं सञ्चरते वशी । देवलोकाद्ब्रह्मलोकं गन्धर्व्वाप्सरसामपि । ९१५
सर्व्वा गतीर्व्विजानासि ब्राह्मणानां न संशयः । प्रभावांश्चैव वेत्थ त्वं सर्व्वेषामेव पार्थिव ।
त्वमेव राजन् जानासि श्रेयः कारणमेव च । यत्रेच्छसि महाराज निवासं तत्र कुर्म्महे ।
इदं द्वैतवनं नाम सरः पुण्यजलोचितं । बहुपुष्पफलं रम्यं नानाद्विजनिषेवितं ।
अत्रेमा द्वादश समा विहरेमेति रोचये । यदि तेऽनुमतं राजन् किं वान्यन्मन्यते भवान् ।
॥ युधिष्ठिर उवाच ॥ ममाप्येतन्मतं पार्थ त्वया यत् समुदाहृतं । गच्छामः पुण्यविख्यातं महद्द्वैतवनं सरः । ९२०
॥ वैशम्पायन उवाच ॥ ततस्ते प्रययुः सर्व्वे पाण्डवा धर्म्मचारिणः । ब्राह्मणैर्ब्बहुभिः सार्द्धं पुण्यं द्वैतवनं सरः ।
ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः । स्वाध्यायिनो भिक्षवश्च तथैव वनवासिनः ।
बहवो ब्राह्मणास्तत्र परिवव्रुर्युधिष्ठिरं । तपः सिद्धा महात्मानः शतशः संशितव्रताः ।
ते यात्वा पाण्डवास्तत्र बहुभिर्ब्राह्मणैः सह । पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभाः ।
तमालतालाम्रमधूकनीपकदम्बसर्ज्जार्ज्जुनकर्णिकारैः । तपात्यये पुष्पधरैरुपेतं महावनं राष्ट्रपतिर्द्ददर्श । ९२५
महाद्रुमाणां शिखरेषु तस्थुर्मनोरमां वाचमुदीरयन्तः । मयूरदात्यूहचकोरबर्हास्तस्मिन् वने बर्हिणकोकिलाश्च ।
करेणुयूथैः सह यूथपानां मदोत्कटानामचलप्रभाणां । महान्ति यूथानि महाद्विपानां तस्मिन् वने राष्ट्रपतिर्द्ददर्श ।
मनोरमां भोगवतीमुपेत्य पूतात्मनां चीरजटाधराणां । तस्मिन् वने धर्म्मभृतां निवासे ददर्श सिद्धर्षिगणाननेकान् ।
ततः स यानादवरुह्य राजा सभ्रातृकः सजनः काननन्तत् । विवेश धर्म्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः ।
तं सत्यसन्धं सहिताऽभिपेतुर्द्दिदृक्षवश्चारणसिद्धसङ्घाः । वनौकसश्चापि नरेन्द्रसिंहं मनस्विनं तं परिवार्य्य तस्थुः । ९३०
स तत्र सिद्धानभिवाद्य सर्व्वान् प्रत्यर्च्चितो राजवद्देववच्च । विवेश सर्व्वैः सहितो द्विजाग्र्यैः कृताञ्जलिर्धर्म्मभृतां वरिष्ठः ।
स पुण्यशीलः पितृवन्महात्मा तपस्विभिर्धर्म्मपरैरुपेत्य । प्रत्यर्च्चितः पुष्पधरस्य मूले महाद्रुमस्योपविवेश राजा ।
भीमश्च कृष्णा च धनञ्जयश्च यमौ च ते चानुचरा नरेन्द्रं । विमुच्य वाहानवसाय सर्व्वे तत्रोपतस्थुर्भरतप्रबर्हाः ।
लतावतानावनतः स पाण्डवैर्म्महाद्रुमः पञ्चभिरुग्रधन्विभिः । बभौ निवासोपगतैर्म्महात्मभिर्म्महागिरिर्व्वारणयूथपैरिव ।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्वैतवनप्रवेशे चतुर्व्विंशतितमोऽध्यायः ॥ २४ ॥

॥ वैशम्पायन उवाच ॥ तत् काननं प्राप्य नरेन्द्रपुत्राः सुखोषिता वासमुपेत्य कृच्छ्रं । विजह्रुरिन्द्रप्रतिमाः शिवेषु सरस्वतीशाल-वनेषु तेषु । ९३५
यतींश्च राजा स मुनींश्च सर्व्वान् तस्मिन् वने मूलफलैरुदग्रैः । द्विजातिमुख्यानृषभः कुरूणां सन्तर्पयामास महानुभावः ।
इष्टीश्च पित्र्याणि तथाग्रियाणि महावने वसतां पाण्डवानां । पुरोहितस्तत्र समृद्धतेजाश्चकार धौम्यः पितृवन्नृपाणां ।

अपेत्य राष्ट्राद्वसतान्तु तेषामृषिः पुराणोऽतिथिराजगाम। तमाश्रमं तीव्रसमृद्धतेजा मार्कण्डेयः श्रीमतां पाण्डवानां।
तमागतं ज्वलितहुताशनप्रभं महामनाः कुरुवृषभो युधिष्ठिरः। अपूजयत् सुरऋषिमानवार्चितं महामुनिं ह्यनुपमसत्त्व वीर्य्यवान्।
स सर्व्ववित् द्रौपदीं वीक्ष्य कृष्णां युधिष्ठिरं भीमसेनार्ज्जुनौ च। संस्मृत्य रामं मनसा महात्मा तपस्विमध्ये ऽस्मयताऽमितौजाः। ९५०
तं धर्मराजो विमना इवाब्रवीत् सर्व्वे ह्रिया सन्ति तपस्विनोऽमी। भवानिदं किं स्मयतीव हृष्टस्तपस्विनां पश्यतां मामुदीक्ष्य।
॥ मार्कण्डेय उवाच ॥ न तात हृष्यामि नच स्मयामि प्रहर्षजो मां भजते न दर्पः। तवापदं त्वद्य समीक्ष्य रामं सत्यव्रतं दाशरथिं स्मरामि।
स चापि राजा सह लक्ष्मणेन वने निवासं पितुरेव शासनात्। धन्वी चरन् पार्थ मयैव दृष्टो गिरेः पुरा ह्यृष्यमूकस्य सानौ।
सहस्रनेत्रप्रतिमो महात्मा यमस्य नेता नमुचेश्च हन्ता। पितुर्निदेशादनघः स्वधर्म्मं वासं वने दाशरथिश्चकार।
स चापि शक्रस्य समप्रभावो महानुभावः समरेष्वजेयः। विहाय भोगानचरद्वनेषु नेशे बलस्येति चरेदधर्म्मं। ९५५
नृपाश्च नाभागभगीरथादयो महीमिमां सागरान्तां विजित्य। सत्येन तेऽप्यजयंस्तात लोकान्नेशे बलस्येति चरेदधर्म्मं।
अलर्कमाहुर्नरवर्य्य सन्तं सत्यव्रतं काशिकरूषराजं। विहाय राज्यानि वसूनि चैव नेशे बलस्येति चरेदधर्म्मं।
धात्रा विधिर्य्यो विहितः पुराणैस्तं पूजयन्तो नरवर्य्य सन्तः। सप्तर्षयः पार्थ दिवि प्रभान्ति नेशे बलस्येति चरेदधर्म्मं।
महाबलान् पर्व्वतकूटमात्रान् विषाणिनः पश्य गजान्नरेन्द्र। स्थितान्निदेशे नरवर्य्य धातुर्नेशे बलस्येति चरेदधर्म्मं।
सर्व्वाणि भूतानि नरेन्द्र पश्य तथा यथावद्विहितं विधात्रा। स्वयोनितः कर्म्म सदा चरन्ति नेशे बलस्येति चरेदधर्म्मं। ९६०
सत्येन धर्म्मेण यथाऽर्हवृत्त्या ह्रिया तथा सर्व्वभूतान्यतीत्य। यशश्च तेजश्च तवापि दीप्तं विभावसोर्भास्करस्येव पार्थ।
यथाप्रतिज्ञञ्च महानुभाव कृच्छ्रं वने वासमिमं निरुष्य। ततः श्रियं तेजसा तेन दीप्तामादास्यसे पार्थिव कौरवेभ्यः।
॥ वैशम्पायन उवाच ॥ तमेवमुक्त्वा वचनं महर्षिस्तपस्विमध्ये सहितं सुहृद्भिः। आमन्त्र्य धौम्यं सहितांश्च पार्थांस्ततःप्रतस्थे दिशमुत्तरां सः।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्वैतवनप्रवेशे पञ्चविंशोऽध्यायः॥ २५॥

॥ वैशम्पायन उवाच ॥ वसत्सु वै द्वैतवने पाण्डवेषु महात्मसु। अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत।
ईर्य्यमाणेन सततं ब्रह्मघोषेण सर्व्वशः। ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः। ९६५
यजुषामृचां साम्नाञ्च गद्यानाञ्चैव सर्व्वशः। आसीदुच्चार्य्यमाणानां निस्वनो हृदयङ्गमः।
ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमतां। संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत।
अथाऽब्रवीद्बको दाल्भ्यो धर्म्मराजं युधिष्ठिरं। सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितं।
पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनां। होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकां।
चरन्ति धर्म्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः। भृगवोऽङ्गिरसश्चैव वाशिष्ठाः काश्यपैः सह। ९७०
आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः। सर्व्वस्य जगतः श्रेष्ठाः ब्राह्मणाः सङ्गतास्त्वया।

इदन्तु वचनं पार्थ शृणुष्व गदतो मम। भ्रातृभिः सह कौन्तेय यत्त्वा वक्ष्यामि कौरव।
ब्रह्म क्षत्रेण संसृष्टं क्षत्रञ्च ब्रह्मणा सह। उदीर्णौ दहतः शत्रून् वनानीवाग्निमारुतौ।
नाब्राह्मणस्तात चिरं बुभूषेदिच्छन्निमं लोकममुञ्च जेतुं। विनीतधर्म्मार्थमपेतमोहं लब्ध्वा द्विजं नुदति नृपः सपत्नान्।
चरन्नैःश्रेयसं धर्म्मं प्रजापालनकारितं। नाध्यगच्छद्वलिर्लोके तीर्थमन्यत्र वै द्विजात्। ९७५
अनूनमासीदसुरस्य कामैर्व्वैरोचने श्रीरपि चाक्षयाऽऽसीत्। लब्ध्वा महीं ब्राह्मणसंप्रयोगात्तेष्वाचरन् दुष्टमथो व्यनश्यत्।
नाब्राह्मणं भूमिरियं सभूतिर्व्वर्णं द्वितीयं भजते चिराय। समुद्रनेमिर्नमते तु तस्मै यं ब्राह्मणः शास्ति नयैर्व्विनीतं।
कुञ्जरस्येव संग्रामे परिगृह्याङ्कुशग्रहं। ब्राह्मणैर्व्विप्रहीनस्य क्षत्रस्य क्षीयते बलं।
ब्राह्मण्याऽनुपमा दृष्टिः क्षात्त्रमप्रतिमं बलं। तौ यदा चरतः सार्द्धं तदा लोकः प्रसीदति।
यथा हि सुमहानग्निः कक्षं दहति सानिलः। तथा दहति राजन्यो ब्राह्मणेन समं रिपुं। ९८०
ब्राह्मणेष्वेव मेधावी बुद्धिपर्य्येषणञ्चरेत्। अलब्धस्य च लाभाय लब्धस्य परिवृद्धये।
अलब्धलाभाय च लब्धवृद्धये यथार्हतीर्थप्रतिपादनाय। यशस्विनं वेदविदं विपश्चितं बहुश्रुतं ब्राह्मणमेव वासय।
ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर। तेन ते सर्व्वलोकेषु दीप्यते प्रथितं यशः।
॥ वैशम्पायन उवाच ॥ ततस्ते ब्राह्मणाः सर्व्वे वकं दाल्भ्यमपूजयन्। युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन्।
द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः। इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात्। ९८५
कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः। हारीतः स्थूलकर्णश्च अग्निवेश्योऽथ शौनकः।
कृतवाक् च सुवाक् चैव बृहदश्वो विभावसुः। ऊर्द्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः।
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः। अजातशत्रुमानर्चुः पुरन्दरमिवर्षयः।
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्वैतवनप्रवेशे षड्विंशोऽध्यायः॥ २६ ॥
॥ वैशम्पायन उवाच ॥ ततो वनगताः पार्थाः सायाह्ने सह कृष्णया। उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः।
प्रिया च दर्शनीया च पण्डिता च पतिव्रता। अथ कृष्णा धर्म्मराजमिदं वचनमब्रवीत्। ९९०
॥ द्रौपद्युवाच ॥ न नूनं तस्य पापस्य दुःखमस्मासु किञ्चन। विद्यते धार्त्तराष्ट्रस्य नृशंसस्य दुरात्मनः।
यस्त्वां राजन् मया सार्द्धमजिनैः प्रतिवासितं। वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्म्मतिः।
आयसं हृदयं नूनं तस्य दुष्कृतकर्म्मणः। यस्त्वां धर्म्मपरं ज्येष्ठं रूक्षाण्यश्रावयत्तदा।
सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः। ईदृशं दुःखमानीय मोदते पापपूरुषः।
चतुर्णामेव पापानामस्रं न पतितं तदा। त्वयि भारत निष्क्रान्ते वनायाजिनवाससि। ९९५
दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः। दुर्भ्रातुस्तस्य चोग्रस्य राजन् दुःशासनस्य च।
इतरेषान्तु सर्व्वेषां कुरूणां कुरुसत्तम। दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलं।
इदञ्च शयनं दृष्ट्वा यच्चासीत्ते पुरातनं। शोचामि त्वां महाराज दुःखानर्हं सुखोचितं।
दान्तं यच्च सभामध्ये आसनं रत्नभूषितं। दृष्ट्वा कुशवृषीञ्चेमां शोको मां रुन्धयत्ययं।
यदपश्यं सभायां त्वां राजभिः परिवारितं। तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे। १०००

या त्वाऽहं चन्दनादिग्धमपश्यं सूर्य्यवर्चसं। सा त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत।
या त्वाऽहं कौशिकैर्व्वस्त्रैः शुभ्रैराच्छादितं पुरा। दृष्टवत्यस्मि राजेन्द्र सा त्वां पश्यामि चीरिणं।
यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः। ह्रियते ते गृहादन्नं संस्कृतं सार्व्वकामिकं।
यतीनामगृहाणां ते तथैव गृहमेधिनां। दीयते भोजनं राजन्नतीव गुणवत् प्रभो।
सत्कृतानि सहस्राणि सर्व्वकामैः पुरा गृहे। सर्व्वकामैः सुविहितैर्यदपूजं यथा द्विजान्। १००५
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे। यत्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः।
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः। सर्व्वांस्तानद्य पश्यामि वने वन्येन जीविनः।
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः। भीमसेनमिमञ्चापि दुःखितं वनवासिनं।
ध्यायतः किं न मन्युस्ते प्राप्ते काले विवर्द्धते। भीमसेनं हि कर्म्माणि स्वयं कुर्व्वाणमच्युतं।
सुखार्हं दुःखितं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। सत्कृतं विविधैर्य्यानैर्व्वस्त्रैरुच्चावचैस्तथा। १०१०
तन्ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। अयं कुरून्रणे सर्व्वान् हन्तुमुत्सहते प्रभुः।
त्वत्प्रतिज्ञां प्रतीक्षंस्तु सहतेऽयं वृकोदरः। योऽर्ज्जुनेनार्ज्जुनस्तुल्यो द्विबाहुर्ब्बहुबाहुना।
शरावमर्द्दे शीघ्रत्वात् कालान्तकयमोपमः। यस्य शस्त्रप्रतापेन प्रणताः सर्व्वपार्थिवाः।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे। तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः।
ध्यायन्तमर्ज्जुनं दृष्ट्वा कस्माद्राजन्न कुप्यसि। दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितं। १०१५
न च ते वर्द्धते मन्युस्तेन मुह्यामि भारत। यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत्।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परन्तपः। क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। श्यामं बृहन्तं तरुणं चर्म्मिणामुत्तमं रणे।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्द्धते। दर्शनीयञ्च शूरञ्च माद्रीपुत्रं युधिष्ठिर। १०२०
सहदेवं वने दृष्ट्वा कस्मात् क्षमसि पार्थिव। नकुलं सहदेवञ्च दृष्ट्वा ते दुःखितावुभौ।
अदुःखार्हौ मनुष्येन्द्र कस्मान्मन्युर्न वर्द्धते। द्रुपदस्य कुले जातां स्नुषां पाण्डोर्म्महात्मनः।
धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रतां। मां वै वनगतां दृष्ट्वा कस्मात् क्षमसि पार्थिव।
नूनञ्च तव वै नास्ति मन्युर्भरतसत्तम। यत्ते भ्रातॄंश्च माञ्चैव दृष्ट्वा न व्यथते मनः।
न निर्म्मन्युः क्षत्रियोऽस्ति लोके निर्व्वचनं स्मृतं। तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत्। १०२५
यो न दर्शयते तेजः क्षत्रियः काल आगते। सर्व्वभूतानि तं पार्थ सदा परिभवन्त्युत।
तत्त्वया न क्षमा कार्य्या शत्रून् प्रति कथञ्चन। तेजसैव हि ते शक्या निहन्तुं नात्र संशयः।
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति। अप्रियः सर्व्वभूतानां सोऽमुत्रेह च नश्यति।
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्रौपदीपरितापवाक्ये सप्तविंशतितमोऽध्यायः॥ २७॥
॥ द्रौपद्युवाच॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। प्रह्लादस्य च संवादं बलेर्व्वैरोचनस्य च।

असुरेन्द्रं महाप्राज्ञं धर्म्माणामागतागमं। बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः। १०२०
॥ बलिरुवाच ॥ क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत। एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते।
श्रेयो यदत्र धर्म्मज्ञ ब्रूहि मे तदसंशयं। करिष्यामि हि तत्सर्व्वं यथावदनुशासनं।
तस्मै प्रोवाच तत्सर्व्वमेवं पृष्टः पितामहः। सर्व्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते।
॥ प्रह्लाद उवाच ॥ न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा। इति तात विजानीहि द्वयमेतदसंशयं।
यो नित्यं क्षमते तात बहून् दोषान् स विन्दति। भृत्याः परिभवन्त्येनमुदासीनास्तथाऽरयः। १०२५
सर्व्वभूतानि चाप्यस्य न नमन्ते कदाचन। तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता।
अवज्ञाय हि तं भृत्या भजन्ते बहुदोषतां। आदातुञ्चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः।
यानं वस्त्राण्यलङ्कारान् शयनान्यासनानि च। भोजनान्यथ पानानि सर्व्वोपकरणानि च।
आददीरन्नधिकृता यथाकाममचेतसः। प्रदिष्टानि च देयानि न दद्युर्भर्त्तृशासनात्।
न चैनं भर्त्तृपूजाभिः पूजयन्ति कथञ्चन। अवज्ञानं हि लोकेऽस्मिन् मरणादपि गर्हितं। १०३०
क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि। प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः।
अथास्य दारानिच्छन्ति परिभूय क्षमावतः। दाराश्चास्य प्रवर्त्तन्ते यथाकाममचेतसः।
तथा च नित्यमुदिता यदि नाल्पमपीश्वरात्। दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्व्वते।
एते चान्ये च बहवो नित्यं दोषाः क्षमावतां। अथ वैरोचने दोषानिमान् विद्ध्यक्षमावतां।
अस्थाने यदि वा स्थाने सततं रजसावृतः। क्रुद्धो दण्डान् प्रणयति विविधान् स्वेन तेजसा। १०३५
मित्रैः सह विरोधञ्च प्राप्नुते तेजसावृतः। आप्नोति द्वेष्यताञ्चैव लोकात् स्वजनतस्तथा।
सोऽवमानादर्थहानिमुपालम्भमनादरं। सन्तापद्वेषमोहांश्च शत्रूंश्च लभते नरः।
क्रोधाद्दण्डान् मनुष्येषु विविधान् पुरुषोऽनयात्। भ्रश्यते शीघ्रमैश्वर्य्यात् प्राणेभ्यः स्वजनादपि।
योपकर्त्तॄंश्च हर्त्तृंश्च तेजसैवोपगच्छति। तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव।
यस्मादुद्विजते लोकः कथं तस्य भवो भवेत्। अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवं। १०४०
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत्। काले काले तु संप्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत्।
काले मृदुर्यो भवति काले भवति दारुणः। स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च।
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान्। ये ते नित्यमसंत्याज्या यथाप्राहुर्मनीषिणः।
पूर्व्वोपकारी यस्ते स्यादपराधे गरीयसि। उपकारेण तत्तस्य क्षन्तव्यमपराधिनः।
अबुद्धिमाश्रितानान्तु क्षन्तव्यमपराधिनां। न हि सर्व्वत्र पाण्डित्यं सुलभं पुरुषेण वै। १०४५
अथ ये बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजं। पापान् स्वल्पेऽपि तान् हन्यादपराधे तथाऽनृजून्।
सर्व्वस्यैकोपराधस्ते क्षन्तव्यः प्राणिनो भवेत्। द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत्।
अजानता भवेत् कश्चिदपराधः कृतो यदि। क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया।
मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणं। नासाध्यं मृदुना किञ्चित्तस्मात्तीव्रतरं मृदु।

देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः। नादेशकाले किञ्चित् स्याद्देशकालौ प्रतीक्षतां। १०६०
तथा लोकभयाच्चैव त्यक्तव्यमपराधिनः। एत एवंविधाः कालाः क्षमायाः परिकीर्त्तिताः।
अतोऽन्यथानुवर्त्तत्सु तेजसः काल उच्यते। तदहं तेजसः कालं तव मन्ये नराधिप।
धार्त्तराष्ट्रेषु लुब्धेषु सततञ्चापकारिषु। नहि कश्चित् क्षमाकालो विद्यतेऽद्य कुरून् प्रति।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि। मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः। काले प्राप्ते द्वयञ्चैतद्यो वेद स महीपतिः।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्रौपदीवाक्ये अष्टाविंशतितमोऽध्यायः॥ २८ ॥

॥ युधिष्ठिर उवाच ॥ क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः। इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ। १०६५
यो हि संहरते क्रोधं भवस्तस्य सुशोभने। यः पुनः पुरुषः क्रोधं नित्यं न सहते शुभे। तस्याभावाय भवति क्रोधः परमदारुणः।
क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते। तत् कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनं।
क्रुद्धः पापं नरः कुर्य्यात् क्रुद्धो हन्याद्गुरूनपि। क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते।
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित्। नाकार्य्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा।
हिंस्यात् क्रोधादवध्यांस्तु वध्यान् संपूजयीत च। आत्मानमपि च क्रुद्धः प्रेरयेद्यमसादनं। १०७०
एतान् दोषान् प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः। इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमं।
तं क्रोधं वर्ज्जितं धीरैः कथमस्मद्विधश्चरेत्। एतद्द्रौपदि सन्धाय न मे मन्युः प्रवर्द्धते।
आत्मानञ्च परांश्चैव त्रायते महतो भयात्। क्रुध्यन्तमप्रतिक्रुध्यन् द्वयोरेष चिकित्सकः।
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः। बलीयसां मनुष्याणां त्यजत्यात्मानमात्मना।
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः। तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतं। १०७५
विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति। अनाशयित्वा क्लेष्टारं परलोके च नन्दति।
तस्माद्बलवता चैव दुर्ब्बलेन च नित्यदा। क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता।
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः। क्षमावतो जयो नित्यं साधोरिह सतां मतं।
सत्यञ्चानृततः श्रेयो नृशंसाच्चानृशंसता। तमेवं बहुदोषन्तु क्रोधं साधुविवर्ज्जितं।
मादृशः प्रसृजेत् कस्मात् सुयोधनवधादपि। तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः। १०८०
अक्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितं। यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते। तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः।
क्रुद्धो हि कार्य्यं सुश्रोणि न यथावत् प्रपश्यति। न कार्य्यं न च मर्य्यादां नरः क्रुद्धोऽनुपश्यति।
हन्त्यवध्यानपि क्रुद्धो गुरून् रूक्षैस्तुदत्यपि। तस्मात्तेजसि कर्त्तव्यः क्रोधो दूरे प्रतिष्ठितः।
दाक्ष्यं ह्यमर्षः शौर्य्यञ्च शीघ्रत्वमिति तेजसः। गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा।
क्रोधं त्यक्त्वा तु पुरुषः सम्यक् तेजोऽभिपद्यते। कालयुक्तं महाप्राज्ञे क्रुद्धैस्तेजः सुदुःसहं। १०८५
क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिनिश्चितं। रजस्तु लोकनाशाय विहितं मानुषं प्रति।
तस्माच्छश्वत्त्यजेत् क्रोधं पुरुषः सम्यगाचरन्। श्रेयान् स्वधर्म्मानपगो न क्रुद्ध इति निश्चितं।

यदि सर्व्वमबुद्धीनामतिक्रान्तमचेतसां। अतिक्रमो मद्विधस्य कथं स्यात्त्वदनिन्दिते।
यदि न स्युर्मानुषेषु क्षमिणः पृथिवीसमाः। न स्यात् सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः।
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः। एवं विनाशो भूतानामधर्म्मः प्रथितो भवेत्। १०९०
आक्रुष्टः पुरुषः सर्व्वं प्रत्याक्रोशेदनन्तरं। प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः।
हन्युर्हि पितरः पुत्त्रान् पुत्त्राश्चापि तथा पितॄन्। हन्युश्च पतयो भार्य्याः पतीन् भार्य्यास्तथैव च।
एवं संकुपिते लोके जन्म कृष्णे न विद्यते। प्रजानां सन्धिमूलं हि जन्म विद्धि शुभानने।
ताः क्षिपेरन् प्रजाः सर्व्वाः क्षिप्रं द्रौपदि तादृशे। तस्मान्मन्युर्व्विनाशाय प्रजानामभवाय च।
यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः। तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते। १०९५
क्षन्तव्यं पुरुषेणेह सर्व्वापत्सु सुशोभने। क्षमावतो हि भूतानां जन्म चैव प्रकीर्त्तितं।
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसः। यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः।
प्रभाववानपि नरस्तस्य लोकाः सनातनाः। क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति।
अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावतां। गीता क्षमावतां कृष्णे काश्यपेन महात्मना।
क्षमा धर्म्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतं। य एतदेवं जानाति स सर्व्वं क्षन्तुमर्हति। ११००
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतञ्च भावि च। क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत्।
अति यज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति च। अति ब्रह्मविदां लोकानति चापि तपस्विनां।
अन्ये वै यजुषां लोकाः कर्म्मिणामपरे तथा। क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः।
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनां। क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः।
तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत्। यस्यां ब्रह्म च सत्यञ्च यज्ञा लोकाश्च धिष्ठिताः। ११०५
क्षन्तव्यमेव सततं पुरुषेण विजानता। यदा हि क्षमते सर्व्वं ब्रह्म सम्पद्यते तदा।
क्षमावतामयं लोकः परश्चैव क्षमावतां। इह सम्मानमिच्छन्ति परत्र च शुभां गतिं।
येषां मन्युर्म्मनुष्याणां क्षमयाऽभिहतः सदा। तेषां परतरे लोकास्तस्मात् क्षान्तिः परा मता।
इति गीताः काश्यपेन गाथा नित्यं क्षमावतां। श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि माक्रुधः।
पितामहः शान्तनवः शमं सम्पूजयिष्यति। कृष्णश्च देवकीपुत्त्रः शमं सम्पूजयिष्यति। १११०
आचार्य्यो विदुरः क्षत्ता शममेव वदिष्यतः। कृपश्च सञ्जयश्चैव शममेव वदिष्यतः।
सोमदत्तो युयुत्सुश्च द्रोणपुत्त्रस्तथैव च। पितामहश्च नो व्यासः शमं वदति नित्यशः।
एतैर्हि राजा नियतञ्चोद्यमानः शमं प्रति। राज्यं दातेति मे बुद्धिर्न्नचेल्लोभान्नशिष्यति।
कालोऽयं दारुणः प्राप्तो भरतानामभूतये। निश्चितं मे सदैवैतत् पुरस्तादपि भाविनि।
सुयोधनो नार्हतीति क्षमामेवं न विन्दति। अर्हस्तस्याहमित्येवं तस्मान्मां विन्दते क्षमा। १११५
एतदात्मवतां वृत्तमेष धर्म्मः सनातनः। क्षमा चैवानृशंस्यञ्च तत्कर्त्तास्म्यहमञ्जसा।
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्रौपदीयुधिष्ठिरसंवादे ऊनत्रिंशोऽध्यायः॥ २९॥

॥ द्रौपद्युवाच ॥ नमो धात्रे विधात्रे च यौ मोहञ्चक्रतुस्तव। पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः।
कर्म्मभिश्चिन्तितो लोको गत्यां गत्यां पृथग्विधः। तस्मात् कर्म्माणि नित्यानि लोभान्मोक्षं यियासति।
नेह धर्म्मानृशंस्याभ्यां न क्षान्त्या नार्ज्जवेन च। पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित्।
त्वाञ्चेद्व्यसनमभ्यागादिदं भारत दुःसहं। यत्त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः।    ११२०
न हि तेऽध्यगमन् जातु तदानीं नाद्य भारत। धर्म्मात् प्रियतरं किञ्चिदपि चेज्जीवितादिह।
धर्म्मार्थमेव ते राज्यं धर्म्मार्थं जीवितञ्च ते। ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः।
भीमसेनार्जुनौ चेमौ माद्रेयौ च मया सह। त्यजेस्त्वमिति मे बुद्धिर्नतु धर्म्मं परित्यजेः।
राजानं धर्म्मगोप्तारं धर्म्मो रक्षति रक्षितः। इति मे श्रुतमार्य्याणां त्वान्तु मन्ये न रक्षति।
अनन्या हि नरव्याघ्र नित्यदा धर्म्ममेव ते। बुद्धिः सततमन्वेति च्छायेव पुरुषं निजा।    ११२५
नावमंस्था हि सदृशान्नावरान् श्रेयसः कुतः। अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्द्धत।
स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान्। दैवतानि पितॄंश्चैव सततं पार्थ सेवसे।
ब्राह्मणाः सर्व्वकामैस्ते सततं पार्थ तर्पिताः। यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत।
भुञ्जते रुक्मपात्रीभिर्यत्राहं परिचारिका। आरण्यकेभ्यो लौहानि भाजनानि प्रयच्छसि।
नादेयं ब्राह्मणेभ्यस्ते गृहे किञ्चन विद्यते। यदिदं वैश्वदेवं ते शान्तये क्रियते गृहे।    ११३०
तद्दत्त्वा तिथिभूतेभ्यो राजन् शिष्टेन जीवसि। इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये।
वर्त्तन्ते पाकयज्ञाश्च यज्ञकर्म्म च नित्यदा। अस्मिन्नपि महारण्ये विजने दस्युसेविते।
राष्ट्रादपेत्य वसतो धर्म्मस्ते नावसीदति। अश्वमेधो राजसूयः पुण्डरीकोऽथ गोसवः।
एतैरपि महायज्ञैरिष्टं ते भूरिदक्षिणैः। राजन् परीतया बुद्ध्या विषमेऽक्षपराजये।
राज्यं वसून्यायुधानि भ्रातॄन्माञ्चापि निर्ज्जितः। ऋजोर्म्मृदोर्व्वदान्यस्य ह्रीमतः सत्यवादिनः।    ११३५
कथमक्षव्यसनजा बुद्धिरापतिता तव। अतीव मोहमायाति मनश्च परिदूयते।
निशाम्य ते दुःखमिदमिमाञ्चापदमीदृशीं। अत्राप्युदाहरन्तीममितिहासं पुरातनं।
ईश्वरस्य वशे लोकास्तिष्ठन्ते नात्मनो यथा। धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये।
दधाति सर्व्वमीशानः पुरस्तात् शुक्रमुच्चरन्। यथा दारुमयी योषा नरवीर समाहिता।
ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः। आकाश इव भूतानि व्याप्य सर्व्वाणि भारत।    ११४०
ईश्वरो विदधातीह कल्याणं यच्च पापकं। शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः।
ईश्वरस्य वशे तिष्ठेन्नान्येषां नात्मनः प्रभुः। मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः।
धातुरादेशमन्वेति तन्मयो हि तदर्पणः। नात्माधीनो मनुष्योऽयं कालं भजति कञ्चन। स्रोतसो मध्यमापन्नः कूलाद्वृक्ष इव च्युतः।
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव च।
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः। धातुरेवं वशं यान्ति सर्व्वभूतानि भारत।    ११४५

आर्य्यकर्म्मणि युञ्जानः पापे वा पुनरीश्वरः । व्याप्य भूतानि चरते न चायमिति लक्ष्यते ।
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितं । येन कारयते कर्म्म शुभाशुभफलं विभुः ।
पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः । यो हन्ति भूतैर्भूतानि मोहयित्वात्ममायया ।
अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभिः । अन्यथा परिवर्त्तन्ते वेगा इव नभस्वतः ।
अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च । अन्यथैव प्रभुस्तानि करोति विकरोति च । ११५०
यथा काष्ठेन वा काष्ठमश्मानञ्चाश्मना पुनः । अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनं ।
एवं स भगवान् देवः स्वयम्भूः प्रपितामहः । हिनस्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ।
संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः । क्रीडते भगवान् भूतैर्बालः क्रीडनकैरिव ।
न मातृपितृवद्राजन् धाता भूतेषु वर्त्तते । रोषादिव प्रवृत्तोऽयं यथाऽयमितरो जनः ।
आर्य्यान् शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्षितान् । अनार्य्यान् सुखिनश्चैव विह्वलामीव चिन्तया । ११५५
तवेमामापदं दृष्ट्वा समृद्धिञ्च सुयोधने । धातारं गर्हये पार्थ विषमं योऽनुपश्यति ।
आर्य्यशास्त्रातिगे क्रूरे लुब्धे धर्म्मापचायिनि । धार्त्तराष्ट्रे श्रियं दत्वा धाता किं फलमश्नुते ।
कर्म्म चेत् कृतमन्वेति कर्त्तारं नान्यमृच्छति । कर्म्मणा तेन पापेन लिप्यते नूनमीश्वरः ।
अथ कर्म्मकृतं पापं न चेत् कर्त्तारमृच्छति । कारणं बलमेवेह जनान् शोचामि दुर्ब्बलान् ।
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि युधिष्ठिरद्रौपदीसंवादे त्रिंशोऽध्यायः ॥ ३० ॥
॥ युधिष्ठिर उवाच ॥ वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः । उक्तं तत् श्रुतमस्माभिर्नास्तिक्यन्तु प्रभाषसे । ११६०
नाहं कर्म्मफलान्वेषी राजपुत्रि चराम्युत । ददामि देयमित्येव यजे यष्टव्यमित्युत ।
अस्तु वाऽत्र फलं मा वा कर्त्तव्यं पुरुषेण यत् । गृहे वा वसता कृष्णे यथाशक्ति करोमि तत् ।
धर्म्मञ्चरामि सुश्रोणि न धर्म्मफलकारणात् । आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ।
धर्म्म एव मनः कृष्णे स्वभावाच्चैव मे धृतं । धर्म्मवाणिज्यको हीनो जघन्यो धर्म्मवादिनां ।
न धर्म्मफलमाप्नोति यो धर्म्मं दोग्धुमिच्छति । यश्चैनं शङ्कते कृत्वा नास्तिक्यात् पापचेतनः । ११६५
अतिवादाद्वदाम्येष मा धर्म्ममभिशङ्किथाः । धर्म्माभिशङ्की पुरुषस्तिर्य्यग्गतिपरायणः ।
धर्म्मो यस्याभिशङ्क्यः स्यादार्षं वा दुर्ब्बलात्मनः । वेदात् शूद्र इवापेयात् स लोकादजरामरात् ।
वेदाध्यायी धर्म्मपरः कुले जातो मनस्विनि । स्थविरेषु स योक्तव्यो राजभिर्धर्म्मचारिभिः ।
पापीयान् स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते । शास्त्रातिगो मन्दबुद्धिर्यो धर्म्ममभिशङ्कते ।
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन् महातपाः । मार्कण्डेयोऽप्रमेयात्मा धर्म्मेण चिरजीविता । ११७०
व्यासो वशिष्ठो मैत्रेयो नारदो लोमशः शुकः । अन्ये च ऋषयः सर्व्वे धर्म्मेणैव सुचेतसः ।
प्रत्यक्षं पश्यसि ह्येतान् दिव्ययोगसमन्वितान् । शापानुग्रहणे शक्तान् देवेभ्योऽपि गरीयसः ।
एते हि धर्म्ममेवादौ वर्णयन्ति सदा मम । कर्त्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ।
अतो नार्हसि कल्याणि धातारं धर्म्ममेव च । राज्ञि मूढेन मनसा क्षेप्तुं शङ्कितुमेव च ।

उन्मत्तान्मन्यते बालः सर्व्वानागतनिश्चयान्। धर्म्माभिशङ्की नान्यस्मात् प्रमाणमधिगच्छति। ११७५

आत्मप्रमाण उन्नद्धःश्रेयसो ह्यवमन्यकः। इन्द्रियप्रीतिसम्बद्धं यदिदं लोकसाक्षिकं। एतावन्मन्यते बालो मोहमन्यत्र गच्छति।

प्रायश्चित्तं न तस्यास्ति यो धर्म्ममभिशङ्कते। ध्यायन् स कृपणः पापी न लोकान् प्रतिपद्यते।

प्रमाणाद्धि निवृत्तो हि वेदशास्त्रार्थनिन्दकः। कामलोभानुगो मूढो नरकं प्रतिपद्यते।

यस्तु नित्यं कृतमतिर्धर्म्ममेवाभिपद्यते। अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते।

आर्षं प्रमाणमुत्क्रम्य धर्म्मं न प्रतिपालयन्। सर्व्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति। ११८०

यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि। नैव तस्य परो लोको नायमस्तीति निश्चयः।

शिष्टैराचरितं धर्म्मं कृष्णे मा स्माभिशङ्कथाः। पुराणमृषिभिः प्रोक्तं सर्व्वज्ञैः सर्व्वदर्शिभिः।

धर्म्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छतां। सैव नौः सागरस्येव वणिजः पारमिच्छतः।

अफलो यदि धर्म्मः स्यात्चरितो धर्म्मचारिभिः। अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते।

निर्व्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकां। विद्यां ते नैव युञ्जेयुर्नचार्थं केचिदाप्नुयुः। ११८५

तपश्च ब्रह्मचर्य्यञ्च यज्ञः स्वाध्याय एव च। दानमार्ज्जवमेतानि यदि स्युरफलानि वै।

नाचरिष्यन् परे धर्म्मं परे परतरे च ये। विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः।

ऋषयश्चैव देवाश्च गन्धर्व्वासुरराक्षसाः। ईश्वराः कस्य हेतोस्ते चरेयुर्धर्म्ममादृताः।

फलदन्त्विह विज्ञाय धातारं श्रेयसि ध्रुवं। धर्म्मन्ते ह्याचरन् कृष्णे तद्धि धर्म्मं सनातनं।

स नायमफलो धर्म्मो नाधर्म्मोऽफलवानपि। दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा। ११९०

त्वमात्मनो विजानीहि जन्म कृष्णे यथाश्रुतं। वेत्थ चापि यथाजातो धृष्टद्युम्नः प्रतापवान्।

एतावदेव पर्य्याप्तमुपमानं शुचिस्मिते। कर्म्मणां फलमाप्नोति धीरोऽल्पेनापि तुष्यति।

बहुनाऽपि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः। तेषां न धर्म्मजं किञ्चित् प्रेत्य शर्म्मास्ति वा पुनः।

कर्म्मणां श्रुतपुण्यानां पापानाञ्च फलोदयः। प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि।

एतानि वेद यः कश्चिन्मुह्यन्ते ऽत्र प्रजा इमाः। अपि कल्पसहस्रेण न स श्रेयो ऽधिगच्छति। ११९५

रक्ष्याण्येतानि देवानां गूढमाया हि देवताः। कृशाङ्गाश्च व्रताङ्गाश्च तपसा दग्धकिल्विषाः।

प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः। न फलादर्शनाद्धर्म्मः शङ्कितव्यो न देवताः।

यष्टव्यञ्च प्रयत्नेन दातव्यञ्चानसूयता। कर्म्मणां फलमस्तीह तथैतद्धर्म्मशाश्वतं।

ब्रह्मा प्रोवाच पुत्राणां यदृषिर्व्वेद कश्यपः। तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु।

व्यवस्य सर्व्वमस्तीति नास्तिक्यं भावमुत्सृज। ईश्वरञ्चापि भूतानां धातारं मा च वै क्षिप। शिक्षस्वैनं नमस्वैनं मा ते ऽभूद्बुद्धि-

रीदृशी। १२००

यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यतां। उत्तमां देवतां कृष्णे माऽवमंस्थाः कथञ्चन।

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि युधिष्ठिरद्रौपदीसंवादे एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ द्रौपद्युवाच ॥ नावमन्ये न गर्हे च धर्म्मं पार्थ कथञ्चन। ईश्वरं कुत एवाहमवमंस्ये प्रजापतिं।

आर्त्ताऽहं प्रलपामीदमिति मां विद्धि भारत । भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ।
कर्म खल्विह कर्त्तव्यं जानताऽमित्रकर्षण । अकर्म्माणो हि जीवन्ति स्थावरा नेतरे जनाः ।
यावद्गोस्तनपानाच्च यावच्छायोपसेवनात् । जन्तवः कर्म्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर । १२०५
जङ्गमेषु विशेषेण मनुष्या भरतर्षभ । इच्छन्ति कर्म्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ।
उत्थानमभिजानन्ति सर्व्वभूतानि भारत । प्रत्यक्षं फलमश्नन्ति कर्म्मणां लोकसाक्षिकं ।
सर्व्वे हि स्वं समुत्थानमुपजीवन्ति जन्तवः । अपि धाता विधाता च यथायमुदके बकः ।
अकर्म्मणां वै भूतानां वृत्तिः स्यान्नहि काचन । तदेवाभिप्रपद्येत न विहन्यात् कदाचन ।
स्वकर्म कुरु माग्लासीः कर्म्मणा भव दंशितः । कृतं हि योऽभिजानाति सहस्रे सोऽस्ति नास्ति च । १२१०
तस्य चापि भवेत् कार्य्यं विवृद्धौ रक्षणे तथा । भक्ष्यमाणो ह्यनादानात् क्षीयेत हिमवानपि ।
उत्सीदेरन् प्रजाः सर्व्वा न कुर्य्युः कर्म चेद्भुवि । तथा ह्येता न वर्द्धेरन् कर्म चेदफलं भवेत् ।
अपि चाप्यफलं कर्म पश्यामः कुर्व्वतो जनान् । नान्यथा ह्यपि गच्छन्ति वृत्तिं लोकाः कथञ्चन ।
यश्च दिष्टपरो लोके यश्चापि हठवादिकः । उभावपि शठावेतौ कर्म्मबुद्धिः प्रशस्यते ।
यो हि दिष्टमुपासीनो निर्व्विचेष्टः सुखं शयेत् । अवसीदेत् सुदुर्बुद्धिरामो घट इवोदके । १२१५
तथैव हठदुर्बुद्धिः शक्तः कर्म्मण्यकर्म्मकृत् । आसीत न चिरं जीवेदनाथ इव दुर्ब्बलः ।
अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः । तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ।
यच्चापि किञ्चित् पुरुषो दिष्टं नाम भजत्युत । दैवेन विधिना पार्थ तद्दैवमिति निश्चितं ।
यत् स्वयं कर्म्मणा किञ्चित् फलमाप्नोति पूरुषः । प्रत्यक्षमेतल्लोकेषु तत् पौरुषमिति स्मृतं ।
स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात् । तत् स्वभावात्मकं विद्धि फलं पुरुषसत्तम । १२२०
एवं हठाच्च दैवाच्च स्वभावात् कर्म्मणस्तथा । यानि प्राप्नोति पुरुषस्तत्फलं पूर्व्वकर्म्मणां ।
धाताऽपि हि स्वकर्म्मैव तैस्तैर्हेतुभिरीश्वरः । विदधाति विभज्येह फलं पूर्व्वकृतं नृणां ।
यद्ययं पुरुषः किञ्चित् कुरुते वै शुभाशुभं । तद्धातृविहितं विद्धि पूर्व्वकर्मफलोदयं ।
कारणं तस्य देहोऽयं धातुः कर्म्मणि वर्त्तते । स यथा प्रेरयत्येनं तथाऽयं कुरुतेऽवशः ।
तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः । सर्व्वभूतानि कौन्तेय कारयत्यवशान्यपि । १२२५
मनसाऽर्थान् विनिश्चित्य पश्चात् प्राप्नोति कर्म्मणा । बुद्धिपूर्व्वं स्वयं वीर पुरुषस्तत्र कारणं ।
संख्यातुं नैव शक्यानि कर्म्माणि पुरुषर्षभ । अगारनगराणां हि सिद्धिः पुरुषहेतुकी ।
तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः । धिया धीरो विजानीयादुपायञ्चास्य सिद्धये ।
ततः प्रवर्त्तते पश्चात् कारणैस्तस्य सिद्धये । तां सिद्धिमुपजीवन्ति कर्मजामिह जन्तवः ।
कुशलेन कृतं कर्म कर्त्रा साधु स्वनुष्ठितं । इदं त्वकुशलेनेति विशेषादुपलभ्यते । १२३०
इष्टापूर्त्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् । पुरुषः कर्म्मसाध्येषु स्याच्चेदयमकारणं ।
कर्त्तृत्वादेव पुरुषः कर्म्मसिद्धौ प्रशस्यते । असिद्धौ निन्दते चापि कर्त्ता नासीत्कथन्त्विह ।

सर्व्वमेव हठेनैके दैवेनैके वदन्त्युत। पुंसः प्रयत्नजं किञ्चित्त्रेधमेतन्निरुच्यते।
न चैवैतावता कार्य्यं मन्यन्त इति चापरे। अस्ति सर्व्वमदृश्यन्तु दिष्टं चैव तथा हठः।
दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य सन्ततिः। किञ्चिद्दैवाद्धठात् किञ्चित् किञ्चिदेव स्वभावतः। १२२५
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणं। कुशलाः प्रतिजानन्ति ये वै तत्त्वविदो जनाः।
तथैव धाता भूतानामिष्टानिष्टफलप्रदः। यदि न स्यान्न भूतानां कृपणो नाम कश्चन।
यं यमर्थमभिप्रेप्सुः कुरुते कर्म्म पूरुषः। तत्तत्सफलमेव स्याद्यदि न स्यात् पुराकृतं।
त्रिद्वारामर्थसिद्धिन्तु नानुपश्यन्ति ये नराः। तथैवानर्थसिद्धिञ्च यथैवात्मा तथैव ते।
कर्त्तव्यमेव कर्म्मेति मनोरेष विनिश्चयः। एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः। १२३०
कुर्व्वतो हि भवत्येव प्रायेणेह युधिष्ठिर। एकान्तफलसिद्धिन्तु न विन्दत्यलसः क्वचित्।
असम्भवे त्वस्य हेतुः प्रायश्चित्तन्तु लक्षयेत्। कृते कर्म्मणि राजेन्द्र तथानृण्यमवाप्नुते।
अलक्ष्मीराविशत्येनं शयानमलसं नरं। निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते।
अनर्थाः संशयावस्थाः सिध्यन्ते मुक्तसंशयाः। धीरा नराः कर्म्मरता ननु निःसंशयाः क्वचित्।
एकान्तेन ह्यनर्थोऽयं वर्त्ततेऽस्मासु साम्प्रतं। स तु निःसंशयं न स्यात्त्वयि कर्म्मण्यवस्थिते। १२३५
अथवाऽसिद्धिरेव स्यादभिमानं तदेव ते। वृकोदरस्य वीभत्सोर्भ्रात्रोश्च यमयोरपि।
अन्येषां कर्म्म सफलमस्माकमपि वा पुनः। विप्रकर्षेण बुध्येत कृतकर्म्मा यथाफलं।
पृथिवीं लाङ्गलेनेह भित्त्वा वीजं वपत्युत। आस्तेऽथ कर्षकस्तूष्णीं पर्ज्जन्यस्तत्र कारणं।
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः। यदन्यः पुरुषः कुर्य्यात् कृतं तत् सकलं मया।
तच्चेदफलमस्माकमपराधो न मे क्वचित्। इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत्। १२४०
कुर्व्वतो नार्थसिद्धिर्मे भवतीति ह भारत। निर्व्वेदो नात्र कर्त्तव्यो द्वावन्यौ ह्यत्र कारणं।
सिद्धिर्व्वाऽप्यथ वाऽसिद्धिरप्रवृत्तिरतोऽन्यथा। बहूनां समवाये हि भावानां कर्म्मसिद्धयः।
गुणाभावे फलं न्यूनं भवत्यफलमेव च। अनारम्भे तु न फलं न गुणो दृश्यते क्वचित्।
देशकालावुपायांश्च मङ्गलं स्वस्तिवृद्धये। युनक्ति मेधया धीरो यथाशक्ति यथाबलं।
अप्रमत्तेन तत् कार्य्यमुपदेष्टा पराक्रमः। भूयिष्ठं कर्म्मयोगेषु दृश्यमेव पराक्रमः। १२४५
यत्र धीमानवेक्षेत श्रेयांसं बहुभिर्गुणैः। साम्नैवार्थं ततो लिप्सेत् कर्म्म चास्मै प्रयोजयेत्।
व्यसनञ्चास्य काङ्क्षेत विवासं वा युधिष्ठिर। अपि सिन्धोर्गिरेर्व्वापि किं पुनर्म्मर्त्यधर्म्मिणः।
उत्थानयुक्तः सततं परेषामन्तरैषणे। आनृण्यमाप्नोति नरः परस्यात्मन एव च।
नत्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन। न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना।
एवं संस्थितिका सिद्धिरियं लोकस्य भारत। तत्र सिद्धिर्गतिः प्रोक्ता कालावस्था विभागतः। १२५०
ब्राह्मणं मे पिता पूर्व्वं वासयामास पण्डितं। सोऽपि सर्व्वामिमां प्राह पित्रे मे भरतर्षभ।
नीतिं बृहस्पतिप्रोक्तां भ्रातॄन् मेऽग्राहयत् पुरा। तेषां सकाशादश्रौषमहमेतत्तदा गृहे।

स मां राजन् कर्म्मवतीमागतामाह सान्त्वयन्। शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर।

इतिश्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि द्रौपदीवाक्यं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ वैशम्पायन उवाच ॥ याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः। निःश्वसन्नुपसङ्गम्य क्रुद्धो राजानमब्रवीत्।

राज्यस्य पदवीं धर्म्यां व्रज सत्पुरुषोचितां। धर्म्मकामार्थहीनानां किं नो वस्तुं तपोवने। १२१५

नैव धर्म्मेण तद्राज्यं नार्ज्जवेन न चौजसा। अक्षकूटमधिष्ठाय हृतं दुर्य्योधनेन वै।

गोमायुनेव सिंहानां दुर्ब्बलेन बलीयसां। आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतं।

धर्म्मलेशप्रतिच्छन्नः प्रभवं धर्म्मकामयोः। अर्थमुत्सृज्य किं राजन् दुःखेषु परितप्यसे।

भवतोऽनवधानेन राज्यं नः पश्यतां हृतं। अहार्य्यमपि शक्रेण गुप्तं गाण्डीवधन्वना।

कुणीनामिव विल्वानि पङ्गूनामिव धेनवः। हृतमैश्वर्य्यमस्माकं जीवतां भवतः कृते। १२२०

भवतः प्रियमित्येवं महद्व्यसनमीदृशं। धर्म्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत।

कर्षयामः स्वमित्राणि नन्दयामश्च शात्रवान्। आत्मानं भवतः शास्त्रैर्नियम्य भरतर्षभ।

यद्वयं न तदैवैतान् धार्त्तराष्ट्रान्निहन्महि। भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतं।

अथैनामन्ववेक्षस्व मृगचर्य्यामिवात्मनः। दुर्ब्बलाचरितां राजन् न बलस्थैर्निषेवितां।

यां न कृष्णो न वीभत्सुर्नाभिमन्युर्न सृञ्जयाः। न चाहमभिनन्दामि न च माद्रीसुतावुभौ। १२२५

भवान् धर्म्मो धर्म्म इति सततं व्रतकर्षितः। कच्चिद्राजन्न निर्व्वेदादापन्नः क्लीवजीविकां।

दुर्म्मनुष्या हि निर्व्वेदमफलं सर्व्वघातकं। अशक्ताः श्रियमाहर्त्तुमात्मनः कुर्व्वते प्रियं।

स भवान् दृष्टिमान् शक्तः पश्यन्नात्मनि पौरुषं। आनृशंस्यपरो राजन्नानर्थमवबुध्यसे।

अस्मानमी धार्त्तराष्ट्राः क्षममाणानलं सतः। अशक्तानिव मन्यन्ते तद्दुःखं नाहवे वधः।

तत्र चेद्युध्यमानानामजिह्ममनिवर्त्तिनां। सर्व्वशो हि वधः श्रेयान् प्रेत्य लोकान् लभेमहि। १२३०

अथवा वयमेवैतान् निहत्य भरतर्षभ। आददीमहि गां सर्व्वां तथाऽपि श्रेय एव नः।

सर्व्वथा कार्य्यमेतन्नः स्वधर्म्ममनुतिष्ठतां। काङ्क्षतां विपुलां कीर्त्तिं वैरं प्रतिचिकीर्षतां।

आत्मार्थं युध्यमानानां विदिते कृत्यलक्षणे। अन्यैरपहृते राज्ये प्रशंसैव न गर्हणा।

कर्षणार्थो हि यो धर्म्मो मित्राणामात्मनस्तथा। व्यसनं नाम तद्राजन् धर्म्मः स कुधर्म्म तत्।

सर्व्वथा धर्म्मनित्यन्तु पुरुषं धर्म्मदुर्ब्बलं। त्यजतस्तात धर्म्मार्थौ प्रेतं दुःखसुखे यथा। १२३५

यस्य धर्म्मो हि धर्म्मार्थं क्लेशभाङ्न स पण्डितः। न स धर्म्मस्य वेदार्थं सूर्य्यस्यान्धः प्रभामिव।

यस्य चात्मार्थमेवार्थः स च नार्थस्य कोविदः। रक्षते भृतकोऽरण्ये यथा गास्तादृगेव सः।

अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति। स वध्यः सर्व्वभूतानां ब्रह्महेव जुगुप्सितः।

सततं यस्तु कामार्थी नेतरावनुतिष्ठति। मित्राणि तस्य नश्यन्ति धर्म्मार्थाभ्याञ्च हीयते।

तस्य धर्म्मार्थहीनस्य कामान्ते निधनं ध्रुवं। कामतो रममाणस्य मीनस्येवाम्भसः क्षये। १२४०

तस्माद्धर्म्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः। प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा।

सर्व्वथा धर्म्ममूलोऽर्थो धर्म्मश्चार्थपरिग्रहः। इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा।
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते। स कामश्चित्तसङ्कल्पः शरीरं नास्य दृश्यते।
अर्थार्थी पुरुषो राजन् बृहन्तं धर्म्ममिच्छति। अर्थमिच्छति कामार्थी न कामादन्यमिच्छति।
न हि कामेन कामोऽन्यः साध्यते फलमेव तत्। उपयोगात् फलस्येव काष्ठाद्भस्मेव पण्डितः। ११९५
इमान् शकुनकान् राजन् हन्ति वैतंसिको यथा। एतद्रूपमधर्म्मस्य भूतेषु हि विहिंसता।
कामाल्लोभाच्च धर्म्मस्य प्रवृत्तिं यो न पश्यति। स वध्यः सर्व्वभूतानां प्रेत्य चेह च दुर्म्मतिः।
व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः। प्रकृतिञ्चापि वेत्थास्य विकृतिञ्चापि भूयसीं।
तस्य नाशे विनाशे वा जरया मरणेन वा। अनर्थ इति मन्यन्ते सोऽयमस्मासु वर्त्तते।
इन्द्रियाणाञ्च पञ्चानां मनसो हृदयस्य च। विषये वर्त्तमानानां या प्रीतिरुपजायते। १२००
स काम इति मे बुद्धिः कर्म्मणां फलमुत्तमं। एवमेव पृथग्दृष्ट्वा धर्म्मार्थौ काममेव च।
न धर्म्मपर एव स्यान्न चार्थपरमो नरः। न कामपरमो वा स्यात् सर्व्वान् सेवेत सर्व्वदा।
धर्म्मं पूर्व्वं धनं मध्ये जघन्ये काममाचरेत्। अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः।
कामं पूर्व्वं धनं मध्ये जघन्ये धर्म्ममाचरेत्। वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः।
धर्म्मञ्चार्थञ्च कामञ्च यथावद्वदतांवर। विभज्य काले कालज्ञः सर्व्वान् सेवेत पण्डितः। १२०५
मोक्षो वा परमं श्रेय एषां राजन् सुखार्थिनां। प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन।
तद्वाशु क्रियतां राजन् प्राप्तिर्व्वाऽप्यधिगम्यतां। जीवितं ह्यातुरस्येव दुःखमन्तरवर्त्तिनः।
विदितश्चैव ते धर्म्मः सततं चरितश्च ते। जानन्त्यपि प्रशंसन्ति सुहृदः कर्म्मचोदनां।
दानं यज्ञः सतां पूजा वेदधारणमार्ज्जवं। एष धर्म्मः परो राजन् बलवान् प्रेत्य चेह च।
एष नार्थविहीनेन शक्यो राजन्निषेवितुं। अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे। १२१०
धर्म्ममूलमिदं राजन् नान्यद्धर्म्माद्विशिष्यते। धर्म्मश्चार्थेन महता शक्यो राजन्निषेवितुं।
न चार्थो भैक्ष्यचर्य्येण नापि क्लैव्येन कर्हिचित्। वेत्तुं शक्यः सदा राजन् केवलं धर्म्मबुद्धिना।
प्रतिषिद्धा हि ते याच्ञा यया सिध्यति वै द्विजः। तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ।
भैक्ष्यचर्य्या न विहिता न च विट्शूद्रजीविका। क्षत्रियस्य विशेषेण धर्म्मस्तु बलमौरसं।
स्वधर्म्मं प्रतिपद्यस्व जहि शत्रून् समागतान्। धार्त्तराष्ट्रबलं पार्थ मया पार्थेन नाशय। १२१५
उदारमेव विद्वांसो धर्म्मं प्राहुर्म्मनीषिणः। उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि।
अनुबुध्यस्व राजेन्द्र वेत्थ धर्म्मान् सनातनान्। क्रूरकर्म्माभिजातोऽसि यस्मादुद्विजते जनः।
प्रजापालनसम्भूतं फलं तव न गर्हितं। एष ते विहितो राजन् धात्रा धर्म्मः सनातनः।
तस्मादपचितः पार्थ लोके हास्यं गमिष्यसि। स्वधर्म्माद्धि मनुष्याणां चलनं न प्रशस्यते।
स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः। वीर्य्यमास्थाय कौरव्य धुरमुद्वह धुर्य्यवत्। १२२०
नहि केवलधर्म्मात्मा पृथिवीं जातु कश्चन। पार्थिवो व्यजयद्राजन् भूतिं न पुनः श्रियं।

जिह्मां दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसां । निकृत्या लभते राज्यमाहारमिव शल्यकः ।
भ्रातरः पूर्व्वजाताश्च सुसमृद्धाश्च सर्व्वशः । निकृत्या निर्ज्जिता देवैरसुराः पार्थिवर्षभ ।
एवं बलवतः सर्व्वमिति बुद्ध्वा महीपते । जहि शत्रून् महाबाहो परां निकृतिमाश्रितः ।
नह्यर्ज्जुनसमः कश्चिद्युधि योद्धा धनुर्द्धरः । भविता वा पुनः कश्चिन्मत्समो वा गदाधरः । १२२५
सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि । न प्रमाणेन नोत्साहात् सत्त्वस्थो भव पाण्डव ।
सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा । नतु प्रसक्तं भवति वृक्षच्छायेव हैमनी ।
अर्थत्यागोऽपि कार्य्यः स्यादर्थं श्रेयांसमिच्छता । वीजौपम्येन कौन्तेय मा तेऽभूदत्र संशयः ।
अर्थेन तु समो नार्थो यत्र लभ्येत नोदयः । न तत्र विपणः कार्य्यः खरकण्डूयितं हि तत् ।
एवमेतन्मनुष्येन्द्र धर्म्मं त्यक्त्वाऽल्पकं नरः । वृहन्तं धर्म्ममाप्नोति स बुद्ध इति निश्चितं । १२३०
अमित्रं मित्रसम्पन्नं मित्रैर्भिन्दन्ति पण्डिताः । भिन्नैर्मित्रैः परित्यक्तं दुर्व्वलं कुरुते वशं ।
सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि । नोद्यमेन न होत्राभिः सर्व्वाः स्वीकुरुते प्रजाः ।
सर्व्वथा संहतैरेव दुर्व्वलैर्व्वलवानपि । अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ।
यथा राजन् प्रजाः सर्व्वाः सूर्य्यः पाति गभस्तिभिः । अत्ति चैव तथैव त्वं सदृशः सवितुर्भव ।
एतद्धापि तपो राजन् पुराणमिति नः श्रुतं । विधिना पालनं भूमेर्यत्कृतं नः पितामहैः । १२३५
न तथा तपसा राजन् लोकान् प्राप्नोति क्षत्रियः । यथा सृष्टेन युद्धेन विजयेनेतरेण वा ।
अपेयात् किल भा सूर्य्यात् लक्ष्मीश्चन्द्रमसस्तथा । इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथां ।
भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च । कथा युक्ताः परिषदः पृथग्राजन् समागताः ।
इदमत्यधिकं राजन् ब्राह्मणाः कुरवश्च ते । समेताः कथयन्तीह मुदिताः सत्यसन्धतां ।
यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि । अनृतं किञ्चिदुक्तं ते न कामान्नार्थकारणात् । १२४०
यदेनः कुरुते किञ्चिद्राजा भूमिमवाप्नुवन् । सर्व्वं तन्नुदते पश्चाद्यज्ञैर्व्विपुलदक्षिणैः ।
ब्राह्मणेभ्यो ददद्ग्रामान् गाश्च राजन् सहस्रशः । मुच्यते सर्व्वपापेभ्यस्तमोभ्य इव चन्द्रमाः ।
पौरजानपदाः सर्व्वे प्रायशः कुरुनन्दन । सवृद्धबालसहिताः शंसन्ति त्वां युधिष्ठिर ।
श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा । सत्यं स्तेने बलं नार्य्यां राज्यं दुर्य्योधने तथा ।
इति लोके निर्व्वचनं पुरश्चरति भारत । अपि चैताः स्त्रियो बालाः स्वाध्यायमधिकुर्व्वते । १२४५
इमामवस्थाञ्च गते सहास्माभिररिन्दम । हन्त नष्टाः स्म सर्व्वे वै भवतोपद्रवे सति ।
स भवान् रथमास्थाय सर्व्वोपकरणान्वितं । त्वरमाणोऽभिनिर्य्यातु विप्रेभ्योऽर्थविभावकः ।
वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयं । अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ।
आशीविषसमैर्व्वीरैर्मरुद्भिरिव वृत्रहा । अमित्रान् तेजसा मृद्नन्नसुरानिव वृत्रहा । श्रियमादत्स्व कौन्तेय धार्त्तराष्ट्रा
न्महाबल ।
नहि गाण्डीवमुक्तानां शराणां गार्द्ध्रवाससां । स्पर्शमाशीविषाभाणां मर्त्यः कश्चन संसहेत् । १२५०

न स वीरो न मातङ्गो न च सोऽश्वोऽस्ति भारत । यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ।
सृञ्जयैः सह कैकेयैर्वृष्णीनां वृषभेण च । कथं स्विद्युधि कौन्तेय न राज्यं प्राप्नुयामहे ।
शत्रुहस्तगतां राजन् कथं स्विन्नाहरेर्महीम् । इह यत्नमुपाहृत्य बलेन महताऽन्वितः ।

इति श्रीमहाभाते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि भीमवाक्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ वैशम्पायन उवाच ॥ स एवमुक्तस्तु महानुभावः सत्यव्रतो भीमसेनेन राजा । अजातशत्रुस्तदनन्तरं वै धैर्य्यान्वितो वाक्यमिदं बभाषे ।

॥ युधिष्ठिर उवाच ॥ असंशयं भारत सत्यमेतद्यन्मां तुदन् वाक्यशल्यैः क्षिणोषि । न त्वां विगर्हे प्रतिकूलमेव ममानयाद्धि व्यसनं व आगात् । १२५५

अहं ह्यक्षानन्वपद्यं जिहीर्षन् राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् । तन्मां शठः कितवः प्रत्यदेवीत् सुयोधनार्थं सुबलस्य पुत्रः ।
महामायः शकुनिः पार्व्वतीयः सभामध्ये प्रवपन्नक्षपूगान् । अमायिनं मायया प्रत्यजैषीत्ततोऽपश्यं वृजिनं भीमसेन ।
अक्षांश्च दृष्ट्वा शकुनेर्यथावत् कामानुकूलानयुजो युजश्च । शक्यं नियन्तुमभविष्यदात्मा मन्युस्तु हन्यात् पुरुषस्य धैर्य्यं ।
यन्तुं नात्मा शक्यते पौरुषेण मानेन वीर्य्येण च तात नद्धः । न ते वाचो भीमसेनाभ्यसूये मन्ये तथा तद्भवितव्यमासीत् ।
स नो राजा धृतराष्ट्रस्य पुत्रो न्यपातयद्व्यसने राज्यमिच्छन् । दासत्वञ्च नोऽगमयद्भीमसेन यत्राभवच्छरणं द्रौपदी नः । १२६०
त्वञ्चापि तद्वेत्थ धनञ्जयश्च पुनर्द्यूतायागतानां सभां नः । यन्माऽब्रवीद्धृतराष्ट्रस्य पुत्रः एकग्लहार्थं भरतानां समक्षं ।
वने समा द्वादश राजपुत्र यथाकामं विदितमजातशत्रो । तथाऽपरञ्चाविदितश्चरेथाः सर्व्वैः सह भ्रातृभिश्छद्मगूढः ।
त्वाञ्चेत्श्रुत्वा तात तथाचरन्तमवभोत्स्यन्ते भारतानाञ्चराश्च । अन्यांश्चरेथास्तावतोऽब्दांस्तथा त्वं निश्चित्य तत्प्रतिजानीहि पार्थ ।

चरैश्चेन्नो विदितः कालमेतं युक्तो राजन्मोहयित्वा मदीयान् । ब्रवीमि सत्यं कुरुसंसदीह तवैव ता भारत पञ्च नद्यः ।
वयञ्चैतद्भारत सर्व्व एव त्वया जिताः कालमपास्य भोगान् । वसेम इत्याह पुरा स राजा मध्ये कुरूणां स मयोक्तस्तथेति । १२६५
तत्र द्यूतमभवन्नो जघन्यं तस्मिन् जिताः प्रव्रजिताश्च सर्व्वे । इत्थञ्च देशाननुसञ्चरामो वनानि कृच्छ्राणि च कृच्छ्ररूपाः ।
सुयोधनश्चापि न शान्तिमिच्छन् भूयः स मन्योर्व्वशमन्वगच्छत् । उद्योजयामास कुरूंश्च सर्व्वान् ये चास्य केचिद्वशमन्वगच्छन् ।
तं सन्धिमास्थाय सतां सकाशे को नाम जह्यादिह राज्यहेतोः । आर्य्यस्य मन्ये मरणाद्गरीयो यद्धर्म्ममुत्क्रम्य महीं प्रशासेत् ।
तदैव चेद्वीरकर्म्माकरिष्यो यदा द्यूते परिघं पर्य्यमृक्षः । बाहू दिधक्षन् वारितः फाल्गुनेन किं दुष्कृतं भीम तदाऽभविष्यत् ।
प्रागेव चैवं समयक्रियायां किं नाब्रवीः पौरुषमाविदानः । प्राप्तन्तु कालं त्वभिपद्य पश्चात् किं मामिदानीमतिवेलमात्थ । १२७०
भूयोऽपि दुःखं मम भीमसेन दूये विषस्येव रसं हि पीत्वा । यद्याज्ञसेनीं परिक्लिश्यमानां संदृश्य तत्क्षान्तमिति स्म भीम ।
न त्वद्य शक्यं भरतप्रवीर कृत्वा यदुक्तं कुरुवीरमध्ये । कालं प्रतीक्षस्व सुखोदयस्य पक्तिं फलानामिव बीजवापः ।
यदा हि पूर्व्वं निकृतो निकृन्तेत् वैरं सपुष्पं सफलं विदित्वा । महागुणं हरति हि पौरुषेण तदा वीरो जीवति जीवलोके ।
श्रियञ्च लोके लभते समग्रां मन्ये चास्मै शत्रवः संनमन्ते । मित्राणि चैनमतिराजन्ते देवा इवेन्द्रमनुपजीवन्ति चैनं ।
मम प्रतिज्ञाञ्च निबोध सत्यां वृणे धर्म्मममृताज्जीविताच्च । राज्यञ्च पुत्राश्च यशो धनञ्च सर्व्वं न सत्यस्य कलामुपैति । १२७५

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि युधिष्ठिरवाक्ये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ भीम उवाच ॥ सन्धिं कृत्वैव कालेन अन्तकेन पतत्रिणा। अनन्तेनाप्रमेयेण स्रोतसा सर्व्वहारिणा।
प्रत्यक्षं मन्यसे कालं मर्त्यः सन् कालबन्धनः। फेनधर्म्मा महाराज फलधर्म्मा तथैव च।
निमेषादपि कौन्तेय यस्यायुरपचीयते। सूच्येवाञ्जनचूर्णस्य किमिति प्रतिपालयेत्।
यो नूनममितायुः स्यादथ वाऽतिप्रमाणवित्। स कालं वै प्रतीक्षेत सर्व्वप्रत्यक्षदर्शिवान्।
प्रतीक्ष्यमाणः कालो नः समा राजंस्त्रयोदश। आयुषोऽपचयं कृत्वा मरणायोपनेष्यति। १२८०
शरीरिणां हि मरणं शरीरे नित्यमाश्रितं। प्रागेव मरणात्तस्माद्राज्यायैव घटामहे।
यो न याति प्रसङ्ख्यानमस्पष्टो भूमिवर्द्धनः। अयातयित्वा वैराणि सोऽवसीदति गौरिव।
यो न यातयते वैरमल्पसत्त्वोद्यमः पुमान्। अफलं जन्म तस्याहं मन्ये दुर्ज्जातजायिनः।
हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिवी। हत्वा द्विषन्तं संग्रामे भुङ्क्ष्व बाह्वर्ज्जितं वसु।
हत्वा वै पुरुषो राजन् विकर्त्तारमरिन्दम। अह्नाय नरकं गच्छेत् स्वर्गेणास्य स सम्मितः। १२८५
अमर्षजो हि सन्तापः पावकाद्दीप्तिमत्तरः। येनाहमभिसन्तप्तो न नक्तं न दिवा शये।
अयञ्च पार्थो बीभत्सुर्व्वरिष्ठो ज्याविकर्षणे। आस्ते परमसन्तप्तो नूनं सिंह इवाशये।
योऽयमेकोऽभिमनुते सर्व्वान् लोके धनुर्द्धरः। सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति।
नकुलः सहदेवश्च वृद्धा माता च वीरसूः। तथैव प्रियमिच्छन्त आसते जडमूकवत्।
सर्व्वे ते प्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः। अहमेकश्च सन्तप्तो माता च प्रतिविन्ध्यतः। १२९०
प्रियमेव तु सर्व्वेषां यद्ब्रवीम्युत किञ्चन। सर्व्वे हि व्यसनं प्राप्ताः सर्व्वे युद्धाभिनन्दिनः।
नातः पापीयसी काचिदापद्राजन् भविष्यति। यन्नो नीचैरल्पबलैराज्यमाच्छिद्य भुज्यते।
शीलदोषाद्घृणाविष्ट आनृशंस्यात् परन्तप। क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित् प्रशंसति।
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी।
घृणी ब्राह्मणरूपोऽसि कथं क्षत्रेषु जायथाः। अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः। १२९५
अश्रौषीस्त्वं राजधर्म्मान् यथा वै मनुरब्रवीत्। क्रूरान्निकृतिसम्पन्नान् विहितानशमात्मकान्।
धार्त्तराष्ट्रान्महाराज क्षमसे किं दुरात्मनः। कर्त्तव्ये पुरुषव्याघ्र किमास्से पीठसर्प्पवत्।
बुद्ध्या वीर्य्येण संयुक्तः श्रुतेनाभिजनेन च। तृणानां मुष्टिनैकेन हिमवन्तञ्च पर्व्वतं।
छन्नमिच्छसि कौन्तेय योऽस्मान् संवर्त्तुमिच्छसि। अज्ञातचर्य्या गूढेन पृथिव्यां विश्रुतेन च।
दिवीव पार्थ सूर्य्येण न शक्या चरितुं त्वया। बृहच्छाल इवानूपे शाखापुष्पपलाशवान्। १३००
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति। इमौ च सिंहसङ्काशौ भ्रातरौ सहितौ शिशू।
नकुलः सहदेवश्च कथं पार्थ चरिष्यतः। पुण्यकीर्त्ती राजपुत्री द्रौपदी वीरसूरियं।
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति। माञ्चापि राजन् जानन्ति आकुमारमिमाः प्रजाः।
नाज्ञातचर्य्यां पश्यामि मेरोरिव निगूहनं। तथैव बहवोऽस्माभी राष्ट्रेभ्यो विप्रवासिताः।
राजानो राजपुत्राश्च धृतराष्ट्रमनुव्रताः। नहि तेऽप्युपशाम्यन्ति निकृता वा निराकृताः। १३०५

अवश्यं तैर्निकर्त्तव्यमस्माकं तत्प्रवेदिभिः। तेऽप्यस्मासु प्रयुञ्जीरन् प्रच्छन्नान् सुबहूंश्चरान्। आचक्षीरंश्च नो ज्ञात्वा ततः
स्यात् सुमहद्भयं।

अस्माभिरुषिता. सम्यग्वने मासास्त्रयोदश। परिमाणेन तान्पश्य तावतः परिवत्सरान्।

अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः। पूतिकानिव सोमस्य तथेदं क्रियतामिति।

अथवाऽनडुहे राजन् साधवे साधुवाहिने। सौहित्यदानादेतस्मादेनसः प्रतिमुच्यते।

तस्माच्छत्रुवधे राजन् क्रियतां निश्चयस्त्वया। क्षत्रियस्य हि सर्व्वस्य नान्यो धर्म्मोऽस्ति संयुगात्। १४१०

इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि भीमवाक्ये पञ्चत्रिंशोऽध्यायः॥ ३५॥

॥ वैशम्पायन उवाच॥ भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः। निःश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परन्तपः।

श्रुता मे राजधर्म्माश्च वर्णानाञ्च विनिश्चयाः। आयत्यां च तदात्वे च यः पश्यति स पश्यति।

धर्म्मस्य जानमानोऽहं गतिमग्र्यां सुदुर्व्विदां। कथं बलात् करिष्यामि मेरोरिव विमर्द्दनं।

स मुहूर्त्तमिव ध्यात्वा विनिश्चित्येतिकृत्यतां। भीमसेनमिदं वाक्यमपदान्तरमब्रवीत्।

॥ युधिष्ठिर उवाच॥ एवमेतन्महाबाहो यथा वदसि भारत। इदमन्यत् समाधत्स्व वाक्यं मे वाक्यकोविद। १४१५

महापापानि कर्म्माणि यानि केवलसाहसात्। आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत।

सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते। सिध्यन्त्यर्था महाबाहो दैवञ्चात्र प्रदक्षिणं।

यत्तु केवलचापल्याद्बलदर्पोत्थितः स्वयं। समारब्धमिदं कार्य्यं मन्यसे शृणु तत्र मे।

भूरिश्रवाः शलश्चैव जलसन्धश्च वीर्य्यवान्। भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्य्यवान्।

धार्त्तराष्ट्रा दुराधर्षा दुर्य्योधनपुरोगमाः। सर्व्व एव कृतास्त्राश्च सततञ्चाततायिनः। १४२०

राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः। संश्रिताः कौरवं पक्षं जातस्नेहाश्च तं प्रति।

दुर्य्योधनहिते युक्ता न तथाऽस्मासु भारत। पूर्णकोषबलोपेताः प्रयतिष्यन्ति सङ्गरे।

सर्व्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः। संविभक्ता हि मात्राभिर्भोगैरपि च सर्व्वशः।

दुर्य्योधनेन ते वीरा मानिताश्च विशेषतः। प्राणांस्त्यक्ष्यन्ति संग्रामे इति मे निश्चिता मतिः।

समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च। द्रोणस्य च महाबाहोः कृपस्य च महात्मनः। १४२५

अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः। तस्मात्त्यक्ष्यन्ति संग्रामे प्राणानपि सुदुस्त्यजान्।

सर्व्वे दिव्यास्त्रविद्वांसः सर्व्वे धर्म्मपरायणाः। अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः।

अमर्षी नित्यसंरब्धस्तत्र कर्णो महारथः। सर्व्वास्त्रविदनाधृष्यो ह्यभेद्यकवचावृतः।

अनिर्ज्जित्य रणे सर्व्वानेतान् पुरुषसत्तमान्। अशक्यो ह्यसहायेन हन्तुं दुर्य्योधनस्त्वया।

न निद्रामधिगच्छामि चिन्तयानो वृकोदर। अति सर्व्वान् धनुर्ग्राहान् सूतपुत्रस्य लाघवं। १४३०

॥ वैशम्पायन उवाच॥ एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः। बभूव विमनास्त्रस्तो न चैवोवाच किञ्चन।

तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः। आजगाम महायोगी व्यासः सत्यवतीसुतः।

सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः। युधिष्ठिरमिदं वाक्यमुवाच वदताम्वरः।

॥ व्यास उवाच ॥ युधिष्ठिर महाबाहो वेद्मि ते हृदयस्थितं । मनीषया ततः क्षिप्रमागतोऽस्मि नरर्षभ ।
भीष्मात् द्रोणात् कृपात् कर्णात् द्रोणपुत्त्राच्च भारत । दुर्य्योधनान्नृपसुतात्तथा दुःशासनादपि । १४३५
यत्ते भयममित्रघ्न हृदि सम्परिवर्त्तते । तत्तेऽहं नाशयिष्यामि विधिदृष्टेन कर्म्मणा ।
तच्छ्रुत्वा धृतिमास्थाय कर्म्मणा प्रतिपादय । प्रतिपाद्य तु राजेन्द्र ततः क्षिप्रं ज्वरं जहि ।
तत एकान्तमुन्नीय पाराशर्य्यो युधिष्ठिरं । अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ।
श्रेयसस्ते परः कालः प्राप्तो भरतसत्तम । येनाभिभविता शत्रून् रणे पार्थो धनञ्जयः ।
गृहाणेमां मया प्रोक्तां सिद्धिं मूर्त्तिमतीमिव । विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते । १४४०
यामवाप्य महाबाहुरर्ज्जुनः साधयिष्यति । अस्त्रहेतोर्म्महेन्द्रस्य रुद्रस्यैवाभिगच्छतु ।
वरुणस्य कुवेरस्य धर्म्मराजस्य पाण्डव । शक्तो ह्येष सुरान् द्रष्टुं तपसा विक्रमेण च ।
ऋषिरेष महातेजा नारायणसहायवान् । पुराणः शाश्वतो देवस्त्वजेयो जिष्णुरच्युतः ।
अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च । समादाय महाबाहुर्म्महत्कर्म्म करिष्यति ।
वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यतां । निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते । १४४५
एकत्र चिरवासो हि न प्रीतिजननो भवेत् । तापसानाञ्च सर्व्वेषां भवेदुद्वेगकारकः ।
मृगाणामुपयोगश्च वीरुदोषधिसंक्षयः । बिभर्षि च बहून् विप्रान् वेदवेदाङ्गपारगान् ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा प्रपन्नाय शुचये भगवान् प्रभुः । प्रोवाच लोकतत्त्वज्ञो योगी विद्यामनुत्तमां ।
धर्म्मराजाय धीमान् स व्यासः सत्यवतीसुतः । अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ।
युधिष्ठिरस्तु धर्म्मात्मा तद्ब्रह्म मनसा यतः । धारयामास मेधावी काले काले सदाऽभ्यसन् । १४५०
स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः । ययौ सरस्वतीकूले काम्यकं नाम तद्वनं ।
तमन्वयुर्म्महाराज शिक्षाक्षरविशारदाः । ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ।
ततः काम्यकमासाद्य पुनस्ते भरतर्षभाः । न्यवसन्त महात्मानः सामात्याः सपरिच्छदाः ।
तत्र ते न्यवसन् राजन् कञ्चित्कालं मनस्विनः । धनुर्व्वेदपरा वीराः शृण्वन्तो वेदमुत्तमं ।
चरन्तो मृगयां नित्यं शुद्धैर्व्वाणैर्म्मृगार्थिनः । पितृदैवतविप्रेभ्यो निर्व्वपन्तो यथाविधि । १४५५
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि काम्यकवनप्रवेशे षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ वैशम्पायन उवाच ॥ कस्यचित्त्वथ कालस्य धर्म्मराजो युधिष्ठिरः । संस्मृत्य मुनिसन्देशमिदं वचनमब्रवीत् ।
विविक्ते विदितप्रज्ञमर्ज्जुनं पुरुषर्षभं । सान्त्वपूर्व्वं स्मितं कृत्वा पाणिना परिसंस्पृशन् ।
स मुहूर्त्तमिव ध्यात्वा वनवासमरिन्दमः । धनञ्जयं धर्म्मराजो रहसीदमुवाच ह ।
॥ युधिष्ठिर उवाच ॥ भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्त्रे च भारत । धनुर्व्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ।
ब्राह्मं दैवं मानुषञ्च सयत्नं सचिकित्सितं । सर्व्वास्त्राणां प्रयोगञ्च तेऽभिजानन्ति कृत्स्नशः । १४६०
ते सर्व्वे धृतराष्ट्रस्य पुत्त्रेण परिसान्त्विताः । संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्त्तते ।
सर्व्वयोधेषु चैवास्य सदा प्रीतिरनुत्तमा । आचार्य्या मानितास्तुष्टाः शान्तिं व्यवहरन्त्युत ।

शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः । अद्य चेयं मही कृत्स्ना दुर्य्योधनवशानुगा ।
सग्रामनगरा पार्थ ससागरवनाकरा । भवानेव प्रियोऽस्माकं त्वयि भारः समाहितः ।
अत्र कृत्यं प्रवक्ष्यामि प्राप्तकालमरिन्दम । कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ।  १४६५
तया प्रयुक्तया सम्यक् जगत् सर्व्वं प्रकाशते । तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः ।
देवतानां यथाकालं प्रसादं प्रतिपालय । तपसा योजयात्मानमुग्रेण भरतर्षभ ।
धनुष्मान् कवची खड्गी मुनिः साधुव्रते स्थितः । न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशं ।
इन्द्रे ह्यस्त्राणि दिव्यानि समस्तानि धनञ्जय । वृत्राद्भीतैस्तदा देवैर्बलं शक्रे समर्पितं ।
तान्येकस्थानि सर्व्वाणि ततस्त्वं प्रतिपत्स्यसे । शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ।  १४७०
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरन्दरं ॥ वैशम्पायन उवाच ॥ एवमुक्त्वा धर्म्मराजस्तमध्यापयत प्रभुः ।
दीक्षितं विधिनाऽनेन धृतवाक्कायमानसं । अनुजज्ञे तदा वीरं भ्राता भ्रातरमग्रजः ।
निदेशाद्धर्म्मराजस्य द्रष्टुकामः पुरन्दरं । धनुर्गाण्डीवमादाय तथाऽक्षय्ये महेषुधी ।
कवची सतलत्राणो बद्धगोधाङ्गुलित्रवान् । हुताग्निर्ब्राह्मणान्निष्कैः स्वस्ति वाच्य महाभुजः ।
प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः । वधाय धार्त्तराष्ट्राणां निःश्वस्योर्द्ध्वमुदीक्ष्य च ।  १४७५
तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनं । अब्रुवन् ब्राह्मणाः सिद्धा भूतान्यन्तर्हितानि च ।
क्षिप्रमाप्नुहि कौन्तेय मनसा यद्यदिच्छसि । अब्रुवन् ब्राह्मणाः पार्थमिति कृत्वा जयाशिषः ।
संसाधयस्व कौन्तेय ध्रुवोऽस्तु विजयस्तव । तं तथा प्रस्थितं वीरं शालस्कन्धोरुमर्ज्जुनं ।
मनांस्यादाय सर्व्वेषां कृष्णा वचनमब्रवीत् ॥ कृष्णोवाच ॥ यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय ।
तत्तेऽस्तु सर्व्वं कौन्तेय यथा च स्वयमिच्छसि । माऽस्माकं क्षत्रियकुले जन्म कश्चिदवाप्नुयात् ।  १४८०
ब्राह्मणेभ्यो नमो नित्यं येषां भैक्ष्येण जीविका । इदं मे परमं दुःखं यः स पापः सुयोधनः ।
दृष्ट्वा मां गौरिति प्राह प्रहसन् राजसंसदि । तस्माद्दुःखादिदं दुःखं गरीय इति मे मतिः ।
यत्तत् परिषदो मध्ये बह्वयुक्तमभाषत । नूनं ते भ्रातरः सर्व्वे त्वत्कथाभिः प्रजागरे ।
रंस्यन्ते वीर कर्म्माणि कथयन्तः पुनः पुनः । नैव नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि । त्वयि नः पार्थ सर्व्वेषां सुखदुःखे समाहिते ।  १४८५
जीवितं मरणञ्चैव राज्यमैश्वर्य्यमेव च । आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि भारत ।
बलवद्भिर्व्विरुद्धं न कार्य्यमेतत्त्वयाऽनघ । प्रयाह्यविघ्नेनैवाशु विजयाय महाबल ।
नमो धात्रे विधात्रे च स्वस्ति गच्छ ह्यनामयं । ह्रीः श्रीः कीर्त्तिर्द्युतिः पुष्टिरुमा लक्ष्मीः सरस्वती ।
इमा वै तव पान्थस्य पालयन्तु धनञ्जय । ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्व्वचनकारकः ।
प्रपद्येऽहं वसून् रुद्रानादित्यान् समरुद्गणान् । विश्वेदेवांस्तथा साध्यान् शान्त्यर्थं भरतर्षभ ।  १४९०
स्वस्ति तेऽस्त्वान्तरीक्षेभ्यः पार्थिवेभ्यश्च भारत । दिव्येभ्यश्चैव भूतेभ्यो ये चान्ये परिपन्थिनः ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वाशिषः कृष्णा विरराम यशस्विनी । ततः प्रदक्षिणं कृत्वा भ्रातॄन् धौम्यञ्च पाण्डवः ।

प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः। तस्य मार्गादपाक्रामन् सर्व्वभूतानि गच्छतः।
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः। सोऽगच्छत् पर्व्वतांस्तात तपोधननिषेवितान्।
दिव्यं हैमवतं पुण्यं देवजुष्टं परन्तप। अगच्छत् पर्व्वतं पुण्यमेकाह्नैव महामनाः। १४९५
मनोजवगतिर्भूत्वा योगयुक्तो यथाऽनिलः। हिमवन्तमतिक्रम्य गन्धमादनमेव च।
अत्यक्रामत् स दुर्गाणि दिवारात्रमतन्द्रितः। इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनञ्जयः।
अन्तरीक्षेऽतिशुश्राव तिष्ठेति स वचस्तदा। तच्छ्रुत्वा सर्व्वतो दृष्टिं चारयामास पाण्डवः।
अथापश्यत् सव्यसाची वृक्षमूले तपस्विनं। ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशं।
सोऽब्रवीदर्ज्जुनं तत्र स्थितं दृष्ट्वा महातपाः। कस्त्वं तातेह सम्प्राप्तो धनुष्मान् कवची शरी। १५००
निबद्धासितलत्राणः क्षात्रं धर्म्ममनुव्रतः। नेह शस्त्रेण कर्त्तव्यं शान्तानामिह आलयः।
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनां। नेहास्ति धनुषा कार्य्यं न संग्रामोऽत्र कर्हिचित्।
निक्षिपैतद्धनुस्तात प्राप्तोऽसि परमां गतिं। ओजसा तेजसा वीर यथा नान्यः पुमान् क्वचित्।
तथा हसन्निवाभीक्ष्णं ब्राह्मणोऽर्ज्जुनमब्रवीत्। न चैनं चालयामास धैर्य्यात् सुधृतनिश्चयं।
तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव। वरं वृणीष्व भद्रन्ते शक्रोऽहमरिसूदन। १५०५
एवमुक्तः सहस्राक्षं प्रत्युवाच धनञ्जयः। प्राञ्जलिः प्रणतो भूत्वा शूरः कुरुकुलोद्वहः।
ईप्सितो ह्येष वै कामो वरञ्चैनं प्रयच्छ मे। त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुं।
प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव। इह प्राप्तस्य किं कार्य्यमस्त्रैस्तव धनञ्जय।
कामान् वृणीष्व लोकांस्त्वं प्राप्तोऽसि परमां गतिं। एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः।
न लोभाच्च पुनः कामान्न देवत्वं कुतः सुखं। न च सर्व्वामरैश्वर्य्यं कामये त्रिदशाधिप। १५१०
भ्रातॄंस्तान् विपिने त्यक्त्वा वैरमप्रतियात्य च। अकीर्त्तिं सर्व्वलोकेषु गच्छेयं शाश्वतीः समाः।
एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनं। सान्त्वयन् श्लक्ष्णया वाचा सर्व्वलोकनमस्कृतः।
यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवं। तदा दाताऽस्मि ते तात दिव्यान्यस्त्राणि सर्व्वशः।
क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः। दर्शनात्तस्य कौन्तेय संसिद्धः सर्व्वमेष्यसि।
इत्युक्त्वा फाल्गुनं शक्रो जगामादर्शनं पुनः। अर्ज्जुनोऽप्यथ तत्रैव तस्थौ योगसमन्वितः। १५१५
इति श्रीमहाभारते आरण्यपर्व्वणि अर्ज्जुनाभिगमनपर्व्वणि इन्द्रदर्शने सप्तत्रिंशोऽध्यायः॥ ३७॥ समाप्तञ्चार्ज्जुनाभिगमनपर्व्व।

## अथ कैरातपर्व्व॥ २॥

॥ जनमेजय उवाच॥ भगवन् श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्म्मणः। विस्तरेण कथामेतां यथाऽस्त्राण्युपलब्धवान्।
यथा च पुरुषव्याघ्रो दीर्घबाहुर्धनञ्जयः। वनं प्रविष्टस्तेजस्वी निर्म्मनुष्यमभीतवत्।
किञ्च तेन कृतं तत्र वसता ब्रह्मवित्तम। कथञ्च भगवान् स्थाणुर्देवराजश्च तोषितः।
एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम। त्वं हि सर्व्वज्ञ दिव्यञ्च मानुषञ्चैव वेत्थ ह।

अत्यद्भुततमं ब्रह्मन् लोमहर्षणमर्ज्जुनः। भवेन सह संग्रामं चकाराप्रतिमं किल। १५२
पुरा प्रहरतां श्रेष्ठः संग्रामेष्वपराजितः। यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात्।
शूराणामपि पार्थानां हृदयानि चकम्पिरे। यद्यच्च कृतवानन्यत् पार्थस्तदखिलं वद।
न ह्यस्य निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये। चरितं तस्य शूरस्य तन्मे सर्व्वं प्रकीर्त्तय।
॥ वैशम्पायन उवाच ॥ कथयिष्यामि ते तात कथामेतां महात्मनः। दिव्यां कौरवशार्दूल महतीमद्भुतोपमां।
गात्रसंस्पर्शसम्बद्धां त्र्यम्बकेण सहानघ। पार्थस्य देवदेवेन शृणु सम्यक् समागमं। १५२५
॥ युधिष्ठिरनियोगात् स जगामामितविक्रमः। शक्रं सुरेश्वरं द्रष्टुं देवदेवञ्च शङ्करं।
दिव्यं तद्धनुरादाय खड्गञ्च कनकत्सरुं। महाबलो महाबाहुरर्ज्जुनः कार्य्यसिद्धये।
दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति। ऐन्द्रिः स्थिरमना राजन् सर्व्वलोकमहारथः।
त्वरया परया युक्तस्तपसे धृतनिश्चयः। वनं कण्टकितं घोरमेक एवान्वपद्यत।
नानापुष्पफलोपेतं नानापक्षिनिषेवितं। नानामृगगणाकीर्णं सिद्धचारणसेवितं। १५३०
ततः प्रयाते कौन्तेये वनं मानुषवर्ज्जितं। शङ्खानां पटहानाञ्च शब्दः समभवद्दिवि।
पुष्पवर्षञ्च सुमहन्निपपात महीतले। मेघजालञ्च विततं छादयामास सर्व्वतः।
सोऽतीत्य वनदुर्गाणि सन्निकर्षे महागिरेः। शुशुभे हिमवत्पृष्ठे वसमानोऽर्ज्जुनस्तदा।
तत्रापश्यद्द्रुमान् फुल्लान् विहगैर्व्वल्गुनादितान्। नदीश्च विपुलावर्त्ता वैदूर्य्यविमलप्रभाः।
हंसकारण्डवोद्गीताः सारसाभिरुतास्तथा। पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः। १५३५
मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्ज्जुनः। पुण्यशीतामलजलाः पश्यन् प्रीतमनाऽभवत्।
रमणीये वनोद्देशे रममाणोऽर्ज्जुनस्तदा। तपस्युग्रे वर्त्तमान उग्रतेजा महामनाः।
दर्भचीरं निवस्याथ दण्डाजिनविभूषितः। शीर्णञ्च पतितं भूमौ पर्णं समुपयुक्तवान्।
पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः। द्विगुणेन हि कालेन द्वितीयं मासमत्ययात्।
तृतीयमपि मासं स पक्षेणाहारमाचरन्। चतुर्थे त्वथ संप्राप्ते मासे भरतसत्तमः। १५४०
वायुभक्षो महाबाहुरभवत् पाण्डुनन्दनः। ऊर्द्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रधिष्ठितः।
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः। विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः।
ततो महर्षयः सर्व्वे जग्मुर्देवं पिनाकिनं। निवेदयिषवः पार्थं तपस्युग्रे समास्थितं।
तं प्रणम्य महादेवं शशंसुः पार्थकर्म्म तत्। एष पार्थो महातेजा हिमवत्पृष्ठमाश्रितः।
उग्रे तपसि दुष्पारे स्थितो धूमाययन्दिशः। तस्य देवेश न वयं विद्मः सर्व्वं चिकीर्षितं। १५४५
सन्तापयति नः सर्व्वानसौ साधु निवार्य्यतां। तेषां तद्वचनं श्रुत्वा मुनीनां भावितात्मनां।
उमापतिर्भूतपतिर्व्वाक्यमेतदुवाच ह ॥ महादेव उवाच ॥ न वो विषादः कर्त्तव्यः फाल्गुनं प्रति सर्व्वशः।
शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः। अहमस्य विजानामि सङ्कल्पं मनसि स्थितं।
नास्य स्वर्गस्पृहा काचिन्नैश्वर्य्यस्य तथायुषः। यत्त्वस्य काङ्क्षितं सर्व्वं तत्करिष्येऽहमद्य वै।

॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा शर्व्ववचनमृषयः सत्यवादिनः । प्रहृष्टमनसो जग्मुर्यथा स्वान् पुनराश्रमान् । १५५०

इति श्रीमहाभारते आरण्यपर्व्वणि कैरातपर्व्वणि मुनिशङ्करसंवादे अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

॥ वैशम्पायन उवाच ॥ गतेषु तेषु सर्व्वेषु तपस्विषु महात्मसु । पिनाकपाणिर्भगवान् सर्व्वपापहरो हरः ।
कैरातं वेशमास्थाय काञ्चनद्रुमसन्निभं । विभ्राजमानो विपुलो गिरिर्मेरुरिवापरः ।
श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् । निष्पपात महावेगो दहनो देहवानिव ।
देव्या सहोमया श्रीमान् समानव्रतवेशया । नानावेशधरैर्हृष्टैर्भूतैरनुगतस्तदा ।
किरातवेशसंच्छन्नः स्त्रीभिश्चापि सहस्रशः । अशोभत तदा राजन् स देशोऽतीव भारत । १५५५
क्षणेन तद्वनं सर्व्वं निःशब्दमभवत्तदा । नादः प्रस्रवणानाञ्च पक्षिणाञ्चाप्युपारमत् ।
स सन्निकर्षमागम्य पार्थस्याक्लिष्टकर्म्मणः । मूकं नाम दनोः पुत्रं ददर्शाद्भुतदर्शनं ।
वाराहं रूपमास्थाय तर्कयन्तमिवार्ज्जुनं । हन्तुं परमदुष्टात्मा तमुवाचाथ फाल्गुनः ।
गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् । सज्यं धनुर्व्वरं कृत्वा ज्याघोषेण निनादयन् ।
यन्मां प्रार्थयसे हन्तुमनागसमिहागतं । तस्मात्त्वां पूर्व्वमेवाहं नेताऽद्य यमसादनं । १५६०
दृष्ट्वा तं प्रहरिष्यन्तं फाल्गुनं दृढधन्विनं । किरातरूपी सहसा वारयामास शङ्करः ।
मयैष प्रार्थितः पूर्व्वमिन्द्रकीलसमप्रभः । अनादृत्य च तद्वाक्यं प्रजहाराथ फाल्गुनः ।
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः । प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमं ।
तौ मुक्तौ सायकौ ताभ्यां समन्तच्च निपेततुः । मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा ।
यथाऽशनेर्व्विनिर्घोषो वज्रस्येव च पर्व्वते । तथा तयोः सन्निपातः शरयोरभवत्तदा । १५६५
स विद्धो बहुभिर्व्वाणैर्दीप्तास्यैः पन्नगैरिव । ममार राक्षसं रूपं भूयः कृत्वा विभीषणं ।
स ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभं । किरातवेशसंच्छन्नं स्त्रीसहायममित्रहा ।
तमब्रवीत् प्रीतमनाः कौन्तेयः प्रहसन्निव । को भवानटते शून्ये वने स्त्रीगणसंवृतः ।
न त्वमस्मिन् वने घोरे बिभेषि कनकप्रभ । किमर्थञ्च त्वया विद्धो वराहो मत्परिग्रहः ।
मयाऽभिपन्नः पूर्व्वं हि राक्षसोऽयमिहागतः । कामात् परिभवाद्वाऽपि न मे जीवन् विमोक्ष्यसे । १५७०
न ह्येष मृगयाधर्म्मो यस्त्वयाऽद्य कृतो मयि । तेन त्वां भ्रंशयिष्यामि जीवितात् पर्व्वताश्रयं ।
इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव । उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनं ।
न मत्कृते त्वया वीर भीः कार्य्या वनमन्तिकात् । इयं भूमिः सदाऽस्माकमुचिता वसतां वने ।
त्वया तु दुष्करः कस्मादिह वासः प्ररोचितः । वयन्तु बहुसत्त्वेऽस्मिन्निवसामस्तपोधन ।
भवांस्तु कृष्णवर्त्माभः सुकुमारः सुखोचितः । कथं शून्यमिमं देशमेकाकी विचरिष्यति । १५७५
॥ अर्ज्जुन उवाच ॥ गाण्डीवमाश्रयं कृत्वा नाराचांश्चाग्निसन्निभान् । निवसामि महारण्ये द्वितीय इव पावकिः ।
एष चापि महाजन्तुर्मृगरूपं समाश्रितः । राक्षसो निहतो घोरो हन्तुं मामिह चागतः ।
॥ किरात उवाच ॥ मयैष धनुर्निर्मुक्तैस्ताडितः पूर्व्वमेव हि । बाणैरभिहतः शेते नीतश्च यमसादनं ।

ममैष लक्ष्यभूतो हि मम पूर्व्वपरिग्रहः। ममैव च प्रहारेण जीविताद्व्यवरोपितः।
दोषान् स्वान्नार्हसेऽन्यस्मै कर्त्तुं स्वबलदर्पितः। अवलिप्तोऽसि मन्दात्मन् न मे जीवन् विमोक्ष्यसे। १५८०
स्थिरो भवस्व मोक्ष्यामि सायकानशनीरिव। घटस्व परया शक्त्या मुञ्च त्वमपि सायकान्।
ततस्तद्वचनं श्रुत्वा किरातस्यार्ज्जुनस्तदा। रोषमाहारयामास ताडयामास चेषुभिः।
ततो हृष्टेन मनसा प्रतिजग्राह सायकान्। भूयोभूय इति प्राह मन्दमन्देत्युवाच ह।
प्रहरस्व शरानेतान्नाराचान्मर्म्मभेदिनः। इत्युक्तो बाणवर्षं स मुमोच सहसाऽर्ज्जुनः।
ततस्तौ तत्र संरब्धौ राजमानौ मुहुर्मुहुः। शरैराशीविषाकारैस्ततक्षाते परस्परं। १५८५
ततोऽर्ज्जुनः शरवर्षं किराते समवासृजत्। तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः।
मुहूर्त्तं शरवर्षं तत् प्रतिगृह्य पिनाकधृक्। अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः।
स दृष्ट्वा बाणवर्षन्तु मोघीभूतं धनञ्जयः। परमं विस्मयञ्चक्रे साधु साध्विति चाब्रवीत्।
अहोऽयं सुकुमाराङ्गो हिमवच्छिखरालयः। गाण्डीवमुक्तान्नाराचान् प्रतिगृह्णात्यविह्वलः।
कोऽयं देवो भवेत् साक्षात् रुद्रो यक्षः सुरोऽसुरः। विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः। १५९०
नहि मद्बाणजालानामुत्सृष्टानां सहस्रशः। शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनं।
देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः। अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनं।
ततो हृष्टमना जिष्णुर्नाराचान्मर्म्मभेदिनः। व्यसृजच्छतधा राजन् मयूखानिव भास्करः।
तान् प्रसन्नेन मनसा भगवान् लोकभावनः। शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः।
क्षणेन क्षीणबाणोऽथ संवृत्तः फाल्गुनस्तदा। भीर्वेनमाविशत्तीव्रा तं दृष्ट्वा शरसंक्षयं। १५९५
चिन्तयामास जिष्णुश्च भगवन्तं हुताशनं। पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे।
किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः। अयञ्च पुरुषः कोऽपि बाणान् ग्रसति सर्व्वशः।
हत्वा चैनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरं। नयामि दण्डधारस्य यमस्य सदनं प्रति।
प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च। मुष्टिभिश्चापि हतवान् वज्रकल्पैर्महाद्युतिः।
संप्रयुद्धो धनुष्कोट्या कौन्तेयः परवीरहा। तदप्यस्य धनुर्द्दिव्यं जग्रास गिरिगोचरः। १६००
ततोऽर्ज्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत। युद्धस्यान्तमभीप्सन् वै वेगेनाभिजगाम तं।
तस्य मूर्द्ध्नि शितं खड्गमसक्तं पर्व्वतेष्वपि। मुमोच भुजवीर्य्येण विक्रम्य कुरुनन्दनः।
तस्य मूर्द्धानमासाद्य पफालासिवरो हि सः। ततो वृक्षैः शिलाभिश्च योधयामास फाल्गुनः।
तदा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः। किरातरूपी भगवांस्ततः पार्थो महाबलः।
मुष्टिभिर्व्वज्रसङ्काशैर्धूममुत्पादयन् मुखे। प्रजहार दुराधर्षे किरातसमरूपिणि। १६०५
ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः। किरातरूपी भगवानर्द्दयामास पाण्डवं।
ततश्चटचटाशब्दः सुघोरः समपद्यत। पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः।
सुमुहूर्त्तन्तु तद्युद्धमभवल्लोमहर्षणं। भुजप्रहारसंयुक्तं वृत्रवासवयोरिव।

जघानाथ ततो जिष्णुः किरातमुरसा बली। पाण्डवञ्च विचेष्टन्तं किरातोऽप्यहनद्बली।
तयोर्भुजविनिष्पेषात् सङ्घर्षेणोरसोस्तथा। समजायत गात्रेषु पावकोऽङ्गारधूमवान्। १६१०
तत एनं महादेवः पीड्य गात्रैः सुपीडितं। तेजसा व्याक्रमद्रोषाच्चेतस्तस्य विमोहयन्।
ततोऽभिपीडितैर्गात्रैः पिण्डीकृत इवाबभौ। फाल्गुनो गात्रसंरुद्धो देवदेवेन भारत।
निरुच्छ्वासोऽभवच्चैव सन्निरुद्धो महात्मना। पपात भूम्यां निश्चेष्टो गतसत्त्व इवाभवत्।
स मुहूर्त्तं तथा भूत्वा सचेताः पुनरुत्थितः। रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः।
शरण्यं शरणं गत्वा भगवन्तं पिनाकिनं। मृण्मयं स्थण्डिलं कृत्वा माल्येनापूजयद्भवं। १६१५
तच्च माल्यं तदा पार्थः किरातशिरसि स्थितं। अपश्यत् पाण्डवश्रेष्ठो हर्षेण प्रकृतिङ्गतः।
पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः। उवाच चैनं वचसा मेघगम्भीरगोहरः।
जातविस्मयमालोक्य ततः क्षीणाङ्गसंहतिं ॥ भव उवाच ॥ भो भो फाल्गुन तुष्टोऽस्मि कर्म्मणाऽप्रतिमेन ते।
शौर्य्येणानेन धृत्या च क्षत्रियो नास्ति ते समः। समं तेजश्च वीर्य्यञ्च ममाद्य तव चानघ।
प्रीतस्ते ऽहं महाबाहो पश्य मां भरतर्षभ। ददामि ते विशालाक्ष चक्षुः पूर्व्वऋषिर्भवान्। १६२०
विजेष्यसि रणे शत्रूनपि सर्व्वान् दिवौकसः। प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितं।
त्वं हि शक्तो मदीयं तदस्त्रं धारयितुं क्षणात् ॥ वैशम्पायन उवाच ॥ ततो देवं महादेवं गिरिशं शूलपाणिनं।
ददर्श फाल्गुनस्तत्र सह देव्या महाद्युतिं। स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च।
प्रसादयामास हरं पार्थः परपुरञ्जयः ॥ अर्जुन उवाच ॥ कपर्द्दिन् सर्व्वदेवेश भगनेत्रनिपातन।
देवदेव महादेव नीलग्रीव जटाधर। कारणानाञ्च परमं जाने त्वां त्र्यम्बकं विभुं। १६२५
देवानाञ्च गतिं देव त्वत्प्रसूतमिदं जगत्। अजेयस्त्वं त्रिभिर्लोकैः सदेवासुरमानुषैः।
शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे। दक्षयज्ञविनाशाय हरिरुद्राय वै नमः।
ललाटाक्षाय सर्व्वाय मीढुषे शूलपाणये। पिनाकगोप्त्रे सूर्य्याय मार्ज्जालीयाय वेधसे।
प्रसादये त्वां भगवन् सर्व्वभूतमहेश्वर। गणेशं जगतः शम्भुं लोककारणकारणं।
प्रधानपुरुषातीतं परं सूक्ष्मतरं हरं। व्यतिक्रमं मे भगवन् क्षन्तुमर्हसि शङ्कर। १६३०
भगवद्दर्शनाकाङ्क्षी प्राप्तोऽस्मीमं महागिरिं। दयितं तव देवेश तापसालयमुत्तमं।
प्रसादये त्वां भगवन् सर्व्वलोकनमस्कृतं। न मे स्यादपराधोऽयं महादेवातिसाहसात्।
कृतो मयाऽयमज्ञानात् विमर्द्दो यस्त्वया सह। शरणं प्रतिपन्नाय तत्क्षमस्वाद्य शङ्कर।
॥ वैशम्पायन उवाच ॥ तमुवाच महातेजाः प्रहस्य वृषभध्वजः। प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फाल्गुनं।
परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवान् हरः। पुनः पार्थं सान्त्वपूर्व्वमुवाच वृषभध्वजः। १६३५
इति श्रीमहाभारते आरण्यपर्व्वणि कैरातपर्व्वणि महादेवस्तवे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ देवदेव उवाच ॥ नरस्त्वं पूर्व्वदेहे वै नारायणसहायवान्। वदर्य्यां तप्तवानुग्रं तपो वर्षायुतान् बहून्।
त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे। युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्य्यते जगत्।

शक्राभिषेके सुमहद्धनुर्जलदनिःस्वनं । प्रमथ्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ।
तदेतदेव गाण्डीवं तव पार्थ करोचितं । मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम ।
तूणौ चाप्यक्षयौ भूयस्तव पार्थ यथोचितौ । भविष्यति शरीरञ्च नीरुजं कुरुनन्दन । १६४०
प्रीतिमानस्मि ते पार्थ भवान् सत्यपराक्रमः । गृहाण वरमस्मत्तः काङ्क्षितं पुरुषोत्तम ।
न त्वया पुरुषः कश्चित् पुमान्मर्त्त्येषु मानद । दिवि वा वर्त्तते क्षत्रं त्वत्प्रधानमरिन्दम ।
॥ अर्ज्जुन उवाच ॥ भगवन् ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज । कामये दिव्यमस्त्रं तद्घोरं पाशुपतं प्रभो ।
यत्तु ब्रह्मशिरो नाम रौद्रं भीमपराक्रमं । युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ।
कर्णभीष्मकृपद्रोणैर्भविता तु महाहवः । त्वत्प्रसादान्महादेव जयेयं तान् यथाविधि । १६४५
दहेयं येन संग्रामे दानवान् राक्षसांस्तथा । भूतानि च पिशाचांश्च गन्धर्व्वानथ पन्नगान् ।
यस्मिन् शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः । शराश्चाशीविषाकाराः सम्भवन्त्यनुमन्त्रिते ।
युध्येयं येन भीष्मेण द्रोणेन च कृपेण च । सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ।
एष मे प्रथमः कामो भगवन् भगनेत्रहन् । त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा ।
॥ भव उवाच ॥ ददामि तेऽस्त्रं दयितमहं पाशुपतं विभो । समर्थो धारणे मोक्षे संहारे चापि पाण्डव । १६५०
नैतद्वेद महेन्द्रोऽपि न यमो न च यक्षराट् । वरुणोऽप्यथ वा वायुः कुतो वेत्स्यन्ति मानवाः ।
नत्वेतत् सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् । जगद्विनाशयेत् सर्व्वमल्पतेजसि पातितं ।
अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे । मनसा चक्षुषा वाचा धनुषा च निपात्यते ।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः । उपसङ्गम्य विश्वेशमधीष्वेत्यथ सोऽब्रवीत् ।
ततस्त्वध्यापयामास सरहस्यनिवर्त्तनं । तदस्त्रं पाण्डवश्रेष्ठं मूर्त्तिमन्तमिवान्तकं । १६५५
उपतस्थे च तत्पार्थं यथा त्र्यक्षमुमापतिं । प्रतिजग्राह तच्चापि प्रीतिमानर्ज्जुनस्तदा ।
ततश्चचाल पृथिवी सपर्व्वतवनद्रुमा । ससागरवनोद्देशा सग्रामनगराकरा ।
शङ्खदुन्दुभिघोषाश्च भेरीणाञ्च सहस्रशः । तस्मिन् मुहूर्त्ते संप्राप्ते निर्घाताश्चापतन् भृशः ।
अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः । मूर्त्तिमद्वै स्थितं पार्श्वे ददृशुर्द्देवदानवाः ।
स्पृष्टस्य त्र्यम्बकेनाथ फाल्गुनस्यामितौजसः । यत्किञ्चिदशुभं देहे तत्सर्व्वं नाशमीयिवान् । १६६०
स्वर्गं गच्छेत्यनुज्ञातस्त्र्यम्बकेन तदाऽर्ज्जुनः । प्रणम्य शिरसा राजन् प्राञ्जलिर्द्देवमैक्षत ।
ततः प्रभुस्त्रिदिवनिवासिनां वशी महाद्युतिर्गिरिश उमापतिः शिवः । धनुर्महद्दितिजपिशाचसूदनं ददौ भवः पुरुषवराय गाण्डिवं ।
ततः शुभं गिरिवरमीश्वरस्तदा सहोमया सिततटसानुकन्दरं । विहाय तं पतगमहर्षिसेवितं जगाम खं पुरुषवरस्य पश्यतः ।
इति श्रीमहाभारते आरण्यपर्व्वणि कैरातपर्व्वणि शिवप्रस्थाने चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ वैशम्पायन उवाच ॥ तस्य सम्पश्यतस्त्वेव पिनाकी वृषभध्वजः । जगामादर्शनं भानुर्लोकस्येवास्तमीयिवान् ।

ततोऽर्ज्जुनः परञ्चक्रे विस्मयं परवीरहा । मया साक्षान्महादेवो दृष्ट इत्येव भारत । १६६५
धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः । पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ।
कृतार्थञ्चावगच्छामि परमात्मानमाहवे । शत्रूंश्च विजितान् सर्व्वान् निर्वृत्तञ्च प्रयोजनं ।
इत्येवं चिन्तयानस्य पार्थस्यामिततेजसः । ततो वैदूर्य्यवर्णाभो भासयन् सर्व्वतो दिशः ।
यादोगणवृतः श्रीमानाजगाम जलेश्वरः । नागैर्नदैर्नदीभिश्च दैत्यैः साध्यैश्च दैवतैः ।
वरुणो यादसां भर्त्ता वशी तं देशमागमत् । अथ जाम्बूनदवपुर्विमानेन महार्चिषा । १६७०
कुवेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः । विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ।
धनानामीश्वरः श्रीमानर्ज्जुनं द्रष्टुमागतः । तथा लोकान्तकृत् श्रीमान् यमः साक्षात् प्रतापवान् ।
मर्त्त्यमूर्त्तिधरैः सार्द्धं पितृभिर्लोकभावनैः । दण्डपाणिरचिन्त्यात्मा सर्व्वभूतविनाशकृत् ।
वैवस्वतो धर्म्मराजो विमानेनावभासयन् । त्रींल्लोकान् गुह्यकांश्चैव गन्धर्व्वांश्च सपन्नगान् ।
द्वितीय इव मार्त्तण्डो युगान्ते समुपस्थिते । ते भानुमन्ति चित्राणि शिखराणि महागिरेः । १६७५
समास्थायार्ज्जुनं तत्र ददृशुस्तपसान्वितं । ततो मुहूर्त्ताद्भगवानैरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः । पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्द्धनि ।
शुशुभे तारकाराजः सितमभ्रमिवास्थितः । संस्तूयमानो गन्धर्व्वैर्ऋषिभिश्च तपोधनैः ।
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य्य इवोदितः । अथ मेघस्वनो धीमान् व्याजहार शुभां गिरं ।
यमः परमधर्म्मज्ञो दक्षिणां दिशमास्थितः । अर्ज्जुनार्ज्जुन पश्यास्मान् लोकपालान् समागतान् । १६८०
दृष्टिं ते वितरामोऽद्य भवानर्हति दर्शनं । पूर्व्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्त्यतां समुपागतः । त्वया च वसुसम्भूतो महावीर्य्यः पितामहः ।
भीष्मः परमधर्म्मात्मा संसाध्यश्च रणेऽनघ । क्षत्रञ्चाग्निसमस्पर्शं भारद्वाजेन रक्षितं ।
दानवाश्च महावीर्य्या ये मनुष्यत्वमागताः । निवातकवचाश्चैव दानवाः कुरुनन्दन ।
पितुर्म्ममांशो देवस्य सर्व्वलोकप्रतापिनः । कर्णश्च सुमहावीर्य्यस्त्वया वध्यो धनञ्जय । १६८५
अंशाश्च क्षितिसम्प्राप्ता देवदानवरक्षसां । त्वया निपातिता युद्धे स्वकर्म्मफलनिर्ज्जितां ।
गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्षण । अक्षया तव कीर्त्तिश्च लोके स्थास्यति फाल्गुन ।
त्वया साक्षान्महादेवस्तोषितो हि महामृधे । लघ्वी वसुमती चापि कर्त्तव्या विष्णुना सह ।
गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणं । अनेनास्त्रेण सुमहत् त्वं हि कर्म्म करिष्यसि ।
॥ वैशम्पायन उवाच ॥ प्रतिजग्राह तत्पार्थो विधिवत् कुरुनन्दन । समन्त्रं सोपचारञ्च समोक्षं सनिवर्त्तनं । १६९०
ततो जलधरश्यामो वरुणो यादसां पतिः । पश्चिमां दिशमास्थाय गिरमुच्चारयन् प्रभुः ।
पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्म्मे व्यवस्थितः । पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः ।
मया समुद्यतान् पाशान् वारुणाननिवारितान् । प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्त्तनान् ।
एभिस्तदा मया वीर संग्रामे तारकामये । दैतेयानां सहस्राणि संयतानि महात्मनां ।

तस्मादिमान् महासत्त्व मत्प्रसादसमुत्थितान् । गृहाण नहि ते मुच्येदन्तकोऽप्याततायिनः । १६९५
अनेन त्वं यदाऽस्त्रेण संग्रामे विचरिष्यसि । तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ।
॥ वैशम्पायन उवाच ॥ ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत । दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ।
प्रीतोऽहमपि ते प्राज्ञ पाण्डवेय महाबल । त्वया सह समागम्य अजितेन तथैव च ।
सव्यसाचिन्महाबाहो पूर्व्वदेव सनातन । सहास्माभिर्भवान् श्रान्तः पुराकल्पेषु नित्यशः ।
दर्शनात्त्विदं दिव्यं प्रदिशामि नरर्षभ । अमनुष्यान्महाबाहो दुर्ज्जयानपि जेष्यसि । १७००
मत्तश्चैव भवानाशु गृहाणास्त्रमनुत्तमं । अनेन त्वमनीकानि धार्त्तराष्ट्रस्य धक्ष्यसि ।
तदिदं प्रतिगृह्णीष्व अन्तर्द्धानं प्रियं मम । ओजस्तेजो द्युतिकरं प्रस्वापनमरातिनुत् ।
महात्मना शङ्करेण त्रिपुरं निहतं यदा । तदैतदस्त्रं निर्मुक्तं येन दग्धा महासुराः ।
त्वदर्थमुद्यतञ्चेदं मया सत्यपराक्रम । त्वमर्हो धारणे चास्य मेरुप्रतिमगौरव ।
ततोऽर्ज्जुनो महाबाहुर्व्विधिवत् कुरुनन्दनः । कौवेरमभिजग्राह दिव्यमस्त्रं महाबलः । १७०५
ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणं । सान्त्वयन् श्लक्ष्णया वाचा मेघदुन्दुभिनिस्वनः ।
कुन्तीमातर्म्महाबाहो त्वमीशानः पुरातनः । परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिङ्गतः ।
देवकार्य्यन्तु सुमहत्त्वया कार्य्यमरिन्दम । आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते ।
रथो मातलिसंयुक्त आगन्ता त्वत्कृते महीं । तत्र तेऽहं प्रदास्यामि दिव्यान्यस्त्राणि कौरव ।
तान् दृष्ट्वा लोकपालांस्तु समेतान् गिरिमूर्द्धनि । जगाम विस्मयं धीमान् कुन्तीपुत्रो धनञ्जयः । १७१०
ततोऽर्ज्जुनो महातेजा लोकपालान् समागतान् । पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ।
ततः प्रतिययुर्द्देवाः प्रतिमान्य धनञ्जयं । यथा मतेन विबुधाः सर्व्वे काममनोजवाः ।
ततोऽर्ज्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः । कृतार्थमथ चात्मानं स मेने पूर्णमानसं ।
इति श्रीमहाभारते आरण्यपर्व्वणि कैरातपर्व्वणि देवप्रस्थाने एकचत्वारिंशोऽध्यायः । समाप्तञ्च कैरातपर्व्व ॥ ४१ ॥

## अथ इन्द्रलोकाभिगमन पर्व्व ॥ ५ ॥

॥ वैशम्पायन उवाच । गतेषु लोकपालेषु पार्थः शत्रुनिवर्हणः । चिन्तयामास राजेन्द्र देवराजरथं प्रति ।
ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः । रथो मातलिसंयुक्त आजगाम महाप्रभः । १७१५
नभो वितिमिरं कुर्व्वन् जलदान् पाटयन्निव । दिशः संपूरयन्नादैर्म्महामेघरवोपमैः ।
असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः । दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ।
तथैवाशनयश्चैव चक्रयुक्तास्तुलागुडाः । वायुस्फोटाः सनिर्घाता महामेघस्वनास्तथा ।
तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः । सिताभ्रकूटप्रतिमाः संहताश्च तथोपलाः ।
दशवाजिसहस्राणि हरीणां वातरंहसां । वहन्ति ये नेत्रमुषं दिव्यं मायामयं रथं । १७२०
तत्रापश्यन्महानीलं वैजयन्तं महाप्रभं । ध्वजमिन्दीवरश्यामं वंशं कनकभूषणं ।

यान् दृष्टवानसि विभो ताराक्रपाणि भूतले। ततोऽपश्यत् स्थितं द्वारि शुभ्रं वैजयिनं गजं।
ऐरावतञ्चतुर्द्दन्तं कैलासमिव शृङ्गिणं। स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः।
व्यरोचत यथा पूर्व्वं मान्धाता पार्थिवोत्तमः। अतिचक्राम लोकान् स राज्ञां राजीवलोचनः।
एवं स संक्रमंस्तत्र स्वर्गलोके महायशाः। ततो ददर्श शक्रस्य पुरींताममरावतीं। १७५५

इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि शक्रपुरीदर्शने द्विचत्वारिंशोऽध्यायः॥ ४२॥

॥ वैशम्पायन उवाच॥ स ददर्श पुरीं रम्यां सिद्धचारणसेवितां। सर्व्वर्त्तुकुसुमैः पुण्यैः पादपैरुपशोभितां।
तत्र सौगन्धिकानाञ्च पुष्पाणां पुण्यगन्धिनां। उद्वीज्यमानो मिश्रेण वायुना पुण्यगन्धिना।
नन्दनञ्च वनं दिव्यमप्सरोगणसेवितं। ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः।
नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना। स लोकः पुण्यकर्तॄणां नापि युद्धे पराङ्मुखैः।
नायज्वभिर्नाव्रतिकैर्न वेदश्रुतिवर्ज्जितैः। नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः। १७६०
नापि यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यः कथञ्चन। पानपैर्गुरुतल्पैश्च मांसादैर्व्वा दुरात्मभिः।
स तद्दिव्यं वनं पश्यन् दिव्यगीतनिनादितं। प्रविवेश महाबाहुः शक्रस्य दयितां पुरीं।
तत्र देवविमानानि कामगानि सहस्रशः। संस्थितान्यभियातानि ददर्शायुतशस्तदा।
संस्तूयमानो गन्धर्व्वैरप्सरोभिश्च पाण्डवः। पुष्पगन्धवहैः पुण्यैर्व्वायुभिश्चानुवीजितः।
ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः। हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणं। १७६५
आशीर्व्वादैः स्तूयमानो दिव्यवादित्रनिस्वनैः। प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितं।
नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतं। इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः।
तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनौ तथा। आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः।
राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः। तुम्बुरुर्नारदश्चैव गन्धर्व्वौ च हाहाहुहू।
तान् सर्व्वान् स समागम्य विधिवत्कुरुनन्दनः। ततोऽपश्यद्देवराजं शतक्रतुमरिन्दमः। १७७०
ततः पार्थो महाबाहुरवतीर्य्य रथोत्तमात्। ददर्श साक्षाद्देवेशं पितरं पाकशासनं।
पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा। दिव्यगन्धाधिवासेन व्यजनेन विधूयता।
विश्वावसुप्रभृतिभिर्गन्धर्व्वैः स्तुतिवन्दिभिः। स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसम्भवैः।
ततोऽभिगम्य कौन्तेयः शिरसाऽभ्यगमद्बली। स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत।
ततः शक्रासने पुण्ये देवर्षिगणसेविते। शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके। १७७५
मूर्द्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा। अङ्कमारोपयामास प्रश्रयावनतं तदा।
सहस्राक्षनियोगात्स पार्थः शक्रासनं गतः। अध्यक्रामदमेयात्मा द्वितीय इव वासवः।
ततः प्रेम्णा वृत्रशत्रुरर्ज्जुनस्य शुभं मुखं। पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन्।
प्रमार्ज्जमानः शनकैर्बाहू चास्यायतौ शुभौ। ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ।
वज्रग्रहणचिह्नेन करेण परिसान्त्वयन्। मुहुर्मुहुर्व्वज्रधरो बाहू चास्फोटयञ्छनैः। १७८०

स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक्। हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा।
एकासनोपविष्टौ तौ शोभयाञ्चक्रतुः सभां। सूर्य्याचन्द्रमसौ व्योम चतुर्द्दश्यामिवोदितौ।
तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना। गन्धर्व्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु।
घृताची मेनका रम्भा पूर्व्वचित्तिः स्वयम्प्रभा। उर्व्वशी मिश्रकेशी च दण्डगौरी वरूथिनी।
गोपाली सहजन्या च कुम्भयोनिः प्रजागरा। चित्रसेना चित्रलेखा सहा च मधुरस्वना। १७८५
एताश्चान्याश्च ननृतुस्तत्र तत्र सहस्रशः। चित्तप्रसादने युक्ताः सिद्धानां पद्मलोचनाः।
महाकटितटश्रोण्यः कम्पमानैः पयोधरैः। कटाक्षहावमाधुर्य्यैश्चेतोबुद्धिमनोहरैः।
इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि इन्द्रसभादर्शने त्रयश्चत्वारिंशोऽध्यायः॥ ४३॥
॥ वैशम्पायन उवाच॥ ततो देवाः सगन्धर्व्वाः समादायार्घ्यमुत्तमं। शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा।
पाद्यमाचमनीयञ्च प्रतिग्राह्य नृपात्मजं। प्रवेशयामासुरथो पुरन्दरनिवेशनं।
एवं सम्पूजितो जिष्णुरुवास भवने पितुः। उपशिक्षन् महास्त्राणि ससंहाराणि पाण्डवः। १७९०
शक्रस्य हस्तात् दयितं वज्रमस्त्रञ्च दुःसहं। अशनीश्च महानादा मेघबर्हिणलक्षणाः।
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन् सस्मार पाण्डवः। पुरन्दरनियोगाच्च पञ्चाब्दानवसत् सुखी।
ततः शक्रोऽब्रवीत् पार्थं कृतास्त्रं काल आगते। नृत्यं गीतञ्च कौन्तेय चित्रसेनादवाप्नुहि।
वादित्रं देवविहितं नृलोके यन्न विद्यते। तदर्ज्जयस्व कौन्तेय श्रेयो वै ते भविष्यति।
सखायं प्रददौ चास्य चित्रसेनं पुरन्दरः। स तेन सह सङ्गम्य रेमे पार्थो निरामयः। १७९५
गीतवादित्रनृत्यानि भूय एवादिदेश ह। तथाऽपि नालभच्छर्म्म तरस्वी द्यूतकारितं।
दुःशासनवधामर्षी शकुनेः सौबलस्य च। ततस्तेनातुलां प्रीतिमुपागम्य क्वचित् क्वचित्।
गान्धर्व्वमतुलं नृत्यं वादित्रञ्चोपलब्धवान्।
स शिक्षितो नृत्यगुणाननेकान् वादित्रगीतार्थगुणांश्च सर्व्वान्। न शर्म्म लेभे परवीरहन्ता भ्रातॄन् स्मरन्मातरञ्चैव कुन्तीं।
इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि अर्ज्जुनास्त्रादिशिक्षायां चतुश्चत्वारिंशोऽध्यायः॥ ४४॥
॥ वैशम्पायन उवाच॥ आदावेवाथ तं शक्रश्चित्रसेनं रहोऽब्रवीत्। पार्थस्य चक्षुरुर्व्वश्यां सक्तं विज्ञाय वासवः। १८००
गन्धर्व्वराज गच्छाद्य प्रहितोऽप्सरसां वरां। उर्व्वशीं पुरुषव्याघ्र सोपतिष्ठतु फाल्गुनं।
यथाऽर्च्चितो गृहीतास्त्रो विद्यया मन्नियोगतः। तथा त्वया विधातव्यः स्त्रीषु सङ्गविशारदः।
एवमुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात्। गन्धर्व्वराजोऽप्सरसमभ्यगादुर्व्वशीं वरां।
तां दृष्ट्वा विदितो हृष्टः स्वागतेनार्च्चितस्तया। सुखासीनः सुखासीनां स्मितपूर्व्वं वचोऽब्रवीत्।
विदितं तेऽस्तु सुश्रोणि प्रहितोऽहमिहागतः। त्रिदिवस्यैकराजेन त्वत्प्रसादाभिनन्दिना। १८०५
यस्तु देवमनुष्येषु प्रख्यातः सहजैर्गुणैः। श्रिया शीलेन रूपेण व्रतेन च दमेन च।
प्रख्यातो बलवीर्य्येण सम्मतः प्रतिभानवान्। वर्च्चस्वी तेजसा युक्तः क्षमावान् वीतमत्सरः।
साङ्गोपनिषदान् वेदान् चतुराख्यानपञ्चमान्। योऽधीते गुरुशुश्रूषां मेधाञ्चाष्टगुणाश्रयां।

ब्रह्मचर्य्येण दाक्ष्येण प्रसवैर्व्वयसाऽपि च । एको वै रक्षिता चैव त्रिदिवं मघवानिव ।
अकत्थनो मानयिता स्थूललक्ष्यः प्रियम्वदः । सुहृदश्चान्नपानेन विविधेनाभिवर्षति । १८१०
सत्यवाक् पूजितो वक्ता रूपवाननहंकृतः । भक्तानुकम्पी कान्तश्च प्रियश्च स्थिरसङ्गरः ।
प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमः । विदितस्तेऽर्ज्जुनो वीरः स स्वर्गफलमाप्नुयात् ।
तव शक्राभ्यनुज्ञातः पादावद्य प्रपद्यतां । तदेवं कुरु कल्याणि प्रपन्नस्त्वां धनञ्जयः ।
एवमुक्ता स्मितं कृत्वा सम्मानं बहु मन्य च । प्रत्युवाचोर्व्वशी प्रीत्या चित्रसेनमनिन्दिता ।
यस्त्वस्य कथितः सत्यो गुणोद्देशस्त्वया मम । तं श्रुत्वाऽव्यथयं पुंसो वृणुयां किमतोऽर्ज्जुनं । १८१५
महेन्द्रस्य नियोगेन त्वत्तः संप्रणयेन च । तस्य चाहं गुणौघेन फाल्गुने जातमन्मथा । गच्छ त्वं हि यथाकाममागमिष्याम्यहं
सुखं ।

इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि चित्रसेनोर्व्वशीसंवादे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ वैशम्पायन उवाच ॥ ततो विसृज्य गन्धर्व्वं कृतकृत्यं शुचिस्मिता । उर्व्वशी चाकरोत् स्नानं पार्थप्रार्थनलालसा ।
स्नानालङ्करणैर्हृद्यैर्गन्धमाल्यैश्च सुप्रभैः । धनञ्जयस्य रूपेण शरैर्मन्मथचोदितैः ।
अतिविद्धेन मनसा मन्मथेन प्रदीपिता । दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ।
चित्तसंकल्पभावेन सुचित्तानन्यमानसा । मनोरथेन संप्राप्तं रमत्येनं हि फाल्गुनं । १८२०
निर्गम्य चन्द्रोदयने विगाढे रजनीमुखे । प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ।
मृदुकुञ्चितदीर्घेण कुसुमोत्करधारिणा । केशहस्तेन ललना जगामाथ विराजती ।
भ्रूक्षेपालापमाधुर्य्यैः कान्त्या सौम्यतयाऽपि च । शशिनं वक्त्रचन्द्रेण सा ह्वयन्तीव गच्छती ।
दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ । गच्छन्त्या हारविकचौ स्तनौ तस्या ववल्गतुः ।
स्तनोद्वहनसंक्षोभान्नम्यमाना पदे पदे । त्रिवलीदामचित्रेण मध्येनातीव शोभिना । १८२५
अधोभूधरविस्तीर्णं नितम्बोन्नतपीवरं । मन्मथायतनं शुभ्रं रसनादामभूषितं ।
ऋषीणामपि दिव्यानां मनोव्याघातकारणं । सूक्ष्मवस्त्रधरं रेजे जघनं निरवद्यवत् ।
गूढगुल्फधरौ पादौ ताम्रायततलाङ्गुली । कूर्म्मपृष्ठोन्नतौ चापि शोभेते किङ्किणीकिणौ ।
सीधुपानेन चाल्पेन तुष्ट्याऽथ मदनेन च । विलासनैश्च विविधैः प्रेक्षणीयतराऽभवत् ।
सिद्धचारणगन्धर्व्वैः सा प्रयाता विलासिनी । बह्वाश्चर्य्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः । १८३०
सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता । तनुरभ्रावृता व्योम्नि चन्द्रलेखेव गच्छती ।
ततः प्राप्ता क्षणेनैव मनःपवनगामिनी । भवनं पाण्डुपुत्रस्य फाल्गुनस्य शुचिस्मिता ।
तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता । अर्ज्जुनस्य नरश्रेष्ठ उर्व्वशी शुभलोचना ।
उपातिष्ठत तद्वेश्म निर्म्मलं सुमनोहरं । स शङ्कितमना राजन् प्रत्युद्गच्छत तां निशि ।
दृष्ट्वैव चोर्व्वशीं पार्थो लज्जासंवृतलोचनः । तदाभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् । १८३५

॥ अर्ज्जुन उवाच ॥ अभिवादे त्वां शिरसा प्रवराऽप्सरसां वरे । किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ।
फाल्गुनस्य वचः श्रुत्वा गतसंज्ञा तदोर्व्वशी । गन्धर्व्ववचनं सर्व्वं श्रावयामास तं तदा ।
॥ उर्व्वश्युवाच ॥ यथा मे चित्रसेनेन कथितं मनुजोत्तम । तत्तेऽहं संप्रवक्ष्यामि यथा चाहमिहागता ।
उपस्थाने महेन्द्रस्य वर्त्तमाने मनोरमे । तवागमनतो हृष्टे स्वर्गस्य परमोत्सवे ।
रुद्राणाञ्चैव सान्निध्यमादित्यानाञ्च सर्व्वशः । समागमेऽश्विनोश्चैव वसूनाञ्च नरोत्तम । १८४०
महर्षीणाञ्च संघेषु राजर्षिप्रवरेषु च । सिद्धचारणयक्षेषु महोरगगणेषु च ।
उपविष्टेषु सर्व्वेषु स्थानमानप्रभावतः । ऋद्ध्या प्रज्वलमानेषु अग्निसोमार्कवर्ष्मसु ।
वीणासु वाद्यमानासु गन्धर्व्वैः शक्रनन्दन । दिव्ये मनोरमे गेये प्रवृत्ते पृथुलोचन ।
सर्व्वाप्सरःसु मुख्यासु प्रनृत्तासु कुरूद्वह । त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ।
तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसां । तव पित्राभ्यनुज्ञाता गताः स्वं स्वं गृहं सुराः । १८४५
तथैवाप्सरसः सर्व्वा विशिष्टाः स्वगृहं गताः । अपि चान्याश्च शत्रुघ्न तव पित्रा विसर्ज्जिताः ।
ततः शक्रेण सन्दिष्टश्चित्रसेनो ममान्तिकं । प्राप्तः कमलपत्राक्ष स च मामब्रवीदथ ।
त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्ण्णिनि । प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ।
शक्रतुल्यं रणे शूरं सदौदार्य्यगुणान्वितं । पार्थं प्रार्थय सुश्रोणि त्वमित्येव तदाऽब्रवीत् ।
ततोऽहंसमनुज्ञाता तेन पित्रा च तेऽनघ । तवान्तिकमनुप्राप्ता शुश्रूषितुमरिन्दम । १८५०
त्वद्गुणाकृष्टचित्ताऽहमनङ्गवशमागता । चिराभिलषितो वीर ममाप्येष मनोरथः ।
॥ वैशम्पायन उवाच ॥ तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतोऽर्ज्जुनः । उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये ।
॥ अर्ज्जुन उवाच ॥ दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भामिनि । गुरुदारैः समाना मे निश्चयेन वरानने ।
यथा कुन्ती महाभागा यथेन्द्राणी शची मम । तथात्वमपि कल्याणि नात्र कार्य्या विचारणा ।
यच्चेक्षिताऽसि विस्पष्टं विशेषेण मया शुभे । तच्च कारणपूर्व्वं हि शृणु सत्यं शुचिस्मिते । १८५५
इयं पौरववंशस्य जननी मुदितेति च । त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ।
न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः । गुरोर्गुरुतरा मे त्वं मम त्वं वंशवर्द्धिनी ।
॥ उर्व्वश्युवाच ॥ अनावृताश्च सर्व्वाः स्म देवराजाभिनन्दन । गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ।
पुरोर्व्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः । तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः ।
तत्प्रसीद न मामार्त्तां विसर्ज्जयितुमर्हसि । हृच्छयेन च सन्तप्तां भक्ताञ्च भज मानद । १८६०
॥ अर्ज्जुन उवाच ॥ शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते । शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ।
यथा कुन्ती च माद्री च शची चैव ममानघे । तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ।
गच्छ मूर्द्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्ण्णिनि । त्वं हि मे मातृवत् पूज्या रक्ष्योऽहं पुत्रवत्त्वया ।
॥ वैशम्पायन उवाच ॥ एवमुक्ता तु पार्थेन उर्व्वशी क्रोधमूर्च्छिता । वेपन्ती भ्रुकुटीवक्त्रा शशापाथ धनञ्जयं ।
॥ उर्व्वश्युवाच ॥ तव पित्राभ्यनुज्ञातां स्वयञ्च गृहमागतां । यस्मान्मां नाभिनन्देथाः कामबाणवशङ्गतां । १८६५

तस्मात्त्वं नर्त्तनः पार्थ स्त्रीमध्ये मानवर्ज्जितः । अपुमानिति विख्यातः षण्ढवद्विचरिष्यसि ।
॥ वैशम्पायन उवाच ॥ एवं दत्त्वाऽर्ज्जुने शापं स्फुरदोष्ठी श्वसन्त्यथ । पुनः प्रत्यागता क्षिप्रमुर्व्वशी गृहमात्मनः ।
ततोऽर्ज्जुनस्त्वरमाणश्चित्रसेनमरिन्दमः । संप्राप्य रजनीवृत्तं तदुर्व्वश्या यथा तथा ।
निवेदयामास तदा चित्रसेनाय पाण्डवः । तत्र चैवं यथावृत्तं शापञ्चैव पुनःपुनः ।
न्यवेदयच्च शक्रस्य चित्रसेनोऽपि सर्व्वशः । तत आनाय्य तनयं विविक्ते हरिवाहनः । १८७०
सान्त्वयित्वा शुभैर्व्वाक्यैः स्मयमानोऽभ्यभाषत । सुपुत्त्राऽद्य पृथा तात त्वया पुत्त्रेण सत्तम ।
ऋषयोऽपि हि धैर्य्येण जिता वै ते महाभुज । यत्तु दत्तवती शापमुर्व्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति । अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ।
वर्षे त्रयोदशे वीर तं तत्र क्षपयिष्यसि । तेन नर्त्तनवेशेन अपुंस्त्वेन तथैव च ।
वर्षमेकं विहृत्यैवं ततः पुंस्त्वमवाप्स्यसि । एवमुक्तस्तु शक्रेण फाल्गुनः परवीरहा । १८७५
मुदं परमिकां लेभे नच शापं व्यचिन्तयत् । चित्रसेनेन सहितो गन्धर्व्वेण यशस्विना ।
रेमे स स्वर्गभवने पाण्डुपुत्त्रो धनञ्जयः । य इदं शृणुयान्नित्यं वृत्तं पाण्डुसुतस्य वै । न तस्य कामः कामेषु पापकेषु प्रवर्त्तते ।
इदममरवरात्मजस्य घोरं शुचिचरितं विनिशम्य फाल्गुनस्य । व्यपगतमदडम्भरागदोषास्त्रिदिवगताऽभिरमन्ति मानवेन्द्राः ।
इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि उर्व्वशीशापे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ वैशम्पायन उवाच ॥ कदाचिदटमानस्तु महर्षिरुत लोमशः । जगाम शक्रभवनं पुरन्दरदिदृक्षया ।
स समेत्य नमस्कृत्य देवराजं महामुनिः । ददर्शार्द्धासनगतं पाण्डवं वासवस्य हि । १८८०
ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे । निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ।
तस्य दृष्ट्वाऽभवद्बुद्धिः पार्थमिन्द्रासने स्थितं । कथन्नु क्षत्त्रियः पार्थः शक्रासनमवाप्तवान् ।
किं तस्य सुकृतं कर्म्म के लोका वै विनिर्ज्जिताः । स एवमनुसम्प्राप्तः स्थानं देवनमस्कृतं ।
तस्य विज्ञाय सङ्कल्पं शक्रो वृत्रनिसूदनः । लोमशं प्रहसन् वाक्यमिदमाह शचीपतिः ।
ब्रह्मर्षे श्रूयतां यत्ते मनसैतद्विवक्षितं । नायं केवलमर्त्त्यो वै मानुषत्वमुपागतः । १८८५
महर्षे मम पुत्त्रोऽयं कुन्त्यां जातो महाभुजः । अस्त्रहेतोरिह प्राप्तः कस्माच्चित् कारणान्तरात् ।
अहो नैनं भवान् वेत्ति पुराणमृषिसत्तमं । शृणु मे वदतो ब्रह्मन् योऽयं यच्चास्य कारणं ।
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ । ताविमावनुजानीहि हृषीकेशधनञ्जयौ ।
विख्यातौ त्रिषु लोकेषु नरनारायणावृषी । कार्य्यार्थमवतीर्णौ तौ पृथ्वीं पुण्यप्रतिश्रयां ।
यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्व्वा महात्मभिः । तदाश्रमपदं पुण्यं वदरीनाम विश्रुतं । १८९०
स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च । यतः प्रववृते गङ्गा सिद्धचारणसेविता ।
तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती । भूमेर्भारावतरणं महावीर्य्यौ करिष्यतः ।
उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति । विप्रियेषु स्थिताऽस्माकं वरदानेन मोहिताः ।
तर्कयन्ते सुरान् हन्तुं बलदर्पसमन्विताः । देवान्न गणयन्त्येते तथा दत्तवरा हि ते ।

पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः। सर्व्वदेवनिकाया हि नालं योधयितुं हि तान्। १८९५
योऽसौ भूमिगतः श्रीमान् विष्णुर्मधुनिसूदनः। कपिलो नाम देवोऽसौ भगवानजितो हरिः।
येन पूर्व्वं महात्मानः खनमाना रसातलं। दर्शनादेव निहताः सगरस्यात्मजा विभो।
तेन कार्य्यं महत्कार्य्यमस्माकं द्विजसत्तम। पार्थेन च महायुद्धे समेताभ्यां न संशयः।
योऽसुरान् दर्शनादेव शक्तो हन्तुं सहानुगान्। निवातकवचान् सर्व्वान् नागानिव महाह्रदे।
किन्तु नाल्पेन कार्य्येण प्रबोध्यो मधुसूदनः। तेजसः सुमहाराशिः प्रबुद्धः प्रदहेज्जगत्। १९००
अयं तेषां समस्तानां शक्तः प्रतिसमासने। तान्निहत्य रणे शूरः पुनर्य्यास्यति मानुषान्।
भवानस्मन्नियोगेन यातु तावन्महीतलं। काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरं।
स वाच्यो मम सन्देशाद्धर्मात्मा सत्यसङ्गरः। नोत्कण्ठा फाल्गुने कार्य्या कृतास्त्रः शीघ्रमेष्यति।
नाशुद्धबाहुवीर्य्येण नाकृतास्त्रेण वा रणे। भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुं।
गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः। नृत्यवादित्रगीतानां दिव्यानां पारमेयिवान्। १९०५
भवानपि विविक्तानि तीर्थानि मनुजेश्वर। भ्रातृभिः सहितः सर्व्वैर्द्रष्टुमर्हत्यरिन्दम।
तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः। राज्यं भोक्ष्यसि राजेन्द्र सुखी विगतकल्मषः।
भवांश्चैनं द्विजश्रेष्ठ पर्य्यटन्तं महीतलं। त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः।
गिरिदुर्गेषु च सदा देशेषु विषमेषु च। वसन्ति राक्षसा रौद्रास्तेभ्यो रक्षां विधास्यति।
एवमुक्ते महेन्द्रेण बीभत्सुरपि लोमशं। उवाच प्रयतो वाक्यं रक्षेथाः पाण्डुनन्दनं। १९१०
यथागुप्तस्त्वया राजा चरेत्तीर्थानि सत्तम। दानं दद्याद्यथा चैव तथा कुरु महामुने।
॥ वैशम्पायन उवाच ॥ तथेति सम्प्रतिज्ञाय लोमशः सुमहातपाः। काम्यकं वनमुद्दिश्य समुपायान्महीतलं।
ददर्श तत्र कौन्तेयं धर्म्मराजमरिन्दमं। तापसैर्भ्रातृभिश्चैव सर्व्वतः परिवारितं।
इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि लोमशगमने सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ जनमेजय उवाच ॥ अत्यद्भुतमिदं कर्म्म पार्थस्यामिततेजसः। धृतराष्ट्रो महाप्राज्ञः श्रुत्वा विप्र किमब्रवीत्।
॥ वैशम्पायन उवाच ॥ शक्रलोकगतं पार्थं श्रुत्वा राजाऽम्बिकासुतः। द्वैपायनादृषिश्रेष्ठात् सञ्जयं वाक्यमब्रवीत्। १९१५
॥ धृतराष्ट्र उवाच ॥ श्रुतं मे सूत कार्त्स्न्येन कर्म्म पार्थस्य धीमतः। कच्चित्तवापि विदितं याथातथ्येन सारथे।
प्रमत्तो ग्राम्यधर्म्मेषु मन्दात्मा पापनिश्चयः। मम पुत्रः सुदुर्ब्बुद्धिः पृथिवीं घातयिष्यति।
यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः। त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः।
अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान्। कोऽर्ज्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः।
मम पुत्रा दुरात्मानः सर्व्वे मृत्युवशानुगाः। येषां युद्धं दुराधर्षैः पाण्डवैः प्रत्युपस्थितं। १९२०
तथैव च न पश्यामि युधि गाण्डीवधन्वनः। अनिशञ्चिन्तयानोऽपि य एनमुदियाद्रथी।
द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे। महान् स्यात् संशयो लोके तत्र पश्यामि नो जयं।
घृणी कर्णः प्रमादी च आचार्य्यः स्थविरो गुरुः। अमर्षी बलवान् पार्थः संरम्भी दृढविक्रमः।

सम्भवेत्तुमुलं युद्धं सर्व्वतोऽप्यपराजितं । सर्व्वे ह्यस्त्रविदः शूराः सर्व्वे प्राप्ता महारथाः ।

अपि सर्व्वेश्वरत्वं हि ते वाञ्छन्त्यपराजिताः । वधे नूनं भवेच्छान्तिरेतेषां फाल्गुनस्य वा । १९२५

न तु हन्ताऽर्ज्जुनस्यास्ति जेता वाऽस्य न विद्यते । मन्युस्तस्य कथं शाम्येदेव प्रतिसंहितः ।

त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत् । जिगाय पार्थिवान् सर्व्वान् राजसूये महात्मनः ।

शेषं कुर्य्याद्गिरेर्व्वज्रो निपतन्मूर्द्ध्नि सञ्जय । न तु कुर्य्युः शराः शेषं क्षिप्तास्तात किरीटिना ।

यथा हि किरणा भानोस्तपन्तीह चराचरं । तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मत्सुतान् ।

अपि तद्रथघोषेण भयार्त्ताः सव्यसाचिनः । प्रतिभाति विदीर्णेव सर्व्वतो भारती चमूः । १९३०

यदुद्वमन् प्रवपंश्चैव बाणान् स्थाताततायी समरे किरीटी । सृष्टोऽन्तकः सर्व्वहरो विधात्रा भवेद्यथा तद्वदपारणीयः ।

इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि धृतराष्ट्रविलापे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

॥ सञ्जय उवाच ॥ यदेतत् कथितं राजंस्त्वया दुर्य्योधनं प्रति । सर्व्वमेतद्यथा तत्त्वं नैतन्मिथ्या महीपते ।

मन्युना हि समाविष्टाः पाण्डवास्ते महौजसः । दृष्ट्वा कृष्णां सभां नीतां धर्म्मपत्नीं यशस्विनीं ।

दुःशासनस्य ता वाचः श्रुत्वा ते दारुणोदयाः । कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः ।

श्रुतं हि मे महाराज यथा पार्थेन संयुगे । एकादशतनुः स्थाणुर्धनुषा परितोषितः । १९३५

कैरातं वेशमास्थाय योधयामास फाल्गुनं । जिज्ञासुः सर्व्वदेवेशः कपर्द्दी भगवान् स्वयं ।

तत्रैनं लोकपालास्ते दर्शयामासुरच्युतं । अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभं ।

नैतदुत्सहते चान्यो लब्धुमन्यत्र फाल्गुनात् । साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि ।

महेश्वरेण यो राजन्न जीर्णो ह्यष्टमूर्त्तिना । कस्तमुत्सहते वीरो युद्धे जरयितुं पुमान् ।

आसादितमिदं घोरं तुमुलं लोमहर्षणं । द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् । १९४०

यस्तु प्रस्फुरमाणौष्ठो भीमः प्राह वचोऽर्थवत् । दृष्ट्वा दुर्य्योधनेनोरू द्रौपद्या दर्शितावुभौ ।

ऊरू भेत्स्यामि ते पाप गदया भीमवेगया । त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः ।

सर्व्वे प्रहरतां श्रेष्ठाः सर्व्वे चामिततेजसः । सर्व्वे सर्व्वास्त्रविद्वांसो देवैरपि सुदुर्ज्जयाः ।

मन्ये मन्युसमुद्धूताः पुत्त्रार्थ्यं तव संयुगे । अन्तं पार्थाः करिष्यन्ति भार्य्यामर्षसमन्विताः ।

॥ धृतराष्ट्र उवाच ॥ किं कृतं सूत कर्णेन वदता परुषं वचः । पर्य्याप्तं वैरमेतावत् यत् कृष्णा सा सभां गता । १९४५

अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः । येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ।

ममापि वचनं सूत न शुश्रूषति मन्दभाक् । दृष्ट्वा मां चक्षुषा हीनं निर्व्विचेष्टमचेतनं ।

ये चास्य सचिवा मन्दाः कर्णसौबलकादयः । ते तस्य भूयसो दोषान् वर्द्धयन्ति विचेतसः ।

स्वैरमुक्ता अपि शराः पार्थेनामिततेजसा । निर्द्दहेयुर्मम सुतान् किंपुनर्म्मन्युनेरिताः ।

पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः । दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि । १९५०

यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्द्दनः । हरिस्त्रैलोक्यनाथः स किं नु तस्य न निर्ज्जितं ।

इदं हि सुमहच्चित्रमर्ज्जुनस्येह सञ्जय । महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः ।

प्रत्यक्षं सर्व्वलोकस्य खाण्डवे यत्कृतं पुरा । फाल्गुनेन महार्थार्थं वज्रिहेमोदरेण च ।
समर्था नहि मे पुत्राः सहामात्याः सबान्धवाः । क्रुद्धे भीमे च पार्थे च वासुदेवे च सात्वते ।
इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि धृतराष्ट्रखेदे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ जनमेजय उवाच ॥ यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने । प्रव्राज्य पाण्डवान् वीरान् सर्व्वमेतन्निरर्थकं । १८८५
कथञ्च राजा पुत्रं तमुपेक्षेताल्पचेतसं । दुर्य्योधनं पाण्डुपुत्रान् कोपयानं महारथान् ।
किमासीत् पाण्डुपुत्राणां वने भोजनमुच्यतां । वानेयमथवा कृष्टमेतदाख्यातु नो भवान् ।
॥ वैशम्पायन उवाच ॥ वानेयांश्च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् । ब्राह्मणानां निवेद्याग्रमभुञ्जन् पुरुषर्षभाः ।
तांस्तु शूरान् महेष्वासांस्तदा निवसतो वने । अन्वयुर्ब्राह्मणा राजन् साग्नयोऽनग्नयस्तथा ।
ब्राह्मणानां सहस्राणि स्नातकानां महात्मनां । दश मोक्षविदां तत्र यान् बिभर्त्ति युधिष्ठिरः । १८९०
रुरून् कृष्णमृगांश्चैव मेध्यांश्चान्यान् वनेचरान् । बाणैरुन्मथ्य विविधैर्ब्राह्मणेभ्यो न्यवेदयत् ।
न तत्र कश्चिद्दुर्व्वर्णो व्याधितो वाऽपि दृश्यते । कृशो वा दुर्ब्बलो वाऽपि दीनो भीतोऽपि वा पुनः ।
पुत्रानिव प्रियान् भ्रातृन् ज्ञातीनिव सहोदरान् । पुपोष कौरवश्रेष्ठो धर्म्मराजो युधिष्ठिरः ।
पतींश्च द्रौपदी सर्व्वान् द्विजातींश्च यशस्विनी । मातृवद्भोजयित्वाऽग्रे शिष्टमाहारयत्तदा ।
प्राचीं राजा दक्षिणां भीमसेनो यमौ प्रतीचीमथ वाऽप्युदीचीं । धनुर्द्धरा मांसहेतोर्मृगाणां क्षयञ्चक्रुर्नित्यमेवोपगम्य । १८९५
तथा तेषां वसतां काम्यके वै विहीनानामर्ज्जुनेनोत्सुकानां । पञ्चैव वर्षाणि तथा व्यतीयुरधीयतां जपतां जुह्वताञ्च ।
इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि पार्थाहारकथने पञ्चाशोऽध्यायः ॥ ५० ॥
॥ वैशम्पायन उवाच ॥ तेषां तच्चरितं श्रुत्वा मनुष्यातीतमद्भुतं । चिन्ताशोकपरीतात्मा मन्युनाऽभिपरिप्लुतः ।
दीर्घमुष्णञ्च निश्वस्य धृतराष्ट्रोऽम्बिकासुतः । अब्रवीत् सञ्जयं सूतमामन्त्र्य पुरुषर्षभः ।
न रात्रौ न दिवा सूत शान्तिं प्राप्नोमि वै क्षणं । सञ्चिन्त्य दुर्नयं घोरं पुत्राणां द्यूतजं हि यत् ।
तेषामसह्यवीर्य्याणां शौर्य्यं धैर्य्यं धृतिं परां । अन्योऽन्यमनुरागञ्च भ्रातृणामतिमानुषं । १९००
देवपुत्रौ महाभागौ देवराजसमद्युती । नकुलः सहदेवश्च पाण्डवौ युद्धदुर्म्मदौ ।
दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ । शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ तरस्विनौ ।
भीमार्ज्जुनौ पुरोधाय यदा तौ रणमूर्द्धनि । स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ ।
न शेषं हि प्रपश्यामि मम सैन्यस्य सञ्जय । तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ।
द्रौपद्यास्तं परिक्लेशं न क्षंस्येते त्वमर्षिणौ । वृष्णयोऽथ महेष्वासाः पाञ्चाला वा महौजसः । १९०५
युधि सत्याभिसन्धेन वासुदेवेन रक्षिताः । प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीं ।
रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन । न शक्यः सहितुं वेगः सर्व्वैस्तैरपि संयुगे ।
तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः । शैक्यया वीरघातिन्या गदया विचरिष्यति ।
तथा गाण्डीवनिर्घोषं विस्फूर्ज्जितमिवाशनेः । गदावेगञ्च भीमस्य नालं सोढुं नराधिपाः ।
ततोऽहं सुहृदां वाचो दुर्य्योधनवशानुगः । स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा । १९१०

॥ सञ्जय उवाच ॥ व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः । समर्थेनापि यन्मोहात् पुत्रस्ते न निवारितः ।
श्रुत्वा हि निर्ज्जितान् द्यूते पाण्डवान् मधुसूदनः । त्वरितः काम्यके पार्थान् समभावयदच्युतः ।
द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः । विराटो धृष्टकेतुश्च केकेयाश्च महारथाः ।
तैश्च यत्कथितं राजन् दृष्ट्वा पार्थान् पराजितान् । चारेण विदितं सर्व्वं तन्मया विदितञ्च ते ।
समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः । सारथ्ये फाल्गुनस्याजौ तथेत्याह च तान् हरिः । १९८५
अमर्षितो हि कृष्णोऽपि दृष्ट्वा पार्थांस्तथागतान् । कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरं ।
या सा समृद्धिः पार्थानामिन्द्रप्रस्थे बभूव ह । राजसूये मया दृष्टा नृपैरन्यैः सुदुर्लभा ।
यत्र सर्व्वान्महीपालान् शस्त्रतेजोभयार्द्दितान् । सवङ्गाङ्गान् सपौण्ड्रोड्रान् सचोलद्राविडान्धकान् ।
सागरानूपकांश्चैव ये च प्रान्तनिवासिनः । सिंहलान् बर्ब्बरान् म्लेच्छान् ये च लङ्कानिवासिनः ।
पश्चिमानि च राष्ट्राणि शतशः सागरान्तिकान् । पह्लवान् दरदान् सर्व्वान् किरातान् यवनाञ्छकान् । १९९०
हारहूणांश्च चीनांश्च तुषारान् सैन्धवांस्तथा । जागुडान् रमठान् मुण्डान् स्त्रीराज्यानथ तङ्गणान् । केकयान्मालवांश्चैव तथा काश्मीरकानपि ।
अद्राक्षमहमाहूतान् यज्ञे ते परिवेषकान् । सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ।
आदाय जीवितं तेषामाहरिष्यामि तामहं । रामेण सह कौरव्य भीमार्ज्जुनयमैस्तथा ।
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च । धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ।
दुर्य्योधनं रणे हत्वा सद्यः कर्णञ्च भारत । दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यते । १९९५
ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन् । धार्त्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमां ।
अथैनमब्रवीद्राजा तस्मिन् वीरसमागमे । शृण्वत्सु तेषु वीरेषु धृष्टद्युम्नमुखेषु च ।
॥ युधिष्ठिर उवाच ॥ प्रतिगृह्णामि ते वाचमिमां सत्यां जनार्द्दन । अमित्रान्मे महाबाहो सानुबन्धान् हनिष्यसि ।
वर्षात्त्रयोदशादूर्द्धं सत्यं मां कुरु केशव । प्रतिज्ञातो वने वासो राजमध्ये मया ह्ययं ।
तद्धर्म्मराजवचनं प्रतिश्रुत्य सभासदः । धृष्टद्युम्नपुरोगास्ते शमयामासुरञ्जसा । २०००
केशवं मधुरैर्व्वाक्यैः कालयुक्तैरमर्षितं । पाञ्चालीं प्राहुरक्लिष्टां वासुदेवस्य शृण्वतः ।
दुर्य्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितं । प्रतिजानीमहे सत्यं मा शुचो वरवर्णिनि ।
ये स्म तेऽवजितां कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा । मांसानि तेषां खादन्तो हसिष्यन्ति वृकद्विजाः ।
पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा । उत्तमाङ्गानि कर्षन्तो यैः कृष्टाऽसि सभातले ।
तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले । क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् । २००५
परिक्लिष्टाऽसि यैस्तत्र यैश्चापि समुपेक्षिता । तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितं ।
एवं बहुविधा वाचस्त ऊचुर्भरतर्षभाः । सर्व्वे तेजस्विनः शूराः सर्व्वे चाहतलक्षणाः ।
ते धर्म्मराजेन वृता वर्षादूर्द्धं त्रयोदशात् । पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ।
रामश्च कृष्णश्च धनञ्जयश्च प्रद्युम्नसाम्बौ युयुधानभीमौ । माद्रीसुतौ केकयराजपुत्राः पाञ्चालपुत्राः सह मत्स्यराज्ञा ।

एतान् सर्व्वान् लोकवीरानजेयान् महात्मनः सानुबन्धान् सशैन्यान् । को जीवितार्थी समरेऽभ्युदीयात् क्रुद्धान् सिंहान् केसरिणो यथैव । २०१०

॥ धृतराष्ट्र उवाच ॥ यन्मां अब्रवीद्विदुरो द्यूतकाले त्वं पाण्डवान् जेष्यसि चेन्नरेन्द्र । ध्रुवं कुरूणामयमन्तकालो महाभयो भविता शोणितौघः ।

मन्ये तथा तद्भवितेति सूत यथा क्षत्ता प्राह वचः पुरा मां । असंशयं भविता युद्धमेतद्गते काले पाण्डवानां यथोक्तं ।

इति श्रीमहाभारते आरण्यपर्व्वणि इन्द्रलोकाभिगमनपर्व्वणि धृतराष्ट्रविलापे एकपञ्चाशोऽध्यायः ॥ ५१ ॥ समाप्तञ्च इन्द्रलोकाभिगमनपर्व्व ॥

## अथ नलोपाख्यानपर्व्व ॥ ६ ॥

॥ जनमेजय उवाच ॥ अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि । युधिष्ठिरप्रभृतयः किमकुर्व्वत पाण्डवाः ।

॥ वैशम्पायन उवाच ॥ अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि । न्यवसन् कृष्णया सार्द्धं काम्यके भरतर्षभाः ।

ततः कदाचिदेकान्ते विविक्त इव शाद्वले । दुःखार्त्ता भरतश्रेष्ठा निषेदुः सह कृष्णया । २०१५

धनञ्जयं शोचमानाः साश्रुकण्ठाः सुदुःखिताः । तद्वियोगार्द्दितान् सर्व्वान् शोकः समभिपुप्लुवे ।

धनञ्जयवियोगाच्च राज्यनाशाच्च दुःखिताः । अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ।

निदेशात्ते महाराज गतोऽसौ भरतर्षभः । अर्ज्जुनः पाण्डुपुत्राणां यस्मिन् प्राणाः प्रतिष्ठिताः ।

यस्मिन् विनष्टे पाञ्चालाः सहपुत्रास्तथा वयं । सात्यकिर्व्वासुदेवश्च विनश्येयुर्न संशयः ।

योऽसौ गच्छति धर्म्मात्मा बहून् क्लेशान् विचिन्तयन् । भवद्वियोगाद्बीभत्सुस्ततो दुःखतरं नु किं । २०२०

यस्य बाहू समाश्रित्य वयं सर्व्वे महात्मनः । मन्यामहे जितानाजौ परान् प्राप्तां च मेदिनीं ।

यस्य प्रभावान्न मया सभामध्ये धनुष्मतः । नीता लोकममुं सर्व्वे धार्त्तराष्ट्राः ससौबलाः ।

ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः । सहामहे भवन्मूलं वासुदेवेन पालिताः ।

वयं हि सह कृष्णेन हत्वा कर्णमुखान् परान् । स्वबाहुविजितां कृत्स्नां प्रशासेम वसुन्धरां ।

भवतो द्यूतदोषेण सर्व्वे वयमुपप्लुताः । अहीनपौरुषा बाला बलिभिर्बलवत्तराः । २०२५

क्षात्रं धर्म्मं महाराज समवेक्षितुमर्हसि । नहि धर्म्मो महाराज क्षत्रियस्य वनाश्रयः ।

राज्यमेव परं धर्म्मं क्षत्रियस्य विदुर्बुधाः । स क्षत्रधर्म्मविद्राजा धर्म्यान्नानीनशः पथः ।

प्राग्द्वादशसमा राजन् धार्त्तराष्ट्रान्निहन्महि । निवर्त्य च वनात् पार्थमानाय्य च जनार्द्दनं ।

व्यूढानीकान्महाराज जवेनैव महामते । धार्त्तराष्ट्रानमुं लोकं गमयामि विशाम्पते ।

सर्व्वानहं हनिष्यामि धार्त्तराष्ट्रान् ससौबलान् । दुर्य्योधनञ्च कर्णञ्च यो वाऽन्यः प्रतियोत्स्यते । २०३०

मया प्रशमिते पश्चात्त्वमेष्यसि वनं पुनः । एवं कृते न दोषस्ते भविष्यति विशाम्पते ।

यज्ञैश्च विविधैस्तात कृतं पापमरिन्दम । अवधूय महाराज गच्छेम स्वर्गमुत्तमं ।

एवमेतद्भवेद्राजन् यदि राजा न बालिशः । अस्माकं दीर्घसूत्रः स्याद्भवान् धर्म्मपरायणः ।

निकृत्या निकृतप्रज्ञा हन्तव्या इति निश्चयः। न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते।
तथा भारत धर्म्मेषु धर्म्मज्ञैरिह दृश्यते। अहोरात्रं महाराज तुल्यं सम्वत्सरेण ह। २०३५
तथैव वेदवचनं श्रूयते नित्यदा विभो। संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः।
यदि वेदाः प्रमाणास्ते दिवसादूर्द्ध्वमच्युत। त्रयोदशसमाः कालो ज्ञायतां परिनिष्ठितः।
कालो दुर्य्योधनं हन्तुं सानुबन्धमरिन्दम। एकाग्रां पृथिवीं सर्व्वां पुरा राजन् करोति सः।
द्यूतप्रियेण राजेन्द्र तथा तद्भवता कृतं। प्रायेणाज्ञातचर्य्यायां वयं सर्व्वे निपातिताः।
न तं देशं प्रपश्यामि यत्र सोऽस्मान् सुदुर्ज्जनः। न विज्ञास्यति दुष्टात्मा चारैरिति सुयोधनः। २०४०
अधिगम्य च सर्व्वान्नो वनवासमिमं ततः। प्रव्राजयिष्यति पुनर्निकृत्याऽधमपूरुषः।
यद्यस्मानभिगच्छेत पापः स हि कथञ्चन। अज्ञातचर्य्यामुत्तीर्णान् दृष्ट्वा च पुनराह्वयेत्।
द्यूतेन ते महाराज पुनर्द्यूतमवर्त्तत। भवांश्च पुनराहूतो द्यूतेनैवापनेष्यति।
स तथाऽक्षेषु कुशलो निश्चितो गतचेतनः। चरिष्यसि महाराज वनेषु वसतीः पुनः।
यद्यस्मान् न महाराज कृपणान् कर्त्तुमर्हसि। यावज्जीवमवेक्षस्व वेदधर्म्मांश्च कृत्स्नशः। २०४५
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः। अनुज्ञातस्त्वया गत्वा यावच्छक्ति सुयोधनं।
यथैव कक्षमुत्सृष्टो दहेदनिलसारथिः। हनिष्यामि तथा मन्दमनुजानातु मे भवान्।
॥ वैशम्पायन उवाच ॥ एवं ब्रुवाणं भीमन्तु धर्म्मराजो युधिष्ठिरः। उवाच सान्त्वयन् राजा मूर्द्ध्न्युपाघ्राय पाण्डवं।
असंशयं महाबाहो हनिष्यसि सुयोधनं। वर्षात्त्रयोदशादूर्द्ध्वं सह गाण्डीवधन्वना।
यच्च मां भाषसे पार्थ प्राप्तः काल इति प्रभो। अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते। २०५०
अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयं। हन्ता त्वमसि दुर्द्धर्षं सानुबन्धं सुयोधनं।
एवं ब्रुवति भीमन्तु धर्म्मराजे युधिष्ठिरे। आजगाम महाभागो बृहदश्वो महानृषिः।
तमभिप्रेक्ष्य धर्म्मात्मा सम्प्राप्तं धर्म्मचारिणं। शास्त्रवन्मधुपर्केण पूजयामास धर्म्मराट्।
आश्वस्तञ्चैनमासीनमुपासीनो युधिष्ठिरः। अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत।
अक्षद्यूते च भगवन् धनं राज्यञ्च मे हृतं। आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः। २०५५
अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः। भार्य्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी।
पुनर्द्यूतेन मां जित्वा वनवासं सुदारुणं। प्राव्राजयन्महारण्यमजिनैः परिवारितं।
अहं वने दुर्व्वसतीर्व्वसन् परमदुःखितः। अक्षद्यूताधिकारे च गिरः शृण्वन् सुदारुणाः।
आर्त्तानां सुहृदां वाचो द्यूतप्रभृति शंसतां। अहं हृदि श्रिताः स्मृत्वा सर्व्वरात्रीर्विचिन्तयन्।
यस्मिंश्चैव समस्तानां प्राणा गाण्डीवधन्वनि। विना महात्मना तेन गतसत्त्व इवाभवं। २०६०
कदा द्रक्ष्यामि बीभत्सुं कृतास्त्रं पुनरागतं। प्रियवादिनमक्षुद्रं दयायुक्तमतन्द्रितः।
अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि। भवता दृष्टपूर्व्वो वा श्रुतपूर्व्वोऽपि वा क्वचित्।
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ बृहदश्व उवाच ॥ यद्ब्रवीषि महाराज न मत्तो विद्यते क्वचित्।

अल्पभाग्यतरः कश्चित् पुमानस्तीति पाण्डव । यत्तु ते वर्णयिष्यामि यदि शुश्रूषसेऽनघ ।
यस्त्वत्तो दुःखिततरो राजासीत् पृथिवीपते ॥ वैशम्पायन उवाच ॥ अथैनमब्रवीद्राजा ब्रवीतु भगवानिति । २०६५
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवं ॥ वृहदश्व उवाच ॥ शृणु राजन्नवहितः सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजासीत् पृथिवीपते । निषधेषु महीपाल वीरसेन इति श्रुतः ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्म्मार्थकोविदः । स निकृत्या जितो राजा पुष्करेणेति नः श्रुतं ।
वनवासं सुदुःखार्त्तो भार्य्यया न्यवसत्सह । न तस्य दासा न रथो न भ्राता न च बान्धवाः ।
वने निवसतो राजन् शिष्यन्ते स्म कदाचन । भवान् हि संवृतो वीरैर्भ्रातृभिर्देवसम्मितैः । २०७०
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुं ॥ युधिष्ठिर उवाच ॥ विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः । चरितं वदतां श्रेष्ठ तन्ममाख्यातुमर्हसि ।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि वृहदश्वयुधिष्ठिरसंवादे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

॥ वृहदश्व उवाच ॥ आसीद्राजा नलो नाम वीरसेनसुतो बली । उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ।
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा । उपर्य्युपरि सर्व्वेषामादित्य इव तेजसा ।
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः । अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ।
ईप्सितो नरनारीणामुदारः संयतेन्द्रियः । रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयं । २०७५
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः । शूरः सर्व्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ।
स प्रजार्थे परं यत्नमकरोत् सुसमाहितः । तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ।
तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित् । महिष्या सह राजेन्द्र सत्कारेण सुवर्च्चसं ।
तस्मै प्रसन्नो दमनः सभार्य्याय वरं ददौ । कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसं । उपपन्नान् गुणैः सर्व्वैर्भीमान् भीमपराक्रमान् । २०८०
दमयन्ती तु रूपेण तेजसा यशसा श्रिया । सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ।
अथ तां वयसि प्राप्ते दासीनां समलङ्कृतं । शतं शतं सखीनाञ्च पर्य्युपासच्छचीमिव ।
तत्र स्म राजते भैमी सर्व्वाभरणभूषिता । सखीमध्येऽनवद्याङ्गी विद्युत्सौदामनी यथा ।
अतीव रूपसम्पन्ना श्रीरिवायतलोचना । न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ।
मानुषेष्वपि चान्येषु दृष्टरूपाऽथ वा श्रुता । चित्तप्रमाथिनी बाला देवानामपि सुन्दरी । २०८५
नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि । कन्दर्प इव रूपेण मूर्त्तिमानभवत् स्वयं ।
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् । नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ।
तयोरदृष्टः कामोऽभूत् शृण्वतोः सततं गुणान् । अन्योऽन्यं प्रति कौन्तेय स व्यवर्द्धत हृच्छयः ।
अशक्नुवन्नलः कामं तदा धारयितुं हृदा । अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ।
स ददर्श ततो हंसान् जातरूपपरिष्कृतान् । वने विचरतां तेषामेकं जग्राह पक्षिणं । २०९०
ततोऽन्तरीक्षगो वाचं व्याजहार नलं तदा । हन्तव्योऽस्मि न ते राजन् करिष्यामि तव प्रियं ।

दमयन्तीसकाशे त्वां कथयिष्यामि नैषध। यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित्।
एवमुक्तस्ततो हंसमुत्ससर्ज्ज महीपतिः। ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः।
विदर्भनगरीं गत्वा दमयन्त्यास्तदन्तिके। निपेतुस्ते गरुत्मन्तः सा ददर्श च तान् गणान्।
सा तानद्भुतरूपान् वै दृष्ट्वा सखिगणावृता। हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे। २०९५
अथ हंसा विससृपुः सर्व्वतः प्रमदावने। एकैकशस्तदा कन्यास्तान् हंसान् समुपाद्रवन्।
दमयन्ती तु यं हंसं समुपाधावदन्तिके। स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत्।
दमयन्ति नलो नाम निषधेषु महीपतिः। अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः।
तस्य वै यदि भार्य्या त्वं भवेथा वरवर्णिनि। सफलन्ते भवेज्जन्म रूपञ्चेदं सुमध्यमे।
वयं हि देवगन्धर्व्वमनुष्योरगराक्षसान्। दृष्टवन्तो न चास्माभिर्दृष्टपूर्व्वस्तथाविधः। २१००
त्वञ्चापि रत्नं नारीणां नरेषु च नलो वरः। विशिष्टाया विशिष्टेन सङ्गमो गुणवान् भवेत्।
एवमुक्ता तु हंसेन दमयन्ती विशाम्पते। अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद।
तथेत्युक्त्वाऽण्डजः कन्यां विदर्भस्य विशाम्पते। पुनरागम्य निषधान्नले सर्व्वं न्यवेदयत्।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि हंसवाक्ये त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ वृहदश्व उवाच ॥ दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत। ततः प्रभृति न स्वस्था नलं प्रति बभूव सा।
ततश्चिन्तापरा दीना विवर्णवदना कृशा। बभूव दमयन्ती तु निश्वासपरमा तदा। २१०५
ऊर्द्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना। पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना।
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित्। न नक्तं न दिवा शेते हाहेति रुदती पुनः।
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः। ततो विदर्भपतये दमयन्त्याः सखीगणः।
न्यवेदयत्तामस्वस्थां दमयन्तीं नरेश्वरे। तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात्।
चिन्तयामास तत्कार्य्यं सुमहत् स्वां सुतां प्रति। किमियं दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते। २११०
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनां। अपश्यदात्मना कार्य्यं दमयन्त्याः स्वयम्वरं।
स संनिमन्त्रयामास महीपालान् विशाम्पतिः। अनुभूयतामयं वीराः स्वयम्वर इति प्रभो।
श्रुत्वा तु पार्थिवाः सर्व्वे दमयन्त्याः स्वयम्वरं। अभिजग्मुस्ततो भीमं राजानो भीमशासनात्।
हस्त्यश्वरथघोषेण पूरयन्तो वसुन्धरां। विचित्रमाल्याभरणैर्ब्बलैर्दृश्यैः स्वलङ्कृतैः।
तेषां भीमो महाबाहुः पार्थिवानां महात्मनां। यथाऽर्हमकरोत्पूजां तेऽवसंस्तत्र पूजिताः। २११५
एतस्मिन्नेव काले तु सुराणामृषिसत्तमौ। अटमानौ महात्मानाविन्द्रलोकमितो गतौ।
नारदः पर्व्वतश्चैव महाप्राज्ञौ महाव्रतौ। देवराजस्य भवनं विविशाते सुपूजितौ।
तावर्च्चयित्वा मघवा ततः कुशलमव्ययं। पप्रच्छानामयञ्चापि तयोः सर्व्वगतं विभुः।
॥ नारद उवाच ॥ आवयोः कुशलं देव सर्व्वत्र गतमीश्वर। लोके च मघवन् कृत्स्ने नृपाः कुशलिनो विभो।
॥ वृहदश्व उवाच ॥ नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा। धर्म्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः। २१२०

शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः। अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक्।
क नु ते क्षत्रियाः शूरा नहि पश्यामि तानहं। आगच्छतो महीपालान् दयितानतिथीन् मम।
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ॥ नारद उवाच ॥ शृणु मे मघवन् येन न दृश्यन्ते महीक्षितः।
विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता। रूपेण समतिक्रान्ता पृथिव्यां सर्व्वयोषितः।
तस्याः स्वयम्बरः शक्र भविता नचिरादिव। तत्र गच्छन्ति राजानो राजपुत्त्राश्च सर्व्वशः। २१२५
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः। काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन।
एतस्मिन् कथ्यमाने तु लोकपालाश्च साग्निकाः। आजग्मुर्द्देवराजस्य समीपममरोत्तमाः।
ततस्ते शुश्रुवुः सर्व्वे नारदस्य वचो महत्। श्रुत्वैव चाब्रुवन् हृष्टा गच्छामो वयमप्युत।
ततः सर्व्वे महाराज सगणाः सहवाहनाः। विदर्भानभिजग्मुस्ते यतः सर्व्वे महीक्षितः।
नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमं। अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः। २१३०
अथ देवाः पथि नलं ददृशुर्भूतले स्थितं। साक्षादिव स्थितं मूर्त्त्या मन्मथं रूपसम्पदा।
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविं। तस्थुर्व्विगतसङ्कल्पा विस्मिता रूपसम्पदा।
ततोऽन्तरीक्षे विष्टभ्य विमानानि दिवौकसः। अब्रुवन्नैषधं राजन्नवतीर्य्य नभस्तलात्।
भोभो निषधराजेन्द्र नल सत्यव्रतो भवान्। अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलदौत्ये चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ वृहदश्व उवाच ॥ तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत। अथैतान् परिपप्रच्छ कृताञ्जलिरुपस्थितः। २१३५
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः। किञ्च तद्वो मया कार्य्यं कथयध्वं यथातथं।
एवमुक्ते नैषधेन मघवानभ्यभाषत। अमरान् वै निबोधास्मान् दमयन्त्यर्थमागतान्।
अहमिन्द्रो यमोऽग्निश्च तथैवायमपाम्पतिः। शरीरान्तकरो नृणां यमोऽयमपि पार्थिव।
त्वं वै समागतानस्मान् दमयन्त्यै निवेदय। लोकपाला महेन्द्राद्याः सभां यान्ति दिदृक्षवः।
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्व्वरुणो यमः। तेषामन्यतमं देवं पतित्वे वरयस्व ह। २१४०
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत्। एकार्थसमुपेतं मां न प्रेषयितुमर्हथ।
कथन्नु जातसङ्कल्पः स्त्रियमुत्सहते पुमान्। परार्थमीदृशं वक्तुं तत् क्षमन्तु महेश्वराः।
॥ देवा ऊचुः ॥ करिष्य इति संश्रुत्य पूर्व्वमस्मासु नैषध। न करिष्यसि कस्मात्त्वं व्रज नैषध मा चिरं।
॥ वृहदश्व उवाच ॥ एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत्। सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे।
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत। स जगाम तथेत्युक्त्वा दमयन्त्या निवेशनं। २१४५
ददर्श तत्र वैदर्भीं सखीगणसमावृतां। देदीप्यमानां वपुषा श्रिया च वरवर्णिनीं।
अतीवसुकुमाराङ्गीं तनुमध्यां सुलोचनां। आक्षिपन्तीमिव प्रभां शशिनः स्वेन तेजसा।
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीं। सत्यञ्चिकीर्षमाणस्तु धारयामास हृच्छयं।
ततस्ता नैषधं दृष्ट्वा सम्भ्रान्ताः परमाङ्गनाः। आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः।

प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः। नचैनमभ्यभाषन्त मनोभिस्त्वभ्यपूजयन्। २१५०
अहो रूपमहो कान्तिरहो धैर्य्यं महात्मनः। कोऽयं देवोऽथ वा यक्षो गन्धर्व्वो वा भविष्यति।
न तास्तं शक्नुवन्ति स्म व्याहर्त्तुमपि किञ्चन। तेजसा धर्षितास्तस्य लज्जावत्यो वराङ्गनाः।
अथैनं स्मयमानन्तु स्मितपूर्व्वाभिभाषिणी। दमयन्ती नलं वीरमभ्यभाषत विस्मिता।
कस्त्वं सर्व्वानवद्याङ्ग मम हृच्छयवर्द्धनः। प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ।
कथमागमनञ्चेह कथञ्चासि न लक्षितः। सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः। २१५५
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह॥ नल उवाच॥ नलं मां विद्धि कल्याणि देवदूतमिहागतं।
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्व्वरुणो यमः। तेषामन्यतमं देवं पतिं वरय शोभने।
तेषामेव प्रभावेन प्रविष्टोऽहमलक्षितः। प्रविशन्तं न मां कश्चिदपश्यन्नाप्यवारयत्।
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः। एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि।
इतिश्रीमहाभारते आरण्य पर्व्वणि नलोपाख्यानपर्व्वणि नलस्य देवदौत्ये पञ्चपञ्चाशो ऽध्यायः॥ ५५ ॥
॥ बृहदश्व उवाच ॥ सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत्। प्रणयस्व यथाश्रद्धं राजन् किं करवाणि ते। २१६०
अहञ्चैव हि यच्चान्यन्ममास्ति वसु किञ्चन। तत्सर्व्वं तव विश्रब्धं कुरु प्रणयमीश्वर।
हंसानां वचनं यत्तु तन्मां दहति पार्थिव। त्वत्कृते हि मया वीर राजानः सन्निपातिताः।
यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद। विषमग्निं जलं रज्जुमास्थास्ये तव कारणात्।
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह। तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि।
येषामहं लोककृतामीश्वराणां महात्मनां। न पादरजसा तुल्यो मनस्तेषु प्रवर्त्ततां। २१६५
विप्रियं ह्याचरन्मर्त्त्यो देवानां मृत्युमृच्छति। त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान्।
विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा। भूषणानि च मुख्यानि देवान् प्राप्य तु भुङ्क्ष्व वै।
य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः। हुताशमीशं देवानां का तं न वरयेत् पतिं।
यस्य दण्डभयात् सर्व्वे भूतग्रामाः समागताः। धर्म्ममेवानुरुध्यन्ति का तं न वरयेत् पतिं।
धर्म्मात्मानं महात्मानं दैत्यदानवमर्द्दनं। महेन्द्रं सर्व्वदेवानां का तं न वरयेत् पतिं। २१७०
क्रियतामविशङ्केन मनसा यदि मन्यसे। वरुणं लोकपालानां सुहृद्वाक्यमिदं शृणु।
नैषधेनैवमुक्ता सा दमयन्ती वचोऽब्रवीत्। समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा।
देवेभ्योऽहं नमस्कृत्य सर्व्वेभ्यः पृथिवीपते। वृणे त्वामेव भर्त्तारं सत्यमेतद्ब्रवीमि ते।
तामुवाच ततो राजा वेपमानां कृताञ्जलिं। दौत्येनागत्य कल्याणि तथा भद्रे विधीयतां।
कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः। परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे। २१७५
एष धर्म्मो यदि स्वार्थो ममापि भविता ततः। एवं स्वार्थं करिष्यामि तथा भद्रे विधीयतां।
ततो वाष्पाकुलां वाचं दमयन्ती शुचिस्मिता। प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत्।
उपायोऽयं मया दृष्टो निरपायो नरेश्वर। येन दोषो न भविता तव राजन् कथञ्चन।

त्वञ्चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः। आयान्तु सहिताः सर्व्वे मम यत्र स्वयम्वरः।
ततोऽहं लोकपालानां सन्निधौ त्वां नरेश्वर। वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति। २१८०
एवमुक्तस्तु वैदर्भ्या नलो राजन् विशाम्पते। आजगाम पुनस्तत्र यत्र देवाः समागताः।
तमपश्यंस्तथायान्तं लोकपाला महेश्वराः। दृष्ट्वा चैनं ततोऽपृच्छन् वृत्तान्तं सर्व्वमेव तं।
कच्चिद्दृष्टा त्वया राजन् दमयन्ती शुचिस्मिता। किमब्रवीच्च नः सर्व्वान् वद भूमिपतेऽनघ।
॥ नल उवाच ॥ भवद्भिरहमादिष्टो दमयन्त्या निवेशनं। प्रविष्टः सुमहाकक्षं दण्डिभिः स्थविरैर्वृतं।
प्रविशन्तञ्च मां तत्र न कश्चिद्दृष्टवान्नरः। ऋते तां पार्थिवसुतां भवतामेव तेजसा। २१८५
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः। विस्मिताश्चाभवन् सर्व्वा दृष्ट्वा मां विबुधेश्वराः।
वर्ण्यमानेषु च मया भवत्सु रुचिरानना। मामेव गतसङ्कल्पा वृणीते सा सुरोत्तमाः।
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः। त्वया सह नरव्याघ्र मम यत्र स्वयम्वरः।
तेषामहं सन्निधौ त्वां वरयिष्यामि नैषध। एवं तव महाबाहो दोषो न भवितेति च।
एतावदेव विबुधा यथावृत्तमुदाहृतं। मया शेषे प्रमाणन्तु भवन्तस्त्रिदशेश्वराः। २१९०
इतिश्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलस्य देवदौत्ये षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ बृहदश्व उवाच ॥ अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा। आजुहाव महीपालान् भीमो राजा स्वयम्वरे।
तच्छ्रुत्वा पृथिवीपालाः सर्व्वे हृच्छयपीडिताः। त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः।
कनकस्तम्भरुचिरं तोरणेन विराजितं। विविशुस्ते नृपा रङ्गं महासिंहा इवाचलं।
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः। सुरभिस्रग्धराः सर्व्वे प्रमृष्टमणिकुण्डलाः।
तां राजसमितिं पुण्यां नागैर्भोगवतीमिव। सम्पूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव। २१९५
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः। आकारवर्णसुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः।
सुकेशान्तानि चारूणि सुनसाक्षिभ्रुवाणि च। मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि।
दमयन्ती ततो रङ्गं प्रविवेश शुभानना। मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च।
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनां। तत्र तत्रैव सक्ताऽभूत् न चचाल च पश्यतां।
ततः सङ्कीर्त्त्यमानेषु राज्ञां नामसु भारत। ददर्श भैमी पुरुषान् पञ्च तुल्याकृतीनथ। २२००
तान् समीक्ष्य ततः सर्व्वान् निर्व्विशेषाकृतीन् स्थितान्। सन्देहादथ वैदर्भी नाभ्यजानान्नलं नृपं।
यं यं हि ददृशे तेषां तं तं मेने नलं नृपं। सा चिन्तयन्ती बुद्ध्याऽथ तर्क्कयामास भामिनी।
कथं हि देवान् जानीयां कथं विद्यां नलं नृपं। एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता।
श्रुतानि देवलिङ्गानि तर्कयामास भारत। देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये। सा विनिश्चित्य बहुधा विचार्य्य च पुनः पुनः। २२०५
शरणं प्रति देवानां प्राप्तकालममन्यत। वाचा च मनसा चैव नमस्कारं प्रयुज्य सा।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत्। हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः।

पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे। मनसा वचसा चैव यथा नाभिचराम्यहं।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे। यथा देवैः स मे भर्त्ता विहितो निषधाधिपः।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे। यथेदं व्रतमारब्धं नलस्याराधने मया। २२१०
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे। स्वञ्चैव रूपं कुर्व्वन्तु लोकपाला महेश्वराः।
यथाऽहमभिजानीयां पुण्यश्लोकं नराधिपं। निशम्य दमयन्त्यास्तत् करुणं परिदेवितं।
निश्चयं परमं तथ्यमनुरागञ्च नैषधे। मनोविशुद्धिं बुद्धिञ्च भक्तिं रागञ्च नैषधे।
यथोक्तञ्चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे। साऽपश्यद्विबुधान् सर्व्वानस्वेदान् स्तब्धलोचनान्।
हृषितस्रग्रजोहीनान् स्थितानस्पृशतः क्षितिं। छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः। २२१५
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः। सा समीक्ष्य तु तान्देवान् पुण्यश्लोकञ्च भारत।
नैषधं वरयामास भैमी धर्म्मेण पाण्डव। विलज्जमाना वस्त्रान्ते जग्राहायतलोचना।
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनां। वरयामास चैवैनं पतित्वे वरवर्णिनी।
ततो हाहेति सहसा मुक्तः शब्दो नराधिपैः। देवैर्महर्षिभिस्तत्र साधु साध्विति भारत।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपं। दमयन्तीन्तु कौरव्य वीरसेनसुतो नृपः। २२२०
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना। यत्त्वं भजसि कल्याणि पुमांसं देवसन्निधौ।
तस्मान्मां विद्धि भर्त्तारमेतत्ते वचने रतं। यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते।
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते। दमयन्ती तथा वाग्भिरभिनन्द्य कृताञ्जलिः।
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान्। तानेव शरणं देवान् जग्मतुर्मनसा तदा।
वृते तु नैषधे भैम्या लोकपाला महौजसः। प्रहृष्टमनसः सर्व्वे नलायाष्टौ वरान् ददुः। २२२५
प्रत्यक्षदर्शनं यज्ञे गतिञ्चानुत्तमां शुभां। नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः।
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः। लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः।
यमस्त्वन्नरसं प्रादाद्धर्म्मे च परमां स्थितिं। अपाम्पतिरपाम्भावं यत्र वाञ्छति नैषधः।
स्रजश्चोत्तमगन्धाढ्याः सर्व्वे च मिथुनं ददुः। वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः।
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः। दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतं। २२३०
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः। विवाहं कारयामास दमयन्त्या नलस्य च।
उष्य तत्र यथाकामं नैषधो द्विपदाम्वरः। भीमेन समनुज्ञातो जगाम नगरं स्वकं।
अवाप्य नारीरत्नन्तु पुण्यश्लोकोऽपि पार्थिवः। रेमे सह तया राजन् शच्येव बलवृत्रहा।
अतीव मुदितो राजा भ्राजमानोंऽशुमानिव। अरञ्जयत् प्रजा वीरो धर्म्मेण परिपालयन्।
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः। अन्यैश्च बहुभिर्धीमान् क्रतुभिश्चाप्तदक्षिणैः। २२३५
पुनश्च रमणीयेषु वनेषूपवनेषु च। दमयन्त्या सह नलो विजहारामरोपमः।
जनयामास च ततो दमयन्त्यां महामनाः। इन्द्रसेनं सुतञ्चापि इन्द्रसेनाञ्च कन्यकां।

एवं स यजमानश्च विहरंश्च नराधिप। ररक्ष वसुसम्पूर्णां वसुधां वसुधाधिपः।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्तीस्वयम्वरे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

॥ वृहदश्व उवाच ॥ वृते तु नैषधे भैम्या लोकपाला महौजसः। यान्तो ददृशुरायान्तं द्वापरं कलिना सह।
अथाब्रवीत् कलिं शक्रः सम्प्रेक्ष्य बलवृत्रहा। द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि। २२४०
ततोऽब्रवीत् कलिः शक्रं दमयन्त्याः स्वयम्वरं। गत्वा हि वरयिष्ये तां मनो हि मम तां गतं।
तमब्रवीत् प्रहस्येन्द्रो निर्वृत्तः स स्वयम्वरः। वृतस्तया नलो राजा पतिरस्मत्समीपतः।
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः। देवानामन्त्र्य तान् सर्व्वानुवाचेदं वचस्तदा।
देवानां मानुषं मध्ये यत् सा पतिमविन्दत। तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणं।
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः। अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः। २२४५
का च सर्व्वगुणोपेतं नाश्रयेत नलं नृपं। यो वेद धर्म्मानखिलान् यथावच्चरितव्रतः।
योऽधीते चतुरो वेदान् सर्व्वानाख्यानपञ्चमान्। नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्म्मतः।
अहिंसानिरतो यश्च सत्यवादी दृढव्रतः। यस्मिन् सत्यं धृतिर्ज्ञानं तपः शौचं दमः शमः।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे। एवंरूपं नलं यो वै कामयेच्छपितुं कले।
आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना। एवंगुणं नलं यो वै कामयेच्छपितुं कले। २२५०
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे। एवमुक्त्वा कलिं देवा द्वापरञ्च दिवं ययुः।
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत्। संहर्त्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर।
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते। त्वमप्यक्षान् समाविश्य साहाय्यं कर्त्तुमर्हसि।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि कलिदेवसंवादे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

॥ वृहदश्व उवाच ॥ एवं स समयं कृत्वा द्वापरेण कलिः सह। आजगाम ततस्तत्र यत्र राजा स नैषधः।
स नित्यमन्तरप्रेप्सुर्निषधेष्ववसच्चिरं। अथास्य द्वादशे वर्षे ददर्श कलिरन्तरं। २२५५
कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषधः। अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत्।
स समाविश्य च नलं समीपं पुष्करस्य च। गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै।
अक्षद्यूते नलं जेता भवान् हि सहितो मया। निषधान् प्रतिपद्यस्व जित्वा राज्यं नलं नृपं।
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात्। कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्यगात्।
आसाद्य तु नलं वीरं पुष्करः परवीरहा। दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः। २२६०
न चक्षमे ततो राजा समाह्वानं महामनाः। वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत।
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससां। आविष्टः कलिना द्यूते जीयते स्म नलस्तदा।
तमक्षमदसंमत्तं सुहृदां नतु कश्चन। निवारणेऽभवच्छक्तो दीव्यमानमरिन्दमं।
ततः पौरजनाः सर्व्वे मन्त्रिभिः सह भारत। राजानं द्रष्टुमागच्छन्निवारयितुमातुरं।
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत्। एष पौरजनो देवि द्वारि तिष्ठति कार्य्यवान्। २२६५

निवेद्यतां नैषधाय सर्व्वाः प्रकृतयः स्थिताः। अमृष्यमाणा व्यसनं राज्ञो धर्म्मार्थदर्शिनः।
ततः सा वास्पकलया वाचा दुःखेन कर्षिता। उवाच नैषधं भैमी शोकोपहतचेतना।
राजन् पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः। मन्त्रिभिः सहितः सर्व्वैराजभक्तिपुरस्कृतः।
तं द्रष्टुमर्हसीत्येवं पुनःपुनरभाषत। तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधां।
आविष्टः कलिना राजा नाभ्यभाषत किञ्चन। ततस्ते मन्त्रिणः सर्व्वे ते चैव पुरवासिनः। २२७०
नायमस्तीति दुःखार्त्ता व्रीडिता जग्मुरालयान्। तथा तदभवद्द्यूतं पुष्करस्य नलस्य च। युधिष्ठिर बहून् मासान् पुण्यश्लोकस्त्व जीयत।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलद्यूते एकोनषष्टितमोऽध्यायः॥ ५९ ॥

॥ वृहदश्व उवाच॥ दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपं। उन्मत्तवदनुन्मत्ता देवने गतचेतसं।
भयशोकसमाविष्टा राजन् भीमसुता ततः। चिन्तयामास तत्कार्य्यं सुमहत्पार्थिवं प्रति।
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियं। नलञ्च हृतसर्व्वस्वमुपलभ्येदमब्रवीत्।
वृहत्सेनामतियशां तां धात्रीं परिचारिकां। हितां सर्व्वार्थकुशलामनुरक्तां सुभाषितां। २२७५
वृहत्सेने व्रजामात्यानानाय्य नलशासनात्। आचक्ष्व यद्धृतं द्रव्यमवशिष्टञ्च यद्वसु।
ततस्ते मन्त्रिणः सर्व्वे विज्ञाय नलशासनं। अपि नो भागधेयं स्यादित्युक्त्वा नलमाव्रजन्।
तास्तु सर्व्वाः प्रकृतयो द्वितीयं समुपास्थिताः। न्यवेदयद्भीमसुता न च स प्रत्यनन्दत।
वाक्यमप्रतिनन्दन्तं भर्त्तारमभिवीक्ष्य सा। दमयन्ती पुनर्व्वेश्म व्रीडिता प्रविवेश ह।
निशम्य सततं चाक्षान् पुण्यश्लोकपराङ्मुखान्। नलञ्च हृतसर्व्वस्वं धात्रीं पुनरुवाच ह। २२८०
वृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात्। सूतमानय कल्याणि महत्कार्य्यमुपस्थितं।
वृहत्सेना तु सा श्रुत्वा दमयन्त्या प्रभाषितं। वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः।
वार्ष्णेयन्तु ततो भैमी सान्त्वयन् श्लक्ष्णया गिरा। उवाच देशकालज्ञा प्राप्तकालमनिन्दिता।
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि। तस्य त्वं विषमस्थस्य साहाय्यं कर्त्तुमर्हसि।
यथा यथा हि नृपतिः पुष्करेणैव जीयते। तथा तथाऽस्य वै द्यूते रागो भूयोऽभिवर्द्धते। २२८५
यथा च पुष्करस्याक्षाः पतन्ति वशवर्त्तिनः। तथा विपर्य्ययश्चापि नलस्याक्षेषु दृश्यते।
सुहृत्स्वजनवाक्यानि यथावन्न शृणोति च। ममापि च तथा वाक्यं नाभिनन्दति मोहितः।
नूनं मन्ये न दोषोऽस्ति नैषधस्य महात्मनः। यत्तु मे वचनं राजा नाभिनन्दति मोहितः।
शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः। नहि मे शुध्यते भावः कदाचिद्विनशेदपि।
नलस्य दयितानश्वान् योजयित्वा मनोजवान्। इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि। २२९०
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनन्तथा। अश्वांश्चेमान् यथाकामं वस चान्यत्र गच्छ वा।
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः। न्यवेदयदशेषेण नलामात्येषु मुख्यशः।
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते। ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना।

हयांस्तत्र विनिक्षिप्य सूतो रथवरञ्च तं। इन्द्रसेनाञ्च तां कन्यामिन्द्रसेनञ्च बालकं

आमन्त्र्य भीमं राजानमार्त्तः शोचन्नलं नृपं। अटमानस्ततोऽयोध्यां जगाम नगरीन्तदा। २१९५

ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः। भृतिञ्चोपययौ तस्य सारथ्येन महीपतेः।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलद्यूते षष्टितमोऽध्यायः॥ ६० ॥

॥ बृहदश्व उवाच ॥ ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः। पुष्करेण हृतं राज्यं यच्चान्यद्वसु किञ्चन।

हृतराज्यं नलं राजन् प्रहसन् पुष्करोऽब्रवीत्। द्यूतं प्रवर्त्ततां भूयः प्रतिपाणोऽस्ति कस्तव।

शिष्टा ते दमयन्त्येका सर्व्वमन्यज्जितं मया। दमयन्त्याः पणः साधु वर्त्ततां यदि मन्यसे।

पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना। व्यदीर्य्यतेव हृदयं नचैनं किञ्चिदब्रवीत्। २२००

ततः पुष्करमालोक्य नलः परममन्युमान्। उत्सृज्य सर्व्वगात्रेभ्यो भूषणानि महायशाः।

एकवासा ह्यसंवीतः सुहृच्छोकविवर्द्धनः। निश्चक्राम ततो राजा त्यक्त्वा सुविपुलां श्रियं।

दमयन्त्येकवस्त्राऽथ गच्छन्तं पृष्ठतोऽन्वगात्। स तया बाह्यतः सार्द्धं त्रिरात्रं नैषधोऽवसत्।

पुष्करस्तु महाराज घोषयामास वै पुरे। नले यः सम्यगातिष्ठेत् स गच्छेद्वध्यतां मम।

पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च। पौरा न तस्य सत्कारं कृतवन्तो युधिष्ठिर। २२०५

स तथा नगराभ्यासे सत्कारार्हो न सत्कृतः। त्रिरात्रमुषितो राजा जलमात्रेण वर्त्तयन्।

पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन्। प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात्।

क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि। अपश्यत् शकुनान् कांश्चिद्धिरण्यसदृशच्छदान्।

स चिन्तयामास तदा निषधाधिपतिर्बली। अस्ति भक्ष्यो ममाद्यायं वसु चेदं भविष्यति।

ततस्तान् परिधानेन वाससा स समावृणोत्। तस्य तद्वस्त्रमादाय सर्व्वे जग्मुर्विहायसा। २२१०

उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलं। दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखं।

वयमक्षाः सुदुर्ब्बुद्धे तव वासो जिहीर्षवः। आगता नहि नः प्रीतिः सवाससि गते त्वयि।

तान् समीपगतानक्षानात्मानञ्च विवाससं। पुण्यश्लोकस्तदा राजन् दमयन्तीमथाब्रवीत्।

येषां प्रकोपादैश्वर्य्यात् प्रच्युतोऽहमनिन्दिते। प्राणयात्रां न विन्देयं दुःखितः क्षुधयाऽन्वितः।

येषां कृते न सत्कारमकुर्व्वन्मयि नैषधाः। इमे ते शकुना भूत्वा वासो भीरु हरन्ति मे। २२१५

वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः। भर्त्ता तेऽहं निबोधेदं वचनं हितमात्मनः।

एते गच्छन्ति बहवः पन्थानो दक्षिणापथं। अवन्तीमृक्षवन्तञ्च समतिक्रम्य पर्व्वतं।

एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा। आश्रमाश्च महर्षीणां बहुमूलफलान्विताः।

एष पन्था विदर्भाणामसौ गच्छति कोशलां। अतः परञ्च देशोऽयं दक्षिणे दक्षिणापथः।

एतद्वाक्यं नलो राजा दमयन्तीं समाहितः। उवाचासकृदार्त्तो हि भैमीमुद्दिश्य भारत। २२२०

ततः सा वाष्पकलया वाचा दुःखेन कर्षिता। उवाच दमयन्ती तं नैषधं करुणं वचः।

उद्विजते मे हृदयं सीदन्त्यङ्गानि सर्व्वशः। तव पार्थिव सङ्कल्पं चिन्तयन्त्याः पुनःपुनः।

हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितं। कथमुत्सृज्य गच्छेयं त्वामहं निर्ज्जने वने।
श्रान्तस्य ते क्षुधार्त्तस्य चिन्तयानस्य तत्सुखं। वने घोरे महाराज नाशयिष्याम्यहं क्लमं।
नच भार्य्यासमं किञ्चिद्विद्यते भिषजां मतं। औषधं सर्व्वदुःखेषु सत्यमेतद्‌ब्रवीमि ते। २२२५
॥ नल उवाच ॥ एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे। नास्ति भार्य्यासमं मित्रं नरस्यार्त्तस्य भेषजं।
नचाहं त्यक्तुकामस्त्वां किमलं भीरु शङ्कसे। त्यजेयमहमात्मानं नचैव त्वामनिन्दिते।
॥ दमयन्त्युवाच॥ यदि मां त्वं महाराज न विहातुमिहेच्छसि। तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते।
अवैमि चाहं नृपते नतु मां त्यक्तुमर्हसि। चेतसा त्वपकृष्टेन मां त्यजेथा महीपते।
पन्थानं हि ममाभीक्ष्णमाख्यासि च नरोत्तम। अतो निमित्तं शोकं मे वर्द्धयस्यमरोपम। २२३०
यदि चायमभिप्रायस्तव ज्ञातीन् व्रजेदिति। सहितावेव गच्छावो विदर्भान् यदि मन्यसे।
विदर्भराजस्तत्र त्वां पूजयिष्यति मानद। तेन त्वं पूजितो राजन् सुखं वत्स्यसि नो गृहे।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलवनयात्रायामेकषष्टोऽध्यायः॥ ६१॥
॥ नल उवाच ॥ यथा राज्यं तव पितुस्तथा मम न संशयः। नतु तत्र गमिष्यामि विषमस्थः कथञ्चन।
कथं समृद्धो गत्वाऽहं तव हर्षविवर्द्धनः। परिच्युतो गमिष्यामि तव शोकविवर्द्धनः।
॥ वृहदश्व उवाच ॥ इतिब्रुवन्नलो राजा दमयन्तीं पुनः पुनः। सान्त्वयामास कल्याणीं वाससोऽर्द्धेन संवृतां। २२३५
तावेकवस्त्रसंवीतावटमानावितस्ततः। क्षुत्पिपासापरिश्रान्तौ सभां काञ्चिदुपेयतुः।
तां सभामुपसम्प्राप्य तदा स निषधाधिपः। वैदर्भ्या सहितो राजा निषसाद महीतले।
स वै विवस्त्रो मलिनो विकटः पांशुगुण्ठितः। दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले।
दमयन्त्यपि कल्याणी निद्रयाऽपहृता ततः। सहसा दुःखमासाद्य सुकुमारी तपस्विनी।
सुप्तायां दमयन्त्यान्तु नलो राजा विशाम्पते। शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा। २२४०
स तद्राज्यापहरणं सुहृत्त्यागञ्च सर्व्वशः। वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान्।
किं नु मे स्यादिदं कृत्वा किंनु मे स्यादकुर्व्वतः। किं नु मे मरणं श्रेयः परित्यागो जनस्य वा।
मामियं ह्यनुरक्तैवं दुःखं प्राप्नोति मत्कृते। मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति।
मयि निःसंशयं दुःखमिमं प्राप्स्यत्यनुव्रता। उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित्।
स विनिश्चित्य बहुधा विचार्य्य च पुनः पुनः। उत्सर्गं मन्यते श्रेयो दमयन्त्या नराधिप। २२४५
न चैषा तेजसा शक्या कैश्चिद्धर्षयितुं पथि। यशस्विनी महाभागा मद्भक्तेयं पतिव्रता।
एवं तस्य तदा बुद्धिर्द्दमयन्त्यां न्यवर्त्तत। कलिना दुष्टभावेन दमयन्त्या विसर्ज्जने।
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रतां। चिन्तयित्वा ऽध्यगाद्राजा वस्त्रार्द्धस्यावकर्त्तनं।
कथं वासो विकर्त्तेयं नच बुध्येत मे प्रिया। विचिन्त्यैवं नलो राजा सभां पर्य्यचरत्तदा।
परिधावन्नथ नल इतश्चेतश्च भारत। आससाद सभोद्देशे विकोशं खड्गमुत्तमं। २२५०
तेनार्द्धं वाससश्छित्वा निरस्य च परन्तपः। सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनां।

ततो निवृत्तहृदयः पुनरागम्य तां सभां । दमयन्तीं तदा दृष्ट्वा रुरोद निषधाधिपः ।
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियां । सेयमद्य सभामध्ये शेते भूमावनाथवत् ।
इयं वस्त्रावकर्त्तेन संवीता चारुहासिनी । उन्मत्तेव वरारोहा कथं बुद्धा भविष्यति ।
कथमेका सती भैमी मया विरहिता शुभा । चरिष्यति वने घोरे मृगव्यालनिषेविते । २२०५
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ । रक्षन्तु त्वां महाभागे धर्म्मेणासि समावृता ।
एवमुक्त्वा प्रियां भार्य्यां रूपेणाप्रतिमां भुवि । कलिनापहृतज्ञानो नलः प्रातिष्ठदुद्यतः ।
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः । आकृष्यमाणः कलिना सौहृदेनावकृष्यते ।
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा । दोलेव मुहुरायाति याति चैव सभां प्रति ।
अवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः । सुप्तामुत्सृज्य तां भार्य्यां विलप्य करुणं बहु । २२१०
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः । जगामैव वने शून्ये भार्य्यामुत्सृज्य दुःखितः ।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलस्य दमयन्तीत्यागे द्विषष्टोऽध्यायः ॥ ६२ ॥
॥ बृहदश्व उवाच ॥ अपक्रान्ते नले राजन् दमयन्ती गतक्लमा । अबुध्यत वरारोहा संत्रस्ता विजने वने ।
अपश्यमाना भर्त्तारं शोकदुःखसमन्विता । प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधं ।
हा नाथ हा महाराज हा स्वामिन् किं जहासि मां । हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ।
ननु नाम महाराज धर्म्मज्ञः सत्यवागसि । कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य कानने । २२१५
कथमुत्सृज्य गन्तासि दक्षां भार्य्यामनुव्रतां । विशेषतोऽनपकृते परेणापकृते सति ।
शक्ष्यसे ता गिरः सम्यक् कर्त्तुं मयि नरेश्वर । यास्त्वया लोकपालानां सन्निधौ कथिताः पुरा ।
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ । यत्र कान्ता त्वयोत्सृष्टा मुहूर्त्तमपि जीवति ।
पर्य्याप्तः परिहासोऽयमेतावान् पुरुषर्षभ । भीताहमस्मि दुर्द्धर्ष दर्शयात्मानमीश्वर ।
दृश्यसे दृश्यसे राजन्नेष दृष्टोऽसि नैषध । आवार्य्य गुल्मैरात्मानं किं मां न प्रतिभाषसे । २२२०
नृशंसं बत राजेन्द्र यन्मामेवं गतामिह । विलपन्तीं समागम्य नाश्वासयसि पार्थिव ।
न शोचाम्यहमात्मानं न चान्यदपि किञ्चन । कथं नु भवितास्येक इति त्वां नृप शोचिमि ।
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्षितः । सायाह्ने वृक्षमूलेषु मामपश्यन् भविष्यसि ।
ततः सा तीव्रशोकार्त्ता प्रदीप्तेव च मन्युना । इतश्चेतश्च रुदती पर्य्यधावत दुःखिता ।
मुहुरुत्पतते बाला मुहुः पतति विह्वला । मुहुरालीयते भीता मुहुः क्रोशति रोदिति । २२२५
अतीव शोकसन्तप्ता मुहुर्निःश्वस्य विह्वला । उवाच भैमी निष्क्रम्य रुदत्यथ पतिव्रता ।
यस्याभिशापाद्दुःखार्त्तो दुःखं विन्दति नैषधः । तस्य भूतस्य नो दुःखाद्दुःखमभ्यधिकं भवेत् ।
अपापचेतसं पापो य एवं कृतवान्नलं । तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकां ।
एवन्तु विलपन्ती सा राज्ञो भार्य्या महात्मनः । अन्वेषमाणा भर्त्तारं वने श्वापदसेविते ।
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः । हा हा राजन्निति मुहुरितश्चेतश्च धावति । २२३०

तां क्रन्दमानामत्यर्थं कुररीमिव वाशतीं । करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः ।
सहसाऽभ्यागतां भैमीमभ्याशपरिवर्त्तिनीं । जग्राहाजगरो ग्राहो महाकायः क्षुधाऽन्वितः ।
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता । नात्मानं शोचति तथा यथा शोचति नैषधं ।
हा नाथ मामिह वने ग्रस्यमानामनाथवत् । ग्राहेणानेन विजने किमर्थं नानुधावसि ।
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध । कथं भवान् जगामाद्य मामुत्सृज्य वने प्रभो ।   २३८५
शापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च । श्रान्तस्य ते क्षुधार्त्तस्य परिम्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति तेऽनघ । ततः कश्चिन्मृगव्याधो विचरन् गहने वने ।
आक्रन्दमानां संश्रुत्य जवेनाभिससार ह । तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणां ।
त्वरमाणो मृगव्याधः समभिक्रम्य वेगतः । मुखतः पाटयामास शस्त्रेण निशितेन च ।
निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः । मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन ह ।   २३९०
समाश्वास्य कृताहारामथ पप्रच्छ भारत । कस्य त्वं मृगशावाक्षि कथञ्चाभ्यागता वनं ।
कथञ्चेदं महत्कष्टं प्राप्तवत्यसि भाविनि । दमयन्ती तथा तेन पृच्छ्यमाना विशाम्पते ।
सर्व्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत । तामर्द्धवस्त्रसंवीतां पीनश्रोणिपयोधरां ।
सुकुमाराऽनवद्याङ्गीं पूर्णचन्द्रनिभाननां । अरालपक्ष्मनयनां तथा मधुरभाषिणीं ।
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् । तामेवं श्लक्ष्णया वाचा लुब्धको मृदुपूर्व्वया ।   २३९५
सान्त्वयामास कामार्त्तस्तदबुध्यत भाविनी । दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना । स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ।
दुर्द्धर्षां तर्कयामास दीप्तामग्निशिखामिव । दमयन्ती तु दुःखार्त्ता पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषाऽन्विता । यथाहं नैषधादन्यं मनसाऽपि न चिन्तये ।
तथाऽयं पततां क्षुद्रः परासुर्मृगजीवनः । उक्तमात्रे तु वचने तथा स मृगजीवनः । व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ।   २४००

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यान पर्व्वणि दमयन्तीसर्पग्रासमोचने व्याधवधे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

॥ बृहदश्व उवाच ॥ सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा । वनं प्रतिभयं शून्यं झिल्लिकागणनादितं ।
सिंहद्वीपिरुरुव्याघ्रमहिषर्क्षमृगैर्युतं । नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितं ।
शालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः । अर्ज्जुनारिष्टसञ्छन्नं स्यन्दनैश्च सशाल्मलैः ।
जम्ब्वाम्रलोध्रखदिरसालवेत्रसमाकुलं । पद्मकामलकप्लक्षकदम्बोडुम्बरावृतं ।
बदरीबिल्वसञ्छन्नं न्यग्रोधैश्च समाकुलं । पियालतालखर्ज्जूरहरीतकविभीतकैः ।   २४०५
नानाधातुशतैर्नद्धान् विविधानपि चाचलान् । निकुञ्जान् पक्षिसङ्घुष्टान् दरीश्चाद्भुतदर्शनाः ।
नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान् । सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान् ।
पल्वलानि तडागानि गिरिकूटानि सर्व्वशः । सरितो निर्झरांश्चैव ददर्शाद्भुतदर्शनान् ।

यूथशो ददृशे तत्र विदर्भाधिपनन्दिनी । महिषांश्च वराहांश्च ऋक्षांश्च वनपन्नगान् ।
तेजसा यशसा लक्ष्म्या स्थित्या च परया युता । वैदर्भी विचरत्येका नलमन्वेषती तदा । २४१०
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् । दारुणामटवीं प्राप्य भर्तृव्यसनपीडिता ।
विदर्भतनया राजन् विललाप सुदुःखिता । भर्तृशोकपरीताङ्गी शिलातलमथाश्रिता ।
॥ दमयन्त्युवाच ॥ व्यूढोरस्क महाबाहो नैषधानां जनाधिप । क नु राजन् गतोऽस्यद्य विसृज्य विजने वने ।
अश्वमेधादिभिर्वीर क्रतुभिर्भूरिदक्षिणैः । कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्त्तसे ।
यत्त्वयोक्तं नरश्रेष्ठ मत्समक्षं महाद्युते । स्मर्त्तुमर्हसि कल्याण वचनं पार्थिवर्षभ । २४१५
यच्चोक्तं विहगैर्हंसैः समीपे तव भूमिप । मत्समक्षं यदुक्तञ्च तदवेक्षितुमर्हसि ।
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः । स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः ।
तस्मादर्हसि शत्रुघ्न सत्यं कर्त्तुं नरेश्वर । उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ।
हा वीर नल नामाऽहं नष्टा किल तवानघ । अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ।
भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः । अरण्यराट्क्षुधाविष्टः किं मां न त्रातुमर्हसि । २४२०
न मे त्वदन्या काचिद्धि प्रियाऽस्तीत्यब्रवीः सदा । तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ।
उन्मत्तां विलपन्तीं मां भार्य्यामिष्टां नराधिप । ईप्सितामीप्सितोऽसि त्वं किं मां न प्रतिभाषसे ।
कृशां दीनां विवर्णाञ्च मलिनां वसुधाधिप । वस्त्रार्द्धप्रावृतामेकां विलपन्तीमनाथवत् ।
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन । न मानयसि मामार्य्य रुदतीमरिकर्षण ।
महाराज महारण्ये अहमेकाकिनी सती । दमयन्त्यभिभाषे त्वां किं मां न प्रतिभाषसे । २४२५
कुलशीलोपसम्पन्नं चारुसर्व्वाङ्गशोभनं । नाद्य त्वामनुपश्यामि गिरावस्मिन्नरोत्तम ।
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते । शयानमुपविष्टं वा स्थितं वा निषधाधिप ।
प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्द्धन । कं नु पृच्छामि दुःखार्त्ता त्वदर्थे शोककर्षिता ।
कच्चिद्दृष्टस्त्वयाऽरण्ये सङ्गत्येह नलो नृपः । को नु मे वाऽद्य प्रष्टव्यो वनेऽस्मिन् प्रस्थितं नलं ।
अभिरूपं महात्मानं परव्यूहविनाशनं । यमन्वेषसि राजानं नलं पद्मनिभेक्षणं । २४३०
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरं । अरण्यराडयं श्रीमांश्चतुर्द्दंष्ट्रो महाहनुः ।
शार्दूलोऽभिमुखोऽभ्येति व्रजाम्येनमशङ्किता । भवान् मृगाणामधिपस्त्वमस्मिन् कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि मां । निषधाधिपतेर्भार्य्यां नलस्यामित्रघातिनः ।
पतिमन्वेषतीमेकां कृपणां शोककर्षितां । आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ।
अथ वा त्वं वनपते नलं यदि न शंससि । मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय । २४३५
श्रुत्वाऽरण्ये विलपितं न मामाश्वासयत्ययं । यामीमां स्वादुसलिलामापगां सागरङ्गमां ।
इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितं । विराजद्भिरिवानेकैर्नैकवर्णैर्मनोरमैः ।
नानाधातुसमाकीर्णं विविधोपलभूषितं । अस्यारण्यस्य महतः केतुभूतमिवोत्थितं ।

सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतं। पतत्रिभिर्बहुविधैः समन्तादनुनादितं।
किंशुकाशोकबकुलपुन्नागैरुपशोभितं। कर्णिकारधवप्लक्षैः सुपुष्पैरुपशोभितं। २४४०
सरिद्भिः सविहङ्गाभिः शिखरैश्च समाकुलं। गिरिराजमिमं तावत् पृच्छामि नृपतिं प्रति।
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत। शरण्य बहुकल्याण नमस्तेऽस्तु महीधर।
प्रणमे त्वाऽभिगम्याहं राजपुत्रीं निबोध मां। राज्ञः स्नुषां राजभार्य्यां दमयन्तीति विश्रुतां।
राजा विदर्भाधिपतिः पिता मम महारथः। भीमो नाम क्षितिपतिश्चातुर्व्वर्ण्यस्य रक्षिता।
राजसूयाश्वमेधानां क्रतूनां दक्षिणावतां। आहर्त्ता पार्थिवश्रेष्ठः पृथुचार्व्वञ्चितेक्षणः। २४४५
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः। शीलवान् वीर्य्यसम्पन्नः पृथुश्रीर्धर्म्मविच्छुचिः।
सम्यग्गोप्ता विदर्भाणां निर्ज्जितारिगणः प्रभुः। तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थितां।
निषधेषु महाराजः श्वशुरो मे नरोत्तमः। गृहीतनामा विख्यातो वीरसेन इति स्म ह।
तस्य राज्ञः सुतो वीरः श्रीमान् सत्यपराक्रमः। क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह।
नलो नामाऽरिहा श्यामः पुण्यश्लोक इति श्रुतः। ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत् सोमपोऽग्निमान्। २४५०
यष्टा दाता च योद्धा च सम्यक् चैव प्रशासिता। तस्य मामचलश्रेष्ठ विद्धि भार्य्यामिहागतां।
त्यक्तश्रियं भर्त्तृहीनामनाथां व्यसनान्वितां। अन्वेषमाणां भर्त्तारं त्वं मां पर्व्वतसत्तम।
समुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः। कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः।
गजेन्द्रविक्रमो धीमान् दीर्घबाहुरमर्षणः। विक्रान्तः सत्त्ववान्वीरो भर्त्ता मम महायशाः।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः। किं मां विलपतीमेकां पर्व्वतश्रेष्ठ विह्वलां। २४५५
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखितां। वीर विक्रान्त धर्म्मज्ञ सत्यसन्ध महीपते।
यद्यस्मिन् वने राजन् दर्शयात्मानमात्मना। कदा सुस्निग्धगम्भीरां जीमूतघनसन्निभां।
श्रोष्यामि नैषधस्याहं वाचं तामम्रतोपमां। वैदर्भीत्येव विस्पष्टां शुभां राज्ञो महात्मनः।
आम्नायसारिणीमृद्धां मम शोकविनाशिनीं। भीतामाश्वासयत मां नृपते धर्म्मवत्सल।
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी। दमयन्ती ततो भूयो जगाम दिशमुत्तरां। २४६०
सा गत्वा त्रीनहोरात्रान् ददर्श परमाङ्गना। तापसारण्यमतुलं दिव्यकाननशोभितं।
वशिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितं। नियतैः संयताहारैर्दमशौचसमन्वितैः।
अब्भक्षैर्वायुभक्षैश्च पर्णाहारैस्तथैव च। वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलं। नानामृगगणैर्जुष्टं शाखामृगगणायुतं।
तापसैः समुपेतञ्च सा दृष्ट्वैव समाश्वसत्। सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना। २४६५
वर्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना। सा विवेशाश्रमपदं वीरसेनसुतप्रिया।
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी। साऽभिवाद्य तपोवृद्धान् विनयावनता स्थिता।
स्वागतन्तु इति प्रोक्ता तैः सर्व्वैस्तापसैश्च सा। पूजाञ्चास्या यथान्यायं कृत्वा तत्र तपोधनाः।

आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे । तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपस्यग्निषु धर्म्मेषु मृगपक्षिषु चानघाः । कुशलं वो महाभागाः स्वधर्म्माचरणेषु च । २४७०
तैरुक्ता कुशलं भद्रे सर्व्वत्रेति यशस्विनी । ब्रूहि सर्व्वानवद्याङ्गि का त्वं किञ्च चिकीर्षसि ।
दृष्ट्वैव ते परं रूपं द्युतिञ्च परमामिह । विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ।
अस्यारण्यस्य देवी त्वमुताहोऽस्य महीभृतः । अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ।
साऽब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता । न चाप्यस्य गिरेर्व्विप्रा नैव नद्याश्च देवता ।
मानुषीं मां विजानीत यूयं सर्व्वे तपोधनाः । विस्तरेणाभिधास्यामि तन्मे शृणुत सर्व्वशः । २४७५
विदर्भेषु महीपालो भीमो नाम महीपतिः । तस्य मां तनयां सर्व्वे जानीत द्विजसत्तमाः ।
निषधाधिपतिर्धीमान्नलो नाम महायशाः । वीरः संग्रामजिद्विद्वान्मम भर्त्ता विशाम्पतिः ।
देवताऽभ्यर्च्चनपरो द्विजातिजनवत्सलः । गोप्ता निषधवंशस्य महातेजा महाबलः ।
सत्यवान् धर्म्मवित्प्राज्ञः सत्यसन्धोऽरिमर्द्दनः । ब्रह्मण्यो दैवतपरः श्रीमान् परपुरञ्जयः ।
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः । मम भर्त्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा । २४८०
आहर्त्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः । सपत्नानां मृधे हन्ता रविसोमसमप्रभः ।
स कैश्चिन्निकृतिप्रज्ञैरनार्य्यैरकृतात्मभिः । आहूय पृथिवीपालः सत्यधर्म्मपरायणः ।
देवने कुशलैर्जिह्मैर्ज्जितो राज्यं वसूनि च । तस्य मामवगच्छध्वं भार्य्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्त्तुर्द्दर्शनलालसां । सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च सर्व्वाणि तथाऽरण्यानि सर्व्वशः । अन्वेषमाणा भर्त्तारं नलं रणविशारदं । २४८५
महात्मानं कृतास्त्रञ्च विचरामीह दुःखिता । कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः । यत्कृतेऽहमिदं ब्रह्मन् प्रपन्ना भृशदारुणं ।
वनं प्रतिभयं घोरं शार्द्दूलमृगसेवितं । यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपं ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात् । कोऽनु मे जीवितेनार्थस्तमृते पुरुषर्षभं ।
कथं भविष्याम्यद्याहं भर्त्तृशोकाभिपीडिता । तथा विलपतीमेकामरण्ये भीमनन्दिनीं । २४९०
दमयन्तीमथोचुस्ते तापसाः सत्यदर्शिनः । उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधं । निषधानामधिपतिं नलं रिपुनिपातिनं ।
भैमि धर्म्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरं । विमुक्तं सर्व्वपापेभ्यः सर्व्वरत्नसमन्वितं ।
तदेव नगरं श्रेष्ठं प्रशासन्तमरिन्दमं । द्विषतां भयकर्त्तारं सुहृदां शोकनाशनं ।
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपं । एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजां । २४९५
तापसान्तर्हिताः सर्व्वे साग्निहोत्राश्रमास्तथा । सा दृष्ट्वा महदाश्चर्य्यं विस्मिता ह्यभवत्तदा ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा । किं नु स्वप्नो मया दृष्टः कोऽयं विधिरिहाभवत् ।
क्व नु ते तापसाः सर्व्वे क्व तदाश्रममण्डलं । क्व सा पुण्यजला रम्या नदी द्विजनिषेविता ।

ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता। भर्तृशोकपरा दीना विवर्णवदनाऽभवत्।
सा गत्वाऽथ परां भूमिं वाष्पसन्दिग्धया गिरा। विललापाश्रुपूर्णाक्षी दृष्ट्वाऽशोकतरुन्ततः। २५००
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं वने। पल्लवापीडितं हृद्यं विहङ्गैरनुनादितं।
अहो बतायमगमः श्रीमानस्मिन् वनान्तरे। आपीडैर्बहुभिर्भाति श्रीमान् पर्व्वतराडिव।
विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन। वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपं।
नलं नामारिदमनं दमयन्त्याः प्रियं पतिं। निषधानामधिपतिं दृष्टवानसि मे प्रियं।
एकवस्त्रार्द्धसंवीतं सुकुमारतनुत्वचं। व्यसनेनार्द्दितं वीरमरण्यमिदमागतं। २५०५
यथा विशोका गच्छेयमशोक नग तत्कुरु। सत्यनामा भवाशोक अशोकः शोकनाशन।
एवं साऽशोकवृक्षन्त्वमार्त्ता वै परिगम्य ह। जगाम दारुणतरं देशं भैमी वराङ्गना।
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा। नैकांश्च पर्व्वतान् रम्यान् नैकांश्च मृगपक्षिणः।
कन्दरांश्च नितम्बांश्च नदीश्चाद्भुतदर्शनाः। ददर्श सा भीमसुता पतिमन्वेषती तदा।
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता। ददर्शाथ महासार्थं हस्त्यश्वरथसङ्कुलं। २५१०
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभां। सुशान्ततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृतां।
प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजितां। कूर्म्मग्राहझषाकीर्णां विपुलद्वीपशोभितां।
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी। उपसर्प्य वरारोहा जनमध्यं विवेश ह।
उन्मत्तरूपा शोकार्त्ता तथा वस्त्रार्द्धसंवृता। कृशा विवर्णा मलिना पांशुध्वस्तशिरोरुहा।
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः। केचिच्चिन्तापरा जग्मुः केचित्तत्र विचुक्रुशुः। २५१५
प्रहसन्ति स्म तां केचिदभ्यसूयन्ति चापरे। अकुर्व्वत दयां केचित् पप्रच्छुश्चापि भारत।
काऽसि कस्यासि कल्याणि किं वा मृगयसे वने। त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी।
वद सत्यं वनस्यास्य पर्व्वतस्याथ वा दिशः। देवता त्वं हि कल्याणि त्वां वयं शरणं गताः।
यक्षी वा राक्षसी वा त्वं उताहोऽसि वराङ्गना। सर्व्वथा कुरु नः स्वस्ति रक्षस्वास्माननिन्दिते।
यथाऽयं सर्व्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत्। तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत्। २५२०
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा। प्रत्युवाच ततः साध्वी भर्तृव्यसनपीडिता।
सार्थवाहञ्च सार्थञ्च जना ये तत्र केचन। युवस्थविरबालाश्च सार्थस्य च पुरोगमाः।
मानुषीं मां विजानीत मनुजाधिपतेः सुतां। नृपस्नुषां राजभार्य्यां भर्तृदर्शनलालसां।
विदर्भराड् मम पिता भर्त्ता राजा च नैषधः। नलो नाम महाभागस्तं मार्गाम्यपराजितं।
यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियं। नलं पुरुषशार्दूलममित्रगणसूदनं। २५२५
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः। सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः।
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते। मनुष्यं नलनामानं न पश्यामि यशस्विनि।
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि। पश्याम्यस्मिन् वने कृत्स्ने ह्यमनुष्यनिषेविते।

ऋते त्वां मानुषीं मर्त्त्यां न पश्यामि महावने। तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु।
साऽब्रवीद्वणिजः सर्व्वान् सार्थवाहञ्च तं ततः। क्व नु यास्यति सार्थोऽयमेतदाख्यातुमर्हसि। २५१०
॥ सार्थवाह उवाच ॥ सार्थोऽयं चेदिराजस्य सुबाहोः सत्यदर्शिनः। क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे।
इतिश्री महाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्तीविलापे चतुःषष्टितमोऽध्यायः॥ ६४ ॥

॥ वृहदश्व उवाच ॥ सा तच्छ्रुत्वाऽनवद्याङ्गी सार्थवाहवचस्तदा। जगाम सह तेनैव सार्थेन पतिलालसा।
अथ काले बहुतिथे वने महति दारुणे। तडागं सर्व्वतोभद्रं पद्मसौगन्धिकं महत्।
ददृशुर्व्वणिजो रम्यं प्रभूतयवसेन्धनं। बहुपुष्पफलोपेतं नानापक्षिनिषेवितं।
निर्म्मलस्वादुसलिलं मनोहारि सुशीतलं। सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः। २५१५
सम्मते सार्थवाहस्य विविशुर्व्वनमुत्तमं। उवास सार्थः सुमहान् वेलामासाद्य पश्चिमां।
अथार्द्धरात्रसमये निःशब्दस्तिमिते तदा। सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत्।
पानीयार्थं गिरिनदीं मदप्रस्रवणाविलं। अथापश्यत सार्थन्तं सार्थजान् सुबहून् गजान्।
ते तान् ग्राम्यगजान् दृष्ट्वा सर्व्वे वनगजास्तदा। समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः।
तेषामापततां वेगः करिणां दुःसहोऽभवत्। नगाग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ। २५२०
स्पन्दतामपि नागानां मार्गा नष्टा वनोद्भवाः। मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमं।
ते तं ममर्द्दुः सहसा चेष्टमानं महीतले। हाहाकारं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः।
वनगुल्मांश्च धावन्तो निद्रान्धा बहवोऽभवन्। केचिद्दन्तैः करैः केचित् केचित्पद्भ्यां हता गजैः।
निहतोष्ट्राश्च बहुलाः पदातिजनसङ्कुलाः। भयादाधावमानाश्च परस्परहतास्तदा।
घोरान्नादान् विमुञ्चन्तो निपेतुर्धरणीतले। वृक्षेष्वारुह्य संरब्धाः पतिता विषमेषु च। २५२५
एवं प्रकारैर्ब्बहुभिर्दैवेनाक्रम्य हस्तिभिः। राजन् विनिहतं सर्व्वं समृद्धं सार्थमण्डलं।
आरावः सुमहांश्चासीत्त्रैलोक्यभयकारकः। एषोऽग्निरुत्थितः कष्टस्त्रायध्वं धावताधुना।
रत्नराशिर्व्विशीर्णोऽयं गृह्णीध्वं किं प्रधावत। सामान्यमेतद्द्रविणं न मिथ्यावचनं मम।
एवमेवाभिभाषन्तो विद्रवन्ति भयात्तदा। पुनरेवाभिधास्यामि चिन्तयध्वं सुकातराः।
तस्मिंस्तथा वर्त्तमाने दारुणे जनसंक्षये। दमयन्ती च बुबुधे भयसंत्रस्तमानसा। २५३०
अपश्यद्वैशसं तत्र सर्व्वलोकभयङ्करं। अदृष्टपूर्व्वं तद्दृष्ट्वा बाला पद्मनिभेक्षणा।
संसक्तवदनाश्वासा उत्तस्थौ भयविह्वला। ये तु तत्र विनिर्मुक्ताः सार्थात् केचिदविक्षताः।
तेऽब्रुवन् सहिताः सर्व्वे कस्येदं कर्म्मणः फलं। नूनं न पूजितोऽस्माभिर्म्मणिभद्रो महायशाः।
तथा यक्षाधिपः श्रीमान्नवै वैश्रवणः प्रभुः। न पूजा विघ्नकर्तॄणामथवा प्रथमं कृता।
शकुनानां फलं वाऽथ विपरीतमिदं ध्रुवं। ग्रहा न विपरीतास्तु किमन्यदिदमागतं। २५३५
अपरे त्वब्रुवन् दीना ज्ञातिद्रव्यविनाकृताः। याऽसावद्य महासार्थे नारी ह्युन्मत्तदर्शना।
प्रविष्टा विकृताकारा कृत्वा रूपममानुषं। तयेयं विहिता पूर्व्वं माया परमदारुणा।

राक्षसी वा ध्रुवं यक्षी पिशाची वा भयङ्करी। तस्याः सर्व्वमिदं पापं नात्र कार्य्या विचारणा।
यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदां। लोष्टभिः पांशुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः।
अवश्यमेव हन्यामः सार्थस्य किल कृत्यकां। दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणं। २५६०
ह्रीता भीता च संविग्ना प्राद्रवच्च काननं। आशङ्कमाना तत्पापमात्मानं पर्य्यदेवयत्।
अहो ममोपरि विधेः संरम्भो दारुणो महान्। नानुबध्नाति कुशलं कस्येदं कर्म्मणः फलं।
न स्मराम्यशुभं किञ्चित्कृतं कस्यचिदण्वपि। कर्म्मणा मनसा वाचा कस्येदं कर्म्मणः फलं।
नूनं जन्मान्तरकृतं पापमापतितं महत्। अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहं।
भर्त्तृराज्यापहरणं स्वजनाच्च पराजयः। भर्त्रा सह वियोगश्च तनयाभ्याञ्च विच्युतिः। २५६५
निर्नाथता वने वासो बहुव्यालनिषेविते। अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा।
देशात्तस्माद्विनिष्क्रम्य शोचन्ते वैशसं कृतं। भ्रातरं पितरं पुत्रं सखायञ्च नराधिप।
अशोचत्तत्र वैदर्भी किं नु मे दुष्कृतं कृतं। योऽपि मे निर्ज्जनेऽरण्ये संप्राप्तोऽयं जनार्णवः।
स हतो हस्तियूथेन मन्दभाग्यान्ममैव तत्। प्राप्तव्यं सुचिरं दुःखं नूनमद्यापि वै मया।
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनं। या नाहमद्य मृदिता हस्तियूथेन दुःखिता। २५७०
न ह्यदैवकृतं किञ्चिन्नराणामिह विद्यते। न च मे बालभावेऽपि किञ्चित् पापकृतं कृतं।
कर्म्मणा मनसा वाचा यदिदं दुःखमागतं। मन्ये स्वयम्बरकृते लोकपालाः समागताः।
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः। नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहं।
एवमादीनि दुःखार्त्ता सा विलप्य वराङ्गना। प्रलापानि तदा तानि दमयन्ती पतिव्रता।
हतशेषैः सह तदा ब्राह्मणैर्व्वेदपारगैः। अगच्छद्राजशार्दूल चन्द्रलेखेव शारदी। २५७५
गच्छन्ती सा चिराद्बाला पुरमासादयन्महत्। सायाह्ने चेदिराजस्य सुबाहोः सत्यदर्शिनः।
अथ वस्त्रार्द्धसंवीता प्रविवेश पुरोत्तमं। तां विह्वलां कृशां दीनां मुक्तकेशीममार्ज्जितां।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः। प्रविशन्तीन्तु तां दृष्ट्वा चेदिराजपुरीं तदा।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात्। सा तैः परिवृताऽगच्छत् समीपं राजवेश्मनः।
तां प्रासादगताऽपश्यद्राजमाता जनैर्वृतां। धात्रीमुवाच चैनामानयेह ममान्तिकं। २५८०
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी। तादृग्रूपञ्च पश्यामि विद्योतयति मे गृहं।
उन्मत्तवेशा कल्याणी श्रीरिवायतलोचना। सा जनं वारयित्वा तं प्रासादतलमुत्तमं।
आरोप्य विस्मिता राजन् दमयन्तीमपृच्छत। एवमप्यसुखाविष्टा बिभर्षि परमं वपुः।
भासि विद्युदिवाभ्रेषु शंस मे काऽसि कस्य वा। नहि ते मानुषं रूपं भूषणैरपि वर्ज्जितं।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे। तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत्। २५८५
मानुषीं मां विजानीहि भर्त्तारं समनुव्रतां। सैरिन्ध्रीं जातिसम्पन्नां भुजिष्यां कामवासिनीं।
फलमूलाशनामेकां यत्र सायंप्रतिश्रयां। असङ्ख्येयगुणो भर्त्ता माञ्च नित्यमनुव्रतः।

भक्ताऽहमपि तं वीरं छायेवानुगता पथि । तस्य दैवात् प्रसक्तोऽभूदतिमात्रं सुदेवने ।
द्यूते स निर्ज्जितश्चैव वनमेक उपेयिवान् । तमेकवसनं वीरमुन्मत्तमिव विह्वलं ।
आश्वासयन्ती भर्त्तारमहमप्यगमं वनं । स कदाचिद्वने वीरः कस्मिंश्चित् कारणान्तरे । २०९०
क्षुत्परीतस्तु विमनास्तदप्येकं व्यसर्ज्जयत् । तमेकवसना नग्नमुन्मत्तवदचेतसं ।
अनुव्रजन्ती बहुला न स्वपामि निशास्तदा । ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्द्धं परिच्छिद्य त्यक्तवान्मामनागसं । तं मार्गमाणा भर्त्तारं दह्यमाना दिवानिशं ।
साऽहं कमलगर्भाभमपश्यन्ती हृदि प्रियं । न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुं ।
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु । राजमाताऽब्रवीदार्त्तां भैमीमार्त्तस्वरां स्वयं । २०९५
वसस्व मयि कल्याणि प्रीतिर्मे परमा त्वयि । मृगयिष्यन्ति ते भद्रे भर्त्तारं पुरुषा मम ।
अपि वा स्वयमागच्छेत् परिधावन्नितस्ततः । इहैव वसती भद्रे भर्त्तारमुपलप्स्यसे ।
राजमातुर्व्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् । समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ।
उच्छिष्टं नैव भुञ्जीयां न कुर्य्यां पादधावनं । न चाहं पुरुषानन्यान् प्रभाषेयं कथञ्चन ।
प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान् भवेत् । बध्यश्च तेऽसकृन्मन्द इति मे व्रतमाहितं । २१००
भर्त्तुरन्वेषणार्थन्तु पश्येयं ब्राह्मणानहं । यद्येवमिह वत्स्यामि त्वत्सकाशे न संशयः ।
अतोऽन्यथा न मे वासो वर्त्तते हृदये क्वचित् । तां प्रहृष्टेन मनसा राजमातेदमब्रवीत् ।
सर्व्वमेतत् करिष्यामि दिष्ट्या ते व्रतमीदृशं । एवमुक्त्वा ततो भैमीं राजमाता विशाम्पते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत । सैरिन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीं ।
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियं । एतया सह मोदस्व निरुद्विग्नमनाः सदा । २१०५
ततः परमसंहृष्टा सुनन्दा गृहमागमत् । दमयन्तीमुपादाय सखीभिः परिवारिता ।
सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत । सर्व्वकामैः सुविहितैर्निरुद्वेगाऽवसत्तदा ।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्तीचेदिराजगृहवासे पञ्चषष्टोऽध्यायः ॥ ६५ ॥
॥ बृहदश्व उवाच ॥ उत्सृज्य दमयन्तीन्तु नलो राजा विशाम्पते । ददर्श दावं दह्यन्तं महान्तं गहने वने ।
तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् । अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ।
माभैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तं । ददर्श नागराजानं शयानं कुण्डलीकृतं । २११०
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलन्तदा । उवाच मां विद्धि राजन् नागं कर्कोटकं नृप ।
मया प्रलब्धो महर्षिर्नारदः सुमहातपाः । तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ।
तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् । इतो नेता हि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् ।
तस्य शापान्न शक्तोऽस्मि पदाद्विचलितुं पदं । उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ।
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः । लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ मां । २११५
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः । तं गृहीत्वा नलः प्रायाद्देशं दावविवर्ज्जितं ।

आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना। उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत्।
पदानि गणयन् गच्छ स्वानि नैषध कानिचित। तत्र तेऽहं महाबाहो श्रेयो धास्यामि यत्परं।
ततः सङ्ख्यातुमारब्धमदशद्दशमे पदे। तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत।
स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः। स्वरूपधारिणं नागं ददर्श स महीपतिः। २१२०
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत्। मया तेऽन्तर्हितं रूपं न त्वां विदुर्जना इति।
यत्कृते चासि निकृतो दुःखेन महता नल। विषेण स मदीयेन दुःखं त्वयि निवत्स्यति।
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति। तावत्त्वयि महाराज दुःखं वै स निवत्स्यति।
अनागा येन निकृतस्त्वमनर्हो जनाधिप। क्रोधादसूययित्वा तं रक्षा मे भवतः कृता।
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोऽपि वा। ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप। २१२५
राजन् विषनिमित्ता च न ते पीडा भविष्यति। संग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि।
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन्। समीपमृतुपर्णस्य स हि चैवाक्षनैपुणः।
अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर। स तेऽक्षहृदयं दाता राजाऽश्वहृदयेन वै।
इक्ष्वाकुकुलजः श्रीमान् मित्रञ्चैव भविष्यति। भविष्यसि यदाऽक्षज्ञः श्रेयसा योक्ष्यसे तदा।
समेष्यसि दारैस्त्वं मास्म शोके मनः कृथाः। राज्येन तनयाभ्याञ्च सत्यमेतद्ब्रवीमि ते। २१३०
स्वं रूपञ्च यदा द्रष्टुमिच्छेथास्त्वं नराधिप। संस्मर्त्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः।
अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यते। इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा।
एवं नलञ्च सन्दिश्य वासो दत्त्वा च कौरव। नागराजस्ततो राजंस्तत्रैवान्तरधीयत।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलकर्कोटकसंवादे षडधिकषष्टोऽध्यायः॥ ६६ ॥
॥ वृहदश्व उवाच ॥ तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः। ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि।
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन्। अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः। २१३५
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च। अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः।
यानि शिल्पानि लोकेऽस्मिन् यच्चैवान्यत्सुदुष्करं। सर्व्वं यतिष्ये तत्कर्त्तुमृतुपर्ण भरस्व मां।
॥ ऋतुपर्ण उवाच ॥ वस बाहुक भद्रन्ते सर्व्वमेतत् करिष्यसि। शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः।
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम। भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतंशताः।
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ। एताभ्यां रंस्यसे सार्द्धं वस वै मयि बाहुक। २१४०
॥ वृहदश्व उवाच ॥ एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः। ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः।
स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन्। सायं सायं सदा चेमं श्लोकमेकं जगाद ह।
क्व नु सा क्षुत्पिपासार्त्ता श्रान्ता शेते तपस्विनी। स्मरन्ती तस्य मन्दस्य कं वा साऽद्योपतिष्ठति।
एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत्। कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक।
आयुष्मन् कस्य वा नारी यामेवमनुशोचसि। तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित्। २१४५

आसीद्बहुमता नारी तस्याद्दृढतरं वचः। स वै केनचिदर्थेन तया मन्दो व्ययुज्यत।
विप्रयुक्तः स मन्दात्मा भ्रमत्यसुखपीडितः। दह्यमानः स शोकेन दिवारात्रमतन्द्रितः।
निशाकाले स्मरंस्तस्याः श्लोकमेवं स गायति। स विभ्रमन्महीं सर्व्वां क्वचिदासाद्य किञ्चन।
वसत्यनर्हस्तद्दुःख भूय एवानुसंस्मरन्। सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने।
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति। एका बालाऽनभिज्ञा च मार्गाणामतथोचिता। २६५०
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति। श्वापदाचरिते नित्यं वने महति दारुणे।
त्यक्ता तेनाल्पभाग्येन मन्दप्रज्ञेन मारिष। इत्येवं नैषधो राजा दमयन्तीमनुस्मरन्।
अज्ञातवासं न्यवसद्राज्ञस्तस्य निवेशने।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलविलापे सप्तषष्टोऽध्यायः॥ ६७॥
॥ बृहदश्व उवाच। हृतराज्ये नले भीमः सभार्य्ये प्रेष्यतां गते। द्विजान् प्रस्थापयामास नलदर्शनकाङ्क्षया।
सन्दिदेश च तान् भीमो वसु दत्त्वा च पुष्कलं। मृगयध्वं नलञ्चैव दमयन्तीञ्च मे सुतां। २६५५
अस्मिन् कर्म्मणि सम्पन्ने विज्ञाते निषधाधिपे। गवां सहस्रं दास्यामि यो वस्तावानयिष्यति।
अग्रहारांश्च दास्यामि ग्रामं नगरसम्मितं। न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा।
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनं। इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्व्वतो दिशं।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्य्यया। नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्त्रिकां।
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः। विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि। २६६०
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थितां। मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन तां।
निबद्धां धूमजालेन प्रभामिव विभावसोः। तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशां।
तर्कयामास भैमीति कारणैरुपपादयन्॥ सुदेव उवाच॥ यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना।
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियं। पूर्णचन्द्रनिभां श्यामां चारुवृत्तपयोधरां।
कुर्व्वन्तीं प्रभया देवीं सर्व्वा वितिमिरा दिशः। चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव। २६६५
इष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव। विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृतां।
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव चोद्धृतां। पौर्णमासीमिव निशां राहुग्रस्तनिशाकरां।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव। विध्वस्तपर्णकमलां वित्रासितविहङ्गमां।
हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीं। सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचितां।
दह्यमानामिवार्केण मृणालीमिव चोद्धृतां। रूपौदार्य्यगुणोपेतां मण्डनार्हाममण्डितां। २६७०
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृतां। कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च।
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया। भर्त्ता नाम परं नार्य्या भूषणं भूषणैर्व्विना।
एषा हि रहिता तेन शोभमाना न शोभते। दुष्करं कुरुते ऽत्यन्तं हीनो यदनया नलः।
धारयत्यात्मनो देहं न शोकेनावसीदति। इमामसितकेशान्तां शतपत्रायतेक्षणां।

सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः। कदा नु खलु दुःखस्य पारं यास्यति वै शुभा। २६७५
भर्त्तुः समागमात् साध्वी रोहिणी शशिनो यथा। अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वा च मेदिनीं। तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृतां।
नैषधोऽर्हति वैदर्भीं तञ्चेयमसितेक्षणा। युक्तमस्याप्रमेयस्य वीर्य्यसत्त्ववतो मया।
समाश्वासयितुं भार्य्यां पतिदर्शनलालसां। अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननां।
अदृष्टपूर्व्वां दुःखस्य दुःखार्त्तां ध्यानतत्परां॥ बृहदश्व उवाच॥ एवं विमृश्य विविधैः कारणैर्लक्षणैश्च तां। २६८०
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत्। अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः। कुशली ते पिता राज्ञि जननी भ्रातरश्च ते।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च तौ। त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते।
अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीं॥ बृहदश्व उवाच॥ अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर।
पर्य्यपृच्छत तान् सर्व्वान् क्रमेण सुहृदः स्वकान्। रुरोद च भृशं राजन् वैदर्भी शोककर्षिता। २६८५
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमं। ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्षिता।
सुदेवेन सहैकान्ते कथयन्तीञ्च भारत। जनित्र्याः कथयामास सैरिन्ध्री रुदती भृशं।
ब्राह्मणेन सहागम्य तां वेद यदि मन्यसे। अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत्। ततः सुदेवमानाय्य राजमाता विशाम्पते।
पप्रच्छ भार्य्या कस्येयं सुता वा कस्य भाविनी। कथञ्च नष्टा ज्ञातिभ्यो भर्त्तुर्व्वा वामलोचना। २६९०
त्वया च विदिता विप्र कथमेवङ्गता सती। एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्व्वमशेषतः।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीं। एवमुक्तस्तया राजन् सुदेवो द्विजसत्तमः।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथं।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्तीसुदेवसंवादे अष्टषष्टोऽध्यायः॥ ६८॥

॥ सुदेव उवाच ॥ विदर्भराजो धर्म्मात्मा भीमो नाम महाद्युतिः। सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता।
राजा तु नैषधो नाम वीरसेनसुतो नलः। भार्य्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः। २६९५
स द्यूतेन जितो भ्रात्रा हृतराज्यो महीपतिः। दमयन्त्या गतः सार्द्धं न प्राज्ञायत कस्यचित्।
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमां। सेयमासादिता बाला तव पुत्रनिवेशने।
अस्या रूपेण सदृशी मानुषी नहि विद्यते। अस्या ह्येष भ्रुवोर्म्मध्ये सहजः पिप्लुरुत्तमः।
श्यामायाः पद्मसङ्काशो लक्षितोऽन्तर्हितो मया। मलेन संवृतो ह्यस्याश्छन्नोऽभ्रेणेव चन्द्रमाः।
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्म्मितः। प्रतिपत्कलुषस्येन्दोर्लेखा नातिविराजते। २७००
न चास्या नश्यते रूपं वपुर्म्मलसमाचितं। असंस्कृतमपि व्यक्तं भाति काञ्चनसन्निभं।
अनेन वपुषा बाला पिप्लुनाऽनेन सूचिता। लक्षितेयं मया देवी निभृतोऽग्निरिवोष्मणा।
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशाम्पते। सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलं।

स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत । दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः ।
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत । रुदन्त्यौ तां परिष्वज्य मुहूर्त्तमिव तस्थतुः । २००५
उत्सृज्य वाष्पं शनकै राजमातेदमब्रवीत् । भगिन्या दुहिता मेऽसि पिप्लुनाऽनेन सूचिता ।
अहञ्च तव माता च राजन्यस्य महात्मनः । सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ।
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः । त्वन्तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ।
यथैव ते पितुर्गेहं तथैव मम भाविनि । यथैव च ममैश्वर्य्यं दमयन्ति तथा तव ।
तां प्रहृष्टेन मनसा दमयन्ती विशाम्पते । प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् । २०१०
अज्ञायमानाऽपि सती सुखमस्म्युषिता त्वयि । सर्व्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ।
सुखात् सुखतरं वासो भविष्यति न संशयः । चिरविप्रोषितां मातर्म्मामनुज्ञातुमर्हसि ।
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ । पित्रा विहीनौ शोकार्त्तौ मया चैव कथं नु तौ ।
यदि चापि प्रियं किञ्चिन्मयि कर्त्तुमिहेच्छसि । विदर्भान् यातुमिच्छामि शीघ्रं मे यानमादिश ।
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप । गुप्तां बलेन महता पुत्रस्यानुमते ततः । २०१५
प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना । यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदां ।
ततः सा नचिरादेव विदर्भानगमत् पुनः । तान्तु बन्धुजनः सर्व्वः प्रहृष्टः समपूजयत् ।
सर्व्वान् कुशलिनो दृष्ट्वा बान्धवान् दारकौ च तौ । मातरं पितरञ्चोभौ सर्व्वञ्चैव सखीजनं ।
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी । परेण विधिना देवि दमयन्ती विशाम्पते ।
अतर्पयत् सुदेवञ्च गोसहस्रेण पार्थिवः । प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च । २०२०
सा व्युष्टा रजनीन्तत्र पितुर्वेश्मनि भाविनी । विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ।
॥ दमयन्त्युवाच ॥ मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते । नरवीरस्य चैतस्य नलस्यानयने यत ।
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता । वाष्पेणापिहिता राज्ञी नोत्तरं किञ्चिदब्रवीत् ।
तदवस्थान्तु तां दृष्ट्वा सर्व्वमन्तःपुरं तदा । हाहाभूतमतीवासीद्भृशञ्च प्ररुरोद ह ।
ततो भीमं महाराजं भार्य्या वचनमब्रवीत् । दमयन्ती तव सुता भर्त्तारमनुशोचति । २०२५
अपकृष्य च लज्जां सा स्वयमुक्तवती नृप । प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे ।
तया प्रचोदितो राजा ब्राह्मणान् वशवर्त्तिनः । प्रास्थापयद्दिशः सर्व्वा यतध्वं नलमार्गणे ।
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा । दमयन्तीमथो दृष्ट्वा प्रस्थितास्मे तथाऽब्रुवन् ।
अथ तानब्रवीद्भैमी सर्व्वराष्ट्रेष्विदं वचः । ब्रुवाणा जनसंसत्सु तत्र तत्र पुनः पुनः ।
क्व नु त्वं कितव छित्त्वा वस्त्रार्द्धं प्रस्थितो मम । उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय । २०३०
सा वै यथा त्वया दिष्टा तथास्ते त्वत्प्रतीक्षिणी । दह्यमाना भृशं बाला वस्त्रार्द्धेनाभिसंवृता ।
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव । प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ।
एवमन्यच्च वक्तव्यं कृपां कुर्य्याद्यथा मयि । वायुना धूयमानो हि वनं दहति पावकः ।

भर्त्तव्या रक्षणीया च पत्नी हि पतिना सदा। तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव।
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च भवान् सदा। संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात्। २७३५
तत् कुरुष्व नरव्याघ्र दयां मयि नरर्षभ। आनृशंस्यं परो धर्म्मस्त्वत्त एव हि मे श्रुतः।
एवं ब्रुवाणान् यदि वः प्रतिब्रूयात् कथञ्चन। स नरः सर्व्वथा ज्ञेयः कश्चासौ क्व नु वर्त्तते।
यच्चैवं वचनं श्रुत्वा ब्रूयात् प्रतिवचो नरः। तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः।
यथा च वो न जानीयाच्चरतो मम शासनात्। पुनरागमनञ्चैव तथा कार्य्यमतन्द्रितैः।
यदि वाऽसौ समृद्धः स्याद्यदि वाऽप्यधनो भवेत्। यदि वाऽप्यसमर्थः स्याज्ज्ञेयमस्य चिकीर्षितं। २७४०
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्व्वतो दिशः। नलं मृगयितुं राजंस्तदा व्यसनिनं तथा।
ते पुराणि सराष्ट्राणि ग्रामान् घोषांस्तथाश्रमान्। अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः।
तच्च वाक्यं तथा सर्व्वे तत्र तत्र विशाम्पते। श्रावयाञ्चक्रिरे विप्रा दमयन्त्या यथेरितं।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलान्वेषणे एकोनसप्ततितमोऽध्यायः॥ ६९॥
॥ बृहदश्व उवाच॥ अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः। प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत्।
नैषधं मृगयानेन दमयन्ति मया नलं। अयोध्यां नगरीं गत्वा भाङ्गस्वरिरुपस्थितः। २७४५
श्रावितश्च मया वाक्यं त्वदीयं स महाजने। ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि।
तच्छ्रुत्वा नाब्रवीत् किञ्चिदृतुपर्णो नराधिपः। न च पारिषदः कश्चिद्भाष्यमाणो मयाऽसकृत्।
अनुज्ञातन्तु मां राज्ञा विजने कश्चिदब्रवीत्। ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः।
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः। शीघ्रयाने सुकुशलो मिष्टकर्त्ता च भोजने।
स विनिःश्वस्य बहुशो रुदित्वा च पुनः पुनः। कुशलञ्चैव मां पृष्ट्वा पश्चादिदमभाषत। २७५०
वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः। आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः।
रहिता भर्त्तृभिश्चैव न क्रुध्यन्ति कदाचन। प्राणांश्चारित्रकवचान् धारयन्ति वरस्त्रियः।
विषमस्थेन मूढेन परिभ्रष्टसुखेन तु। यत् सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति।
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः। आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति।
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा यथागतं। भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतं। २७५५
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः। श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय।
एतच्छ्रुत्वाऽश्रुपूर्णाक्षी पर्णादस्य विशाम्पते। दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत।
अयमर्थो न संवेद्यो भीमे मातः कदाचन। त्वत्सन्निधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमं।
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतं। तथा त्वया प्रयत्तव्यं मम चेत् प्रियमिच्छसि।
यथा चाहं समानीता सुदेवेनाशु बान्धवान्। तेनैव मङ्गलेनाशु सुदेवो यातु माचिरं। २७६०
समानेतुं नलं मातरयोध्यां नगरीमितः। विश्रान्तन्तु ततः पश्चात् पर्णादं द्विजसत्तमं।
अर्चयामास वैदर्भी धनेनातीव भामिनी। नले चेहागते विप्र भूयो दास्यामि ते वसु।

त्वया हि मे बहु कृतं यदन्यो न करिष्यति । यद्भर्त्राऽहं समेष्यामि शीघ्रमेव द्विजोत्तम ।
स एवमुक्तोऽथाश्वास्य आशीर्व्वादैः सुमङ्गलैः । गृहानुपययौ चापि कृतार्थः सुमहामनाः ।
ततः सुदेवमाभाष्य दमयन्ती युधिष्ठिर । अब्रवीत् सन्निधौ मातुर्दुःखशोकसमन्विता । २७६५
गत्वा सुदेव नगरीमयोध्यावासिनं नृपं । ऋतुपर्णं वचो ब्रूहि संपतन्निव कामगः ।
आस्थास्यति पुनर्भैमी दमयन्ती स्वयम्वरं । तत्र गच्छन्ति राजानो राजपुत्राश्च सर्व्वशः ।
तथा च गणितः कालः श्वोभूते स भविष्यति । यदि सम्भावनीयन्ते गच्छ शीघ्रमरिन्दम ।
सूर्य्योदये द्वितीयं सा भर्त्तारं वरयिष्यति । नहि स ज्ञायते वीरो नलो जीवति वा न वा ।
एवं तया यथोक्तो वै गत्वा राजानमब्रवीत् । ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा । २७७०
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि दमयन्तीपुनःस्वयम्वरकथने सप्ततितमोऽध्यायः ॥ ७० ॥
॥ बृहदश्व उवाच ॥ श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः । सान्त्वयन् श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ।
विदर्भां यातुमिच्छामि दमयन्त्याः स्वयम्वरं । एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ।
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह । व्यदीर्य्यत मनो दुःखात् प्रदध्यौ च महामनाः ।
दमयन्ती भवेदेतत् कुर्य्याद्दुःखेन मोहिता । अस्मदर्थे भवेद्वाऽयमुपायश्चिन्तितो महान् ।
नृशंसं बत वैदर्भी भर्त्तृकामा तपस्विनी । मया क्षुद्रेण निकृता कृपणा पापबुद्धिना । २७७५
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः । स्यादेवमपि कुर्य्यात् सा विवासाद्गतसौहृदा ।
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा । नैवं सा कर्हिचित् कुर्य्यात् सापत्या च विशेषतः ।
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चयं । ऋतुपर्णस्य वै काममात्मार्थञ्च करोम्यहं ।
इति निश्चित्य मनसा बाहुको दीनमानसः । कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपं ।
प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप । एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप । २७८०
ततः परीक्षामश्वानाञ्चक्रे राजन् स बाहुकः । अश्वशालामुपागम्य भाङ्गासुरिर्नृपाज्ञया ।
स त्वर्य्यमाणो बहुश ऋतुपर्णेन बाहुकः । अश्वान् जिज्ञासमानो वै विचार्य्य च पुनः पुनः ।
अध्यगच्छत् कृशानश्वान् समर्थानध्वनि क्षमान् । तेजोबलसमायुक्तान् कुलशीलसमन्वितान् ।
वर्ज्जितान् लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् । शुद्धान् दशभिरावर्त्तैः सिन्धुजान् वातरंहसः ।
दृष्ट्वा तानब्रवीद्राजा किञ्चित् कोपसमन्वितः । किमिदं प्रार्थितं कर्त्तुं प्रलब्धव्या न ते वयं । २७८५
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम । महदध्वानमपि च गन्तव्यं कथमीदृशैः ।
॥ बाहुक उवाच ॥ एको ललाटे द्वौ मूर्द्ध्नि द्वौ द्वौ पार्श्वोपपार्श्वयोः । द्वौ द्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ।
एते हया गमिष्यन्ति विदर्भान्नात्र संशयः । अथान्यान् मन्यसे राजन् ब्रूहि तान् योजयामि ते ।
॥ ऋतुपर्ण उवाच ॥ त्वमेव हयतत्त्वज्ञः कुशलो ह्यसि बाहुक । यान् मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ।
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् । योजयामास कुशलो जवयुक्तान् रथे नलः । २७९०
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः । अथ पर्य्यपतन् भूमौ जानुभिस्ते हयोत्तमाः ।

ततो नरवरः श्रीमान्नलो राजा विशाम्पते। सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान्।
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः। सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परं।
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः। समुत्पेतुरथाकाशं रथिनं मोहयन्निव।
तथा तु दृष्ट्वा तानश्वान् वहतो वातरंहसः। अयोध्याधिपतिः श्रीमान् विस्मयं परमं ययौ। २७९५
रथघोषन्तु तं श्रुत्वा हयसंग्रहणञ्च तत्। वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञतां।
किं नु स्यान्मातलिरयं देवराजस्य सारथिः। तथा तल्लक्षणं वीरे बाहुके दृश्यते महत्।
शालिहोत्रोऽथ किन्नु स्याद्धयानां कुलतत्त्ववित्। मानुषं समनुप्राप्तो वपुः परमशोभनं।
उताहो स्विद्भवेद्राजा नलः परपुरञ्जयः। सोऽयं नृपतिरायात इत्येवं समचिन्तयत्।
अथवेह नलो विद्यां वेत्ति तामेव बाहुकः। तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च। २८००
अपि चेदं वयस्तुल्यं बाहुकस्य नलस्य च। नायं नलो महावीर्य्यस्तद्विद्यश्च भविष्यति।
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमां। दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः।
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति। प्रमाणात् परिहीनस्तु भवेदिति मतिर्मम।
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्य्ययः। नलं सर्व्वगुणैर्युक्तं मन्ये बाहुकमन्ततः।
एवं विचार्य्य बहुशो वार्ष्णेयः पर्य्यचिन्तयत्। हृदयेन महाराज पुण्यश्लोकस्य सारथिः। २८०५
ऋतुपर्णश्च राजेन्द्रो बाहुकस्य हयज्ञतां। चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः।
ऐकाग्र्यञ्च तथोत्साहं हयसंग्रहणं च तत्। परं यत्नञ्च संप्रेक्ष्य परां मुदमवाप ह।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि ऋतुपर्णविदर्भगमने एकसप्ततोऽध्यायः॥ ७१ ॥
॥ वृहदश्व उवाच॥ स नदीः पर्व्वतांश्चैव वनानि च सरांसि च। अचिरेणातिचक्राम खेचरः खेचरन्निव।
तथा प्रयाते तु रथे तदा भाङ्गासुरिर्नृपः। उत्तरीयमधोऽपश्यद्भ्रष्टं परपुरञ्जयः।
ततः स त्वरमाणस्तु पटे निपतिते तदा। ग्रहीष्यामीति तं राजा नलमाह महामनाः। २८१०
निगृह्णीष्व महाबुद्धे हयानेतान् महाजवान्। वार्ष्णेयो यावदेतं मे पटमानयतामिह।
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव। योजनं समतिक्रान्तो नाहर्त्तुं शक्यते पुनः।
एवमुक्तो नलेनाऽथ तदा भाङ्गासुरिर्नृपः। आससाद वने राजन् फलवन्तं विभीतकं।
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत। ममापि सूत पश्य त्वं संख्याने परमं बलं।
सर्व्वः सर्व्वं न जानाति सर्व्वज्ञो नास्ति कश्चन। नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित्। २८१५
वृक्षेऽस्मिन् यानि पर्णानि फलान्यपि च बाहुक। पतितान्यपि यान्यत्र तत्रैकमधिकं शतं।
एकपत्राधिकं पत्रं फलमेकञ्च बाहुक। पञ्चकोट्योऽथ पत्राणां द्वयोरपि च शाखयोः।
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः। आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च।
ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत्। परोक्षमिव मे राजन् कत्थसे शत्रुकर्षण।
प्रत्यक्षमेतत् कर्त्ताऽस्मि शातयित्वा विभीतकं। अथाहं गणिते राजन् विद्यते न परोक्षता। २८२०

प्रत्यक्षं ते महाराज शातयिष्ये बिभीतकं । अहं हि नाभिजानामि भवेदेवं नवेति वा ।
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप । मुहूर्त्तमपि वार्ष्णेयो रश्मीन् यच्छतु वाजिनां ।
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुं । बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ।
प्रतीक्षस्व मुहूर्त्तं त्वमथवा त्वरते भवान् । एष याति शिवः पन्थाः याहि वार्ष्णेयसारथिः ।
अब्रवीदृतुपर्णस्तु सान्त्वयन् कुरुनन्दन । त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक । २८२५॥
त्वत्कृते यातुमिच्छामि विदर्भान् हयकोविद । शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्त्तुमर्हसि ।
कामञ्च ते करिष्यामि यन्मां वक्ष्यसि बाहुक । विदर्भान् यदि यात्वाऽद्य सूर्य्यं दर्शयिताऽसि मे ।
अथाब्रवीद्बाहुकस्तं संख्याय च बिभीतकं । ततो विदर्भान् यास्यामि कुरुष्वेवं वचो मम ।
अकाम इव तं राजा गणयस्वेत्युवाच ह । एकदेशञ्च शाखायाः समादिष्टं मयाऽनघ ।
गणयस्वाश्व तत्वज्ञ ततस्त्वं प्रीतिमावह । सोऽवतीर्य्य रथात्तूर्णं शातयामास तं द्रुमं । २८३०
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् । गणयित्वा यथोक्तानि तावन्त्येव फलानि च ।
अत्यद्भुतमिदं राजन् दृष्टवानस्मि ते बलं । श्रोतुमिच्छामि ते विद्यां यथैतज्ज्ञायते नृप ।
॥ तमुवाच ततो राजा त्वरितो गमने नृपः । विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदं ।
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम । मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ।
ऋतुपर्णस्ततो राजा बाहुकं कार्य्यगौरवात् । हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः । २८३५
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परं । निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै । तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात् सततमुद्वमन् । कलेस्तस्य तदार्त्तस्य शापाग्निः स विनिःसृतः ।
स तेन कर्षितो राजा दीर्घकालमनात्मवान् । ततो विषविमुक्तात्मा स्वं रूपमकरोत् कलिः ।
तं शप्तुमैच्छत् कुपितो निषधाधिपतिर्नलः । तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः । २८४०
कोपं संयच्छ नृपते कीर्त्तिं दास्यामि ते परां । इन्द्रसेनस्य जननी कुपिता मां शपत् पुरा ।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः । अवसं त्वयि राजेन्द्र सुदुःखमपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशं । शरणं त्वां प्रपन्नोऽस्मि शृणु चेदं वचो मम ।
ये च त्वां मनुजा लोके कीर्त्तयिष्यन्त्यतन्द्रिताः । मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ।
भयार्त्तं शरणं यातं यदि मां त्वं न शप्स्यसे । एवमुक्तो नलो राजा न्ययच्छत कोपमात्मनः । २८४५
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकं । कलिस्त्वन्येन नादृश्यः कथयन्नैषधेन वै ।
ततो गतज्वरो राजा नैषधः परवीरहा । संप्रनष्टे कलौ राजन् संख्यायाथ फलान्युत ।
मुदा परमया युक्तस्तेजसाऽथ परेण वै । रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ।
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् । हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ।
नलः सञ्चोदयामास प्रहृष्टेनान्तरात्मना । विदर्भाभिमुखो राजा प्रययौ स महायशाः । २८५०

नले तु समतिक्रान्ते कलिरप्यगमद्गृहं। ततो गतज्वरो राजा नलोऽभूत् पृथिवीपतिः। विमुक्तः कलिना राजन् रूपमात्र वियोजितः।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलकलित्यागे द्विसप्ततोऽध्यायः॥ ७२ ॥

॥ वृहदश्व उवाच ॥ ततो विदर्भा संप्राप्तं सायाह्ने सत्यविक्रमं। ऋतुपर्णं जना राज्ञे भीमाय प्रत्यपादयन्।
स भीमवचनाद्राजा कुण्डिनं प्राविशत् पुरं। नादयन्रथघोषेण सर्व्वाः सविदिशो दिशः।
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः। श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ।
दमयन्ती तु शुश्राव रथघोषं नलस्य तं। यथा मेघस्य नदतो गम्भीरं जलदागमे। २८५५
परं विस्मयमापन्ना श्रुत्वा नादं महास्वनं। नलेन संगृहीतेषु पुरेव नलवाजिषु।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः। प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः।
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः। ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा।
प्रणेदुरुन्मुखा राजन् मेघनाद इवोत्सुकाः॥ दमयन्त्युवाच॥ यथाऽसौ रथनिर्घोषः पूरयन्निव मेदिनीं।
ममाह्लादयते चेतो नल एष महीपतिः। अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि। २८६०
असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः। यदि चैतस्य वीरस्य बाह्वोर्नाद्याहमन्तरं।
प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयं। यदि मां मेघनिर्घोषो नोपगच्छति नैषधः।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनं। यदि मां सिंहविक्रान्तो मत्तवारणविक्रमः।
नाभिगच्छति राजेन्द्रो विनङ्क्ष्यामि न संशयः। न स्मराम्यनृतं किञ्चिन्नस्मराम्यपकारतां।
न च पर्य्युषितं वाक्यं स्वैरेष्वपि कदाचन। प्रभुः क्षमावान् वीरश्च दाता चाभ्यधिको नृपैः। २८६५
रहोऽनीचानुवर्त्ती च क्लीववन्मम नैषधः। गुणांस्तस्य स्मरन्त्या मे तत्परायाा दिवानिशं।
हृदयं दीर्य्यत इदं शोकात् प्रियविनाकृतं। एवं विलपमाना सा नष्टसंज्ञेव भारत।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया। ततो मध्यमकक्ष्यायां ददर्श रथमास्थितं।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकं। ततोऽवतीर्य्य वार्ष्णेयो बाहुकश्च रथोत्तमात्।
हयांस्तानवमुच्याथ स्थापयामास वै रथं। सोऽवतीर्य्य रथोपस्थादृतुपर्णो नराधिपः। २८७०
उपतस्थे महाराजं भीमं भीमपराक्रमं। तं भीमः प्रतिजग्राह पूजया परया ततः।
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः। स तत्र कुण्डिने रम्ये वसमानो महीपतिः।
नच किञ्चित्तदाऽपश्यत् प्रेक्षमाणो मुहुर्मुहुः। स तु राज्ञा समागम्य विदर्भपतिना तदा।
अकस्मात् सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति। किं कार्य्यं स्वागतं तेऽस्तु राज्ञा पृष्टः स भारत।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतं। ऋतुपर्णोऽपि राजा स धीमान् सत्यपराक्रमः। २८७५
राजानं राजपुत्त्रं वा न स्म पश्यति कञ्चन। नैव स्वयम्वरकथां नच विप्रसमागमं।
ततो विगणयन्राजा मनसा कोशलाधिपः। आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः।
राजाऽपि च स्मयन् भीमो मनसा समचिन्तयत्। अधिकं योजनशतं तस्यागमनकारणं।

राजधान्यानतिक्रम्य प्राप्तोऽयमभिवादकः। आगमात् बहुलतिक्रम्य नाध्यगच्छद्यथातथं।
अल्पकार्य्यं विनिर्द्दिष्टं तस्यागमनकारणं। पश्चादुदर्के ज्ञास्यामि कारणं यद्भविष्यति। २८८०
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्ज्जयत्। विश्राम्यतामिति उवाच क्लान्तोऽसीति पुनःपुनः।
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः। राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत्।
ऋतुपर्णे गते राजन् वार्ष्णेयसहिते नृपे। बाहुको रथमादाय रथशालामुपागमत्।
स मोचयित्वा तानश्वाननुपाल्य च शास्त्रतः। स्वयं चैतान् समाश्वास्य रथोपस्थ उपाविशत्।
दमयन्ती तु शोकार्त्ता दृष्ट्वा भाङ्गासुरिं नृपं। सूतपुत्रञ्च वार्ष्णेयं बाहुकञ्च तथाविधं। २८८५
चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः। नलस्येव महानासीन्न च पश्यामि नैषधं।
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता। तेनास्य रथनिर्घोषो नलस्येव महानभूत्।
आहोस्विदृतुपर्णोऽपि यथा राजा नलस्तथा। ततोऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते।
एवं सा तर्कयित्वा तु दमयन्ती विशाम्पते। दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा।
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि भीमपुरप्रवेशे त्रिसप्ततितमोऽध्यायः॥ ७३ ॥
॥ दमयन्त्युवाच ॥ गच्छ केशिनि जानीहि क एष रथवाहकः। उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः। २८९०
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता। पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते।
अत्र मे महती शङ्का भवेदेष नलो नृपः। यथा च मनसस्तुष्टिर्हृदयस्य च निर्वृतिः।
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा। प्रतिवाक्यञ्च सुश्रोणि बुध्येथास्त्वमनिन्दिते।
ततः समाहिता गत्वा दूती बाहुकमब्रवीत्। दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत।
॥ केशिन्युवाच । स्वागतन्ते मनुष्येन्द्र कुशलन्ते ब्रवीम्यहं। दमयन्त्या वचः साधु निबोध पुरुषर्षभ। २८९५
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः। तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति।
॥ बाहुक उवाच । श्रुतः स्वयंवरो राज्ञा कौशल्येन महात्मना। द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात्।
श्रुत्वैतत् प्रस्थितो राजा शतयोजनयायिभिः। हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः।
॥ केशिन्युवाच ॥ अथ योऽसौ तृतीयो वः स कुतः कस्य वा पुनः। त्वञ्च कस्य कथञ्चेदं त्वयि कर्म्म समाहितं।
॥ बाहुक उवाच ॥ पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः। स नले विद्रुते भद्रे भाङ्गासुरिमुपस्थितः। २९००
अहमप्यश्वकुशलः सूदत्वे च प्रतिष्ठितः। ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयं।
॥ केशिन्युवाच ॥ अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः। कथञ्चित् त्वयि वैतेन कथितं स्यात्तु बाहुक।
॥ बाहुक उवाच ॥ इहैव पुत्रौ निक्षिप्य नलस्य शुभकर्म्मणः। गतस्ततो यथाकामं नैष जानाति नैषधं।
नचान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि। गूढश्चरति लोकेऽस्मिन् नष्टरूपो महीपतिः।
आत्मैव हि नलं वेद या चास्य तदनन्तरा। नहि वै तानि लिङ्गानि नलः शंसति कर्हिचित्। २९०५
॥ केशिन्यु वाच ॥ योऽसावयोध्यां प्रथमं गतोऽसौ ब्राह्मणस्तदा। इमानि नारीवाक्यानि कथयानः पुनःपुनः।
क्व नु त्वं कितव छित्त्वा वस्त्रार्द्धं प्रस्थितो मम। उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय।

सा वै यथा समादिष्टा तथासौ तमभाषिणी। दह्यमाना विचाराणि कथाईतास्मिंस्तत।
तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव। प्रसादं कुरु मे वीर प्रतिवाक्यं ददस्व च।
तदस्यास्त्वं प्रियाख्यानं प्रब्रवीहि महामते। तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता। २८९०
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल। यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति।
॥ वृहदश्व उवाच॥ एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन। हृदयं व्यथितञ्चासीदश्रुपूर्णे च लोचने।
स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः। बाष्पसन्दिग्धया वाचा पुनरेवेदमब्रवीत्।
॥ बाहुक उवाच॥ वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः। आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः।
रहिता भर्तृभिश्चापि न क्रुध्यन्ति कदाचन। प्राणांश्चारित्रकवचान् धारयन्ति वरस्त्रियः। २८९५
विषमस्थेन मूढेन परिभ्रष्टसुखेन च। यत् सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति।
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः। आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति।
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथाविधं। राज्यभ्रष्टं श्रिया हीनं क्षुधितं व्यसनाप्लुतं।
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुर्म्मनाः। न बाष्पमशकत् सोढुं प्ररुरोद च भारत।
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत्। तत्सर्व्वं कथितञ्चैव विकारञ्चैव तस्य तं। २९००
इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि केशिनीवाक्ये चतुःसप्ततितमोऽध्यायः॥ ७४॥
॥ वृहदश्व उवाच॥ दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा। शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत्।
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके। अब्रुवाणा समीपस्था चरितान्यस्य लक्षय।
यदा च किञ्चित् कुर्य्यात् स कारणं तत्र भामिनि। तत्र सञ्चेष्टमानस्य लक्षयन्ती विचेष्टितं।
न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि। याचते न जलं देयं सर्व्वथा त्वरमाणया।
एतत् सर्व्वं समीक्ष्य त्वं चरितं मे निवेदय। निमित्तं यत्त्वया दृष्टं बाहुके दैवमानुषं। २९०५
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम। दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी।
निशम्याथ हयज्ञस्य लिङ्गानि पुनरागमत्। सा तत्सर्व्वं यथावृत्तं दमयन्त्यै न्यवेदयत्।
निमित्तं यत्तया दृष्टं बाहुके दैवमानुषं। केशिन्युवाच। दृढं शुच्युपचारोऽसौ न मया मानुषः क्वचित्।
दृष्टपूर्व्वः श्रुतो वाऽपि दमयन्ति तथाविधः। ह्रस्वमासाद्य सञ्चारं नासौ विनमते क्वचित्।
तन्तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखं। सङ्कटेऽप्यस्य सुमहान् विवरो जायतेऽधिकः। २९१०
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः। प्रेषितं तत्र राज्ञा तु मांसं बहु च पाशवं।
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः। ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः।
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः। तृणमुष्टिं समादाय सवितुस्तं समादधत्।
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः। तदद्भुततमं दृष्ट्वा विस्मिताऽहमिहागता।
अन्यच्च तस्मिन् सुमहदाश्चर्य्यं लक्षितं मया। यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे। २९१५
छन्देन चोदकं तस्य वहत्यावर्ज्जितं द्रुतं। अतीव चान्यत् सुमहदाश्चर्य्यं दृष्टवत्यहं।

यत् स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः । मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ।
भूय एव सुगन्धीनि हृषितानि भवन्ति हि । एतान्यद्भुतलिङ्गानि दृष्ट्वाऽहं द्रुतमागता ।
॥ वृहदश्व उवाच ॥ दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितं । अमन्यत नलं प्राप्तं कर्म्मचेष्टाभिसूचितं ।
सा शङ्कमाना भर्त्तारं बाहुकं पुनरिङ्गितैः । केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत् । २९८०
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतं । महानसाच्छृतं मांसमानयस्वेह भाविनि ।
सा गत्वा बाहुकस्याग्रे तन्मांसमपकृष्य च । अत्युष्णमेव त्वरिता तत्क्षणात् प्रियकारिणी ।
दमयन्त्यै ततः प्रादात् केशिनी कुरुनन्दन । सोचितानलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता । वैक्लव्यं परमं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत । इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः । २९८५
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत् । बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह । नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् । इदञ्च सदृशं भद्रे मिथुनं मम पुत्रयोः ।
ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहं । बहुशः सम्पतन्तीं त्वां जनः शङ्केत दोषतः ।
वयञ्च देशातिथयो गच्छ भद्रे नमोऽस्तु ते । २९९०

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलकन्यापुत्रदर्शने पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

॥ वृहदश्व उवाच ॥ सर्व्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः । आगत्य केशिनी सर्व्वं दमयन्त्यै न्यवेदयत् ।
दमयन्ती ततो भूयः प्रेषयामास केशिनीं । मातुः सकाशं दुःखार्त्ता नलदर्शनकाङ्क्षया ।
परीक्षितो मे बहुशो बाहुको नलशङ्कया । रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुं ।
स वा प्रवेश्यतां मातर्म्मां वाऽनुज्ञातुमर्हसि । विदितं वाऽथ वाऽज्ञातं पितुर्मे संविधीयतां ।
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् । दुहितुस्तमभिप्रायमन्वजानात् स पार्थिवः । २९९५
सा वै पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ । नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ।
तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः । आविष्टः शोकदुःखाभ्यां बभूवास्रुपरिप्लुतः ।
तन्तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा । तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ।
ततः काषायवसना जटिला मलपङ्किनी । दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ।
पूर्व्वं दृष्टस्त्वया कच्चिद्धर्म्मज्ञो नाम बाहुक । सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियं । २९९०
अनागसं प्रियां भार्य्यां विजने श्रममोहितां । अपहाय तु को गच्छेत् पुण्यश्लोकमृते नलं ।
किमु तस्य मया बाल्यादपराद्धं महीपतेः । यो मामुत्सृज्य विपिने गतवान्निद्रयाऽर्दितां ।
साक्षाद्देवानपाहाय वृतो यः स पुरा मया । अनुव्रतां साभिकामां पुत्त्रिणीं त्यक्तवान् कथं ।
अग्नौ पाणिं गृहीत्वा तु देवानामग्रतस्तथा । भविष्यामीति सत्यन्तु प्रतिश्रुत्य क तद्गतं ।
दमयन्त्या ब्रुवन्त्यास्तु सर्व्वमेतदरिन्दम । शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु । २९९५

अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलन्तु तत् । परिस्रवन्नलो दृष्ट्वा शोकार्त्तामिदमब्रवीत् ।
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान् स्वयं । कलिना तत्कृतं भीरु यच्च त्वामहमत्यजं ।
यत्त्वयाऽधर्म्मकृच्छ्रे तु शापेनाभिहतः पुरा । वनस्थया दुःखितया शोचन्त्या मां दिवानिशं ।
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः । त्वच्छापदग्धः सततं सोऽग्नावग्निरिवाहितः ।
मम च व्यवसायेन तपसा चैव निर्ज्जितः । दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ।　　२९७०
विमुच्य मां गतः पापस्ततोऽहमिह चागतः । त्वदर्थं विपुलश्रोणि नहि मेऽन्यत्प्रयोजनं ।
कथं नु नारी भर्त्तारमनुरक्तमनुव्रतं । उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ।
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् । भैमी किल स्म भर्त्तारं द्वितीयं वरयिष्यति ।
स्वैरवृत्ता यथा काममनुरूपमिवात्मनः । श्रुत्वैव चैवं त्वरितो भाङ्गस्वरिरुपस्थितः ।
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितं । प्राञ्जलिर्व्वेपमाना च भीता वचनमब्रवीत् ।　　२९७५
॥ दमयन्त्युवाच ॥ न मामर्हसि कल्याण दोषेण परिशङ्कितुं । मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ।
तवाभिगमनार्थन्तु सर्व्वतो ब्राह्मणा गताः । वाक्यानि मम गाथाभिर्गायमाना दिशो दश ।
ततस्त्वां ब्राह्मणो विद्वान् पर्णादो नाम पार्थिव । अभ्यगच्छत् कोशलायामृतुपर्णनिवेशने ।
तेन वाक्ये कृते सम्यक् प्रतिवाक्ये तथाहृते । उपायोऽयं मया दृष्टो नैषधानयने तव ।
त्वामृते नहि लोकेऽन्य एकाह्ना पृथिवीपते । समर्थो योजनशतं गन्तुमश्वैर्नराधिप ।　　२९८०
स्पृशेयमनेन सत्येन पादावेतौ महीपते । यथा नासत्कृतं किञ्चिन्मनसाऽपि चराम्यहं ।
अयञ्चरति लोकेऽस्मिन् भूतसाक्षी सदागतिः । एष मे मुञ्चतु प्राणान् यदि पापं चराम्यहं ।
तथा चरति तिग्मांशुः परेण भुवनं सदा । स मुञ्चतु मम प्राणान् यदि पापं चराम्यहं ।
चन्द्रमाः सर्व्वभूतानामन्तश्चरति साक्षिवत् । स मुञ्चतु मम प्राणान् यदि पापं चराम्यहं ।
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै । विब्रुवन्तु यथासत्यमेतेऽद्य वा त्यजन्तु मां ।　　२९८५
एवमुक्तस्ततो वायुरन्तरीक्षादभाषत । नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ।
राजन् शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः । साक्षिणो रक्षिणश्चास्या वयं त्रीन् परिवत्सरान् ।
उपायो विहितश्चायं त्वदर्थमतुलोऽनया । नह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ।
उपपन्ना त्वया भैमी त्वञ्च भैम्या महीपते । नात्र शङ्का त्वया कार्य्या सङ्गच्छ सह भार्य्यया ।
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह । देवदुन्दुभयो नेदुर्व्ववौ च पवनः शिवः ।　　२९९०
तदद्भुतमयं दृष्ट्वा नलो राजाऽथ भारत । दमयन्त्यां विशङ्कां तामुपाकर्षदरिन्दमः ।
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः । संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ।
स्वरूपिणन्तु भर्त्तारं दृष्ट्वा भीमसुता तदा । प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ।
भैमीमपि नलो राजा भ्राजमानो यथा पुरा । सस्वजे स्वसुतौ चापि यथावत् प्रत्यनन्दत ।
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना । परीता तेन दुःखेन निशश्वासायतेक्षणा ।　　३०००

तथैव नलदिग्धाङ्गीं परिष्वज्य सुचिर्म्मिताम् । सुचिरं पुरुषव्याघ्र तस्थौ शोकपरिप्लुतः ।
ततः सर्व्वं यथावृत्तं दमयन्त्या नलस्य च । भीमायाकथयत् प्रीत्या वैदर्भीजननी नृप ।
ततोऽब्रवीन्महाराजः कृतशौचमहं नलं । दमयन्त्या सहोपेतं काल्ये द्रष्टा सुखोषितं ।
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनं । वने विचरितं सर्व्वमूषतुर्मुदितौ नृप ।
गृहे भीमस्य नृपतेः परस्परसुखैषिणौ । वसेतां हृष्टसङ्कल्पौ वैदर्भी च नलश्च ह । २००५
स चतुर्थे ततो वर्षे सङ्गम्य सह भार्य्यया । सर्व्वकामः सुसिद्धार्थो लब्धवान् परमां मुदं ।
दमयन्त्यपि भर्त्तारमासाद्याप्यायिता भृशं । अर्द्धसञ्जातसस्येव तोयं प्राप्य वसुन्धरा ।
सैवं समेत्य व्यपनीय तन्द्रां शान्तज्वरा हर्षविवृद्धसत्त्वा । रराज भैमी समवाप्तकामा शीतांशुना रात्रिरिवोदितेन ।
इतिश्री महाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि नलदमयन्तीमेलने षट्सप्ततोऽध्यायः ॥ ७६ ॥
॥ वृहदश्व उवाच ॥ अथ तां व्युषितो रात्रिं नलो राजा स्वलङ्कृतः । वैदर्भ्या सहितः काले ददर्श वसुधाधिपं ।
ततोऽभिवादयामास प्रयतः श्वशुरं नलः । ततोऽनु दमयन्ती च ववन्दे पितरं शुभा । २०१०
तं भीमः प्रतिजग्राह पुत्त्रवत् परया मुदा । यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ।
नलेन सहितान्तत्र दमयन्तीं पतिव्रतां । तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्य्यां स्वकां तस्मै यथावत् प्रत्यवेदयत् । ततो बभूव नगरे सुमहान् हर्षजः स्वनः ।
जनस्य सम्प्रहृष्टस्य नलं दृष्ट्वा तथागतं । अशोभयच्च नगरं पताकाध्वजमालिनं ।
सिक्ताः सुमृष्टपुष्पाढ्या राजमार्गाः स्वलङ्कृताः । द्वारि द्वारि च पौराणां पुष्पभङ्गोपकल्पिताः । २०१५
अर्च्चितानि च सर्व्वाणि देवतायतनानि च । ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलं ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः । तमानाय्य नलं राजा क्षमयामास पार्थिवं ।
स च तं क्षमयामास हेतुभिर्ब्बुद्धिसम्मतः । स सत्कृतो महीपालो नैषधं विस्मिताननः ।
उवाच वाक्यं तत्त्वज्ञो नैषधं वदताम्वरः । दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ।
कच्चित्तु नापराधन्ते कृतवानस्मि नैषध । अज्ञातवासं वसतो मद्गृहे वसुधाधिप । २०२०
यदि वा बुद्धिपूर्व्वाणि यद्यबुद्ध्याऽपि कानिचित् । मया कृतान्यकार्य्याणि तानि त्वं क्षन्तुमर्हसि ।
॥ नल उवाच ॥ न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव । कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ।
पूर्व्वं ह्यपि सखा मेऽसि सम्बन्धी च जनाधिप । अत ऊर्द्ध्वन्तु भूयस्त्वं प्रीतिमाहर्त्तुमर्हसि ।
सर्व्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि । न तथा स्वगृहे राजन् यथा तव गृहे सदा ।
इदञ्चैव हयज्ञानं त्वदीयं मयि तिष्ठति । तदुपाकर्त्तुमिच्छामि मन्यसे यदि पार्थिव । २०२५
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः । स च तां प्रतिजग्राह विधिदृष्टेन कर्म्मणा ।
गृहीत्वा चाश्वहृदयं राजन् भाङ्गासुरिर्नृपः । निषधाधिपतेश्चापि दत्त्वाऽक्षहृदयं नृपः ।
सूतमन्यमुपादाय ययौ स्वपुरमेव ह । ऋतुपर्णे गते राजन् नलो राजा विशाम्पते ।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ।
इतिश्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि ऋतुपर्णस्वदेशगमने सप्तसप्ततोऽध्यायः ॥ ७७ ॥

॥ बृहदश्व उवाच ॥ स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः। पुरादल्पपरीवारो जगाम निषधान् प्रति। ३०३०
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः। पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः।
स कम्पयन्निव महीं त्वरमाणो महीपतिः। प्रविवेश सुसंरब्धस्तरसैव महामनाः।
ततः पुष्करमासाद्य वीरसेनसुतो नलः। उवाच दिव्याव पुनर्ब्बहु वित्तं मयाऽर्ज्जितं।
दमयन्ती च यच्चान्यन्मम किञ्चन विद्यते। एष वै मम सन्न्यासस्तव राज्यन्तु पुष्कर।
पुनः प्रवर्त्ततां द्यूतमिति मे निश्चिता मतिः। एकपाणेन भद्रन्ते प्राणयोश्च पणावहे। ३०३५
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु। प्रतिपाणः प्रदातव्यः परमो धर्म्म उच्यते।
न चेद्वाञ्छसि द्यूतं त्वं युद्धद्यूतं प्रवर्त्ततां। द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप।
वंशभोज्यमिदं राज्यमर्थितव्यं यथा तथा। येन केनाप्युपायेन वृद्धानामिति शासनं।
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर। कैतवेनाक्षवत्यान्तु युद्धे वा नाम्यतां धनुः।
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव। ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिं। ३०४०
दिष्ट्या त्वयाऽर्ज्जितं वित्तं प्रतिपाणाय नैषध। दिष्ट्या च दुष्कृतं कर्म्म दमयन्त्याः क्षयं गतं।
दिष्ट्या च ध्रियसे राजन् सदारोऽद्य महाभुज। धनेनानेन वै भैमी जितेन समलङ्कृता।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः। नित्यशो हि स्मरामि त्वां प्रतीक्षेऽपि च नैषध।
देवनेन मम प्रीतिर्न भवत्यसुहृद्गणैः। जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दितां।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि। श्रुत्वा तस्य तु ता वाचो बद्धबद्धप्रलापिनः। ३०४५
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः। स्मयंस्तु रोषताम्राक्षस्तमुवाच नलो नृपः।
पणावः किं व्याहरसे जितो न व्याहरिष्यसि। ततः प्रावर्त्तत द्यूतं पुष्करस्य नलस्य च।
एकपाणेन भद्रं ते नलेन स पराजितः। स रत्नकोषनिचयैः प्राणेन पणितोऽपि च।
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत्। मम सर्व्वमिदं राज्यमव्ययं हतकण्टकं।
वैदर्भी न त्वया शक्या राजापसद वीक्षितुं। तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः। ३०५०
न त्वया तत्कृतं कर्म्म येनाहं विजितः पुरा। कलिना तत्कृतं कर्म्म त्वञ्च मूढ न बुध्यसे।
नाहं परकृतं दोषं त्वय्याधास्ये कथञ्चन। यथासुखं वै जीव त्वं प्राणानवसृजामि ते।
तथैव सर्व्वसम्भारं स्वमंशं वितरामि ते। तथैव च मम प्रीतिस्त्वयि वीर न संशयः।
सौहार्द्दञ्चापि मे त्वत्तो न कदाचित् प्रहास्यति। पुष्कर त्वं हि मे भ्राता सञ्जीव शरदः शतं।
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः। स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः। ३०५५
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तं। पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः।
कीर्त्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी। यो मे वितरसि प्राणानधिष्ठानञ्च पार्थिव।
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः। प्रययौ स्वपुरं हृष्टः पुष्करः स्वजनावृतः।
महत्या सेनया सार्द्धं विनीतैः परिचारकैः। भ्राजमान इवादित्यो वपुषा पुरुषर्षभ।

प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् । प्रविवेश पुरीं श्रीमानत्यर्थमुपशोभिताम् । ३०६०
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः । पौरजानपदाश्चापि सम्प्रहृष्टतनूरुहाः ।
ऊचुः प्राञ्जलयः सर्व्वे सामात्यप्रमुखा जनाः । अद्य स्म निर्वृता राजन् पुरे जनपदेऽपि च । उपासितुं पुनः प्राप्ता देवा इव शतक्रतुं ।

इति श्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि पुष्करसान्त्वने अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

॥ बृहदश्व उवाच ॥ प्रशान्ते तु पुरे हृष्टे सम्प्रवृत्ते महोत्सवे । महत्या सेनया राजा दमयन्तीमुपानयत् ।
दमयन्तीमपि पिता सत्कृत्य परवीरहा । प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ।
आगतायान्तु वैदर्भ्यां सपुत्त्रायां नलो नृपः । वर्त्तयामास मुदितो देवराडिव नन्दने । ३०६५
ततः प्रकाशतां यातो जम्बुद्वीपे रराज सः । पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ।
ईजे च विविधैर्यज्ञैर्विधिवत्स्वाप्तदक्षिणैः । तथा त्वमपि राजेन्द्र ससुहृद्यक्ष्यसेऽचिरात् ।
दुःखमेतादृशं प्राप्तो नलः परपुरञ्जयः । देवनेन नरश्रेष्ठ सभार्य्यो भरतर्षभ ।
एकाकिनैव सुमहन्नलेन पृथिवीपते । दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ।
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव । रमसेऽस्मिन्महारण्ये धर्म्ममेवानुचिन्तयन् । ३०७०
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः । नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ।
कर्क्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनं ।
इतिहासमिमं चापि कलिनाशनमच्युत । शक्यमाश्वासितुं श्रुत्वा त्वद्विधेन विशाम्पते ।
अस्थिरत्वञ्च सञ्चिन्त्य पुरुषार्थस्य नित्यदा । तस्योदये व्यये चापि न चिन्तयितुमर्हसि ।
श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः । व्यसने त्वं महाराज न विषीदितुमर्हसि । ३०७५
विषमावस्थिते दैवे पौरुषेऽफलतां गते । विषादयन्ति नात्मानं सत्त्वोपाश्रयिणो नराः ।
ये चेदं कथयिष्यन्ति नलस्य चरितं महत् । श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान् भजिष्यति ।
अर्थास्तस्योपपत्स्यन्ते धन्यताञ्च गमिष्यति । इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमं ।
पुत्त्रान् पौत्त्रान् पशूंश्चापि लभते नृषु चाग्र्यतां । आरोग्यः प्रीतिमांश्चैव भविष्यति न संशयः ।
भयात्त्रस्यसि यच्च त्वमाह्वयिष्यति मां पुनः । अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव । ३०८०
वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम । उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ।

॥ वैशम्पायन उवाच ॥ ततो हृष्टमना राजा बृहदश्वमुवाच ह । भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ।
ततोऽक्षहृदयं प्रादात् पाण्डवाय महात्मने । दत्त्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ।
बृहदश्वे गते पार्थमश्रौषीत् सव्यसाचिनं । वर्त्तमानं तपस्युग्रे वायुभक्ष्यं मनीषिणं ।
ब्राह्मणेभ्यस्तपस्विभ्यः सम्पतद्भ्यस्ततस्ततः । तीर्थशैलवनेभ्यश्च समेतेभ्यो दृढव्रतः । ३०८५
इति पार्थो महाबाहुर्दुरापं तप आस्थितः । न तथा दृष्टपूर्व्वोऽन्यः कश्चिदुग्रतपा इति ।
यथा धनञ्जयः पार्थस्तपस्वी नियतव्रतः । मुनिरेकचरः श्रीमान् धर्म्मो विग्रहवानिव ।

तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने। अन्वशोचत कौन्तेयं प्रियं वै भ्रातरं जयं।
दह्यमानेन तु हृदा शरणार्थी महावने। ब्राह्मणान् विविधज्ञानान् पर्य्यपृच्छद्युधिष्ठिरः।
इतिश्रीमहाभारते आरण्यपर्व्वणि नलोपाख्यानपर्व्वणि बृहदश्वगमने एकोनाशीतितमोऽध्यायः समाप्तञ्चनलोपाख्यानपर्व्व॥ ७९ ॥

## ॥ अथ तीर्थयात्रापर्व्व ॥ ७ ॥

॥ जनमेजय उवाच ॥ भगवन् काम्यकात् पार्थे गते मे प्रपितामहे। पाण्डवाः किमकुर्व्वंस्ते तमृते सव्यसाचिनं। १०९०
सहि तेषां महेष्वासो गतिरासीदनीकजित्। आदित्यानां यथा विष्णुस्तथैव प्रतिभाति मे।
तेनेन्द्रसमवीर्य्येण संग्रामेष्वनिवर्त्तिना। विनाभूता वने वीराः कथमासन् पितामहाः।
॥ वैशम्पायन उवाच ॥ गते तु पाण्डवे तात काम्यकात् सत्यविक्रमे। बभूवुः पाण्डवेयास्ते दुःखशोकपरायणाः।
आच्छिन्नसूत्रा मणयश्छिन्नपक्षा इव द्विजाः। अप्रीतमनसः सर्व्वे बभूवुरथ पाण्डवाः।
वनन्तु तदभूत्तेन हीनमक्लिष्टकर्म्मणा। कुवेरेण यथा हीनं वनञ्चैत्ररथं तथा। १०९५
तमृते ते नरव्याघ्राः पाण्डवा जनमेजय। मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा।
ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्व्वाणैर्महारथाः। निघ्नन्तो भरतश्रेष्ठ मेध्यान् बहुविधान् मृगान्।
नित्यं हि पुरुषव्याघ्रा वन्याहारमरिन्दमाः। उपाकृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन्।
सर्व्वे संन्यवसंस्तत्र सोत्कण्ठाः पुरुषर्षभाः। अहृष्टमनसः सर्व्वे गते राजन् धनञ्जये।
विशेषतस्तु पाञ्चाली स्मरन्ती मध्यमं पतिं। उद्विग्नं पाण्डवश्रेष्ठमिदं वचनमब्रवीत्। ११००
योऽर्ज्जुनेनार्ज्जुनस्तुल्यो द्विबाहुर्ब्बहुबाहुना। तमृते पाण्डवश्रेष्ठ वनं न प्रतिभाति मे।
शून्यामिव प्रपश्यामि तत्र तत्र महीमिमां। बह्वाश्चर्य्यमिदञ्चापि वनं कुसुमितद्रुमं।
न तथा रमणीयं वै तमृते सव्यसाचिनं। नीलाम्बुदसमप्रख्यं मत्तमातङ्गगामिनं।
तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे। यस्य स्म धनुषो घोषः श्रूयतेऽशनिनिस्वनः।
न लेभे शर्म्म वै राजन् स्मरन्ती सव्यसाचिनं। तथा लालप्यमानान्तां निशम्य परवीरहा। ११०५
भीमसेनो महाराज द्रौपदीमिदमब्रवीत्॥ भीमसेन उवाच ॥ मनः प्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे।
तन्मे प्रीणाति हृदयममृतप्राशनोपमं। यस्य दीर्घौ समौ पीनौ भुजौ परिघसन्निभौ।
मौर्व्वीकृतकिणौ वृत्तौ खड्गायुधधनुर्द्धरौ। निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ।
तमृते पुरुषव्याघ्रं नष्टसूर्य्यमिवाम्बरं। यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा।
सुराणामपि यत्तानां पृतनासु न बिभ्यति। यस्य बाहू समाश्रित्य वयं सर्व्वे महात्मनः। १११०
मन्यामहे जितानाजौ परान् प्राप्ताञ्च मेदिनीं। तमृते फाल्गुनं वीरं न लभे काम्यके धृतिं।
पश्यामि च दिशः सर्व्वास्तिमिरेणावृता इव। ततोऽब्रवीत् साश्रुकण्ठो नकुलः पाण्डुनन्दनः।
॥ नकुल उवाच ॥ यस्मिन् दिव्यानि कर्म्माणि कथयन्ति रणाजिरे। देवा अपि युधां श्रेष्ठं तमृते का रतिर्व्वने।
उदीचीं यो दिशं गत्वा जित्वा युधि महाबलान्। गन्धर्व्वमुख्याञ्छतशो हयान् लेभे महाद्युतिः।

राज्ञे तित्तिरिकल्माषान् श्रीमतोऽनिलरंहसः । प्रादाद्भ्रात्रे प्रियप्रेप्सू राजसूये महाक्रतौ । ४०१५
तमृते भीमधन्वानं भीमादवरजं वने । कामये काम्यके वासं नेदानीममरोपमं ।
॥ सहदेव उवाच ॥ यो धनानि च कन्याश्च युधि जित्वा महारथः । आजहार पुरा राज्ञे राजसूये महाक्रतौ ।
यः समेतान् मृधे जित्वा यादवानमितद्युतिः । सुभद्रामाजहारैको वासुदेवस्य सम्मते ।
तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यां मम निवेशने । हृदयं मे महाराज न शाम्यति कदाचन ।
वनादस्माद्विवासन्तु रोचयेऽहमरिन्दम । नहि नस्तमृते वीरं रमणीयमिदं वनं । ४०२०
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अर्जुनानुशोचनेऽशीतितमोऽध्यायः ॥ ८० ॥
॥ वैशम्पायन उवाच ॥ धनञ्जयोत्सुकानान्तु भ्रातॄणां कृष्णया सह । श्रुत्वा वाक्यानि विमना धर्म्मराजोऽभ्यभाषत ।
अथापश्यन्महात्मानं देवर्षिन्तत्र नारदं । दीप्यमानं श्रिया ब्राह्म्या हुतार्चिषमिवानलं ।
तमागतमभिप्रेक्ष्य भ्रातृभिः सह धर्म्मराट् । प्रत्युत्थाय यथान्यायं पूजाञ्चक्रे महात्मने ।
स तैः परिवृतः श्रीमान् भ्रातृभिः कुरुसत्तमः । विबभावतिदीप्तौजा देवैरिव शतक्रतुः ।
यथा च वेदान् सावित्री याज्ञसेनी तथा पतीन् । न जहौ धर्म्मतः पार्थान् मेरुमर्कप्रभा यथा । ४०२५
प्रतिगृह्य तु तां पूजां नारदो भगवानृषिः । आश्वासयद्धर्म्मसुतं युक्तरूपमिवानघ ।
उवाच च महात्मानं धर्म्मराजं युधिष्ठिरं । ब्रूहि धर्म्मभृतां श्रेष्ठ केनार्थः किं ददानि ते ।
अथ धर्म्मसुतो राजा प्रणम्य भ्रातृभिः सह । उवाच प्राञ्जलिर्भूत्वा नारदं देवसम्मतं ।
त्वयि तुष्टे महाभाग सर्व्वलोकाभिपूजिते । कृतमित्येव मन्येऽहं प्रसादात्तव सुव्रत ।
यदि त्वहमनुग्राह्यो भ्रातृभिः सहितोऽनघ । सन्देहं मे मुनिश्रेष्ठ तत्त्वतश्छेत्तुमर्हसि । ४०३०
प्रदक्षिणां यः कुरुते पृथिवीं तीर्थतत्परः । किं फलं तस्य कार्त्स्न्येन तद्भवान् वक्तुमर्हति ।
॥ नारद उवाच ॥ शृणु राजन्नवहितो यथा भीष्मेण धीमता । पुलस्त्यस्य सकाशाद्वै सर्व्वमेतदुपश्रुतं ।
पुरा भागीरथीतीरे भीष्मो धर्म्मभृताम्वरः । पित्र्यं व्रतं समास्थाय न्यवसन्मुनिभिः सह ।
शुभे देशे तथा राजन् पुण्ये देवर्षिसेविते । गङ्गाद्वारे महाभाग देवगन्धर्व्वसेविते ।
स पितॄंस्तर्पयामास देवांश्च परमद्युतिः । ऋषींश्च तर्पयामास विधिदृष्टेन कर्म्मणा । ४०३५
कस्यचित्त्वथ कालस्य जपन्नेव महायशाः । ददर्शाद्भुतसङ्काशं पुलस्त्यमृषिसत्तमं ।
स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया । प्रहर्षमतुलं लेभे विस्मयं परमं ययौ ।
उपस्थितं महाभागं पूजयामास भारत । भीष्मो धर्म्मभृतां श्रेष्ठो विधिदृष्टेन कर्म्मणा ।
शिरसा चार्घ्यमादाय शुचिः प्रयतमानसः । नाम सङ्कीर्त्तयामास तस्मिन् ब्रह्मर्षिसत्तमे ।
भीष्मोऽहमिति भद्रन्ते दासोऽस्मि तव सुव्रत । तव सन्दर्शनादेव मुक्तोऽहं सर्व्वकिल्बिषैः । ४०४०
एवमुक्त्वा महाराज भीष्मो धर्म्मभृताम्वरः । वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ।
तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितं । भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाभवत् ।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि पार्थनारदसंवादे एकाशीतोऽध्यायः ॥ ८१ ॥

॥ पुलस्त्य उवाच ॥ अनेन तव धर्म्मज्ञ प्रश्रयेण दमेन च। सत्येन च महाभाग तुष्टोऽस्मि तव सुव्रत।
यस्येदृशस्ते धर्म्मोऽयं पितृभक्त्याश्रितोऽनघ। तेन पश्यसि मां पुत्त्र प्रीतिश्च परमा त्वयि।
अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते। यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दाताऽस्मि तेऽनघ। ४०४५
॥ भीष्म उवाच ॥ प्रीते त्वयि महाभाग सर्व्वलोकाभिपूजिते। कृतमेतावता मन्ये यदहं दृष्टवान् प्रभुं।
यदि त्वहमनुग्राह्यस्तव धर्म्मभृतांवर। सन्देहन्ते प्रवक्ष्यामि तन्मे त्वं छेत्तुमर्हसि।
अस्ति मे हृदये कश्चित्तीर्थेभ्यो धर्म्मसंशयः। तमहं श्रोतुमिच्छामि तद्भवान् वक्तुमर्हसि।
प्रदक्षिणां यः पृथिवीं करोत्यमरसन्निभ। किं फलं तस्य विप्रर्षे तन्मे ब्रूहि सुनिश्चितं।
॥ पुलस्त्य उवाच ॥ हन्त ते कथयिष्यामि यदृषीणां परायणं। तदेकाग्रमनाः पुत्त्र शृणु तीर्थेषु यत्फलं। ४०५०
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते।
प्रतिग्रहादपावृत्तः सन्तुष्टो येन केन चित्। अहङ्कारनिवृत्तश्च स तीर्थफलमश्नुते।
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः। विमुक्तः सर्व्वपापेभ्यः स तीर्थफलमश्नुते।
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः। आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते।
ऋषिभिः क्रतवः प्रोक्ता देवेष्विह यथाक्रमं। फलञ्चैव यथातथ्यं प्रेत्य चेह च सर्व्वशः। ४०५५
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते। बहूपकरणा यज्ञा नानासम्भारविस्तराः।
प्राप्यन्ते पार्थिवैरेतैः समृद्धैर्व्वा नरैः क्वचित्। नार्थन्यूनैर्नावगणैरेकात्मभिरसाधनैः।
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर। तुल्यो यज्ञफलैः पुण्यैस्तन्निबोध युधांवर।
ऋषीणां परमं गुह्यमिदं भरतसत्तम। तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च। अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते। ४०६०
अग्निष्टोमादिभिर्य्यज्ञैरिष्ट्वा विपुलदक्षिणैः। न तत्फलमवाप्नोति तीर्थाभिगमनेन यत्।
नृलोके देवदेवस्य तीर्थं त्रैलोक्यविश्रुतं। पुष्करं नाम विख्यातं महाभागः समाविशेत्।
दशकोटिसहस्राणि तीर्थानां वै महामते। सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन।
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः। गन्धर्व्वाप्सरसश्चैव नित्यं सन्निहिता विभो।
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा। दिव्ययोगा महाराज पुण्येन महताऽन्विताः। ४०६५
मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः। दूयन्ते सर्व्वपापानि नाकपृष्ठे च पूज्यते।
अस्मिंस्तीर्थे महाराज नित्यमेव पितामहः। उवास परमप्रीतो भगवान् कमलासनः।
पुष्करेषु महाभाग देवाः सर्षिगणाः पुरा। सिद्धिं परमिकां प्राप्ताः पुण्येन महताऽन्विताः।
तत्राभिषेकं यः कुर्य्यात् पितृदेवार्च्चने रतः। अश्वमेधाद्दशगुणं फलं प्राहुर्म्मनीषिणः।
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः। तेनासौ कर्म्मणा भीष्म प्रेत्य चेह च मोदते। ४०७०
शाकैर्म्मूलैः फलैर्व्वाऽपि येन वर्त्तयते स्वयं। तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः।
तेनैव प्राप्नुयात् प्राज्ञो हयमेधफलं नरः। ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्रा वा राजसत्तम।

न वै योनौ प्रजायन्ते स्नातास्तीर्थे महात्मनः। कार्त्तिकीन्तु विशेषेण योऽभिगच्छति पुष्करं।
प्राप्नुयात् स नरो लोकान् ब्रह्मणः सदनेऽक्षयान्। सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः।
उपस्पृष्टं भवेत्तेन सर्व्वतीर्थेषु भारत। जन्मप्रभृति यत् पापं स्त्रिया वा पुरुषस्य वा। ४०७५
पुष्करे स्नातमात्रस्य सर्व्वमेव प्रणश्यति। यथा सुराणां सर्व्वेषामादिस्तु मधुसूदनः।
तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते। उष्य द्वादशवर्षाणि पुष्करे नियतः शुचिः।
क्रतून् सर्व्वानवाप्नोति ब्रह्मलोकं स गच्छति। यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते।
कार्त्तिकीं वा वसेदेकां पुष्करे सममेव तत्। त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च।
पुष्कराण्यादिसिद्धानि न विद्मस्तत्र कारणं। दुष्करं पुष्करे गन्तुं दुष्करं पुष्करे तपः। ४०८०
दुष्करं पुष्करे दानं वस्तुञ्चैव सुदुष्करं। उष्य द्वादशरात्रन्तु नियतो नियतासनः।
प्रदक्षिणमुपावृत्य जम्बूमार्गं समाविशेत्। जम्बूमार्गं समाविश्य देवर्षिपितृसेवितं।
अश्वमेधमवाप्नोति सर्व्वकामसमन्वितः। तत्रोष्य रजनीः पञ्च पूतात्मा जायते नरः।
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमां। जम्बूमार्गादुपावृत्य गच्छेत्तण्डुलिकाश्रमं।
न दुर्गतिमवाप्नोति ब्रह्मलोकञ्च गच्छति। अगस्त्यं सर आसाद्य पितृदेवार्च्चने रतः। ४०८५
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत्। शाकवृत्तिः फलैर्व्वाऽपि कौमारं विन्दते पदं।
कण्वाश्रमं ततो गच्छेत् श्रीजुष्टं लोकपूजितं। धर्म्मारण्यं हि तत्पुण्यमाद्यञ्च भरतर्षभ।
यत्र प्रविष्टमात्रो वै सर्व्वपापैः प्रमुच्यते। अर्च्चयित्वा पितॄन् देवान् नियतो नियताशनः।
सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते। प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत्।
हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै। महाकालं ततो गच्छेन्नियतो नियताशनः। ४०९०
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्। ततो गच्छेत धर्म्मज्ञः स्थाणोस्तीर्थमुमापतेः।
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतं। तत्राभिगम्य चेशानं गोसहस्रफलं लभेत्।
महादेवप्रसादाच्च गाणपत्यञ्च विन्दति। समृद्धमसपत्नञ्च श्रिया युक्तं नरोत्तमः।
नर्म्मदां स समासाद्य नदीं त्रैलोक्यविश्रुतां। तर्पयित्वा पितॄन् देवानग्निष्टोमफलं लभेत्।
दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः। अग्निष्टोममवाप्नोति विमानञ्चाधिरोहति। ४०९५
चर्म्मण्वतीं समासाद्य नियतो नियताशनः। रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत्।
ततो गच्छेत धर्म्मज्ञ हिमवत्सुतमर्व्वुदं। पृथिव्यां यत्र वै छिद्रं पूर्व्वमासीद्युधिष्ठिर।
तत्राश्रमो वशिष्ठस्य त्रिषु लोकेषु विश्रुतः। तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्।
पिङ्गतीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः। कपिलानां नरश्रेष्ठ शतस्य फलमश्नुते।
ततो गच्छेत राजेन्द्र प्रभासं तीर्थमुत्तमं। तत्र सन्निहितो नित्यं स्वयमेव हुताशनः। ४१००
देवतानां मुखं वीर ज्वलनोऽनिलसारथिः। तस्मिंस्तीर्थे नरः स्नात्वा शुचिः प्रयतमानसः।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः। ततो गत्वा सरस्वत्याः सागरस्य च सङ्गमे।

गोसहस्रफलं तस्य स्वर्गलोकञ्च विन्दति। प्रभया दीप्यते नित्यमग्निवन्नरतर्षभ।
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः। त्रिरात्रमुषितः स्नातस्तर्पयेत् पितृदेवताः।
प्रभासते यथा सोमः सोऽश्वमेधञ्च विन्दति। वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ५००५
विष्णोर्दुर्व्वाससा यत्र वरो दत्तो युधिष्ठिर। वरदाने नरः स्नात्वा गोसहस्रफलं लभेत्।
ततो द्वारवतीं गच्छेन्नियतो नियताशनः। पिण्डारके नरः स्नात्वा लभेद्बहुसुवर्णकं।
तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः। अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिन्दम।
त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन। महादेवस्य सान्निध्यं तत्र वै पुरुषर्षभ।
सागरस्य च सिन्धोश्च सङ्गमं प्राप्य भारत। तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः। ५०१०
तर्पयित्वा पितॄन्देवानृषींश्च भरतर्षभ। प्राप्नोति वारुणं लोकं दीप्यमानं स्वतेजसा।
शङ्कुकर्णेश्वरं देवमर्च्चयित्वा युधिष्ठिर। अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः।
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ। तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतं।
दमीति नाम्ना विख्यातं सर्व्वपापप्रणाशनं। तत्र ब्रह्मादयो देवा उपासन्ते महेश्वरं।
तत्र स्नात्वाऽर्च्चयित्वा च रुद्रं देवगणैर्वृतं। जन्मप्रभृति यत् पापं तत्स्नातस्य प्रणश्यति। ५०१५
दमी चात्र नरश्रेष्ठ सर्व्वदेवैरभिष्टुतः। तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात्।
गत्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना। पुरा शौचं कृतं राजन् हत्वा दैतेयदानवान्।
ततो गच्छेत धर्म्मज्ञ वसोर्धारामभिष्टुतां। गमनादेव तस्यां हि हयमेधफलं लभेत्।
स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा समाहितः। तर्प्य देवान् पितॄंश्चैव विष्णुलोके महीयते।
तीर्थं चात्र सरः पुण्यं वसूनां भरतर्षभ। तत्र स्नात्वा च पीत्वा च वसूनां सम्मतो भवेत्। ५०२०
सिन्धूत्तममिति ख्यातं सर्व्वपापप्रणाशनं। तत्र स्नात्वा नरश्रेष्ठ लभेद्बहुसुवर्णकं।
भद्रतुङ्गं समासाद्य शुचिः शीलसमन्वितः। ब्रह्मलोकमवाप्नोति गतिञ्च परमां व्रजेत्।
कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितं। तत्र स्नात्वा नरः क्षिप्रं स्वर्गलोकमवाप्नुयात्।
रेणुकायाश्च तत्रैव तीर्थं सिद्धनिषेवितं। तत्र स्नात्वा भवेद्विप्रो निर्म्मलश्चन्द्रमा यथा।
अथ पञ्चनदं गत्वा नियतो नियताशनः। पञ्चयज्ञानवाप्नोति क्रमशो येऽनुकीर्त्तिताः। ५०२५
ततो गच्छेत राजेन्द्र भीमायाः स्थानमुत्तमं। तत्र स्नात्वा तु योन्यां वै नरो भरतसत्तम।
देव्याः पुत्त्रो भवेद्राजंस्तप्तकुण्डलविग्रहः। गवां शतसहस्रस्य फलं प्राप्नोति मानवः।
श्रीकुण्डन्तु समासाद्य त्रिषु लोकेषु विश्रुतं। पितामहं नमस्कृत्य गोसहस्रफलं लभेत्।
ततो गच्छेत धर्म्मज्ञ विमलं तीर्थमुत्तमं। अद्यापि यत्र दृश्यन्ते मत्स्याः सौवर्णराजताः।
तत्र स्नात्वा नरः क्षिप्रं वासवं लोकमाप्नुयात्। सर्व्वपापविशुद्धात्मा गच्छेत परमां गतिं। ५०३०
वितस्ताञ्च समासाद्य सन्तर्प्य पितृदेवताः। नरः फलमवाप्नोति वाजपेयस्य भारत।
काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च। वितस्ताख्यमिति ख्यातं सर्व्वपापप्रमोचनं।

तत्र स्नात्वा नरो नूनं वाजपेयमवाप्नुयात्। सर्व्वपापविशुद्धात्मा गच्छेच्च परमां गतिं।
ततो गच्छेत वडवां त्रिषु लोकेषु विश्रुतां। पश्चिमायान्तु सन्ध्यायामुपस्पृश्य यथाविधि।
चरुं सप्तार्च्चिषे राजन् यथाशक्ति निवेदयेत्। पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः। ५०३५
ऋषयः पितरो देवा गन्धर्व्वाप्सरसां गणाः। गुह्यकाः किन्नरा यक्षाः सिद्धा विद्याधरा नराः।
राक्षसा दितिजा रुद्रा ब्रह्मा च मनुजाधिप। नियतः परमां दीक्षामास्थायाब्दसहस्रिकीं।
विष्णोः प्रसादनं कुर्व्वंश्चरुञ्च श्रपयंस्तथा। सप्तभिः सप्तभिश्चैव ऋग्भिस्तुष्टाव केशवं।
ददावष्टगुणैश्वर्य्यं तेषां तुष्टस्तु केशवः। यथाऽभिलषितानन्यान् कामान् दत्त्वा महीपते।
तत्रैवान्तर्द्दधे देवो विद्युदभ्रेषु वै यथा। नाम्ना सप्तचरुं तेन ख्यातं लोकेषु भारत। ५०४०
गवां शतसहस्रेण राजसूयशतेन च। अश्वमेधसहस्रेण श्रेयान् सप्तार्च्चिषे चरुः।
ततो निवृत्तो राजेन्द्र रुद्रं पदमथाविशेत्। अर्च्चयित्वा महादेवमश्वमेधफलं लभेत्।
मणिमन्तं समासाद्य ब्रह्मचारी समाहितः। एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत्।
अथ गच्छेत राजेन्द्र देविकां लोकविश्रुतां। प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ।
त्रिशूलपाणेः स्थानञ्च त्रिषु लोकेषु विश्रुतं। देविकायां नरः स्नात्वा समभ्यर्च्च्य महेश्वरं। ५०४५
यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ। सर्व्वकामसमृद्धस्य यज्ञस्य लभते फलं।
कामाख्यं तत्र रुद्रस्य तीर्थं देवनिषेवितं। तत्र स्नात्वा नरः क्षिप्रं सिद्धिं प्राप्नोति मानवः।
यजनं याजनञ्चैव तथैव ब्रह्मवालुकं। पुष्पाम्भस्य उपस्पृश्य न शोचेन्मरणं गतः।
अर्द्धयोजनविस्तारा पञ्चयोजनमायता। एतावती देविका तु पुण्या देवर्षिसेविता।
ततो गच्छेत धर्म्मज्ञ दीर्घसत्रं यथाक्रमं। तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः। ५०५०
दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः। गमनादेव राजेन्द्र दीर्घसत्रमरिन्दम।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत। ततो विनशनं गच्छेन्नियतो नियताशनः।
गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती। चमसे च शिवोद्भेदे नागोद्भेदे च दृश्यते।
स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत्। शिवोद्भेदे नरः स्नात्वा गोसहस्रफलं लभेत्।
नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात्। शशयानञ्च राजेन्द्र तीर्थमासाद्य दुर्लभं। ५०५५
शशरूपप्रतिच्छन्नाः पुष्करा यत्र भारत। सरस्वत्यां महाराज अनुसम्वत्सरञ्च ते।
दृश्यन्ते भरतश्रेष्ठ वृत्तां वै कार्त्तिकीं सदा। तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत् सदा।
गोसहस्रफलञ्चैव प्राप्नुयाद्भरतर्षभ। कुमारकोटीमासाद्य नियतः कुरुनन्दन।
तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः। गवामयुतमाप्नोति कुलञ्चैव समुद्धरेत्।
ततो गच्छेत धर्म्मज्ञ रुद्रकोटिं समाहितः। पुरा यत्र महाराज मुनिकोटिः समागता। ५०६०
हर्षेण महताविष्टा रुद्रदर्शनकाङ्क्षया। अहं पूर्व्वमहं पूर्व्वं द्रक्ष्यामि वृषभध्वजं।
एवं संप्रस्थिता राजन्नृषयः किल भारत। ततो योगीश्वरेणापि योगमास्थाय भूपते।

तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनां। सृष्टा कोटीति रुद्राणामृषीणामग्रतः स्थिता।
मया पूर्व्वतरं दृष्ट इति ते मेनिरे पृथक्। तेषां तुष्टो महादेवो मुनीनां भावितात्मनां।
भक्त्या परमया राजन् वरं तेषां प्रदिष्टवान्। अद्यप्रभृति युष्माकं धर्म्मवृद्धिर्भविष्यति। ५०६५
तत्र स्नात्वा नरव्याघ्र रुद्रकोव्यां नरः शुचि। अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत्।
ततो गच्छेत राजेन्द्र सङ्गमं लोकविश्रुतं। सरस्वत्या महापुण्यं केशवं समुपासते।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः। अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्द्दशीं।
तत्र स्नात्वा नरव्याघ्र विन्देद्बहुसुवर्णकं। सर्व्वपापविशुद्धात्मा ब्रह्मलोकञ्च गच्छति।
ऋषीणां यत्र सत्राणि समाप्तानि नराधिप। तत्रावसानमासाद्य गोसहस्रफलं लभेत्। ५०७०
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि नानातीर्थकथने द्व्यशीतो ऽध्यायः॥ ८२॥
॥ पुलस्त्य उवाच ॥ ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतं। पापेभ्यो यत्र मुच्यन्ते दर्शनात् सर्व्वजन्तवः।
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहं। य एवं सततं ब्रूयात् सर्व्वपापैः प्रमुच्यते।
पांशवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः। अपि दुष्कृतकर्म्माणं नयन्ति परमां गतिं।
दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च। ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे।
तत्र मासं वसेद्वीर सरस्वत्यां युधिष्ठिर। यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः। ५०७५
गन्धर्व्वाप्सरसो यक्षाः पन्नगाश्च महीपते। ब्रह्मक्षेत्रं महापुण्यमभिगच्छति भारत।
मनसाऽप्यभिकामस्य कुरुक्षेत्रं युधिष्ठिर। पापानि विप्रणश्यन्ति ब्रह्मलोकञ्च गच्छति।
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह। फलं प्राप्नोति च तदा राजसूयाश्वमेधयोः।
ततो मङ्कणकं नाम द्वारपालं महाबलं। यक्षं समभिवाद्यैव गोसहस्रफलं लभेत्।
ततो गच्छेत धर्म्मज्ञ विष्णोः स्थानमनुत्तमं। सततं नाम राजेन्द्र यत्र सन्निहितो हरिः। ५०८०
तत्र स्नात्वा च नत्वा च त्रिलोकप्रभवं हरिं। अश्वमेधमवाप्नोति विष्णुलोकञ्च गच्छति।
ततः पारिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतं। अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति भारत।
पृथिवीतीर्थमासाद्य गोसहस्रफलं लभेत्। ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप।
दशाश्वमेधे स्नात्वा च तदेव फलमाप्नुयात्। सर्पदेवीं समासाद्य नागानां तीर्थमुत्तमं।
अग्निष्टोममवाप्नोति नागलोकञ्च विन्दति। ततो गच्छेत धर्म्मज्ञ द्वारपालं तरन्तुकं। ५०८५
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्। ततः पञ्चनदं गत्वा नियतो नियताशनः।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत्। अश्विनोस्तीर्थमासाद्य रूपवानभिजायते।
ततो गच्छेत धर्म्मज्ञ वाराहं तीर्थमुत्तमं। विष्णुर्व्वाराहरूपेण पूर्व्वं यत्र स्थितोऽभवत्।
तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत्। ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत्।
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः। एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत्। ५०९०
कृतशौचं समासाद्य तीर्थसेवी नराधिप। पुण्डरीकमवाप्नोति कृतशौचो भवेच्च सः।

ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः । उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ।
तत्रैव च महाराज यक्षिणीं लोकविश्रुतां । स्नात्वाऽभिगम्य राजेन्द्र सर्वान् कामानवाप्नुयात् ।
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ । प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ।
सम्मितं पुष्कराणाञ्च स्नात्वाऽर्च्य पितृदेवताः । जामदग्न्येन रामेण कृतमेतन्महात्मना । ६९९५
कृतकृत्यो भवेद्राजन्नश्वमेधञ्च विन्दति । ततो रामह्रदान् गच्छेत्तीर्थसेवी समाहितः ।
तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा । क्षत्रमुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः ।
पूरयित्वा नरव्याघ्र रुधिरेणेति विश्रुतं । पितरस्तर्पितास्तेन तथैव प्रपितामहाः ।
ततस्ते पितरः प्रीता राममूचुर्नराधिप ॥ पितर ऊचुः ॥ राम राम महाभाग प्रीताः स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो । वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते । ७०००
एवमुक्तः स राजेन्द्र रामः प्रहरतां वरः । अब्रवीत् प्राञ्जलिर्वाक्यं पितॄन् स गगने स्थितान् ।
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि । पितृप्रसादमिच्छेयं तपआप्यायनं पुनः ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया । ततश्च पापान्मुच्येयं युष्माकं तेजसाऽप्यहं ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः । एवमुक्ताः शुभं वाक्यं रामस्य पितरस्तदा ।
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः । तपस्ते वर्द्धतां भूयः पितृभक्त्या विशेषतः । ७००५
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया । ततश्च पापान्मुक्तस्त्वं पतितास्ते स्वकर्मभिः ।
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः । ह्रदेषु तेषु यः स्नात्वा पितॄन् सन्तर्पयिष्यति ।
पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभं । ईप्सितञ्च मनःकामं स्वर्गलोकञ्च शाश्वतं ।
एवं दत्वा वरान् राजन् रामस्य पितरस्तदा । आमन्त्र्य भार्गवं प्रीत्या तत्रैवान्तर्हितास्ततः ।
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः । स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुभव्रतः । ७०१०
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकं । वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ।
स्ववंशमुद्धरेद्राजन् स्नात्वा वै वंशमूलके । कायशोधनमासाद्य तीर्थं भरतसत्तम ।
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः । शुद्धदेहश्च संयाति शुभांल्लोकाननुत्तमान् ।
ततो गच्छेत धर्मज्ञ तीर्थं त्रैलोक्यविश्रुतं । लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ।
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यपूजितं । स्नात्वा तीर्थवरे राजन् लोकानुद्धरते स्वकान् । ७०१५
श्रीतीर्थञ्च समासाद्य स्नात्वा नियतमानसः । अर्च्चयित्वा पितॄन् देवान् विन्दते श्रियमुत्तमां ।
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः । तत्र स्नात्वाऽर्चयित्वा च पितॄन् स्वान् दैवतान्यपि ।
कपिलानां सहस्रस्य फलं विन्दति मानवः । सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ।
अर्च्चयित्वा पितॄन् देवानुपवासपरायणः । अग्निष्टोममवाप्नोति सूर्यलोकञ्च गच्छति ।
गवां भवनमासाद्य तीर्थसेवी यथाक्रमं । तत्राभिषेकं कुर्व्वाणो गोसहस्रफलं लभेत् । ७०२०
शङ्खिनीं तत्र आसाद्य तीर्थसेवी कुरूद्वह । देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमं ।

ततो गच्छेत राजेन्द्र द्वारपालं तरण्डकं । तच्च तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ।
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् । ततो गच्छेत राजेन्द्र ब्रह्मावर्त्तं नरोत्तमः ।
ब्रह्मावर्त्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् । ततो गच्छेत राजेन्द्र सुतीर्थकमनुत्तमं ।
तत्र सन्निहिता नित्यं पितरो दैवतैः सह । तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः । ५०२५
अश्वमेधमवाप्नोति पितृलोकञ्च गच्छति । ततोऽम्बुमत्यां धर्म्मज्ञ सुतीर्थकमनुत्तमं ।
काशीश्वरस्य तीर्थे च स्नात्वा भरतसत्तम । सर्व्वव्याधिविनिर्म्मुक्तो ब्रह्मलोके महीयते ।
मातृतीर्थञ्च तत्रैव यत्र स्नातस्य भारत । प्रजा विवर्द्धते राजन्ननन्तां श्रियमश्नुते ।
ततः शीतवनं गच्छेन्नियतो नियताशनः । तीर्थं तत्र महाराज महदन्यत्र दुर्लभं ।
पुनाति गमनादेव दृष्टमेकं नराधिप । केशानभ्युक्ष्य वै तस्मिन् पूतो भवति भारत । ५०३०
तीर्थं तत्र महाराज श्वाविल्लोमापहं स्मृतं । यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ।
प्रीतिं गच्छन्ति परमां स्नात्वा भरतसत्तम । श्वाविल्लोमापनयने तीर्थे भरतसत्तम ।
प्राणायामैर्निर्हरन्ति स्वलोमानि द्विजोत्तमाः । पूतात्मानश्च राजेन्द्र प्रयान्ति परमाङ्गतिं ।
दशाश्वमेधिकञ्चैव तस्मिंस्तीर्थे महीपते । तत्र स्नात्वा नरव्याघ्र गच्छेत परमाङ्गतिं ।
ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतं । यत्र कृष्णमृगा राजन् व्याधेन शरपीडिताः । ५०३५
विगाह्य तस्मिन् सरसि मानुषत्वमुपागताः । तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी समाहितः ।
सर्व्वपापविशुद्धात्मा स्वर्गलोके महीयते । मानुषस्य तु पूर्व्वेण क्रोशमात्रे महीपते ।
आपगा नाम विख्याता नदी सिद्धनिषेविता । श्यामाकं भोजनं तत्र यः प्रयच्छति मानवः ।
देवान् पितॄन् समुद्दिश्य तस्य धर्म्मफलं महत् । एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ।
तत्र स्नात्वाऽर्च्चयित्वा च पितॄन् वै दैवतानि च । उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् । ५०४०
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमं । ब्रह्मोडुम्बरमित्येवं प्रकाशं भुवि भारत ।
तत्र सप्तर्षिकुण्डेषु स्नातस्य नरपुङ्गव । केदारे चैव राजेन्द्र कपिलस्य महात्मनः ।
ब्रह्माणमधिगत्वा च शुचिः प्रयतमानसः । सर्व्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ।
कपिलस्य च केदारं समासाद्य सुदुर्लभं । अन्तर्द्धानमवाप्नोति तपसा दग्धकिल्बिषः ।
ततो गच्छेत राजेन्द्र सरकं लोकविश्रुतं । कृष्णपक्षे चतुर्दश्यामधिगम्य वृषध्वजं । ५०४५
लभेत सर्व्वकामान् हि स्वर्गलोकञ्च गच्छति । तिस्रः कोट्यस्तु तीर्थानां सरके कुरुनन्दन ।
रुद्रकोट्यां तथा कूपे ह्रदेषु च महीपते । इलास्पदञ्च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वाऽर्च्चयित्वा च दैवतानि पितॄनथ । न दुर्गतिमवाप्नोति वाजपेयञ्च विन्दति ।
किन्दाने च नरः स्नात्वा किंजप्ये च महीपते । अप्रमेयमवाप्नोति दानं जप्यञ्च भारत ।
कलश्यां वार्य्युपस्पृश्य श्रद्दधानो जितेन्द्रियः । अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः । ५०५०
सरकस्य तु पूर्व्वेण नारदस्य महात्मनः । तीर्थं कुरुकुलश्रेष्ठ अम्बाजन्मेति विश्रुतं ।

तत्र तीर्थे नरः स्नात्वा प्राणानुत्सृज्य भारत । नारदेनाभ्यनुज्ञातो लोकान् प्राप्नोत्यनुत्तमान् ।
शुक्लपक्षे दशम्याञ्च पुण्डरीकं समाविशेत् । तत्र स्नात्वा नरो राजन् पुण्डरीकफलं लभेत् ।
ततस्त्रिपिष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतं । तत्र वैतरणी पुण्या नदी पापप्रणाशिनी ।
तत्र स्नात्वाऽर्च्चयित्वा च शूलपाणिं वृषध्वजं । सर्व्वपापविशुद्धात्मा गच्छेत परमां गतिं । ६०५५
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमं । तत्र देवाः सदा राजन् फलकीवनमाश्रिताः ।
तपश्चरन्ति विपुलं बहुवर्षसहस्रकं । दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत । तीर्थे च सर्व्वदेवानां स्नात्वा भरतसत्तम ।
गोसहस्रस्य राजेन्द्र फलं विन्दति मानवः । पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत । राजसूयमवाप्नोति ऋषिलोकञ्च विन्दति । ६०६०
ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमं । तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ।
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतं । सर्व्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ।
ततो व्यासवनं गच्छेन्नियतो नियताशनः । मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ।
गत्वा मधुवटीञ्चैव देव्यास्तीर्थे नरः शुचिः । तत्र स्नात्वाऽर्च्चयित्वा च पितॄन् देवांश्च पूरुषः ।
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् । कौशिक्याः सङ्गमे यस्तु दृषद्वत्याश्च भारत । ६०६५
स्नाति वै नियताहारः सर्व्वपापैः प्रमुच्यते । ततो व्यासस्थली नाम यत्र व्यासेन धीमता ।
पुत्रशोकाभितप्तेन देहत्यागे कृता मतिः । ततो देवैस्तु राजेन्द्र पुनरुत्थापितस्तदा ।
अभिगत्वा स्थलीं तस्य गोसहस्रफलं लभेत् । किन्दत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ।
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह । वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।
अहश्च सुदिनञ्चैव द्वे तीर्थे लोकविश्रुते । तयोः स्नात्वा नरव्याघ्र सूर्य्यलोकमवाप्नुयात् । ६०७०
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतं । तत्राभिषेकं कुर्व्वीत गङ्गायां नृपसत्तम ।
अर्च्चयित्वा महादेवमश्वमेधफलं लभेत् । देव्यास्तीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ।
ततो वामनकं गच्छेत्त्रिषु लोकेषु विश्रुतं । तत्र विष्णुपदे स्नात्वा अर्च्चयित्वा च वामनं ।
सर्व्वपापविशुद्धात्मा विष्णुलोकं स गच्छति । कुलम्पुने नरः स्नात्वा पुनाति स्वकुलं ततः ।
पवनस्य ह्रदे स्नात्वा मरुतां तीर्थमुत्तमं । तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते । ६०७५
अमराणां ह्रदे स्नात्वा समभ्यर्च्यामराधिपं । अमराणां प्रभावेण स्वर्गलोके महीयते ।
शालिहोत्रस्य तीर्थे च शालिसूर्य्ये यथाविधि । स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ।
श्रीकुञ्जञ्च सरस्वत्यां तीर्थं भरतसत्तम । तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ।
ततो नैमिषकुञ्जञ्च समासाद्य कुरूद्वह । ऋषयः किल राजेन्द्र नैमिषेयास्तपस्विनः ।
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा । ततः कुञ्जः सरस्वत्याः कृतो भरतसत्तम । ६०८०
ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान् । तस्मिन् कुञ्जे नरः स्नात्वा अग्निष्टोमफलं लभेत् ।

ततो गच्छेत धर्म्मज्ञ कन्यातीर्थमनुत्तमं। कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्।
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमं। तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः।
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमाङ्गतिं। ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनुत्तमं।
तत्र स्नात्वा नरो राजन् सोमलोकमवाप्नुयात्। सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप। ६९८५
यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः। पुरा मङ्कणको राजन् कुशाग्रेणेति नः श्रुतं।
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत्। स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान्।
ततस्तस्मिन् प्रनृत्ते तु स्थावरं जङ्गमञ्च यत्। प्रनृत्तमुभयं वीर तेजसा तस्य मोहितं।
ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः। विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप।
नायं नृत्येद्यथा देव तथा त्वं कर्त्तुमर्हसि। तं प्रनृत्तं समासाद्य हर्षाविष्टेन चेतसा। ६९९०
सुराणां हितकामार्थमृषिं देवोऽभ्यभाषत। भो भो महर्षे धर्म्मज्ञ किमर्थं नृत्यते भवान्।
हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव॥ ऋषिरुवाच॥ तपस्विनो धर्म्मपथे स्थितस्य द्विजसत्तम।
किन्न पश्यसि मे ब्रह्मन् कराच्छाकरसं स्रुतं। यं दृष्ट्वा सम्प्रनृत्तोऽहं हर्षेण महताऽन्वितः।
तं प्रहस्याब्रवीद्देव ऋषिं रागेण मोहितं। अहन्तु विस्मयं विप्र न गच्छामीति पश्य मां।
एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता। अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽनघ। ६९९५
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभं। तं दृष्ट्वा व्रीडितो राजन् स मुनिः पादयोर्गतः।
नान्यद्देवात् परं मेने रुद्रात् परतरं महत्। सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक्।
त्वया सर्व्वमिदं सृष्टं त्रैलोक्यं सचराचरं। त्वमेव सर्व्वान् ग्रससि पुनरेव युगक्षये।
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया। त्वयि सर्व्वे प्रदृश्यन्ते सुरा ब्रह्मादयोऽनघ।
सर्व्वस्त्वमसि लोकानां कर्त्ता कारयिता च ह। त्वत्प्रसादात् सुराः सर्व्वे मोदन्तीहाकुतोभयाः। ७०००
एवं स्तुत्वा महादेवमृषिर्व्वचनमब्रवीत्। त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै।
ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत्। तपस्ते वर्द्धतां विप्र मत्प्रसादात् सहस्रधा।
आश्रमे चेह वत्स्यामि त्वया सह महामुने। सप्तसारस्वते स्नात्वा अर्च्चयिष्यन्ति ये तु मां।
न तेषां दुर्ल्लभं किञ्चिदिह लोके परत्र च। सारस्वतञ्च ते लोकं गमिष्यन्ति न संशयः।
एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत। ततस्त्वौशनसं गच्छेत्त्रिषु लोकेषु विश्रुतं। ७००५
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः। कार्त्तिकेयश्च भगवान् त्रिसन्ध्यं किल भारत।
सान्निध्यमकरोन्नित्यं भार्गवप्रियकाम्यया। कपालमोचनं तीर्थं सर्व्वपापप्रमोचनं।
तत्र स्नात्वा नरव्याघ्र सर्व्वपापैः प्रमुच्यते। अग्नितीर्थं ततो गच्छेत्तत्र स्नात्वा नरर्षभ।
अग्निलोकमवाप्नोति कुलञ्चैव समुद्धरेत्। विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम।
तत्र स्नात्वा नरश्रेष्ठ ब्राह्मण्यमधिगच्छति। ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः। ७०१०
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते। पुनात्यासप्तमञ्चैव कुलं नास्त्यत्र संशयः।

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतं । पृथूदकमिति ख्यातं कार्त्तिकेयस्य वै नृप ।
तत्राभिषेकं कुर्व्वीत पितृदेवार्चने रतः । अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा ।
यत्किञ्चिदशुभं कर्म्म कृतं मानुषबुद्धिना । तत्सर्व्वं नश्यते तत्र स्नातमात्रस्य भारत ।
अश्वमेधफलञ्चास्य स्वर्गलोकञ्च गच्छति । पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वती । ७०१९
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकं । उत्तमं सर्व्वतीर्थानां यस्त्यजेदात्मनस्तनुं ।
पृथूदके जप्यपरो न तस्य मरणं भवेत् । गीतं सनत्कुमारेण व्यासेन च महात्मना ।
एवं स नियतं राजन्नभिगच्छेत्पृथूदकं । पृथूदकात्तीर्थतमं नान्यत्तीर्थं कुरूद्वह ।
तन्मेध्यं तत्पवित्रञ्च पावनञ्च न संशयः । तत्र स्नात्वा दिवं यान्ति येऽपि पापकृतो नराः ।
पृथूदके नरश्रेष्ठ एवमाहुर्मनीषिणः । मधुस्रवञ्च तत्रैव तीर्थं भरतसत्तम । ७०२०
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् । ततो गच्छेत राजेन्द्र तीर्थं मेध्यं यथाक्रमं ।
सरस्वत्या दृशद्वत्याः सङ्गमं लोकविश्रुतं । त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः । आसप्तमं कुलञ्चैव पुनाति भरतर्षभ ।
अर्द्धकीलञ्च तत्रैव तीर्थं कुरुकुलोद्वह । विप्राणामनुकम्पार्थं दर्भिणा निर्म्मितं पुरा ।
व्रतोपनयनाभ्याञ्चाप्युपवासेन चाच्युत । क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः । ७०२५
क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ । चीर्णव्रतो भवेद्विद्वान् दृष्टमेतत् पुरातनैः ।
समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा । तेषु स्नातो नरश्रेष्ठ न दुर्गतिमवाप्नुयात् ।
फलानि गोसहस्राणां चतुर्णां विन्दते तु सः । ततो गच्छेत धर्म्मज्ञ तीर्थं शतसहस्रकं ।
साहस्रकञ्च तत्रैव द्वे तीर्थे लोकविश्रुते । उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत् ।
दानञ्चाप्युपवासो वा सहस्रगुणितो भवेत् । ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमं । ७०३०
तीर्थाभिषेकं कुर्व्वीत पितृदेवार्चने रतः । सर्व्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ।
विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः । प्रतिग्रहकृतैर्दोषैः सर्व्वैः स परिमुच्यते ।
ततः पञ्चवटीं गत्वा ब्रह्मचारी जितेन्द्रियः । पुण्येन महता युक्तः सतां लोके महीयते ।
यत्र योगेश्वरः स्थाणुः स्वयमेव वृषध्वजः । तमर्चयित्वा देवेशं गमनादेव सिध्यति ।
तैजसं वारुणं तीर्थं दीप्यमानं स्वतेजसा । यत्र ब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः । ७०३५
सैनापत्येन देवानामभिषिक्तो गुहस्तदा । तैजसस्य तु पूर्व्वेण कुरुतीर्थं कुरूद्वह ।
कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः । सर्व्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ।
स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः । स्वर्गलोकमवाप्नोति ब्रह्मलोकञ्च गच्छति ।
ततो गच्छेत नरकं तीर्थसेवी नराधिप । तत्र स्नात्वा नरो राजन्नदुर्गतिमवाप्नुयात् ।
तत्र ब्रह्मा स्वयं नित्यं देवैः सह महीयते । अन्वास्ते पुरुषव्याघ्र नारायणपुरोगमैः । ७०४०
सान्निध्यं तत्र राजेन्द्र रुद्रपत्न्याः कुरूद्वह । अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् ।

तत्रैव च महाराज विश्वेश्वरमुमापतिं। अभिगम्य महादेवं मुच्यते सर्व्वकिल्बिषैः।
नारायणञ्चाभिगम्य पद्मनाभमरिन्दम। रोचमानो महाराज विष्णुलोकञ्च गच्छति।
तीर्थेषु सर्व्वदेवानां स्नातः स पुरुषर्षभ। सर्व्वदुःखैः परित्यक्तो द्योतते शशिवन्नरः।
ततः स्वस्तिपुरं गच्छेत्तीर्थसेवी नराधिप। प्रदक्षिणमुपावृत्य गोसहस्रफलं लभेत्। १०४५
पावनं तीर्थमासाद्य तर्पयेत् पितृदेवताः। अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति भारत।
गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ। तिस्रः कोट्यस्तु तीर्थानां तस्मिन् कूपे महीपते।
तत्र स्नात्वा नरो राजन् स्वर्गलोकं प्रपद्यते। आपगायां नरः स्नात्वा अर्च्चयित्वा महेश्वरं।
गाणपत्यमवाप्नोति कुलञ्चैव समुद्धरेत्। ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतं।
तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात्। बदरीपाचनं गच्छेद्वशिष्ठस्याश्रमं गतः। १०५०
बदरीं भक्षयेत्तत्र त्रिरात्रोपोषितो नरः। सम्यग्द्वादशवर्षाणि बदरीं भक्षयेत्तु यः।
त्रिरात्रोपोषितस्तेन भवेत्तुल्यो नराधिप। इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप।
अहोरात्रोपवासेन शक्रलोके महीयते। एकरात्रं समासाद्य एकरात्रोषितो नरः। नियतः सत्यवादी च ब्रह्मलोके महीयते।
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतं। आदित्यस्याश्रमो यत्र तेजोराशेर्महात्मनः।
तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुं। आदित्यलोकं व्रजति कुलञ्चैव समुद्धरेत्। १०५५
सोमतीर्थे नरः स्नात्वा तीर्थसेवी नराधिप। सोमलोकमवाप्नोति नरो नास्त्यत्र संशयः।
ततो गच्छेत धर्म्मज्ञ दधीचस्य महात्मनः। तीर्थं पुण्यतमं राजन् पावनं लोकविश्रुतं।
यत्र सारस्वतो यातः सोऽङ्गिरास्तपसो निधिः। तस्मिंस्तीर्थे नरः स्नात्वा वाजिमेधफलं लभेत्।
सारस्वतीं गतिञ्चैव लभते नात्र संशयः। ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्य्यवान्।
त्रिरात्रोपोषितो राजन्नियतो नियताशनः। लभेत् कन्याशतं दिव्यं स्वर्गलोकञ्च गच्छति। १०६०
ततो गच्छेत धर्म्मज्ञ तीर्थं सन्निहतीमपि। तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः।
मासि मासि समायान्ति पुण्येन महताऽन्विताः। सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे।
अश्वमेधशतं तेन तत्रेष्टं शाश्वतं भवेत्। पृथिव्यां यानि तीर्थानि अन्तरीक्षचराणि च।
नद्यो नदास्तडागाश्च सर्व्वप्रस्रवणानि च। उदपानानि वाप्यश्च तीर्थान्यायतनानि च।
निःसंशयममावास्यां समेष्यन्ति नराधिप। मासि मासि नरव्याघ्र सन्निहत्यां न संशयः। १०६५
तीर्थसन्निहनादेव सन्निहत्येति विश्रुता। तत्र स्नात्वा च पीत्वा च स्वर्गलोके महीयते।
अमावास्यान्तु तत्रैव राहुग्रस्ते दिवाकरे। यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु।
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलं। स्नात एव समाप्नोति कृत्वा श्राद्धञ्च मानवः।
यत्किञ्चिद्दुष्कृतं कर्म्म स्त्रिया वा पुरुषस्य वा। स्नातमात्रस्य तत्सर्व्वं नश्यते नात्र संशयः।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते। अभिवाद्य ततो यक्षं द्वारपालं मचक्रुकं। १०७०

कोटितीर्थमुपस्पृश्य लभेद्बहुसुवर्णकं। गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम।
तत्र स्नायीत धर्मज्ञ ब्रह्मचारी समाहितः। राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः।
पृथिव्यां नैमिषं तीर्थमन्तरीक्षे च पुष्करं। त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते।
पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः। अपि दुष्कृतकर्म्माणं नयन्ति परमां गतिं।
उत्तरेण दृषद्वत्या दक्षिणेन सरस्वतीं। ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे। ७०७५
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहं। अप्येकां वाचमुत्सृज्य सर्व्वपापैः प्रमुच्यते।
ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितं। तस्मिन् वसन्ति ये मर्त्त्या न ते शोच्याः कथञ्चन।
तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च। एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि नानातीर्थकथने त्र्यशीतोऽध्यायः ॥ ८३ ॥
॥ पुलस्त्य उवाच। ततो गच्छेन्महाराज धर्म्मतीर्थमनुत्तमं। यत्र धर्म्मो महाभागस्तप्तवानुत्तमं तपः।
तेन तीर्थं कृतं पुण्यं स्वेन नाम्ना च विश्रुतं। तत्र स्नात्वा नरो राजन् धर्म्मशीलः समाहितः। ७०८०
आसप्तमं कुलञ्चैव पुनीते नात्र संशयः। ततो गच्छेत राजेन्द्र ज्ञानपावनमुत्तमं।
अग्निष्टोममवाप्नोति मुनिलोकञ्च गच्छति। सौगन्धिकवनं राजंस्ततो गच्छेत मानवः।
तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः। सिद्धचारणगन्धर्व्वाः किन्नराश्च महोरगाः।
तद्वनं प्रविशन्नेव सर्व्वपापैः प्रमुच्यते। ततश्चापि सरिच्छ्रेष्ठा नदीनामुत्तमा नदी।
प्लक्षा देवी स्मृता राजन् पुण्या देवी सरस्वती। तत्राभिषेकं कुर्व्वीत वल्मीकान्निःसृते जले। ७०८५
अर्च्चयित्वा पितॄन् देवानश्वमेधफलं लभेत्। ईशानाध्युषितं नाम तत्र तीर्थं सुदुर्लभं।
षट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः। कपिलानां सहस्रन्तु वाजिमेधञ्च विन्दति।
तत्र स्नात्वा नरव्याघ्र दृष्टमेतत् पुरातनैः। सुगन्धां शतकुम्भाञ्च पञ्चयक्षाञ्च भारत।
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते। त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत।
तत्राभिषेकं कुर्व्वीत पितृदेवार्च्चने रतः। गाणपत्यञ्च लभते देहं त्यक्त्वा न संशयः। ७०९०
ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभं। शाकम्भरीति विख्याता त्रिषु लोकेषु विश्रुता।
दिव्यं वर्षसहस्रं हि शाकेन किल सुव्रता। आहारं सा कृतवती मासि मासि नराधिप।
ऋषयोऽभ्यागतास्तत्र देव्या भक्त्या तपोधनाः। आतिथ्यञ्च कृतं तेषां शाकेन किल भारत।
ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितं। शाकम्भरीं समासाद्य ब्रह्मचारी समाहितः।
त्रिरात्रमुषितः शाकं भक्षयित्वा नरः शुचिः। शाकाहारस्य यत्किञ्चिद्वर्षैर्द्वादशभिः कृतं। ७०९५
तत्फलं तस्य भवति देव्याश्छन्देन भारत। ततो गच्छेत् सुवर्णाख्यं त्रिषु लोकेषु विश्रुतं।
तत्र विष्णुः प्रसादार्थं रुद्रमाराधयत् पुरा। वरांश्च सुबहून् लेभे दैवतेषु सुदुर्लभान्।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत। अपि च त्वं प्रियतरो लोके कृष्ण भविष्यसि।
त्वन्मुखञ्च जगत् सर्व्वं भविष्यति न संशयः। तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजं।

अश्वमेधमवाप्नोति गाणपत्यञ्च विन्दति । धूमावतीं ततो गच्छेत्त्रिरात्रोपोषितो नरः । ८०००
मनसा प्रार्थितान् कामांल्लभते नात्र संशयः । देव्यास्तु दक्षिणार्द्धेन रथावर्त्तो नराधिप ।
तत्रारोहेत धर्म्मज्ञ श्रद्दधानो जितेन्द्रियः । महादेवप्रसादाद्धि गच्छेत परमाङ्गतिं ।
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ । धारां नाम महाप्राज्ञ सर्व्वपापप्रमोचनीं ।
तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप । ततो गच्छेत धर्म्मज्ञ नमस्कृत्य महागिरिं ।
स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः । तत्राभिषेकं कुर्व्वीत कोटितीर्थे समाहितः । ८००५
पुण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् । उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ।
सप्तगङ्गे त्रिगङ्गे च शक्रावर्त्ते च तर्पयन् । देवान् पितॄंश्च विधिवत् पुण्यलोके महीयते ।
ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः । अश्वमेधमवाप्नोति स्वर्गलोकञ्च विन्दति ।
कपिलावटं ततो गच्छेत्तीर्थसेवी नराधिप । उपोष्य रजनीं तत्र गोसहस्रफलं लभेत् ।
नागराजस्य राजेन्द्र कपिलस्य महात्मनः । तीर्थं कुरुवरश्रेष्ठ सर्व्वलोकेषु विश्रुतं । ८०१०
तत्राऽभिषेकं कुर्व्वीत नागतीर्थे नराधिप । कपिलानां सहस्रस्य फलं विन्दति मानवः ।
ततो ललितिकं गच्छेत् शान्तनोस्तीर्थमुत्तमं । तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ।
गङ्गायमुनयोर्मध्ये स्नाति यः सङ्गमे नरः । दशाश्वमेधानाप्नोति कुलञ्चैव समुद्धरेत् ।
ततो गच्छेत राजेन्द्र सुगन्धं लोकविश्रुतं । सर्व्वपापविशुद्धात्मा ब्रह्मलोके महीयते ।
रुद्रावर्त्तं ततो गच्छेत्तीर्थसेवी नराधिप । तत्र स्नात्वा नरो राजन् स्वर्गलोके च गच्छति । ८०१५
गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च सङ्गमे । स्नात्वाऽश्वमेधं प्राप्नोति स्वर्गलोकञ्च गच्छति ।
भद्रकर्णेश्वरं गत्वा देवमर्च्य यथाविधि । न दुर्गतिमवाप्नोति नाकपृष्ठे च पूज्यते ।
ततः कुब्जाम्रकं गच्छेत्तीर्थसेवी नराधिप । गोसहस्रमवाप्नोति स्वर्गलोकञ्च गच्छति ।
अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप । सामुद्रकमुपस्पृश्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः । गोसहस्रफलं विन्देत् कुलञ्चैव समुद्धरेत् । ८०२०
ब्रह्मावर्त्तं ततो गच्छेद्ब्रह्मचारी समाहितः । अश्वमेधमवाप्नोति सोमलोकञ्च गच्छति ।
यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनं । अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ।
दर्व्वीसंक्रमणं प्राप्य तीर्थं त्रैलोक्यपूजितं । अश्वमेधमवाप्नोति स्वर्गलोकञ्च गच्छति ।
सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्व्वसेवितं । तत्रोष्य रजनीः पञ्च विन्देद्बहुसुवर्णकं ।
अथ वेदीं समासाद्य नरः परमदुर्गमां । अश्वमेधमवाप्नोति स्वर्गलोकञ्च गच्छति । ८०२५
ऋषिकुल्यां समासाद्य वाशिष्ठञ्चैव भारत । वाशिष्ठीं समतिक्रम्य सर्व्वे वर्णा द्विजातयः ।
ऋषिकुल्यां समासाद्य नरः स्नात्वा विकल्मषः । देवान् पितॄंश्चार्च्चयित्वा ऋषिलोकं प्रपद्यते ।
यदि तत्र वसेन्मासं शाकाहारो नराधिप । भृगुतुङ्गं समासाद्य वाजिमेधफलं लभेत् ।
गत्वा वीरप्रमोक्षञ्च सर्व्वपापैः प्रमुच्यते । कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत ।

अग्निष्टोमातिरात्राभ्यां फलमाप्नोति मानवः। तत्र सन्ध्यां समासाद्य विद्यातीर्थमनुत्तमं। ८०३०
उपस्पृश्य च वै विद्यां यत्र तत्रोपपद्यते। महाश्रमे वसेद्रात्रिं सर्व्वपापप्रमोचने।
एककालं निराहारो लोकानावसते शुभान्। षष्ठकालोपवासेन मासमुष्य महालये।
सर्व्वपापविशुद्धात्मा विन्देद्बहुसुवर्णकं दशापरान् दशपूर्व्वान् नरानुद्धरते कुलं।
अथ वेतसिकां गत्वा पितामहनिषेवितां। अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिं।
अथ सुन्दरिकातीर्थं प्राप्य सिद्धनिषेवितं। रूपस्य भागी भवति दृष्टमेतत् पुरातनैः। ८०३५
ततो वै ब्राह्मणीं गत्वा ब्रह्मचारी जितेन्द्रियः। पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते।
ततस्तु नैमिषं गच्छेत् पुण्यं सिद्धनिषेवितं। तत्र नित्यं निवसति ब्रह्मा देवगणैः सह।
नैमिषं मृगयानस्य पापस्यार्द्धं प्रणश्यति। प्रविष्टमात्रस्तु नरः सर्व्वपापैः प्रमुच्यते।
तत्र मासं वसेद्धीर नैमिषे तीर्थतत्परः। पृथिव्यां यानि तीर्थानि तानि तीर्थानि नैमिषे।
कृताभिषेकस्तत्रैव नियतो नियताशनः। गवां मेधस्य यज्ञस्य फलं प्राप्नोति भारत। ८०४०
पुनात्यासप्तमञ्चैव कुलं भरतसत्तम। यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः।
स मोदेत् सर्व्वलोकेषु एवमाहुर्म्मनीषिणः। नित्यं मेध्यञ्च पुण्यञ्च नैमिषं नृपसत्तम।
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः। वाजपेयमवाप्नोति ब्रह्मभूतो भवेत् सदा।
सरस्वतीं समासाद्य तर्पयेत् पितृदेवताः। सारस्वतेषु लोकेषु मोदते नात्र संशयः।
ततश्च बाहुदां गच्छेद्ब्रह्मचारी समाहितः। तत्रोष्य रजनीमेकां स्वर्गलोके महीयते।
देवसत्रस्य यज्ञस्य फलं प्राप्नोति कौरव। ततः चीरवतीं गच्छेत् पुण्यां पुण्यतरैर्वृतां।
पितृदेवार्च्चनपरो वाजपेयमवाप्नुयात्। विमलाशोकमासाद्य ब्रह्मचारी समाहितः।
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते। गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमं।
यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः। देहं त्यक्त्वा महाराज तस्य तीर्थस्य तेजसा।
रामस्य च प्रसादेन व्यवसायाच्च भारत। तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप। ८०५०
सर्व्वपापविशुद्धात्मा स्वर्गलोके महीयते। रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन।
अश्वमेधमवाप्नोति पुनाति च कुलं नरः। शतसाहस्रकं तीर्थं तत्रैव भरतर्षभ।
तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः। गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ।
ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमं। अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः।
कोटितीर्थे नरः स्नात्वा अर्च्चयित्वा गुहं नृप। गोसहस्रफलं विन्द्यात्तेजस्वी च भवेन्नरः। ८०५५
ततो वाराणसीं गत्वा अर्च्चयित्वा वृषध्वजं। कपिलाह्रदे नरः स्नात्वा राजसूयमवाप्नुयात्।
अविमुक्तं समासाद्य तीर्थसेवी कुरूद्वह। दर्शनाद्देवदेवस्य मुच्यते ब्रह्महत्यया।
प्राणानुत्सृज्य तत्रैव मोक्षं प्राप्नोति मानवः। मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभं।
गोमतीगङ्गयोश्चैव सङ्गमे लोकविश्रुते। अग्निष्टोममवाप्नोति कुलञ्चैव समुद्धरेत्

ततो गयां समासाद्य ब्रह्मचारी समाहितः । अश्वमेधमवाप्नोति गमनादेव भारत । ८०६०
तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः । तत्र दत्तं पितृभ्यस्तु भवत्यक्षयमुच्यते ।
महानद्यामुपस्पृश्य तर्पयेत् पितृदेवताः । अक्षयान् प्राप्नुयात् लोकान् कुलञ्चैव समुद्धरेत् ।
ततो ब्रह्मसरो गत्वा धर्म्मारण्योपशोभितं । ब्रह्मलोकमवाप्नोति प्रभातमेव शर्व्वरीं ।
ब्रह्मणा तत्र सरसि यूपः श्रेष्ठः समुच्छ्रितः । यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ।
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतं । एकरात्रोषितो राजन् प्रयच्छेत्तिलधेनुकां । ८०६५
सर्व्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवं । तत्र चिह्नं महद्राजन्नद्यापि सुमहद्भृशं ।
कपिलायाः सवत्सायाश्चरन्त्याः पर्व्वते कृतं । सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि भारत ।
तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम । यत्किञ्चिदशुभं कर्म्म तत्प्रणश्यति भारत ।
ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः । स्नायीत भस्मना तत्र अभिगम्य वृषध्वजं ।
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकं । इतरेषान्तु वर्णानां सर्व्वपापं प्रणश्यति । ८०७०
उद्यन्तञ्च ततो गच्छेत् पर्व्वतं गीतनादितं । सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ।
तत्र सन्ध्यामुपासीत ब्राह्मणः संशितव्रतः । तेन ह्युपास्ता भवति सन्ध्या द्वादशवार्षिकी ।
योनिद्वारञ्च तत्रैव विश्रुतं भरतर्षभ । तत्राभिगम्य मुच्येत पुरुषो योनिसङ्कटात् ।
कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः । पुनात्यासप्तमं राजन् कुलं नास्त्यत्र संशयः ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् । ८०७५
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप । अश्वमेधमवाप्नोति सिद्धिञ्च महतीं व्रजेत् ।
ततो गच्छेत राजेन्द्र धर्म्मप्रस्थं समाहितः । तत्र धर्म्मो महाराज नित्यमास्ते युधिष्ठिर ।
तत्र कूपोदकं कृत्वा ततः स्नातः शुचिस्तथा । पितॄन्देवांस्तु सन्तर्प्य मुक्तपापो दिवं व्रजेत् ।
मतङ्गस्याश्रमस्तत्र महर्षेर्भावितात्मनः । तं प्रविश्याश्रमं श्रीमच्छ्रमशोकविनाशनं ।
गवामयनयज्ञस्य फलं प्राप्नोति मानवः । धर्म्मन्तत्राभिसंस्पृश्य वाजिमेधमवाप्नुयात् । ८०८०
ततो गच्छेत राजेन्द्र ब्रह्मस्थानमनुत्तमं । तत्राभिगम्य राजेन्द्र ब्रह्माणं पुरुषर्षभं ।
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः । ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप ।
उपस्पृश्य ततस्तत्र कक्षीवानिव मोदते । यक्षिण्या नैत्यकं तत्र प्राश्नीत पुरुषः शुचिः ।
यक्षिण्यास्तु प्रसादेन मुच्यते ब्रह्महत्यया । मणिनागं ततो गत्वा गोसहस्रफलं लभेत् ।
तैर्थिकं भुञ्जते यस्तु मणिनागस्य भारत । दष्टस्याशीविषेणापि न तस्य क्रमते विषं । ८०८५
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् । ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं प्रियं ।
अहल्याया ह्रदे स्नात्वा व्रजेत परमाङ्गतिं । अभि गत्वाश्रमं राजन् विन्दते श्रियमात्मनः ।
तत्रोदपानं धर्म्मज्ञ त्रिषु लोकेषु विश्रुतं । तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात् ।
जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः । तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ।

ततो विनशनं गच्छेत् सर्व्वपापप्रमोचनं । वाजपेयमवाप्नोति सोमलोकञ्च गच्छति । ८०९०
गण्डकीन्तु समासाद्य सर्व्वतीर्थजलोद्भवां । वाजपेयमवाप्नोति सूर्य्यलोकञ्च गच्छति ।
ततो विशल्यामासाद्य नदीं त्रैलोक्यविश्रुतां । अग्निष्टोममवाप्नोति स्वर्गलोकञ्च गच्छति ।
ततोऽधिवङ्गं धर्म्मज्ञ समाविश्य तपोवनं । गुह्यकेषु महाराज मोदते नात्र संशयः ।
कम्पनान्तु समासाद्य नदीं सिद्धनिषेवितां । पुण्डरीकमवाप्नोति स्वर्गलोकञ्च गच्छति ।
अथ माहेश्वरीं धारां समासाद्य धराधिप । अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत् । ८०९५
दिवौकसां पुष्करिणीं समासाद्य नराधिप । न दुर्गतिमवाप्नोति वाजिमेधञ्च विन्दति ।
अथ सोमपदं गच्छेत् ब्रह्मचारी समाहितः । माहेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् ।
तत्र कोटी तु तीर्थानां विश्रुता भरतर्षभ । कूर्म्मरूपेण राजेन्द्र असुरेण दुरात्मना ।
ह्रियमाना हृता राजन् विष्णुना प्रभविष्णुना । तत्राभिषेकं कुर्व्वीत तीर्थकोट्यां नराधिप ।
पुण्डरीकमवाप्नोति विष्णुलोकञ्च गच्छति । ततो गच्छेत राजेन्द्र स्थानं नारायणस्य च । ८१००
सदा सन्निहितो यत्र विष्णुर्वसति भारत । यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
आदित्या वसवो रुद्रा जनार्द्दनमुपासते । शालग्राम इति ख्यातो विष्णुरद्भुतकर्म्मकः ।
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययं । अश्वमेधमवाप्नोति विष्णुलोकञ्च गच्छति ।
तत्रोदपानं धर्म्मज्ञ सर्व्वपापप्रमोचनं । समुद्रास्तत्र चत्वारः कूपे सन्निहिताः सदा ।
तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् । अभिगम्य महादेवं वरदं रुद्रमव्ययं । ८१०५
विराजति यथा सोमो मेघैर्मुक्तो नराधिप । जातिस्मरमुपस्पृश्य शुचिः प्रयतमानसः ।
जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः । माहेश्वरपुरं गत्वा अर्च्चयित्वा वृषध्वजं ।
ईप्सिताल्लभते कामानुपवासान्न संशयः । ततस्तु वामनं गत्वा सर्व्वपापप्रमोचनं ।
अभिगम्य हरिं देवं न दुर्गतिमवाप्नुयात् । कुशिकस्याश्रमं गच्छेत् सर्व्वपापप्रमोचनं ।
कौशिकीं तत्र गच्छेत महापापप्रणाशिनीं । राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः । ८११०
ततो गच्छेत राजेन्द्र चम्पकारण्यमुत्तमं । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ।
अथ ज्येष्ठिलमासाद्य तीर्थं परमदुर्लभं । तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ।
तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिं । मित्रावरुणयोर्लोकानाप्नोति पुरुषर्षभ ।
त्रिरात्रोपोषितस्तत्र अग्निष्टोमफलं लभेत् । कन्यासंवेद्यमासाद्य नियतो नियताशनः ।
मनोः प्रजापतेर्लोकानाप्नोति पुरुषर्षभ । कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत । ८११५
तदक्षयमिति प्राहुरृषयः संशितव्रताः । ततो निर्व्वीरमासाद्य त्रिषु लोकेषु विश्रुतं ।
अश्वमेधमवाप्नोति विष्णुलोकञ्च गच्छति । ये तु दानं प्रयच्छन्ति निर्व्वीरासङ्गमे नराः ।
ते यान्ति नरशार्दूल शक्रलोकमनामयं । तत्राश्रमो वशिष्ठस्य त्रिषु लोकेषु विश्रुतः ।

तत्राभिषेकं कुर्व्वाणो वाजपेयमवाप्नुयात्। देवकूटं समासाद्य देवर्षिगणसेवितं।
अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत्। ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदं। ८११०
यत्र सिद्धिं परां प्राप्तो विश्वामित्रोऽथ कौशिकः। तत्र मासं वसेद्वीर कौशिक्यां भरतर्षभ।
अश्वमेधस्य यत्पुण्यं तन्मासेनाधिगच्छति। सर्व्वतीर्थवरे चैव यो वसेत महाह्रदे।
न दुर्गतिमवाप्नोति विन्देद्बहुसुवर्णकं। कुमारमभिगम्याथ वीराश्रमनिवासिनं।
अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः। अग्निधारां समासाद्य त्रिषु लोकेषु विश्रुतां।
तत्राभिषेकं कुर्व्वाणो अग्निष्टोममवाप्नुयात्। अधिगम्य महादेवं वरदं विष्णुमव्ययं। ८११५
पितामहसरो गत्वा शैलराजसमीपतः। तत्राभिषेकं कुर्व्वाणो अग्निष्टोममवाप्नुयात्।
पितामहस्य सरसः प्रस्रुता लोकपावनी। कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता।
यत्र स्नात्वा कृतार्थोऽस्मीत्यात्मानमवगच्छति। षष्ठकालोपवासेन मुच्यते ब्रह्महत्यया।
ततो गच्छेत धर्म्मज्ञ तीर्थसेवनतत्परः। शिखरं वै महादेव्या गौर्य्यास्त्रैलोक्यविश्रुतं।
समारुह्य नरश्रेष्ठ स्तनकुण्डेषु संविशेत्। स्तनकुण्डमुपस्पृश्य वाजपेयफलं लभेत्। ८१२०
तत्राभिषेकं कुर्व्वाणः पितृदेवार्च्चने रतः। हयमेधमवाप्नोति शक्रलोकञ्च गच्छति।
ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति ब्रह्मलोकञ्च गच्छति।
नन्दिन्याञ्च समासाद्य कूपं देवनिषेवितं। नरमेधस्य यत्पुण्यं तदाप्नोति नराधिप।
कालिकासङ्गमे स्नात्वा कौशिकारुणयोर्गतः। त्रिरात्रोपोषितो राजन् सर्व्वपापैः प्रमुच्यते।
उर्व्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः। कुम्भकर्णाश्रमं गत्वा पूज्यते भुवि मानवः। ८१२५
कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः। जातिस्मरत्वमाप्नोति दृष्टमेतत् पुरातनैः।
सकृन्नन्दां समासाद्य कृतात्मा भवति द्विजः। सर्व्वपापविशुद्धात्मा शक्रलोकञ्च गच्छति।
ऋषभद्वीपमासाद्य सेव्यं क्रौञ्चनिषूदनं। सरस्वत्यामुपस्पृश्य विमानस्थो विराजते।
औद्दालकं महाराज तीर्थं मुनिनिषेवितं। तत्राभिषेकं कृत्वा वै सर्व्वपापैः प्रमुच्यते।
धर्म्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितं। वाजपेयमवाप्नोति विमानस्थश्च पूज्यते। ८१३०
अथ चम्पां समासाद्य भागीरथ्यां कृतोदकः। दण्डार्कमभिगम्याथ गोसहस्रफलं लभेत्।
ललीतिकां ततो गच्छेत् पुण्यां पुण्योपशोभितां। राजसूयमवाप्नोति विमानस्थश्च पूज्यते
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि तीर्थकथने चतुरशीतोऽध्यायः ॥ ८४ ॥
॥ पुलस्त्य उवाच ॥ अथ सन्ध्यां समासाद्य संवेद्यं तीर्थमुत्तमं। उपस्पृश्य नरो विद्यां लभते नात्र संशयः।
रामस्य च प्रभावेण तीर्थं राजन् कृतं पुरा। तल्लोहित्यं समासाद्य विन्देद्बहुसुवर्णकं।
करतोयां समासाद्य त्रिरात्रोपोषितो नरः। अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः। ८१३५
गङ्गायास्तत्र राजेन्द्र सागरस्य च सङ्गमे। अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः।

गङ्गायास्त्वपरं पारं प्राप्य यः स्नाति मानवः । त्रिरात्रमुषितो राजन् सर्वकामान् समश्नुते ।
ततो वैतरणीं गच्छेत् सर्वपापप्रमोचनीं । विरजं तीर्थमासाद्य विराजति यथा शशी ।
प्रतरेच्च कुलं पुण्यं सर्वपापं व्यपोहति । गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नरः ।
शोणस्य ज्योतिरथ्यायाः सङ्गमे नियतः शुचिः । तर्पयित्वा पितॄन् देवानग्निष्टोमफलं लभेत् । ८१५०
शोणस्य नर्मदायाश्च प्रभवे कुरुनन्दन । वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत् ।
ऋषभं तीर्थमासाद्य कोशलायां नराधिप । वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्द्यात् कुलं चैव समुद्धरेत् । कोशलायां समासाद्य कालतीर्थमुपस्पृशेत् ।
वृषभैकादशफलं लभते नात्र संशयः । पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नृप । ततो बदरिकातीर्थे स्नात्वा भरतसत्तम । ८१५५
दीर्घमायुरवाप्नोति स्वर्गलोकञ्च गच्छति । तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डाख्यमभिगम्यैव गोसहस्रफलं लभेत् । लपेटिकां ततो गच्छेत् पुण्यां पुण्योपसेवितां ।
वाजपेयमवाप्नोति देवैः सर्वैश्च पूज्यते । ततो महेन्द्रमासाद्य जामदग्न्यनिषेविते ।
रामतीर्थे नरः स्नात्वा अश्वमेधफलं लभेत् । मतङ्गस्य तु केदारस्तत्रैव कुरुनन्दन ।
तत्र स्नात्वा कुरुश्रेष्ठ गोसहस्रफलं लभेत् । श्रीपर्वतं समासाद्य नदीतीरमुपस्पृशेत् ८१६०
अश्वमेधमवाप्नोति पूजयित्वा वृषध्वजं । श्रीपर्वते महादेवो देव्या सह महाद्युतिः ।
न्यवसत् परमप्रीतो ब्रह्मा च त्रिदशैः सह । तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति परां सिद्धिञ्च गच्छति । ऋषभं पर्वतं गत्वा पाण्ड्येषु सुरपूजितं ।
वाजपेयमवाप्नोति नाकपृष्ठे च मोदते । ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् । ततस्तीरे समुद्रस्य कन्यातीर्थमुपस्पृशेत् । ८१६५
तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते । अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतं ।
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृते । यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
भूतयक्षपिशाचाश्च किन्नराः समहोरगाः । सिद्धचारणगन्धर्व्वमानुषाः पन्नगास्तथा ।
सरितः सागराः शैला उपासन्त उमापतिं । तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति गाणपत्यञ्च विन्दति । उष्य द्वादशरात्रन्तु पूतात्मा च भवेन्नरः । ८१७०
तत एव च गायत्र्याः स्थानं त्रैलोक्यपूजितं । त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् ।
निदर्शनञ्च प्रत्यक्षं ब्राह्मणानां नराधिप । गायत्रीं पठते यस्तु योनिसङ्करजस्तथा ।
गाथा च गीतिका चापि तस्य सम्पद्यते नृप । अब्राह्मणस्य सावित्री पठतस्तु प्रणश्यति ।
सम्वर्त्तस्य तु विप्रर्षेर्व्वापीमासाद्य दुर्लभां । रूपस्य भागी भवति सुभगश्च प्रजायते ।
ततो वेणां समासाद्य त्रिरात्रोपोषितो नरः । मयूरहंससंयुक्तं विमानं लभते नरः । ८१७५
ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेवितां । गवामयमवाप्नोति वासुकेर्लोकमुत्तमं ।

वेणायाः सङ्गमे स्नात्वा वाजिमेधफलं लभेत्। वरदासङ्गमे स्नात्वा गोसहस्रफलं लभेत्।
ब्रह्मस्थानं समासाद्य त्रिरात्रोपोषितो नरः। गोसहस्रफलं विन्द्यात् स्वर्गलोकञ्च गच्छति।
कुशप्लवनमासाद्य ब्रह्मचारी समाहितः। त्रिरात्रमुषितः स्नात्वा अश्वमेधफलं लभेत्।
ततो देवहृदेऽरण्ये कृष्णवेणाजलोद्भवे। जातिस्मरहृदे स्नात्वा भवेज्जातिस्मरो नरः। ८१८०
यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः। अग्निष्टोमफलं विन्द्याद्गमनादेव भारत।
ततः सर्व्वहृदे स्नात्वा गोसहस्रफलं लभेत्। ततो वापीं महापुण्यां पयोष्णीं सरिताम्बरां।
पितृदेवार्च्चनरतो गोसहस्रफलं लभेत्। दण्डकारण्यमासाद्य पुण्यं राजन्नुपस्पृशेत्।
गोसहस्रफलं तस्य स्नातमात्रस्य भारत। शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः।
न दुर्गतिमवाप्नोति पुनाति च कुलं नरः। ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितं। ८१८५
रामतीर्थे नरः स्नात्वा विन्द्याद्बहुसुवर्णकं। सप्तगोदावरे स्नात्वा नियतो नियताशनः।
महत्पुण्यमवाप्नोति देवलोकञ्च गच्छति। ततो देवपथं गत्वा नियतो नियताशनः।
देवसत्रस्य यत्पुण्यं तदेवाप्नोति मानवः। तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः।
वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा। तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः।
ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखं। ओँकारेण यथान्यायं सम्यगुच्चारितेन ह। ८१९०
येन यत्पूर्व्वमभ्यस्तं तत्सर्व्वं समुपस्थितं। ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः।
हरिर्नारायणस्तत्र महादेवस्तथैव च। पितामहश्च भगवान् देवैः सह महाद्युतिः।
भृगुं नियोजयामास याजनार्थं महाद्युतिं। ततः स चक्रे भगवानृषीणां विधिवत्तदा।
सर्व्वेषां पुनराधानं विधिदृष्टेन कर्म्मणा। आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमं। तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम। ८१९५
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा। तत्र मासं वसेद्धीरो नियतो नियताशनः।
ब्रह्मलोकं व्रजेद्राजन् कुलञ्चैव समुद्धरेत्। मेधाविकं समासाद्य पितॄन् देवांश्च तर्प्पयेत्।
अग्निष्टोममवाप्नोति स्मृतिं मेधाञ्च विन्दति। अत्र कालञ्जरं नाम पर्व्वतं लोकविश्रुतं।
तत्र देवहृदे स्नात्वा गोसहस्रफलं लभेत्। यो स्नातस्तापयेत्तत्र गिरौ कालञ्जरे नृप।
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः। ततो गिरिवरश्रेष्ठे चित्रकूटे विशाम्पते। ८२००
मन्दाकिनीं समासाद्य सर्व्वपापप्रणाशिनीं। तत्राभिषेकं कुर्व्वाणः पितृदेवार्च्चने रतः।
अश्वमेधमवाप्नोति गतिञ्च परमां व्रजेत्। ततो गच्छेत धर्म्मज्ञ भर्तृस्थानमनुत्तमं।
यत्र नित्यं महासेनो गुहः सन्निहितो नृप। तत्र गत्वा नृपश्रेष्ठ गमनादेव सिध्यति।
कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत्। प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः।
अभिगम्य महादेवं विराजति यथा शशी। तत्र कूपे महाराज विश्रुता भरतर्षभ। ८२०५
समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर। तत्रोपस्पृश्य राजेन्द्र पितृदेवार्च्चने रतः।

नियतात्मा नरः पूतो गच्छेत परमां गतिं । ततो गच्छेत राजेन्द्र शृङ्गवेरपुरं महत् ।
यत्र तीर्णो महाराज रामो दाशरथिः पुरा । तस्मिंस्तीर्थे महाबाहो स्नात्वा पापैः प्रमुच्यते ।
गङ्गायान्तु नरः स्नात्वा ब्रह्मचारी समाहितः । विधूतपाप्मा भवति वाजपेयञ्च विन्दति ।
ततो मुञ्जवटं गच्छेत् स्थानं देवस्य धीमतः । अभिगम्य महादेवमभिवाद्य च भारत । ८२१०
प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् । तस्मिंस्तीर्थे तु जाह्नव्यां स्नात्वा पापैः प्रमुच्यते ।
ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतं । यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ।
लोकपालाश्च साध्याश्च पितरो लोकसम्मताः । सनत्कुमारप्रमुखास्तथैव परमर्षयः ।
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽमलाः । तथा नागाः सुपर्णाश्च सिद्धाश्चक्रचरास्तथा ।
सरितः सागराश्चैव गन्धर्व्वाप्सरसोऽपि च । हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः । ८२१५
तत्र त्रीण्यग्निकुण्डानि येषां मध्येन जाह्नवी । वेगेन समतिक्रान्ता सर्व्वतीर्थपुरस्कृता ।
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता । यमुना गङ्गया सार्द्धं सङ्गता लोकपावनी ।
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतं । प्रयागं जघनस्थानमुपस्थमृषयो विदुः ।
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा । तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः ।
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तो युधिष्ठिर । प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः । ८२२०
यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः । ततः पुण्यतमं नाम त्रिषु लोकेषु भारत ।
प्रयागं सर्व्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो । गमनादस्य तीर्थस्य नाम सङ्कीर्त्तनादपि ।
मृत्तिकालम्भनाच्चापि नरः पापात् प्रमुच्यते । तत्राभिषेकं यः कुर्य्यात् सङ्गमे लोकविश्रुते ।
पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः । एषा यजनभूमिर्हि देवानामभिसंस्कृता ।
तत्र दत्तं सूक्ष्ममपि महद्भवति भारत । न वेदवचनात्तात न लोकवचनादपि । ८२२५
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति । दश तीर्थसहस्राणि षष्टिकोट्यस्तथा पराः ।
येषां सान्निध्यमत्रैव कीर्त्तितं कुरुनन्दन । चातुर्व्विद्ये च यत् पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे । तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमं ।
तत्राभिषेकं यः कुर्य्यात् सोऽश्वमेधफलं लभेत् । तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतं ।
दशाश्वमेधिकञ्चैव गङ्गायां कुरुनन्दन । कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता । ८२३०
विशेषो वै कनखले प्रयागे परमं महत् । यद्यकार्य्यशतं कृत्वा कृतं गङ्गावसेचनं ।
सर्व्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनं । सर्व्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतं ।
द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता । पुष्करे तु तपस्तप्येद्दानं दद्यान्महालये ।
मलये त्वग्निमारोहेद्भृगुतुङ्गे त्वनाशनं । पुष्करे तु कुरुक्षेत्रे गङ्गायां मगधेषु च ।
स्नात्वा तारयते जन्तुः सप्त सप्तावरांस्तथा । पुनाति कीर्त्तिता पापं दृष्टा भद्रं प्रयच्छति । ८२३५
अवगाढा च पीता च पुनात्यासप्तमं कुलं । यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलं ।

तावत् स पुरुषो राजन् स्वर्गलोके महीयते। यथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च।
उपास्य पुण्यं लब्ध्वा च भवत्यमरलोकभाक्। न गङ्गासदृशं तीर्थं न देवः केशवात्परः।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः। यत्र गङ्गा महाराज स देशस्तत्तपोवनं।
सिद्धक्षेत्रञ्च तज्ज्ञेयं गङ्गातीरसमाश्रितं। इदं सत्यं द्विजातीनां साधूनामात्मजस्य च। ८२४०
सुहृदाञ्च जपेत् कर्णे शिष्यस्यानुगतस्य च। इदं धर्म्यमिदं मेध्यमिदं स्वर्ग्यमनुत्तमं।
इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमं। महर्षीणामिदं गुह्यं सर्व्वपापप्रमोचनं।
अधीत्य द्विजमध्ये च निर्म्मलः स्वर्गमाप्नुयात्। श्रीमत्स्वर्ग्यं तथा पुण्यं सपत्नशमनं शिवं।
मेधाजननमग्र्यं वै तीर्थवंशानुकीर्त्तनं। अपुत्रो लभते पुत्रमधनो धनमाप्नुयात्।
महीं विजयते राजा वैश्यो धनमवाप्नुयात्। शूद्रो यथेप्सितान् कामान् ब्राह्मणः पारगः पठन्। ८२४५
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं नरः शुचिः। जातीः स स्मरते बह्वीर्नाकपृष्ठे च मोदते।
गम्यान्यपि च तीर्थानि कीर्त्तितान्यगमानि च। मनसा तानि गच्छेत सर्व्वतीर्थसमीक्षया।
एतानि वसुभिः साध्यैरादित्यैर्म्मरुदश्विभिः। ऋषिभिर्देवकल्पैश्च स्नातानि सुकृतैषिभिः।
एवं त्वमपि कौरव्य विधिनाऽनेन सुव्रत। व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्द्धयन्।
भावितैः करणैः पूर्व्वमास्तिक्याच्छ्रुतिदर्शनात्। प्राप्यन्ते तानि तीर्थानि सद्भिः शास्त्रानुदर्शिभिः। ८२५०
नाव्रती नाकृतात्मा च नाशुचिर्न च तस्करः। स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः।
त्वया तु सम्यग्वृत्तेन नित्यं धर्म्मार्थदर्शिना। पिता पितामहश्चैव सर्व्वे च प्रपितामहाः।
पितामहपुरोगाश्च देवाः सर्षिगणा नृप। तव धर्म्मेण धर्म्मज्ञ नित्यमेवाभितोषिताः।
अवाप्स्यसि त्वं लोकान् वै वसूनां वासवोपम। कीर्त्तिञ्च महतीं भीष्म प्राप्स्यसे भुवि शाश्वतीं।
॥ नारद उवाच॥ एवमुक्त्वाभ्यनुज्ञाय पुलस्त्यो भगवानृषिः। प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत। ८२५५
भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान्। पुलस्त्यवचनाच्चैव पृथिवीं परिचक्रमे।
एवमेषा महाभागा प्रतिष्ठाने प्रतिष्ठिता। तीर्थयात्रा महापुण्या सर्व्वपापप्रमोचनी।
अनेन विधिना यस्तु पृथिवीं सञ्चरिष्यति। अश्वमेधशतान्यग्र्यं फलं प्रेत्य स भोक्ष्यति।
ततश्चाष्टगुणं पार्थ प्राप्स्यसे धर्म्ममुत्तमं। भीष्मः कुरूणां प्रवरो यथा पूर्व्वमवाप्तवान्।
नेता च त्वमृषीन् यस्मात्तेन तेऽष्टगुणं फलं। रक्षोगणविकीर्णानि तीर्थान्येतानि भारत। ८२६०
न गतानि मनुष्येन्द्रैस्त्वामृते कुरुनन्दन। इदं देवर्षिचरितं सर्व्वतीर्थाभिसंवृतं।
यः पठेत् कल्यमुत्थाय सर्व्वपापैः प्रमुच्यते। ऋषिमुख्याः सदा यत्र वाल्मीकिस्त्वथ काश्यपः।
आत्रेयः कुण्डजठरो विश्वामित्रोऽथ गौतमः। असितो देवलश्चैव मार्कण्डेयोऽथ गालवः।
भरद्वाजो वशिष्ठश्च मुनिरुद्दालकस्तथा। शौनकः सह पुत्रेण व्यासश्च तपतांवरः।
दुर्व्वासाश्च मुनिश्रेष्ठो जावालिश्च महातपाः। एते ऋषिवराः सर्व्वे त्वत्प्रतीक्षास्तपोधनाः। ८२६५
एभिः सह महाराज तीर्थान्येतान्यनुव्रज। एष ते लोमशो नाम महर्षिरमितद्युतिः।

समेष्यति महाराज तेन सार्द्धमनुव्रज । मयाऽपि सह धर्म्मज्ञ तीर्थान्येतान्यनुक्रमात् ।
प्राप्स्यसे महतीं कीर्त्तिं यथा राजा महाभिषः । यथा ययातिर्धर्म्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं राजशार्दूल स्वेन धर्म्मेण शोभसे । यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्व्वराजेभ्यो भ्राजसे रश्मिवानिव । यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः । ८२७०
यथा वैन्यो महाराज तथा त्वमपि विश्रुतः । यथा च वृत्रहा सर्व्वान् सपत्नान्निर्दहन् पुरा ।
त्रैलोक्यं पालयामास देवराड्विगतज्वरः । तथा शत्रुक्षयं कृत्वा त्वं प्रजाः पालयिष्यसि ।
स्वधर्म्मविजितामुर्व्वीं प्राप्य राजीवलोचन । ख्यातिं यास्यसि धर्म्मेण कार्त्तवीर्य्यार्ज्जुनो यथा ।
॥ वैशम्पायन उवाच ॥ एवमाश्वास्य राजानं नारदो भगवानृषिः । अनुज्ञाप्य महाराज तत्रैवान्तरधीयत ।
युधिष्ठिरोऽपि धर्म्मात्मा तमेवार्थं विचिन्तयन् । तीर्थयात्राश्रितं पुण्यमृषीणां प्रत्यवेदयत् । ८२७५
इति श्रीमहाभारते आरण्यकपर्व्वणि तीर्थयात्रापर्व्वणि तीर्थयात्रायां नारदवाक्ये पञ्चाशीतोऽध्यायः ॥ ८५ ॥
॥ वैशम्पायन उवाच । भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः । पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ।
मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः । अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः ।
स हि वीरोऽनुरक्तश्च समर्थश्च तपोधन । कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ।
अहं ह्येतावुभौ ब्रह्मन् कृष्णावरिविघातिनौ । अभिजानामि विक्रान्तौ तथा व्यासः प्रतापवान् ।
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनञ्जयौ । नारदोऽपि तथा वेद सोऽप्यशंसत् सदा मम । ८२८०
तथाऽहमपि जानामि नरनारायणावृषी । शक्तोऽयमित्यतो मत्वा मया स प्रेषितोऽर्ज्जुनः ।
इन्द्रादनवरः शक्रं सुरसूनुः सुराधिपं । द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ।
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्ज्जयः । धृतराष्ट्रस्य पुत्रेण वृता युधि महारथाः ।
सर्व्वे वेदविदः शूराः सर्व्वास्त्रविदुषस्तथा । योद्धुकामाश्च पार्थेन सततं ते महाबलाः ।
स च दिव्यास्त्रवित् कर्णः सूतपुत्रो महारथः । सोऽस्त्रवेगानिलबलः शरार्च्चिस्तलनिस्वनः । ८२८५
रजोधूमोऽस्त्रसम्पातो धार्त्तराष्ट्रानिलोद्धुतः । निसृष्ट इव कालेन युगान्ते ज्वलनो महान् ।
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः । तं स कृष्णानिलोद्धूतो दिव्यास्त्रजलदो महान् ।
श्वेतवाजिबलाकाढ्यो गाण्डीवेन्द्रायुधोज्ज्वलः । संरब्धः शरधाराभिः सुदीप्तं कर्णपावकं ।
अर्ज्जुनोदीरितो मेघः शमयिष्यति संयुगे । स साक्षादेव सर्व्वाणि शक्रात् परपुरञ्जयः ।
दिव्यान्यस्त्राणि वीभत्सुस्तत्त्वतः प्रतिपत्स्यते । अलं स तेषां सर्व्वेषामिति मे धीयते मतिः । ८२९०
नास्ति त्वतिकृतार्थानां रणेऽरीणां प्रतिक्रिया । ते वयं पाण्डवं सर्व्वे गृहीतास्त्रमरिन्दमं ।
द्रष्टारो नहि वीभत्सुर्भारमुद्यम्य सीदति । वयन्तु तदृते वीरं वनेऽस्मिन् द्विपदाम्बरं ।
अवधानं न गच्छामः काम्यके सह कृष्णया । भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि ।
आख्यातु रमणीयञ्च सेवितं पुण्यकर्म्मभिः । यत्र कञ्चिद्वयं कालं वसन्तः सत्यविक्रमं ।
प्रतीक्षामोऽर्ज्जुनं वीरं वृष्टिकामा इवाम्बुदं । विविधानाश्रमान् कांश्चिद्द्विजातिभ्यः प्रतिश्रुतान् । ८२९५

सरांसि सरितश्चैव रमणीयांश्च पर्व्वतान्। आचक्ष्व नहि मे ब्रह्मन् रोचते तमृतेऽर्ज्जुनं। वनेऽस्मिन् काम्यके वासो गच्छामोऽन्यां दिशं प्रति।

इतिश्रीमहाभारते आरण्यकपर्व्वणि तीर्थयात्रापर्व्वणि धौम्ययुधिष्ठिरकथायां षडशीतोऽध्यायः॥ ८६॥

॥ वैशम्पायन उवाच॥ तान् सर्व्वानुत्सुकान् दृष्ट्वा पाण्डवान् दीनचेतसः। आश्वासयंस्तदा धौम्यो बृहस्पतिसमोऽब्रवीत्।
ब्राह्मणानुमतान् पुण्यानाश्रमान् भरतर्षभ। दिशस्तीर्थानि शैलांश्च शृणु मे वदतोऽनघ।
यान् श्रुत्वा गदतो राजन् विशोको भवितासि ह। द्रौपद्या चानया सार्द्धं भ्रातृभिश्च नरेश्वर।
श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव। गत्वा शतगुणञ्चैव तेभ्य एव नरोत्तम। ८१००
पूर्व्वं प्राचीं दिशं राजन् राजर्षिगणसेवितां। रम्यां ते कथयिष्यामि युधिष्ठिर यथास्मृति।
तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत। यत्र तीर्थानि देवानां पुण्यानि च पृथक् पृथक्।
यत्र सा गोमती पुण्या रम्या देवर्षिसेविता। यज्ञभूमिश्च देवानां शामित्रञ्च विवस्वतः।
तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः। शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः।
यदर्थं पुरुषव्याघ्र कीर्त्तयन्ति पुरातनाः। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। ८१०५
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्। उत्तारयति सन्तत्या दश पूर्व्वान् दशापरान्।
महानदी च तत्रैव तथा गयशिरो नृप। यत्रासौ कीर्त्त्यते विप्रैरक्षय्यकरणो वटः।
यत्र दत्तं पितृभ्योऽन्नमक्षयं भवति प्रभो। सा च पुण्यजला तत्र फल्गुनामा महानदी।
बहुमूलफला चापि कौशिकी भरतर्षभ। विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः।
गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः। अयजत्तत्र बहुभिः क्रतुभिर्भूरिदक्षिणैः। ८११०
पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावनं। विश्वामित्रोऽयजद्यत्र पुत्रेण सह कौशिकः।
यत्रानुवंशं भगवान् जामदग्न्यस्तथा जगौ। विश्वामित्रस्य तां दृष्ट्वा विभूतिमतिमानुषीं।
कन्यकुब्जेऽपिवत्सोममिन्द्रेण सह कौशिकः। ततः क्षत्त्रादपाक्रामद्ब्राह्मणोऽस्मीति चाब्रवीत्।
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमं। गङ्गायमुनयोर्व्वीर सङ्गमं लोकविश्रुतं।
यत्रायजत भूतात्मा पूर्व्वमेव पितामहः। प्रयागमिति विख्यातं तस्माद्भरतसत्तम। ८११५
अगस्त्यस्य तु राजेन्द्र तत्राश्रमवरो नृप। तत्तथा तापसारण्यं तापसैरुपशोभितं।
हिरण्यबिन्दुः कथितो गिरौ कालञ्जरे महान्। अगस्त्यपर्व्वतो रम्यः पुण्यो गिरिवरः शिवः।
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः। अयजत्तत्र कौन्तेय पूर्व्वमेव पितामहः।
यत्र भागीरथी पुण्या सरस्यासीद्युधिष्ठिर। यत्र सा ब्रह्मशालेति पुण्या ख्याता विशाम्पते।
धूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनं। पवित्रो मङ्गलीयश्च ख्यातो लोके महात्मनः। ८१२०
केदारश्च मतङ्गस्य महानाश्रम उत्तमः। कुण्डोदः पर्व्वतो रम्यो बहुमूलफलोदकः।
नैषधस्तृषितो यत्र जलं शर्म्म च लब्धवान्। यत्र देववनं रम्यं तापसैरुपशोभितं।
बाहुदा च नदी यत्र नन्दा च गिरिमूर्द्धनि। तीर्थानि सरितः शैलाः पुण्यान्यायतनानि च।

प्राच्यां दिशि महाराज कीर्त्तितानि मया तव । तिसृष्वन्यासु पुण्यानि दिक्षु तीर्थानि मे शृणु ।
सरितः पर्व्वतांश्चैव पुण्यान्यायतनानि च । ८२२५

इतिश्रीमहाभारतेआरण्यपर्व्वणि तीर्थयात्रापर्व्वणि धौम्यतीर्थकथने सप्ताशीतोऽध्यायः ॥ ८७ ॥

॥ धौम्य उवाच ॥ दक्षिणस्यान्तु पुण्यानि शृणु तीर्थानि भारत । विस्तरेण यथाबुद्धि कीर्त्त्यमानानि तानि वै ।
यस्यामाख्यायते पुण्या दिशि गोदावरी नदी । बह्वारामा बहुजला तापसाचरिता शिवा ।
वेणा भीमरथी चैव नद्यौ पापभयापहे । मृगद्विजसमाकीर्णे तापसालयभूषिते ।
राजर्षेस्तस्य च सरिन्नृगस्य भरतर्षभ । रम्यतीर्था बहुजला पयोष्णी द्विजसेविता ।
अपि चात्र महायोगी मार्कण्डेयो महायशाः । अनुवंश्यां जगौ गाथां नृगस्य धरणीपतेः । ८२३०
नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतं । अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
पयोष्ण्यां यजमानस्य वाराहे तीर्थ उत्तमे । उद्धृतं भूतलस्थं वा वायुना समुदीरितं ।
पयोष्ण्या हरते तोयं पापमामरणान्तिकं । स्वर्गादुत्तुङ्गममलं विषाणं यत्र शूलिनः ।
स्वमात्मविहितं दृष्ट्वा मर्त्यः शिवपुरं व्रजेत् । एकतः सरितः सर्व्वाः गङ्गाद्याः सलिलोच्चयाः ।
पयोष्णी चैकतः पुण्या तीर्थेभ्यो हि मता मम । माठरस्य वनं पुण्यं बहुमूलफलं शिवं । ८२३५
यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ । प्रवेण्युत्तरमार्गे तु पुण्ये कण्वाश्रमे तथा ।
तापसानामरण्यानि कीर्त्तितानि यथाश्रुति । वेदी शूर्पारके तात जमदग्नेर्महात्मनः ।
रम्या पाषाणतीर्था च पुनश्चन्द्रा च भारत । अशोकतीर्थं तत्रैव कौन्तेय बहुलाश्रमं ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणञ्च युधिष्ठिर । कुमार्य्यः कथिताः पुण्याः पाण्ड्येष्वेव नरर्षभ ।
ताम्रपर्णीन्तु कौन्तेय कीर्त्तयिष्यामि तां शृणु । यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे । ८२४०
गोकर्ण इति विख्यातस्त्रिषु लोकेषु विश्रुतः । शीततोयो बहुजलः पुण्यस्तात शिवः शुभः ।
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः । तत्र वृक्षतृणाद्यैश्च सम्पन्नफलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसमो गिरिः । वैदूर्य्यपर्व्वतस्तत्र श्रीमान्मणिमयः शिवः ।
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः । सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ।
आश्रमान् सरितश्चैव सरांसि च नराधिप । चमसोद्भेदनं विप्रास्तत्रापि कथयन्त्युत । ८२४५
प्रभासञ्चोदधौ तीर्थं त्रिदशानां युधिष्ठिर । तत्र पिण्डारकं नाम तापसाचरितं शिवं ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् । तत्र देवर्षिवर्य्येण नारदेनानुकीर्त्तितः ।
पुराणः श्रूयते श्लोकस्तन्निबोध युधिष्ठिर । पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।
उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीयते । पुण्या द्वारवती तत्र यत्रासौ मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्म्मः सनातनः । ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ८२५०
ते वदन्ति महात्मानं कृष्णं धर्म्मं सनातनं । पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योऽसौ मङ्गलानाञ्च मङ्गलं । त्रैलोक्ये पुण्डरीकाक्षो देवदेवः सनातनः ।

अव्ययात्मा व्ययात्मा च क्षेत्रज्ञः परमेश्वरः । आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि धौम्यतीर्थकथने अष्टाशीतो ऽध्यायः ॥ ८८ ॥

॥ धौम्य उवाच ॥ अवन्तिषु प्रतीच्यां वै कीर्त्तयिष्यामि ते दिशि । यानि तत्र पवित्राणि पुण्यान्यायतनानि च ।

प्रियङ्ग्वाम्रवनोपेता वानीरफलमालिनी । प्रत्यक्स्रोता नदी पुण्या नर्म्मदा तत्र भारत । ८१८५

त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च । सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः ।

नर्म्मदायां कुरुश्रेष्ठ सह सिद्धर्षिचारणैः । स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत ।

निकेतः श्रूयते पुण्यो यत्र विश्रवसो मुनेः । जज्ञे धनपतिर्यत्र कुवेरो नरवाहनः ।

वैदूर्य्यशिखरो नाम पुण्यो गिरिवरः शिवः । नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ।

तस्य शैलस्य शिखरे सरः पुण्यं महीपते । फुल्लपद्मं महाराज देवगन्धर्व्वसेवितं । ८१९०

बह्वाश्चर्य्यं महाराज दृश्यते तत्र पर्व्वते । पुण्ये स्वर्गोपमे चैव देवर्षिगणसेविते ।

ह्रदिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित् । विश्वामित्रनदी राजन् पुण्या परपुरञ्जय ।

यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः । पपात स पुनर्ल्लोकाल्लेभे धर्म्मान् सनातनान् ।

तत्र पुण्यो ह्रदः ख्यातो मैनाकश्चैव पर्व्वतः । बहुमूलफलोपेतस्त्वसितो नाम पर्व्वतः ।

आश्रमः कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर । च्यवनस्याश्रमश्चैव विख्यातस्तत्र पाण्डव । ८१९५

तत्राल्पेनैव सिध्यन्ति मानवास्तपसा विभो । जम्बूमार्गो महाराज ऋषीणां भावितात्मनां ।

आश्रमः शाम्यतां श्रेष्ठ मृगद्विजनिषेवितः । ततः पुण्यतमा राजन् सततं तापसैर्युता ।

केतुमाला च मेध्या च गङ्गाद्वारञ्च भूमिप । ख्यातञ्च सैन्धवारण्यं पुण्यं द्विजनिषेवितं ।

पितामहसरः पुण्यं पुष्करं नाम नामतः । वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः ।

अप्यत्र संश्रयार्थाय प्रजापतिरथो जगौ । पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनाम्बर । ८२००

मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः । विप्रणश्यन्ति पापानि नाकपृष्ठे च मोदते ।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि धौम्यतीर्थकथन एकोननवतोऽध्यायः ॥ ८९ ॥

॥ धौम्य उवाच ॥ उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै । तानि ते कीर्त्तयिष्यामि पुण्यान्यायतनानि च ।

शृणुष्वावहितो भूत्वा मम मन्त्रयतः प्रभो । कथाप्रतिग्रहो वीर श्रद्धां जनयते शुभां ।

सरस्वती महापुण्या ह्रदिनी तीर्थशालिनी । समुद्रगा महावेगा यमुना यत्र पाण्डव ।

यत्र पुण्यतमं तीर्थं प्लक्षावतरणं शुभं । यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथैर्द्विजाः । ८२०५

पुण्यञ्चाख्यायते दिव्यं शिवमग्निशिरोऽनघ । सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ।

एतस्मिन्नेव चार्थेऽसौ इन्द्रगीता युधिष्ठिर । गाथा चरति लोकेऽस्मिन् गीयमाना द्विजातिभिः ।

अग्नयः सह देवेन सेविता यमुनामनु । ते तस्य कुरुशार्दूल सहस्रशतदक्षिणाः ।

तत्रैव भरतो राजा चक्रवर्त्ती महायशाः । विंशतिः सप्त चाष्टौ च हयमेधानुपाहरत् ।

कामकृद्यो द्विजातीनां श्रुतस्तात यथा पुरा । अत्यन्तमाश्रमः पुण्यः शरभङ्गस्य विश्रुतः । ८२१०

सरस्वती नदी सद्भिः सततं पार्थ पूजिता । वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ।
दृषद्वती महापुण्या यत्र ख्याता युधिष्ठिर । न्यग्रोधाख्यस्तु पुण्याख्यः पाञ्चाल्यो द्विपदाम्वर ।
दाल्भ्यघोषश्च दाल्भ्यश्च धरणीस्थो महात्मनः । कौन्तेयानन्तयशसः सुव्रतस्यामितौजसः ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः । एतावर्णाववर्णौ च विश्रुतौ मनुजाधिप ।
वेदज्ञौ वेदविद्वांसौ वेदविद्याविदावुभौ । ईजाते क्रतुभिर्मुख्यैः पुण्यैर्भरतसत्तम । ८०८५
समेत्य बहवो देवाः सेन्द्राः सवरुणाः पुरा । विशाखयूपेऽतप्यन्त तेन पुण्यतमश्च सः ।
ऋषिर्महान् महाभागो जमदग्निर्महायशाः । पलाशकेषु पुण्येषु रम्येष्वयजत प्रभुः ।
यत्र सर्व्वाः सरिच्छ्रेष्ठाः साक्षात्तमृषिसत्तमं । स्वं स्वं तोयमुपादाय परिवार्य्योपतस्थिरे ।
अपि चात्र महाराज स्वयं विश्वावसुर्जगौ । इमं श्लोकं तदा वीर प्रेक्ष्य दीक्षां महात्मनः ।
यजमानस्य वै देवान् जमदग्नेर्महात्मनः । आगम्य सरितो विप्रान् मधुना समतर्पयन् । ८०९०
गन्धर्व्वयक्षरक्षोभिरप्सरोभिश्च सेवितं । किरातकिन्नरावासं शैलं शिखरिणाम्वरं ।
बिभेद तरसा गङ्गा गङ्गाद्वारं युधिष्ठिर । पुण्यं तत्ख्यायते राजन् ब्रह्मर्षिगणसेवितं ।
सनत्कुमारः कौरव्य पुण्यं कनखलं तथा । पर्व्वतश्च पुरुर्नाम यत्र यातः पुरूरवाः ।
भृगुर्यत्र तपस्तेपे महर्षिगणसेविते । राजन् स आश्रमः ख्यातो भृगुतुङ्गो महागिरिः ।
यः स भूतं भविष्यच्च भवच्च भरतर्षभ । नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः । ८०९५
तस्यातियशसः पुण्यां विशालां बदरीमनु । आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ।
उष्णतोयवहा गङ्गा शीततोयवहा पुरा । सुवर्णसिकता राजन् विशालां बदरीमनु ।
ऋषयो यत्र देवाश्च महाभागा महौजसः । प्राप्य नित्यं नमस्यन्ति देवं नारायणं प्रभुं ।
यत्र नारायणो देवः परमात्मा सनातनः । तत्र कृत्स्नं जगत् सर्व्वं तीर्थान्यायतनानि च ।
तत् पुण्यं परमं ब्रह्म तत्तीर्थं तत्तपोवनं । तत्परं परमं देवं भूतानां परमेश्वरं । ८१००
शाश्वतं परमञ्चैव धातारं परमं पदं । यं विदित्वा न शोचन्ति विद्वांसः शास्त्रदृष्टयः ।
तत्र देवर्षयः सिद्धाः सर्व्वे चैव तपोधनाः । आदिदेवो महायोगी यत्रास्ते मधुसूदनः ।
पुण्यानामपि तत्पुण्यमत्र ते संशयोऽस्तु मा । एतानि राजन् पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्त्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च । एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च सेवितानि महात्मभिः । चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः । ८१०५
भ्रातृभिश्च महाभागैरुत्कण्ठां विजहिष्यसि ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि धौम्यतीर्थकथने नवतितमोऽध्यायः ॥ ९० ॥

॥ वैशम्पायन उवाच ॥ एवं सम्भाषमाणे तु धौम्ये कौरवनन्दन । लोमशः स महातेजा ऋषिस्तत्राजगाम ह ।
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते । उपातिष्ठन्महाभागं दिवि शक्रमिवामराः ।
समभ्यर्च्य यथान्यायं धर्म्मपुत्रो युधिष्ठिरः । पप्रच्छ गमने हेतुमटने च प्रयोजनं ।

स पृष्टः पाण्डुपुत्त्रेण प्रीयमाणो महामनाः। उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान्। ८४१०
सञ्चरन्नस्मि कौन्तेय सर्व्वान् लोकान् यदृच्छया। गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरं।
तव च भ्रातरं वीरमपश्यं सव्यसाचिनं। शक्रस्यार्द्धासनगतं तत्र मे विस्मयो महान्।
आसीत् पुरुषशार्दूल दृष्ट्वा पार्थं तथागतं। आह मां तत्र देवेशो गच्छ पाण्डुसुतान् प्रति।
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजं। वचनात् पुरुहूतस्य पार्थस्य च महात्मनः।
आख्यास्ये ते प्रियं तात सुमहत् पाण्डुनन्दन। भ्रातृभिः सहितो राजन् कृष्णया चैव तच्छृणु। ८४१५
यत्त्वयोक्तो महाबाहुरस्त्रार्थं भरतर्षभ। तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं प्रभो।
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागमत्। अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना।
तत् समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलं। वज्रमस्त्राणि चान्यानि दण्डादीनि युधिष्ठिर।
यमात् कुवेराद्वरुणादिन्द्राच्च कुरुनन्दन। अस्त्राण्यवाप्तवान् पार्थो दिव्यान्यमितविक्रमः।
विश्वावसोस्तु तनयाद्गीतं नृत्यञ्च साम च। वादित्रञ्च यथान्यायं प्रत्यविन्दद्यथाविधि। ८४२०
एवं कृतास्त्रः कौन्तेयो गान्धर्व्वं वेदमाप्तवान्। सुखं वसति वीभत्सुरनुजस्यानुजस्तव।
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत्। तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे।
भवान्मनुष्यलोकेऽपि गमिष्यति न संशयः। ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम।
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्ज्जुनः। सुरकार्य्यं महत् कृत्वा यदशक्यं दिवौकसैः।
तपसाऽपि त्वमात्मानं योजय भ्रातृभिः सह। तपसो हि परं नास्ति तपसा विन्दते महत्। ८४२५
अहञ्च कर्णं जानामि यथावद्भरतर्षभ। सत्यसन्धं महोत्साहं महावीर्य्यं महाबलं।
महाहवेष्वप्रतिमं महायुद्धविशारदं। महाधनुर्द्धरं वीरं महास्त्रं वरवर्णिनं।
महेश्वरसुतप्रख्यमादित्यतनयं प्रभुं। तथाऽर्ज्जुनमतिस्कन्धं सहजोल्वणपौरुषं।
न स पार्थस्य संग्रामे कलामर्हति षोडशीं। यच्चापि ते भयं कर्णान्मनसिस्थमरिन्दम।
तच्चाप्यपहरिष्यामि सव्यसाचिन्यतो गते। यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति। ८४३०
स महर्षिर्लोमशस्ते कथयिष्यत्यसंशयं। यच्च किञ्चित्तपोयुक्तं फलं तीर्थेषु भारत। ब्रह्मर्षिरेष ब्रूयात्ते न तच्छ्रद्धेयमन्यथा।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि लोमशसंवादे एकनवतोऽध्यायः ॥ ९१ ॥
॥ लोमश उवाच ॥ धनञ्जयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर। युधिष्ठिरं भ्रातरं मे योजयेर्द्धर्म्यया श्रिया।
त्वं हि धर्म्मान् परान् वेत्थ तपांसि च तपोधन। श्रीमताञ्चापि जानासि धर्म्मं राज्ञां सनातनं।
स भवान् परमं वेद पावनं पुरुषं प्रति। तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवान्।
यथा तीर्थानि गच्छेत गाश्च दद्यात् स पार्थिवः। तथा सर्व्वात्मना कार्य्यमिति मामर्ज्जुनोऽब्रवीत्। ८४३५
भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्व्वशः। रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च।
दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविं। तथा रक्षस्व कौन्तेयान् राक्षसेभ्यो द्विजोत्तम।
यातुधाना हि बहवो राक्षसाः पर्व्वतोपमाः। त्वयाऽभिगुप्तं कौन्तेयं न विवर्त्तेयुरन्तिकं।

सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च । रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ।
द्विस्तीर्थानि मया पूर्व्वं दृष्टानि कुरुनन्दन । इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह । ८४५०
इयं राजर्षिभिर्य्याता पुण्यकृद्भिर्युधिष्ठिर । मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ।
नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत् । स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ।
त्वन्तु धर्म्ममतिर्नित्यं धर्म्मज्ञः सत्यसङ्गरः । विमुक्तः सर्व्वपापेभ्यो भूय एव भविष्यसि ।
यथा भगीरथो राजा राजानश्च गयादयः । यथा ययातिः कौन्तेय तथा त्वमपि पाण्डव ।
॥ युधिष्ठिर उवाच ॥ न हर्षात् संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् । स्मरेद्धि देवराजो यं को नामाऽभ्यधिकस्ततः । ८४५५
भवता सङ्गमो यस्य भ्राता चैव धनञ्जयः । वासवः स्मरते यस्य को नामाभ्यधिकस्ततः ।
यच्च मां भगवानाह तीर्थानां दर्शनं प्रति । धौम्यस्य वचनादेषा बुद्धिः पूर्व्वं कृतैव मे ।
तद्यदा मन्यसे ब्रह्मन् गमनन्तीर्थदर्शने । तदैव गन्ताऽस्मि तीर्थान्येष मे निश्चयः परः ।
॥ वैशम्पायन उवाच ॥ गमने कृतबुद्धिं तं पाण्डवं लोमशोऽब्रवीत् । लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ।
॥ युधिष्ठिर उवाच ॥ भिक्षाभुजो निवर्त्तन्तां ब्राह्मणा यतयश्च ये । क्षुत्तृष्णाध्वश्रमायासशीतार्त्तिमसहिष्णवः । ८४६०
ते सर्व्वे विनिवर्त्तन्तां ये च मिष्टभुजो द्विजाः । पक्वान्नलेह्यपानानां मांसानाञ्च विकल्पकाः ।
तेऽपि सर्व्वे निवर्त्तन्तां येऽपि सूदानुयायिनः । मया यथोचिताजीव्यैः संविभक्ताश्च वृत्तिभिः ।
ये चाप्यनुगताः पौरा राजभक्तिपुरःसराः । धृतराष्ट्रं महाराजमभिगच्छन्तु ते च वै ।
स दास्यति यथाकालमुचिता यस्य या भृतिः । स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः ।
अस्मत्प्रियहितार्थाय पाञ्चाल्यो वः प्रदास्यति ॥ वैशम्पायन उवाच ॥ ततो भूयिष्ठशः पौरा गुरुभारप्रपीडिताः । ८४६५
विप्राश्च यतयो मुख्या जग्मुर्नागपुरं प्रति । तान् सर्व्वान् धर्म्मराजस्य प्रेम्णा राजाऽम्बिकासुतः ।
प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् । ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह । लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि युधिष्ठिरतीर्थयात्रायां द्विनवतोऽध्यायः ॥ ९२ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः । अभिगम्य तदा राजन्निदं वचनमब्रुवन् ।
राजंस्तीर्थानि गन्ताऽसि पुण्यानि भ्रातृभिः सह । देवर्षिणा चैव सहितो लोमशेन महात्मना ।
अस्मानपि महाराज नेतुमर्हसि पाण्डव । अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव । ८४७०
श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च । अगम्यानि नरैरल्पैस्तीर्थानि मनुजेश्वर ।
भवतो भ्रातरः शूरा धनुर्द्धरवराः सदा । भवद्भिः पालिताः शूरैर्गच्छामो वयमप्युत ।
भवत्प्रसादाद्धि वयं प्राप्नुयामः सुखं फलं । तीर्थानां पृथिवीपाल वनानाञ्च विशाम्पते ।
तव वीर्य्यपरित्राताः शुद्धास्तीर्थपरिप्लुताः । भवेम धूतपाप्मानस्तीर्थसन्दर्शनान्नृप ।
भवानपि नरेन्द्रस्य कार्त्तवीर्य्यस्य भारत । अष्टकस्य च राजर्षेर्लोमपादस्य चैव ह । ८४७५
भरतस्य च वीरस्य सार्व्वभौमस्य पार्थिव । ध्रुवं प्राप्स्यति दुष्प्रापान् लोकांस्तीर्थपरिप्लुतः ।

प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्व्वतान्। गङ्गाद्याः सरितश्चैव प्लक्षादींश्च वनस्पतीन्।
त्वया सह महीपाल द्रष्टुमिच्छामहे वयं। यदि ते ब्राह्मणेष्वस्ति काचित् प्रीतिर्जनाधिप।
कुरु क्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यते। तीर्थानि हि महाबाहो तपोविघ्नकरैः सदा।
अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि तीर्थान्युक्तानि धौम्येन नारदेन च धीमता। ८४१०
यान्युवाच च देवर्षिर्लोमशः सुमहातपाः। विधिवत्तानि सर्व्वाणि पर्य्यटस्व नराधिप।
धूतपाप्मा सहास्माभिर्लोमशेनाभिपालितः। स राजा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः।
भीमसेनादिभिर्व्वीरैर्भ्रातृभिः परिवारितः। बाढमित्यब्रवीत् सर्व्वांस्तानृषीन् पाण्डवर्षभः।
लोमशं समनुज्ञाप्य धौम्यञ्चैव पुरोहितं। ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी।
द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे। अथ व्यासो महाभागस्तथा पर्व्वतनारदौ। ८४१५
काम्यके पाण्डवं द्रष्टुं समाजग्मुर्म्मनीषिणः। तेषां युधिष्ठिरो राजा पूजाञ्चक्रे यथाविधि।
सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन्। ऋषय ऊचुः। युधिष्ठिर यमौ भीम मनसा कुरुतार्ज्जवं।
मनसा कृतशौचा वै शुद्धास्तीर्थानि यास्यथ। शरीरनियमं प्राहुर्ब्राह्मणा मानुषं व्रतं।
मनोविशुद्धां बुद्धिञ्च दैवमाहुर्व्रतं द्विजाः। मनो ह्यदुष्टं शौचाय पर्य्याप्तं वै नराधिप।
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि द्रक्ष्यथ। ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः। ८४२०
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ। ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः।
कृतस्वस्त्ययनाः सर्व्वे मुनिभिर्द्दिव्यमानुषैः। लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च।
नारदस्य च राजेन्द्र देवर्षेः पर्व्वतस्य च। धौम्येन सहिता वीरास्तथा तैर्व्वनवासिभिः।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः। कठिनानि समादाय चीराजिनजटाधराः।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यनुचरंस्ततः। इन्द्रसेनादिभिर्भृत्यैरथैः परिचतुर्द्दशैः। ८४२५
महानसव्यापृतैश्च तथाऽन्यैः परिचारकैः। सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समार्गणाः। प्राङ्मुखाः प्रययुर्व्वीराः पाण्डवा जनमेजय।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि युधिष्ठिरतीर्थयात्रायां त्रिनवतोऽध्यायः॥ ९३ ॥

॥ युधिष्ठिर उवाच॥ नवै निर्गुणमात्मानं मन्ये देवर्षिसत्तम। तथाऽस्मि दुःखसन्तप्तो यथा नान्यो महीपतिः।
परांश्च निर्गुणान्मन्ये न च धर्म्मगतानपि। ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना।
॥ लोमश उवाच॥ नात्र दुःखं त्वया राजन् कार्य्यं पार्थ कथञ्चन। यदधर्म्मेण वर्द्धेयुरधर्म्मरुचयो जनाः।
वर्द्धत्यधर्म्मेण नरस्ततो भद्राणि पश्यति। ततः सपत्नान् जयति समूलस्तु विनश्यति। ८४३०
मया हि दृष्टा दैतेया दानवाश्च महीपते। वर्द्धमाना ह्यधर्म्मेण क्षयञ्चोपगताः पुनः।
पुरा देवयुगे चैवं दृष्टं सर्व्वं मया विभो। अरोचयन् सुरा धर्म्मं धर्म्मं तत्यजिरेऽसुराः।
तीर्थानि देवा विविशुर्नाविशन् भारतासुराः। तानधर्म्मकृतो दर्पः पूर्व्वमेव समाविशत्।
दर्पान्मानः समभवन्मानात् क्रोधो व्यजायत। क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत्।

तानलक्ष्मीर्गतह्रीकान् हीनवृत्तान् वृथाव्रतान् । क्षमा लक्ष्मीश्च धर्म्मश्च नचिरात् प्रजहुस्ततः । ८४९५
लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप । तानलक्ष्मीसमाविष्टान् दर्पोपहतचेतसः ।
दैतेयान् दानवांश्चैव कलिरप्याविशत्ततः । तानलक्ष्मीसमाविष्टान् दानवान् कलिना हतान् ।
दर्पाभिभूतान् कौन्तेय क्रियाहीनानचेतसः । मानाभिभूतानचिराद्विनाशः समपद्यत ।
निर्य्यशसस्तथा दैत्याः कृत्स्नशो विलयं गताः । देवास्तु सागरांश्चैव सरितश्च सरांसि च ।
अभ्यगच्छन् धर्म्मशीलाः पुण्यान्यायतनानि च । तपोभिः क्रतुभिर्द्दानैराशीर्भिश्च पाण्डव । ८५००
प्रजहुः सर्व्वपापानि श्रेयश्च प्रतिपेदिरे । एवमादानवन्तश्च निरादानाश्च सर्व्वशः ।
तीर्थान्यगच्छन् विबुधास्तेनापुर्भूतिमुत्तमां । तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः ।
पुनर्व्वेत्स्यसि तां लक्ष्मीमेष पन्थाः सनातनः । यथैव हि नृगो राजा शिविरौशीनरो यथा ।
भगीरथो वसुमना गयः पूरुः पुरूरवाः । चरमाणास्तपो नित्यं स्पर्शनादम्भसश्च ते ।
तीर्थाभिगमनात्पूता दर्शनाच्च महात्मनां । अलभन्त यशः पुण्यं धनानि च विशाम्पते । ८५०५
तथा त्वमपि राजेन्द्र लब्धा सुविपुलां श्रियं । यथा चेक्ष्वाकुरभवत् सपुत्रजनबान्धवः ।
मुचुकुन्दोऽथ मान्धाता मरुत्तश्च महीपतिः । कीर्त्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ।
देवर्षयश्च कार्त्स्न्येन तथा त्वमपि वेत्स्यसि । धार्त्तराष्ट्रास्तु दर्पेण मोहेन च वशीकृताः ।
नचिराद्वै विनङ्क्ष्यन्ति दैत्या इव न संशयः ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि युधिष्ठिरतीर्थगमने चतुर्नवतोऽध्यायः ॥ ९४ ॥

॥ वैशम्पायन उवाच ॥ ते तथा सहिता वीरा वसन्तस्तत्र तत्र ह । क्रमेण पृथिवीपाल नैमिषारण्यमागताः । ८५१०
ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप । कृताभिषेकाः प्रददुर्गाश्च वित्तञ्च भारत ।
तत्र देवान् पितॄन् विप्रांस्तर्पयित्वा पुनः पुनः । कन्यातीर्थे च तीर्थे च गवां तीर्थे च भारत ।
कालकोट्यां वृषप्रस्थे गिरावुष्य च कौरवाः । बाहुदायां महीपाल चक्रुः सर्व्वेऽभिषेचनं ।
प्रयागे देवयजने देवानां पृथिवीपते । ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमं ।
गङ्गायमुनयोश्चैव सङ्गमे सत्यसङ्गराः । विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्व्वसु । ८५१५
तपस्विजनजुष्टाञ्च ततो वेदीं प्रजापतेः । जग्मुः पाण्डुसुता राजन् ब्राह्मणैः सह भारत ।
तत्र ते न्यवसन् वीरास्तपश्चातस्थुरुत्तमं । सन्तर्पयन्तः सततं वन्येन हविषा द्विजान् ।
ततो महीधरं जग्मुर्धर्म्मज्ञेनाभिसंस्कृतं । राजर्षिणा पुण्यकृता गयेनानुपमद्युते ।
नगो गयशिरो यत्र पुण्या चैव महानदी । वानीरमालिनी रम्या नदी पुलिनशोभिता ।
दिव्यं पवित्रकूटञ्च पवित्रधरणीधरं । ऋषिजुष्टं सुपुण्यन्तत्तीर्थं ब्रह्मसरोत्तमं । ८५२०
अगस्त्यो भगवान् यत्र गतो वैवस्वतं प्रति । उवास च स्वयं तत्र धर्म्मराजः सनातनः ।
सर्व्वासां सरिताञ्चैव समुद्भेदो विशाम्पते । यत्र सन्निहितो नित्यं महादेवः पिनाकधृक् ।
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे । ऋषियज्ञेन महता यत्राक्षयवटो महान् ।

अक्षये देवयजने अक्षयं यत्र वै फलं। ते तु तत्रोपवासांस्तु चक्रुर्निश्चितमानसाः।
ब्राह्मणास्तत्र शतशः समाजग्मुस्तपोधना:। चातुर्म्मास्येनायजन्त आर्षेण विधिना तदा। ८५२५
तत्र विद्यातपोवृद्धा ब्राह्मणा वेदपारगाः। कथां प्रचक्रिरे पुण्यां सदसिस्था महात्मनां।
तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः। शमठोऽकथयद्राजन्नामूर्त्तरयसं गयं।
॥ शमठ उवाच॥ अमूर्त्तरयसः पुत्रो गयो राजर्षिसत्तमः। पुण्यानि यस्य कर्म्माणि तानि मे शृणु भारत।
यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः। यत्रान्नपर्व्वता राजन् शतशोऽथ सहस्रशः।
घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा। व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः। ८५३०
अहन्यहनि चाप्येवं याचतां संप्रदीयते। अन्ये चात्र ब्राह्मणा राजन् भुञ्जतेऽन्नं सुसंस्कृतं।
तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः। नच प्रज्ञायते किञ्चिद्ब्रह्मशब्देन भारत।
पुण्येन चरता राजन् भूर्द्दिशः खं नभस्तथा। आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतं।
तत्र स्म गाथा गायन्ति मनुष्या भरतर्षभ। अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्च्चसः।
गयस्य यज्ञे केत्वद्य प्राणिनो भोक्तुमीप्सवः। तत्र भोजनशिष्टस्य पर्व्वताः पञ्चविंशतिः। ८५३५
न तत्पूर्व्वे जनाश्चक्रुर्न करिष्यन्ति चापरे। गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः।
कथन्तु देवा हविषा गयेन परितर्पिताः। पुनः शक्ष्यन्त्युपादातुमन्यैर्द्दत्तानि कानिचित्।
सिकता वा यथा लोके यथा वा दिवि तारकाः। यथा वा वर्षतो धारा असंख्येयाः स्म केनचित्।
तथा गणयितुं शक्या गययज्ञे न दक्षिणाः। एवंविधाः सुबहवस्तस्य यज्ञा महीपते। बभूवुरस्य सरसः समीपे कुरुनन्दन।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गययज्ञकथने पञ्चनवतोऽध्यायः॥ ९५॥

॥ वैशम्पायन उवाच॥ ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः। अगस्त्याश्रममासाद्य दुर्ज्जयायामुवास ह। ८५४०
तत्रैव लोमशं राजा पप्रच्छ वदताम्बरः। अगस्त्येनेह वातापिः किमर्थमुपशामितः।
आसीद्वा किम्प्रभावश्च स दैत्यो मानवान्तकः। किमर्थञ्चोदितो मन्युरगस्त्यस्य महात्मनः।
॥ लोमश उवाच॥ इल्वलो नाम दैतेय आसीत् कौरवनन्दन। मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः।
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः। पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु।
तस्मिन् स ब्राह्मणो नादात् पुत्रं वासवसम्मितं। चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशं। ८५४५
तदाप्रभृति राजेन्द्र इल्वलो ब्रह्महाऽसुरः। मन्युमान् भ्रातरं छागं मायावी ह्यकरोत्ततः।
मेषरूपी च वातापिः कामरूप्यभवत् क्षणात्। संस्कृत्य च भोजयति ततो विप्रं जिघांसति।
स चाह्वयति यं वाचा गतं वैवस्वतक्षयं। स पुनर्द्देहमास्थाय जीवन्स्म प्रत्यदृश्यत।
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतं। तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत्।
तामिल्वलेन महता स्वरेण वाचमीरितां। श्रुत्वाऽतिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः। ८५५०
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः। वातापिः प्रहसन्राजन्निश्चक्राम विशाम्पते।

एवं स ब्राह्मणान्राजन् भोजयित्वा पुनः पुनः । हिंसयामास दैतेय इल्वलो दुष्टचेतनः ।
अगस्त्यश्चापि भगवानेतस्मिन् काल एव तु । पितॄन् ददर्श गर्त्ते वै लम्बमानानधोमुखान् ।
सोऽपृच्छल्लम्बमानांस्तान् भवन्त इव कम्पिताः । सन्तानहेतोरिति ते प्रत्यूचुर्ब्रह्मवादिनः ।
ते तस्मै कथयामासुर्व्वयन्ते पितरः स्वकाः । गर्त्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः । ८८५५
यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमं । स्यान्नोऽस्मान्निरयान्मोक्षस्त्वञ्च पुत्राप्नुयाः गतिं ।
स तानुवाच तेजस्वी सत्यधर्म्मपरायणः । करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः ।
ततः प्रसवसन्तानं चिन्तयन् भगवानृषिः । आत्मनः प्रसवस्यार्थे नापश्यत् सदृशीं स्त्रियं ।
स तस्य तस्य सत्त्वस्य तत्तदङ्गमनुत्तमं । सम्भृत्य तत्समैरङ्गैर्निर्म्ममे स्त्रियमुत्तमां ।
स तां विदर्भराजस्य पुत्रार्थं तप्यतस्तपः । निर्म्मितामात्मनोऽर्थाय मुनिः प्रादान्महातपाः । ८८६०
सा तत्र जज्ञे सुभगा विद्युत्सौदामिनी यथा । विभ्राजमाना वपुषा व्यवर्द्धत शुभानना ।
जातमात्राञ्च तां दृष्ट्वा वैदर्भः पृथिवीपतिः । प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत ।
अभ्यनन्दन्त तां सर्व्वे ब्राह्मणा वसुधाधिप । लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः ।
ववृधे सा महाराज बिभ्रती रूपमुत्तमं । अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा ।
तां यौवनस्थां राजेन्द्र शतं कन्याः स्वलङ्कृताः । दासीशतञ्च कल्याणीमुपतस्थुर्व्वशानुगाः । ८८६५
सा स्म दासीशतवृता मध्ये कन्याशतस्य च । आस्ते तेजस्विनी कन्या रोहिणीव दिवि प्रभा ।
यौवनस्थामपि च तां शीलाचारसमन्वितां । न वव्रे पुरुषः कश्चिद्भयात्तस्य महात्मनः ।
सा तु सत्यवती कन्या रूपेणाप्सरसोऽप्यति । तोषयामास पितरं शीलेन स्वजनं तथा ।
वैदर्भीन्तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता । मनसा चिन्तयामास कस्मै दद्यामिमां सुतां ।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्योपाख्याने षण्णवतोऽध्यायः ॥ ९६ ॥
॥ लोमश उवाच ॥ यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति । तदाऽभिगम्य प्रोवाच वैदर्भं पृथिवीपतिं । ८८७०
राजन्निवेशे बुद्धिर्मे वर्त्तते पुत्रकारणात् । वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे ।
एवमुक्तः स मुनिना महीपालो विचेतनः । प्रत्याख्यानाय चाशक्तः प्रदातुञ्चैव नैच्छत ।
ततः स भार्य्यामभ्येत्य प्रोवाच पृथिवीपतिः । महर्षिर्व्वीर्य्यवानेष क्रुद्धः शापाग्निना दहेत् ।
तं तथा दुःखितं दृष्ट्वा सभार्य्यं पृथिवीपतिं । लोपामुद्राऽभिगम्येदं काले वचनमब्रवीत् ।
न मत्कृते महीपाल पीडामभ्येतुमर्हसि । प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः । ८८७५
दुहितुर्व्वचनाद्राजा सोऽगस्त्याय महात्मने । लोपामुद्रां ततः प्रादाद्विधिपूर्व्वं विशाम्पते ।
प्राप्य भार्य्यामगस्त्यस्तु लोपामुद्रामभाषत । महार्हाण्युत्सृजैतानि वासांस्याभरणानि च ।
ततः सा दर्शनीयानि महार्हाणि तनूनि च । समुत्ससर्ज्ज रम्भोरुर्व्वसनान्यायतेक्षणा ।
तपश्चीराणि जग्राह वल्कलान्यजिनानि च । समानव्रतचर्य्या च बभूवायतलोचना ।
गङ्गाद्वारमथागम्य भगवानृषिसत्तमः । उग्रमातिष्ठत तपः सह पत्न्याऽनुकूलया । ८८८०

सा प्रीता बहुमानाच्च पतिं पर्य्यचरत्तदा। अगस्त्यश्च परां प्रीतिं भार्य्यायामाचरत् प्रभुः।
ततो बहुतिथे काले लोपामुद्रां विशाम्पते। तपसा द्योतितां स्नातां ददर्श भगवानृषिः।
स तस्याः परिचारेण शौचेन च दमेन च। श्रिया रूपेण च प्रीतो मैथुनायाजुहाव तां।
ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भाविनी। सा तदा प्रणयं वाक्यं भगवन्तमथाब्रवीत्।
असंशयं प्रजाहेतोर्भार्य्यां पतिरविन्दत। या तु त्वयि मम प्रीतिस्तामृषे कर्त्तुमर्हसि। ८५८५
यथा पितुर्गृहे विप्र प्रासादे शयनं मम। तथाविधे त्वं शयने मामुपैतुमिहार्हसि।
इच्छामि त्वां स्रग्विनञ्च भूषणैश्च विभूषितं। उपसर्त्तुं यथाकामं दिव्याभरणभूषिता।
अन्यथा नोपतिष्ठेयं चीरकाषायवासिनी। नैवापवित्रो विप्रर्षे भूषणोऽयं कथञ्चन।
॥ अगस्त्य उवाच ॥ न ते धनानि विद्यन्ते लोपामुद्रे तथा मम। यथाविधानि कल्याणि पितुस्तव सुमध्यमे।
॥ लोपामुद्रोवाच ॥ ईशोऽसि तपसा सर्व्वं समाहर्त्तुं तपोधन। क्षणेन जीवलोके यद्वसु किञ्चन विद्यते। ८५९०
॥ अगस्त्य उवाच ॥ एवमेतद्यथात्थ त्वं तपोव्ययकरन्तु तत्। यथा तु मे न नश्येत तपस्तन्मां प्रचोदय।
॥ लोपामुद्रोवाच ॥ अल्पावशिष्टः कालोऽयमृतौर्मम तपोधन। न चान्यथाऽहमिच्छामि त्वामुपैतुं कथञ्चन।
न चापि धर्म्ममिच्छामि विलोप्तुन्ते कथञ्चन। एवन्तु मे यथाकामं सम्पादयितुमर्हसि।
॥ अगस्त्य उवाच ॥ यद्येष कामः सुभगे तव बुद्ध्या विनिश्चितः। हर्तुं गच्छाम्यहं भद्रे चर काममिह स्थिता।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्योपाख्याने सप्तनवतोऽध्यायः॥ ९७॥
॥ लोमश उवाच ॥ ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु। श्रुतर्व्वाणं महीपालं यं वेदाभ्यधिकं नृपैः। ८५९५
स विदित्वा तु नृपतिः कुम्भयोनिमुपागतं। विषयान्ते सहामात्यः प्रत्यगृह्णात् सुसत्कृतं।
तस्मै चार्घ्यं यथान्यायमानीय पृथिवीपतिः। प्राञ्जलिः प्रयतो भूत्वा पप्रच्छागमनेऽर्थिनां।
॥ अगस्त्य उवाच ॥ वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते। यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ मे।
॥ लोमश उवाच ॥ तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत्। अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे।
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः। सर्व्वथा प्राणिनां पीडामुपादानादमन्यत। ८६००
स श्रुतर्व्वाणमादाय ब्रध्नश्वमगमत्ततः। स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि।
तयोरर्घ्यञ्च पाद्यञ्च ब्रध्नश्वः प्रत्यवेदयत्। अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे।
॥ अगस्त्य उवाच ॥ वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते। यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नौ।
॥ लोमश उवाच ॥ तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत्। अतो ज्ञात्वा तु गृह्णीतं यदत्र व्यतिरिच्यते।
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विज। सर्व्वथा प्राणिनां पीडामुपादानादमन्यत। ८६०५
पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनं। अगस्त्यश्च श्रुतर्व्वा च ब्रध्नश्वश्च महीपतिः।
त्रसदस्युस्तु तान् दृष्ट्वा प्रत्यगृह्णाद्यथाविधि। अभिगम्य महाराज विषयान्ते महामनाः।
अर्चयित्वा यथान्यायमिक्ष्वाकुराजसत्तमः। समस्तांश्च ततोऽपृच्छत् प्रयोजनमुपक्रमे।
॥ अगस्त्य उवाच ॥ वित्तकामानिह प्राप्तान् विद्धि नः पृथिवीपते। यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः।

॥ लोमश उवाच ॥ तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् । एतज्ज्ञात्वा समादद्ध्वं यदत्र व्यतिरिच्यते । ८८१०
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः । सर्व्वथा प्राणिनां पीडामुपादानादमन्यत ।
ततः सर्व्वे समेत्याथ ते नृपास्तं महामुनिम् । इदमूचुर्महाराज समवेक्ष्य परस्परम् ।
अयं वै दानवो ब्रह्मन्निल्वलो वसुमान् भुवि । तमभिक्रम्य सर्व्वेऽद्य वयं याचामहे वसु ।
॥ लोमश उवाच ॥ तेषां तदासीदुचितमिल्वलस्यैव भिक्षणम् । ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्योपाख्याने अष्टनवतोऽध्यायः ॥ ९८ ॥
॥ लोमश उवाच ॥ इल्वलस्तान् विदित्वा तु महर्षिसहितान्नृपान् । उपस्थितान् सहामात्यो विषयान्ते ह्यपूजयत् । ८८१५
तेषां ततोऽसुरश्रेष्ठ आतिथ्यमकरोत्तदा । स संस्कृतेन कौरव्य भ्रात्रा वातापिना तदा ।
ततो राजर्षयः सर्व्वे विषण्णा गतचेतसः । वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ।
अथाऽब्रवीदगस्त्यस्तान् राजर्षीनृषिसत्तमः । विषादो वो न कर्त्तव्यो अहं भोक्ष्ये महासुरम् ।
धुर्य्यासनमथासाद्य निषसाद महामुनिः । तं पर्य्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ।
अगस्त्य एव कृत्स्नन्तु वातापिं बुभुजे ततः । भुक्तवत्यसुरो ऽऽह्वानमकरोत्तस्य चेल्वलः । ८८२०
ततो वायुः प्रादुरभूदगस्त्यस्य महात्मनः । शब्देन महता तात गर्ज्जन्निव यथा घनः ।
वातापे निष्क्रमस्वेति पुनः पुनरुवाच ह । तं प्रहस्याब्रवीद्राजन्नगस्त्यो मुनिसत्तमः ।
कुतो निष्क्रमितुं शक्तो मया जीर्णस्तु सोऽसुरः । इल्वलस्तु विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ।
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् । किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ।
प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा । ईशं ह्यसुर विद्मस्त्वां वयं सर्व्वे धनेश्वरम् । ८८२५
एते च नातिधनिनो धनार्थश्च महान्मम । यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः ।
ततोऽभिवाद्य तमृषिमिल्वलो वाक्यमब्रवीत् । दित्सितं यदि वेत्सि त्वं ततो दास्यामि ते वसु ।
॥ अगस्त्य उवाच ॥ गवां दशसहस्राणि राज्ञामेकैकशोऽसुर । तावदेव सुवर्णस्य दित्सितं ते महासुर ।
मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः । मनोजवौ वाजिनौ च दित्सितं ते महासुर ।
जिज्ञास्यतां रथः सद्यो व्यक्त एष हिरण्मयः । जिज्ञास्यमानः स रथः कौन्तेयासीद्धिरण्मयः । ८८३०
ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु । विराजश्च सुरावश्च तस्मिन् युक्तौ रथे हयौ ।
ऊहतुः स्म वसून्याशु तावगस्त्याश्रमं प्रति । सर्व्वान् राज्ञः सहागस्त्यान्निमेषादिव भारत ।
अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा । कृतवांश्च मुनिः सर्व्वं लोपामुद्राचिकीर्षितम् ।
॥ लोपामुद्रोवाच ॥ कृतवानसि तत्सर्व्वं भगवन्मम काङ्क्षितम् । उत्पादय सकृन्मह्यमपत्यं वीर्य्यवत्तरम् ।
॥ अगस्त्य उवाच ॥ तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने । विचारणामपत्ये तु तव वक्ष्यामि तां शृणु । ८८३५
सहस्रन्तेऽस्तु पुत्त्राणां शतं वा दशसम्मितम् । दश वा शततुल्याः स्युरेको वाऽपि सहस्रजित् ।
॥ लोपामुद्रोवाच ॥ सहस्रसम्मितः पुत्त्र एकोऽस्तु तपोधन । एको हि बहुभिः श्रेयान् विद्वान् साधुरसाधुभिः ।
स तथेति प्रतिज्ञाय तया समभवन्मुनिः । समये समशीलिन्या श्रद्धावान् श्रद्दधानया ।

तत आधाय गर्भन्तमगमद्वनमेव सः। तस्मिन् वनगते गर्भो ववृधे सप्त शारदान्।
सप्तमेऽब्दे गते चापि प्राच्यवत् स महाकविः। ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत। ८१४०
साङ्गोपनिषदान् वेदान् जपन्निव महातपाः। तस्य पुत्रोऽभवदृषेः स तेजस्वी महाद्विजः।
स बाल एव तेजस्वी पितुस्तस्य निवेशने। इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत्।
तथायुक्तन्तु तं दृष्ट्वा मुमुदे स मुनिस्तदा। एवं स जनयामास भारतापत्यमुत्तमं।
लेभिरे पितरश्चास्य लोकान् राजन् यथेप्सितान्। तत ऊर्द्ध्वमयं ख्यातस्त्वगस्त्यस्याश्रमो भुवि।
प्राह्रादिरेवं वातापिरगस्त्येनोपशामितः। तस्यायमाश्रमो राजन्रमणीयैर्गुणैर्युतः। ८१४५
एषा भागीरथी पुण्या देवगन्धर्व्वसेविता। वातेरिता पताकेव विराजति नभस्तले।
प्रतार्य्यमाणा कूटेषु यथानिम्नेषु नित्यशः। शिलातलेषु संत्रस्ता पन्नगेन्द्रवधूरिव।
दक्षिणां वै दिशं सर्व्वां प्लावयन्ती च मातृवत्। पूर्व्वं शम्भोर्जटाभ्रष्टा समुद्रमहिषी प्रिया।
अस्यां नद्यां सुपुण्यायां यथेष्टमवगाह्यतां ॥ लोमश उवाच ॥ युधिष्ठिर निबोधेदं त्रिषु लोकेषु विश्रुतं।
भृगोस्तीर्थं महाराज महर्षिगणसेवितं। यत्रोपस्पृष्टवान् रामो हृतं तेजस्तदाप्तवान्। ८१५०
तत्र त्वं भ्रातृभिः सार्द्धं कृष्णया चैव पाण्डव। दुर्य्योधनहृतं तेजः पुनरादातुमर्हसि।
कृतवैरेण रामेण यथाचोपहृतं पुनः ॥ वैशम्पायन उवाच ॥ स तत्र भ्रातृभिश्चैव कृष्णया चैव पाण्डवः।
स्नात्वा देवान्पितॄंश्चैव तर्पयामास भारत। तस्य तीर्थस्य रूपं वै दीप्ताद्दीप्ततरं बभौ।
अप्रधृष्यतरश्चासीच्छात्रवाणां नरर्षभ। अपृच्छच्चैव राजेन्द्र लोमशं पाण्डुनन्दनः।
भगवन् किमर्थं रामस्य हृतमासीद्वपुः प्रभो। कथं प्रत्याहृतञ्चैव एतदाचक्ष्व पृच्छतः। ८१५५
॥ लोमश उवाच ॥ शृणु रामस्य राजेन्द्र भार्गवस्य च धीमतः। जातो दशरथस्यासीत् पुत्रो रामो महात्मनः।
विष्णुः स्वेन शरीरेण रावणस्य वधाय वै। पश्यामस्तमयोध्यायां जातं दाशरथिं ततः।
ऋचीकनन्दनो रामो भार्गवो रेणुकासुतः। तस्य दाशरथेः श्रुत्वा रामस्याक्लिष्टकर्म्मणः।
कौतूहलान्वितो रामस्त्वयोध्यामगमत् पुनः। धनुरादाय तद्दिव्यं क्षत्रियाणां निवर्हणं।
जिज्ञासमानो रामस्य वीर्य्यं दाशरथेस्तदा। तं वै दशरथः श्रुत्वा विषयान्तमुपागतं। ८१६०
प्रेषयामास रामस्य रामं पुत्रं पुरस्कृतं। स तमभ्यागतं दृष्ट्वा उद्यतास्त्रमवस्थितं।
प्रहसन्निव कौन्तेय रामो वचनमब्रवीत्। कृतकालं हि राजेन्द्र धनुरेतन्मया विभो।
समारोपय यत्नेन यदि शक्नोषि पार्थिव। इत्युक्तस्त्वाह भगवंस्त्वन्नाधिक्षेप्तुमर्हसि।
नाहमप्यधमो धर्म्मे क्षत्रियाणां द्विजातिषु। इक्ष्वाकूणां विशेषेण बाहुवीर्य्येण कत्थनं।
तमेवंवादिनं तत्र रामो वचनमब्रवीत्। अलं वै व्यपदेशेन धनुरायच्छ राघव। ८१६५
ततो जग्राह रोषेण क्षत्रियर्षभसूदनं। रामो दाशरथिर्द्दिव्यं हस्ताद्रामस्य कार्म्मुकं।
धनुरारोपयामास सलील इव भारत। ज्याशब्दमकरोच्चैव स्मयमानः स वीर्य्यवान्।
तस्य शब्दस्य भूतानि वित्रसन्त्यशनेरिव। अथाब्रवीत्तदा रामो रामं दाशरथिस्तदा।

इदमारोपितं ब्रह्मन् किमन्यत् करवाणि ते । ततो रामो ददौ दिव्यं जामदग्न्यो महात्मने ।
शरमाकर्णदेशान्तमयमाकृष्यतामिति ॥ लोमश उवाच ॥ एतच्छ्रुत्वाऽब्रवीद्रामः प्रदीप्त इव मन्युना । ८६००
श्रूयते क्षम्यते चैव दर्पपूर्णोऽसि भार्गव । त्वया ह्यधिगतं तेजः क्षत्रियेभ्यो विशेषतः ।
पितामहप्रसादेन तेन मां क्षिपसि ध्रुवं । पश्य मां स्वेन रूपेण चक्षुस्ते वितराम्यहं ।
ततो रामशरीरे वै रामः पश्यति भार्गवः । आदित्यान् सवसून् रुद्रान् साध्यांश्च समरुद्गणान् ।
पितरो हुताशनश्च नक्षत्राणि ग्रहास्तथा । गन्धर्व्वा राक्षसा यक्षा नद्यस्तीर्थानि यानि च ।
ऋषयो वालखिल्याश्च ब्रह्मभूताः सनातनाः । देवर्षयश्च कार्त्स्न्येन समुद्राः पर्व्वतास्तथा । ८६०५
वेदाश्च सोपनिषदो वषट्कारैः सहाध्वरैः । चेतोमन्ति च सामानि धनुर्व्वेदश्च भारत ।
मेघवृन्दानि वर्षाणि विद्युतश्च युधिष्ठिर । ततः स भगवान् विष्णुस्तं वै बाणं मुमोच ह ।
शुष्काशनिसमाकीर्णं महोल्काभिश्च भारत । पांशुवर्षेण महता मेघवर्षैश्च भूतलं ।
भूमिकम्पैश्च निर्घातैर्नादैश्च विपुलैरपि । स रामं विह्वलं कृत्वा तेजश्चाक्षिप्य केवलं ।
आगच्छज्ज्वलितो बाणो रामबाहुप्रचोदितः । स तु विह्वलतां गत्वा प्रतिलभ्य च चेतनां । ८६१०
रामः प्रत्यागतप्राणः प्राणमद्विष्णुतेजसं । विष्णुना सोऽभ्यनुज्ञातो महेन्द्रमगमत् पुनः ।
भीतस्तु तत्र न्यवसत् व्रीडितस्तु महातपाः । ततः संवत्सरेऽतीते ह्रतौजसमवस्थितं ।
निर्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन् ॥ पितर ऊचुः ॥ न वै सम्यगिदं पुत्र विष्णुमासाद्य वै कृतं ।
स हि पूज्यश्च मान्यश्च त्रिषु लोकेषु सर्व्वदा । गच्छ पुत्र नदीं पुण्यां वधूसरकृताह्वयां ।
तत्रोपस्पृश्य तीर्थेषु पुनर्व्वपुरवाप्स्यसि । दीप्तोदं नाम तत्तीर्थं यत्र ते प्रपितामहः । ८६१५
भृगुर्देवयुगे राम तप्तवानुत्तमं तपः । तत्तथा कृतवान् रामः कौन्तेय वचनात् पितुः ।
प्राप्तवांश्च पुनस्तेजस्तीर्थेऽस्मिन् पाण्डुनन्दन । एतदीदृशकं तात रामेणाक्लिष्टकर्म्मणा ।
प्राप्तमासीन्महाराज विष्णुमासाद्य वै पुरा ।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि जामदग्न्यतेजोहानिकथने एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ युधिष्ठिर उवाच ॥ भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः । कर्म्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजोत्तम ।
॥ लोमश उवाच ॥ शृणु राजन् कथां दिव्यामद्भुतामतिमानुषीं । अगस्त्यस्य महाराज प्रभावममितौजसः । ८६२०
आसन् कृतयुगे घोरा दानवा युद्धदुर्म्मदाः । कालकेया इति ख्याता गणाः परमदारुणाः ।
ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः । समन्तात् पर्य्यधावन्त महेन्द्रप्रमुखान् सुरान् ।
ततो वृत्रवधे यत्नमकुर्व्वंस्त्रिदशाः पुरा । पुरन्दरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ।
कृताञ्जलींस्तु तान् सर्व्वान् परमेष्ठी उवाच ह । विदितं मे सुराः सर्व्वं यद्वः कार्य्यं चिकीर्षितं ।
तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ । दधीच इति विख्यातो महानृषिरुदारधीः । ८६२५
तं गत्वा सहिताः सर्व्वे वरं वै सम्प्रयाचत । स वो दास्यति धर्म्मात्मा सुप्रीतेनान्तरात्मना ।
स वाच्यः सहितैः सर्व्वैर्भवद्भिर्जयकाङ्क्षिभिः । स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस्य हिताय वै ।

स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति। तस्यास्थिभिर्म्महाघोरं वज्रं संक्रियतां दृढं।
महच्छत्रुहनं घोरं षडस्रि भीमनिस्वनं। तेन वज्रेण वै वृत्रं बधिष्यति शतक्रतुः।
एतद्वः सर्व्वमाख्यातं तस्माच्छीघ्रं विधीयतां। एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहं। ८७००
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः। सरस्वत्याः परे पारे नानाद्रुमलतावृतं।
षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव। पुंस्कोकिलरवोन्मिश्रं जीवंजीवकनादित।
महिषैश्च वराहैश्च सृमरैश्चमरैरपि। तत्र तत्रानुचरितं शार्दूलभयवर्जितैः।
करेणुभिर्व्वारणैश्च प्रभिन्नकरटामुखैः। सरोऽवगाढैः क्रीडद्भिः समन्तादनुनादितं।
सिंहैर्व्याघ्रैर्म्महानादन्नदद्भिरनुनादितं। अपरैश्चापि संलीनैर्गुहाकन्दरशायिभिः। ८७०५
तेषु तेष्ववकाशेषु शोभितं सुमनोरमं। त्रिपिष्टपसमप्रख्यं दधीचाश्रममागमन्।
तत्रापश्यन् दधीचन्ते दिवाकरसमद्युतिं। जाज्वल्यमानं वपुषा यथा लक्ष्म्या पितामहं।
तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च। अयाचन्त वरं सर्व्वे यथोक्तं परमेष्ठिना।
ततो दधीचः परमः प्रतीतः सुरोत्तमांस्तानिदमभ्युवाच। करोमि यद्वो हितमद्य देवाः स्वञ्चापि देहं स्वयमुत्सृजामि।
स एवमुक्त्वा द्विपदां वरिष्ठः प्राणान् वशी स्वान् सहसोत्ससर्ज्ज। ततः सुरास्ते जगृहुः परासोरस्थीनि तस्याथ यथोपदेशं। ८७१०
प्रहृष्टरूपाश्च जयाय देवास्त्वष्टारमागम्य तमर्थमूचुः। त्वष्टातु तेषां वचनं निशम्य प्रहृष्टरूपः प्रयतः प्रयत्नात्।
चकार वज्रं भृशमुग्ररूपं कृत्वाच शक्रं स उवाच हृष्टः। अनेन वज्रप्रवरेण देव भस्मीकुरुष्वाद्य सुरारिमुग्रं।
ततो हतारिः सगणः सुखं वै प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः। त्वष्ट्रा तथोक्तस्तु पुरन्दरस्तद्वज्रं प्रहृष्टः प्रयतो ह्यगृह्णात्।
इतिश्रीमहाभरते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि वज्रनिर्म्माणकथने शतोऽध्यायः॥ १००॥
॥ लोमश उवाच ॥ ततः स वज्री बलिभिर्दैवतैरभिरक्षितः। आससाद ततो वृत्रं स्थितमावृत्य रोदसी।
कालकेयैर्म्महाकायैः समन्तादभिरक्षितं। समुद्यतप्रहरणैः सशृङ्गैरिव पर्व्वतैः। ८७१५
ततो युद्धं समभवद्देवानां दानवैः सह। मुहूर्त्तं भरतश्रेष्ठ लोकत्रासकरं महत्।
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः। आसीत् सुतुमुलः शब्दः शरीरेष्वभिपात्यतां।
शिरोभिः प्रपतद्भिश्चाप्यन्तरीक्षान्महीतलं। तालैरिव महाराज वृन्ताद्भ्रष्टैरदृश्यत।
ते हेमकवचा भूत्वा कालेयाः परिघायुधाः। त्रिदशानभ्यवर्षन्त दावदग्धा इवाद्रयः।
तेषां वेगवतां वेगं साभिमानं प्रधावतां। न शेकुस्त्रिदशाः सोढुं ते भग्नाः प्राद्रवन् भयात्। ८७२०
तान् दृष्ट्वा द्रवतो भीतान् सहस्राक्षः पुरन्दरः। वृत्रे विवर्द्धमाने च कश्मलं महदाविशत्।
कालेन भयसन्त्रस्तो देवः साक्षात्पुरन्दरः। जगाम शरणं शीघ्रं तन्तु नारायणं प्रभुं।
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः। स्वतेजो व्यदधच्छक्रे बलमस्य विवर्द्धयन्।
विष्णुना गोपितं शक्रं दृष्ट्वा देवगणास्ततः। सर्व्वे तेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः।
स समाप्यायितः शक्रो विष्णुना दैवतैः सह। ऋषिभिश्च महाभागैर्ब्बलवान् समपद्यत। ८७२५
[illegible] बलस्थं त्रिदशाधिपन्तु ननाद वृत्रो महतो निनादान्। तस्य प्रणादेन धरा दिशश्च खं द्यौर्नभश्चापि चचाल सर्व्वं।

ततो महेन्द्रः परमाभितप्तः श्रुत्वा रवं घोररूपं महान्तं । भये निमग्नस्त्वरितो मुमोच वज्रं महत्तस्य वधाय राजन् ।
स शक्रवज्राभिहतः पपात महासुरः काञ्चनमाल्यधारी । यथा महाशैलवरः पुरस्तात् स मन्दरो विष्णुकराद्विमुक्तः ।
तस्मिन्हते दैत्यवरे भयार्त्तः शक्रः प्रदुद्राव सरः प्रवेष्टुं । वज्रं स मेने न कराद्विमुक्तं वृत्रं भयाच्चापि हतं न मेने ।
सर्व्वे च देवा मुदिताः प्रहृष्टा महर्षयश्चेन्द्रमभिष्टुवन्तः । सर्व्वांश्च दैत्यांस्त्वरिताः समेत्य जघ्नुः सुरा वृत्रवधाभितप्तान् । ८७१०
ते त्रास्यमानास्त्रिदशैः समेतैः समुद्रमेवाविविशुर्भयार्त्ताः । प्रविश्य चैवोदधिमप्रमेयं झषाकुलं नक्रसमाकुलञ्च ।
तदा स्म मन्त्रं सहिताः प्रचक्रुस्त्रैलोक्यनाशार्थमभिस्मयन्तः । तत्र स्म केचिन्मतिनिश्चयज्ञास्तांस्तानुपायाननुवर्णयन्ति ।
तेषान्तु तत्र क्रमकालयोगाद्घोरा मतिश्चिन्तयतां बभूव । ये सन्ति विद्यातपसोपपन्नास्तेषां विनाशः प्रथमन्तु कार्य्यः ।
लोका हि सर्व्वे तपसा ध्रियन्ते तस्मात्त्वरध्वं तपसः क्षयाय । ये सन्ति केचिच्च वसुन्धरायां तपस्विनो धर्म्मविदश्च तज्ज्ञाः ।
तेषां वधः क्रियतां क्षिप्रमेव तेषु प्रणष्टेषु जगत्प्रणष्टं । एवं हि सर्व्वे गतबुद्धिभावा जगद्विनाशे परमप्रहृष्टाः । ८७१५
दुर्गं समाश्रित्य महोर्म्मिमन्तं रत्नाकरं वरुणस्यालयं स्म ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि वृत्रवधोपाख्याने एकशतोऽध्यायः ॥ १०१ ॥

॥ लोमश उवाच ॥ समुद्रन्ते समाश्रित्य वारुणं निधिमम्भसः । कालेयाः सम्प्रवर्त्तन्त त्रैलोक्यस्य विनाशने ।
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् । आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ।
वशिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः । अशीतिः शतमष्टौ च नव चान्ये तपस्विनः ।
च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितं । फलमूलाशनानां हि मुनीनां भक्षितं शतं । ८७२०
एवं रात्रौ स्म कुर्व्वन्ति विविशुश्चार्णवं दिवा । भरद्वाजाश्रमे चैव नियतब्रह्मचारिणः ।
वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिषूदिताः । एवं क्रमेण सर्व्वांस्तानाश्रमान् दानवास्तदा ।
निशायां परिबाधन्ते मत्ता भुजबलाश्रयात् । कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान् बहून् ।
न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम । एवं प्रवृत्तान् दैत्यांस्तांस्तापसेषु तपस्विषु ।
प्रभाते समदृश्यन्त नियमाहारकर्षिताः । महीतलस्था मुनयः शरीरैर्गतजीवितैः । ८७२५
क्षीणमांसैर्व्विरुधिरैर्व्विमज्जान्त्रैर्व्विसन्धिभिः । आकीर्णैराबभौ भूमिः शङ्खानामिव राशिभिः ।
कलशैर्व्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च । विकीर्णैरग्निहोत्रैश्च भूर्ब्बभूव समावृता ।
निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियं । जगदासीन्निरुत्साहं कालेयभयपीडितं ।
एवं संक्षीयमाणाश्च मानवा मनुजेश्वर । आत्मत्राणपरा भीताः प्राद्रवन्त दिशो भयात् ।
केचिद्गुहाः प्रविविशुर्निर्झरांश्चापरे तथा । अपरे मरणोद्विग्ना भयात्प्राणान् समुत्सृजन् । ८७३०
केचिदत्र महेष्वासाः शूराः परमहर्षिताः । मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे ।
न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान् । श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च ।
जगत्युपशमं जाते नष्टयज्ञोत्सवक्रिये । आजग्मुः परमामार्त्तिं त्रिदशा मनुजेश्वर ।
समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे । शरण्यं शरणं देवं नारायणमजं विभुं ।
तेऽभिगम्य नमस्कृत्य वैकुण्ठमपराजितं । ततो देवाः समस्तास्ते तदोचुर्मधुसूदनं । ८७३५

त्वं नः स्रष्टा च कर्त्ता च हर्त्ता च जगतः प्रभो। त्वया सृष्टमिदं किंच यच्चेङ्गं यच्च नेङ्गति।
त्वया भूमिः पुरा नष्टा समुद्रात् पुष्करेक्षण। वाराहं वपुराश्रित्य जगदर्थे समुद्धृता।
आदिदैत्यो महावीर्य्यो हिरण्यकशिपुः पुरा। नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम।
अवध्यः सर्व्वभूतानां बलिश्चापि महासुरः। वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया।
असुरस्य महेष्वासो जम्भ इत्यभिविश्रुतः। यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः। ८७६०
एवमादीनि कर्म्माणि येषां संख्या न विद्यते। अस्माकं भयभीतानां त्वं गतिर्मधुसूदन।
तस्मात्त्वां देवदेवेश लोकार्थं ज्ञापयामहे। रक्ष लोकांश्च देवांश्च शक्रञ्च महतो भयात्।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि विष्णुस्तवे द्व्यधिकशततोऽध्यायः॥ १०२॥
॥ देवा ऊचुः॥ तव प्रसादाद्वर्द्धन्ते प्रजाः सर्व्वाश्चतुर्व्विधाः। ता भाविता भावयन्ति हव्यकव्यैर्द्दिवौकसः।
लोका ह्येवं विवर्द्धन्ते ह्यन्योन्यं समुपाश्रिताः। त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः।
इदञ्च समनुप्राप्तं लोकानां भयमुत्तमं। नच जानीम केनेमे रात्रौ बध्यन्ति ब्राह्मणाः। ८७६५
क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति। ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति।
त्वत्प्रसादान्महाबाहो लोकाः सर्व्वे जगत्पते। विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः।
॥ विष्णुरुवाच॥ विदितं मे सुराः सर्व्वं प्रजानां क्षयकारणं। भवतान्चापि वक्ष्यामि शृणुध्वं विगतज्वराः।
कालेय इति विख्यातो गणः परमदारुणः। तैश्च वृत्रं समाश्रित्य जगत्सर्व्वं प्रमाथितं।
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता। जीवितं परिरक्षन्तः प्रविष्टा वरुणालयं। ८७७०
ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलं। उत्सादनार्थं लोकानां रात्रौ घ्नन्ति ऋषीनिह।
नतु शक्याः क्षयं नेतुं समुद्राश्रयगा हिते। समुद्रस्य क्षये बुद्धिर्भवद्भिः सम्प्रधार्य्यतां।
अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे। अन्यथा हि न शक्यास्ते विना सागरशोषणं।
एतच्छ्रुत्वा तदा देवा विष्णुना समुदाहृतं। परमेष्ठिनमाज्ञाप्य अगस्त्यस्याश्रमं ययुः।
तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसं। उपास्यमानमृषिभिर्द्देवैरिव पितामहं। ८७७५
तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतं। आश्रमस्थं तपोराशिं कर्म्मभिः स्वैरभिष्टुवन्।
॥ देवा ऊचुः॥ नहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा। भ्रंशितश्च सुरैश्वर्य्यात् स्वर्लोकाल्लोककण्टकः।
क्रोधात्प्रवृद्धः सहसा भास्करस्य नगोत्तमः। वचस्तवानतिक्रामन् विन्ध्यः शैलो न वर्द्धते।
तमसा चावृते लोके मृत्युनाऽभ्यर्द्दिताः प्रजाः। त्वामेव नाथमासाद्य निर्वृतिं परमाङ्गताः।
अस्माकं भयभीतानां नित्यशो भगवान्गतिः। ततस्त्वार्त्ताः प्रयाचामो वरं त्वां वरदो ह्यसि। ८७८०
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्यमाहात्म्यकथने त्र्यधिकशततोऽध्यायः॥ १०३॥
॥ युधिष्ठिर उवाच॥ किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्च्छितः। एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने।
॥ लोमश उवाच॥ अद्रिराजं महाशैलं मेरुं कनकपर्व्वतं। उदयास्तमने भानुः प्रदक्षिणमवर्त्तत।
तन्तु दृष्ट्वा तथा विन्ध्यः शैलः सूर्य्यमथाऽब्रवीत्। यथा हि मेरुर्भवता नित्यशः परिगम्यते।

प्रदक्षिणञ्च क्रियते मामेवं कुरु भास्कर। एवमुक्तस्ततः सूर्य्यः शैलेन्द्रं प्रत्यभाषत।
नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणं। एष मार्गः प्रदिष्टो मे येनेदं निर्म्मितं जगत्। ८७८५
एवमुक्तस्ततः क्रोधात् प्रवृद्धः सहसाऽचलः। सूर्य्याचन्द्रमसोर्म्मार्गं रोद्धुमिच्छन् परन्तप।
ततो देवाः सहिताः सर्व्व एव विन्ध्यं समागम्य महाद्रिराजं। निवारयामासुरुपायतस्तं न च स्म तेषां वचनञ्चकार।
अथाभिजग्मुर्मुनिमाश्रमस्थं तपस्विनं धर्म्मभृतां वरिष्ठं। अगस्त्यमत्यद्भुतवीर्य्यवन्तं तञ्चार्थमूचुः सहिताः सुरास्ते।
॥ देवा ऊचुः॥ सूर्य्याचन्द्रमसोर्म्मार्गं नक्षत्राणां गतिन्तथा। शैलराजो वृणोत्येष विन्ध्यः कोपवशानुगः।
तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम। ऋते त्वां हि महाभाग तस्मादेनं निवारय। ८७९०
तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात्। सोऽभिगम्याब्रवीद्विन्ध्यं सदारः समुपस्थितं।
मार्गमिच्छाम्यहं दत्तं भवता पर्व्वतोत्तम। दक्षिणामभिगन्तास्मि दिशं कार्य्येण केनचित्।
यावदागमनं मह्यं तावत्त्वं प्रतिपालय। निवृत्ते मयि शैलेन्द्र ततो वर्द्धस्व कामतः।
एवं स समयं कृत्वा विन्ध्येनामित्रकर्षण। अद्यापि दक्षिणाद्देशाद्वारुणिर्न निवर्त्तते।
एतत्ते सर्व्वमाख्यातं यथा विन्ध्यो न वर्द्धते। अगस्त्यस्य प्रभावेन यन्मां त्वं परिपृच्छसि। ८७९५
कालेयास्तु यथा राजन् सुरैः सर्व्वैर्निषूदिताः। अगस्त्याद्वरमासाद्य तन्मे निगदतः शृणु।
त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत्। किमर्थमभियाताः स्थ वरं मत्तः किमिच्छथ। एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन्।
एवं त्वयेच्छाम कृतं हि कार्य्यं महार्णवं पीयमानं महात्मन्। ततो वधिष्याम सहानुबन्धान् कालेयसंज्ञान् सुरविद्विषस्तान्।
त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत्। करिष्ये भवतां कामं लोकानाञ्च महत्सुखं।
एवमुक्त्वा ततोऽगच्छत् समुद्रं सरितां पतिं। ऋषिभिश्च तपःसिद्धैः सार्द्धं देवैश्च सुव्रत। ८८००
मनुष्योरगगन्धर्व्वयक्षकिम्पुरुषास्तथा। अनुजग्मुर्म्महात्मानं द्रष्टुकामास्तदद्भुतं।
ततोऽभ्यगच्छन् सहिताः समुद्रं भीमनिःस्वनं। नृत्यन्तमिव चोर्म्मीभिर्व्वल्गन्तमिव वायुना।
हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च। नानाग्राहसमाकीर्णं नानाद्विजगणान्वितं।
अगस्त्यसहिता देवाः सगन्धर्व्वमहोरगाः। ऋषयश्च महाभागाः समासेदुर्म्महोदधिं।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अगस्त्यमाहात्म्यकथने चतुरधिकशततमोऽध्यायः॥ १०४॥
॥ लोमश उवाच॥ समुद्रं स समासाद्य वारुणिर्भगवानृषिः। उवाच सहितान् देवानृषींश्चैव समागतान्। ८८०५
अहं लोकहितार्थं वै पिबामि वरुणालयं। भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयतां।
एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः। समुद्रमपिबत् क्रुद्धः सर्व्वलोकस्य पश्यतः।
पीयमानं समुद्रन्तु दृष्ट्वा सेन्द्रास्तदाऽमराः। विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन्।
त्वं नस्त्राता विधाता च लोकानां लोकभावनः। त्वत्प्रसादात् समुच्छेदं न गच्छेत् सामरं जगत्।
स पूज्यमानस्त्रिदशैर्म्महात्मा गन्धर्व्वतूर्य्येषु नदत्सु सर्व्वशः। दिव्यैश्च पुष्पैरवकीर्य्यमाणो महार्णवं निःसलिलञ्चकार। ८८१०
दृष्ट्वा कृतं निःसलिलं महार्णवं सुराः समस्ताः परमप्रहृष्टाः। प्रगृह्य दिव्यानि वरायुधानि तान् दानवान् जघ्नुरदीनसत्त्वाः।

ते बध्यमानास्त्रिदशैर्म्महात्मभिर्म्महाबलैर्व्वेगिभिरुन्नदद्भिः । न सेहिरे वेगवतां महात्मनां वेगं तदा धारयितुं दिवौकसां ।
ते बध्यमानास्त्रिदशैर्दानवा भीमनिस्वनाः । चक्रुः सुतुमुलं युद्धं मुहूर्त्तमिव भारत ।
ते पूर्व्वं तपसा दग्धा मुनिभिर्भावितात्मभिः । यतमानाः परं शक्त्या त्रिदशैर्व्विनिसूदिताः ।
ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः । निहता बह्वशोभन्त पुष्पिता इव किंशुकाः । ८८१५
हतशेषास्ततः केचित् कालेया मनुजोत्तम । विदार्य्य वसुधां देवीं पातालतलमाश्रिताः ।
निहतान् दानवान् दृष्ट्वा त्रिदशा मुनिपुङ्गवं । तुष्टुवुर्व्विविधैर्व्वाक्यैरिदं वचनमब्रुवन् ।
त्वत्प्रसादान्महाबाहो लोकैः प्राप्तं महत्सुखं । त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ।
पूरयस्व महाबाहो समुद्रं लोकभावन । यत्त्वया सलिलं पीतं तदस्मिन् पुनरुत्सृज ।
एवमुक्तः प्रत्युवाच भगवान् मुनिपुङ्गवः । जीर्णं तद्धि मया तोयमुपायोऽन्यः प्रचिन्त्यतां । ८८२०
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः । एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ।
विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः । परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवं ।
प्रजाः सर्व्वा महाराज विप्रजग्मुर्यथागतं । त्रिदशा विष्णुना सार्द्धमुपजग्मुः पितामहं ।
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः । ऊचुः प्राञ्जलयः सर्व्वे सागरस्याभिपूरणं ।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि समुद्रपूरणमन्त्रणे पञ्चाधिकशततोऽध्यायः ॥ १०५ ॥
॥ लोमश उवाच ॥ तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः । गच्छध्वं विबुधाः सर्व्वे यथाकामं यथेप्सितं । ८८२५
महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः । ज्ञातीन् वै कारणं कृत्वा महाराज्ञो भगीरथात् ।
पितामहवचः श्रुत्वा सर्व्वे विबुधसत्तमाः । कालयोगं प्रतीक्षन्तो जग्मुश्चापि यथागतं ।
॥ युधिष्ठिर उवाच ॥ कथं वै ज्ञातयो ब्रह्मन् कारणञ्चात्र किं मुने । कथं समुद्रः पूर्णश्च भगीरथप्रतिश्रयात् ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन । कथ्यमानं त्वया विप्र राज्ञाञ्चरितमुत्तमं ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु विप्रेन्द्रो धर्म्मराज्ञा महात्मना । कथयामास माहात्म्यं सगरस्य महात्मनः । ८८३०
॥ लोमश उवाच ॥ इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः । रूपसत्त्वबलोपेतः सचापुत्त्रः प्रतापवान् ।
स हैहयान् समुत्साद्य तालजङ्घांश्च भारत । वशे च कृत्वा राजन्यान् स्वराज्यमन्वशासत ।
तस्य भार्य्ये त्वभवतां रूपयौवनदर्पिते । वैदर्भी भरतश्रेष्ठ शैव्या च भरतर्षभ ।
स पुत्त्रकामो नृपतिस्तताप सुमहत्तपः । पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ।
स तप्यमानः सुमहत्तपो योगसमन्वितः । आससाद महात्मानं त्र्यक्षं त्रिपुरमर्द्दनं । ८८३५
शङ्करं भवमीशानं पिनाकिं शूलपाणिनं । त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिं ।
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः । प्रणिपत्य महाबाहुः पुत्त्रार्थं समयाचत ।
तं प्रीतिमान् हरः प्राह सभार्य्यं नृपसत्तमं । यस्मिन् वृतो मुहूर्त्तेऽहं त्वयेह नृपते वरं ।
षष्टिः पुत्त्रसहस्राणि शूराः परमदर्पिताः । एकस्यां संभविष्यन्ति पत्न्यां नरवरोत्तम ।
ते चैव सर्व्वे सहिताः क्षयं यास्यन्ति पार्थिव । एको वंशधरः शूर एकस्यां सम्भविष्यति । ८८४०

एवमुक्ता तु तं रुद्रस्तत्रैवान्तरधीयत । सचापि सगरो राजा जगाम स्वं निवेशनं ।
पत्नीभ्यां सहितस्तत्र सोऽतिहृष्टमनास्तदा । तस्य ते मनुजश्रेष्ठ भार्य्ये कमललोचने ।
वैदर्भी चैव शैब्या च गर्भिण्यौ सम्बभूवतुः । ततः कालेन वैदर्भी गर्भालावुं व्यजायत ।
शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणं । तदाऽलावुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ।
अथान्तरीक्षाच्छुश्राव वाचं गम्भीरनिस्वनां । राजन् मा साहसङ्कार्षीः पुत्रान् न त्यक्तुमर्हसि । ८८८५
अलावुमध्यान्निष्कृष्य वीजं यत्नेन गोप्यतां । सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ।
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि भारत । महादेवेन दिष्टं ते पुत्रजन्म नराधिप ।
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा ।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सगरसन्ततिकथने षडधिकशततोऽध्यायः ॥ १०६ ॥
॥ लोमश उवाच ॥ एतच्छ्रुत्वाऽन्तरीक्षाच्च स राजा राजसत्तम । यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ ।
एकैकशस्ततः कृत्वा वीजं वीजं नराधिपः । घृतपूर्णेषु कुम्भेषु तान् भागान् विदधे ततः । ८८९०
धात्रीश्चैकैकशः प्रादात् पुत्ररक्षणतत्परः । ततः कालेन महता समुत्तस्थुर्महावलाः ।
षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः । रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव ।
ते घोराः क्रूरकर्म्माण आकाशपरिसर्पिणः । बहुत्वाच्चावजानन्तः सर्व्वान् लोकान् सहामरान् ।
त्रिदशांश्चाप्यधावन्त तथा गन्धर्व्वराक्षसान् । सर्व्वाणि चैव भूतानि शूराः समरशालिनः ।
बाध्यमानास्ततो लोकाः सागरैर्मन्दबुद्धिभिः । ब्रह्माणं शरणं जग्मुः सहिताः सर्व्वदैवतैः । ८८९५
तानुवाच महाभागः सर्व्वलोकपितामहः । गच्छध्वं त्रिदशाः सर्व्वे लोकैः सार्द्धं यथागतं ।
नातिदीर्घेण कालेन सागराणां क्षयो महान् । भविष्यति महाघोरः स्वकृतैः कर्म्मभिः सुराः ।
एवमुक्तास्तु ते देवा लोकाश्च मनुजेश्वर । पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतं ।
ततः काले बहुतिथे व्यतीते भरतर्षभ । दीक्षितः सगरो राजा हयमेधेन वीर्य्यवान् ।
तस्याश्वो व्यचरद्भूमिं पुत्त्रैः स परिरक्षितः । समुद्रं स समासाद्य निस्तोयं भीमदर्शनं । ८९००
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत । ततस्ते सागरास्तात हृतं मत्वा हयोत्तमं ।
आगम्य पितुराचख्युरदृश्यं तुरगं हृतं । तेनोक्ता दिक्षु सर्व्वासु सर्व्वे मार्गत वाजिनं ।
ततस्ते पितुराज्ञाय दिक्षु सर्व्वासु तं हयं । अमार्गन्त महाराज सर्व्वञ्च पृथिवीतलं ।
ततस्ते सागराः सर्व्वे समुपेत्य परस्परं । नाध्यगच्छन्त तुरगमश्वहर्त्तारमेव च ।
आगम्य पितरञ्चोचुस्ततः प्राञ्जलयोऽग्रतः । ससमुद्रवनद्वीपा सनदीनदकन्दरा । ८९०५
सपर्व्वतवनोद्देशा निखिलेन मही नृप । अस्माभिर्व्विचिता राजन् शासनात्तव पार्थिव ।
न चाश्वमधिगच्छामो नाश्वहर्त्तारमेव च । श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्च्छितः ।
उवाच वचनं सर्व्वांस्तदा दैववशान्नृप । अनागमाय गच्छध्वं भूयो मार्गत वाजिनं ।
यज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः । प्रतिगृह्य तु सन्देशं पितुस्ते सगरात्मजाः ।

अपश्यच्च महात्मानं कपिलं तुरगं च तं। स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमं। ९९००
प्रणम्य शिरसा भूमौ कार्य्यमस्मै न्यवेदयत्। ततः प्रीतो महाराज कपिलोऽंशुमतोऽभवत्।
उवाच चैनं धर्म्मात्मा वरदोऽस्मीति भारत। स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात्।
द्वितीयं वरकं वव्रे पितृणां पावनेच्छया। तमुवाच महातेजाः कपिलो मुनिपुङ्गवः।
ददानि तव भद्रन्ते यद्यत् प्रार्थयसेऽनघ। त्वयि क्षमा च धर्म्मश्च सत्यञ्चापि प्रतिष्ठितं।
त्वया कृतार्थः सगरः पुत्त्रवांश्च त्वया पिता। तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः। ९९०५
पौत्त्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति। पावनार्थं सागराणां तोषयित्वा महेश्वरं।
हयं नयस्व भद्रन्ते यज्ञियं नरपुङ्गव। यज्ञः समाप्यतां तात सगरस्य महात्मनः।
अंशुमानेवमुक्तस्तु कपिलेन महात्मना। आजगाम हयं गृह्य यज्ञवाटं महात्मनः।
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः। मूर्द्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्व्वं न्यवेदयत्।
यथादृष्टं श्रुतञ्चापि सागराणां क्षयं तथा। तञ्चास्मै हयमाचष्ट यज्ञवाटमुपागतं। ९९१०
तच्छ्रुत्वा सगरो राजा पुत्त्रजं दुःखमत्यजत्। अंशुमन्तञ्च संपूज्य समापयत तं क्रतुं।
समाप्तयज्ञः सगरो देवैः सर्व्वैः सभाजितः। पुत्त्रत्वे कल्पयामास समुद्रं वरुणालयं।
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः। पौत्त्रे भारं समावेश्य जगाम त्रिदिवं तदा।
अंशुमानपि धर्म्मात्मा महीं सागरमेखलां। प्रशशास महाराज यथैवास्य पितामहः।
तस्य पुत्त्रः समभवद्दिलीपो नाम धर्म्मवित्। तस्मै राज्यं समाधाय अंशुमानपि संस्थितः। ९९१५
दिलीपस्तु ततः श्रुत्वा पितृणां निधनं महत्। पर्य्यतप्यत दुःखेन तेषां गतिमचिन्तयत्।
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः। नचावतारयामास चेष्टमानो यथाबलं।
तस्य पुत्त्रः समभवत् श्रीमान् धर्म्मपरायणः। भगीरथ इति ख्यातः सत्यवागनसूयकः।
अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः। तपःसिद्धिसमायोगात् स राजा भरतर्षभ। वनाज्जगाम त्रिदिवं कालयोगेन भारत।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गङ्गावतरणे सप्ताधिकशततमोऽध्यायः॥ १०७॥

॥ लोमश उवाच॥ स तु राजा महेष्वासश्चक्रवर्त्ती महारथः। बभूव सर्व्वलोकस्य मनोनयननन्दनः। ९९२०
स शुश्राव महाबाहुः कपिलेन महात्मना। पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च।
स राज्यं सचिवे न्यस्य हृदयेन विदूयता। जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वर।
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः। सोऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमं।
शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलङ्कृतं। पवनालम्बिभिर्मेघैः परिष्वक्तं समन्ततः।
नदीकुञ्जनितम्बैश्च प्रासादैरुपशोभितं। गुहाकन्दरसंलीनैः सिंहव्याघ्रैर्निषेवितं। ९९२५
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः। भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः।
मयूरैः शतपत्रैश्च जीवञ्जीवककोकिलैः। चकोरैरसितापाङ्गैस्तथा पुत्त्रप्रियैरपि।

जलस्थानेषु रम्येषु पद्मिनीभिश्च सङ्कुलं । सारसानाञ्च मधुरैर्व्याहृतैः समलङ्कृतं ।
किन्नरैरप्सरोभिश्च निषेवितशिलातलं । दिग्वारणविषाणाग्रैः समन्ताद्घृष्टपादपं ।
विद्याधरानुचरितं नानारत्नसमाकुलं । विषोल्वणभुजङ्गैश्च दीप्तजिह्वैर्निषेवितं ।     ९९३०
क्वचित् कनकसङ्काशं क्वचिद्रजतसन्निभं । क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् ।
स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः । फलमूलाम्बुभक्षः सहस्रं परिवत्सरान् ।
सम्वत्सरसहस्रे तु गते दिव्ये महानदी । दर्शयामास तं गङ्गा तदा मूर्त्तिमती स्वयं ।
॥ गङ्गोवाच ॥ किमिच्छसि महाराज मत्तः किञ्च ददानि ते । तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ।
एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा । पितामहा मे वरदे कपिलेन महानदि ।     ९९३५
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयं । षष्टिस्तानि सहस्राणि सागराणां महात्मनां ।
कपिलं देवमासाद्य क्षणेन निधनं गताः । तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ।
यावत्तानि शरीराणि त्वं जलैनाभिषिञ्चसि । तावत्तेषां गतिर्नास्ति सागराणां महानदि ।
स्वर्गं नय महाभागे मत्पितॄन् सगरात्मजान् । तेषामर्थेन याचामि त्वामहं वै महानदि ।
॥ लोमश उवाच ॥ एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता । भगीरथमिदं वाक्यं सुप्रीता समभाषत ।     ९९४०
करिष्यामि महाराज वचस्ते नात्र संशयः । वेगन्तु मम दुर्द्धार्य्यं पतन्त्या गगनाद्भुवं ।
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ।
तं तोषय महाबाहो तपसा वरदं हरं । स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ।
स करिष्यति ते कामं पितॄणां हितकाम्यया । एतच्छ्रुत्वा ततो राजन् महाराजो भगीरथः ।
कैलासं पर्व्वतं गत्वा तोषयामास शङ्करं । तपस्तीव्रमुपागम्य कालयोगेन केनचित् ।     ९९४५
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणे नृप । स्वर्गे वासं समुद्दिश्य पितॄणां स नरोत्तमः ।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गङ्गावतरणकथने अष्टाधिकशततोऽध्यायः ॥ १०८ ॥
॥ लोमश उवाच ॥ भगीरथवचः श्रुत्वा प्रियार्थञ्च दिवौकसां । एवमस्त्विति राजानं भगवान् प्रत्यभाषत ।
धारयिष्ये महाबाहो गगनात् प्रच्युतां शिवां । दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ।
एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् । वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ।
तत्र स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह । प्रयाचस्व महाबाहो शैलराजसुतां नदीं ।     ९९५०
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् । एतच्छ्रुत्वा वचो राजा शर्व्वेण समुदाहृतं ।
प्रयतः प्रणतो भूत्वा गङ्गां समनुचिन्तयत् । ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानञ्च स्थितं दृष्ट्वा गगनात् सहसा च्युता । तां प्रच्युतामथो दृष्ट्वा देवाः सार्द्धं महर्षिभिः ।
गन्धर्व्वोरगयक्षाश्च समाजग्मुर्दिदृक्षवः । ततः पपात गगनाद्गङ्गा हिमवतः सुता ।
समुद्भूतमहावर्त्ता मीनग्राहसमाकुला । तां दधार हरो राजन् गङ्गां गगनमेखलां ।     ९९५५
ललाटदेशे पतितां मालां मुक्तामयीमिव । सा बभूव विसर्पन्ती त्रिधा राजन् समुद्रगा ।

तेषां सार्यं तथा प्रातर्दृश्यते हव्यवाहनः। इहाप्लुतानां कौन्तेय सद्यः पाप्माभिहन्यते।
कुरुश्रेष्ठाभिषेकं वै तस्मात् कुरु सहानुजः। ततो नन्दाप्लुताङ्गस्त्वं कौशिकीमभियास्यसि।
विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमं। ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः।
जगाम कौशिकीं पुण्यां रम्यां शीतजलां शुभां॥ लोमश उवाच॥ एषा देवनदी पुण्या कौशिकी भरतर्षभ।
विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते। आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः। ९९९०
ऋष्यशृङ्गः सुतो यस्य तपस्वी संयतेन्द्रियः। तपसो यः प्रभावेन वर्षयामास वासवं।
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा। मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः।
विषये लोमपादस्य यश्चकाराद्भुतं महत्। निर्वर्त्तितेषु शस्येषु यस्मै शान्तां ददौ नृपः।
लोमपादो दुहितरं सावित्रीं सविता यथा॥ युधिष्ठिर उवाच॥ ऋष्यशृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः।
विरुद्धे योनिसंसर्गे कथञ्च तपसा युतः। किमर्थञ्च भयाच्छक्रस्तस्य बालस्य धीमतः। ९९९५
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा। कथंरूपा च सा शान्ता राजपुत्री यतव्रता।
लोभयामास या चेतो मृगभूतस्य तस्य वै। लोमपादस्य राजर्षिर्यदाश्रूयत धार्म्मिकः।
कथं वै विषये तस्य नावर्षत् पाकशासनः। एतन्मे भगवन् सर्व्वं विस्तरेण यथातथं।
वक्तुमर्हसि शुश्रूषोर्ऋष्यशृङ्गस्य चेष्टितं॥ लोमश उवाच॥ विभाण्डकस्य विप्रर्षेस्तपसा भावितात्मनः।
अमोघवीर्य्यस्य सतः प्रजापतिसमद्युतेः। शृणु पुत्रो यथा जात ऋष्यशृङ्गः प्रतापवान्। १००००
महाह्रदस्य महातेजा बालः स्थविरसम्मतः। महाह्रदं समासाद्य काश्यपस्तपसि स्थितः।
दीर्घकालं परिश्रान्त ऋषिः स देवसम्मितः। तस्य रेतः प्रचस्कन्द दृष्ट्वाऽप्सरसमुर्व्वशीं।
अप्सूपस्पृशतो राजन् मृगी तच्चापिबत्तदा। सह तोयेन तृषिता गर्भिणी चाभवत्ततः।
सा पुरोक्ता भगवता ब्रह्मणा लोककर्त्तृणा। देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे।
अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्म्मितात्। तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः। १०००५
ऋष्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्त्तत। तस्यर्षेः शृङ्गं शिरसि राजन्नासीन्महात्मनः।
तेनर्ष्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत्। न तेन दृष्टः पूर्व्वोऽन्यः पितुरन्यत्र मानुषः।
तस्मात्तस्य मनो नित्यं ब्रह्मचर्य्येऽभवन्नृप। एतस्मिन्नेव काले तु सखा दशरथस्य वै।
लोमपाद इति ख्यातो अङ्गानामीश्वरोऽभवत्। तेन कामात् कृतं मिथ्या ब्राह्मणस्येति नः श्रुतिः।
स ब्राह्मणैः परित्यक्तस्तदा वै जगतः पतिः। पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया। १००१०
न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः। स ब्राह्मणान् पर्य्यपृच्छत्तपोयुक्तान् मनीषिणः।
प्रवर्षणे सुरेन्द्रस्य समर्थान् पृथिवीपते। कथं प्रवर्षेत् पर्जन्य उपायः परिदृश्यतां।
तमूचुश्चोदितास्ते तु स्वमतानि मनीषिणः। तत्र त्वेको मुनिवरस्तं राजानमुवाच ह।
कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिश्चर। ऋष्यशृङ्गं मुनिसुतमानयस्व च पार्थिव।
वानेयमनभिज्ञञ्च नारीणामार्जवे रतं। स चेदवतरेद्राजन् विषयन्ते महातपाः। १००१६

सद्यः प्रवर्षेत् पर्जन्य इति मे नात्र संशयः । एतच्छ्रुत्वा वचो राजन् कृत्वा निष्कृतिमात्मनः ।
स गत्वा पुनरागच्छत् प्रसन्नेषु द्विजातिषु । राजानमागतं दृष्ट्वा प्रतिसञ्जगृहुः प्रजाः ।
ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् । ऋष्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये ।
सोऽध्यगच्छदुपायन्तु तैरमात्यैः सहाच्युत । शास्त्रज्ञैरलमर्थज्ञैर्नीत्याञ्च परिनिष्ठितैः ।
ततस्त्वानाययामास वारमुख्या महीपतिः । वेश्याः सर्व्वत्र निष्णातास्ता उवाच स पार्थिवः । १००२०
ऋष्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः । लोभयित्वाऽभिविश्वास्य विषयं मम शोभनाः ।
ता राजभयभीताश्च शापभीताश्च योषितः । न शक्यमूचुस्तत्कार्य्यं विवर्णा गतचेतसः ।
तत्र त्वेका जरद्योषा राजानमिदमब्रवीत् । प्रयतिष्ये महाराज तमानेतुं तपोधनं ।
अभिप्रेतांस्तु मे कामांस्त्वमनुज्ञातुमर्हसि । ततः शक्ष्याम्यानयितुमृष्यशृङ्गमृषेः सुतं ।
तस्याः सर्व्वमभिप्रेतमन्वजानात् स पार्थिवः । धनञ्च प्रददौ भूरि रत्नानि विविधानि च । १००२५
ततो रूपेण सम्पन्ना वयसा च महीपते । स्त्रिय आदाय काश्चित् सा जगाम वनमञ्जसा ।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि ऋष्यशृङ्गोपाख्याने दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ लोमश उवाच । सा तु नाव्याश्रमं चक्रे राजकार्य्यार्थसिद्धये । सन्देशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत ।
नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितैः । नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ।
अतीव रमणीयन्तदतीव च मनोहरं । चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनं ।
ततो निबध्य तां नावमदूरे काश्यपाश्रमात् । चारयामास पुरुषैर्विहारं तस्य वै मुनेः । १००३०
ततो दुहितरं वेश्या समाधायेतिकृत्यतां । दृष्ट्वाऽन्तरं काश्यपस्य प्राहिणोद्बुद्धिसम्मतां ।
सा तत्र गत्वा कुशला तपोनित्यस्य सन्निधौ । आश्रमं तं समासाद्य ददर्श तमृषेः सुतं ।
॥ वेश्योवाच ॥ कच्चिन्मुने कुशलं तापसानां कच्चिच्च वो मूलफलं प्रभूतं । कच्चिद्भवान् रमते चाश्रमेऽस्मिंस्त्वां वै द्रष्टुं साम्प्रतमागतोऽस्मि ।
कच्चित्तपो वर्द्धते तापसानां पिता च ते कच्चिदहीनतेजाः । कच्चित्त्वया प्रीयते चैव विप्र कच्चित् स्वाध्यायः क्रियते चर्ष्यशृङ्ग ।
॥ ऋष्यशृङ्ग उवाच ॥ ऋद्धो भवान् ज्योतिरिव प्रकाशते मन्ये चाहं त्वामभिवादनीयं । पाद्यं वै ते संप्रदास्यामि कामाद्यथाधर्म्मं फलमूलानि चैव । १००३५
कौश्यां वृष्यामास्स्व यथोपजोषं कृष्णाजिनेनावृतायां सुखायां । क्व चाश्रमस्तव किं नाम चेदं व्रतं ब्रह्मंश्चरसि हि देववत्त्वं ।
॥ वेश्योवाच ॥ ममाश्रमः काश्यपपुत्र रम्यस्त्रियोजनं शैलमिमं परेण । तत्र स्वधर्म्मोऽनभिवादनं मे न चोदकं पाद्यमुपस्पृशामि ।
भवतामभिवाद्योऽहमभिवाद्यो भवान्मया । व्रतमेतादृशं ब्रह्मन् परिष्वज्यो भवान्मया ।
॥ ऋष्यशृङ्ग उवाच ॥ फलानि पक्वानि ददानि तेऽहं भल्लातकान्यामलकानि चैव । करूषकाणीङ्गुदधन्वनानि पिप्पलानां कामकारं कुरुष्व ।

॥ लोमश उवाच ॥ सा तानि सर्व्वाणि विवर्ज्जयित्वा भक्ष्याण्यनर्हाणि ददौ ततोऽस्य। १००४०
तान्यृष्यशृङ्गस्य महारसानि भृशं सुरूपाणि रुचिं ददुर्हि। ददौ च माल्यानि सुगन्धवन्ति चित्राणि वासांसि च भानुमन्ति।
पेयानि चाग्र्याणि ततो मुमोद चिक्रीड चैव प्रजहास चैव सा कन्दुकेनारमतास्य मूले विभज्यमाना फलिता लतेव।
गात्रैश्च गात्राणि निषेवमाणा समाश्लिषच्चासकृदृष्यशृङ्गं। सर्ज्जानशोकांस्तिलकांश्च वृक्षान् सुपुष्पितानवनाम्यावभज्य।
विलज्जमानेव मदाभिभूता प्रलोभयामास सुतं महर्षेः। अथर्ष्यशृङ्गं विकृतं समीक्ष्य पुनः पुनः पीड्य च कायमस्य।
अवेक्षमाणा शनकैर्ज्जगाम कृत्वाऽग्निहोत्रस्य तदापदेशं। तस्यां गतायां मदनेन मत्तो विचेतनश्चाभवदृष्यशृङ्गः। १००४५
तामेव भावेन गतेन शून्ये विनिश्वसन्नार्त्तरूपो बभूव।
ततो मुहूर्त्ताद्धरिपिङ्गलाक्षः प्रवेष्टितो रोमभिरानखाग्रात्। स्वाध्यायवान् वृत्तसमाधियुक्तो विभाण्डकः काश्यपः प्रादुरासीत्।
सोऽपश्यदासीनमुपेत्य पुत्त्रं ध्यायन्तमेकं विपरीतचित्तं। विनिश्वसन्तं मुहुरूर्द्ध्वदृष्टिं विभाण्डकः पुत्त्रमुवाच दीनं।
न कल्प्यन्ते समिधः किंनु तात कच्चिद्धुतञ्चाग्निहोत्रं त्वयाऽद्य। सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः कच्चित् सवत्साऽद्य कृता त्वया च।
न वै यथापूर्व्वमिवासि पुत्त्र चिन्तापरश्चासि विचेतनश्च। दीनोऽतिमात्रं त्वमिहाद्य किन्नु पृच्छामि त्वां क इहाद्यागतोऽभूत्। १००५०
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि ऋष्यशृङ्गोपाख्याने एकादशाधिकशतोऽध्यायः॥ १११॥
॥ ऋष्यशृङ्ग उवाच ॥ इहागतो जटिलो ब्रह्मचारी न वै ह्रस्वो नातिदीर्घो मनस्वी। सुवर्णवर्णः कमलायताक्षः स्वतः सुराणामिव शोभमानः।
समृद्धरूपः सवितेव दीप्तः सुशुक्लकृष्णाक्षश्चिरतीव गौरः। नीलाः प्रसन्नाश्च जटाः सुगन्धा हिरण्यरज्जुग्रथिताः सुदीर्घाः।
आधाररूपा पुनरस्य कण्ठे विभ्राजते विद्युदिवान्तरीक्षे। द्वौ चास्य पिण्डावधरेण कण्ठादजातरोमौ सुमनोहरौ च।
विलग्नमध्यश्च स नाभिदेशे कटिश्च तस्यातिकृतप्रमाणा। तथाऽस्य चीरान्तरतः प्रभाति हिरण्मयी मेखला मे यथेयं।
अन्यच्च तस्याद्भुतदर्शनीयं विकूजितं पादयोः संप्रभाति। पाण्योश्च तद्वत् स्वनवन्निबद्धौ कलापकावक्षमाला यथेयं। १००५५
विचेष्टमानस्य च तस्य तानि कूजन्ति हंसाः सरसीव मत्ताः। चीराणि तस्याद्भुतदर्शनानि नेमानि तद्वन्मम रूपवन्ति
वक्त्रञ्च तस्याद्भुतदर्शनीयं प्रव्याहृतं ह्लादयतीव चेतः। पुंस्कोकिलस्येव च तस्य वाणी तां शृण्वतो मे व्यथितोऽन्तरात्मा।
यथा वनं माधवमासि मध्ये समीरितं श्वसनेनैव भाति। तथा स भात्युत्तमपुण्यगन्धी निषेव्यमाणः पवनेन तात।
सुसंयताश्चापि जटा विषक्ता द्वैधीकृता नातिसमा ललाटे। कर्णौ च चित्रैरिव चक्रवालैः समावृतौ तस्य सुरूपवद्भिः।
तथा फलं वृत्तमथो विचित्रं समाहरत् पाणिना दक्षिणेन। तद्भूमिमासाद्य पुनः पुनश्च समुत्पतत्यद्भुतरूपमुच्चैः। १००६०
तच्चाभिहत्वा परिवर्त्ततेऽसौ वातेरितो वृक्ष इवाथ घूर्णन्। तं प्रेक्षतः पुत्त्रमिवामराणां प्रीतिः परा तात रतिश्च जाता।
स मे समाश्लिष्य पुनः शरीरं जटासु गृह्याभ्यवनाम्य वक्त्रं। वक्त्रेण वक्त्रं प्रणिधाय शब्दञ्चकार तन्मे जनयत् प्रहर्षं।
न चापि पाद्यं बहुमन्यतेऽसौ फलानि चेमानि मयाहृतानि। एवंव्रतोऽस्मीति च मामवोचत् फलानि चान्यानि समाददन्मे।

यथोपयुक्तानि फलानि यानि नेमानि तुल्यानि रसेन तेषां । न चापि तेषां त्वगियं यथैषां साराणि नैषामिव सन्ति तेषां ।

तोयानि चैवातिरसानि मह्यं प्रादात् स वै पातुमुदाररूपः। पीत्वैव यान्यभ्यधिकः प्रहर्षो ममाभवद्भूश्चलितेव चासीत्।१००६५

इमानि चित्राणि च गन्धवन्ति माल्यानि तस्योद्ग्रथितानि पट्टैः । यानि प्रकीर्य्येह गतः स्वमेव स आश्रमं तपसा द्योतमानः ।

गतेन तेनास्मि कृतो विचेता गात्रञ्च मे संपरिदह्यतीव। इच्छामि तस्यान्तिकमाशु गन्तुं तञ्चेह नित्यं परिवर्त्तमानं ।

गच्छामि तस्यान्तिकमेव तात का नाम सा ब्रह्मचर्य्या च तस्य। इच्छाम्यहं चरितुं तेन सार्द्धं यथा तपः स चरत्यार्य्यधर्म्मा।

चर्त्तुं तथेच्छा हृदये ममास्ति दुनोति चित्तं यदि तं न पश्ये ।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि ऋष्यशृङ्गोपाख्याने द्वादशाधिकशततोऽध्यायः ॥ ११२ ॥

॥ विभाण्डक उवाच ॥ रक्षांसि चैतानि चरन्ति पुत्र रूपेण तेनाद्भुतदर्शनेन । अतुल्यवीर्य्याण्यभिरूपवन्ति विघ्नं सदा तपसश्चिन्तयन्ति । १००७०

सुरूपरूपाणि च तानि तात प्रलोभयन्ते विविधैरुपायैः । सुखाच्च लोकाच्च निपातयन्ति तान्युग्ररूपाणि मुनीन् वनेषु ।

न तानि सेवेत मुनिर्यतात्मा सतां लोकान् प्रार्थयानः कथञ्चित्। कृत्वा विघ्नं तापसानां रमन्ते पापाचारास्तापसस्तान्न पश्येत्।

असज्जनेनाचरितानि पुत्र पापान्यपेयानि मधूनि तानि। माल्यानि चैतानि न वै मुनीनां स्मृतानि चित्रोज्ज्वलगन्धवन्ति ।

रक्षांसि तानीति निवार्य्य पुत्रं विभाण्डकस्तां मृगयाम्बभूव। नासादयामास यदा त्र्यहेण तदा स पर्य्यावव्रते श्रमाय।

यदा पुनः काश्यपो वै जगाम फलान्याहर्त्तुं विधिना श्रावणेन। तदा पुनर्लोभयितुं जगाम सा वेशयोषा मुनिमृष्यशृङ्गं।१००७५

दृष्ट्वैव तामृष्यशृङ्गः प्रहृष्टः संभ्रान्तरूपोऽभ्यपतत्तदानीं। प्रोवाच चैनां भवतोऽश्रमाय गच्छाव यावन्न पिता ममेति ।

ततो राजन् काश्यपस्यैकपुत्रं प्रवेश्य योगेन विमुच्य नावं । प्रमोदयन्त्यो विविधैरुपायैराजग्मुरङ्गाधिपतेः समीपं ।

संस्थाप्य तामाश्रमदर्शने तु सन्तारितां नावमथातिशुभ्रां । तीरादुपादाय तथैव चक्रे नाव्याश्रमं नाम वनं विचित्रं।

अन्तःपुरे तन्तु निवेश्य राजा विभाण्डकस्यात्मजमेकपुत्रं। ददर्श देव सहसा प्रवृष्टमापूर्य्यमाणञ्च जगज्जलेन ।

स लोमपादः परिपूर्णकामः सुतां ददावृष्यशृङ्गाय शान्तां । क्रोधप्रतीकारकरञ्च चक्रे गोषु मार्गेषु च कर्षकाणि । १००८०

विभाण्डकस्याव्रजतः स राजा पशून् प्रभूतान् पशुपांश्च वीरान् । समादिशत् पुत्रगृद्धी महर्षिर्विभाण्डकः परिपृच्छेद्यदा वः ।

स वक्तव्यः प्राञ्जलिभिर्भवद्भिः पुत्रस्य ते पशवः कर्षणञ्च । किन्ते प्रियं वै क्रियतां महर्षे दासाः स्म सर्व्वे तव वाचि बद्धाः ।

अथोपायात् स मुनिश्चण्डकोपः स्वमाश्रमं मूलफलं गृहीत्वा। अन्वेषमाणश्च न तत्र पुत्रं ददर्श चुक्रोध ततो भृशं सः।

ततः स कोपेन विदार्य्यमाण आशङ्कमानो नृपतेर्व्विधानं। जगाम चम्पां प्रति धक्ष्यमाणस्तमङ्गराजं सपुरं सराष्ट्रं ।

स वै श्रान्तः क्षुधितः काश्यपस्तान् घोषान् समासादितवान् समृद्धान्। गोपैश्च तैर्व्विधिवत् पूज्यमानो राजेव तां रात्रिमुवास तत्र । १००८५

अवाप्य सत्कारमतीव तेभ्यः प्रोवाच कस्य प्रथिताः स्थ गोपाः। ऊचुस्ततस्तेऽभ्युपगम्य सर्व्वे धनं तवेदं विहितं सुतस्य।
देशेषु देशेषु स पूज्यमानस्तांश्चैव शृण्वन् मधुरान् प्रलापान्। प्रत्यागमद्भूयिष्ठरुषः प्रहृष्टः समाससादाथ नृपतिं पुरस्थं।
स पूजितस्तेन नरर्षभेण ददर्श पुत्रं दिवि देवं यथेन्द्रं। शान्तां स्नुषाञ्चैव ददर्श तत्र सौदामिनीमुच्चरन्तीं यथैव।
ग्रामांश्च घोषांश्च सुतस्य दृष्ट्वा शान्ताञ्च शान्तोऽस्य परः स कोपः। चकार तस्यैव परं प्रसादं विभाण्डको भूमिपतेर्नरेन्द्र।
स तत्र निक्षिप्य सुतं महर्षिरुवाच सूर्य्याग्निसमप्रभावः। जाते तु पुत्रे वनमेवाव्रजेथा राज्ञः प्रियाण्यस्य सर्व्वाणि कृत्वा। १००९०
स तद्वचः कृतवानृष्यशृङ्गो ययौ च यत्रास्य पिता बभूव। शान्ता चैनं पर्य्यचरन्नरेन्द्र खे रोहिणी सोममिवानुकूला।
अरुन्धती वा सुभगा वशिष्ठं लोपामुद्रा वा यथा ह्यगस्त्यं। नलस्य वै दमयन्ती यथाऽभूद्यथा शची वज्रधरस्य चैव।
नाडायनी चेन्द्रसेना बभूव वश्या नित्यं मुद्गलस्याजमीढ। तथा शान्ता ऋष्यशृङ्गं वनस्थं प्रीत्या युक्ता पर्य्यचरन्नरेन्द्र।
तस्याश्रमः पुण्य एषोऽवभाति महाह्रदं शोभयन् पुण्यकीर्त्तेः। अत्र स्नातः कृतकृत्यो विशुद्धस्तीर्थान्यन्यान्यनुयाहि राजन्।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि ऋष्यशृङ्गोपाख्याने त्रयोदशाधिकशततमोऽध्यायः॥ ११३ ॥

॥ वैशम्पायन उवाच ॥ ततः प्रयातः कौशिक्याः पाण्डवो जनमेजय। आनुपूर्व्व्येण सर्व्वाणि जगामायतनान्यथ। १००९५
स सागरं समासाद्य गङ्गायाः सङ्गमे नृप। नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवं।
ततः समुद्रतीरेण जगाम वसुधाधिपः। भ्रातृभिः सहितो वीरः कलिङ्गान् प्रति भारत।
॥ लोमश उवाच ॥ एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी। यत्रायजत धर्म्मोऽपि देवाञ्छरणमेत्य वै।
ऋषिभिः समुपायुक्तं यज्ञियं गिरिशोभितं। उत्तरं तीरमेतद्धि सततं द्विजसेवितं।
समानं देवयानेन पथा स्वर्गमुपेयुषः। अत्र वै ऋषयोऽन्येऽपि पुरा क्रतुभिरीजिरे। ११०००
अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान् मखे। पशुमादाय राजेन्द्र भागोऽयमिति चाब्रवीत्।
हृते पशौ तदा देवास्तमूचुर्भरतर्षभ। मा परस्वमभिद्रोग्धा मा धर्म्मान् सकलान् नशीः।
ततः कल्याणरूपाभिर्व्वाग्भिस्ते रुद्रमस्तुवन्। इष्ट्या चैनं तर्पयित्वा मानयाञ्चक्रिरे तदा।
ततः स पशुमुत्सृज्य देवयानेन जग्मिवान्। तत्रानुवंशो रुद्रस्य तन्निबोध युधिष्ठिर।
अयातयामं सर्व्वेभ्यो भागेभ्यो भागमुत्तमं। देवाः सङ्कल्पयामासुर्भयाद्रुद्रस्य शाश्वतं। ११००५
इमां गाथामत्र गायन्नपः स्पृशति यो नरः। देवयानोऽस्य पन्थाश्च चक्षुषाऽभिप्रकाशते।
॥ वैशम्पायन उवाच ॥ ततो वैतरणीं सर्व्वे पाण्डवा द्रौपदी तथा। अवतीर्य्य महाभागास्तर्पयाञ्चक्रिरे पितॄन्।
॥ युधिष्ठिर उवाच ॥ उपस्पृश्यैव विधिवदस्यां नद्यां तपोबलात्। मानुषादस्मि विषयादपेतः पश्य लोमश।
सर्व्वान् लोकान् प्रपश्यामि प्रसादात्तव सुव्रत। वैखानसानां जपतामेष शब्दो महात्मनां।
॥ लोमश उवाच ॥ त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर। यत्र ध्वनिं शृणोष्येनं तूष्णीमास्स्व विशाम्पते। ११०१०
एतत् स्वयम्भुवो राजन् वनं दिव्यं प्रकाशते। यत्रायजत राजेन्द्र विश्वकर्म्मा प्रतापवान्।
यस्मिन् यज्ञे हि भूर्दत्ता कश्यपाय महात्मने। सपर्व्वतवनोद्देशा दक्षिणार्थं स्वयम्भुवा।
अवासीदच्च कौन्तेय दत्तमात्रा मही तदा। उवाच चापि कुपिता लोकेश्वरमिदं प्रभुं।
न मां मर्त्याय भगवन् कस्मैचिद्दातुमर्हसि। प्रदानं मोघमेतत्ते यास्याम्येषा रसातलं।

विषीदन्तीन्तु तां दृष्ट्वा कश्यपो भगवानृषिः । प्रसादयाम्बभूवाथ ततो भूमिं विशाम्पते । ११०१५
ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव । पुनरुन्मज्य सलिलाद्वेदीरूपा स्थिता बभौ ।
सैषा प्रकाशते राजन् वेदी संस्थानलक्षणा । आरुह्यात्र महाराज वीर्य्यवान् वै भविष्यसि ।
सैषा सागरमासाद्य राजन् वेदी समाश्रिता । एतामारुह्य भद्रन्ते त्वमेकस्तर सागरं ।
अहञ्च ते स्वस्त्ययनं प्रयोक्ष्ये यथा त्वमेनामधिरोहसेऽद्य । स्पृष्टा हि मर्त्येन ततः समुद्रमेषा वेदी प्रविशत्याजमीढ ।
ओं नमो विश्वगुप्ताय नमो विश्वपराय ते । सान्निध्यं कुरु देवेश सागरे लवणाम्भसि । ११०२०
अग्निर्मित्रो योनिरापोऽथ देव्यो विष्णोरेतस्त्वममृतस्य नाभिः । एवं ब्रुवन् पाण्डव सत्यवाक्यं वेदीमिमां त्वं तरसाऽधिरोह ।
अग्निश्च ते योनिरिडा च देहो रेतोधा विष्णोरमृतस्य नाभिः । एवं जपन् पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनां ।
अन्यथा हि कुरुश्रेष्ठ देवयोनिरपाम्पतिः । कुशाग्रेणापि कौन्तेय न स्प्रष्टव्यो महोदधिः ।
॥ वैशम्पायन उवाच । ततः कृतस्वस्त्ययनो महात्मा युधिष्ठिरः सागरमभ्यगच्छत् । कृत्वा च तच्छासनमस्य सर्व्वं महेन्द्रमासाद्य निशामुवास ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि महेन्द्राचलगमने चतुर्द्दशाधिकशततोऽध्यायः ॥ ११४ ॥

॥ वैशम्पायन उवाच ॥ स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः । तापसानां परञ्चक्रे सत्कारं भ्रातृभिः सह । ११०२५
लोमशस्तस्य तान् सर्व्वानाचख्यौ तत्र तापसान् । भृगूनङ्गिरसश्चैव वाशिष्ठानथ काश्यपान् ।
तान् समेत्य स राजर्षिरभिवाद्य कृताञ्जलिः । रामस्यानुचरं वीरमपृच्छदकृतव्रणं ।
कदा नु रामो भगवांस्तापसान्दर्शयिष्यति । तेनैवाहं प्रसङ्गेन द्रष्टुमिच्छामि भार्गवं ।
॥ अकृतव्रण उवाच ॥ आयानेवासि विदितो रामस्य विदितात्मनः । प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ।
चतुर्द्दशीमष्टमीञ्च रामं पश्यन्ति तापसाः । अस्यां रात्र्यां व्यतीतायां भवित्री श्वश्चतुर्द्दशी । ११०३०
॥ युधिष्ठिर उवाच ॥ भवाननुगतो रामं जामदग्न्यं महाबलं । प्रत्यक्षदर्शी सर्व्वस्य पूर्व्ववृत्तस्य कर्म्मणः ।
स भवान् कथयत्वद्य यथा रामेण निर्ज्जिताः । आहवे क्षत्रियाः सर्व्वे कथं केन च हेतुना ।
॥ अकृतव्रण उवाच ॥ हन्त ते कथयिष्यामि महदाख्यानमुत्तमं । भृगूणां राजशार्दूल वंशे जातस्य भारत ।
रामस्य जामदग्न्यस्य चरितं देवसम्मितं । हैहयाधिपतेश्चैव कार्त्तवीर्य्यस्य भारत ।
रामेण चार्ज्जुनो नाम हैहयाधिपतिर्हतः । तस्य बाहुशतान्यासंस्त्रीणि सप्त च पाण्डव । ११०३५
दत्तात्रेयप्रसादेन विमानं काञ्चनं तथा । ऐश्वर्य्यं सर्व्वभूतेषु पृथिव्यां पृथिवीपते ।
अव्याहतगतिश्चैव रथस्तस्य महात्मनः । रथेन तेन तु सदा वरदानेन वीर्य्यवान् ।
ममर्द्द देवान् यक्षांश्च ऋषींश्चैव समन्ततः । भूतांश्चैव स सर्व्वांस्तु पीडयामास सर्व्वतः ।
ततो देवाः समेत्याहुर्ऋषयश्च महाव्रताः । देवदेवं सुरारिघ्नं विष्णुं सत्यपराक्रमं ।
भगवन् भूतरक्षार्थमर्ज्जुनं जहि वै प्रभो । विमानेन च दिव्येन हैहयाधिपतिः प्रभुः । ११०४०
शचीसहायं क्रीडन्तं धर्षयामास वासवं । ततस्तु भगवान् देवः शक्रेण सहितस्तदा ।
कार्त्तवीर्य्यविनाशार्थं मन्त्रयामास भारत । यत्तद्भूतहितं कार्य्यं सुरेन्द्रेण निवेदितं ।

स प्रतिश्रुत्य तत् सर्व्वं भगवान् लोकपूजितः । जगाम बदरीं रम्यां समेवाश्रममण्डलं ।

एतस्मिन्नेव काले तु पृथिव्यां पृथिवीपतिः । कान्यकुब्जे महानासीत् पार्थिवः सुमहाबलः ।

गाधीति विश्रुतो लोके वनवासं जगाम ह । वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा । ११०४५

ऋचीको भार्गवस्तां च वरयामास भारत । तमुवाच ततो गाधिर्ब्राह्मणं संशितव्रतं ।

उचितं नः कुले किञ्चित् पूर्व्वैर्यत् सम्प्रवर्त्तितं । एकतः श्यामकर्णानां पाण्डुराणां तरस्विनां ।

सहस्रं वाजिनां शुल्कमिति विद्धि द्विजोत्तम । न चापि भगवान् वाच्यो दीयतामिति भार्गव ।

देया मे दुहिता चेव त्वद्विधाय महात्मने ॥ ऋचीक उवाच ॥ एकतः श्यामकर्णानां पाण्डुराणां तरस्विनां ।

दास्याम्यश्वसहस्रं ते मम भार्य्या सुताऽस्तु ते ॥ अकृतव्रण उवाच ॥ स तथेति प्रतिज्ञाय राजन् वरुणमब्रवीत् । ११०५०

एकतः श्यामकर्णानां पाण्डुराणां तरस्विनां । सहस्रं वाजिनामेकं शुल्कार्थं प्रतिदीयतां ।

तस्मै प्रादात् सहस्रं वै वाजिनां वरुणस्तदा । तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः ।

गङ्गाया कान्यकुब्जे वै ददौ सत्यवतीं तदा । ततो गाधिसुतां तस्मै जन्यास्त्वासन् सुरास्तदा । लब्ध्वा हयसहस्रन्तु तांश्च दृष्ट्वा दिवौकसः ।

धर्म्मेण लब्ध्वा तां भार्य्यामृचीको द्विजसत्तमः । यथाकामं यथाजोषं तया रेमे सुमध्यया ।

तं विवाहे कृते राजन् सभार्य्यमवलोककः । आजगाम भृगुः श्रेष्ठं पुत्रं दृष्ट्वा ननन्द ह । ११०५५

भार्य्यापती तमासीनं गुरुं सुरगणार्च्चितं । अर्च्चित्वा पर्य्युपासीनौ प्राञ्जली तस्थतुस्तदा ।

ततः स्नुषां स भगवान् प्रहृष्टो भृगुरब्रवीत् । वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितं ।

सा वै प्रसादयामास तं गुरुं पुत्रकारणात् । आत्मनश्चैव मातुश्च प्रसादञ्च चकार सः ।

॥ भृगुरुवाच ॥ ऋतौ त्वञ्चैव माता च स्नाते पुंसवनाय वै । आलिङ्गेतां पृथग्वृक्षौ साऽश्वत्थं त्वमुदुम्बरं ।

चरुद्वयमिदं भद्रे जनन्यास्तव चैव च । विश्वमावर्त्तयित्वा तु मया यत्नेन साधितं । ११०६०

प्राशितव्यं प्रयत्नेन नेत्युक्त्वाऽदर्शनं गतः । आलिङ्गने चरौ चैव चक्रतुस्ते विपर्य्ययं ।

ततः पुनः स भगवान् काले बहुतिथे गते । दिव्यज्ञानाद्विदित्वा तु भगवानागतः पुनः ।

अथोवाच महातेजा भृगुः सत्यवतीं स्नुषां । उपयुक्तश्चरुर्भद्रे वृक्षे चालिङ्गनं कृतं ।

विपरीतेन ते सुभ्रु मात्रा चैवासि वञ्चिता । ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति ।

क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् । भविष्यति महावीर्य्यः साधूनां मार्गमाश्रितः । ११०६५

ततः प्रसादयामास श्वशुरं सा पुनः पुनः । न मे पुत्रो भवेदीदृक् कामं पौत्रो भवेदिति ।

एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता । जमदग्निं ततः पुत्रं जज्ञे सा काल आगते ।

तेजसा वर्च्चसा चैव युक्तं भार्गवनन्दनं । स वर्द्धमानस्तेजस्वी वेदस्याध्ययनेन च ।

बहूनृषीन्महातेजाः पाण्डवेयात्यवर्त्तत । तन्तु कृत्स्नो धनुर्व्वेदः प्रत्यभाद्भरतर्षभ ।

चतुर्व्विधानि चास्त्राणि भास्करोपमवर्च्चसं । ११०७०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि जमदग्न्युत्पत्तौ पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

॥ अकृतव्रण उवाच ॥ स वेदाध्ययने युक्तो जमदग्निर्महातपाः । तपस्तेपे ततो वेदान्नियमाद्वशमानयत् ।
स प्रसेनजितं राजन्नधिगम्य नराधिपम् । रेणुकां वरयामास स च तस्मै ददौ नृपः ।
रेणुकां त्वथ सम्प्राप्य भार्य्यां भार्गवनन्दनः । आश्रमस्थस्तया सार्द्धं तपस्तेपेऽनुकूलया ।
तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः । सर्व्वेषामजघन्यस्तु राम आसीज्जघन्यजः ।
फलाहारेषु सर्व्वेषु गतेष्वथ सुतेषु वै । रेणुका स्नातुमगमत् कदाचिन्नियतव्रता । ११०७५
सा तु चित्ररथं नाम मार्त्तिकावतकं नृपम् । ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ।
क्रीडन्तं सलिले दृष्ट्वा सभार्य्यं पद्ममालिनम् । ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ।
व्यभिचाराच्च तस्मात् सा क्लिन्नाम्भसि विचेतना । प्रविवेशाश्रमं त्रस्ता तां वै भर्त्ताऽन्वबुध्यत ।
स तां दृष्ट्वा च्युतां धैर्य्याद्ब्राह्म्या लक्ष्म्या विवर्ज्जिताम् । धिक्शब्देन महातेजा गर्हयामास वीर्य्यवान् ।
ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः । आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा । ११०८०
तानानुपूर्व्व्या भगवान् वधे मातुरचोदयत् । न च ते जातसंमोहाः किञ्चिदूचुर्विचेतसः ।
ततः शशाप तान् क्रोधात्ते शप्ताश्चेतनां जहुः । मृगपक्षिसधर्म्माणः क्षिप्रमासन् जडोपमाः ।
ततो रामोऽभ्यगात् पश्चादाश्रमं परवीरहा । तमुवाच महाबाहुर्जमदग्निर्महातपाः ।
जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः । तत आदाय परशुं रामो मातुः शिरोऽहरत् ।
ततस्तस्य महाराज जामदग्न्यस्य महात्मनः । कोपोऽभ्यगच्छत् सहसा प्रसन्नश्चाब्रवीदिदम् । ११०८५
ममेदं वचनात्तात कृतन्ते कर्म्म दुष्करम् । वृणीष्व कामान् धर्म्मज्ञ यावतो वाञ्छसे हृदा ।
स वव्रे मातुरुत्थानमस्मृतिञ्च वधस्य वै । पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ।
अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत । ददौ च सर्व्वान् कामांस्तान् जमदग्निर्महातपाः ।
कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो । अथानूपपतिर्व्वीरः कार्त्तवीर्य्योऽभ्यवर्त्तत ।
तमाश्रमपदं प्राप्तमृषेर्भार्य्या समार्च्चयत् । स युद्धमदसंमत्तो नाभ्यनन्दत्तथार्च्चनम् । ११०९०
प्रमथ्य चाश्रमात्तस्माद्धोमधेनोस्तथा बलात् । जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ।
आगताय च रामाय तदाचष्ट पिता स्वयम् । गाञ्च रोरुदतीं दृष्ट्वा कोपो रामं समाविशत् ।
स मृत्युवशमापन्नं कार्त्तवीर्य्यमुपाद्रवत् । तस्याथ युधि विक्रम्य भार्गवः परवीरहा ।
चिच्छेद निशितैर्भल्लैर्बाहून् परिघसन्निभान् । सहस्रसम्मितान् राजन् प्रगृह्य रुचिरं धनुः ।
अभिभूतः स रामेण संयुक्तः कालधर्म्मणा । अर्ज्जुनस्याथ दायादा रामेण कृतमन्यवः । ११०९५
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् । ते तं जघ्नुर्महावीर्य्यमयुध्यन्तं तपस्विनम् ।
असकृद्राम रामेति विक्रोशन्तमनाथवत् । कार्त्तवीर्य्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ।
पीडयित्वा शरैर्जग्मुर्यथागतमरिन्दमाः । अपक्रान्तेषु चैतेषु जमदग्नौ तथा गते ।
समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः । स दृष्ट्वा पितरं वीरस्तथा मृत्युवशङ्गतम् ।
अनर्हन्तं तथाभूतं विललाप सुदुःखितः । ११०००

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि जमदग्निवधे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

॥ राम उवाच ॥ ममापराधात्ते क्षुद्रैर्हतस्त्वं तात बालिशैः। कार्त्तवीर्य्यस्य दायादैर्व्वने मृग इवेषुभिः।
धर्म्मज्ञस्य कथं तात वर्त्तमानस्य सत्पथे। मृत्युरेवंविधो युक्तः सर्व्वभूतेष्वनागसः।
किन्नु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः। अयुध्यमानो वृद्धः सन् हतः शरशतैः शितैः।
किन्नु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च। अयुध्यमानं धर्म्मज्ञमेकं हत्वाऽनपत्रपाः।
लालप्यैवं स करुणं बहु नानाविधं नृप। प्रेतकार्य्याणि सर्व्वाणि पितुश्चक्रे महातपाः। १०२००
ददाह पितरञ्चाग्नौ रामः परपुरञ्जयः। प्रतिजज्ञे वधञ्चापि सर्व्वक्षत्रस्य भारत।
सङ्क्रुद्धोऽतिबलः संख्ये शस्त्रमादाय वीर्य्यवान्। जघ्निवान् कार्त्तवीर्य्यस्य सुतानेकोऽन्तकोपमः।
तेषाञ्चानुगता ये च क्षत्रियाः क्षत्रियर्षभ। तांश्च सर्व्वानवामृद्नाद्रामः प्रहरतांवरः।
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः। समन्तपञ्चके पञ्च चकार रौधिरान् ह्रदान्।
स तेषु तर्पयामास भृगून् भृगुकुलोद्वहः। साक्षाद्ददर्श ऋचीकं स च रामं न्यवेदयत्। १०२०५
ततो यज्ञेन महता जामदग्न्यः प्रतापवान्। तर्पयामास देवेन्द्रमृत्विग्भ्यः प्रददौ महीं।
वेदीञ्चाप्यददद्धैमीं कश्यपाय महात्मने। दशव्यामायतां कृत्वा नवोत्सेधां विशाम्पते।
तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा। व्यभजंस्ते तदा राजन् प्रख्याताः खाण्डवायनाः।
स प्रदाय महीं तस्मै कश्यपाय महात्मने। अस्मिन् महेन्द्रे शैलेन्द्रे वसत्यमितविक्रमः।
एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः। पृथिवी चापि विजिता रामेणामिततेजसा। १०२१०
॥ वैशम्पायन उवाच ॥ ततश्चतुर्दश्यां रामः समयेन महामनाः। दर्शयामास तान् विप्रान् धर्म्मराजञ्च सानुजं।
स तमानर्च्च राजेन्द्र भ्रातृभिः सहितः प्रभुः। द्विजानाञ्च परां पूजां चक्रे नृपतिसत्तमः।
अर्च्चयित्वा जामदग्न्यं स पूजितस्तेन चोदितः। महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि जामदग्न्योपाख्याने सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ वैशम्पायन उवाच ॥ गच्छन् स तीर्थानि महानुभावः पुण्यानि रम्याणि ददर्श राजा। सर्व्वाणि विप्रैरुपशोभितानि क्वचित्
क्वचिद्भारत सागरस्य।
स वृत्तवांस्तेषु कृताभिषेकः सहानुजः पार्थिवपुत्रपौत्रः। समुद्रगां पुण्यतमां प्रशस्तां जगाम पारिक्षित पाण्डुपुत्रः। १०२१५
तत्रापि चाप्लुत्य महानुभावः सन्तर्पयामास पितॄन् सुरांश्च। द्विजातिमुख्येषु धनं विसृज्य गोदावरीं सागर
गामगच्छत्।
ततो विपाप्मा द्रविडेषु राजन् समुद्रमासाद्य च लोकपुण्यं। अगस्त्यतीर्थञ्च महापवित्रं नारीतीर्थान्यथ वीरो ददर्श।
तत्रार्ज्जुनस्याग्र्यधनुर्धरस्य निशम्य तत् कर्म्म नरैरशक्यं। संपूज्यमानः परमर्षिसंघैः परां मुदं पाण्डुसुतः स लेभे।
स तेषु तीर्थेष्वभिषिक्तगात्रः कृष्णासहायः सहितोऽनुजैश्च। संपूजयन् विक्रममर्ज्जुनस्य रेमे महीपाल पतिः पृथिव्याः।
ततः सहस्राणि गवां प्रदाय तीर्थेषु तेष्वम्बुधरोत्तमस्य। हृष्टः सह भ्रातृभिरर्ज्जुनस्य संकीर्त्तयामास गवां प्रदानं। १०२२०
स तानि तीर्थानि च सागरस्य पुण्यानि चान्यानि बहूनि राजन्। क्रमेण गच्छन् परिपूर्णकामः शूर्पारकं पुण्यतमं ददर्श
तत्रोदधेः कञ्चिदतीत्य देशं ख्यातं पृथिव्यां वनमाससाद। तप्तं सुरैरत्र तपः पुरस्तादिष्टं तथा पुण्यपरैर्नरेन्द्रैः।

स तत्र तामध्वरमुख्यवेदीं ददर्शायतपीनबाहुः । ऋचीकपुत्रस्य तपस्विसङ्घैः समावृतां पुण्यकृदर्चनीयां ।
ततो वसूनां वसुधाधिपः स मरुद्गणानाञ्च तथाऽश्विनोश्च । वैवस्वतादित्यधनेश्वराणामिन्द्रस्य विष्णोः सवितुर्विभोश्च ।
भवस्य चन्द्रस्य दिवाकरस्य पतेरपां साध्यगणस्य चैव । धातुः पितॄणाञ्च तथा महात्मा रुद्रस्य राजन् सगणस्य चैव । १०२२५
सरस्वत्याः सिद्धगणस्य चैव पुण्याश्च ये चाप्यमरास्तथाऽन्ये । पुण्यानि चाप्यायतनानि तेषां ददर्श राजा सुमनोहराणि ।
तेषूपवासान् विविधानुपोष्य दत्त्वा च रत्नानि महान्ति राजा । तीर्थेषु सर्व्वेषु परिप्लुताङ्गः पुनः स शूर्पारकमाजगाम ।
स तेन तीर्थेन तु सागरस्य पुनः प्रयातः सह सोदरीयैः । द्विजैः पृथिव्यां प्रथितं महद्भिस्तीर्थं प्रभासं समुपाजगाम ।
तत्राभिषिक्तः पृथुलोहिताक्षः सहानुजैर्देवगणान् पितॄंश्च । सन्तर्पयामास तथैव कृष्णा ते चापि विप्राः सह लोमशेन ।
स द्वादशाहं जलवायुभक्षः कुर्व्वन् क्षपाहःसु तदाऽभिषेकं । समन्ततोऽग्नीनुपदीपयित्वा तेपे तपो धर्म्मभृतां वरिष्ठः । १०२३०

तमुग्रमास्थाय तपश्चरन्तं शुश्राव रामश्च जनार्द्दनश्च । तौ सर्व्ववृष्णिप्रवरौ ससैन्यौ युधिष्ठिरं जग्मतुराजमीढं ।
ते वृष्णयः पाण्डुसुतान् समीक्ष्य भूमौ शयानान् मलदिग्धगात्रान् । अनर्हतीं द्रौपदीञ्चापि दृष्ट्वा सुदुःखिताश्चुक्रुशुरार्त्तनादं ।

ततः स रामश्च जनार्द्दनश्च कार्ष्णिश्च साम्बश्च शिनेश्च पौत्रः । अन्ये च वृष्णीनुपगम्य पूजाञ्चक्रे यथाधर्म्ममहीनसत्त्वाः ।
ते चापि सर्व्वान् प्रतिपूज्य पार्थास्तैः सत्कृताः पाण्डुसुतैस्तथैव । युधिष्ठिरं सम्परिवार्य्य राजन्नुपाविशन् देवगणा यथेन्द्रं ।
तेषां स सर्व्वञ्चरितं परेषां वने च वासं परमप्रतीतः । अस्त्रार्थमिन्द्रस्य गतञ्च पार्थं निवेदयन् हृष्टमनाः शशंस । १०२३५
श्रुत्वा तु ते तस्य वचः प्रतीतास्तांश्चापि दृष्ट्वा सुकृशानतीव । नेत्रोद्भवं संमुमुचुर्म्महार्हा दुःखार्त्तिजं वारि महानुभावाः ।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि वार्ष्णेययुधिष्ठिरसंवादे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

॥ जनमेजय उवाच ॥ प्रभासतीर्थमासाद्य पाण्डवा वृष्णयस्तथा । किमकुर्व्वन् कथाश्चैषां कास्तत्रासंस्तपोधन ।
ते हि सर्व्वे महात्मानः सर्व्वशास्त्रविशारदाः । वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परं ।
॥ वैशम्पायन उवाच ॥ प्रभासतीर्थं संप्राप्य पुण्यतीर्थं महोदधेः । वृष्णयः पाण्डवान् वीराः परिवार्य्योपतस्थिरे ।
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः । वनमाली हली रामो बभाषे पुष्करेक्षणं । १०२४०

॥ बलदेव उवाच ॥ न कृष्ण धर्म्मश्चरितो भवाय जन्तोरधर्म्मश्च पराभवाय । युधिष्ठिरो यत्र जटी महात्मा वनाश्रयः क्लिश्यति चीरवासाः ।
दुर्य्योधनश्चापि महीं प्रशास्ति न चास्य भूमिर्विवरं ददाति । धर्म्मादधर्म्मश्चरितो गरीयानितीव मन्येत नरोऽल्पबुद्धिः ।
दुर्य्योधने चापि विवर्द्धमाने युधिष्ठिरे चासुखमात्तराज्ये । किन्न्वद्य कर्त्तव्यमिति प्रजाभिः शङ्का मिथः संजनिता नराणां ।
अयं स धर्म्मप्रभवो नरेन्द्रो धर्म्मे धृतः सत्यधृतिः प्रदाता । चलेद्धि राज्याच्च सुखाच्च पार्थो धर्म्मादपेतस्तु कथं विवर्द्धेत् ।
कथं नु भीष्मश्च कृपश्च विप्रो द्रोणश्च राजा च कुलस्य वृद्धः । प्रव्राज्य पार्थान् सुखमाप्नुवन्ति धिक्पापबुद्धीन् भरतप्रधानान् । १०२४५
किन्नाम वक्ष्यत्यवनिप्रधानः पितॄन् समागम्य परत्र पापः । पुत्रेषु सम्यक् चरितं मयेति पुत्रानपापान् व्यपरोप्य राज्यात् ।
नासौ धिया संप्रति पश्यति स्म किं नाम कृत्वाऽहमचक्षुरेवं । जातः पृथिव्यामिति पार्थिवेषु प्रव्राज्य कौन्तेयमिति स्म राज्यात् ।

नूनं समृद्धान् पितृलोकभूमौ चामीकराभान् क्षितिजान् प्रफुल्लान्। विचित्रवीर्य्यस्य सुतः सपुत्रः कृत्वा नृशंसं बत पश्यति स्म।
व्यूढोत्तरांसान् पृथुलोहिताक्षानिमान् स्म पृच्छन् स शृणोति नूनं। प्रास्थापयत् यत् स वनं सशङ्को युधिष्ठिरं सानुजमात्तशस्त्रं।

योऽयं परेषां पृतनां समृद्धां निरायुधो दीर्घभुजो निहन्यात्। श्रुत्वैव शब्दं हि वृकोदरस्य मुञ्चन्ति सैन्यानि शकृत्समूत्रं।१०२५०
स क्षुत्पिपासाऽध्वकृशस्तरस्वी समेत्य नानायुधबाणपाणिः। वने स्मरन् वासमिमं सुघोरं शेषं न कुर्य्यादिति निश्चितं मे।
न ह्यस्य वीर्य्येण बलेन कश्चित् समः पृथिव्यामपि विद्यतेऽन्यः। स शीतवातातपकर्षिताङ्गो न शेषमाजावसुहृत्सु कुर्य्यात्।
प्राच्यान्नृपानेकरथेन जित्वा वृकोदरः सानुचरान्रणेषु। स्वस्त्यागमद्योऽतिरथस्तरस्वी सोऽयं वने क्लिश्यति चीरवासाः।
यः सिन्धुकूले व्यजयन्नृदेवान् समागतान् दाक्षिणात्यान् महीपान्। तं पश्यतेमं सहदेवमद्य तरस्विनं तापसवेशरूपं।
यः पार्थिवानेकरथेन जिग्ये दिशं प्रतीचीं प्रति युद्धशौण्डः। सोऽयं वने मूलफलेन जीवन् जटी चरत्यद्य मलाचिताङ्गः।१०२५५
सत्रे समृद्धेऽतिरथस्य राज्ञो वेदीतलादुत्पतिता सुता या। सेयं वने वासमिमं सुदुःखं कथं सहत्यद्य सती सुखार्हा।
त्रिवर्गमुख्यस्य समीरणस्य देवेश्वरस्याप्यथ वाऽश्विनोश्च। एषां सुराणां तनयाः कथन्नु वनेऽचरन् ध्वस्तसुखाः सुखार्हाः।
जिते हि धर्म्मस्य सुते सभार्य्ये सभ्रातृके सानुचरे निरस्ते। दुर्य्योधने चापि विवर्द्धमाने कथं न सीदत्यवनिः सशैला।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि बलरामवाक्ये एकोनविंशत्यधिकशततोऽध्यायः॥ ११९॥

॥ सात्यकिरुवाच ॥ न राम कालः परिदेवनाय यदुत्तरं तत्र तदेव सर्व्वे। समाचरामो ह्यनतीतकालं युधिष्ठिरो यद्यपि नाह किञ्चित्।
ये नाथवन्तोऽद्य भवन्ति लोके ते नात्मना कर्म्म समारभन्ते। तेषान्तु कार्य्येषु भवन्ति नाथाः शैब्यादयो राम यथा ययातेः। १०२६०
येषां तथा राम समारभन्ते कार्य्याणि नाथाः स्वमतेन लोके। ते नाथवन्तः पुरुषप्रवीरा नानाथवत् कृच्छ्रमवाप्नुवन्ति।
कस्मादिमौ रामजनार्द्दनौ च प्रद्युम्नसाम्बौ च मया समेतौ। वसन्त्यरण्ये सह सोदरीयैस्त्रैलोक्यनाथानभिगम्य पार्थाः।
निर्य्यातु साध्वद्य दशार्हसेना प्रभूतनानायुधचित्रवर्म्मा। यमक्षयं गच्छतु धार्त्तराष्ट्रः सबान्धवो वृष्णिबलाभिभूतः।
त्वं ह्येव कोपात् पृथिवीमपीमां संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा। स धार्त्तराष्ट्रं जहि सानुबन्धं वृत्रं यथा देवपतिर्महेन्द्रः।
भ्राता च मे यः स सखा गुरुश्च जनार्द्दनस्यात्मसमश्च पार्थः। यदर्थमे[illegible]नुजाः सुपुत्रं शिष्यं गुरुश्चाप्रतिकूलवादं। १०२६५
यदर्थमभ्युद्यतमुत्तमन्तत् करोति कर्म्माग्र्यमपारणीयं। तस्यास्त्रवर्षाण्यहमुत्तमास्त्रैर्व्विहत्य सर्व्वाणि रणेऽभिभूय।
कोपाच्छिरः सर्पविषाग्निकल्पैः शरोत्तमैरुन्मथितास्मि राम। खड्गेन चाहं निशितेन संख्ये कायाच्छिरस्तस्य बलात् प्रमथ्य।
ततोऽस्य सर्व्वाननुगान् हनिष्ये दुर्य्योधनञ्चापि कुरूंश्च सर्व्वान्। आत्तायुधं मामिह रौहिणेय पश्यन्तु भौमा युधि जातहर्षाः।
निघ्नन्तमेकं कुरुयोधमुख्यानग्निं महाकक्षमिवान्तकाले। प्रद्युम्नमुक्तान्निशितान्न शक्ताः सोढुं कृपद्रोणविकर्णकर्णाः।
जानामि वीर्य्यञ्च जयात्मजस्य कार्ष्णिर्भवत्येष यथा रणस्थः। साम्बः ससूतं सरथं भुजाभ्यां दुःशासनं शास्तु बलात्प्रमथ्य।१०२७०
न विद्यते जाम्बवतीसुतस्य रणे विषह्यं हि रणोत्कटस्य। एतेन बालेन हि शम्बरस्य दैत्यस्य सैन्यं सहसा प्रणुन्नं।
वृत्तोरुरत्यायतपीनबाहुरेतेन संख्ये निहतोऽश्वचक्रः। को नाम साम्बस्य महारथस्य रणे समक्षं रथमभ्युदीयात्।

यथा प्रविश्यान्तरमन्तकस्य काले मनुष्यो हि विनिष्क्रमेत। तथा प्रविश्यान्तरमस्य संख्ये को नाम जीवन् पुनराव्रजेत।

द्रोणश्च भीष्मश्च महारथौ तौ सुतैर्वृतश्चाप्यथ सोमदत्तः। सर्व्वाणि सैन्यानि च वासुदेवः प्रधक्ष्यते सायकवह्निजालैः।
किन्नाम लोकेष्वविषह्यमस्ति कृष्णस्य सर्व्वेषु सदेवकेषु। आत्तायुधस्योत्तमबाणपाणेश्चक्रायुधस्याप्रतिमस्य युद्धे। १०२७५
ततोऽनिरुद्धोऽप्यसिचर्म्मपाणिर्म्महीमिमां धार्त्तराष्ट्रैर्विसंज्ञैः। हृतोत्तमाङ्गैर्निहितैः करोतु कीर्णां कुशैर्व्वेदिमिवाध्वरेषु।
गदोल्मुकौ बाहुकभानुनीथाः शूरश्च संख्ये निशठः कुमारः। रणोत्कटौ सारणचारुदेष्णौ कुलोचितं विप्रथयन्तु कर्म्म।
सवृष्णिभोजान्धकयोधमुख्या समागता सात्वतशूरसेना। हत्वा रणे तान् धृतराष्ट्रपुत्रान् लोके यशः स्फीतमुपाकरोतु।

ततोऽभिमन्युः पृथिवीं प्रशास्तु यावद्व्रतं धर्म्मभृतां वरिष्ठः। युधिष्ठिरः पारयते महात्मा द्यूते यथोक्तं कुरुसत्तमेन।
अस्मत्प्रमुक्तैर्विशिखैर्जितारिस्ततो महीं भोक्ष्यति धर्म्मराजः। निर्द्धार्त्तराष्ट्रां हतसूतपुत्रामेतद्धि नः कृत्यतमं यशस्यं। १०२८०
॥ वासुदेव उवाच ॥ असंशयं माधव सत्यमेतद्गृह्णीम ते वाक्यमदीनसत्त्व। स्वाभ्यां भुजाभ्यामजितान्तु भूमिं नेच्छेत् कुरूणामृषभः कथञ्चित्।
न ह्येष कामान्न भयान्न लोभाद्युधिष्ठिरो जातु जह्यात् स्वधर्म्मं। भीमार्ज्जुनौ चातिरथौ यमौ च तथैव कृष्णा द्रुपदात्मजेयं।
उभौ हि युद्धेऽप्रतिमौ पृथिव्यां वृकोदरश्चैव धनञ्जयश्च। कस्मान्न कृत्स्नां पृथिवीं प्रशासेन्माद्रीसुताभ्याञ्च पुरस्कृतोऽयं।

यदा तु पाञ्चालपतिर्म्महात्मा सकेकयश्चेदिपतिर्व्वयञ्च। युध्येम विक्रम्य रणे समेतास्तदैव सर्व्वे रिपवो हि न स्युः।
॥ युधिष्ठिर उवाच ॥ नेदञ्चित्रं माधव यद्ब्रवीषि सत्यन्तु मे रक्ष्यतमं न राज्यं। कृष्णस्तु मां वेद यथावदेकः कृष्णञ्च वेदाहमथो यथावत्। १०२८५

यदैव कालं पुरुषप्रवीर वेत्स्यत्ययं माधव विक्रमस्य। तदा रणे त्वञ्च शिनिप्रवीर सुयोधनं जेष्यसि केशवश्च।
प्रतिप्रयान्त्वद्य दशार्हवीरा दृष्टोऽस्मि नाथैर्नरलोकनाथैः। धर्म्मे प्रमादं कुरुताप्रमेया द्रष्टाऽस्मि भूयः सुखिनः समेतान्।
तेऽन्योन्यमामन्त्र्य तथाऽभिवाद्य वृद्धान् परिष्वज्य शिशूंश्च सर्व्वान्। यदुप्रवीराः स्वगृहाणि जग्मुस्ते चापि तीर्थान्यनुसंविचेरुः।
विसृज्य कृष्णं त्वथ धर्म्मराजो विदर्भराजोपचितां सुतीर्थां। जगाम पुण्यां सरितं पयोष्णीं सभ्रातृभृत्यः सह लोमशेन।
सुतेन सोमेन विमिश्रतोयां पयः पयोष्णीं प्रति सोऽध्युवास। द्विजातिमुख्यैर्मुदितैर्म्महात्मा संस्तूयमानः स्तुतिभिर्व्वराभिः।१०२९०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि वृष्णिगमने विंशत्यधिकशततमोऽध्यायः॥ १२०॥

॥ लोमश उवाच ॥ नृगेण यजमानेन सोमेनेह पुरन्दरः। तर्पितः श्रूयते राजन् स तृप्तो मदमभ्यगात्।
इह देवैः सहेन्द्रैश्च प्रजापतिभिरेव च। इष्टं बहुविधैर्यज्ञैर्म्महद्भिर्भूरिदक्षिणैः।
आमूर्त्तरयसश्चेह राजा वज्रधरं प्रभुः। तर्पयामास सोमेन हयमेधेषु सप्तसु।
तस्य सप्तसु यज्ञेषु सर्व्वमासीद्धिरण्मयं। वानस्पत्यञ्च भौमञ्च यद्द्रव्यं नियतं मखे।
चषालयूपचमसाः स्थाल्यः पात्र्यः स्रुचः स्रुवाः। तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः। १०२९५
सप्तैकैकस्य यूपस्य चषालाश्चोपरि स्थिताः। तस्य स्म यूपान् यज्ञेषु भ्राजमानान् हिरण्मयान्।
स्वयमुत्थापयामासुर्द्देवाः सेन्द्रा युधिष्ठिर। तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः। प्रसंख्यानानसंख्येयान् प्रत्यगृह्णन् द्विजातयः।
सिकता वा यथा लोके यथा वा दिवि तारकाः। यथा वा वर्षतो धारा असंख्येयाः स्म केनचित्।
तथैव तदसंख्येयं धनं यत् प्रददौ गयः। सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु। १०३००

भवेत् संख्येयमेतद्धि यदेतत् परिकीर्त्तितं। न तस्य शक्याः संख्यातुं दक्षिणा दक्षिणावतः।
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्म्मणा। ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान्।
अल्पावशेषा पृथिवी चैत्यैरासीन्महात्मनः। गयस्य यजमानस्य तत्र तत्र विशाम्पते।
स लोकान् प्राप्तवानैन्द्रान् कर्म्मणा तेन भारत। सलोकतां तस्य गच्छेत् पयोष्ण्यां य उपस्पृशेत्।
तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोऽच्युत। उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि। १०२०५
॥ वैशम्पायन उवाच ॥ स पयोष्ण्यां नरश्रेष्ठ स्नात्वा वै भ्रातृभिः सह। वैदूर्य्यपर्व्वतञ्चैव नर्म्मदाञ्च महानदीं।
समागमत तेजस्वी भ्रातृभिः सहितोऽनघ। तत्रास्य सर्व्वाण्याचख्यौ लोमशो भगवानृषिः।
तीर्थानि रमणीयानि पुण्यान्यायतनानि च। यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह।
तत्र तत्राददद्वित्तं ब्राह्मणेभ्यः सहस्रशः॥ लोमश उवाच ॥ देवानामेति कौन्तेय तथा राज्ञां सलोकतां।
वैदूर्य्यपर्व्वतं दृष्ट्वा नर्म्मदामवतीर्य्य च। सन्धिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च। १०२१०
एनमासाद्य कौन्तेय सर्व्वपापैः प्रमुच्यते। एष शर्य्यातियज्ञस्य देशस्तात प्रकाशते।
साक्षाद्यत्रापिबत् सोममश्विभ्यां सह कौशिकः। चुकोप भार्गवश्चापि महेन्द्रस्य महातपाः।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः। सुकन्याञ्चापि भार्य्यां स राजपुत्रीमवाप्तवान्।
॥ युधिष्ठिर उवाच ॥ कथं विष्टम्भितस्तेन भगवान् पाकशासनः। किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः।
नासत्यौ च कथं ब्रह्मन् कृतवान् सोमपीथिनौ। एतत् सर्व्वं यथावृत्तमाख्यातु भगवान्मम। १०२१५

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सुकन्योपाख्याने एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

॥ लोमश उवाच ॥ भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भारत। समीपे सरसस्तस्य तपस्तेपे महाद्युतिः।
स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव। अतिष्ठत चिरं कालमेकदेशे विशाम्पते।
स वल्मीकोऽभवदृषिर्लताभिरिव संवृतः। कालेन महता राजन् समाकीर्णः पिपीलिकैः।
तथा स संवृतो धीमान् मृत्पिण्ड इव सर्व्वशः। तप्यते स्म तपो घोरं वल्मीकेन समावृतः।
अथ दीर्घस्य कालस्य शर्य्यातिर्नाम पार्थिवः। आजगाम सरो रम्यं विहर्त्तुमिदमुत्तमं। १०२२०
तस्य स्त्रीणां सहस्राणि चत्वार्य्यासन् परिग्रहः। एकैव च सुता सुभ्रूः सुकन्या नाम भारत।
सा सखीभिः परिवृता दिव्याभरणभूषिता। चंक्रम्यमाणा वल्मीकं भार्गवस्य समासदत्।
सा वै वसुमतीं तत्र पश्यन्ती सुमनोरमां। वनस्पतीन् विचिन्वन्ती विजहार सखीवृता।
रूपेण वयसा चैव मदनेन मदेन च। बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः।
तां सखीरहितामेकामेकवस्त्रामलङ्कृतां। ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतं। १०२२५
तां पश्यमानो विजने स रेमे परमद्युतिः। क्षामकण्ठश्च विप्रर्षिस्तपोबलसमन्वितः।
तामाबभाषे कल्याणीं सा चास्य न शृणोति वै। ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी।
कौतूहलात् कण्टकेन बुद्धिमोहबलात्कृता। किन्नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने।
अक्रुध्यत् स तया विद्धे नेत्रे परममन्युमान्। ततः शर्य्यातिसैन्यस्य शकृन्मूत्रे समावृणोत्।

ततो रुद्धे शकृन्मूत्रे सैन्यमासीत् सुदुःखितं । तथागतमभिप्रेक्ष्य पर्य्यपृच्छत् स पार्थिवः । १०३२०

तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः । केनापकृतमद्येह भार्गवस्य महात्मनः ।

ज्ञातं वा यदि वाऽज्ञातं तद्दुतं ब्रूत माचिरं । तमूचुः सैनिकाः सर्व्वे न विद्मोऽपकृतं वयं ।

सर्व्वोपायैर्यथाकामं भवांस्तदधिगच्छतु । ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयं ।

पर्य्यपृच्छत् सुहृद्वर्गं पर्य्यजानन्नचैव ते । आनाहार्त्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितं ।

पितरं दुःखितं दृष्ट्वा सुकन्येदमथाब्रवीत् । मयाऽटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत् । १०३२५

खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् । एतच्छ्रुत्वा तु वल्मीकं शर्य्यातिस्तूर्णमभ्ययात् ।

तत्रापश्यत्तपोवृद्धं वयोवृद्धञ्च भार्गवं । अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपतिः ।

अज्ञानाद्बालया यत्ते कृतं तत् क्षन्तुमर्हसि । ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ।

अपमानादहं विद्धो ह्यनया दर्पपूर्णया । रूपौदार्य्यसमायुक्तां लोभमोहबलात्कृतां ।

तामेव प्रतिगृह्याहं राजन् दुहितरं तव । क्षंस्यामीति महीपाल सत्यमेतद्ब्रवीमि ते । १०३३०

॥ लोमश उवाच ॥ ऋषेर्व्वचनमाज्ञाय शर्य्यातिरविचारयन् । ददौ दुहितरं तस्मै च्यवनाय महात्मने ।

प्रतिगृह्य च तां कन्यां भगवान् प्रससाद ह । प्राप्तप्रसादो राजा वै ससैन्यः पुरमाव्रजत् ।

सुकन्याऽपि पतिं लब्ध्वा तपस्विनमनिन्दिता । नित्यं पर्य्यचरत् प्रीत्या तपसा नियमेन च ।

अग्नीनामतिथीनाञ्च शुश्रूषुरनसूयिका । समाराधयत क्षिप्रं च्यवनं सा शुभानना ।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सुकन्योपाख्याने द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

॥ लोमश उवाच ॥ कस्यचित्त्वथ कालस्य त्रिदशावश्विनौ नृप । कृताभिषेकां विवृतां सुकन्यां तामपश्यतां । १०३४५

तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव । ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदं ।

कस्य त्वमसि वामोरु वनेऽस्मिन् किं करोषि च । इच्छाव भद्रे ज्ञातुं त्वां तत्त्वमाख्याहि शोभने ।

ततः सुकन्या सव्रीडा तावुवाच सुरोत्तमौ । शर्य्यातितनयां वित्तं भार्य्यां मां च्यवनस्य च ।

अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु । कथं त्वमसि कल्याणि पित्रा दत्ता गताध्वने ।

भ्राजसेऽस्मिन् वने भीरु विद्युत्सौदामिनी यथा । न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि । १०३५०

अनाभरणसम्पन्ना परमाम्बरवर्ज्जिता । शोभयस्यधिकं भद्रे वनमप्यनलङ्कृता ।

सर्व्वाभरणसम्पन्ना परमाम्बरधारिणी । शोभेथास्त्वनवद्याङ्गि नैवं मलपङ्किनी ।

कस्मादेवंविधा भूत्वा जराजर्ज्जरितं पतिं । त्वमुपास्से ह कल्याणि कामभोगबहिष्कृतं ।

असमर्थं परित्राणे पोषणे च शुचिस्मिते । सा त्वं च्यवनमुत्सृज्य वरयस्वैकमावयोः ।

पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः । एवमुक्ता सुकन्याऽपि सुरौ ताविदमब्रवीत् । १०३५५

रताऽहं च्यवने पत्यौ मैवं मां पर्य्यशङ्किथाः । तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ।

युवानं रूपसम्पन्नं करिष्यावः पतिं तव । ततस्तस्यावयोश्चैव वृणीष्वान्यतमं पतिं ।

एतेन समयेनैनमामन्त्रय पतिं शुभे । सा तयोर्व्वचनाद्राजन्नुपसङ्गम्य भार्गवं ।

उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति । तच्छ्रुत्वा च्यवनो भार्य्यामुवाच क्रियतामिति ।

भर्त्रा सा समनुज्ञाता क्रियतामित्यथाब्रवीत् । श्रुत्वा तदाऽश्विनौ वाक्यं तत्तस्याः क्रियतामिति । १०२१०

ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः । ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।

अश्विनावपि तद्राजन् सरः प्राविशतां तदा । ततो मुहूर्त्तादुत्तीर्णाः सर्व्वे ते सरसस्तदा ।

दिव्यरूपधराः सर्व्वे युवानो मृष्टकुण्डलाः । तुल्यवेशधराश्चैव मनसः प्रीतिवर्द्धनाः ।

तेऽब्रुवन् सहिताः सर्व्वे वृणीष्वान्यतमं शुभे । अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ।

यत्र वाऽप्यभिकामाऽसि तं वृणीष्व सुशोभने । सा समीक्ष्य तु तान् सर्व्वांस्तुल्यरूपधरान् स्थितान् । १०२१५

निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिं । लब्ध्वा तु च्यवनो भार्य्यां वयोरूपञ्च वाञ्छितं ।

हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः । यथाऽहं रूपसम्पन्नो वयसा च समन्वितः ।

कृतो भवद्भ्यां वृद्धः सन् भार्य्याञ्च प्राप्तवानिमां । तस्माद्युवां करिष्यामि प्रीत्याऽहं सोमपीथिनौ ।

मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वां । तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः ।

च्यवनश्च सुकन्या च सुराविव विजह्रतुः । १०२२०

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सुकन्योपाख्याने त्रयोविंशत्यधिकशततोऽध्यायः ॥ १२३ ॥

॥ लोमश उवाच ॥ ततः शुश्राव शर्य्यातिर्व्वयःस्थञ्च्यवनं कृतं । संहृष्टः सेनया सार्द्धमुपायाद्भार्गवाश्रमं ।

च्यवनञ्च सुकन्याञ्च दृष्ट्वा देवसुताविव । रेमे सभार्य्यः शर्य्यातिः कृत्स्नां प्राप्य महीमिव ।

ऋषिणा सत्कृतस्तेन सभार्य्यः पृथिवीपतिः । उपोपविष्टः कल्याणीः कथाश्चक्रे मनोरमाः ।

अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन् । याजयिष्यामि राजंस्त्वां सम्भारानवकल्पय ।

ततः परमसंहृष्टः शर्य्यातिरवनीपतिः । च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् । १०२२५

प्रशस्तेऽहनि यज्ञीये सर्व्वकामसमृद्धिमत् । कारयामास शर्य्यातिर्यज्ञायतनमुत्तमं ।

तत्रैनं च्यवनो राजन् याजयामास भार्गवः । अद्भुतानि च तत्रासन् यानि तानि निबोध मे ।

अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा । तमिन्द्रो वारयामास गृह्णानं स तयोर्ग्रहं ।

॥ इन्द्र उवाच ॥ उभावेतौ न सोमार्हौ नासत्याविति मे मतिः । भिषजौ दिवि देवानां कर्म्मणा तेन नार्हतः ।

॥ च्यवन उवाच ॥ महोत्साहौ महात्मानौ रूपद्रविणवत्तरौ । यौ चक्रतुर्मां मघवन् वृन्दारकमिवाजरं । १०२३०

ऋते त्वां विबुधांश्चान्यान् कथं वै नार्हतः सवं । अश्विनावपि देवेन्द्र देवौ विद्धि पुरन्दर ।

॥ इन्द्र उवाच ॥ चिकित्सकौ कर्म्मकरौ कामरूपसमन्वितौ । लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ।

॥ लोमश उवाच ॥ एतदेव यदा वाक्यमाम्रेडयति देवराट् । अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः ।

ग्रहीष्यन्तन्तु तं सोममश्विनोरुत्तमं तदा । समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ।

आभ्यामर्थाय सोमन्त्वं ग्रहीष्यसि यदि स्वयं । वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमं । १०२३५

एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः । जग्राह विधिवत् सोममश्विभ्यामुत्तमं ग्रहं ।

ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः । तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः ।

तं स्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलं । कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ।
ततः कृत्याऽथ संजज्ञे मुनेस्तस्य तपोबलात् । मदो नाम महावीर्य्यो बृहत्कायो महासुरः ।
शरीरं यस्य निर्देष्टुमशक्यन्तु सुरासुरैः । तस्यास्यमभवद्घोरं तीक्ष्णाग्रदशनं महत् । १०२९०
हनुरेका स्थिता तस्य भूमावेका दिवं गता । चतस्र आयता दंष्ट्रा योजनानां शतं शतं ।
इतरे त्वस्य दशना बभूवुर्दशयोजनाः । प्राकारसदृशाकाराः शूलाग्रसमदर्शनाः ।
बाहू पर्व्वतसङ्काशावायतावयुतं समौ । नेत्रे रविशशिप्रख्ये वक्त्रं कालाग्निसन्निभं ।
लेलिहज्जिह्वया वक्त्रं विद्युच्चपललोलया । व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् ।
स भक्षयिष्यन् संक्रुद्धः शतक्रतुमुपाद्रवत् । महता घोररूपेण लोकान् शब्देन नादयन् । १०२९५
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सुकन्योपाख्याने चतुर्व्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ लोमश उवाच ॥ तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः । आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकं ।
भयात् संस्तम्भितभुजः सृक्किणी लेलिहन्मुहुः । ततोऽब्रवीद्देवराजश्च्यवनं भयपीड़ितः ।
सोमार्हावश्विनावेतावद्यप्रभृति भार्गव । भविष्यतः सत्यमेतद्वचो विप्र प्रसीद मे ।
न ते मिथ्या समारम्भो भवत्वेष परो विधिः । जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ।
सोमापावश्विनावेतौ यथाऽद्य कृतौ त्वया । भूय एव तु ते वीर्य्यं प्रकाशेदिति भार्गव । १०३००
सुकन्यायाः पितुश्चास्य लोके कीर्त्तिः प्रथेदिति । अतो मयैतद्विहितं तव वीर्य्यप्रकाशनं ।
तस्मात् प्रसादं कुरु मे भवत्वेवं यथेच्छसि । एवमुक्तस्य शक्रेण भार्गवस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरन्दरं । मदञ्च व्यभजद्राजन् पाने स्त्रीषु च वीर्य्यवान् ।
अक्षेषु मृगयायाञ्च पूर्व्वसृष्टं पुनः पुनः । तदा मदं विनिक्षिप्य शक्रं सन्तर्प्य चेन्दुना ।
अश्विभ्यां सहितान् देवान् याजयित्वा च तं नृपं । विख्याप्य वीर्य्यं लोकेषु सर्व्वेषु वदताम्वरः । १०३०५
सुकन्यया सहारण्ये विजहारानुकूलया । तस्येदं द्विजसंघुष्टं सरो राजन् प्रकाशते ।
अत्र त्वं सह सोदर्य्यैः पितॄन् देवांश्च तर्पय । एतद्दृष्ट्वा महीपाल सिकताक्षञ्च भारत ।
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनं । पुष्करेषु महाराज सर्व्वेषु च जलं स्पृश ।
स्थाणोर्मन्त्राणि च जपन् सिद्धिं प्राप्स्यसि भारत । सन्धिर्द्वयोर्नरश्रेष्ठ त्रेताया द्वापरस्य च ।
अयं हि दृश्यते पार्थ सर्व्वपापप्रणाशनः । अत्रोपस्पृश चैव त्वं सर्व्वपापप्रणाशने । १०३१०
आर्च्चीकपर्व्वतश्चैव निवासो वै मनीषिणां । सदाफलः सदास्रोतो मरुतां स्थानमुत्तमं ।
चैत्याश्चैते बहुविधास्त्रिदशानां युधिष्ठिर । एतच्चन्द्रमसस्तीर्थमृषयः पर्य्युपासते ।
वैखानसा वालखिल्याः पावका वायुभोजनाः । शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च ।
सर्व्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश । शान्तनुश्चात्र राजेन्द्र शुनकश्च नराधिपः ।
नरनारायणौ चोभौ स्थानं प्राप्ताः सनातनं । इह नित्यशया देवाः पितरश्च महर्षिभिः । १०३१५
आर्च्चीकपर्व्वते तेपुस्तान् यजस्व युधिष्ठिर । इह ते वै चरून् प्राश्नन्नृषयश्च विशाम्पते ।

यमुना चाच्युतस्रोता: कृष्णश्चेह तपोरत:। यमौ च भीमसेनश्च कृष्णा चामित्रकर्षण।
सर्व्वे चात्र गमिष्यामस्त्वयैव सह पाण्डव। एतत् प्रस्रवणं पुण्यमिन्द्रस्य मनुजेश्वर।
यत्र धाता विधाता च वरुणश्चोर्द्ध्वमागता:। इह तेऽप्यवसन् राजन् क्षान्ता: परमधर्म्मिण:।
मैत्राणामृजुबुद्धीनामयं गिरिवर: शुभ:। एषा सा यमुना राजन् महर्षिगणसेविता। १०४२०
नानायज्ञचिता राजन् पुण्या पापभयापहा। अत्र राजा महेष्वासो मान्धाताऽयजत स्वयं।
साहदेविश्च कौन्तेय सोमको ददतां वर।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सुकन्योपाख्याने पञ्चविंशत्यधिकशततमोऽध्याय:। १२५ ॥
॥ युधिष्ठिर उवाच ॥ मान्धाता राजशार्दूल त्रिषु लोकेषु विश्रुत:। कथं जातो महाब्रह्मन् यौवनाश्वो नृपोत्तम:।
कथं चैनां परां काष्ठां प्राप्तवानमितद्युति:। यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मन:।
एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमत:। यथा मान्धातृशब्दश्च तस्य शक्रसमद्युते:। १०४२५
जन्म चाप्रतिवीर्य्यस्य कुशलो ह्यसि भाषितुं ॥ लोमश उवाच ॥ शृणुष्वावहितो राजन् राज्ञस्तस्य महात्मन:।
यथा मान्धातृशब्दो वै लोकेषु परिगीयते। इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपति:।
सोऽयजत् पृथिवीपाल: क्रतुभिर्भूरिदक्षिणै:। अश्वमेधसहस्रञ्च प्राप्य धर्म्मभृतांवर:।
अन्यैश्च क्रतुभिर्मुख्यैरयजत् स्वाप्तदक्षिणै:। अनपत्यस्तु राजर्षि: स महात्मा महाव्रत:।
मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह। शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मवान्। १०४३०
स कदाचिन्नृपो राजन्नुपवासेन दु:खित:। पिपासाशुष्कहृदय: प्रविवेशाश्रमं भृगो:।
तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दन:। इष्टिञ्चकार सौद्युम्नेर्महर्षि: पुत्रकारणात्।
सम्भृतो मन्त्रपूतेन वारिणा कलशो महान्। तत्रातिष्ठत राजेन्द्र पूर्व्वमेव समाहित:।
यत् प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतं। तं न्यस्य वेद्यां कलसं सुषुपुस्ते महर्षय:।
रात्रिजागरणाच्छ्रान्तान् सौद्युम्नि: समतीत्य तान्। शुष्ककण्ठ: पिपासार्त्त: पानीयार्थी भृशं नृप:। १०४३५
तं प्रविश्याश्रमं श्रान्त: पानीयं सोऽभ्ययाचत। तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा।
नाश्रौषीत् कश्चन तदा शकुनेरिव वाशित:। ततस्तं कलसं दृष्ट्वा जलपूर्णं स पार्थिव:।
अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत्। स पीत्वा शीतलं तोयं पिपासार्त्तो महीपति:।
निर्व्वाणमगमद्धीमान् सुसुखी चाभवत्तदा। ततस्ते प्रत्यबुध्यन्त मुनय: सतपोधना:।
निस्तोयं तञ्च कलसं ददृशु: सर्व्व एव ते। कस्य कर्म्मेदमिति ते पर्य्यपृच्छन् समागता:। १०४४०
युवनाश्वो ममेत्येवं सत्यं समभिपद्यत। न युक्तमिति तं प्राह भगवान् भार्गवस्तदा।
सुतार्थं स्थापिता ह्यापस्तपसा चैव सम्भृता:। मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणं।
पुत्रार्थं तव राजर्षे महाबलपराक्रम। महाबलो महावीर्य्यस्तपोबलसमेधित:।
य: शक्रमपि वीर्य्येण गमयेद्यमसादनं। अनेन विधिना राजन्मयैतदुपपादितं।
अब्भक्षणात्त्वया राजन्नयुक्तं कृतमद्य वै। न त्वद्य शक्यमस्माभिरेतत्कर्त्तुमतोऽन्यथा। १०४४५

नूनं दैवकृतं ह्येतद्येन कृतवानसि । पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ।
आपस्त्वया महाराज मत्तपोवीर्य्यसम्भृताः । ततस्त्वमात्मना पुत्त्रमीदृशं जनयिष्यसि ।
विधास्यामो वयन्तत्र तवेष्टिं परमाद्भुतां । यथा शक्रसमं पुत्त्रं जनयिष्यसि वीर्य्यवान् ।
गर्भधारणजं वाऽपि न खेदं समवाप्स्यसि । ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामपार्श्वं विनिर्भिद्य सुतः सूर्य्य इव स्थितः । निश्चक्राम महातेजा न च तं मृत्युराविशत् । १०४५०
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् । ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ।
ततो देवा महेन्द्रं तमपृच्छन् धास्यतीति किं । प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसन्दधे ।
मामयं धास्यतीत्येवं भाषिते चैव वज्रिणा । मान्धातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः ।
प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा । अवर्द्धत महातेजाः किष्कूणां च त्रयोदश ।
वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरं । उपतस्थुर्महाराज ध्यातमात्रस्य सर्व्वशः । १०४५५
आजगवं नाम धनुः शराः शृङ्गोद्भवाश्च ये । अभेद्यं कवचञ्चैव सद्यस्तमुपशिश्रियुः ।
सोऽभिषिक्तो मघवता स्वयं शक्रेण भारत । धर्म्मेण व्यजयल्लोकांस्त्रीन्विष्णुरिव विक्रमैः ।
तस्याप्रतिहतञ्चक्रं प्रावर्त्तत महात्मनः । रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ।
तस्येयं वसुसम्पूर्णा वसुधा वसुधाधिप । तेनेष्टं विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ।
चितचैत्यो महातेजा धर्म्मान् प्राप्य च पुष्कलान् । शक्रस्यार्द्धासनं राजल्लब्धवानमितद्युतिः । १०४६०
एकाह्नात् पृथिवी तेन धर्म्मनित्येन धीमता । विजिता शासनादेव सरत्नाकरपत्तना ।
तस्य चैत्यैर्महाराज क्रतूनां दक्षिणावतां । चतुरन्ता मही व्याप्ता नासीत् किञ्चिदनावृतं ।
तेन पद्मसहस्राणि गवां दश महात्मना । ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते ।
तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना । वृष्टं शस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः ।
तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् । गर्ज्जन्निव महामेघः प्रमथ्य निहतः शरैः । १०४६५
प्रजाश्चतुर्व्विधास्तेन त्राता राजन् कृतात्मना । तेनात्मतपसा लोकास्तापितास्चातितेजसा ।
तस्यैतद्देवयजनं स्थानमादित्यवर्च्चसः । पश्य पुण्यतमे देशे कुरुक्षेत्रस्य मध्यतः ।
एतत्ते सर्व्वमाख्यातं मान्धातुश्चरितं महत् । जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ।
॥ वैशम्पायन उवाच ॥ एवमुक्तः स कौन्तेयो लोमशेन महर्षिणा । पप्रच्छानन्तरं भूयः सोमकं प्रति भारत ।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि मान्धात्रुपाख्याने षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

॥ युधिष्ठिर उवाच ॥ कथंवीर्य्यः स राजाऽभूत् सोमको वदतांवर । कर्म्माण्यस्य प्रभावञ्च श्रोतुमिच्छामि तत्त्वतः । १०४७०
॥ लोमश उवाच ॥ युधिष्ठिरासीन्नृपतिः सोमको नाम धार्म्मिकः । तस्य भार्य्याशतं राजन् सदृशीनामभूत्तदा ।
स वै यत्नेन महता तासु पुत्त्रं महीपतिः । कञ्चिन्नासादयामास कालेन महता अपि ।
कदाचित्तस्य वृद्धस्य यतमानस्य यत्नतः । जन्तुर्नाम सुतस्तस्मिन् स्त्रीशते समजायत ।
तं जातं मातरः सर्व्वाः परिवार्य्य समासते । सततं पृष्ठतः कृत्वा कामभोगान् विशाम्पते ।

ततः पिपीलिका जन्तुं कदाचिददशत् स्फिचि। स दष्टो व्यनदन्नादं तेन दुःखेन बालकः। १०४७५

ततस्ता मातरः सर्व्वाः प्राक्रोशन् भृशदुःखिताः। परिवार्य्य जन्तुं सहसा शब्दस्तुमुलोऽभवत्।

तमार्त्तनादं सहसा शुश्राव स महीपतिः। अमात्यपर्षदो मध्ये उपविष्टः सहर्त्विजः।

ततः प्रस्थापयामास किमेतदिति पार्थिवः। तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति।

त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः। प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिन्दम।

सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तःपुरान्नृपः। ऋत्विजा सहितो राजन् सहामात्य उपाविशत्। १०४८०

॥ सोमक उवाच ॥ धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत्। नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता।

इदं भार्य्याशतं ब्रह्मन् परीक्ष्य सदृशं प्रभो। पुत्रार्थिना मया वोढं न तासां विद्यते प्रजा।

एकः कथञ्चिदुत्पन्नः पुत्रो जन्तुरयं मम। यतमानासु सर्व्वासु किन्नु दुःखमतः परं।

वयश्च समतीतं मे सभार्य्यस्य द्विजोत्तम। आसां प्राणाः समायत्ता मम चात्रैकपुत्रके।

स्यान्नु कर्म्म तथा युक्तं येन पुत्रशतं भवेत्। महता लघुना वाऽपि कर्म्मणा दुष्करेण वा। १०४८५

॥ ऋत्विगुवाच ॥ अस्ति चैतादृशं कर्म्म येन पुत्रशतं भवेत्। यदि शक्नोषि तत्कर्त्तुमथ वक्ष्यामि सोमक।

॥ सोमक उवाच ॥ कार्य्यं वा यदि वाऽकार्य्यं येन पुत्रशतं भवेत्। कृतमेवेति तद्विद्धि भगवान् प्रब्रवीतु मे।

॥ ऋत्विगुवाच ॥ यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ। ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते।

वपायां हूयमानायां धूममाघ्राय मातरः। ततस्ताः सुमहावीर्य्यान् जनयिष्यन्ति ते सुतान्।

तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः। उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति। १०४९०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि जन्तूपाख्याने सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

॥ सोमक उवाच ॥ ब्रह्मन् यद्यद्यथा कार्य्यं तत्कुरुष्व तथा तथा। पुत्त्रकामतया सर्व्वं करिष्यामि वचस्तव।

॥ लोमश उवाच ॥ ततः स याजयामास सोमकं तेन जन्तुना। मातरस्तु बलात्पुत्त्रमपाकार्षुः कृपान्विताः।

हाहताः स्मेति वाशन्त्यस्तीव्रशोकसमाहताः। रुदन्त्यः करुणञ्चापि गृहीत्वा दक्षिणे करे।

सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति। कुररीणामिवार्त्तानां समाकृष्य तु तं सुतं।

विशस्य चैनं विधिवद्वपामस्य जुहाव सः। वपायां हूयमानायां गन्धमाघ्राय मातरः। १०४९५

आर्त्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन। सर्व्वाश्च गर्भानलभंस्ततस्ताः परमाङ्गनाः।

ततो दशसु मासेषु सोमकस्य विशाम्पते। जज्ञे पुत्त्रशतं पूर्णं तासु सर्व्वासु भारत।

जन्तुर्ज्येष्ठः समभवज्जनित्र्यामेव पार्थिव। स तासामिष्ट एवासीन्न तथा ते निजाः सुताः।

तच्च लक्षणमस्यासीत् सौवर्णं पार्श्व उत्तरे। तस्मिन् पुत्त्रशते चाग्र्यः स बभूव गुणैरपि।

ततः स लोकमगमत् सोमकस्य गुरुः परं। अथ काले व्यतीते तु सोमकोऽप्यगमत् परं। १०५००

अथ तं नरके घोरे पच्यमानं ददर्श सः। तमपृच्छत् किमर्थं त्वं नरके पच्यसे द्विज।

तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना भृशं। त्वं मया याजितो राजंस्तस्येदं कर्म्मणः फलं।

एतच्छ्रुत्वा तु राजर्षिर्धर्म्मराजानमब्रवीत्। अहमत्र प्रवेक्ष्यामि मुच्यतां मम याजकः।

मज्जते हि महाभागः पच्यते नरकाग्निना ॥ धर्म उवाच ॥ नान्यः कर्त्तुः फलं राजन्नुपभुङ्क्ते कदाचन ।
इमानि तव दृश्यन्ते फलानि वदतांवर ॥ सोमक उवाच ॥ पुण्यान्न कामये लोकानृतेऽहं ब्रह्मवादिनं । १०५०५
इच्छाम्यहमनेनैव सह वस्तुं सुरालये । नरके वा धर्मराज कर्मणाऽस्य समो ह्यहं ।
पुण्यापुण्यफलं देव सममस्त्वावयोरिदं ॥ धर्मराज उवाच ॥ यद्येवमीप्सितं राजन् भुङ्क्ष्वास्य सहितः फलं ।
तुल्यकालं सहानेन पश्चात् प्राप्स्यसि सद्गतिं ॥ लोमश उवाच ॥ स चकार तथा सर्वं राजा राजीवलोचनः ।
क्षीणपापश्च तस्मात् स विमुक्तो गुरुणा सह । लेभे कामान् शुभान् राजन् कर्मणा निर्जितान् स्वयं ।
सह तेनैव विप्रेण गुरुणा स गुरुप्रियः । एष तस्याश्रमः पुण्यो य एषोऽग्रे विराजते । १०५१०
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः । एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः ।
षड्रात्रं नियतात्मानः सज्जीभव कुरूद्वह ।

इति श्रीमहाभारते आरण्यपर्वणि तीर्थयात्रापर्वणि जन्तूपाख्याने अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

॥ लोमश उवाच ॥ अस्मिन् किल स्वयं राजन्निष्टवान् वै प्रजापतिः । सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकं ।
अम्बरीषश्च नाभाग इष्टवान् यमुनामनु । यजित्वा यत्र सत्राणि दशपद्मानि विष्णुवत्(?) ।
यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः । देशो नाहुषस्यायं यज्वनः पुण्यकर्मणः । १०५१५
सार्व्वभौमस्य कौन्तेय ययातेरमितौजसः । स्पर्द्धमानस्य शक्रेण तस्येदं यज्ञवास्तिह ।
पश्य नानाविधाकारैरग्निभिर्निचितां महीं । मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ।
एषा शम्येकपत्रा या शरकञ्चैतदुत्तमं । पश्य रामह्रदानेतान् पश्य नारायणाश्रमं ।
एतदार्चीकपुत्रस्य योगैर्विचरतो महीं । अपसर्पणं महीपाल रौप्यायाममितौजसः ।
अत्रानुवंश्यं पठतः शृणु मे कुरुनन्दन । उलूखलैराभरणैः पिशाची यदभाषत । १०५२०
युगन्धरे दधि प्राश्य उषित्वा चाच्युतस्थले । तद्वद्भूतिलये स्नात्वा सपुत्रा वस्तुमर्हसि ।
एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि । एतद्वै ते दिवा वृत्तं रात्रौ वृत्तमतोऽन्यथा ।
अद्य चात्र निवत्स्यामः क्षपां भरतसत्तम । द्वारमेतत्तु कौन्तेय कुरुक्षेत्रस्य भारत ।
अत्रैव नाहुषो राजा राजन् क्रतुभिरिष्टवान् । ययातिर्बहुरत्नाढ्यैर्यत्रेन्द्रो मुदमभ्यगात् ।
एतत्प्लक्षावतरणं यमुनातीर्थमुत्तमं । एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः । १०५२५
अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः । यूपोलूखलिकास्तात गच्छन्त्यवभृथाप्लवं ।
अत्रैव भरतो राजा राजन् क्रतुभिरिष्टवान् । हयमेधेन यज्ञेन मेध्यमश्वमवासृजत् ।
असकृत्कृष्णसारङ्गं धर्मेणाप्य च मेदिनीं । अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमं ।
आप चैवर्षिमुख्येन संवर्त्तेनाभिपालितः । अत्रोपस्पृश्य राजेन्द्र सर्व्वान् लोकान् प्रपश्यति ।
पूयते दुष्कृताच्चैव अत्रापि समुपस्पृश ॥ वैशम्पायन उवाच ॥ तत्र सभ्रातृकः स्नात्वा स्तूयमानो महर्षिभिः । १०५३०
लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् । सर्व्वान् लोकान् प्रपश्यामि तपसा सत्यविक्रम ।
इहस्थः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनं ॥ लोमश उवाच ॥ एवमेतन्महाबाहो पश्यन्ति परमर्षयः ।

सरस्वतीमिमां पुण्यां पुण्यैकशरणावृतां। यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि।
इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः। ऋषयश्चैव कौन्तेय तथा राजर्षयोऽपि च।
वेदी प्रजापतेरेषा समन्तात् पञ्चयोजना। कुरोर्व्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः। १०५३५
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि प्लक्षावतरणगमने एकोनत्रिंशदधिकशततोऽध्यायः॥ १२९॥
॥ लोमश उवाच॥ इह मर्त्यास्तनूस्त्यक्त्वा स्वर्गं गच्छन्ति भारत। मर्त्तुकामा नरा राजन्निहायान्ति सहस्रशः।
एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा। इह ये वै मरिष्यन्ति ते वै स्वर्गजिता नराः।
एषा सरस्वती रम्या दिव्या चौघवती नदी। एतद्विनशनं नाम सरस्वत्या विशाम्पते।
द्वारं निषादराष्ट्रस्य येषां दोषात् सरस्वती। प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः।
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती। यत्रैनामभ्यवर्त्तन्त सर्व्वाः पुण्याः समुद्रगाः। १०५४०
एतत् सिन्धोर्महातीर्थं यत्रागस्त्यमरिन्दम। लोपामुद्रा समागम्य भर्त्तारमवृणीत वै।
एतत् प्रकाशते तीर्थं प्रभासं भास्करद्युते। इन्द्रस्य दयितं पुण्यं पवित्रं पापनाशनं।
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमं। एषा रम्या विपाशा च नदी परमपावनी।
अत्र वै पुत्रशोकेन वशिष्ठो भगवानृषिः। बद्ध्वात्मानं निपतितो विपाशः पुनरुत्थितः।
काश्मीरमण्डलञ्चैतत् सर्व्वपुण्यमरिन्दम। महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह। १०५४५
यत्रोत्तराणां सर्व्वेषामृषीणां नाहुषस्य च। अग्नेश्चैवात्र संवादः काश्यपस्य च भारत।
एतद्द्वारं महाराज मानसस्य प्रकाशते। वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतं।
एष वातिकखण्डो वै प्रख्यातः सत्यविक्रमः। नात्यवर्त्तत यद्द्वारं विदेहादुत्तरश्च यः।
इदमाश्चर्य्यमपरं देशेऽस्मिन् पुरुषर्षभ। क्षीणे युगे तु कौन्तेय शर्व्वस्य सह पार्षदैः।
सहोमया च भवति दर्शनं कामरूपिणः। अस्मिन् सरसि सत्रैर्व्वै चैत्रे मासि पिनाकिनं। १०५५०
यजन्ते याजकाः सम्यक् परिवारशुभार्थिनः। अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः।
क्षीणपापः शुभान् लोकान् प्राप्नुते नात्र संशयः। एष उज्जानको नाम पावकिर्यत्र शान्तवान्।
अरुन्धतीसहायश्च वशिष्ठो भगवानृषिः। ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयं।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना। समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया।
तं द्रक्ष्यसि महाराज भृगुतुङ्गं महागिरिं। वितस्तां पश्य राजेन्द्र सर्व्वपापप्रमोचनीं। १०५५५
महर्षिभिश्चाध्युषितां शीततोयां सुनिर्म्मलां। जलाञ्चोपजलाञ्चैव यमुनामभितो नदीं।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत। तां देवसमितिं तस्य वासवश्च विशाम्पते।
अभ्यागच्छन्नृपवरं ज्ञातुमग्निश्च भारत। जिज्ञासमानौ वरदौ महात्मानमुशीनरं।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः। ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात्।
शरणार्थी तदा राजन्निलिल्ये भयपीडितः। १०५६०
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि श्येनकपोतीये त्रिंशदधिकशततोऽध्यायः॥ १३०॥

॥ श्येन उवाच ॥ धर्मात्मानं त्वाहुरेकं सर्वे राजन् महीक्षितः। स वै धर्मविरुद्धं त्वं कस्मात् कर्म चिकीर्षसि।
विहितं भक्षणं राजन् पीड्यमानस्य मे क्षुधा। मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि।
॥ राजोवाच ॥ सन्त्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज। मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः।
एवमभ्यागतस्येह कपोतस्याभयार्थिनः। अप्रदाने परं धर्मं कथं श्येन न पश्यसि।
प्रस्पन्दमानः सम्भ्रान्तः कपोतः श्येन लक्ष्यते। मत्सकाशे जीवितार्थी तस्य त्यागो विगर्हितः। १०५५५
यो हि कश्चिद्द्विजान् हन्याद्गां वा लोकस्य मातरं। शरणागतञ्च त्यजते तुल्यं तेषां हि पातकं।
॥ श्येन उवाच ॥ आहारात् सर्वभूतानि सम्भवन्ति महीपते। आहारेण विवर्द्धन्ते तेन जीवन्ति जन्तवः।
शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुं। न तु भोजनमुत्सृज्य शक्यं वर्त्तयितुं चिरं।
भक्ष्याद्वियोजितस्याद्य मम प्राणा विशाम्पते। विसृज्य कायमेष्यन्ति पन्थानमकुतोभयं।
प्रमृते मयि धर्मात्मन् पुत्रदारादि नङ्क्ष्यति। रक्षमाणः कपोतं त्वं बहून् प्राणान्न रक्षसि। १०५६०
धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत्। अविरोधात्तु यो धर्मः स धर्मः सत्यविक्रम।
विरोधिषु महीपाल निश्चित्य गुरुलाघवं। न बाधा विद्यते यत्र तं धर्मं समुपाचरेत्।
गुरुलाघवमादाय धर्माधर्मविनिश्चये। यतो भूयांस्ततो राजन् कुरुष्व धर्मनिश्चयं।
॥ श्रीराजोवाच ॥ बहुकल्याणसंयुक्तं भाषसे विहगोत्तम। सुपर्णः पक्षिराट् किं त्वं धर्मज्ञश्चास्यसंशयं।
तथा हि धर्मसंयुक्तं बहुचित्रञ्च भाषसे। न तेऽस्त्यविदितं किञ्चिदिति त्वां लक्षयाम्यहं। १०५६५
शरणैषिपरित्यागं कथं साध्विति मन्यसे। आहारार्थं समारम्भस्तव चायं विहङ्गम।
शक्यश्चाप्यन्यथा कर्त्तुमाहारोऽप्यधिकस्त्वया। गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा।
त्वदर्थमद्य क्रियतां यच्चान्यदिह काङ्क्षसि ॥
॥ श्येन उवाच ॥ न वराहं न चोक्षाणं न मृगान् विविधांस्तथा। भक्षयामि महाराज किमन्नेन केनचित्।
यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव। तमुत्सृज महीपाल कपोतमिममेव मे। १०५७०
श्येनः कपोतानत्तीति स्थितिरेषा सनातनी। मा राजन् सारमज्ञात्वा कदलीस्कन्धमाश्रयः।
॥ राजोवाच ॥ राष्ट्रं शिवीनामृद्धं वै ददानि तव खेचर। यं वा कामयसे कामं श्येन सर्वं ददानि ते।
विनेमं पक्षिणं श्येन शरणार्थिनमागतं। येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम।
तदाचक्ष्व करिष्यामि नहि दास्ये कपोतकं ॥ श्येन उवाच ॥ उशीनर कपोते ते यदि स्नेहो नराधिप।
आत्मनो मांसमुत्कृत्य कपोततुलया धृतं। यदा समं कपोतेन तव मांसं नृपोत्तम। १०५७५
तदा देयन्तु तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ राजोवाच ॥ अनुग्रहमिमं मन्ये श्येन यन्माऽभियाचसे।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतं ॥ लोमश उवाच ॥ उत्कृत्य स स्वयं मांसं राजा परमधर्मवित्।
तुलयामास कौन्तेय कपोतेन समं विभो। ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः। न विद्यते यदा मांसं कपोतेन समं धृतं।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलां ॥ श्येन उवाच ॥ इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयं। १०५८०

जिज्ञासमानौ धर्म्मे त्वां यज्ञवाटमुपागतौ। यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशाम्पते।
एषा ते भास्वती कीर्त्तिर्लोकानभिभविष्यति। यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव।
तावत्कीर्त्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः। इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः।
उशीनरोऽपि धर्म्मात्मा धर्म्मेणावृत्य रोदसी। विभ्राजमानो वपुषा आरुरोह त्रिविष्टपं।
तदेतत्सदनं राजन् राज्ञस्तस्य महात्मनः। पश्यस्वैतन्मया सार्द्धं पुण्यं पापप्रमोचनं। १०५९५
तत्र वै सततं देवा मुनयश्च सनातनाः। दृश्यन्ते ब्राह्मणैराजन् पुण्यवद्भिर्महात्मभिः।

इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि श्येनकपोतीये एकत्रिंशदधिकशततोऽध्यायः॥१३१॥

॥ लोमश उवाच ॥ यः कथ्यते मन्त्रविदग्र्यबुद्धिरौद्दालकिः श्वेतकेतुः पृथिव्यां। तस्याश्रमं पश्य नरेन्द्र पुण्यं सदा फलैरुपपन्नं महीजैः।
साक्षादत्र श्वेतकेतुर्ददर्श सरस्वतीं मानुषदेहरूपां। वेत्स्यामि वाणीमिति संप्रवृत्तां सरस्वतीं श्वेतकेतुर्बभाषे।
तस्मिन् युगे ब्रह्मकृतां वरिष्ठावास्तां मुनी मातुलभागिनेयौ। अष्टावक्रश्चैव कहोडसूनुरौद्दालकिः श्वेतकेतुः पृथिव्यां।
विदेहराजस्य महीपतेस्तौ विप्रावुभौ मातुलभागिनेयौ। प्रविश्य यज्ञायतनं विवादे वन्दिं निजग्राहतुरप्रमेयौ। १०६००
उपास्स्व कौन्तेय सहानुजस्त्वं तस्याश्रमं पुण्यतमं प्रविश्य। अष्टावक्रं यस्य दौहित्रमाहुर्योऽसौ वन्दिं जनकस्याथ यज्ञे।
वादी विप्राग्र्यो बाल एवाभिगम्य वादे भङ्क्त्वा मज्जयामास नद्यां॥ युधिष्ठिर उवाच॥ कथम्प्रभावः स बभूव विप्रस्तथाभूतं यो निजग्राह वन्दिं।
अष्टावक्रः केन वाऽसौ बभूव तत्सर्व्वं मे लोमश शंस तत्त्वं॥ लोमश उवाच॥ उद्दालकस्य नियतः शिष्य एको नाम्ना कहोड इति विश्रुतोऽभूत्।
शुश्रूषुराचार्य्यवशानुवर्त्ती दीर्घं कालं सोऽध्ययनञ्चकार। तं वै विप्रः पर्य्यचरत् स शिष्यस्तां च ज्ञात्वा परिचर्य्यां गुरुः सः।
तस्मै प्रादात् सद्य एव श्रुतञ्च भार्य्याञ्च वै दुहितरं स्वां सुजातां। तस्या गर्भः समभवदग्निकल्पः सोऽधीयानं पितरञ्चाप्युवाच। १०६०५
सर्व्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्त्तते। वेदान् साङ्गान् सर्व्वशास्त्रैरुपेतानधीतवानस्मि तव प्रसादात्।
इहैव गर्भे तेन पितर्ब्रवीमि नेदं त्वत्तः सम्यगिवोपवर्त्तते। उपालब्धः शिष्यमध्ये महर्षिः स तं कोपादुदरस्थं शशाप।
यस्मात् कुक्षौ वर्त्तमानो ब्रवीषि तस्माद्वक्रो भविताऽस्यष्टकृत्वः। स वै तथा वक्र एवाभ्यजायदष्टावक्रः प्रथितो वै महर्षिः।
अस्यासीद्वै मातुलः श्वेतकेतुः स तेन तुल्यो वयसा बभूव। सम्पीड्यमाना तु तदा सुजाता सा वर्द्धमानेन सुतेन कुक्षौ।
उवाच भर्त्तारमिदं रहोगता प्रसाद्य हीनं वसुना धनार्थिनी। कथं करिष्याम्यधना महर्षे मासश्चायं दशमो वर्त्तते मे।१०६१०
नैवास्ति ते वसु किञ्चित् प्रजाता। येनाहमेतामापदं निस्तरेयं।
उक्तस्त्वेवं भार्य्यया वै कहोडो वित्तस्यार्थे जनकमथाभ्यगच्छत्। स वै तदा वादविदा निगृह्य निमज्जितो वन्दिनेहाप्सु विप्र।
उद्दालकस्तन्तु तदा निशम्य सूतेन वादेऽप्सु निमज्जितं तदा। उवाच तां तत्र ततः सुजातामष्टावक्रे गूहितव्योऽयमर्थः।
ररक्ष सा चापि तमस्य मन्त्रं जातोऽप्यसौ नैव शुश्राव विप्रः। उद्दालकं पितृवच्चापि मेने तथाऽष्टावक्रो भ्रातृवच्छ्वेतकेतुं।
ततो वर्षे द्वादशे श्वेतकेतुरष्टावक्रं पितुरङ्के निषण्णं। अपाकर्षद्गृह्य पाणौ रुदन्तं नायं तवाङ्कः पितुरित्युक्तवांश्च। १०६१५

यच्चेनोक्तं दुरुक्तं तत्तदानीं हृदि स्थितं तस्य सुदुःखमासीत् । गृहं गत्वा मातरं सोऽभिगम्य पप्रच्छेदं क्व नु तातो ममेति ।
ततः सुजाता परमार्त्तरूपा शापाद्भीता सर्व्वमेवाचचक्षे । तद्वै तत्त्वं सर्व्वमाज्ञाय रात्रावित्यब्रवीत् श्वेतकेतुं स विप्रः ।
गच्छाव यज्ञं जनकस्य राज्ञो बह्वाश्चर्य्यः श्रूयते तस्य यज्ञः । श्रोष्यावोऽत्र ब्राह्मणानां विवादमन्नं चाग्र्यं तत्र भोक्ष्यावहे च ।
विचक्षणत्वञ्च भविष्यते नौ शिवश्च सौम्यश्च हि ब्रह्मघोषः । तौ जग्मतुर्मातुलभागिनेयौ यज्ञं समृद्धं जनकस्य राज्ञः ।
अष्टावक्रः पथि राज्ञा समेत्य प्रोत्सार्य्यमाणो वाक्यमिदं जगाद । १०६२०
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अष्टावक्रीये द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ अष्टावक्र उवाच ॥ अन्धस्य पन्थाः बधिरस्य पन्थाः स्त्रियः पन्था भारवाहस्य पन्थाः । राज्ञः पन्था ब्राह्मणेनासमेत्य समेत्य तु ब्राह्मणस्यैव पन्थाः ।
॥ राजोवाच ॥ पन्था अयं तेऽद्य मया निसृष्टो येनेच्छसि तेन कामं व्रजस्व । न पावको विद्यते वै लघीयानिन्द्रोऽपि नित्यं नमते ब्राह्मणानां ।
॥ अष्टावक्र उवाच ॥ प्राप्तौ स्व यज्ञं नृप संदिदृक्षू कौतूहलं नौ बलवज्जनेन्द्र । प्राप्तावावामतिथी प्रवेशं काङ्क्षावहे द्वारपते तवाज्ञां ।
ऐन्द्रद्युम्ने यज्ञदृशाविहावां विवक्षू वै जनकेन्द्रं दिदृक्षू । तौ वै क्रोधव्याधिना दह्यमानावयञ्च नौ द्वारपालो रुणद्धि ।
॥ द्वारपाल उवाच ॥ बन्देः समादेशकरा वयं स्म निबोध वाक्यञ्च समीर्य्यमाणं । न वै बालाः प्रविशन्त्यत्र विप्रा वृद्धा विद्वांसः प्रविशन्ति च विप्राः । १०६२५
॥ अष्टावक्र उवाच ॥ यद्यत्र वृद्धेषु कृतः प्रवेशो युक्तं प्रवेष्टुं मम द्वारपाल । वयञ्च वृद्धाश्चरितव्रताश्च वेदप्रभावेण समन्विताश्च ।
शुश्रूषवश्चापि जितेन्द्रियाश्च ज्ञानागमे चापि गताः स्म निष्ठां । न बाल इत्यवमन्तव्यमाहुर्बालोऽप्यग्निर्दहति स्पृश्यमानः ।
॥ द्वारपाल उवाच ॥ सरस्वतीमीरय वेदजुष्टामेकाक्षरां बहुरूपां विराजं । अङ्गात्मानं समवेक्षस्व बालं किं श्लाघसे दुर्लभो वै मनीषी ।
॥ अष्टावक्र उवाच ॥ न ज्ञायते कायवृद्ध्या विवृद्धिर्यथाऽष्ठीला शाल्मलेः संप्रवृद्धा । ह्रस्वोऽल्पकायः फलितो विवृद्धो यश्चाफलस्तस्य न वृद्धभावः ।
॥ द्वारपाल उवाच ॥ वृद्धेभ्य एवेह मतिं स्म बाला गृह्णन्ति कालेन भवन्ति वृद्धाः । नहि ज्ञानमल्पकालेन शक्यं कस्माद्बालः स्थविर इव प्रभाषसे । १०६३०
॥ अष्टावक्र उवाच ॥ न तेन स्थविरो भवति येनास्य पलितं शिरः । बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः ।
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नो महान् ।
दिदृक्षुरस्मि संप्राप्तो वन्दिनं राजसंसदि । निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने ।
द्रष्टाऽस्यद्य वदतोऽद्यान् द्वारपाल मनीषिभिः । सहवादे विवृद्धे तु वन्दिनञ्चापि निर्जितं ।
पश्यन्तु विप्राः परिपूर्णविद्याः सहैव राज्ञा सपुरोधमुख्याः । उताहो वाऽप्युच्चतां नीचतां वा तूष्णीम्भूतेष्वेव सर्व्वेष्वथाद्य ॥ १०६३५

॥ द्वारपाल उवाच ॥ कथं यज्ञं दशवर्षो विशेस्त्वं विनीतानां विदुषां संप्रवेशं । उपायतः प्रयतिष्ये तवाहं प्रवेशने कुरु यत्नं यथा वत् ।

॥ अष्टावक्र उवाच ॥ भोभो राजन् जनकानां वरिष्ठ त्वं वै सम्राट् त्वयि सर्व्वं समृद्धं । त्वं वा कर्त्ता कर्म्मणां यज्ञियानां ययाति रेको नृपतिर्व्वा पुरस्तात् ।

विद्वान् वन्दी वादविदो निगृह्य वादे भग्नानप्रतिशङ्कमानः । त्वयाऽभिसृष्टैः पुरुषैराप्तकृद्भिर्ज्जले सर्व्वान् मज्जयतीति नः श्रुतं ।

सोऽहं श्रुत्वा ब्राह्मणानां सकाशे ब्रह्माद्वैतं कथयितुमागतोऽस्मि । क्वासौ वन्दी यावदेनं समेत्य नक्षत्राणीव सविता नाशयामि ।

॥ राजोवाच ॥ आशंससे वन्दिनं वै विजेतुमविज्ञाय त्वं वाक्यबलं परस्य । विज्ञातवीर्य्यैः शक्यमेवं प्रवक्तुं दृष्टश्चासौ ब्राह्मणैर्व्वेद शीलैः ।  १०६४०

आशंससे त्वं वन्दिनं वै विजेतुमविज्ञात्वा तु बलं वन्दिनोऽस्य । समागता ब्राह्मणास्तेन पूर्व्वं न शोभन्ते भास्करेणेव ताराः ।

आशंसन्तो वन्दिनं जेतुकामास्तस्यान्तिकं प्राप्य विलुप्तशोभाः । विज्ञानमत्ता निःसृतास्च तात कथं सदस्यैर्व्वचनं विस्तरेयुः ।

॥ अष्टावक्र उवाच ॥ विवादितोऽसौ नहि मादृशैर्हि सिंहीकृतस्तेन वदत्यभीतः । समेत्य मां निहतः शेष्यतेऽद्य मार्गे भग्नं शकट मिवाचलाक्षं ।

॥ राजोवाच ॥ त्रिंशकद्वादशांशस्य चतुर्व्विंशतिपर्व्वणः । यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ।

॥ अष्टावक्र उवाच ॥ चतुर्व्विंशतिपर्व्व त्वां षण्नाभि द्वादशप्रधि । तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ।  १०६४५

॥ राजोवाच ॥ वडवे इव संयुक्ते श्येनपाते दिवौकसां । कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कं ।

॥ अष्टावक्र उवाच ॥ मास्म ते ते गृहे राजन् शात्रवाणामपि ध्रुवं । वातसारथिरागन्ता गर्भं सुषुवतुश्च तं ।

॥ राजोवाच ॥ किंस्वित् सुप्तन्न निमिषति किंस्विज्जातं न चोपति । कस्य स्विद्धृदयं नास्ति किंस्विद्वेगेन वर्द्धते ।

॥ अष्टावक्र उवाच ॥ मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति । अश्मनो हृदयं नास्ति नदी वेगेन वर्द्धते ।

॥ राजोवाच ॥ न त्वां मन्ये मानुषं देवसत्त्व न त्वं बालः स्थविरः सम्मतो मे । न ते तुल्यो विद्यते वाक्प्रलापे तस्माद्द्वारं वितराम्येष वन्दी ।  १०६५०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि अष्टावक्रीये त्रयस्त्रिंशदधिकशततोऽध्यायः ॥ १३३ ॥

॥ अष्टावक्र उवाच ॥ अत्रोग्रसेन समितेषु राजन् समागतेष्वप्रतिमेषु राजसु । नावैमि वन्दिं वरमत्र वादिनां महाजले हंसमिवाददामि ।

न मेऽद्य वक्ष्यस्यतिवादिमानिन् ग्लहं प्रपन्नः सरितामिवागमः । हुताशनस्येव समिद्धतेजसः स्थिरो भवस्वेह ममाद्य वन्दिन् ।

व्याघ्रं शयानं प्रति मा प्रबोध आशीविषं सृक्कणी संलिहानं । पदाहतस्येह शिरोऽभिहत्य नादष्टो वै मोक्ष्यसे तन्निबोध ।

यो वै दर्पात् संहननोपपन्नः सुदुर्ब्बलः पर्व्वतमाविहन्ति । तस्यैव पाणिः सनखो विदीर्य्यते नचैव शैलस्य हि दृश्यते व्रणः ।

सर्व्वे राज्ञो मैथिलस्य मैनाकस्येव पर्व्वताः । निकृष्टभूता राजानो वत्सा ह्यनडुहो यथा ।  १०६५५

यथा महेन्द्रः प्रवरः सुराणां नदीषु गङ्गा प्रवरा यथैव । तथा नृपाणां प्रवरस्त्वमेको वन्दिं समाभ्यानय मत्सकाशं ।

॥ लोमश उवाच ॥ एवमष्टावक्रः समितौ हि गर्जन् जातक्रोधो वन्दिनमाह राजन् । उक्ते वाक्ये चोत्तरं मे ब्रवीहि वाक्यस्य चाप्युत्तरं ते ब्रवीमि ।

॥ बन्द्युवाच ॥ एक एवाग्निर्बहुधा समिध्यते एकः सूर्य्यः सर्व्वमिदं विभाति । एको वीरो देवराजोऽरिहन्ता यमः पितॄणामीश्वरश्चैक एव ।

॥ अष्टावक्र उवाच ॥ द्वाविन्द्राग्नी चरतो वै सखायौ द्वौ देवर्षी नारदपर्व्वतौ च । द्वावश्विनौ द्वे रथस्यापि चक्रे भार्य्यापती द्वौ विहितौ विधात्रा ।

॥ बन्द्युवाच ॥ त्रिः सूयते कर्म्मणा वै प्रजेयं त्रयो युक्ता वाजपेयं वहन्ति । अध्वर्य्यवस्त्रिसवनानि तन्वते त्रयो लोकास्त्रीणि ज्योतींषि चाहुः । १०९९०

॥ अष्टावक्र उवाच ॥ चतुष्टयं ब्राह्मणानां निकेतं चत्वारो वर्णा आश्रमं वहन्ति । दिशश्चतस्रो वर्णचतुष्टयञ्च चतुष्पदा गौरपि शश्वदुक्ता ।

॥ बन्द्युवाच ॥ पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि । दृष्टा वेदे पञ्चचूडाप्सराश्च लोके ख्यातं पञ्चनदञ्च पुण्यं ।

॥ अष्टावक्र उवाच ॥ षडाधाने दक्षिणामाहुरेके षडेवेमे ऋतवः कालचक्रं । षडिन्द्रियाण्युत षट्कृत्तिकाश्च षट्साद्यस्काः सर्व्ववेदेषु दृष्टाः ।

॥ बन्द्युवाच ॥ सप्त ग्राम्याः पशवः सप्त वन्याः सप्त च्छन्दांसि क्रतुमेकं वहन्ति । सप्तर्षयः सप्त चाप्यर्हणानि सप्ततन्त्री प्रथिता चैव वीणा ।

॥ अष्टावक्र उवाच ॥ अष्टौ शाणाः शतमानं वहन्ति तथाऽष्टपादः शरभः सिंहघाती । अष्टौ वसूंश्चाशुश्रुम देवतासु यूपश्चाष्टास्रिर्विहितः सर्व्वयज्ञे । १०९९५

॥ बन्द्युवाच ॥ नवैवोक्ताः सामिधेन्यः पितॄणां तथा प्राहुर्नवयोगं विसर्गं । नवाक्षरा बृहती सम्प्रदिष्टा नवैव योगो गणनामेति शश्वत् ।

॥ अष्टावक्र उवाच ॥ दिशो दशोक्ताः पुरुषस्य लोके सहस्रमाहुर्दशपूर्णं शतानि । दशैव मासान् बिभ्रति गर्भवत्यो दशेरका दाशा दशार्हाः ।

॥ बन्द्युवाच ॥ एकादशैकादशिनः पशूनामेकादशैवात्र भवन्ति यूपाः । एकादश प्राणभृतां विकारा एकादशोक्ता दिवि देवेषु रुद्राः ।

॥ अष्टावक्र उवाच ॥ संवत्सरं द्वादशमासमाहुर्जगत्याः पादो द्वादशैवाक्षराणि । द्वादशाहः प्राकृतो यज्ञ उक्तो द्वादशादित्यान् कथयन्तीह धीराः ।

॥ बन्द्युवाच ॥ त्रयोदशी तिथिरुक्ता प्रशस्ता त्रयोदशद्वीपवती मही च ॥ लोमश उवाच ॥ एतावदुक्त्वा विरराम बन्दी श्लोकस्यार्द्धं व्याजहाराष्टवक्रः ॥ अष्टावक्र उवाच ॥ त्रयोदशाहानि ससार केशी त्रयोदशादीन्यतिच्छन्दांसि चाहुः । ११०००

ततो महानुदतिष्ठन्निनादस्तूष्णीम्भूतं सूतपुत्रं निशम्य । अधोमुखं ध्यानपरं तदानीमष्टावक्रञ्चाप्युदीर्य्यन्तमेव ।
तस्मिंस्तथा सङ्कुले वर्त्तमाने स्फीते यज्ञे जनकस्येह राज्ञः । अष्टावक्रं पूजयन्तोऽभ्युपेयुर्विप्राः सर्व्वे प्राञ्जलयः प्रतीताः ।

॥ अष्टावक्र उवाच ॥ अनेनैव ब्राह्मणाः शुश्रुवांसो वादे जित्वा सलिले मज्जिताः किल । तानेव धर्म्मानयमद्य बन्दी प्राप्नोतु गृह्याप्सु निमज्जयैनं ।

एते कनखला राजनृषीणां दयिता नगाः । एषा प्रकाशते गङ्गा युधिष्ठिर महानदी ।
सनत्कुमारो भगवानत्र सिद्धिमगात् पुरा । आजमीढावगाह्यैनां सर्व्वपापैः प्रमोक्ष्यसे ।
अपां ह्रदञ्च पुण्याख्यं भृगुतुङ्गञ्च पर्व्वतं । उष्णीगङ्गे च कौन्तेय सामात्यः समुपस्पृश ।
आश्रमः स्थूलशिरसो रमणीयः प्रकाशते । अत्र मानञ्च कौन्तेय क्रोधञ्चैव विवर्ज्जय ।
एष रैभ्याश्रमः श्रीमान् पाण्डवेय प्रकाशते । भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत । १००००
॥ युधिष्ठिर उवाच ॥ कथं युक्तो ऽभवदृषिर्भारद्वाजः प्रतापवान् । किमर्थञ्च यवक्रीतः पुत्रोऽनश्यत वै मुनेः ।
एतत् सर्व्वं यथावृत्तं श्रोतुमिच्छामि तत्त्वतः । कर्म्मभिर्देवकल्पानां कीर्त्त्यमानैर्भृशं रमे ।
॥ लोमश उवाच ॥ भरद्वाजश्च रैभ्यश्च सखायौ सम्बभूवतुः । तावूषतुरिहात्यन्तं प्रीयमाणावनन्तरं ।
रैभ्यस्य तु सुतावास्तामर्व्वावसुपरावसू । आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ।
रैभ्यो विद्वान् सहापत्यस्तपस्वी चेतरोऽभवत् । तयोश्चाप्यतुला कीर्त्तिर्व्बाल्यात् प्रभृति भारत । १०००५
यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतं । दृष्ट्वा च सत्कृतं विप्रैरैभ्यं पुत्रैः सहानघ ।
पर्य्यतप्यत तेजस्वी मन्युनाऽभिपरिप्लुतः । तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ।
स समिद्धे महत्यग्नौ शरीरमुपतापयन् । जनयामास सन्तापमिन्द्रस्य सुमहातपाः ।
तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर । अब्रवीत् कस्य हेतोस्त्वमास्थितस्तप उत्तमं ।
॥ यवक्रीत उवाच ॥ द्विजानामनधीता वै वेदाः सुरगणार्च्चित । प्रतिभान्त्विति तप्येऽहमिदं परमकं तपः । १००१०
स्वाध्यायार्थं समारम्भो ममायं पाकशासन । तपसा ज्ञातुमिच्छामि सर्व्वज्ञानानि कौशिक ।
कालेन महता वेदाः शक्या गुरुमुखाद्विभो । प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ।
॥ इन्द्र उवाच ॥ अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि । किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ।
॥ लोमश उवाच ॥ एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत । भूय एवाकरोद्यत्नं तपस्यमितविक्रमः ।
घोरेण तपसा राजंस्तप्यमानो महत्तपः । सन्तापयामास भृशं देवेन्द्रमिति नः श्रुतं । १००१५
तं तथा तप्यमानन्तु तपस्तीव्रं महामुनिं । उपेत्य बलभिद्देवो वारयामास वै पुनः ।
अशक्योऽर्थः समारब्धो नैतद्बुद्धिकृतं तव । प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते ।
॥ यवक्रीत उवाच ॥ न चैतदेवं क्रियते देवराज ममेप्सितं । महता नियमेनाहं तप्स्ये घोरतरं तपः ।
समिद्धेऽग्नावुपाकृत्याङ्गमङ्गं होष्यामि वा मघवंस्तन्निबोध । यद्येतदेवं न करोषि कामं ममेप्सितं देवराजेह सर्व्वं ।
॥ लोमश उवाच ॥ निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः । प्रतिवारणहेत्वर्थं बुद्ध्या सञ्चिन्त्य बुद्धिमान् । १००२०
तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः । अनेकशतवर्षस्य दुर्ब्बलस्य सयक्ष्मणः ।
यवक्रीतस्य यत्तीर्थमुचितं शौचकर्म्मणि । भागीरथ्यां तत्र सेतुं वालुकाभिश्चकार सः ।
यदाऽस्य वदतो वाक्यं न स चक्रे द्विजोत्तमः । वालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन् ।
वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्ज्जयत् । सेतुमभ्यारभच्छक्रो यवक्रीतं निदर्शयन् ।
तं ददर्श यवक्रीतो यत्नवन्तं निबन्धने । प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः । १००२५

**किमिदं वर्त्तसे** ब्रह्मन् किञ्च ते ह चिकीर्षितं। अतीव हि महान् यत्नः क्रियतेऽयं निरर्थकः।
॥ **इन्द्र उवाच**॥ बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति। क्लिश्यते हि जनस्तात तरमाणः पुनःपुनः।
॥ **यवक्रीत उवाच**॥ नायं शक्यस्त्वया बद्धुं महानोघस्तपोधन। अशक्याद्विनिवर्त्तस्व शक्यमर्थं समारभ।
॥ **इन्द्र उवाच**॥ यथैव भवता चेदं तपो वेदार्थमुद्यतं। अशक्यं तद्वदस्माभिरयं भारः समाहितः।
॥ **यवक्रीत उवाच**॥ यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर। तथा यदि ममापीदं मन्यसे पाकशासन। १०७२०
**क्रियतां यद्भवेच्छ**क्यं त्वया सुरगणेश्वर। वरांश्च मे प्रयच्छान्यान् यैरन्यान् भविताऽस्म्यति।
॥ **लोमश उवाच**॥ तस्मै प्रादाद्वरानिन्द्र उक्तवान् यान् महातपाः। प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः।
**यथान्यत् काङ्क्षसे** कामं यवक्रिन् गम्यतामिति। स लब्धकामः पितरमभ्येत्याथेदमब्रवीत्।
॥ **यवक्रीत उवाच**॥ प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः। अतीवान्यान् भविष्यावो वरा लब्धास्तथा मया।
॥ **भरद्वाज उवाच**॥ दर्पस्ते भविता तात वरान् लब्ध्वा यथेप्सितान्। स दर्पपूर्णः कृपणः क्षिप्रमेव विनङ्क्ष्यसि। १०७२५
**अत्राप्युदाहरन्ती**मा गाथा देवैरुदाहृताः। मुनिरासीत् पुरा पुत्र बालधिर्नाम वीर्य्यवान्।
**स पुत्रशोकादु**द्विग्नस्तपस्तेपे सुदुष्करं। भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः।
**तस्य प्रसादो वै** देवैः कृतो नत्वमरैः समः। नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति।
॥ **बालधिरुवाच**॥ यथेमे पर्व्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः। अक्षयास्तन्निमित्तं मे सुतस्यायुर्भविष्यति।
॥ **भरद्वाज उवाच**॥ तस्य पुत्रस्तदा जज्ञे मेधावी क्रोधनस्तदा। स तच्छ्रुत्वाऽकरोद्दर्पमृषींश्चैवावमन्यते। १०७३०
**विकुर्व्वाणो मुनी**नाञ्च व्यचरत् स महीमिमां। आससाद महावीर्य्यं धनुषाक्षं मनीषिणं।
**तस्यापचक्रे मेधावी तं शशाप स वीर्य्यवान्। भव भस्मेति चोक्तः स न भस्म समपद्यत।**
धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयं। निमित्तमस्य महिषैर्भेदयामास वीर्य्यवान्।
स निमित्ते विनष्टे तु ममार सहसा शिशुः। तं मृतं पुत्रमादाय विललाप ततः पिता।
लालप्यमानं तं दृष्ट्वा मुनयः परमार्त्तवत्। ऊचुर्व्वेदविदः सर्व्वे गाथां यां तां निबोध मे। १०७३५
न दिष्टमर्थमत्येतुमीशो मर्त्यः कथञ्चन। महिषैर्भेदयामास धनुषाक्षो महीधरान्।
एवं लब्ध्वा वरान् बाला दर्पपूर्णास्तपस्विनः। क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान्।
एष रैभ्यो महावीर्य्यः पुत्रौ चास्य तथाविधौ। तं यथा पुत्र नाभ्येषि तथा कुर्य्यास्त्वतन्द्रितः।
स हि क्रुद्धः समर्थश्च पुत्र पीडयितुं रुषा। रैभ्यश्चापि तपस्वी च कोपनश्च महानृषिः।
॥ **यवक्रीत उवाच**॥ एवं करिष्ये मा तापं तात कार्षीः कथञ्चन। यथाहि मे भवान्मान्यस्तथा रैभ्यः पिता मम। १०७४०
॥ लोमश उवाच॥ उक्त्वा स पितरं श्लक्ष्णं यवक्रीरकुतोभयः। विप्रकुर्व्वन्नृषीनन्यानतुष्यत् परया मुदा।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि यवक्रीतोपाख्याने पञ्चविंशदधिकशततोऽध्यायः॥ १२५ ॥
॥ लोमश उवाच॥ चंक्रम्यमाणः स तदा यवक्रीरकुतोभयः। जगाम माधवे मासि रैभ्याश्रमपदं प्रति।
स ददर्शाश्रमे रम्ये पुष्पितद्रुमभूषिते। विचरन्तीं स्नुषां तस्य किन्नरीमिव भारत।
यवक्रीस्तामुवाचेदमुपातिष्ठस्व मामिति। निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः।

सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती । तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम ह । १०७१५
तत एकान्तमुन्नीय मज्जयामास भारत । आजगाम तदा रैभ्यः स्वमाश्रममरिन्दम ।
रुदतीं च स्नुषां दृष्ट्वा भार्य्यामार्त्तां परावसोः । सान्त्वयन् श्लक्ष्णया वाचा पर्य्यपृच्छद्युधिष्ठिर ।
सा तस्मै सर्व्वमाचष्ट यवक्रीभाषितं शुभा । प्रत्युक्तञ्च यवक्रीतं प्रेक्षापूर्व्वं तथात्मना ।
शृण्वानस्यैव रैभ्यस्य यवक्रीतविचेष्टितं । दहन्निव तदा चेतः क्रोधः समभवन्महान् ।
स तदा मन्युनाविष्टस्तपस्वी कोपनो भृशं । अवलुच्य जटामेकां जुहावाग्नौ सुसंस्कृतां । १०७२०
ततः समभवन्नारी तस्या रूपेण सम्मिता । अवलुच्यापरां चाथ जुहावाग्नौ जटां पुनः ।
ततः समभवद्रक्षो घोराक्षं भीमदर्शनं । अब्रूतां तौ तदा रैभ्यं किं कार्य्यं करवावहे ।
तावब्रवीदृषिः क्रुद्धो यवक्रीर्व्वध्यतामिति । जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया ।
ततस्तं समुपस्थाय कृत्या सृष्टा महात्मना । कमण्डलुं जहाराशु मोहयित्वेव भारत ।
उच्छिष्टन्तु यवक्रीतमपकृष्टकमण्डलुं । तत उद्यतशूलः स राक्षसः समुपाद्रवत् । १०७२५
तमाद्रवन्तं संप्रेक्ष्य शूलहस्तं जिघांसया । यवक्रीः सहसोत्थाय प्राद्रवद्येन वै सरः ।
जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः पुनः । जगाम सरितः सर्व्वास्ताश्चाप्यासन् विशोषिताः ।
स काल्यमानो घोरेण शूलहस्तेन रक्षसा । अग्निहोत्रं पितुर्भीतः सहसा प्रविवेश ह ।
स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा । निगृहीतो बलाद्द्वारि सोऽवातिष्ठत पार्थिव ।
निगृहीतन्तु शूद्रेण यवक्रीतं स राक्षसः । ताडयामास शूलेन स भिन्नहृदयोऽपतत् । १०७३०
यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत् । अनुज्ञातस्तु रैभ्येण तया नार्य्या सहाचरत् ।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि यवक्रीतोपाख्याने षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

॥ लोमश उवाच ॥ भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकं । समित्कलापमादाय प्रविवेश स्वमाश्रमं ।
तं स्म दृष्ट्वा पुरा सर्व्वे प्रत्युत्तिष्ठन्ति पावकाः । नत्वेनमुपतिष्ठन्ति हतपुत्रं तदाग्नयः ।
वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः । तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ।
किन्नु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनं । त्वञ्चापि न यथापूर्व्वं कच्चित्क्षेममिहाश्रमे । १०७३५
कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः । एतदाचक्ष्व मे शीघ्रं न हि शुध्यति मे मनः ।
॥ शूद्र उवाच ॥ रैभ्यं यातो नूनमयं पुत्रस्ते मन्दचेतनः । तथा हि निहतः शेते राक्षसेन बलीयसा ।
प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा । अग्न्यागारं प्रति द्वारि मया दोर्भ्यां निवारितः ।
ततः स निहताशोऽत्र जलकामोऽशुचिर्ध्रुवं । निहतः सोऽतिवेगेन शूलहस्तेन रक्षसा ।
भरद्वाजस्तु तच्छ्रुत्वा शूद्रस्य विप्रियं महत् । गतासुं पुत्रमादाय विललाप सुदुःखितः । १०७४०
॥ भरद्वाज उवाच ॥ ब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः । द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति ।
तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु । अनागाः सर्व्वभूतेषु कर्कशत्वमुपेयिवान् ।
प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् । गतवानेव तं द्रष्टुं कालान्तकयमोपमं ।

यः स जानन्महातेजा वृद्धस्यैकं ममात्मजं । गतवानेव कोपस्य वशं परमदुर्म्मतिः ।
पुत्त्रशोकमनुप्राप्त एष रैभ्यस्य कर्म्मणा । त्यक्ष्यामि त्वामृते पुत्त्र प्राणानिष्टतमान् भुवि । १०७८८
यथाऽहं पुत्त्रशोकेन देहं त्यक्ष्यामि किल्बिषी । तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसं ।
सुखिनो वै नरा येषां जात्या पुत्त्रो न विद्यते । ये पुत्त्रशोकमप्राप्य विचरन्ति यथासुखं ।
ये तु पुत्त्रकृताच्छोकाद्भृशं व्याकुलचेतसः । शपन्तीष्टान् सखीनार्त्तास्तेभ्यः पापतरो नु कः ।
परासुश्च सुतो दृष्टः शप्तश्चेष्टः सखा मया । ईदृशीमापदं कोऽत्र द्वितीयोऽनुभविष्यति ।
॥ लोमश उवाच ॥ विलप्यैवं बहुविधं भरद्वाजोऽदहत् सुतं । सुसमिद्धं ततः पश्चात् प्रविवेश हुताशनं । १०७९०
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि यवक्रीतोपाख्याने सप्तविंशदधिकशततोऽध्यायः ॥ १२७ ॥
॥ लोमश उवाच ॥ एतस्मिन्नेव काले तु बृहद्युम्नो महीपतिः । सत्त्रं तेने महाभागो रैभ्ययाज्यः प्रतापवान् ।
तेन रैभ्यस्य वै पुत्त्रावर्व्वावसुपरावसू । वृतौ सहायौ सत्त्रार्थं बृहद्युम्नेन धीमता ।
तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः । आश्रमे त्वभवद्रैभ्यो भार्य्या चैव परावसोः ।
अथावलोककोऽगच्छद्गृहानेकः परावसुः । कृष्णाजिनेन संवीतं ददर्श पितरं वने ।
जघन्यरात्रे निद्राऽन्धः सावशेषे तमस्यपि । चरन्तं गहनेऽरण्ये मेने स पितरं मृगं । १०७९५
मृगन्तु मन्यमानेन पिता वै तेन हिंसितः । अकामयानेन तदा शरीरत्राणमिच्छता ।
तस्य स प्रेतकार्य्याणि कृत्वा सर्व्वाणि भारत । पुनरागत्य तत्सत्त्रमब्रवीद्भ्रातरं वचः ।
इदं कर्म्म न शक्तस्त्वं वोढुमेकः कथञ्चन । मया च हिंसितस्तातो मन्यमानेन तं मृगं ।
सोऽस्मदर्थे व्रतं तात चरत्वं ब्रह्महिंसनं । समर्थोऽप्यहमेकाकी कर्म्म कर्त्तुमिदं मुने ।
॥ अर्व्वावसुरुवाच ॥ करोतु वै भवान् सत्त्रं बृहद्युम्नस्य धीमतः । ब्रह्मवध्याञ्चरिष्येऽहं त्वदर्थं नियतेन्द्रियः । १०८००
॥ लोमश उवाच ॥ स तस्य ब्रह्मवध्यायाः पारं गत्वा युधिष्ठिर । अर्व्वावसुस्तदा सत्त्रमाजगाम पुनर्म्मुनिः ।
ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितं । बृहद्युम्नमुवाचेदं वचनं हर्षगद्गदं ।
एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति । ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वामसंशयं ।
॥ लोमश उवाच ॥ तच्छ्रुत्वैव तदा राजा प्रेष्यानाह स विट्पते । प्रेष्यैरुत्सार्य्यमाणस्तु राजन्नर्व्वावसुस्तदा ।
न मया ब्रह्महत्येयं कृतेत्याह पुनःपुनः । उच्यमानोऽसकृत् प्रेष्यैर्ब्रह्महन्निति भारत । १०८०५
नैव स्म प्रतिजानाति ब्रह्मवध्यां स्वयंकृतां । मम भ्रात्रा कृतमिदं मया स परिमोचितः ।
स तथा प्रवदन् क्रोधात्तैश्च प्रेष्यैः प्रभाषितः । तूष्णीं जगाम ब्रह्मर्षिर्व्वनमेव महातपाः ।
उग्रं तपः समास्थाय दिवाकरमथाश्रितः । रहस्यवेदं कृतवान् सूर्य्यस्य द्विजसत्तमः ।
मूर्त्तिमांस्तं ददर्शाथ स्वयमग्रभुगव्ययः ॥ लोमश उवाच ॥ प्रीतास्तस्याभवन् देवाः कर्म्मणाऽर्व्वावसोर्नृप ।
तन्ते प्रवरयामासुर्निरासुश्च परावसुं । ततो देवा वरं तस्मै ददुरग्निपुरोगमाः । १०८१०
स चापि वरयामास पितुरुत्थानमात्मनः । अनागस्त्वं ततो भ्रातुः पितुश्चास्मरणं वधे ।
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः । प्रतिष्ठाञ्चापि वेदस्य सौरस्य द्विजसत्तमः ।

एवमस्त्विति तं देवाः प्रोचुश्चापि वरान् ददुः। ततः प्रादुर्बभूवुस्ते सर्व्व एव युधिष्ठिर।
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान्। समधीतं मया ब्रह्म व्रतानि चरितानि च।
कथञ्च रैभ्यः शक्तो मामधीयानं तपस्विनं। तथायुक्तेन विधिना निहन्तुममरोत्तमाः। १०८१५
॥ देवा ऊचुः ॥ मैवं कृथा यवक्रीत यथावदसि वै मुने। ऋते गुरुमधीता हि सुखं वेदास्त्वया पुरा।
अनेन तु गुरून् दुःखात्तोषयित्वा स्वकर्म्मणा। कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमं।
॥ लोमश उवाच ॥ यवक्रीतमथोक्त्वैवं देवाः सेन्द्रपुरोगमाः। सञ्जीवयित्वा तान् सर्व्वान् पुनर्जग्मुस्त्रिविष्टपं।
आश्रमस्तस्य पुण्योऽयं सदापुष्पफलद्रुमः। अत्रोष्य राजशार्दूल सर्व्वं पापं प्रमोक्ष्यसि।
इतिश्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि यवक्रीतोपाख्याने अष्टत्रिंशदधिकशततोऽध्यायः ॥ १३८ ॥
॥ लोमश उवाच ॥ उशीरबीजं मैनाकं गिरिं श्वेतञ्च भारत। समतीतोऽसि कौन्तेय कालशैलञ्च पार्थिव। १०८२०
एषा गङ्गा सप्तविधा राजते भरतर्षभ। स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते।
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतं। समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ।
एतद्द्रक्ष्यति देवानामाक्रीडं चरणाङ्कितं। अतिक्रान्तोऽसि कौन्तेय कालशैलञ्च पर्व्वतं।
श्वेतं गिरिं प्रवेक्ष्यामो मन्दरञ्चैव पर्व्वतं। यत्र माणिवरो यक्षः कुवेरश्चैव यक्षराट्।
अष्टाशीतिसहस्राणि गन्धर्व्वाः शीघ्रगामिनः। तथा किम्पुरुषा राजन् यक्षाश्चैव चतुर्गुणाः। १०८२५
अनेकरूपसंस्थाना नानाप्रहरणाश्च ते। यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते।
तेषामृद्धिरतीवात्र गतौ वायुसमाश्च ते। स्थानात् प्रच्यावयेयुर्ये देवराजमपि ध्रुवं।
तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः। दुर्गमाः पर्व्वताः पार्थ समाधिं परमं कुरु।
कुवेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः। तैः समेष्याम कौन्तेय संयतो विक्रमेण च।
कैलासः पर्व्वतो राजन् षड्योजनसमुच्छ्रितः। यत्र देवाः समायान्ति विशाला यत्र भारत। १०८३०
असङ्ख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः। नागाः सुपर्णा गन्धर्व्वाः कुवेरसदनं प्रति।
तान् विगाहस्व पार्थाद्य तपसा च दमेन च। रक्ष्यमाणो मया राजन् भीमसेनबलेन च।
स्वस्ति ते वरुणो राजा यमश्च समितिञ्जयः। गङ्गा च यमुना चैव पर्व्वतश्च दधातु ते।
मरुतश्च सहाश्विभ्यां सरितश्च सरांसि च। स्वस्ति देवासुरेभ्यश्च वसुभ्यश्च महाद्युते।
इन्द्रस्य जाम्बूनदपर्व्वताद्वै शृणोमि घोषं तव देवि गङ्गे। गोपाययेमं सुभगे गिरिभ्यः सर्व्वाजमीढापचितं नरेन्द्रं। १०८३५
दत्स्व शर्म्म प्रविविक्षतोऽस्य शैलानिमाञ्छैलसुते नृपस्य। उक्त्वा तथा सागरगां स विप्रो यत्तो भवस्वेति शशास पार्थं।
॥ युधिष्ठिर उवाच ॥ अपूर्व्वोऽयं सम्भ्रमो लोमशस्य कृष्णाञ्च सर्व्वे रक्षत मा प्रमादं। देशोऽप्ययं दुर्गतमो मतोऽस्य तस्मात् परं शौचमिहाचरध्वं।
॥ वैशम्पायन उवाच ॥ ततोऽब्रवीद्भीममुदारवीर्य्यं कृष्णां यत्तः पालय भीमसेन। शून्येऽर्जुने सन्निहिते च तात त्वामेव कृष्णा भजते भयेषु।

ततो महात्मा स यमौ समेत्य मूर्द्धन्युपाघ्राय विमृज्य गात्रे । उवाच तौ वाष्पकलं स राजा तावभिहृष्टमागच्छतमप्रमत्तौ ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि युधिष्ठिरवाक्ये एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

॥ युधिष्ठिर उवाच ॥ अन्तर्हितानि भूतानि बलवन्ति महान्ति च । अग्निना तपसा चैव शक्यं गन्तुं वृकोदर । १०८४०

सन्निवर्त्तय कौन्तेय क्षुत्पिपासे बलाश्रयात् । ततो बलञ्च दाक्ष्यञ्च संश्रयस्व वृकोदर ।

ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्व्वतं प्रति । बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ।

अथ वा सहदेवेन धौम्येन च समं विभो । सूदैः पौरोगवैश्चैव सर्व्वैश्च परिचारकैः ।

रथैरश्वैश्च ये चान्ये विप्राः क्लेशसहाः पथि । सर्व्वैस्त्वं सहितो भीम निवर्त्तस्वायतेक्षण ।

त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः । अहञ्च नकुलश्चैव लोमशश्च महातपाः । १०८४५

ममागमनमाकाङ्क्षन् गङ्गाद्वारे समाहितः । वसेह द्रौपदीं रक्षन् यावदागमनं मम ।

॥ भीम उवाच ॥ राजपुत्री श्रमेणार्त्ता दुःखार्त्ता चैव भारत । व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ।

तव चाप्यरतिस्तीव्रा वर्त्तते तमपश्यतः । गुडाकेशं महात्मानं संग्रामेष्वपलायिनं ।

किं पुनः सहदेवञ्च माञ्च कृष्णाञ्च भारत । द्विजाः कामं निवर्त्तन्तां सर्व्वे च परिचारकाः ।

सूताः पौरोगवाश्चैव यञ्च मन्येत नो भवान् । नह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् । १०८५०

शैलेऽस्मिन् राक्षसाकीर्णे दुर्गेषु विषमेषु च । इयञ्चापि महाभागा राजपुत्री पतिव्रता ।

त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्त्तितुं । तथैव सहदेवोऽयं सततं त्वामनुव्रतः ।

न जातु विनिवर्त्तेत मनोज्ञो ह्यहमस्य वै । अपि चात्र महाराज सव्यसाचिदिदृक्षया ।

सर्व्वे लालसभूताः स्म तस्माद्यास्यामहे सह । यद्यशक्यो रथैर्गन्तुं शैलोऽयं बहुकन्दरः ।

पद्भिरेव गमिष्यामो मा राजन् विमना भव । अहं वहिष्ये पाञ्चालीं यत्र यत्र न शक्ष्यति । १०८५५

इति मे वर्त्तते बुद्धिर्मा राजन् विमना भव । सुकुमारौ तथा वीरौ माद्रीनन्दनकावुभौ ।

दुर्गे सन्तारयिष्यामि यत्राशक्तौ भविष्यतः ॥ युधिष्ठिर उवाच ॥ एवं ते भाषमाणस्य बलं भीमाभिवर्द्धतां ।

यस्त्वमुत्सहसे वोढुं पाञ्चालीञ्च यशस्विनीं । यमौ चापि भद्रन्ते नैतदन्यत्र विद्यते ।

बलं तव यशश्चैव धर्म्मः कीर्त्तिश्च वर्द्धतां । यस्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया ।

मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥ वैशम्पायन उवाच ॥ ततः कृष्णाऽब्रवीद्वाक्यं प्रहसन्ती मनोरमा । १०८६०

गमिष्यामि न सन्तापः कार्य्यो मां प्रति भारत ॥ लोमश उवाच ॥ तपसा शक्यते गन्तुं पर्व्वतो गन्धमादनः ।

तपसा चैव कौन्तेय सर्व्वे योक्ष्यामहे वयं । नकुलः सहदेवश्च भीमसेनश्च पार्थिव ।

अहञ्च त्वञ्च कौन्तेय द्रक्ष्यामः श्वेतवाहनं ॥ वैशम्पायन उवाच ॥ एवं सम्भाषमाणास्ते सुबाहोर्विषयं महत् ।

ददृशुर्मुदिता राजन् प्रभूतगजवाजिमत् । किराततङ्गणाकीर्णं पुलिन्दशतसङ्कुलं ।

हिमवत्यमरैर्जुष्टं बह्वाश्चर्य्यसमाकुलं । सुबाहुश्चापि तान् दृष्ट्वा पूजया प्रत्यगृह्णत । १०८६५

विषयान्ते कुलिन्दानामीश्वरः प्रीतिपूर्व्वकं । ततस्ते पूजितास्तेन सर्व्व एव सुखोषिताः ।

प्रतस्थुर्व्विमले सूर्य्ये हिमवन्तं गिरिं प्रति । इन्द्रसेनमुखांश्चापि भृत्यान् पौरोगवांस्तथा ।

सुदामा पारिबर्हाश्च द्रौपद्याः सर्व्वशो नृप। राज्ञः कुलिन्दाधिपतेः परिक्रम्य महारथाः।
पद्भिरेव महावीर्य्या ययुः कौरवनन्दनाः। ते शनैः प्राद्रवन् सर्व्वे कृष्णया सह पाण्डवाः।
तस्माद्देशात् सुसंहृष्टा द्रष्टुकामा धनञ्जयं। १०८७०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे चत्वारिंशदधिकशततमोऽध्यायः॥ १४०॥

‖युधिष्ठिर उवाच‖ भीमसेन यमौ चोभौ पाञ्चालि च निबोधत। नास्ति भूतस्य नाशो वै पश्यतास्मान् वनेचरान्।
दुर्ब्बलाः क्लेशिताः स्मेति यद्ब्रवामेतरेतरं। अशक्येऽपि व्रजामो यद्धनञ्जयदिदृक्षया।
तन्मे दहति गात्राणि तूलराशिमिवानलः। यच्च वीरं न पश्यामि धनञ्जयमुपान्तिकात्।
तस्य दर्शनतृष्णं मां सानुजं वनमास्थितं। याज्ञसेन्याः परामर्शः स च वीर दहत्युत।
नकुलात् पूर्व्वजं पार्थं न पश्याम्यमितौजसं। अजेयमुग्रधन्वानं तेन तप्ये वृकोदर। १०८७५
तीर्थानि चैव रम्याणि वनानि च सरांसि च। चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया।
पञ्चवर्षाण्यहं वीरं सत्यसन्धं धनञ्जयं। यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर।
तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनं। न पश्यामि महाबाहुं तेन तप्ये वृकोदर।
कृतास्त्रं निपुणं युद्धेऽप्रतिमानं धनुष्मतां। न पश्यामि कुरुश्रेष्ठं तेन तप्ये वृकोदर।
चरन्तमरिसंघेषु काले क्रुद्धमिवान्तकं। प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनञ्जयं। १०८८०
यः स शक्रादनवरो वीर्य्येण द्रविणेन च। यमयोः पूर्व्वजः पार्थः श्वेताश्वोऽमितविक्रमः।
दुःखेन महताविष्टस्तं न पश्यामि फाल्गुनं। अजेयमुग्रधन्वानं तेन तप्ये वृकोदर।
सततं यः क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा। ऋजुमार्गप्रपन्नस्य शर्म्मदाताऽभयस्य च।
स तु जिह्मप्रवृत्तस्य माययाऽभिजिघांसतः। अपि वज्रधरस्यापि भवेत् कालविषोपमः।
शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान्। दाताऽभयस्य बीभत्सुरमितात्मा महाबलः। १०८८५
सर्व्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्द्दिता। आहर्त्ता सर्व्वरत्नानां सर्व्वेषां नः सुखावहः।
रत्नानि यस्य वीर्य्येण दिव्यान्यासन् पुरा मम। बहूनि बहुजातीनि यानि प्राप्तः सुयोधनः।
यस्य बाहुबलाद्वीर सभा चासीत् पुरा मम। सर्व्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव।
वासुदेवसमं वीर्य्ये कार्त्तवीर्य्यसमं युधि। अजेयमजितं युद्धे तं न पश्यामि फाल्गुनं।
सङ्कर्षणं महावीर्य्यं त्वाञ्च भीमापराजितं। अनुयातः स्ववीर्य्येण वासुदेवञ्च शत्रुहा। १०८९०
यस्य बाहुबले तुल्यः प्रभावे च पुरन्दरः। जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः।
ते वयं तं नरव्याघ्रं सर्व्वे वीरं दिदृक्षवः। प्रवेक्ष्यामो महाबाहो पर्व्वतं गन्धमादनं।
विशाला बदरी यत्र नरनारायणाश्रमः। तं सदाऽध्युषितं यक्षैर्द्रक्ष्यामो गिरिमुत्तमं।
कुवेरनलिनीं रम्यां राक्षसैरभिरक्षितां। पद्भिरेव गमिष्यामस्तप्यमाना महत्तपः।
नायानवता शक्यो गन्तुं देशो वृकोदर। न नृशंसेन लुब्धेन नाप्रशान्तेन भारत। १०८९५
तत्र सर्व्वे गमिष्यामो भीमार्ज्जुनगवेषिणः। सायुधा बद्धनिस्त्रिंशाः सार्द्धं विप्रैर्महाव्रतैः।

मक्षिकादंशमशकान् सिंहान् व्याघ्रान् सरीसृपान्। अप्रमत्तनियतः पार्थ नियतत्वान्न पश्यति।
ते वयं नियतात्मानः पर्व्वतं गन्धमादनं। प्रवेक्ष्यामो मिताहारा धनञ्जयदिदृक्षया।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे एकचत्वारिंशदधिकशतोऽध्यायः॥ १४१ ॥
॥ लोमश उवाच॥ द्रष्टारः पर्व्वताः सर्व्वे नद्यः सपुरकाननाः। तीर्थानि चैव श्रीमन्ति स्पृष्टञ्च सलिलं करैः।
पर्व्वतं मन्दरं दिव्यमेष पन्थाः प्रयास्यति। समाहिता निरुद्विग्नाः सर्व्वे भवत पाण्डवाः। १०९००
अयं देवनिवासो वै गन्तव्यो वो भविष्यति। ऋषीणाञ्चैव दिव्यानां निवासः पुण्यकर्म्मणां।
एषा शिवजला पुण्या याति सौम्य महानदी। वदरीप्रभवा राजन् देवर्षिगणसेविता।
एषा वैहायसैर्नित्यं वालिखिल्यैर्महात्मभिः। अर्च्चिता चोपयाता च गन्धर्व्वैश्च महात्मभिः।
अत्र साम स्म गायन्ति सामगाः पुण्यनिःस्वनाः। मरीचिः पुलहश्चैव भृगुश्चैवाङ्गिरास्तथा।
अत्राह्निकं सुरश्रेष्ठो जपते समरुद्गणः। साध्याश्चैवाश्विनौ चैव परिधावन्ति तं तदा। १०९०५
चन्द्रमाः सह सूर्य्येण ज्योतींषि च ग्रहैः सह। अहोरात्रविभागेन नदीमेनामनुव्रजन्।
एतस्याः सलिलं मूर्द्ध्ना वृषाङ्कः पर्य्यधारयत्। गङ्गाद्वारे महाभाग येन लोकस्थितिर्भवेत्।
एतां भगवतीं देवीं भवन्तः सर्व्व एव हि। प्रयतेनात्मना तात प्रतिगम्याभिवादत।
तस्य तद्वचनं श्रुत्वा लोमशस्य महात्मनः। आकाशगङ्गां प्रयताः पाण्डवास्तेऽभ्यवादयन्।
अभिवाद्य च ते सर्व्वे पाण्डवा धर्म्मचारिणः। पुनः प्रयाताः संहृष्टाः सर्व्वे ऋषिगणैः सह। १०९१०
ततो दूरात् प्रकाशन्तं पाण्डुरं मेरुसन्निभं। ददृशुस्ते नरश्रेष्ठा विकीर्णं सर्व्वतो दिशं।
तान् प्रष्टुकामान् विज्ञाय पाण्डवान् स तु लोमशः। उवाच वाक्यं वाक्यज्ञः शृणुध्वं पाण्डुनन्दनाः।
एतद्विकीर्णं सुश्रीमन् कैलासशिखरोपमं। यत् पश्यसि नरश्रेष्ठ पर्व्वतप्रतिमं स्थितं।
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः। पर्व्वतप्रतिमं भाति पर्व्वतप्रस्तराश्रितं।
पुरातनेन देवेन विष्णुना परमात्मना। दैत्यो विनिहतस्तेन सुरराजहितैषिणा। १०९१५
दशवर्षसहस्राणि तपस्तप्य महामनाः। ऐन्द्रं प्रार्थयते स्थानं तपःस्वाध्यायविक्रमात्।
तपोबलेन महता बाहुवेगबलेन च। नित्यमेव दुराधर्षो धर्षयन् स दितेः सुतः।
स तु तस्य बलं ज्ञात्वा धर्म्मे च चरितं व्रतं। भयाभिभूतः संविग्नः शक्र आसीत्तदाऽनघ।
तेन सञ्चिन्तितो देवो मनसा विष्णुरव्ययः। सर्व्वगः प्रभुः श्रीमानागतश्च स्थितो बभौ।
ऋषयश्चापि तं सर्व्वे तुष्टुवुश्च दिवौकसः। तं दृष्ट्वा ज्वलमानश्रीर्भगवान् हव्यवाहनः। १०९२०
नष्टतेजाः समभवत्तस्य तेजोऽभिभर्त्सितः। तं दृष्ट्वा वरदं देवं विष्णुं देवगणेश्वरं।
प्राञ्जलिः प्रणतो भूत्वा नमस्कृत्य च वज्रभृत्। प्राह वाक्यं ततस्तत्त्वं यतस्तस्य भयं भवेत्।
॥ विष्णुरुवाच॥ जानामि ते भयं शक्र दैत्येन्द्रान्नरकात्ततः। ऐन्द्रं प्रार्थयते स्थानं तपःसिद्धेन कर्म्मणा।
सोऽहमेनं तव प्रीत्या तपःसिद्धमपि ध्रुवं। वियुनज्मि देहाद्देवेन्द्र मुहूर्त्तं प्रतिपालय।
तस्य विष्णुर्महातेजाः पाणिना चेतनां हरत्। स पपात ततो भूमौ गिरिराज इवाहतः। १०९२५

तस्यैतदखिलं जातं माहात्म्यमिति निश्चय वै । इदं द्वितीयमपरं विष्णोः कर्म्म प्रकाशते ।
नष्टा वसुमती कृत्स्ना पाताले चैव मज्जिता । पुनरुद्धरिता तेन वाराहेणैकशृङ्गिणा ।
॥ युधिष्ठिर उवाच ॥ भगवन् विस्तरेणेमां कथां कथय तत्त्वतः । कथमनेन सुरेशेन नष्टा वसुमती तदा ।
योजनानां शतं ब्रह्मन् पुनरुद्धरिता तदा । केन चैव प्रकारेण जगतो धरणी ध्रुवा ।
शिवा देवी महाभागा सर्व्वशस्यप्ररोहिणी । कस्य चैव प्रभावाद्धि योजनानां शतं गता । १०९१०
केनैतद्वीर्य्यसम्पन्नं दर्शितं परमात्मना । एतत् सर्व्वं यथातत्त्वमिच्छामि द्विजसत्तम ।
श्रोतुं विस्तरशः सर्व्वं त्वं हि तस्य प्रतिश्रयः ॥ लोमश उवाच ॥ यत्तेऽहं परिपृष्टोऽस्मि कथामेतां युधिष्ठिर ।
तत् सर्व्वमखिलेनेह श्रूयतां मम भारत । पुरा कृतयुगे तात वर्त्तमाने भयङ्करे ।
यमत्वं कारयामास आदिदेवः पुरातनः । यमत्वं कुर्व्वतस्तस्य देवदेवस्य धीमतः ।
न तत्र म्रियते कश्चिज्जायते वा तथाऽच्युत । वर्द्धन्ते पक्षिसंघाश्च तथा पशुगवेडकं । १०९१५
गवाश्वञ्च मृगाश्चैव सर्व्वे ते पिशिताशनाः । तथा पुरुषशार्दूल मानुषाश्च परन्तप ।
सहस्रशो ह्ययुतशो वर्द्धन्ते सलिलं यथा । एतस्मिन् सङ्कुले तात वर्त्तमाने भयङ्करे ।
अतिभाराद्वसुमती योजनानां शतं गता । सा वै व्यथितसर्व्वाङ्गी भारेणाक्रान्तचेतना ।
नारायणं वरं देवं प्रपन्ना शरणं गता ॥ पृथिव्युवाच ॥ भगवंस्त्वत्प्रसादाद्धि तिष्ठेयं सुचिरन्त्विह ।
भारेणास्मि समाक्रान्ता न शक्नोमि स्म वर्त्तितुं । ममेमं भगवन् भारं व्यपनेतुं त्वमर्हसि । १०९२०
शरणागताऽस्मि ते देव प्रसादं कुरु मे विभो । तस्यास्तद्वचनं श्रुत्वा भगवानक्षरः प्रभुः ।
प्रोवाच वचनं हृष्टः श्रव्याक्षरसमीरितं ॥ विष्णुरुवाच ॥ न ते महि भयं कार्य्यं भारार्त्ते वसुधारिणि ।
अयमेवं तथा कुर्म्मि यथा लघ्वी भविष्यसि । स तां विसर्ज्जयित्वा तु वसुधां शैलकुण्डलां ।
ततो वराहः संवृत्त एकशृङ्गो महाद्युतिः । रक्ताभ्यां नयनाभ्यान्तु भयमुत्पादयन्निव ।
धूमञ्च ज्वलयन् लक्ष्म्या तत्र देशे व्यवर्द्धत । स गृहीत्वा वसुमतीं शृङ्गेणैकेन भास्वता । १०९२५
योजनानां शतं वीर समुद्धरति सोऽक्षरः । तस्याश्चोद्धार्य्यमाणायाः सङ्क्षोभः समजायत ।
देवाः सङ्क्षुभिताः सर्व्वे ऋषयश्च तपोधनाः । हाहाभूतमभूत् सर्व्वं त्रिदिवं व्योम भूस्तथा ।
न पर्य्यवस्थितः कश्चिद्देवो वा मानुषोऽपि वा । ततो ब्रह्माणमासीनं ज्वलमानमिव श्रिया ।
देवाः सर्षिगणाश्चैव उपतस्थुरनेकशः । उपसर्प्य च देवेशं ब्रह्माणं लोकसाक्षिकं ।
भूत्वा प्राञ्जलयः सर्व्वे वाक्यमुच्चारयंस्तदा । लोकाः सङ्क्षुभिताः सर्व्वे व्याकुलञ्च चराचरं । १०९३०
समुद्राणाञ्च सङ्क्षोभस्त्रिदशेश प्रकाशते । सैषा वसुमती कृत्स्ना योजनानां शतं गता ।
किमेतत् किं प्रभावेन येनेदं व्याकुलं जगत् । आख्यातु नो भवान् शीघ्रं विसंज्ञाः स्मेह सर्व्वशः ।
॥ ब्रह्मोवाच ॥ असुरेभ्यो भयं नास्ति युष्माकं कुत्रचित् क्वचित् । श्रूयतां यत्कृते ह्येष सङ्क्षोभो जायतेऽमराः ।
योऽसौ सर्व्वगतः श्रीमानक्षरात्मा व्यवस्थितः । तस्य प्रभावात् सङ्क्षोभस्त्रिदिवस्य प्रकाशते ।
सैषा वसुमती कृत्स्ना योजनानां शतं गता । समुद्धृता पुनस्तेन विष्णुना परमात्मना । १०९३५

तस्यामुद्धार्य्यमाणायां सङ्क्षोभः समजायत। एवं भवन्तो जानन्तु छिद्यतां संशयश्च वः।

॥ देवा ऊचुः॥ क्व तद्भूतं वसुमतीं समुद्धरति हृष्टवत्। तं देशं भगवन् ब्रूहि तत्र यास्यामहे वयं।

॥ ब्रह्मोवाच॥ हन्त गच्छत भद्रं वो नन्दने पश्यत स्थितं। एषोऽत्र भगवान् श्रीमान् सुपर्णः सम्प्रकाशते।

वाराहेणैव रूपेण भगवान् लोकभावनः। कालानल इवाभाति पृथिवीतलमुद्धरन्।

एतस्योरसि सुव्यक्तं श्रीवत्समभिराजते। पश्यध्वं विबुधाः सर्व्वे भूतमेतदनामयं। १०९९०

॥ लोमश उवाच॥ ततो दृष्ट्वा महात्मानं श्रुत्वा चामन्त्र्य चामराः। पितामहं पुरस्कृत्य जग्मुर्देवा यथागतं।

॥ वैशम्पायन उवाच॥ श्रुत्वा तु तां कथां सर्व्वे पाण्डवा जनमेजय। लोमशादेशितेनाशु यथाजग्मुः प्रहृष्टवत्।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे द्विचत्वारिंशदधिकशततोऽध्यायः॥ १४२ ॥

॥ वैशम्पायन उवाच॥ ते शूरास्ततधन्वानस्तूणवन्तः समार्गणाः। बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः।

परिगृह्य द्विजश्रेष्ठान् ज्येष्ठाः सर्व्वधनुष्मतां। पाञ्चालीसहिता राजन् प्रययुर्गन्धमादनं।

सरांसि सरितश्चैव पर्व्वतांश्च वनानि च। वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्द्धनि। १०९९५

नित्यपुष्पफलान् देशान्देवर्षिगणसेवितान्। आत्मन्यात्मानमाधाय वीरा मूलफलाशिनः।

चेरुरुच्चावचाकारान् देशान् विषमसङ्कटान्। पश्यन्तो मृगजातानि बहूनि विविधानि च।

ऋषिसिद्धामरयुतं गन्धर्व्वाप्सरसां प्रियं। विविशुस्ते महात्मानः किन्नराचरितं गिरिं।

प्रविशत्स्वथ वीरेषु पर्व्वतं गन्धमादनं। चण्डवातं महद्वर्षं प्रादुरासीद्विशाम्पते।

ततो रेणुः समुद्भूतः सपत्रबहुलो महान्। पृथिवीञ्चान्तरीक्षञ्च द्याञ्चैव सहसाऽवृणोत्। ११०००

न स्म प्रज्ञायते किञ्चिदावृते व्योम्नि रेणुना। न चापि शेकुस्ते कर्त्तुमन्योन्यस्याभिभाषणं।

न चापश्यंस्ततोऽन्योन्यं तमसा हतचक्षुषः। आकृष्यमाणा वातेन साश्मचूर्णेन भारत।

द्रुमाणां वातभग्नानां पततां भूतलेऽनिशं। अन्येषाञ्च महीजानां शब्दः समभवन्महान्।

द्यौः स्वित्पतति किं भूमिर्दीर्य्यते पर्व्वतो नु किं। इति ते मेनिरे सर्व्वे पवनेनापि मोहिताः।

ते यथाऽनन्तरान् वृक्षान् वल्मीकान्विषमाणि च। पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे। ११००५

ततः कार्म्मुकमादाय भीमसेनो महाबलः। कृष्णामादाय सङ्गम्य तस्थावाश्रित्य पादपं।

धर्म्मराजश्च धौम्यश्च निलिल्याते महावने। अग्निहोत्राण्युपादाय सहदेवस्तु पर्व्वते।

नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः। वृक्षानासाद्य सन्त्रस्तास्तत्र निलिल्यिरे।

मन्दीभूते तु पवने तस्मिन्रजसि शाम्यति। महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह।

भृशं चटचटाशब्दो वज्राणां क्षिप्यतामिव। ततस्ताश्चञ्चलाभासश्चेरुरभ्रेषु विद्युतः। ११०१०

ततोऽश्मसहिता धाराः संवृण्वत्यः समन्ततः। प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः।

तत्र सागरगा ह्यापः कीर्य्यमाणाः समन्ततः। प्रादुरासन् सकलुषाः फेनवत्यो विशाम्पते।

वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतं। परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान्।

तस्मिन्नुपरते शब्दे वाते च समतां गते। गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे।

निर्जग्मुस्ते शनैः सर्व्वे समाजग्मुश्च भारत । प्रतस्थिरे पुरुवीराः पर्व्वतं गन्धमादनं । १०९८५

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

॥ वैशम्पायन उवाच ॥ क्रोशमात्रं प्रयातेषु पाण्डवेषु महात्मसु । पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ।
श्रान्ता दुःखपरीता च वातवर्षेण तेन च । सौकुमार्य्याच्च पाञ्चाली संमुमोह तपस्विनी ।
सा कम्पमाना मोहेन बाहुभ्यामसितेक्षणा । वृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ।
आलम्बमाना सहितावूरू गजकरोपमौ । पपात सहसा भूमौ वेपन्ती कदली यथा ।
तां पतन्तीं वरारोहां भज्यमानां लतामिव । नकुलः समभिद्रुत्य परिजग्राह वीर्य्यवान् । १०९९०
॥ नकुल उवाच ॥ राजन् पाञ्चालराजस्य सुतेयमसितेक्षणा । श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ।
अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी । आश्वासय महाराज तामिमां श्रमकर्षितां ।
॥ वैशम्पायन उवाच ॥ राजा तु वचनात्तस्य भृशं दुःखसमन्वितः । भीमश्च सहदेवश्च सहसा समुपाद्रवन् ।
तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशां । अङ्कमानीय धर्म्मात्मा पर्य्यदेवयदातुरः ।
॥ युधिष्ठिर उवाच ॥ कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता । भूमौ निपतिता शेते सुखार्हा वरवर्णिनी । १०९९५
सुकुमारौ कथं पादौ मुखञ्च कमलप्रभं । मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतं ।
किमिदं द्यूतकामेन मया कृतमबुद्धिना । आदाय कृष्णां चरता वने मृगगणायुते ।
सुखं प्राप्स्यति कल्याणी पाण्डवान् प्राप्य वै पतीन् । इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ।
तत्सर्व्वमनवाप्येयं श्रमशोकाध्वकर्षिता । शेते निपतिता भूमौ पापस्य मम कर्म्मभिः ।
॥ वैशम्पायन उवाच ॥ तथा लालप्यमाने तु धर्म्मराजे युधिष्ठिरे । धौम्यप्रभृतयः सर्व्वे तत्राजग्मुर्द्विजोत्तमाः । ११०००
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् । रक्षोघ्नांश्च तथा मन्त्रान् जेपुश्चक्रुश्च ते क्रियाः ।
पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः । स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ।
सेव्यमाना च शीतेन जलमिश्रेण वायुना । पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ।
परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे । पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनीं ।
तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ । कराभ्यां किणजाताभ्यां शनकैः संववाहतुः । ११००५
पर्य्याश्वासयदप्येनां धर्म्मराजो युधिष्ठिरः । उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ।
बहवः पर्व्वता भीम विषमा हिमदुर्गमाः । तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ।
॥ भीमसेन उवाच ॥ त्वां राजन्राजपुत्रीञ्च यमौ च पुरुषर्षभ । स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ।
हैडिम्बश्च महावीर्य्यो विहगो मद्बलोपमः । वहेदनघ सर्व्वान्नो वचनात्ते घटोत्कचः ।
॥ वैशम्पायन उवाच ॥ अनुज्ञातो धर्म्मराज्ञा पुत्रं सस्मार राक्षसं । घटोत्कचश्च धर्म्मात्मा स्मृतमात्रः पितुस्तदा । ११०१०
कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान् । ब्राह्मणांश्च महाबाहुः स च तैरभिनन्दितः ।
उवाच भीमसेनञ्च पितरं भीमविक्रमं । स्मृतोऽस्मि भवता शीघ्रं शुश्रूषुरहमागतः ।

आज्ञापय महाबाहो सर्व्वं कर्त्ताऽस्म्यसंशयं । तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ ॥ १४४ ॥

॥ युधिष्ठिर उवाच ॥ धर्म्मज्ञो बलवान् शूरः सद्यो राक्षसपुङ्गवः । भक्तोऽस्माकमौरसः पुत्रो भीम गृह्णातु मा चिरं ।
तव बाहुबलेनाहमतिभीमपराक्रम । अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनं । ११०५५
॥ वैशम्पायन उवाच ॥ भ्रातुर्व्वचनमाज्ञाय भीमसेनो घटोत्कचं । आदिदेश नरव्याघ्रस्तनयं शत्रुकर्षणं ।
॥ भीमसेन उवाच ॥ हैडिम्बेयं परिश्रान्ता तव माता पराजिता । त्वञ्च कामगमस्तात बलवान् वह तां खग ।
स्कन्धमारोप्य भद्रन्ते मध्येऽस्माकं विहायसा । गच्छ नीचिकया गत्या यथा चैनां न पीडयेः ।
॥ घटोत्कच उवाच ॥ धर्म्मराजञ्च धौम्यञ्च कृष्णाञ्च यमजौ तथा । एकोऽप्यहमलं वोढुं किमुताद्य सहायवान् ।
अन्ये च शतशः शूरा विहगाः कामरूपिणः । सर्व्वान् वो ब्राह्मणैः सार्द्धं वक्ष्यन्ति सहिताऽनघ । ११०६०
एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः । पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ।
लोमशः सिद्धमार्गेण जगामानुपमद्युतिः । स्वेनैव स्वप्रभावेन द्वितीय इव भास्करः ।
ब्राह्मणांश्चापि तान् सर्व्वान् समुपादाय राक्षसाः । नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः ।
एवं सुरमणीयानि वनान्युपवनानि च । आलोकयन्तस्ते जग्मुर्व्विशालां बदरीं प्रति ।
ते त्वाशुगतिभिर्व्वीरा राक्षसैस्तैर्म्महाजवैः । उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् । ११०६५
देशान्म्लेच्छजनाकीर्णान्नानारत्नाकरायुतान् । ददृशुर्गिरिपादांश्च नानाधातुसमाचितान् ।
विद्याधरसमाकीर्णान् युतान् वानरकिन्नरैः । तथा किम्पुरुषैश्चैव गन्धर्व्वैश्च समन्ततः ।
मयूरैश्चमरैश्चैव वानरै रुरुभिस्तथा । वराहैर्गवयैश्चैव महिषैश्च समावृतान् ।
नदीजालसमाकीर्णान्नानापक्षियुतान् बहून् । नानाविधमृगैर्जुष्टान् वानरैश्चोपशोभितान् ।
समदैश्चापि विहगैः पादपैरन्वितांस्तथा । ते व्यतीत्य बहून् देशानुत्तरांश्च कुरूनपि । ११०७०
ददृशुर्व्विविधाश्चर्य्यं कैलासं पर्व्वतोत्तमं । तस्याभ्यासे तु ददृशुर्नरनारायणाश्रमं ।
उपेतं पादपैर्दिव्यैः सदा पुष्पफलोपगैः । ददृशुस्ताञ्च बदरीं वृत्तस्कन्धां मनोहरां ।
स्निग्धामविरलच्छायां श्रिया परमया युतां । पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभां ।
विशालशाखां विस्तीर्णामतिद्युतिसमन्वितां । फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशं ।
मधुस्रवः सदा दिव्यां महर्षिगणसेवितां । मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युतां । ११०७५
अदंशमशके देशे बहुमूलफलोदके । नीलशाद्वलसंछन्ने देवगन्धर्व्वसेविते ।
सुसमीकृतभूभागे स्वभावविहिते शुभे । जातां हिममृदुस्पर्शे देशे ऽपहतकण्टके ।
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः । अवतेरुस्ततः सर्व्वे राक्षसस्कन्धतः शनैः ।
ततस्तमाश्रमं रम्यं नरनारायणाश्रितं । ददृशुः पाण्डवा राजन् सहिता द्विजपुङ्गवैः ।
तमसा रहितं पुण्यमनामृष्टं रवेः करैः । क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनं । ११०८०
महर्षिगणसम्बाधं ब्राह्म्या लक्ष्म्या समन्वितं । दुष्प्रवेशं महाराज नरैर्द्धर्म्मबहिष्कृतैः ।

बलिहोमार्च्चितं दिव्यं सुसंमृष्टानुलेपनं। दिव्यपुष्पोपहारैश्च सर्व्वतोऽभिविराजितं।
विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः। महद्भिस्तोयकलशैः कठिनैश्चोपशोभितं।
शरण्यं सर्व्वभूतानां ब्रह्मघोषनिनादितं। दिव्यमाश्रयणीयन्तमाश्रमं श्रमनाशनं।
श्रिया युतमनिर्देश्यं देवचर्य्योपशोभितं। फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः। ११०४५
सूर्य्यवैश्वानरसमैस्तपसा भावितात्मभिः। महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः।
ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः। सोऽभ्यगच्छन्महातेजास्तानृषीन् प्रयतः शुचिः।
भ्रातृभिः सहितो धीमान् धर्म्मपुत्त्रो युधिष्ठिरः। दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरं।
अभ्यगच्छन्त सुप्रीताः सर्व्व एव महर्षयः। आशीर्व्वादान् प्रयुञ्जानाः स्वाध्यायनिरता भृशं।
प्रीतास्ते तस्य सत्कारं विधिना पावकोपमाः। उपाजह्रुश्च सलिलं पुष्पमूलफलं शुचि। ११०५०
स तैः प्रीत्याऽथ सत्कारमुपनीतं महर्षिभिः। प्रयतः प्रतिगृह्याथ धर्म्मराजो युधिष्ठिरः।
तं शक्रसदनप्रख्यं दिव्यगन्धं मनोरमं। प्रीतः स्वर्गोपमं पुण्यं पाण्डवः सह कृष्णया।
विवेश शोभया युक्तं भ्रातृभिश्च महानघ। ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सहस्रशः।
तत्रापश्यत धर्म्मात्मा देवदेवर्षिपूजितं। नरनारायणस्थानं भागीरथ्योपशोभितं।
पश्यन्तस्ते नरव्याघ्रा रेमिरे तत्र पाण्डवाः। मधुस्रवफलं दिव्यं महर्षिगणसेवितं। ११०५५
तदुपेत्य महात्मानस्तेऽवसन् ब्राह्मणैः सह। मुदा युक्ता महात्मानो रेमिरे तत्र ते तदा।
आलोकयन्तो मैनाकं नानाद्विजगणायुतं। हिरण्यशिखरञ्चैव तच्च विन्दुसरः शिवं।
तस्मिन् विहरमाणाश्च पाण्डवाः सह कृष्णया। मनोज्ञे काननवरे सर्व्वर्त्तुकुसुमोज्ज्वले।
पादपैः पुष्पविकचैः फलभारावनामिभिः। शोभिते सर्व्वतोरम्यैः पुंस्कोकिलगणायुतैः।
स्निग्धपत्रैरविरलैः शीतच्छायैर्मनोरमैः। सरांसि च विचित्राणि प्रसन्नसलिलानि च। ११०६०
कमलैः सोत्पलैश्चैव भ्राजमानानि सर्व्वशः। पश्यन्तश्चारुरूपाणि रेमिरे तत्र पाण्डवाः।
पुण्यगन्धसुखस्पर्शो ववौ तत्र समीरणः। ह्लादयन् पाण्डवान् सर्व्वान् द्रौपद्या सहितान् प्रभो।
भागीरथीं सुतीर्थाञ्च शीतां विमलपङ्कजां। मणिप्रवालप्रस्तारां पादपैरुपशोभितां।
दिव्यपुष्पसमाकीर्णां मनःप्रीतिविवर्द्धनीं। वीक्षमाणा महात्मानो विशालां बदरीमनु।
तस्मिन् देवर्षिचरिते देशे परमदुर्गमे। भागीरथीपुण्यजले तर्पयाञ्चक्रिरे तदा। ११०६५
देवानृषींश्च कौन्तेयाः परमं शौचमास्थिताः। तत्र ते तर्पयन्तश्च जपन्तश्च कुरूद्वहाः।
ब्राह्मणैः सहिता वीरा न्यवसन् पुरुषर्षभाः। कृष्णायास्तत्र पश्यन्तः क्रीडितान्यमरप्रभाः।
विचित्राणि नरव्याघ्रा रेमिरे तत्र पाण्डवाः।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि गन्धमादनप्रवेशे पञ्चचत्वारिंशदधिकशततोऽध्यायः ॥ १४५ ॥

॥ वैशम्पायन उवाच ॥ तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः। षड्रात्रमवसन् वीरा धनञ्जयदिदृक्षवः।
ततः पूर्व्वोत्तरे वायुः प्लवमानो यदृच्छया। सहस्रपत्रमर्काभं दिव्यं पद्ममुपाहरत्। ११०७०

तदवैक्षत पाञ्चाली दिव्यगन्धं मनोरमं। अनिलेनाहृतं भूमौ पतितं जलजं शुचि।
तच्छुभा शुभमासाद्य सौगन्धिकमनुत्तमं। अतीव मुदिता राजन् भीमसेनमथाब्रवीत्।
पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमं। गन्धसंस्थानसम्पन्नं मनसो मम नन्दनं।
इदञ्च धर्म्मराजाय प्रदास्यामि परन्तप। हरेदं मम कामाय काम्यके पुनराश्रमे।
यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर। तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमं। ११०७५
एवमुक्त्वा शुभापाङ्गी भीमसेनमनिन्दिता। जगाम पुष्पमादाय धर्म्मराजाय तत्तदा।
अभिप्रायन्तु विज्ञाय महिष्याः पुरुषर्षभः। प्रियायाः प्रियकामः स प्रायाद्भीमो महाबलः।
वातं तमेवाभिमुखो यतस्तत् पुष्पमागतं। आजिहीर्षुर्जगामाशु स पुष्पाण्यपराण्यपि।
रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान्। मृगराडिव संक्रुद्धः प्रभिन्न इव कुञ्जरः।
ददृशुः सर्व्वभूतानि महावाणधनुर्द्धरं। न ग्लानिर्नच वैक्लव्यं न भयं नच सम्भ्रमः। ११०८०
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः। द्रौपद्याः प्रियमन्विच्छन् स बाहुबलमाश्रितः।
व्यपेतभयसम्मोहः शैलमभ्यपतद्बली। स तं द्रुमलतागुल्मच्छन्नं नीलशिलातलं।
गिरिञ्चचारारिहरः किन्नराचरितं शुभं। नानावर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः।
सर्व्वभूषणसम्पूर्णं भूमेर्भुजमिवोच्छ्रितं। सर्व्वत्र रमणीयेषु गन्धमादनसानुषु।
सक्तचक्षुरभिप्रायान् हृदयेनानुचिन्तयन्। पुंस्कोकिलनिनादेषु षट्पदाचरितेषु च। ११०८५
बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः। आजिघ्रन् स महातेजाः सर्व्वर्त्तुकुसुमोद्भवं।
गन्धमुद्धतमुद्दामो वने मत्त इव द्विपः। वीज्यमानः सुपुण्येन नानाकुसुमगन्धिना।
पितुः संस्पर्शशीतेन गन्धमादनवायुना। ह्रियमाणश्रमः पित्रा संप्रहृष्टतनूरुहः।
स यक्षगन्धर्व्वसुरब्रह्मर्षिगणसेवितं। विलोकयामास तदा पुष्पहेतोररिन्दमः।
विषमच्छदरचितैरनुलिप्त इवाङ्गुलैः। विमलैर्धातुविच्छेदैः काञ्चनाञ्जनराजतैः। ११०९०
सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः। मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः।
अभिरामदरीकुञ्जनिर्झरोदककन्दरं। अप्सरोनूपुररवैः प्रनृत्तवरवर्हिणं।
दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलं। स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः।
सशष्पकवलैः स्वस्थैरदूरपरिवर्त्तिभिः। भयानभिज्ञैर्हरिणैः कौतूहलनिरीक्षितः।
चालयानः स वेगेन लताजालान्यनेकशः। आक्रीडमानो हृष्टात्मा श्रीमान् वायुसुतो ययौ। ११०९५
प्रियामनोरथं कर्त्तुमुद्यतश्चारुलोचनः। प्रांशुः कनकतालाभः सिंहसंहननो युवा।
मत्तवारणविक्रान्तो मत्तवारणवेगवान्। मत्तवारणताम्राक्षो मत्तवारणवारणः।
प्रियपार्श्वोपविष्टाभिर्व्यावृत्ताभिर्व्विचेष्टितैः। यक्षगन्धर्व्वयोषाभिरदृश्याभिर्निरीक्षितः।
नवावतारं रूपस्य विक्रीडन्निव पाण्डवः। चचार रमणीयेषु गन्धमादनसानुषु।
संस्मरन् विविधान् क्लेशान् दुर्य्योधनकृतान् बहून्। द्रौपद्या वनवासिन्याः प्रियं कर्त्तुं समुद्यतः। १११००

सोऽचिन्तयद्गते स्वर्गमर्जुने मयि चागते। पुष्पहेतोः कथं त्वार्यः करिष्यति युधिष्ठिरः।
स्नेहान्नरवरो नूनमविश्वासाद्बलस्य च। नकुलं सहदेवञ्च न मोक्ष्यति युधिष्ठिरः।
कथन्नु कुसुमावाप्तिः स्याच्छीघ्रमिति चिन्तयन्। प्रतस्थे नरशार्दूलः पपात हर्षिताननः।
सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु। द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ।
कम्पयन् मेदिनीं पद्भ्यां निर्घात इव पर्व्वसु। त्रासयन् गजयूथानि वातरंहा वृकोदरः। ११२०५
सिंहव्याघ्रमृगांश्चैव मर्द्दयानो महाबलः। उन्मूलयन्महावृक्षान् पोथयंस्तरसा बली।
लता वल्लीश्च वेगेन विकर्षन् पाण्डुनन्दनः। उपर्य्युपरि शैलाग्रमारुरुक्षुरिव द्विपः।
विनर्द्दमानोऽतिभृशं सविद्युदिव तोयदः। तेन शब्देन महता भीमस्य प्रतिबोधिताः।
गुहां सन्तत्यजुर्व्याघ्रा निलिल्युर्व्वनवासिनः। समुत्पेतुः खगास्त्रस्ता मृगयूथानि दुद्रुवुः।
ऋक्षाश्चोत्ससृजुर्वृक्षांस्तत्यजुर्हरयो गुहां। व्यजृम्भन्त महासिंहा महिषाश्चावलोकयन्। ११२१०
तेन वित्रासिता नागाः करेणुपरिवारिताः। तद्वनं संपरित्यज्य जग्मुरन्यन्महावनं।
वराहमृगसंघाश्च महिषाश्च वनेचराः। व्याघ्रगोमायुसंघाश्च प्रणेदुर्भैरवैः सह।
रथाङ्गसाह्वदात्यूहा हंसकारण्डवप्लवाः। शुकाः पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः।
तथाऽन्ये दर्पिता नागाः करेणुशरपीडिताः। सिंहव्याघ्राश्च संक्रुद्धा भीमसेनमथाद्रवन्।
शकृन्मूत्रञ्च मुञ्चाना भयविभ्रान्तमानसाः। व्यादितास्या महारौद्रा व्यनदन् भीषणान् रवान्। ११२१५
ततो वायुसुतः क्रोधात् स्वबाहुबलमाश्रितः। गजेनान्यान् गजान् श्रीमान् सिंहं सिंहेन वा विभुः।
तलप्रहारैरन्यांश्च व्यहनत् पाण्डवो बली। ते वध्यमाना भीमेन सिंहव्याघ्रतरक्षवः।
भयाद्विससृजुर्भीमं शकृन्मूत्रञ्च सुस्रुवुः। प्रविवेश ततः क्षिप्रं तानपास्य महाबलः।
वनं पाण्डुसुतः श्रीमाञ्छब्देनापूरयन्दिशः। अथापश्यन्महाबाहुर्गन्धमादनसानुषु।
सुरम्यं कदलीषण्डं बहुयोजनविस्तृतं। तमभ्यगच्छद्वेगेन क्षोभयिष्यन्महाबलः। ११२२०
महागज इवास्रावी प्रभञ्जन् विविधान् द्रुमान्। उत्पाट्य कदलीस्तम्भान् बहुतालसमुच्छ्रयान्।
चिक्षेप तरसा भीमः समन्ताद्बलिनाम्वरः। विनदन् सुमहातेजा नृसिंह इव दर्पितः।
ततः सत्त्वान्युपाक्रामन् बहूनि सुमहान्ति च। रुरुवानरसिंहांश्च महिषांश्च जलाश्रयान्।
तेन शब्देन चैवाथ भीमसेनरवेण च। वनान्तरगताश्चापि वित्रेसुर्मृगपक्षिणः।
तं शब्दं सहसा श्रुत्वा मृगपक्षिसमीरितं। जलार्द्रपक्षा विहगाः समुत्पेतुः सहस्रशः। ११२२५
तानौदकान् पक्षिगणान्निरीक्ष्य भरतर्षभः। तानेवानुसरन्रम्यं ददर्श सुमहत्सरः।
काञ्चनैः कदलीषण्डैर्मन्दमारुतकम्पितैः। वीज्यमानमिवाक्षोभ्यं तीरान्तीरविसर्पिभिः।
तत्सरोऽथावतीर्य्याथ प्रभूतनलिनोत्पलं। महागज इवोद्दामश्चिक्रीड बलवद्बली।
विक्रीड्य तस्मिन् सुचिरमुत्ततारामितद्युतिः। ततोऽभ्यगात्तु वेगेन तद्वनं बहुपादपं।
दध्मौ च शङ्खं स्वनवत्सर्व्वप्राणेन पाण्डवः। आस्फोटयच्च बलवान् भीमः सन्नादयन्दिशः। ११२३०

तस्य शङ्खस्य शब्देन भीमसेनरवेण च। बाहुशब्देन चोग्रेण नर्द्दन्तीव गिरेर्गुहाः।
तं वज्रनिष्पेषसममास्फोटितमहारवं। श्रुत्वा शैलगुहासुप्तैः सिंहैर्मुक्तो महास्वनः।
सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत। मुक्तो विरावः सुमहान् पर्व्वतो येन पूरितः।
तन्तु नादं ततः श्रुत्वा मुक्तं वारणपुङ्गवैः। भ्रातरं भीमसेनन्तु विज्ञाय हनुमान्कपिः।
दिवङ्गमं रुरोधाथ मार्गं भीमस्य कारणात्। अनेन हि पथा मा वै गच्छेदिति विचार्य्य सः। ११३५
आस्त एकायने मार्गे कदलीखण्डमण्डिते। भ्रातुर्भीमस्य रक्षार्थं तं मार्गमवरुध्य वै।
माऽत्र प्राप्स्यति शापं वा धर्षणां वेति पाण्डव। कदलीखण्डमध्यस्थो ह्येवं सञ्चिन्त्य वानरः।
प्राजृम्भत महाकायो हनूमान्नाम वानरः। कदलीखण्डमध्यस्थो निद्रावशगतस्तदा।
जृम्भमाणः सुविपुलं शक्रध्वजमिवोच्छ्रितं। आस्फोटयच्च लाङ्गूलमिन्द्राशनिसमस्वनं।
तस्य लाङ्गूलनिनदं पर्व्वतः स गुहामुखैः। उद्गारमिव गौर्नर्द्दन्नुत्ससर्ज्ज समन्ततः। ११४०
लाङ्गूलास्फोटशब्दाच्च चलितः स महागिरिः। विघूर्णमानशिखरः समन्तात् पर्य्यशीर्य्यत।
स लाङ्गूलरवस्तस्य मत्तवारणनिस्वनं। अन्तर्धाय विचित्रेषु चचार गिरिसानुषु।
स भीमसेनस्तच्छ्रुत्वा सम्प्रहृष्टतनूरुहः। शब्दप्रभवमन्विच्छंश्चचार कदलीवनं।
कदलीवनमध्यस्थमथ पीने शिलातले। ददर्श सुमहाबाहुर्व्वानराधिपतिं तदा।
विद्युत्सम्पातदुष्प्रेक्षं विद्युत्सम्पातपिङ्गलं। विद्युत्सम्पातनिनदं विद्युत्सम्पातचञ्चलं। ११४५
बाहुस्वस्तिकविन्यस्तपीनह्रस्वशिरोधरं। स्कन्धभूयिष्ठकायत्वात्तनुमध्यकटीतटं।
किञ्चिच्चाभुग्नशीर्षेण दीर्घरोमाञ्चितेन च। लाङ्गूलेनोर्द्धगतिना ध्वजेनेव विराजता।
ह्रस्वोष्ठं ताम्रजिह्वास्यं रक्तकर्णञ्चलद्भ्रुवं। विवृत्तदंष्ट्रादशनं शुक्लतीक्ष्णाग्रशोभितं।
अपश्यद्वदनं तस्य रश्मिवन्तमिवोडुपं। वदनाभ्यन्तरगतैः शुक्लैर्दन्तैरलङ्कृतं।
केशरोत्करसम्मिश्रमशोकानामिवोत्करं। हिरण्मयीनां मध्यस्थं कदलीनां महाद्युतिं। ११५०
दीप्यमानेन वपुषा स्वर्च्चिष्मन्तमिवानलं। निरीक्षन्तमभित्रघ्नं लोचनैर्म्मधुपिङ्गलैः।
तं वानरवरं धीमानतिकायं महाबलं। स्वर्गपन्थानमावृत्य हिमवन्तमिव स्थितं।
दृष्ट्वा चैनं महाबाहुरेकं तस्मिन् महावने। अथोपसृत्य तरसा विभीर्भीमस्ततो बली।
सिंहनादं चकारोग्रं वज्राशनिसमं बली। तेन शब्देन भीमस्य वित्रेसुर्मृगपक्षिणः।
हनूमांश्च महासत्त्व ईषदुन्मील्य लोचने। दृष्ट्वा तमथ सावज्ञं लोचनैर्म्मधुपिङ्गलैः। ११५५
स्मितेन चैनमासाद्य हनूमानिदमब्रवीत्॥ हनूमानुवाच॥ किमर्थं सरुजस्तेऽहं सुखसुप्तः प्रबोधितः।
ननु नाम त्वया कार्य्या दया भूतेषु जानता। वयं धर्म्मं न जानीमस्तिर्य्यग्योनिमुपाश्रिताः।
नरास्तु बुद्धिसम्पन्ना दयां कुर्व्वन्ति जन्तुषु। क्रूरेषु कर्म्मसु कथं देहवाक्चित्तदूषिषु।
धर्म्मघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः। न त्वं धर्म्मं विजानासि बुधा नोपासितास्त्वया।
अल्पबुद्धितया बाल्यादुत्सादयसि यन्मृगान्। ब्रूहि कस्त्वं किमर्थं वा किमिदं वनमागतः। ११६०

सिद्धो वा यदि वा देवो गन्धर्व्वो वाऽथ गुह्यकः। पृष्टःसन् काम्यया ब्रूहि कस्त्वं वानररूपधृक्। १११९०
मद्येद्गुह्यं महाबाहो श्रोतव्यञ्चेद्भवेन्मम। शिष्यवत्त्वान्तु पृच्छामि उपपन्नोऽस्मि तेऽनघ।
॥ हनूमानुवाच ॥ यत्ते मम परिज्ञाने कौतूहलमरिन्दम। तत्सर्व्वमखिलेन त्वं शृणु पाण्डवनन्दन।
अहं केशरिणः क्षेत्रे वायुना जगदायुना। जातः कमलपत्राक्ष हनूमान्नाम वानरः।
सूर्य्यपुत्त्रञ्च सुग्रीवं शक्रपुत्त्रञ्च वालिनं। सर्व्वे वानरराजानस्तथा वानरयूथपाः।
उपतस्थुर्म्महावीर्य्या मम चामित्रकर्षण। सुग्रीवेणाभवत् प्रीतिरनिलस्याग्निना यथा। १११९५
निकृतः स ततो भ्रात्रा कस्मिंश्चित्कारणान्तरे। ऋष्यमूके मया सार्द्धं सुग्रीवो न्यवसच्चिरं।
अथ दाशरथिर्व्वीरो रामो नाम महाबलः। विष्णुर्म्मानुषरूपेण चचार वसुधातलं।
स पितुः प्रियमन्विच्छन् सहभार्य्यः सहानुजः। सधनुर्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः।
तस्य भार्य्या जनस्थानाच्छलेनापहृता बलात्। राक्षसेन्द्रेण बलिना रावणेन दुरात्मना।
सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा। वञ्चयित्वा नरव्याघ्रं मारीचेन तदाऽनघ। ११२००
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसंवादे सप्तचत्वारिंशदधिकशततोऽध्यायः॥ १४७॥
॥ हनूमानुवाच ॥ हृतदारः सह भ्रात्रा पत्नीं मार्गन् स राघवः। दृष्टवाञ्छैलशिखरे सुग्रीवं वानरर्षभं।
तेन तस्याभवत् सख्यं राघवस्य महात्मनः। स हत्वा वालिनं राज्ये सुग्रीवमभिषिक्तवान्।
स राज्यं प्राप्य सुग्रीवः सीतायाः परिमार्गणे। वानरान् प्रेषयामास शतशोऽथ सहस्रशः।
ततो वानरकोटीभिः सहितोऽहं नरर्षभ। सीतां मार्गन्महाबाहो प्रयातो दक्षिणां दिशं।
ततः प्रवृत्तिः सीताया गृध्रेण सुमहात्मना। सम्पातिना समाख्याता रावणस्य निवेशने। ११२०५
ततोऽहङ्कार्य्यसिद्ध्यर्थं रामस्याक्लिष्टकर्म्मणः। शतयोजनविस्तारमर्णवं सहसाप्लुतः।
अहं स्ववीर्य्यादुत्तीर्य्य सागरं मकरालयं। सुतां जनकराजस्य सीतां सुरसुतोपमां।
दृष्टवान् भरतश्रेष्ठ रावणस्य निवेशने। समेत्य तामहं देवीं वैदेहीं राघवप्रियां।
दग्ध्वा लङ्कामशेषेण साट्टप्राकारतोरणां। प्रत्यागतश्चापि पुनर्नाम तत्र प्रकाश्य वै।
मद्वाक्याच्चावधार्य्याशु रामो राजीवलोचनः। स बुद्धिपूर्व्वं सैन्यस्य बद्ध्वा सेतुं महोदधौ। ११२१०
वृतो वानरकोटीभिः समुत्तीर्णो महार्णवं। ततो रामेण वीरेण हत्वा तानेव राक्षसान्।
रणे सराक्षसगणं रावणं लोकरावणं। निशाचरेन्द्रं हत्वा तु सभ्रातृसुतबान्धवं।
राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभीषणं। धार्म्मिकं भक्तिमन्तञ्च भक्तानुगतवत्सलं।
ततः प्रत्याहृता भार्य्या नष्टा वेदश्रुतिर्यथा। तयैव सहितः साध्व्या पत्न्या रामो महायशाः।
गत्वा ततोऽतित्वरितः स्वां पुरीं रघुनन्दनः। अध्यावसत्ततोऽयोध्यामयोध्यां द्विषतां प्रभुः। ११२१५
ततः प्रतिष्ठितो राज्ये रामो नृपतिसत्तमः। वरं मया याचितोऽसौ रामो राजीवलोचनः
यावद्रामकथेयन्ते भवेल्लोकेषु शत्रुहन्। तावज्जीवेयमित्येवं तथास्त्विति च सोऽब्रवीत्।
सीताप्रसादाच्च सदा मामिहस्थमरिन्दम। उपतिष्ठन्ति मे दिव्या भोगा भीम यथेप्सिताः।

दशवर्षसहस्राणि दशवर्षशतानि च । राज्यं कारितवान् रामस्ततः स्वभवनं गतः ।
तदिहाप्सरसस्तात गन्धर्व्वाश्च सदाऽनघ । तस्य वीरस्य चरितं गायन्तो रमयन्ति मां । ११२२०
अयञ्च मार्गो मर्त्यानामगम्यः कुरुनन्दन । ततोऽहं रुद्धवान् मार्गं तवेमं देवसेवितं ।
धर्षयेद्वा शपेद्वाऽपि मा कश्चिदिति भारत । दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ।
यदर्थमागतश्चासि अतएव सरश्च तत् ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसेनसंवादे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

॥ वैशम्पायन उवाच ॥ एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान् । प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ।
उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरं । मया धन्यतरो नास्ति यदार्य्यं दृष्टवानहं । ११२२५
अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात् । एवन्तु कृतमिच्छामि त्वयाऽद्य प्रियमात्मनः ।
यत्ते तदासीत् प्लवतः सागरं मकरालयं । रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुं ।
एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः । एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ।
॥ हनूमानुवाच ॥ न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित् । कालावस्था तदा ह्यन्या न सा वर्त्तति साम्प्रतं ।
अन्यः कृतयुगे कालस्त्रेतायां द्वापरे परः । अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे । ११२३०
भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः । कालं समनुवर्त्तन्ते यथा भावा युगे युगे ।
बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च । तदलं तव तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्त्तामि कालो हि दुरतिक्रमः ॥ भीमसेन उवाच ॥ युगसंख्यां समाचक्ष्व आचारञ्च युगे युगे ।
धर्म्मकामार्थभावांश्च वर्ष्म वीर्य्यं भवाभवौ ॥ हनूमानुवाच ॥ कृतं नाम युगं तात यत्र धर्म्मः सनातनः ।
कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे । न तत्र धर्म्माः सीदन्ति क्षीयन्ते न च वै प्रजाः । ११२३५
ततः कृतयुगं नाम कालेन गुणतां गतं । देवदानवगन्धर्व्वयक्षराक्षसपन्नगाः ।
नासन् कृतयुगे तात तदा न क्रयविक्रयः । न सामऋग्यजुर्व्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्म्मः सन्न्यास एव च । न तस्मिन् युगसंसर्गे व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं न दर्पो नापि वैकृतं । न विग्रहः कुतस्तन्द्री न द्वेषो नच पैशुनं ।
न भयं नापि सन्तापो नचेर्ष्या नच मत्सरः । ततः परमकं ब्रह्म सा गतिर्योगिनां परा । ११२४०
आत्मा च सर्व्वभूतानां शुक्लो नारायणस्तदा । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन् स्वकर्म्मनिरताः प्रजाः । समाश्रयं समाचारं समज्ञानञ्च केवलं ।
तदा हि समकर्म्माणो वर्णा धर्म्मानवाप्नुवन् । एकदेवसदायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्म्मास्त्वेकवेदा धर्म्ममेकमनुव्रताः । चातुराश्रम्ययुक्तेन कर्म्मणा कालयोगिना ।
अकामफलसंयोगात् प्राप्नुवन्ति परां गतिं । आत्मयोगसमायुक्तो धर्म्मोऽयं कृतलक्षणः । ११२४५
कृते युगे चतुष्पादश्चातुर्व्वर्ण्यस्य शाश्वतः । एतत् कृतयुगं नाम त्रैगुण्यपरिवर्ज्जितं ।
त्रेतामपि निबोध त्वं तस्मिन् सत्रं प्रवर्त्तते । पादेन ह्रसते धर्म्मो रक्ततां याति चाच्युतः ।

सत्यप्रवृत्ताश्च नराः क्रियाधर्म्मपरायणाः। ततो यज्ञाः प्रवर्त्तन्ते धर्म्माश्च विविधाः क्रियाः।
त्रेतायां भावसङ्कल्पाः क्रियादानफलोपगाः। प्रचलन्ति न वै धर्म्मात्तपोदानपरायणाः।
स्वधर्म्मस्थाः क्रियावन्तो नरास्त्रेतायुगेऽभवन्। द्वापरे च युगे धर्म्मो द्विभागो न प्रवर्त्तते। ११२१०
विष्णुर्व्वै पीततां याति चतुर्द्धा वेद एव च। ततोऽन्ये च चतुर्व्वेदा स्त्रिवेदाश्च तथा परे।
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे। एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया।
तपोदानप्रवृत्ता च राजसी भवति प्रजा। एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः।
सत्त्वस्य चेह विभ्रंशात् सत्ये कश्चिदवस्थितः। सत्त्वात् प्रच्यवमानानां व्याधयो बहवोऽभवन्।
कामाश्चोपद्रवाश्चैव तदा वै दैवकारिताः। यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः। ११२१५
कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे। एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्म्मतः।
पादेनैकेन कौन्तेय धर्म्मः कलियुगे स्थितः। तामसं युगमासाद्य कृष्णो भवति केशवः।
वेदाचाराः प्रशाम्यन्ति धर्म्मयज्ञक्रियास्तथा। ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा।
उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा। युगेष्वावर्त्तमानेषु धर्म्मो व्यावर्त्तते पुनः।
धर्म्मे व्यावर्त्तमाने तु लोको व्यावर्त्तते पुनः। लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्त्तकाः। ११२२०
युगक्षयकृता धर्म्माः प्रार्थनानि विकुर्व्वते। एतत् कलियुगं नाम अचिराद्यत् प्रवर्त्तते।
युगानुवर्त्तनन्त्वेतत् कुर्व्वन्ति चिरजीविनः। यच्च ते मत्परिज्ञाने कौतूहलमरिन्दम।
अनर्थकेषु को भावः पुरुषस्य विजानतः। एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि।
युगसंख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम्।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसंवादे एकोनपञ्चाशदधिकशततोऽध्यायः ॥ १४९ ॥

॥ भीमसेन उवाच ॥ पूर्व्वरूपमदृष्ट्वा ते न यास्यामि कथञ्चन। यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना। ११२२५
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवङ्गमः। तद्रूपं दर्शयामास यद्वै सागरलङ्घने।
भ्रातुः प्रियमभीप्सन् वै चकार सुमहद्वपुः। देहस्तस्य ततोऽतीव वर्द्धत्यायामविस्तरैः।
स द्रुमं कदलीखण्डं छादयन्नमितद्युतिः। गिरेश्चोच्छ्रयमाक्रम्य तस्थौ तत्र च वानरः।
समुच्छ्रितमहाकायो द्वितीय इव पर्व्वतः। ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भ्रुकुटीकुटिलाननः।
दीर्घलाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः। तद्रूपं महदालक्ष्य भ्रातुः कौरवनन्दनः। ११२३०
विसिस्मिये तदा भीमो जहृषे च पुनः पुनः। तमर्कमिव तेजोभिः सौवर्णमिव पर्व्वतम्।
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत्। आबभाषे च हनुमान् भीमसेनं स्मयन्निव।
एतावदिह शक्तस्त्वं द्रष्टुं रूपं ममानघ। वर्द्धेऽहञ्चाप्यतो भूयो यावन्मे मनसि स्थितम्।
भीम शत्रुषु चात्यर्थं वर्द्धते मूर्त्तिरोजसा॥ वैशम्पायन उवाच॥ तदद्भुतं महारौद्रं विन्ध्यपर्व्वतसन्निभम्।
दृष्ट्वा हनूमतो वर्ष्म सम्भ्रान्तः पवनात्मजः। प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः। ११२३५
कृताञ्जलिरदीनात्मा हनूमन्तमवस्थितम्। दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो।

संहरस्व महावीर्य्य स्वयमात्मानमात्मना । नहि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितं ।
अप्रमेयमनाधृष्यं मैनाकमिव पर्व्वतं । विस्मयश्चैव मे वीर सुमहान् मनसोऽद्य वै ।
यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्ययात् । त्वमेव शक्तस्तां लङ्कां सयोधां सहवाहनां ।
स्वबाहुबलमाश्रित्य विनाशयितुमञ्जसा । नहि ते किञ्चिदप्राप्यं मारुतात्मज विद्यते । ११२८०
तव नैकस्य पर्य्याप्तो रावणः सगणो युधि ॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु भीमेन हनूमान् प्लवगोत्तमः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा । एवमेतन्महाबाहो यथा वदसि भारत ।
भीमसेन न पर्य्याप्तो ममासौ राक्षसाधमः । मया तु निहते तस्मिन् रावणे लोककण्टके ।
कीर्त्तिर्नश्येद्राघवस्य तत एतदुपेक्षितं । तेन वीरेण तं हत्वा सगणं राक्षसाधमं ।
आनीता स्वपुरीं सीता कीर्त्तिश्चाख्यापिता नृषु । तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः । ११२८५
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः । एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते ।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः । नच ते तरसा कार्य्यः कुसुमावचयः स्वयं ।
दैवतानि हि मान्यानि पुरुषेण विशेषतः । बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्व्वन्ति भारत । मा तात साहसं कार्षीः स्वधर्मं परिपालय ।
स्वधर्मस्थः परं धर्म्मं बुध्यस्व गमयस्व च । नहि धर्म्ममविज्ञाय वृद्धाननुपसेव्य च । ११२९०
धर्म्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि । अधर्म्मो यत्र धर्म्माख्यो धर्म्मश्चाधर्म्मसंज्ञितः ।
स विज्ञेयो विभागेन यत्र मुह्यन्त्यबुद्धयः । आचारसम्भवो धर्म्मो धर्म्मे वेदाः प्रतिष्ठिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः । वेदाचारविधानोक्तैर्यज्ञैर्धार्य्यन्ति देवताः ।
बृहस्पत्युशनोक्तैश्च नयैर्धार्य्यन्ति मानवाः । पण्याकरवणिज्याभिः कृष्या गोऽजाविपोषणैः ।
वार्त्तया धार्य्यते सर्व्वं धर्म्मैरेतैर्द्विजातिभिः । त्रयी वार्त्ता दण्डनीतिस्तिस्रो विद्या विजानतां । ११२९५
ताभिः सम्यक् प्रयुक्ताभिर्लोकयात्रा विधीयते । सा चेद्धर्म्मकृता न स्यात्त्रयीधर्म्मृते भुवि ।
दण्डनीतिमृते चापि निर्म्मर्य्यादमिदं भवेत् । वार्त्ताधर्म्मे ह्यवर्त्तिन्या विनश्येयुरिमाः प्रजाः ।
सुप्रवृत्तैस्त्रिभिर्ह्येतै धर्म्मं सूयन्ति वै प्रजाः । द्विजातीनामृतं धर्म्मो ह्येकश्चैवैकवर्णिकः ।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः । याजनाध्यापनं विप्रे धर्म्मश्चैव प्रतिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्म्मश्च पोषणं । शुश्रूषा च द्विजातीनां शूद्राणां धर्म्म उच्यते । ११३००
भैक्ष्यहोमव्रतैर्हीनास्तथैव गुरुवासिताः । क्षत्रधर्म्मोऽत्र कौन्तेय तव धर्म्मोऽत्र रक्षणं ।
स्वधर्म्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः । वृद्धैः सम्मन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः ।
आस्थितः शास्ति दण्डेन व्यसनी परिभूयते । निग्रहानुग्रहैः सम्यग्यदा राजा प्रवर्त्तते ।
तदा भवन्ति लोकस्य मर्य्यादाः सुव्यवस्थिताः । तस्माद्देशे च दुर्गे च शत्रुदुर्गबलेषु च ।
नित्यञ्चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा । राज्ञामुपायाश्चत्वारो बुद्धिमन्त्रपराक्रमाः । ११३०५
निग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्य्यसाधकं । साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।

साधनीयानि कर्म्माणि समासव्यासयोगतः। मन्त्रमूला नयाः सर्व्वे चाराश्च भरतर्षभ।
सुमन्त्रितेन या सिद्धिस्तां द्विजैः सह मन्त्रयेत्। स्त्रिया मूढेन बालेन लुब्धेन लघुनाऽपि वा।
न मन्त्रयीत गुह्यानि येषाञ्चोन्मादलक्षणं। मन्त्रयेत् सह विद्वद्भिः शक्तैः कर्म्माणि कारयेत्।
स्निग्धैश्च नीतिविन्यासान् मूर्खान् सर्व्वत्र वर्ज्जयेत्। धार्म्मिकान् धर्म्मकार्य्येषु अर्थकार्य्येषु पण्डितान्। ११११०
स्त्रीषु क्लीवान्नियुञ्जीत क्रूरान् क्रूरेषु कर्म्मसु। स्वेभ्यश्चैव परेभ्यश्च कार्य्याकार्य्यसमुद्भवा।
बुद्धिः कर्म्मसु विज्ञेया रिपूणाञ्च बलाबलं। बुद्ध्या सुप्रतिपन्नेषु कुर्य्यात् साध्वनुग्रहं।
निग्रहं चाप्यशिष्टेषु निर्म्मर्य्यादेषु कारयेत्। निग्रहे प्रग्रहे सम्यग्यदा राजा प्रवर्त्तते।
तदा भवति लोकस्य मर्य्यादा सुव्यवस्थिता। एष तेऽभिहितः पार्थ घोरो धर्म्मो दुरन्वयः।
तं स्वधर्म्मं विभागेन विनयस्थोऽनुपालय। तपोधर्म्मदमेज्याभिर्विप्रा यान्ति यथा दिवं। १११११
दानातिथ्यक्रियाधर्म्मैर्यान्ति वैश्याश्च सद्गतिं। क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः।
सम्यक्प्रणीतदण्डा हि कामद्वेषविवर्ज्जिताः। अलुब्धा विगतक्रोधाः सतां यान्ति सलोकतां।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि हनूमद्भीमसेनसंवादे पञ्चाशदधिकशततोऽध्यायः॥ १५० ॥
॥ वैशम्पायन उवाच॥ ततः संहृत्य विपुलं तद्वपुः कामतः कृतं। भीमसेनं पुनर्दोर्भ्यां पर्य्यष्वजत वानरः।
परिष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत। श्रमो नाशमुपागच्छत् सर्व्वञ्चासीत् प्रदक्षिणं।
बलञ्चातिबलो मेने न मेऽस्ति सदृशो महान्। ततः पुनरथोवाच पर्य्यश्रुनयनो हरिः। १११२०
भीममाभाष्य सौहार्द्दाद्बाष्पगद्गदया गिरा। गच्छ वीर स्वमावासं स्मर्त्तव्योऽस्मि कथान्तरे।
इहस्थश्च कुरुश्रेष्ठ न निवेद्योऽस्मि कर्हिचित्। धनदस्यालयाच्चापि विसृष्टानां महाबल।
देशकाल इहायातुं देवगन्धर्व्वयोषितां। ममापि सफलं चक्षुः स्मारितश्चास्मि राघवं।
रामाभिधानं विष्णुं हि जगद्धृदयनन्दनं। सीतावक्त्रारविन्दार्कं दशास्यध्वान्तभास्करं।
मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह। तदस्मद्दर्शनं वीर कौन्तेयामोघमस्तु ते। १११२५
भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत। यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयं।
धार्त्तराष्ट्रा निहन्तव्या यावदेतत् करोम्यहं। शिलया नगरञ्चापि मर्द्दितव्यं मया यदि।
बद्ध्वा दुर्य्योधनञ्चाद्य आनयामि तवान्तिकं। यावदेतत् करोम्यद्य कामं तव महाबल।
॥वैशम्पायन उवाच॥ भीमसेनस्तु तद्वाक्यं श्रुत्वा तस्य महात्मनः। प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना।
कृतमेव त्वया सर्व्वं मम वानरपुङ्गव। स्वस्ति तेऽस्तु महाबाहो कामये त्वां प्रसीद मे। १११३०
सनाथाः पाण्डवाः सर्व्वे त्वया नाथेन वीर्य्यवन्। तवैव तेजसा सर्व्वान् विजेष्यामो वयं परान्।
एवमुक्तस्तु हनुमान् भीमसेनमभाषत। भ्रातृत्वात् सौहृदाच्चैव करिष्यामि प्रियं तव।
चमूं विगाह्य शत्रूणां परशक्तिसमाकुलां। यदा सिंहरवं वीर करिष्यसि महाबल।
तदाऽहं बृंहयिष्यामि स्वरवेण रवन्तव। विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान्।

शत्रूणां ये प्राणहराः सुखं येन हनिष्यथ । एवमाभाष्य हनुमांस्तदा पाण्डवनन्दनं । ११३३५
मार्गमाख्याय भीमाय तत्रैवान्तरधीयत ।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

॥ वैशम्पायन उवाच ॥ गते तस्मिन् हरिवरे भीमोऽपि बलिनाम्वरः । तेन मार्गेण विपुलं व्यचरद्गन्धमादनं ।
अनुस्मरन् वपुस्तस्य श्रियञ्चाप्रतिमां भुवि । माहात्म्यमनुभावञ्च स्मरन् दाशरथेर्ययौ ।
स तानि रमणीयानि वनान्युपवनानि च । विलोकयामास तदा सौगन्धिकवनेप्सया ।
फुल्लद्रुमविचित्राणि सरांसि सरितस्तथा । नानाकुसुमचित्राणि पुष्पितानि वनानि च । ११३४०
मत्तवारणयूथानि पङ्कक्लिन्नानि भारत । वर्षतामिव मेघानां वृन्दानि ददृशे तदा ।
हरिणैश्चपलापाङ्गैर्हरिणीसहितैर्वनं । सशष्पकवलैः श्रीमान् पथि दृष्ट्वा द्रुतं ययौ ।
महिषैश्च वराहैश्च शार्द्दूलैश्च निषेवितं । व्यपेतभीर्गिरिं शौर्य्याद्भीमसेनो व्यगाहत ।
कुसुमानतगन्धैश्च ताम्रपल्लवकोमलैः । याच्यमान इवारण्ये द्रुमैर्वातकम्पितैः ।
कृतपद्माञ्जलिपुटा मत्तषट्पदसेविताः । प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् । ११३४५
सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु । द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ ।
परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने । काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीं ।
हंसकारण्डवयुतां चक्रवाकोपशोभितां । रचितामिव तस्याद्रेर्मालां विमलपङ्कजां ।
तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत् । अपश्यत् प्रीतिजननं बालार्कसदृशद्युति ।
तद्दृष्ट्वा लब्धकामः स मनसा पाण्डुनन्दनः । वनवासपरिक्लिष्टां जगाम मनसा प्रियां । ११३५०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

॥ वैशम्पायन उवाच ॥ स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षितां । कैलासशिखराभ्याशे ददर्श शुभकाननां ।
कुवेरभवनाभ्याशे जातां पर्व्वतनिर्झरे । सुरम्यां विपुलच्छायां नानाद्रुमलताकुलां ।
हरिताम्बुजसञ्छन्नां दिव्यां कनकपुष्करां । नानापक्षिजनाकीर्णां सूपतीर्थामकर्द्दमां ।
अतीवरम्यां सुजलां जातां पर्व्वतसानुषु । विचित्रभूतां लोकस्य शुभामद्भुतदर्शनां ।
तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभं । ददर्श विमलं तोयं पिबंश्च बहु पाण्डवः । ११३५५
तान्तु पुष्करिणीं रम्यां दिव्यसौगन्धिकावृतां । जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ।
वैदूर्य्यवरनालैश्च बहुचित्रैर्मनोरमैः । हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ।
आक्रीडं राजराजस्य कुवेरस्य महात्मनः । गन्धर्व्वैरप्सरोभिश्च देवैश्च परमार्च्चितां ।
सेवितामृषिभिर्दिव्यैर्यक्षैः किम्पुरुषैस्तथा । राक्षसैः किन्नरैश्चापि गुप्तां वैश्रवणेन च ।
तांश्च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः । बभूव परमप्रीतो दिव्यं संप्रेक्ष्य तत्सरः । ११३६०
तच्च क्रोधवशा नाम राक्षसा राजशासनात् । रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः ।

ते तु दृष्ट्वैव कौन्तेयमजिनैः प्रतिवासितं। रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमं।
सायुधं बद्धनिस्त्रिंशमशङ्कितमरिन्दमं। पुष्करेप्सुमुपायान्तमन्योन्यमभिचुक्रुशुः।
अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः। यच्चिकीर्षुरिह प्राप्तस्तत्सम्प्रष्टुमिहार्हथ।
ततः सर्व्वे महाबाहुं समासाद्य वृकोदरं। तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि। ११२६५
मुनिवेशधरश्चैव सायुधश्चैव लक्ष्यसे। यदर्थमभिसंप्राप्तः तदाचक्ष्व महामते।
इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे त्रिपञ्चाशदधिकशततमोऽध्यायः॥ १५३ ॥
॥ भीमसेन उवाच ॥ पाण्डवो भीमसेनोऽहं धर्म्मराजादनन्तरः। विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः।
अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमं। अनिलोढमितो नूनं सा बहूनि परीप्सति।
तस्या मामनवद्याङ्ग्या धर्म्मपत्न्याः प्रिये स्थितं। पुष्पाहारमिह प्राप्तं निबोधत निशाचराः।
॥ राक्षसा ऊचुः ॥ आक्रीडोऽयं कुवेरस्य दयितः पुरुषर्षभ। नेह शक्यं मनुष्येण विहर्त्तुं मर्त्यधर्म्मणा। ११२७०
देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर। आमन्त्र्य यक्षप्रवरं पिबन्ति रमयन्ति च।
गन्धर्व्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव। अन्यायेनेह यः कश्चिदवमन्य धनेश्वरं।
विहर्त्तुमिच्छेद्दुर्वृत्तः स विनश्येन्न संशयः। तमनादृत्य पद्मानि जिहीर्षसि बलादितः।
धर्म्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथं। आमन्त्र्य यक्षराजं वै ततः पिब हरस्व च।
नातोऽन्यथा त्वया शक्यं किञ्चित् पुष्करमीक्षितुं ॥ भीमसेन उवाच ॥ राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके। ११२७५
दृष्ट्वाऽपि च महाराजं नाहं याचितुमुत्सहे। नहि याचन्ति राजान एष धर्म्मः सनातनः।
नचाहं हातुमिच्छामि क्षात्त्रं धर्म्मं कथञ्चन। इयञ्च नलिनी रम्या जाता पर्व्वतनिर्झरे।
नेयं भवनमासाद्य कुवेरस्य महात्मनः। तुल्या हि सर्व्वभूतानामियं वैश्रवणस्य च।
एवं गतेषु द्रव्येषु कः कं याचितुमर्हति ॥ वैशम्पायन उवाच ॥ इत्युक्त्वा राक्षसान् सर्व्वान् भीमसेनो ह्यमर्षणः।
व्यगाहत महाबाहुर्नलिनीं तां महाबलः। ततः स राक्षसैर्व्वाचा प्रतिषिद्धः प्रतापवान्। ११२८०
माभैवमिति स क्रोधैर्भर्त्सयद्भिः समन्ततः। कदर्थीकृत्य तु स तान् राक्षसान् भीमविक्रमः।
व्यगाहत महातेजास्ते तं सर्व्वे न्यवारयन्।
बध्नीत बध्नीत प्रकृन्ततेमं पचाम खादाम च भीमसेनं। क्रुद्धा ब्रुवन्तोऽभिययुर्द्रुतं ते शस्त्राणि चोद्यम्य विवृत्तनेत्राः।
ततः स गुर्व्वीं यमदण्डकल्पां महागदां काञ्चनपट्टनद्धां। प्रगृह्य तानभ्यपतत्तरस्वी ततोऽब्रवीत्तिष्ठत तिष्ठतेति।
ते तं तदा तोमरपट्टिशाद्यैर्व्याविद्धशस्त्रैः सहसा निपेतुः। जिघांसवः क्रोधवशाः सुभीमा भीमं समन्तात् परिवव्रुरुग्राः। ११२८५
वातेन कुन्त्यां बलवान् सुजातः शूरस्तरस्वी द्विषतां निहन्ता। सत्ये च धर्म्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः।
तेषां स मार्गान् विविधान्महात्मा विहत्य शस्त्राणि च शात्रवाणां। यथा प्रवीरान्निजघान भीमः परं शतं पुष्करिणीसमीपे।
ते तस्य वीर्य्यञ्च बलञ्च दृष्ट्वा विद्याबलं बाहुबलं तथैव। अशक्नुवन्तः सहितुं समन्तात् द्रुतं प्रवीराः सहसा निवृत्ताः।
विदीर्य्यमाणास्तत एव तूर्णमाकाशमास्थाय विमूढसंज्ञाः। कैलासशृङ्गाण्यभिदुद्रुवुस्ते भीमार्द्दिताः क्रोधवशाः प्रभग्नाः।

स शक्रवद्दानवदैत्यसंघान् विक्रम्य जित्वा च रणेऽरिसंघान्। विगाह्य तां पुष्करिणीं जितारिः कामाय जग्राह ततोऽम्बुजानि। ११२९०

ततः स पीत्वाऽमृतकल्पमम्भो भूयो बभूवोत्तमवीर्य्यतेजाः। उत्पाट्य जग्राह च सोऽम्बुजानि सौगन्धिकान्युत्तमगन्धवन्ति।

ततस्तु ते क्रोधवशाः समेत्य धनेश्वरं भीमबलप्रणुन्नाः। भीमस्य वीर्य्यञ्च बलञ्च संख्ये यथावदाचख्युरतीव भीताः।

तेषां वचस्तत्तु निशम्य देवः प्रहस्य रक्षांसि ततोऽभ्युवाच। गृह्णातु भीमो जलजानि कामात् कृष्णानिमित्तं विदितं ममैतत्।

ततोऽभ्यनुज्ञाप्य धनेश्वरन्ते जग्मुः कुरूणां प्रवरं विरोषाः। भीमञ्च तस्यां ददृशुर्नलिन्यां यथोपजोषं विहरन्तमेकं।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे चतुःपञ्चाशदधिकशतोऽध्यायः॥ १५४॥

॥ वैशम्पायन उवाच॥ ततस्तानि महार्हाणि दिव्यानि भरतर्षभ। बहूनि बहुरूपाणि विरजांसि समाददे। ११२९५

ततो वायुर्महान् शीघ्रो नीचैः शर्करकर्षणः। प्रादुरासीत् खरस्पर्शः संग्राममभिचोदयन्।

पपात महती चोल्का सनिर्घाता महाभया। निष्प्रभश्चाभवत् सूर्य्यश्छन्नरश्मिस्तमोवृतः।

निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते। चचाल पृथिवी चापि पांशुवर्षं पपात च।

सलोहिता दिशश्चासन् खरवाचो मृगद्विजाः। तमोवृतमभूत् सर्व्वं न प्राज्ञायत किञ्चन।

अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे। तदद्भुतमभिप्रेक्ष्य धर्म्मपुत्त्रो युधिष्ठिरः। ११३००

उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति। सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्म्मदाः।

यथा रूपाणि पश्यामि स्वभ्यग्रो नः पराक्रमः। एवमुक्त्वा ततो राजा वीक्षाञ्चक्रे समन्ततः।

अपश्यमानो भीमन्तु धर्म्मपुत्त्रो युधिष्ठिरः। ततः कृष्णां यमौ चापि समीपस्थावरिन्दमः।

पप्रच्छ भ्रातरं भीमं भीमकर्म्माणमाहवे। कच्चित् न भीमः पाञ्चालि किञ्चित् कृत्यं चिकीर्षति।

कृतवानपि वा वीरः साहसं साहसप्रियः। इमे ह्यकस्मादुत्पाता महासमरदर्शनाः। ११३०५

दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः। तं तथा वादिनं कृष्णा प्रत्युवाच मनस्विनी।

प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी॥ द्रौपद्युवाच॥ यत्तत् सौगन्धिकं राजन्नाहृतं मातरिश्वना।

तन्मया भीमसेनस्य प्रीतयाऽद्योपपादितं। अपि चोक्तो मया वीरो यदि पश्येर्बहून्यपि।

तानि सर्व्वाण्युपादाय शीघ्रमागम्यतामिति। स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः।

प्रागुदीचीं दिशं राजंस्तान्याहर्त्तुमितो गतः। उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत्। ११३१०

गच्छाम सहितास्तूर्णं येन यातो वृकोदरः। वहन्तु राक्षसा विप्रान् यथा श्रान्तान् यथा कृशान्।

त्वमप्यमरसङ्काश वह कृष्णां घटोत्कच। व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः।

चिरञ्च तस्य कालोऽयं स च वायुसमो जवे। तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने।

उत्पतेदपि चाकाशं निपतेच्च यथेच्छकं। तमन्वियाम भवतां प्रभावाद्रजनीचराः।

पुरा स नापराध्नोति सिद्धानां ब्रह्मवादिनां। तथेत्युक्त्वा तु ते सर्व्वे हैडिम्बप्रमुखास्तदा। ११३१५

उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ। आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः।

लोमशेनैव सहिताः प्रययुः प्रीतमानसाः। ते सर्व्वे त्वरिता गत्वा ददृशुः शुभकाननां।

स शक्रवद्दानवदैत्यसंघान् विक्रम्य जित्वा च रणेऽरिसंघान्। विगाह्य तां पुष्करिणीं जितारिः कामाय जग्राह ततोऽम्बुजानि। ११२९०

ततः स पीत्वाऽमृतकल्पमम्भो भूयो बभूवोत्तमवीर्य्यतेजाः। उत्पाट्य जग्राह च सोऽम्बुजानि सौगन्धिकान्युत्तमगन्धवन्ति।

ततस्तु ते क्रोधवशाः समेत्य धनेश्वरं भीमबलप्रणुन्नाः। भीमस्य वीर्य्यञ्च बलञ्च संख्ये यथावदाचख्युरतीव भीताः।

तेषां वचस्तत्तु निशम्य देवः प्रहस्य रक्षांसि ततोऽभ्युवाच। गृह्णातु भीमो जलजानि कामात् कृष्णानिमित्तं विदितं ममैतत्।

ततोऽभ्यनुज्ञाप्य धनेश्वरन्ते जग्मुः कुरूणां प्रवरं विरोषाः। भीमञ्च तस्यां ददृशुर्नलिन्यां यथोपजोषं विहरन्तमेकं।

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि सौगन्धिकाहरणे चतुःपञ्चाशदधिकशततमोऽध्यायः॥ १५४॥

॥ वैशम्पायन उवाच॥ ततस्तानि महार्हाणि दिव्यानि भरतर्षभ। बहूनि बहुरूपाणि विरजांसि समाददे। ११२९५

ततो वायुर्महाञ्छीघ्रो नीचैः शर्करकर्षणः। प्रादुरासीत् खरस्पर्शः संग्राममभिचोदयन्।

पपात महती चोल्का सनिर्घाता महाभया। निष्प्रभश्चाभवत् सूर्य्यश्छन्नरश्मिस्तमोवृतः।

निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते। चचाल पृथिवी चापि पांशुवर्षं पपात च।

सलोहिता दिशश्चासन् खरवाचो मृगद्विजाः। तमोवृतमभूत् सर्व्वं न प्राज्ञायत किञ्चन।

अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे। तदद्भुतमभिप्रेक्ष्य धर्म्मपुत्त्रो युधिष्ठिरः। ११३००

उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति। सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्म्मदाः।

यथा रूपाणि पश्यामि स्वभ्यग्रो नः पराक्रमः। एवमुक्त्वा ततो राजा वीक्षाञ्चक्रे समन्ततः।

अपश्यमानो भीमन्तु धर्म्मपुत्त्रो युधिष्ठिरः। ततः कृष्णां यमौ चापि समीपस्थावरिन्दमः।

पप्रच्छ भ्रातरं भीमं भीमकर्म्माणमाहवे। कच्चित् स भीमः पाञ्चालि किञ्चित् कृत्यञ्चिकीर्षति।

कृतवानपि वा वीरः साहसं साहसप्रियः। इमे ह्यकस्मादुत्पाता महासमरदर्शनाः। ११३०५

दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः। तं तथा वादिनं कृष्णा प्रत्युवाच मनस्विनी।

प्रिया प्रियचिकीर्षन्ती महिषी चारुहासिनी॥ द्रौपद्युवाच॥ यत्तत् सौगन्धिकं राजन्नाहृतं मातरिश्वना।

तन्मया भीमसेनस्य प्रीतयाऽद्योपपादितं। अपि चोक्तो मया वीरो यदि पश्येर्बहून्यपि।

तानि सर्व्वाण्युपादाय शीघ्रमागम्यतामिति। स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः।

प्रागुदीचीं दिशं राजंस्तान्याहर्त्तुमितो गतः। उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत्। ११३१०

गच्छाम सहितास्तूर्णं येन यातो वृकोदरः। वहन्तु राक्षसा विप्रान् यथा श्रान्तान् यथा कृशान्।

त्वमप्यमरसङ्काश वह कृष्णां घटोत्कच। व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः।

चिरञ्च तस्य कालोऽयं स च वायुसमो जवे। तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने।

उत्पतेदपि चाकाशं निपतेच्च यथेच्छकं। तमन्वियाम भवतां प्रभावाद्रजनीचराः।

पुरा स नापराध्नोति सिद्धानां ब्रह्मवादिनां। तथेत्युक्त्वा तु ते सर्व्वे हैडिम्बप्रमुखास्तदा। ११३१५

उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ। आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः।

लोमशेनैव सहिताः प्रययुः प्रीतमानसाः। ते सर्व्वे त्वरिता गत्वा ददृशुः शुभकाननां।

श्रुत्वा तु दिव्यामाकाशाद्वाचं सर्व्वे विसिस्मियुः। ऋषीणां ब्राह्मणानाञ्च पार्थिवानां विशेषतः।
श्रुत्वा तन्महदाश्चर्य्यं द्विजो धौम्योऽब्रवीत्तदा। न शक्यमुत्तरं गन्तुमेवं भवतु भारत।
ततो युधिष्ठिरो राजा प्रतिजग्राह तद्वचः। प्रत्यागम्य पुनस्तत्तु नरनारायणाश्रमं।
भीमसेनादिभिः सर्व्वैर्भ्रातृभिः परिवारितः। पाञ्चाल्या ब्राह्मणैश्चैव न्यवसन्त सुखं तदा। ११४५०

इति श्रीमहाभारते आरण्यपर्व्वणि तीर्थयात्रापर्व्वणि नरनारायणाश्रमागमने षट्पञ्चाशदधिकशततमोऽध्यायः ॥ समाप्तञ्च तीर्थयात्रापर्व्व ॥ १५६ ॥

## ॥ अथ जटासुरवधपर्व्व ॥ ८ ॥

॥ वैशम्पायन उवाच ॥ ततस्तान् परिविश्वस्तान् वसतस्तत्र पाण्डवान्। पर्व्वतेन्द्रे द्विजैः सार्द्धं पार्थागमनकाङ्क्षया।
गतेषु तेषु रक्षःसु भीमसेनात्मजेऽपि च। रहितान् भीमसेनेन कदाचित्तान् यदृच्छया।
जहार धर्म्मराजानं यमौ कृष्णाञ्च राक्षसः। ब्राह्मणो मन्त्रकुशलः सर्व्वशास्त्रविदुत्तमः।
इति ब्रुवन् पाण्डवेयान् पर्य्युपास्ते स्म नित्यदा। परीक्षमाणः पार्थानां कलापानि धनूंषि च।
अन्तरं सम्परिप्रेप्सुर्द्रौपद्या हरणं प्रति। दुष्टात्मा पापबुद्धिः स नाम्ना ख्यातो जटासुरः। ११४५५
पोषणं तस्य राजेन्द्र चक्रे पाण्डवनन्दनः। बुबुधे न च तं पापं भस्मच्छन्नमिवानलं।
स भीमसेने निष्क्रान्ते मृगयार्थमरिन्दम। घटोत्कचं सानुचरं दृष्ट्वा विद्रुतं दिशः।
लोमशप्रभृतींस्तांस्तु महर्षींश्च समाहितान्। स्नातुं विनिर्गतान् दृष्ट्वा पुष्पार्थञ्च तपोधनान्।
रूपमन्यत् समास्थाय विकृतं भैरवं महत्। गृहीत्वा सर्व्वशस्त्राणि द्रौपदीं परिगृह्य च।
प्रातिष्ठत स दुष्टात्मा त्रीन् गृहीत्वा च पाण्डवान्। सहदेवस्तु यत्नेन ततोऽपक्रम्य पाण्डवः। ११४६०
विक्रम्य कौशिकं खड्गं मोक्षयित्वा ग्रहं रिपोः। आक्रन्दद्भीमसेनं वै येन यातो महाबलः।
तमब्रवीद्धर्म्मराजो ह्रियमाणो युधिष्ठिरः। धर्म्मस्ते हीयते मूढ न तत्त्वं समवेक्षसे।
येऽन्ये केचिन्मनुष्येषु तिर्य्यग्योनिगताश्च ये। धर्म्मं ते समवेक्षन्ते रक्षांसि च विशेषतः।
धर्म्मस्य राक्षसा मूलं धर्म्मं ते विदुरुत्तमं। एतत् परीक्ष्य सर्व्वं त्वं समीपे स्थातुमर्हसि।
देवाश्च ऋषयः सिद्धाः पितरश्चापि राक्षस। गन्धर्व्वोरगरक्षांसि वयांसि पशवस्तथा। ११४६५
तिर्य्यग्योनिगताश्चैव अपि कीटपिपीलिकाः। मनुष्यानुपजीवन्ति ततस्त्वमपि जीवसि।
समृद्ध्या ह्यस्य लोकस्य लोको युष्माकमृध्यति। इमन्तु लोकं शोचन्तमनुशोचन्ति देवताः।
पूज्यमानाश्च वर्द्धन्ते हव्यकव्यैर्यथाविधि। वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस।
राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतः सुखं। न च राजाऽवमन्तव्यो रक्षसा जात्वनागसि।
अणुरप्यपचारश्च नास्त्यस्माकं नराशन। विघसाशान् यथाशक्त्या कुर्म्महे देवतादिषु। ११४७०
गुरूंश्च ब्राह्मणांश्चैव प्रणामप्रवणाः सदा। द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित्।
यथाश्रयाणि भुञ्जीत यत्र च स्यात् प्रतिश्रयः। स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः।

भुक्त्वा चान्नानि दुष्टात्मन् कथमस्मान् जिहीर्षसि। एवमेव वृथाचारो वृथावृद्धो वृथामतिः।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि। अथ चेद्दुष्टबुद्धिस्त्वं सर्व्वैर्धर्म्मैर्विवर्ज्जितः।
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर। अथ चेत्त्वमविज्ञानादिदं कर्म्म करिष्यसि। ११४७५
अधर्म्मञ्चाप्यकीर्त्तिञ्च लोके प्राप्स्यसि केवलं। एतामद्य परामृश्य स्त्रियं राक्षस मानुषीं।
विषमेतत् समालोड्य कुम्भेन प्राशितं त्वया। ततो युधिष्ठिरस्तस्य गुरुकः समपद्यत।
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत्। तथाऽब्रवीद् द्रौपदीञ्च नकुलञ्च युधिष्ठिरः।
माभैष्ट राक्षसान्मूढाद्गतिरस्य मया हृता। नातिदूरे महाबाहुर्भविता पवनात्मजः।
अस्मिन् मुहूर्त्ते संप्राप्ते न भविष्यति राक्षसः। सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतनं। ११४८०
उवाच वचनं राजन् कुन्तीपुत्रं युधिष्ठिरं। राजन् किं नाम तत्क्षत्रं क्षत्रियस्यास्त्यतोऽधिकं।
यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रून् जयेत वा। एष चास्मान् वयञ्चैनं युध्यमानाः परन्तप।
सूदयेमं महाबाहो देशकालो ह्ययं नृप। क्षत्रधर्म्मस्य संप्राप्तः कालः सत्यपराक्रम।
जयन्तो हन्यमाना वा प्राप्नुमर्हाम सद्गतिं। राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि।
नाहं ब्रूयां पुनर्ज्जातु क्षत्रियोऽस्मीति भारत। भोभो राक्षस तिष्ठस्व सहदेवोऽस्मि पाण्डवः। ११४८५
हत्वा वा मां नयस्वैनां हतो वाऽद्येह स्वप्स्यसि। तथा ब्रुवति माद्रेये भीमसेनो यदृच्छया।
प्रत्यदृश्यत गदाहस्तः सवज्र इव वासवः। सोऽपश्यद्भ्रातरौ तत्र द्रौपदीञ्च यशस्विनीं।
क्षितिस्थं सहदेवञ्च क्षिपन्तं राक्षसं तथा। मार्गाच्च रक्षः संमूढं कालोपहतचेतसं।
भ्रमन्तं तत्र तत्रैव दैवेन विनिवारितं। भ्रातॄंस्तान् ह्रियतो दृष्ट्वा द्रौपदीञ्च महाबलः।
क्रोधमाहारयद्भीमो राक्षसञ्चेदमब्रवीत्। विज्ञातोऽसि मया पूर्व्वं पाप शस्त्रपरीक्षणे। ११४९०
आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा। ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियं।
प्रियेषु रममाणं त्वां न चैवाप्रियकारिणं। अतिथिं ब्रह्मरूपञ्च कथं हन्यामनागसं।
राक्षसं जानमानोऽपि यो हन्यान्नरकं व्रजेत्। अपक्वस्य च कालेन वधस्तव न विद्यते।
नूनमद्यासि संपक्वो यथा ते मतिरीदृशी। दत्ता कृष्णापहरणे कालेनाद्भुतकर्म्मणा।
बडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः। मत्स्योऽम्भसीव स्यूतास्यः कथमद्य भविष्यसि। ११४९५
यञ्चासि प्रस्थितो देशं मनःपूर्व्वं गतञ्च ते। न तं गन्ताऽसि गन्ताऽसि मार्गं बकहिडिम्बयोः।
एवमुक्तस्तु भीमेन राक्षसः कालचोदितः। भीत उत्सृज्य तान् सर्व्वान् युद्धाय समुपस्थितः।
अब्रवीच्च पुनर्भीमं रोषात् प्रस्फुरिताधरः। न मे मूढा दिशः पाप त्वदर्थं मे विलम्बितं।
श्रुता मे राक्षसा ये च त्वया विनिहता रणे। तेषामद्य करिष्यामि तवास्रेणोदकक्रियां।
एवमुक्तस्ततो भीमः सृक्किणी परिसंलिहन्। स्मयमान इव क्रोधात् साक्षात् कालान्तकोपमः। ११५००
बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसं। राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितं।
मुहुर्मुहुर्व्याददानः सृक्किणी परिसंलिहन्। अभिदुद्राव संरब्धो बलिर्व्वज्रधरं यथा।

वर्त्तमाने तदा ताभ्यां बाहुयुद्धे सुदारुणे । माद्रीपुत्रावभिक्रुद्धावुभावप्यभ्यधावतां ।
न्यवारयत्तौ प्रहसन् कुन्तीपुत्त्रो वृकोदरः । शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ।
आत्मना भ्रातृभिश्चैव धर्म्मेण सुकृतेन च । इष्टेन च शपे राजन् सूदयिष्यामि राक्षसं । ११५०५
इत्येवमुक्त्वा तौ वीरौ स्पर्द्धमानौ परस्परं । बाहुभ्यां समसज्जेतामुभौ रक्षोवृकोदरौ ।
तयोरासीत्सम्प्रहारः क्रुद्धयोर्भीमरक्षसोः । अमृष्यमाणयोः संख्ये देवदानवयोरिव ।
आरुज्यारुज्य तौ वृक्षानन्योन्यमभिजघ्नतुः । जीमूताविव घर्म्मान्ते विनदन्तौ महाबलौ ।
बभञ्जतुर्महावृक्षानूरुभिर्बलिनां वरौ । अन्योन्येनाभिसंरब्धौ परस्परवधैषिणौ ।
तद्वृक्षयुद्धमभवन्महीरुहविनाशनं । वालिसुग्रीवयोर्भ्रात्रोः पुरा स्त्रीकाङ्क्षिणोर्यथा । ११५१०
आविध्याविध्य तौ वृक्षान्मुहूर्त्तमितरेतरं । ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ।
तस्मिन् देशे यदा वृक्षाः सर्व्व एव निपातिताः । पुञ्जीकृताश्च शतशः परस्परवधेप्सया ।
ततः शिलाः समादाय मुहूर्त्तमिव भारत । महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ।
शिलाभिरुग्ररूपाभिर्बृहतीभिः परस्परं । वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ।
अभिद्रुत्य तु भूयस्तावन्योन्यं बलदर्पितौ । भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव । ११५१५
मुष्टिभिश्च महाघोरैरन्योन्यमभिजघ्नतुः । ततः कटकटाशब्दो बभूव सुमहात्मनोः ।
ततः संहत्य मुष्टिन्तु पञ्चशीर्षमिवोरगं । वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधरां ।
ततः श्रान्तन्तु तद्रक्षो भीमसेनभुजाहतं । सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्त्तत ।
तत एनं महाबाहुर्बाहुभ्याममरोपमः । समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ।
तस्य गात्राणि सर्व्वाणि चूर्णयामास पाण्डवः । अरत्निना चाभिहत्य शिरः कायादहारत् । ११५२०
सन्दष्टौष्ठं विवृत्ताक्षं फलं वृन्तादिव च्युतं । जटासुरस्य तु शिरो भीमसेनबलाहृतं ।
पपात रुधिरादिग्धं सन्दष्टदशनच्छदं । तं निहत्य महेष्वासो युधिष्ठिरमुपागमत् ।
स्तूयमानो द्विजाग्र्यैस्तु मरुद्भिरिव वासवः ।

इति श्रीमहाभारते आरण्यपर्व्वणि जटासुरवधपर्व्वणि जटासुरवधो नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ समाप्तञ्च जटासुरवधपर्व्व ॥ १५७ ॥

## ॥ अथ यक्षयुद्धपर्व्व । ९ ॥

॥ वैशम्पायन उवाच ॥ निहते राक्षसे तस्मिन् पुनर्नारायणाश्रमं । अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः ।
स समानीय तान् सर्व्वान् भ्रातॄनित्यब्रवीद्वचः । द्रौपद्या सहितान् काले संस्मरन् भ्रातरं जयं । ११५२५
समाश्चतस्रोऽभिगताः शिवेन चरतां वने । कृतोद्देशश्च बीभत्सुः पञ्चमीमभितः समां ।
प्राप्य पर्व्वतराजानं श्वेतं शिखरिणां वरं । पुष्पितैर्द्रुमषण्डैश्च मत्तकोकिलषट्पदैः ।
मयूरैश्चातकैश्चापि नित्योत्सवविभूषितं । व्याघ्रैर्वराहैर्महिषैर्गवयैर्हरिणैस्तथा ।

श्वापदैर्व्यालरूपैश्च रुरुभिश्च निषेवितं । फुल्लैः सहस्रपत्रैश्च शतपत्रैस्तथोत्पलैः ।
प्रफुल्लैः कमलैश्चैव तथा नीलोत्पलैरपि । महापुण्यं पवित्रञ्च सुरासुरनिषेवितं । ११५३०
तत्रापि च कृतोद्देशः समागमदिदृक्षुभिः । कृतश्च समयस्तेन पार्थेनामिततेजसा ।
पञ्चवर्षाणि वत्स्यामि विद्यार्थीति पुरा मयि । अत्र गाण्डीवधन्वानमवाप्तास्त्रमरिन्दमं ।
देवलोकादिमं लोकं द्रच्यामः पुनरागतं । इत्युक्ता ब्राह्मणान् सर्व्वानामन्त्रयत पाण्डवः ।
कारणञ्चैव तत्तेषामाचचक्षे तपस्विनां । तानुग्रतपसः प्रीतान् कृत्वा पार्थाः प्रदक्षिणं ।
ब्राह्मणास्तेऽन्वमोदन्त शिवेन कुशलेन च । सुखोदर्कमिदं क्लेशमचिराद्भरतर्षभ । ११५३५
क्षत्रधर्म्मेण धर्म्मज्ञ तीर्त्वा गां पालयिष्यसि । तत्तु राजा वचस्तेषां प्रतिगृह्य तपस्विनां ।
प्रतस्थे सह विप्रैस्तैर्भ्रातृभिश्च परन्तपः । राक्षसैरनुयातो वै लोमशेनाभिरक्षितः ।
क्वचित् पद्भ्यां ततो ऽगच्छद्राक्षसैरुह्यते क्वचित् । तत्र तत्र महातेजा भ्रातृभिः सह सुव्रतः ।
ततो युधिष्ठिरो राजा बहून् क्लेशान् विचिन्तयन् । सिंहव्याघ्रगजाकीर्णामुदीचीं प्रययौ दिशं ।
अवेक्षमाणः कैलासं मैनाकञ्चैव पर्व्वतं । गन्धमादनपादांश्च श्वेतञ्चापि शिलोच्चयं । ११५४०
उपर्य्युपरि शैलस्य बह्वीश्च सरितः शिवाः । पृष्ठं हिमवतः पुण्यं ययौ सप्तदशेऽहनि ।
ददृशुः पाण्डवा राजन् गन्धमादनमन्तिकात् । पृष्ठे हिमवतः पुण्ये नानाद्रुमलतावृते ।
सलिलावर्त्तसञ्जातैः पुष्पितैश्च महीरुहैः । समावृतं पुण्यतममाश्रमं वृषपर्व्वणः ।
तमुपागम्य राजर्षिं धर्म्मात्मानमरिन्दमाः । पाण्डवा वृषपर्व्वाणमवन्दन्त गतक्लमाः ।
अभ्यनन्दत राजर्षिः पुत्त्रवद्भरतर्षभ । पूजितास्त्रावसंस्तत्र सप्तरात्रमरिन्दमाः । ११५४५
अष्टमेऽहनि संप्राप्ते तमृषिं लोकविश्रुतं । आमन्त्र्य वृषपर्व्वाणं प्रस्थानं प्रत्यरोचयन् ।
एकैकशश्च तान् विप्रान्निवेद्य वृषपर्व्वणि । न्यासभूतान् यथाकालं बन्धूनिव सुसत्कृतान् ।
पारिवर्हञ्च तं शेषं परिदाय महात्मने । ततस्ते यज्ञपात्राणि रत्नान्याभरणानि च ।
न्यदधुः पाण्डवा राजन्नाश्रमे वृषपर्व्वणः । अतीतानागते विद्वान् कुशलः सर्व्वधर्म्मवित् ।
अन्वशासत् स धर्म्मज्ञः पुत्त्रवद्भरतर्षभान् । तेऽनुज्ञाता महात्मानः प्रययुर्द्दिशमुत्तरां । ११५५०
तान् प्रस्थितानभ्यगच्छ वृषपर्व्वा महामतिः । उपन्यस्य महातेजा विप्रेभ्यः पाण्डवांस्तदा ।
अनुसंसार्य्य कौन्तेयानाशीर्भिरभिनन्द्य च । वृषपर्व्वा निववृते पन्थानमुपदिश्य च ।
नानामृगगणैर्जुष्टं कौन्तेयः सत्यविक्रमः । पदातिर्भ्रातृभिः सार्द्धं प्रातिष्ठत युधिष्ठिरः ।
नानाद्रुमनिरोधेषु वसन्तः शैलसानुषु । पर्व्वतं विविशुः श्वेतं चतुर्थेऽहनि पाण्डवाः ।
महाभ्रघनसङ्काशं सलिलोपहितं शुभं । मणिकाञ्चनरम्यस्य शिलानाञ्च समुच्चयं । ११५५५
ते समासाद्य पन्थानं यथोक्तं वृषपर्व्वणा । अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान् ।
उपर्य्युपरि शैलस्य गुहाः परमदुर्गमाः । सुदुर्गमांस्ते सुबहून् सुखेनैवाभिचक्रमुः ।
धौम्यः कृष्णा च पार्थाश्च लोमशश्च महानृषिः । अगच्छन् सहितास्तत्र न कश्चिदवहीयते ।

ते मृगद्विजसंघुष्टं नानाद्रुमलतायुतं । शाखामृगगणैश्चैव सेवितं सुमनोरमं ।
पुण्यं पद्मसरोयुक्तं सपल्वलमहावनं । अपश्यन् पार्थिवा राजन् शाखवन्तं महागिरिं । ११५६०
ततः किम्पुरुषावासं सिद्धचारणसेवितं । ददृशुर्हृष्टरोमाणः पर्व्वतं गन्धमादनं ।
विद्याधरानुचरितं किन्नरीभिस्तथैव च । गजसिंहसमावासं सिंहव्याघ्रगणायुतं ।
शरभोन्नादसंयुष्टं नानामृगनिषेवितं । ते गन्धमादनवनं तन्नन्दनवनोपमं ।
मुदिताः पाण्डुतनया मनोहृदयनन्दनं । विविशुः क्रमशो वीराः अरण्यं शुभकाननं ।
द्रौपदीसहिता वीरास्तैश्च विप्रैर्महात्मभिः । शृण्वन्तः प्रीतिजननान् वल्गून्मदकलान् शुभान् । ११५६५
श्रोत्ररम्यान् सुमधुरान् शब्दान् खगमुखेरितान् । सर्व्वर्त्तुफलभाराढ्यान् सर्व्वर्त्तुकुसुमोज्ज्वलान्
पश्यन्तः पादपांश्चापि फलभारावनामितान् । आम्रानाम्रातकान् भव्यान् नारिकेलान् सतिन्दुकान् ।
मुञ्जातकांस्तथा जीरान् दाडिमान् वीजपूरकान् । पनसान् लकुचान् मोचान् खर्जूरानम्लवेतसान् ।
पारावतांस्तथा क्षौद्रान् नीपांश्चापि मनोरमान् । बिल्वान् कपित्थान् जम्बूंश्च काश्मरीर्बदरीस्तथा ।
प्लक्षानुदुम्बरवटानश्वत्थान् क्षीरिकांस्तथा । भल्लातकानामलकीर्हरीतकविभीतकान् । ११५७०
इङ्गुदान् करमर्दांश्च तिन्दुकांश्च महाफलान् । एतानन्यांश्च विविधान् गन्धमादनसानुषु ।
फलैरमृतकल्पैस्तानाचितान् स्वादुभिस्तरून् । तथैव चम्पकाशोकान् केतकान् बकुलांस्तथा ।
पुन्नागान् सप्तपर्णांश्च कर्णिकारान् सकेतकान् । पाटलाः कुटजान् रम्यान् मन्दारेन्दीवरांस्तथा ।
पारिजातान् कोविदारान् देवदारुद्रुमांस्तथा । शालांस्तालांस्तमालांश्च पिप्पलान् हिङ्गुकांस्तथा ।
शाल्मलीः किंशुकाशोकान् शिंशपाः सरलांस्तथा । चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः । ११५७५
कोकिलैः कलविङ्कैश्च हारीतैर्जीवजीवकैः । प्रियकैश्चातकैश्चैव तथाऽन्यैर्विविधैः खगैः ।
श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितान् । सरांसि च मनोज्ञानि समन्ताज्जलचारिभिः ।
कुमुदैः पुण्डरीकैश्च तथा कोकनदोत्पलैः । कह्लारैः कमलैश्चैव आचितानि समन्ततः ।
कादम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः । कारण्डवैः प्लवैर्हंसैर्बकैर्मद्गुभिरेव च ।
एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः । हृष्टैस्तथा तामरसरसासवमदालसैः । ११५८०
पद्मोदरच्युतरजःकिञ्जल्कारुणरञ्जितैः । मधुरस्वरैर्मधुकरैर्विरुतान् कमलाकरान् ।
अपश्यंस्ते नरव्याघ्रा गन्धमादनसानुषु । तथैव पद्मषण्डैश्च मण्डितांश्च समन्ततः ।
शिखण्डिनीभिः सहितान् लतामण्डपकेषु च । मेघतूर्य्यरवोद्दाममदनाकुलितान् भृशं ।
कृत्वैव केकामधुरं सङ्गीतं मधुरस्वरं । चित्रान् कलापान् विस्तीर्य्य सविलासान् मदालसान् ।
मयूरान् ददृशुश्चित्रान् नृत्यतो वनलासकान् । कांश्चित् प्रियाभिः सहितान् रममाणान् कलापिनः । ११५८५
वल्लीलतासङ्कटेषु कुटजेषु स्थितांस्तथा । कांश्चिच्च कुटजावासान् विटपेषूत्कटानिव ।
कलापरुचिराटोपनिचितान्मुकुटानिव । विवरेषु तरूणाञ्च रुचिरं ददृशुश्च ते ।
सिन्धुवारांस्तथोदारान् मन्मथस्येव तोमरान् । सुवर्णवर्णकुसुमान् गिरीणां शिखरेषु च ।

कर्णिकारान् विकसितान् कर्णपूरानिवोत्तमान्। तथाऽपश्यन् कुरुवकान् वनराजिषु पुष्पितान्।
कामवश्योत्सुककरान् कामस्येव शरोत्करान्। तथैव वनराजीनामुदारा रचिता इव। ११५९०
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलका इव। तथाऽनङ्गशराकारान् सहकारान् मनोरमान्।
अपश्यन् भ्रमरारावान् मञ्जरीभिर्विराजितान्। हिरण्यसदृशैः पुष्पैर्दावाग्निसदृशैरपि।
लोहितैरञ्जनाभैश्च वैदूर्य्यसदृशैरपि। अतीव वृक्षा राजन्ते पुष्पिताः शैलसानुषु।
तथा शालांस्तमालांश्च पाटलान् बकुलानपि। माला इव समासक्ताः शैलानां शिखरेषु च।
विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः। कलहंसैरुपेतानि सारसाभिरुतानि च। ११५९५
सरांसि बहुशः पार्था पश्यन्तः शैलसानुषु। पद्मोत्पलविमिश्राणि सुखशीतजलानि च।
एवं क्रमेण ते वीरा वीक्षमाणाः समन्ततः। गन्धवन्ति च माल्यानि रसवन्ति फलानि च।
सरांसि च मनोज्ञानि वृक्षांश्चातिमनोरमान्। विविशुः पाण्डवाः सर्व्वे विस्मयोत्फुल्ललोचनाः।
कमलोत्पलकह्लारपुण्डरीकसुगन्धिना। सेव्यमाना वने तस्मिन् सुखस्पर्शेन वायुना।
ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः। अहो भीमेदं भीम गन्धमादनकाननम्। ११६००
वने ह्यस्मिन् मनोरम्ये दिव्याः काननजा द्रुमाः। लताश्च विविधाकाराः पत्रपुष्पफलोपगाः।
भान्त्येते पुष्पविकचाः पुंस्कोकिलकुलाकुलाः। नात्र कण्टकिनः केचिन्नात्र विद्यन्त्यपुष्पिताः।
स्निग्धपत्रफला वृक्षा गन्धमादनसानुषु। भ्रमरारावमधुरा नलिनीः फुल्लपङ्कजाः।
विलोड्यमानाः पश्येमाः करिभिः सकरेणुभिः। पश्येमां नलिनीं चान्यां कमलोत्पलमालिनीं।
स्रग्धरां विग्रहवतीं साक्षाच्छ्रियमिवापरां। नानाकुसुमगन्धाढ्याः कस्तूरीकाननोत्तमे। ११६०५
उपगीयमाना भ्रमरैराजन्ते वनराजयः। पश्य भीम शुभान् देशान् देवाक्रीडान् समन्ततः।
अमानुषगतिं प्राप्ताः संसिद्धाः स्म वृकोदर। लताभिः पुष्पिताग्राभिः पुष्पिताः पादपोत्तमाः।
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु। शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनां।
नदतां शृणु निर्घोषं भीम पर्व्वतसानुषु। चकोराः शतपत्राश्च मत्तकोकिलशारिकाः।
पत्रिणः पुष्पितानेतान् संश्रयन्ति महाद्रुमान्। रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः। ११६१०
परस्परमुदीक्षन्ते बहवो जीवजीवकाः। हरितारुणवर्णानां शाद्वलानां समीपतः।
सारसाः प्रतिदृश्यन्ते शैलप्रस्रवणेष्वपि। वदन्ति मधुरा वाचः सर्व्वभूतमनोरमाः।
भृङ्गराजोपचक्राश्च लोहपृष्ठाः पतत्रिणः। चतुर्व्विषाणाः पद्माभाः कुञ्जराः सकरेणवः।
एते वैदूर्य्यवर्णाभं क्षोभयन्ति महत्सरः। बहुतालसमुत्सेधाः शैलशृङ्गपरिच्युताः।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्ति च। भास्कराभप्रभा भीमाः शारदाभ्रघनोपमाः। ११६१५
शोभयन्ति महाशैलं नानारजतधातवः। क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसन्निभाः।
धातवो हरितालस्य क्वचिद्धिङ्गुलकस्य च। मनःशिला गुहाश्चैव सन्ध्याभ्रनिकरोपमाः।
शोभयन्ति महाशैलं नानारजतधातवः। शशलोहितवर्णाभाः क्वचिद्गैरिकधातवः।

सिताऽसिताभ्रप्रतिमाः बालसूर्य्यसमप्रभाः। एते बहुविधाः शैलं शोभयन्ति महाप्रभाः।
गन्धर्व्वाः सह कान्ताभिर्य्यथोक्तं वृषपर्व्वणा। दृश्यन्ते शैलशृङ्गेषु पार्थ किम्पुरुषैः सह। ११९२०
गीतानां समतालानां तथा साम्नाञ्च निस्वनः। श्रूयते बहुधा भीम सर्व्वभूतमनोहरः।
महागङ्गामुदीक्षस्व पुण्यां देवनदीं शुभां। कलहंसगणैर्जुष्टामृषिकिन्नरसेवितां।
धातुभिश्च सरिद्भिश्च किन्नरैर्मृगपक्षिभिः। गन्धर्व्वैरप्सरोभिश्च काननैश्च मनोरमैः।
व्यालैश्च विविधाकारैः शतशीर्षैः समन्ततः। उपेतं पश्य कौन्तेय शैलराजमरिन्दम।
॥ वैशम्पायन उवाच ॥ ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमां। नातृप्यन् पर्व्वतेन्द्रस्य दर्शनेन परन्तपाः। ११९२५
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः। आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा।
ततस्ते तीव्रतपसं कृशं धमनिसन्ततं। पारगं सर्व्वधर्म्माणामार्ष्टिषेणमुपागमन्।
इति श्रीमहाभारते आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि गन्धमादनशोभादर्शनंनामाष्टपञ्चाशदधिकशततोऽध्यायः॥ १५८ ॥
॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्बिषं। अभ्यवादयत प्रीतः शिरसा नाम कीर्त्तयन्।
ततः कृष्णा च भीमश्च यमौ च सुतपस्विनौ। शिरोभिः प्राप्य राजर्षिं परिवार्य्योपतस्थिरे।
तथैव धौम्यो धर्म्मज्ञः पाण्डवानां पुरोहितः। यथान्यायमुपाक्रामत्तमृषिं संशितव्रतं। ११९३०
अन्वजानात् स धर्म्मज्ञो मुनिर्दिव्येन चक्षुषा। पाण्डोः पुत्त्रान् कुरुश्रेष्ठानास्यतामिति चाब्रवीत्।
कुरूणामृषभं प्राज्ञं पूजयित्वा महातपाः। सह भ्रातृभिरासीनं पर्य्यपृच्छदनामयं।
नानृते कुरुषे भावं कच्चिद्धर्म्मे प्रवर्त्तसे। मातापित्रोश्च ते वृत्तिः कच्चित् पार्थ न सीदति।
कच्चित्ते गुरवः सर्व्वे वृद्धा वैद्याश्च पूजिताः। कच्चिन्न कुरुषे भावं पार्थ पापेषु कर्म्मसु।
सुकृतं प्रतिकर्त्तुञ्च कच्चिद्धातुञ्च दुष्कृतं। यथान्यायं कुरुश्रेष्ठ जानासि न विकत्थसे। ११९३५
यथार्हं मानिताः कच्चित्त्वया नन्दन्ति साधवः। वनेष्वपि वसन् कच्चिद्धर्म्ममेवानुवर्त्तसे।
कच्चिद्धौम्यस्त्वदाचारैर्न पार्थ परितप्यते। दानधर्म्मतपःशौचैरार्ज्जवेन तितिक्षया।
पितृपैतामहं वृत्तं कच्चित्पार्थानुवर्त्तसे। कच्चिद्राजर्षियातेन पथा गच्छस्यरिन्दम।
स्वे स्वे किल कुले जाते पुत्त्रे नप्तरि वा पुनः। पितरः पितृलोकस्थाः शोचन्ति च हसन्ति च।
किन्तस्य दुष्कृतेऽस्माभिः सम्प्राप्तव्यं भविष्यति। किञ्चास्य सुकृतेऽस्माभिः प्राप्तव्यमिति शोभनं। ११९४०
पिता माता तथैवाग्निर्गुरुरात्मा च पञ्चमः। यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ।
॥ युधिष्ठिर उवाच ॥ भगवन्नार्य्यमाहैतद्यथावद्धर्म्मनिश्चयं। यथाशक्ति यथान्यायं क्रियते विधिवन्मया।
॥ आर्ष्टिषेण उवाच ॥ अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा। जुषन्ते पर्व्वतश्रेष्ठमृषयः पर्व्वसन्धिषु।
कामिनः सह कान्ताभिः परस्परमनुव्रताः। दृश्यन्ते शैलशृङ्गस्था यथा किम्पुरुषा नृप।
अरजांसि च वासांसि वसानाः कौशिकानि च। दृश्यन्ते बहवः पार्थ गन्धर्व्वाप्सरसां गणाः। ११९४५
विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः। महोरगगणाश्चैव सुपर्णाश्चोरगादयः।
अस्य चोपरि शैलस्य श्रूयते पर्व्वसन्धिषु। भेरीपणवशङ्खानां मृदङ्गानाञ्च निःस्वनः।

इहस्थैरेव तत् सर्व्वं श्रोतव्यं भरतर्षभाः। न कार्य्या वः कथञ्चित्स्यात्तत्राभिगमने मतिः।
नचाप्यतः परं शक्यं गन्तुं भरतसत्तमाः। विहारो यत्र देवानाममानुषगतिस्तु सा।
ईषच्चपलकर्म्माणं मनुष्यमिह भारत। द्विषन्ति सर्व्वभूतानि ताडयन्ति च राक्षसाः। ११६५०
अस्यातिक्रम्य शिखरं कैलासस्य युधिष्ठिर। गतिः परमसिद्धानां देवर्षीणां प्रकाशते।
चापलादिह गच्छन्तं पार्थ यानमतः परं। अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन।
अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः। इह वैश्रवणस्तात पर्व्वसन्धिषु दृश्यते।
शिखरस्थं समासीनमधिपं यक्षरक्षसां। प्रेक्षन्ते सर्व्वभूतानि भानुमन्तमिवोदितं।
देवदानवसिद्धानां तथा वैश्रवणस्य च। गिरेः शिखरमुद्यानमिदं भरतसत्तम। ११६५५
उपासीनस्य धनदं तुम्बुरोः पर्व्वसन्धिषु। गीतसामस्वनस्तात श्रूयते गन्धमादने।
एतदेवंविधञ्चित्रमिह तात युधिष्ठिर। प्रेक्षन्ते सर्व्वभूतानि बहुशः पर्व्वसन्धिषु।
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च। वसध्वं पाण्डवश्रेष्ठा यावदर्ज्जुनदर्शनात्।
न तात चपलैर्भाव्यमिह प्राप्तैः कथञ्चन। उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च।
ततः शस्त्रजितां तात पृथिवीं पालयिष्यसि। ११६६०

इति श्रीमहाभारते आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि आर्ष्टिषेणयुधिष्ठिरसंवादे एकोनषष्ट्यधिकशततमोऽध्यायः॥ १५९॥

॥ जनमेजय उवाच॥ आर्ष्टिषेणाश्रमे तस्मिन् मम पूर्व्वपितामहाः। पाण्डोः पुत्रा महात्मानः सर्व्वे दिव्यपराक्रमाः।
कियन्तं कालमवसन् पर्व्वते गन्धमादने। किञ्च चक्रुर्महावीर्य्याः सर्व्वेऽतिबलपौरुषाः।
कानि चाभ्यवहार्य्याणि तत्र तेषां महात्मनां। वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम।
विस्तरेण च मे शंस भीमसेनपराक्रमं। यद्यच्चक्रे महाबाहुस्तस्मिन् हैमवते गिरौ।
नखल्वासीत् पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम। कच्चित् समागमस्तेषामासीद्वैश्रवणेन च। ११६६५
तत्र ह्यायाति धनद आर्ष्टिषेणो यथाऽब्रवीत्। एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन।
नहि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितं॥ वैशम्पायन उवाच॥ एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः।
शासनं सततञ्चक्रुस्तथैव भरतर्षभाः। भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च।
शुद्धबाणहतानाञ्च मृगाणां पिशितान्यपि। मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च।
एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभ। तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात्। ११६७०
शृण्वतां लोमशोक्तानि वाक्यानि विविधान्युत। कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः।
राक्षसैः सह सर्व्वैश्च पूर्व्वमेव गतः प्रभो। आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनां।
अगच्छन् बहवो मासाः पश्यतां महदद्भुतं। तैस्तत्र विहरद्भिश्च रममाणैश्च पाण्डवैः।
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा। आजग्मुः पाण्डवान् द्रष्टुं शुद्धात्मानो यतव्रताः।
ते तैः सह कथाश्चक्रुर्द्दिव्यां भरतसत्तमाः। ततः कतिपयाहस्य महाह्रदनिवासिनं। ११६७५
ऋद्धिमन्तं महानागं सुपर्णः सहसाऽहरत्। प्राकम्पत महाशैलः प्रामृद्यन्त महाद्रुमाः।

ददृशुः सर्व्वभूतानि पाण्डवाश्च तदद्भुतं । ततः शैलोत्तमस्याग्रात् पाण्डवान् प्रति मारुतः ।
अवहत् सर्व्वमाल्यानि गन्धवन्ति शुभानि च । तत्र पुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः ।
ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी । भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ।
विविक्ते पर्व्वतोद्देशे सुखासीनं महाभुजं । सुपर्णानिलवेगेन श्वसनेन महाबलात् । ११६८०
पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ । प्रत्यक्षं सर्व्वभूतानां नदीमश्वरथां प्रति ।
खाण्डवे सत्यसन्धेन भ्रात्रा तव महात्मना । गन्धर्व्वोरगरक्षांसि वासवश्च निवारितः ।
हता मायाविनश्चोग्रा धनुः प्राप्तञ्च गाण्डिवं । तवापि सुमहत्तेजो महद्बाहुबलञ्च ते ।
अविषह्यमनाधृष्यं शक्रतुल्यबलोपमं । त्वद्बाहुबलवेगेन त्रासिताः सर्व्वराक्षसाः ।
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश । ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवं । ११६८५
व्यपेतभयसम्मोहाः पश्यन्तु सुहृदस्तव । एवं प्रणिहितं भीम चिरात् प्रभृति मे मनः ।
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलपालिता । ततः क्षिप्तमिवात्मानं द्रौपद्या स परन्तपः ।
नामृष्यत महाबाहुः प्रहारमिव सद्गवः । सिंहर्षभगतिः श्रीमानुदारकनकप्रभः ।
मनस्वी बलवान् दृप्तो मानी शूरश्च पाण्डवः । लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ।
सिंहदंष्ट्रो बृहत्स्कन्धः शालपोत इवोद्गतः । महात्मा चारुसर्व्वाङ्गः कम्बुग्रीवो महाभुजः । ११६९०
रुक्मपृष्ठं धनुः खड्गं तूणांश्चापि परामृशन् । स केसरीव चोत्सिक्तः प्रभिन्न इव वारणः ।
व्यपेतभयसम्मोहः शैलमभ्यपतद्बली । तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणं ।
ददृशुः सर्व्वभूतानि बाणकार्म्मुकधारिणं । द्रौपद्या वर्द्धयन् हर्षं गदामादाय पाण्डवः ।
व्यपेतभयसम्मोहः शैलराजं समाश्रितः । न ग्लानिर्न च कातर्य्यं न वैक्लव्यं न मत्सरः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः । तदेकायनमासाद्य विषमं भीमदर्शनं । ११६९५
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः । स किन्नरमहानागमुनिगन्धर्व्वराक्षसान् ।
हर्षयन् पर्व्वतस्याग्रमाससाद महाबलः । तत्र वैश्रवणावासं ददर्श भरतर्षभः ।
काञ्चनैः स्फाटिकैश्चैव वेश्मभिः समलङ्कृतं । प्राकारेण परिक्षिप्तं सौवर्णेन समन्ततः ।
सर्व्वरत्नद्युतिमता सर्व्वोद्यानवता तथा । शैलादभ्युच्छ्रयवता चयाट्टालकशोभिना ।
द्वारतोरणनिर्व्यूहध्वजसम्बाधशोभिना । विलासिनीभिरत्यर्थं नृत्यन्तीभिः समन्ततः । ११७००
वायुना धूयमानाभिः पताकाभिरलङ्कृतं । धनुष्कोटीमवष्टभ्य वक्रभावेन बाहुना ।
पश्यमानः स खेदेन द्रविणाधिपतेः पुरं । मोदयन् सर्व्वभूतानि गन्धमादनसम्भवः ।
सर्व्वगन्धवहस्तत्र मारुतः सुसुखो ववौ । चित्रा विविधवर्णाभाश्चित्रमञ्जरिधारिणः ।
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभिनः । रत्नजालपरिक्षिप्तं चित्रमाल्यविभूषितं ।
राक्षसाधिपतेः स्थानं ददृशे भरतर्षभः । गदाखड्गधनुष्पाणिः समभित्यक्तजीवितः । ११७०५
भीमसेनो महाबाहुस्तस्थौ गिरिरिवाचलः । ततः शङ्खमुपाध्मासीद्द्विषतां लोमहर्षणं ।

व्याघोषतलशब्देन कृत्वा भूतान्यमोहयत्। ततः प्रहृष्टरोमाणस्तं शब्दमभिदुद्रुवुः।
यक्षराक्षसगन्धर्व्वाः पाण्डवस्य समीपतः। गदापरिघनिस्त्रिंशशूलशक्तिपरश्वधाः।
प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः। ततः प्रववृते युद्धं तेषां तस्य च भारत।
तैः प्रयुक्तान्महामायैः शूलशक्तिपरश्वधान्। भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः। ११५१०
अन्तरीक्षगतानाञ्च भूमिष्ठानाञ्च गर्ज्जतां। शरैर्विव्याध गात्राणि राक्षसानां महाबलः।
सा लोहितमहावृष्टिरभ्यवर्षन्महाबलं। गदापरिघपाणीनां रक्षसां कायसम्भवा।
कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः। भीमबाहुबलोत्सृष्टैरायुधैर्यक्षरक्षसां।
विनिकृत्तानि दृश्यन्ते शरीराणि शिरांसि च। प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनं।
ददृशुः सर्व्वभूतानि सूर्य्यमभ्रगणैरिव। स रश्मिभिरिवादित्यः शरैररिनिघातिभिः। ११५१५
सर्व्वानार्च्छन्महाबाहुर्ब्बलवान् सत्यविक्रमः। अभितर्ज्जयमानाश्च रुवन्तश्च महारवान्।
न मोहं भीमसेने च ददृशुः सर्व्वराक्षसाः। यथा विक्षतसर्व्वाङ्गा भीमसेनभयार्द्दिताः।
भीममार्त्तस्वरञ्चक्रुर्व्विप्रकीर्णमहायुधाः। उत्सृज्य ते गदाशूलानसिशक्तिपरश्वधान्।
दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना। तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः।
सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः। प्रदर्शयन्नधीकारं पौरुषञ्च महाबलः। ११५२०
स तान् दृष्ट्वा परावृत्तान् स्मयमान इवाब्रवीत्। एकेन बहवः संख्ये मानुषेण पराजिताः।
प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरं। एवमाभाष्य तान् सर्व्वान् न्यवर्त्तत राक्षसः।
शक्तिशूलगदापाणिरभ्यधावत् स पाण्डवं। तमापतन्तं वेगेन प्रभिन्नमिव वारणं।
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनः समार्द्दयत्। मणिमानपि संक्रुद्धः प्रगृह्य महतीं गदां।
प्राहिणोद्भीमसेनाय परिगृह्य महाबलः। विद्युद्रूपां महाघोरामाकाशे महतीं गदां। ११५२५
शरैर्बहुभिरभ्यार्च्छद्भीमसेनः शिलाशितैः। प्रतिहत्यन्त ते सर्व्वे गदामासाद्य सायकाः।
न वेगं धारयामासुर्गदावेगस्य वेगिताः। गदायुद्धसमाचारं बुध्यमानः स वीर्य्यवान्।
व्यंसयामास तं तस्य प्रहारं भीमविक्रमः। ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीं।
तस्मिन्नेवान्तरे धीमान् प्रजहाराथ राक्षसः। सा भुजं भीमनिर्ह्रादा भित्त्वा भीमस्य दक्षिणं।
साग्निज्वाला महारौद्रा पपात सहसा भुवि। सोऽतिविद्धो महेष्वासः शक्त्याऽमितपराक्रमः। ११५३०
गदां जग्राह कौन्तेयः क्रोधपर्य्याकुलेक्षणः। रुक्मपट्टपिनद्धाङ्गां अपूर्व्वां भयवर्द्धिनीं।
प्रगृह्याथ नदन्भीमः शैक्यां सर्व्वायसीं गदां। तरसा चाभिदुद्राव मणिमन्तं महाबलं।
दीप्यमानं महाशूलं प्रगृह्य मणिमानपि। प्राहिणोद्भीमसेनाय वेगेन महता नदन्।
भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः। अभिदुद्राव तं हन्तुं गरुत्मानिव पन्नगं।
सोऽन्तरीक्षमवप्लुत्य विधूय सहसा गदां। प्रचिक्षेप महाबाहुर्न्निनद्य रणमूर्द्धनि। ११५३५
सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा। हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह।

तं राक्षसं भीमबलं भीमसेनेन पातितं। दहृशुः सर्व्वभूतानि सिंहेनेव गवाम्पतिं।
तं प्रेक्ष्य निहतं भूमौ हतशेषाः निशाचराः। भीममार्त्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति।
इति श्रीमहाभारते आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि मणिमद्वधो नामषष्ठ्यधिकशततोऽध्यायः॥ १६० ॥
॥ वैशम्पायन उवाच ॥ श्रुत्वा बहुविधैः शब्दैर्नाद्यमानां गिरेर्गुहां। अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि।
धौम्यः कृष्णा च विप्राश्च सर्व्वे च सुहृदस्तथा। भीमसेनमपश्यन्तः सर्व्वे विमनसोऽभवन्। ११०४०
द्रौपदीमार्ष्टिषेणाय सम्प्रधार्य्य महारथाः। सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा।
ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः। ददृशुस्ते महेष्वासा भीमसेनमरिन्दमाः।
स्फुरतश्च महाकायान् गतसत्त्वांश्च राक्षसान्। महाबलान् महासत्त्वान् भीमसेनेन पातितान्।
शुशुभे स महाबाहुर्गदाखड्गधनुर्द्धरः। निहत्य समरे सर्व्वान् दानवानिव मघवानिव।
ततस्ते भ्रातरं दृष्ट्वा परिष्वज्य महारथाः। तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमां। ११०४५
तैश्चतुर्भिर्महेष्वासैर्गिरिशृङ्गमशोभत। लोकपालैर्महाभागैर्दिवं देववरैरिव।
कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान्। भ्राता भ्रातरमासीनमब्रवीत् पृथिवीपतिः।
॥ युधिष्ठिर उवाच ॥ साहसाद्यदि वा मोहाद्भीम पापमिदं कृतं। नैतत्ते सदृशं वीर मुनेरिव मृषा वधः।
राजद्विष्टं न कर्त्तव्यमिति धर्म्मविदो विदुः। त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतं।
अर्थधर्म्मावनादृत्य यः पापे कुरुते मनः। कर्म्मणां पार्थ पापानां स फलं विन्दते ध्रुवं। ११०५०
पुनरेवं न कर्त्तव्यं मम चेदिच्छसि प्रियं॥ वैशम्पायन उवाच॥ एवमुक्त्वा स धर्म्मात्मा भ्राता भ्रातरमच्युतं।
अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः। विरराम महातेजास्तमेवार्थं विचिन्तयन्।
ततस्ते हतशिष्टा ये भीमसेनेन राक्षसाः। सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति।
ते जवेन महावेगाः प्राप्य वैश्रवणालयं। भीममार्त्तस्वरञ्चक्रुर्भीमसेनभयार्दिताः।
न्यस्तशस्त्रायुधाः क्लान्ताः शोणिताक्ततनुच्छदाः। प्रकीर्णमूर्द्धजा राजन् यक्षाधिपतिमब्रुवन्। ११०५५
गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः। राक्षसा निहताः सर्व्वे तव देव पुरःसराः।
प्रमृद्य तरसा शैलं मानुषेण धनेश्वर। एकेन सहिताः संख्ये रणे क्रोधवशा गणाः।
प्रवरा राक्षसेन्द्राणां यक्षाणाञ्च नराधिप। शेरते निहता देवगतसत्त्वाः परासवः।
लब्धशेषा वयं मुक्ता मणिमांस्ते सखा हतः। मानुषेण कृतं कर्म्म विधत्स्व यदनन्तरं।
एतच्छ्रुत्वा सुसंक्रुद्धः सर्व्वयक्षगणाधिपः। कोपसंरक्तनयनः कथमित्यब्रवीद्वचः। ११०६०
द्वितीयमपराध्यन्तं भीमं श्रुत्वा धनेश्वरः। चुक्रोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत्।
अथाभ्रघनसङ्काशं गिरिशृङ्गमिवोच्छ्रितं। रथं संयोजयामासुर्गन्धर्व्वैर्हेममालिभिः।
तस्य सर्व्वगुणोपेता विमलाक्षा हयोत्तमाः। तेजोबलगुणोपेता नानारत्नविभूषिताः।
शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः। हेषयामासुरन्योन्यं हेषितैर्विजयावहैः।
स तमास्थाय भगवान् राजराजो महारथं। प्रययौ देवगन्धर्व्वैः स्तूयमानो महाद्युतिः। ११०६५

त प्रयान्तं महात्मानं सर्व्वे यक्षा धनाधिपं । रक्ताक्षा हेमसङ्काशा महाकाया महाबलाः ।
सायुधा बद्धनिस्त्रिंशा यक्षा दशशतावराः । ते जवेन महावेगाः प्लवमाना विहायसा ।
गन्धमादनमाजग्मुः प्रकर्षन्त इवाम्बरं । तत् केशरिमहाजालं धनाधिपतिपालितं ।
कुवेरञ्च महात्मानं यक्षरक्षोगणावृतं । ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनं ।
कुवेरस्तु महासत्त्वान् पाण्डोः पुत्त्रान् महारथान् । आत्तकार्म्मुकनिस्त्रिंशान् दृष्ट्वा प्रीतोऽभवत्तदा । ११०००
देवकार्य्यं चिकीर्षन् स हृदयेन तुतोष ह । ते पक्षिण इवापेतुर्गिरिशृङ्गं महाजवाः ।
तस्थुस्तेषां समभ्याशे धनेश्वरपुरस्कृताः । ततस्तं हृष्टमनसं पाण्डवान् प्रति भारत ।
समीक्ष्य यक्षगन्धर्व्वा निर्व्विकारमवस्थिताः । पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुं ।
नकुलः सहदेवश्च धर्म्मपुत्त्रश्च धर्म्मवित् । अपराद्धमिवात्मानं मन्यमाना महारथाः ।
तस्थुः प्राञ्जलयः सर्व्वे परिवार्य्य धनेश्वरं । स ह्यासनवरं श्रीमत्पुष्पकं विश्वकर्म्मणा । ११००५
विहितं चित्रपर्य्यन्तमातिष्ठत धनाधिपः । तमासीनं महाकायाः शङ्कुकर्णा महाजवाः ।
उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः । शतशश्चापि गन्धर्व्वास्तथैवाप्सरसां गणाः ।
परिवार्य्योपतिष्ठन्त यथा देवाः शतक्रतुं । काञ्चनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभां ।
पाशखड्गधनुष्पाणिरुदैक्षत धनाधिपं । भीमसेनस्य न ग्लानिर्विक्षतस्यापि राक्षसैः ।
आसीत्तस्यामवस्थायां कुवेरमपि पश्यतः । आददानं शितान् वाणान् योद्धुकाममवस्थितं । ११०१०
दृष्ट्वा भीमं धर्म्मसुतमब्रवीन्नरवाहनः । विदुस्त्वां सर्व्वभूतानि पार्थ भूतहिते रतं ।
निर्भयश्चापि शैलाग्रे वस त्वं भ्रातृभिः सह । न च मन्युस्त्वया कार्य्यो भीमसेनस्य पाण्डव ।
कालेनैते हताः पूर्व्वं निमित्तमनुजस्तव । व्रीडा चात्र न कर्त्तव्या साहसं यदिदं कृतं ।
दृष्टश्चापि सुरैः पूर्व्वं विनाशो यक्षरक्षसां । न भीमसेने कोपो मे प्रीतोऽस्मि भरतर्षभ ।
कर्म्मणा भीमसेनस्य मम तुष्टिरभूत् पुरा ॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु राजानं भीमसेनमभाषत । ११०१५
नैतन्मनसि मे तात वर्त्तते कुरुसत्तम । यदिदं साहसं भीम कृष्णार्थे कृतवानसि ।
मामनादृत्य देवांश्च विनाशं यक्षरक्षसां । स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि ।
शापादस्मि विनिर्म्मुक्तो घोरादद्य वृकोदर । अहं पूर्व्वमगस्त्येन क्रुद्धेन परमर्षिणा ।
शप्तोऽपराधे कस्मिंश्चित्तस्यैषा निष्कृतिः कृता । दृष्टो हि मम संक्लेशः पुरा पाण्डवनन्दन ।
न तवात्रापराधोऽस्ति कथञ्चिदपि पाण्डव ॥ युधिष्ठिर उवाच ॥ कथं शप्तोऽसि भगवन्नगस्त्येन महात्मना । ११०२०
श्रोतुमिच्छाम्यहं देव तवैतच्छापकारणं । इदञ्चाश्चर्य्यभूतं मे यत्क्रोधात्तस्य धीमतः ।
तदैव त्वं न निर्दग्धः सबलः सपदानुगः ॥ धनेश्वर उवाच ॥ देवतानामभून्मन्त्रः कुशवत्यां नरेश्वर ।
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः । यक्षाणां घोररूपाणां विविधायुधधारिणां ।
अध्वन्यहमथापश्यमगस्त्यमृषिसत्तमं । उग्रं तपस्तप्यमानं यमुनातीरमाश्रितं ।
नानापक्षिगणाकीर्णे पुष्पितद्रुमशोभिते । तमूर्द्ध्वबाहुं दृष्ट्वैव सूर्य्यस्याभिमुखे स्थितं । ११०२५

तेजोराशिं दीप्यमानं ज्वालामालिनिवेष्टितं। राघवाभिजितः श्रीमानगस्त्यो मे सखा।
मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च पार्थिव। न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्द्धनि।
स कोपान्मामुवाचेदं दिशः सर्व्वा दहन्निव। मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव।
धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर। तस्मात् सहैभिः सैन्यैस्ते वधं प्राप्स्यति मानुषात्।
त्वञ्चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्येह दुर्म्मतिः। तमेव मानुषं दृष्ट्वा किल्बिषाद्विप्रमोक्ष्यसे। ११८००
सैन्यानान्तु तवैतेषां पुत्रपौत्रबलान्वितं। न शापं प्राप्स्यते घोरं तत्तवाज्ञां करिष्यति।
एष शापो मया प्राप्तः प्राक् तस्मादृषिसत्तमात्। स भीमेन महाराज भ्रात्रा तव विमोक्षितः।
इति श्रीमहाभारते वारण्यपर्व्वणि यक्षयुद्धपर्व्वणि कुवेरदर्शने एकषष्ट्यधिकशततमोऽध्यायः॥ १६१॥
॥ धनद उवाच॥ युधिष्ठिर धृतिर्दाक्ष्यं देशकालपराक्रमाः। लोकतन्त्रविधानानामेष पञ्चविधो विधिः।
धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्म्मणि भारत। पराक्रमविधानज्ञा नराः कृतयुगेऽभवन्।
धृतिमान् देशकालज्ञः सर्व्वधर्म्मविधानवित्। क्षत्रियः क्षत्रियश्रेष्ठ प्रशास्ति पृथिवीं चिरं। ११८०५
य एवं वर्त्तते पार्थ पुरुषः सर्व्वकर्म्मसु। स लोके लभते वीर यशः प्रेत्य च सद्गतिं।
देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमं। सम्प्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह।
यस्तु केवलसंरम्भात् प्रपातं न निरीक्षते। पापात्मा पापबुद्धिर्यः पापमेवानुवर्त्तते।
कर्म्मणामविभागज्ञः प्रेत्य चेह विनश्यति। अकालज्ञः सुदुर्म्मेधाः कार्य्याणामविशेषवित्।
वृथाचारसमारम्भः प्रेत्य चेह विनश्यति। साहसे वर्त्तमानानां निकृतीनां दुरात्मनां। ११८१०
सर्व्वसामर्थ्यलिप्सूनां पापो भवति निश्चयः। अधर्म्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः।
निर्भयो भीमसेनोऽयं तं शाधि पुरुषर्षभ। आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमाश्रमं।
तामिस्रं प्रथमं पक्षं वीतशोकभयो वस। अलकाः सह गन्धर्व्वैर्यक्षाश्च सह किन्नरैः।
मन्नियुक्ता मनुष्येन्द्र सर्व्वे च गिरिवासिनः। रक्षिष्यन्ति महाबाहो सहितं द्विजसत्तमैः।
साहसादनुसम्प्राप्तः प्रतिषिध्य वृकोदरः। वार्य्यतां साध्वयं राजंस्त्वया धर्म्मभृताम्बर। ११८१५
अतः परञ्च वो राजन् द्रक्ष्यन्ति वनगोचराः। उपस्थास्यन्ति वो राजन् रक्षिष्यन्ते च वः सदा।
तथैव चान्नपानानि स्वादूनि च बहूनि च। आहरिष्यन्ति मत्प्रेष्याः सदा वः पुरुषर्षभाः।
यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः। धर्म्मस्य त्वं यथा तात योगोत्पन्नो निजः सुतः।
आत्मजावात्मसम्पन्नौ यमौ चोभौ यथाश्विनोः। रक्ष्यास्तद्वन्ममापीह यूयं सर्व्वे युधिष्ठिर।
अर्थतत्त्वविधानज्ञः सर्व्वधर्म्मविधानवित्। भीमसेनादवरजः फाल्गुनः कुशली दिवि। ११८२०
याः काश्चन मता लोके स्वर्ग्याः परमसम्पदः। जन्मप्रभृति ताः सर्व्वाः स्थितास्तात धनञ्जये।
दमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमं। एतान्यपि महासत्त्वे स्थितान्यमिततेजसि।
न मोहात् कुरुते जिष्णुः कर्म्म पाण्डव गर्हितं। न पार्थस्य मृषोक्तानि कथयन्ति नरा नृषु।
सदेवपितृगन्धर्व्वैः कुरूणां कीर्त्तिवर्द्धनः। मानितः कुरुतेऽस्त्राणि शक्रसद्मनि भारत।

योऽसौ सर्व्वान्महीपालान् धर्म्मेण वशमानयत्। स शान्तनुर्महातेजाः पितुस्तव पितामहः। ११८२५
प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना। सम्यक् चासौ महावीर्य्यः कुलधूर्य्येण पार्थिव।
पितॄन् देवानृषीन् विप्रान् पूजयित्वा महातपाः। सप्त मुख्यान्महामेधानाहरद्यमुनां प्रति।
अधिराजः स राजंस्त्वां शान्तनुः प्रपितामहः। स्वर्गजित् शक्रलोकस्थः कुशलं परिपृच्छति।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं धनदेन प्रभाषितं। पाण्डवाश्च ततस्तेन बभूवुः संप्रहर्षिताः।
ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभः। प्राध्वं कृत्वा नमश्चक्रे कुवेराय वृकोदरः। ११८३०
ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतं। मानहा भव शत्रूणां सुहृदां नन्दिवर्द्धनः।
स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः। कामान्न परिहास्यन्ति यक्षा वो भरतर्षभाः।
शीघ्रमेव गुडाकेशः कृतास्त्रः पुनरेष्यति। साक्षान्मघवता सृष्टः संप्राप्स्यति धनञ्जयः।
एवमुत्तमकर्म्माणमनुशिष्य युधिष्ठिरं। अस्तं गिरिवरश्रेष्ठं प्रययौ गुह्यकाधिपः।
तं परिस्तोमसङ्कीर्णैर्नानारत्नविभूषितैः। यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः। ११८३५
पक्षिणामिव निर्घोषः कुवेरसदनं प्रति। बभूव परमाश्वानामैरावतपथे यथा।
ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः। प्रकर्षन्त इवाभ्राणि पिवन्त इव मारुतं।
ततस्तानि शरीराणि गतसत्त्वानि रक्षसां। अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात्।
तेषां हि शापकालः स कृतोऽगस्त्येन धीमता। समरे निहतास्तस्माच्छापस्यान्तोऽभवत्तदा।
पाण्डवाश्च महात्मानस्तेषु वेश्मसु ताः क्षपाः। सुखमूषुर्गतोद्वेगाः पूजिताः सर्व्वराक्षसैः। ११८४०
इति श्रीमहाभारते आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि कुवेरवाक्ये द्विषष्ट्यधिकशततोऽध्यायः॥ १६२ ॥
॥ वैशम्पायन उवाच ॥ ततः सूर्य्योदये धौम्यः कृत्वाह्निकमरिन्दम। आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्त्तत।
तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह। ततः प्राञ्जलयः सर्व्वे ब्राह्मणांस्तानपूजयन्।
ततो युधिष्ठिरं धौम्यो गृहीत्वा दक्षिणे करे। प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत्।
असौ सागरपर्य्यन्तां भूमिमावृत्य तिष्ठति। शैलराजो महाराज मन्दरोऽतिविराजते।
इन्द्रवैश्रवणावेतां दिशं पाण्डव रक्षतः। पर्व्वतैश्च वनान्तैश्च काननैश्चैव शोभितां। ११८४५
एतदाहुर्म्महेन्द्रस्य राज्ञो वैश्रवणस्य च। ऋषयः सर्व्वधर्म्मज्ञाः सद्म तात मनीषिणः।
ततश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै द्विजाः। ऋषयश्चापि धर्म्मज्ञाः सिद्धाः साध्याश्च देवताः।
यमस्तु राजा धर्म्मज्ञः सर्व्वप्राणभृतां प्रभुः। प्रेतसत्त्वगतिं ह्येनां दक्षिणामाश्रितो दिशं।
एतत् संयमनं पुण्यमतीवाद्भुतदर्शनं। प्रेतराजस्य भवनमृद्ध्या परमया युतं।
तं प्राप्य सविता राजन् सत्येन प्रतितिष्ठति। अस्तं पर्व्वतराजानमेतमाहुर्म्मनीषिणः। ११८५०
एनं पर्व्वतराजानं समुद्रञ्च महोदधिं। आवसन् वरुणो राजा भूतानि परिरक्षति।
उदीचीं दीपयन्नेष दिशं तिष्ठति वीर्य्यवान्। महामेरुर्म्महाभागः शिवो ब्रह्मविदां गतिः।
यस्मिन् ब्रह्मसदश्चैव भूतात्मा चावतिष्ठते। प्रजापतिः सृजन् सर्व्वं यत्किञ्चिज्जङ्गमागमं।

यानाहुर्ब्रह्मणः पुत्रान् मानसान् दक्षसप्तमान्। तेषामपि महामेरुः शिवं स्थानमनामयं।
अत्रैव प्रतितिष्ठन्ति पुनरेवोदयन्ति च। सप्त देवर्षयस्तात वशिष्ठप्रमुखास्तदा। ११८५५
देशं विरजसं पश्य मेरोः शिखरमुत्तमं। यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः।
यमाहुः सर्व्वभूतानां प्रकृतेः प्रकृतिं ध्रुवं। अनादिनिधनं देवं प्रभुं नारायणं परं।
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते। देवापि यं न पश्यन्ति सर्व्वतेजोमयं शुभं।
अत्यर्कानलदीप्तन्तत् स्थानं विष्णोर्महात्मनः। स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः।
प्राच्यां नारायणस्थानं मेरावति विराजते। यत्र भूतेश्वरस्तात सर्व्वप्रकृतिरात्मभूः। ११८६०
भासयन् सर्व्वभूतानि सुश्रिया ऽभिविराजते। नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः।
प्राप्नुवन्ति गतिं ह्येतां यतीनां कुरुसत्तम। न तं ज्योतींषि सर्व्वाणि प्राप्य भासन्ति पाण्डव।
स्वयं प्रभुरचिन्त्यात्मा तत्र ह्यतिविराजते। यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिं।
परेण तपसा युक्ता भाविताः कर्म्मभिः शुभैः। योगसिद्धा महात्मानस्तमोमोहविवर्ज्जिताः।
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत। स्वयम्भुवं महात्मानं देवदेवं सनातनं। ११८६५
स्थानमेतन्महाभाग ध्रुवमक्षयमव्ययं। ईश्वरस्य सदा ह्येतत् प्रणमात्र युधिष्ठिर।
एनं त्वहरहर्मेरुं सूर्य्याचन्द्रमसौ ध्रुवं। प्रदक्षिणमुपावृत्य कुरुतः कुरुनन्दन।
ज्योतींषि चाप्यशेषेण सर्व्वाण्यनघ सर्व्वतः। परियान्ति महाराज गिरिराजं प्रदक्षिणं।
एवं ज्योतींषि सर्व्वाणि प्रकर्षन् भगवानपि। कुरुते वितमस्कर्म्मा आदित्योऽपि प्रदक्षिणं।
अस्तं प्राप्य ततः सन्ध्यामतिक्रम्य दिवाकरः। उदीचीं भजते काष्ठां दिशमेष विभावसुः। ११८७०
स मेरुमनुवृत्तः सन् पुनर्गच्छति पाण्डव। प्राङ्मुखः सविता देवः सर्व्वभूतहिते रतः।
स मासं विभजन् काले बहुधा पर्व्वसन्धिषु। तथैव भगवान् सोमो नक्षत्रैः सह गच्छति।
एवमेष व्यतिक्रम्य महामेरुमतन्द्रितः। भावयन् सर्व्वभूतानि पुनर्गच्छति मन्दरं।
तथा तमिस्रहा देवो मयूखैर्भावयन् जगत्। मार्गमेतदसम्बाधमादित्यः परिवर्त्तते।
सिसृक्षुः शिशिराण्येष दक्षिणां भजते दिशं। ततः सर्व्वाणि भूतानि कालोऽभ्यर्च्छति शैशिरः। ११८७५
स्थावराणाञ्च भूतानां जङ्गमानाञ्च तेजसा। तेषामपि समुपादत्ते निवृत्तः स विभावसुः।
ततः स्वेदक्लमौ तन्द्रीर्ग्लानिश्च भजते नरान्। प्राणिभिः सततं स्वप्नो ह्यभीक्ष्णञ्च निषेव्यते।
एवमेतदनिर्देश्यं मार्गमावृत्य भानुमान्। पुनः सृजति वर्षाणि भगवान् भावयन् प्रजाः।
वृष्टिमारुतसन्तापैः सुखैः स्थावरजङ्गमान्। वर्द्धयन् सुमहातेजाः पुनः प्रतिनिवर्त्तते।
एवमेष चरन् पार्थ कालचक्रमतन्द्रितः। प्रकर्षन् सर्व्वभूतानि सविता परिवर्त्तते। ११८८०
सन्तता गतिरेतस्य नैष तिष्ठति पाण्डव। आदायैवन्तु भूतानां तेजो विसृजते पुनः।
विभजन् सर्व्वभूतानामायुः कर्म्म च भारत। अहोरात्रं कलाः काष्ठाः सृजत्येष सदा विभुः।
इति श्रीमहाभारते आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि मेरुदर्शने त्रिषष्ट्यधिकशततमोऽध्यायः॥ १६३ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन्नगेन्द्रे वसतान्तु तेषां महात्मनां सद्व्रतमास्थितानां । रतिः प्रमोदश्च बभूव तेषामाकाङ्क्षतां दर्शनमर्ज्जुनस्य ।

तान् वीर्य्ययुक्तान् सुविशुद्धकामांस्तेजस्विनः सत्यधृतिप्रधानान् । संप्रीयमाणा बहवोऽभिजग्मुर्गन्धर्व्वसंघाश्च महर्षयश्च ।

तं पादपैः पुष्पधरैरुपेतं नगोत्तमं प्राप्य महारथानां । मनःप्रसादः परमो बभूव यथा दिवं प्राप्य मरुद्गणानां । ११८८५

मयूरहंसस्वननादितानि पुष्पोपकीर्णानि महाचलस्य । शृङ्गाणि सानूनि च पश्यमाना गिरेः परं हर्षमवाप्य तस्थुः ।

साक्षात्कुवेरेण कृताश्च तस्मिन्नगोत्तमे संवृतकूलरोधसः । कादम्बकारण्डवहंसजुष्टाः पद्माकुलाः पुष्करिणीरपश्यन् ।

क्रीडाप्रदेशांश्च समृद्धरूपान् सुचित्रमाल्यावृतजातशोभान् । मणिप्रकीर्णांश्च मनोरमांश्च यथा भवेयुर्धनदस्य राज्ञः ।

अनेकवर्णैश्च सुगन्धिभिश्च महाद्रुमैः सन्ततमभ्रजालैः । तपःप्रधानाः सततं चरन्तः शृङ्गं गिरेश्चिन्तयितुं न शेकुः ।

स्वतेजसा तस्य नगोत्तमस्य महौषधीनाञ्च तथा प्रभावात् । विभक्तभावो न बभूव कश्चिदहो निशानां पुरुषप्रवीर । ११८९०

यमास्थितः स्थावरजङ्गमानि विभावसुर्भावयतेऽमितौजाः । तस्योदयञ्चास्तमनञ्च वीरास्तत्र स्थितास्ते ददृशुर्नृसिंहाः ।

रवेस्तमिस्रागमनिर्गमांस्ते तथोदयञ्चास्तमनञ्च वीराः । समावृताः प्रेक्ष्य तमोनुदस्य गभस्तिजालैः प्रदिशो दिशश्च ।

स्वाध्यायवन्तः सततक्रियाश्च धर्म्मप्रधानाश्च शुचिव्रताश्च । सत्ये स्थितास्तस्य महारथस्य सत्यव्रतस्यागमनप्रतीक्षाः ।

इहैव हर्षोऽस्तु समागतानां क्षिप्रं कृतास्त्रेण धनञ्जयेन । इति ब्रुवन्तः परमाशिषस्ते पार्थास्तपोयोगपरा बभूवुः ।

दृष्ट्वा विचित्राणि गिरौ वनानि किरीटिनं चिन्तयतामभीक्ष्णं । बभूव रात्रिर्द्दिवसश्च तेषां सम्वत्सरेणैव समानरूपः । ११८९५

यदैव धौम्यानुमते महात्मा कृत्वा जटां प्रव्रजितः स जिष्णुः । तदैव तेषां न बभूव हर्षः कुतो रतिस्तद्गतमानसानां ।

भ्रातुर्नियोगात्तु युधिष्ठिरस्य वनादसौ वारणमत्तगामी । यत्काम्यकात् प्रव्रजितः स जिष्णुस्तदैव ते शोकहता बभूवुः ।

तथैव तं चिन्तयतां सिताश्वमस्त्रार्थिनं वासवमभ्युपेतं । मासोऽथ कृच्छ्रेण तदा व्यतीतस्तस्मिन्नगे भारत भारतानां ।

उषित्वा पञ्चवर्षाणि सहस्राक्षनिवेशने । अवाप्य दिव्यान्यस्त्राणि सर्व्वाणि विबुधेश्वरात् ।

आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवं । ऐन्द्रं पाशुपतं ब्राह्म्यं पारमेष्ठ्यं प्रजापतेः । ११९००

यमस्य धातुः सवितुस्त्वष्टुर्वैश्रवणस्य च । तानि प्राप्य सहस्राक्षादभिवाद्य शतक्रतुं ।

अनुज्ञातस्तदा तेन कृत्वा चापि प्रदक्षिणं । आगच्छदर्ज्जुनः प्रीतः प्रहृष्टो गन्धमादनं ।

इतिश्रीमहाभारते आरण्यपर्व्वणि यक्षयुद्धपर्व्वणि महर्षिगणदर्शने चतुःषष्ट्यधिकशततमोऽध्यायः ॥ समाप्तञ्चयक्षयुद्धपर्व्व ॥१६४॥

## ॥ अथ निवातकवचयुद्धपर्व्व ॥ ८ ॥

॥ वैशम्पायन उवाच ॥ ततः कदाचिद्धरिसंप्रयुक्तं महेन्द्रवाहं सहसोपयातं । विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्ज्जुनं चिन्तयतां बभूव ।

स दीप्यमानः सहसाऽन्तरीक्षं प्रकाशयन् मातलिसंगृहीतः । बभौ महोल्केव घनान्तरस्था शिखेव चाग्नेर्ज्वलिता विधूमा ।

तमास्थितः संददृशे किरीटी स्रग्वी नवान्याभरणानि बिभ्रत् । धनञ्जयो वज्रधरप्रभावः श्रिया ज्वलन् पर्व्वतमाजगाम ।११९०५

स शैलमासाद्य किरीटमाली महेन्द्रवाहादवरुह्य तस्मात् । धौम्यस्य पादावभिवाद्य धीमानजातशत्रोस्तदनन्तरञ्च ।

वृकोदरस्यापि च वन्द्य पादौ माद्रीसुताभ्यामभिवादितश्च । समेत्य कृष्णां परिसान्त्व्य चैनां प्रह्वोऽभवद्भ्रातुरुपह्वरे सः ।

बभूव तेषां परमप्रहर्षस्तेनागमेनैव समागतानां । स चापि तान् प्रेक्ष्य किरीटमाली ननन्द राजानमभिप्रशंसन् ।
यमाश्रितः सप्त जघान पूगान् दितेः सुतानां नमुचेर्निहन्ता । तमिन्द्रवाहं समुपेत्य पार्थाः प्रदक्षिणं चक्रुरदीनसत्त्वाः ।
ते मातलेश्चक्रुरतीव हृष्टाः सत्कारमग्र्यं सुरराजतुल्यं । सर्व्वान् यथावच्च दिवौकसस्ते पप्रच्छुरेनं कुरुराजपुत्राः । ११९१०
तानप्यसौ मातलिरभ्यनन्दत् पितेव पुत्राननुशिष्य पार्थान् । ययौ रथेनाप्रतिमप्रभेण पुनः सकाशं त्रिदिवेश्वरस्य ।
गते तु तस्मिन्वरदेववर्य्ये शक्रात्मजः शक्ररिपुप्रमाथी । शक्रेण दत्तानि ददौ महात्मा महाधनान्युत्तमरूपवन्ति ।
दिवाकराभाणि विभूषणानि प्रियः प्रियायै सुतसोममात्रे । ततः स तेषां कुरुपुङ्गवानां तेषाञ्च सूर्य्याग्निसमप्रभाणां ।
विप्रर्षभाणामुपविश्य मध्ये सर्व्वं यथावत् कथयाम्बभूव । एवं मयाऽस्त्राण्युपशिक्षितानि शक्राच्च वाताच्च शिवाच्च साक्षात् ।
तथैव शीलेन समाधिनाऽथ प्रीताः सुरा मे सहिताः सहेन्द्राः । संक्षेपतो वै स विशुद्धकर्म्मा तेभ्यः समाख्याय दिवि प्रवासं । ११९१५
माद्रीसुताभ्यां सहितः किरीटी सुष्वाप तामावसतिं प्रतीतः ।
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि अर्ज्जुनागमने पञ्चषष्ट्यधिकशततोऽध्यायः ॥ १६५ ॥
॥ वैशम्पायन उवाच ॥ ततो रजन्यां व्युष्टायां धर्म्मराजं युधिष्ठिरं । भ्रातृभिः सहितः सर्व्वैरवन्दत धनञ्जयः ।
एतस्मिन्नेव काले तु सर्व्ववादित्रनिस्वनः । बभूव तुमुलः शब्दस्त्वन्तरीक्षे दिवौकसां ।
रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत । पृथग्व्यालमृगाणाञ्च पक्षिणामिव सर्व्वशः ।
तं समन्तादनुययुर्गन्धर्व्वाप्सरसां गणाः । विमानैः सूर्य्यसङ्काशैर्देवराजमरिन्दमं । ११९२०
ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतं । मेघनादिनमारुह्य श्रिया परमया ज्वलन् ।
पार्थानभ्याजगामाथ देवराजः पुरन्दरः । आगत्य च सहस्राक्षो रथादवरुरोह वै ।
तं दृष्ट्वैव महात्मानं धर्म्मराजो युधिष्ठिरः । भ्रातृभिः सहितः श्रीमान् देवराजमुपागमत् ।
पूजयामास वै चाथ विधिवद्भूरिदक्षिणः । यथार्हममितात्मानं विधिदृष्टेन कर्म्मणा ।
धनञ्जयश्च तेजस्वी प्रणिपत्य पुरन्दरं । भृत्यवत् प्रणतस्तस्थौ देवराजसमीपतः । ११९२५
आघ्राय तं महातेजाः कुन्तीपुत्रो युधिष्ठिरः । धनञ्जयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ।
जटिलं देवराजस्य तपोयुक्तमकल्मषं । हर्षेण महताविष्टः फाल्गुनस्याथ दर्शनात् ।
बभूव परमप्रीतो देवराजञ्च पूजयन् । तं तथाऽदीनमनसं राजानं हर्षसंप्लुतं ।
उवाच वचनं धीमान् देवराजः पुरन्दरः । त्वमिमां पृथिवीं राजन् प्रशासिष्यसि पाण्डव ।
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमं । ११९३०
अस्त्राणि लब्धानि च पाण्डवेन सर्व्वाणि मत्तः प्रयतेन राजन् । कृतप्रियश्चास्मि धनञ्जयेन जेतुं न शक्यस्त्रिभिरेष लोकैः ।
एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरं । जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः ।
धनेश्वरगृहस्थानां पाण्डवानां समागमं । शक्रेण य इदं विद्वानधीयीत समाहितः ।
संवत्सरं ब्रह्मचारी नियतः संशितव्रतः । स जीवेद्धि निराबाधः सुसुखी शरदां शतं ।
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि इन्द्रागमे षट्षष्ट्यधिकशततोऽध्यायः ॥ १६६ ॥

॥ वैशम्पायन उवाच ॥ यथागतं गते शक्रे भ्रातृभिः सह सङ्गतः। कृष्णया चैव वीभत्सुर्धर्म्मपुत्त्रमपूजयत्। ११८७५
अभिवादयमानं तं मूर्द्ध्न्युपाघ्राय पाण्डवं। हर्षगद्गदया वाचा प्रहृष्टोऽर्ज्जुनमब्रवीत्।
कथमर्ज्जुन कालोऽयं स्वर्गे व्यतिगतस्तव। कथञ्चास्त्राण्यवाप्तानि देवराजश्च तोषितः।
सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि पाण्डव। कच्चित्सुराधिपः प्रीतो रुद्रो वाऽस्त्राण्यदात्तव।
यथा दृष्टश्च ते शक्रो भगवान् वा पिनाकधृक्। यथैवास्त्राण्यवाप्तानि यथैवाराधितश्च ते।
यथोक्तवांस्त्वां भगवाञ्छतक्रतुररिन्दम। कृतप्रियस्त्वयाऽस्मीति तस्य ते किं प्रियं कृतं। ११८८०
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते। यथा तुष्टो महादेवो देवराजस्तथाऽनघ।
यच्चापि वज्रपाणेस्तु प्रियं कृतमरिन्दम। एतदाख्याहि मे सर्व्वमखिलेन धनञ्जय।
॥ अर्ज्जुन उवाच॥ शृणु हन्त महाराज विधिना येन दृष्टवान्। शतक्रतुमहं देवं भगवन्तञ्च शङ्करं।
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्द्दन। भवता च समादिष्टस्तपसे प्रस्थितो वनं।
भृगुतुङ्गमथो गत्वा काम्यकादास्थितस्तपः। एकरात्रोषितः कञ्चिदपश्यं ब्राह्मणं पथि। ११८८५
स मामपृच्छत् कौन्तेय क्वासि गन्ता ब्रवीहि मे। तस्मा अवितथं सर्व्वमब्रुवं कुरुनन्दन।
स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम। अपूजयत मां राजन् प्रीतिमांश्चाभवन्मयि।
ततो मामब्रवीत् प्रीतस्तप आतिष्ठ भारत। तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिपं।
ततोऽहं वचनात्तस्य गिरिमारुह्य शैशिरं। तपोऽतप्यं महाराज मासं मूलफलाशनः।
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः। निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन। ११८९०
ऊर्द्ध्वबाहुश्चतुर्थन्तु मासमस्मि स्थितस्तदा। नच मे हीयते प्राणस्तदद्भुतमिवाभवत।
पञ्चमे त्वथ संप्राप्ते प्रथमे दिवसे गते। वराहसंस्थितं भूतं मत्समीपं समागमत्।
निघ्नन् प्रोथेन पृथिवीं विलिखंश्चरणैरपि। संमार्ज्जन् जठरेणोर्व्वीं विवर्त्तंश्च मुहुर्म्मुहुः।
अनु तस्यापरं भूतं महत्कैरातसंस्थितं। धनुर्व्वाणासिमत् प्राप्तं स्त्रीगणानुगतं तदा।
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी। अताडयं शरेणाथ तद्भूतं लोमहर्षणं। ११८९५
युगपत्तं किरातस्तु विकृष्य बलवद्धनुः। अभ्याजघ्ने दृढतरं कम्पयन्निव मे मनः।
स तु मामब्रवीद्राजन् मम पूर्व्वपरिग्रहः। मृगयाधर्म्ममुत्सृज्य किमर्थं ताडितस्त्वया।
एष ते निशितैर्व्वाणैर्द्दर्पं हन्मि स्थिरो भव। स धनुष्मान् महाकायस्ततो मामभ्यभाषत।
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः। तञ्चाहं शरवर्षेण महता समवाकिरं।
ततः शरैर्द्दीप्तमुखैर्यन्त्रितैरनुमन्त्रितैः। प्रत्यविध्यमहं तन्तु वज्रैरिव शिलोच्चयं। ११९००
तस्य तच्छतधा रूपमभवच्च सहस्रधा। तानि चास्य शरीराणि शरैरहमताडयं।
पुनस्तानि शरीराणि एकीभूतानि भारत। अदृश्यन्त महाराज तान्यहं व्यधमं पुनः।
अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः। एकीभूतस्तदा राजन् सोऽभ्यवर्त्तत मां युधि।
यदाऽभिभवितुं वाणैर्नैव शक्नोमि तं रणे। ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ।

नचैनमशकं हन्तुं तदद्भुतमिवाभवत् । तस्मिन् प्रतिहते चास्त्रे विस्मयो मे महानभूत् । ११९६५
भूय एव महाराज सविशेषमहं ततः । अस्त्रपूगेन महता रणे भूतमवाकिरं ।
स्थूणाकर्णमथो जालं शरवर्षमथोल्बणं । शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययां ।
जग्रास प्रसभं तानि सर्व्वाण्यस्त्राणि मे नृप । तेषु सर्व्वेषु जग्धेषु ब्रह्मास्त्रमहमादिशं ।
ततः प्रज्वलितैर्वाणैः सर्व्वतः सोपचीयते । उपचीयमानस्तु मया महास्त्रेण व्यवर्द्धत ।
ततः सन्तापिता लोका मत्प्रसूतेन तेजसा । क्षणेन हि दिशः खञ्च सर्व्वतो हि विदीपितं । ११९७०
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् । ब्रह्मास्त्रे तु हते राजन् भयं मां महदाविशत् ।
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी । सहसाऽभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ।
हतेष्वस्त्रेषु सर्व्वेषु भक्षितेष्वायुधेषु च । मम तस्य च भूतस्य बाहुयुद्धमवर्त्तत ।
व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः । अपारयंश्च तद्भूतं निश्चेष्टमगमं महीं ।
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत । सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमं । ११९७५
एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमास्थितः । दिव्यमेव महाराज वसानोऽद्भुतमम्बरं ।
हित्वा किरातरूपञ्च भगवान्त्रिदशेश्वरः । स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ।
अदृश्यत ततः साक्षाद्भगवान् गोवृषध्वजः । उमासहायो व्यालम्बी बहुरूपः पिनाकधृक् ।
स मामभ्येत्य समरे तथैवाभिमुखं स्थितं । शूलपाणिरथोवाच तुष्टोऽस्मीति परन्तप ।
ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ । प्रादान्ममैव भगवान् धारयस्वेति चाब्रवीत् । ११९८०
तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते । मनोगतं वीर यत्ते तद्ब्रूहि वितराम्यहं ।
अमरत्वमपाहाय ब्रूहि यत्ते मनोगतं । ततः प्राञ्जलिरेवाहमस्त्रेषु गतमानसः ।
प्रणम्य मनसा शर्व्वं ततो वचनमाददे । भगवान्मे प्रसन्नश्चेदीप्सितोऽयं वरो मम ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् । ददानीत्येव भगवानब्रवीत्त्र्यम्बकश्च मां ।
रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव । प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं महत् । ११९८५
उवाच च महादेवो दत्त्वा मेऽस्त्रं सनातनं । न प्रयोज्यं भवेदेतन्मानुषेषु कथञ्चन ।
जगद्विनिर्द्दहेदेवमल्पतेजसि पातितं । पीड्यमानेन बलवत् प्रयोज्यं स्याद्धनञ्जय ।
अस्त्राणां प्रतिघाते च सर्व्वथैव प्रयोजयेत् । तदप्रतिहतं दिव्यं सर्व्वास्त्रप्रतिषेधनं ।
मूर्त्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे । उत्सादनममित्राणां परसेनानिकर्त्तनं ।
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः । अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशं । ११९९०
प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ।

इतिश्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि अर्ज्जुनयुधिष्ठिर संवादे सप्तषष्ठ्यधिकशतोऽध्यायः ॥ १६७ ॥

॥ अर्ज्जुन उवाच ॥ ततस्तामवसं प्रीतो रजनीं तत्र भारत । प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः ।
व्युषितो रजनीञ्चाहं कृत्वा पौर्व्वाह्णिकीः क्रियाः । अपश्यन्तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ।

तस्मै चाहं यथावृत्तं सर्व्वमेव न्यवेदयं। भगवन्तं महादेवं समेतोऽस्मीति भारत।
स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः। दृष्टस्त्वया महादेवो यथा नान्येन केनचित्। ११९९५
समेत्य लोकपालैस्तु सर्व्वैर्व्वैवस्वतादिभिः। द्रष्टाऽस्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति।
एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः। अगच्छत् स यथाकामं ब्राह्मणः सूर्य्यसन्निभः।
अथापराह्णे तस्याह्नः प्रावात् पुण्यः समीरणः। पुनर्नवमिमं लोकं कुर्व्वन्नपि सपत्नहन्।
दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च। शैशिरस्य गिरेः पादे प्रादुरासन् समीपतः।
वादित्राणि च दिव्यानि सुघोराणि समन्ततः। स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः। १२०००
गणाश्चाप्सरसां तत्र गन्धर्व्वाणां तथैव च। पुरस्ताद्देवदेवस्य जगुर्गीतानि सर्व्वशः।
मरुताञ्च गणास्तत्र देवयानैरुपागमन्। महेन्द्रानुचरा ये च ये च सद्मनिवासिनः।
ततो मरुत्वान् हरिभिर्युक्तैर्व्वाहैः स्वलङ्कृतैः। शचीसहायस्तत्रायात् सह सर्व्वैस्तदाऽमरैः।
एतस्मिन्नेव काले तु कुवेरो नरवाहनः। दर्शयामास मां राजँल्लक्ष्म्या परमया युतः।
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितं। वरुणं देवराजञ्च यथास्थानमवस्थितं। १२००५
ते मामूचुर्म्महाराज सान्त्वयित्वा नरर्षभ। सव्यसाचिन्निरीक्षस्वास्माँल्लोकपालानवस्थितान्।
सुरकार्य्यार्थसिद्ध्यर्थं दृष्टवानसि शङ्करं। अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः।
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान्। प्रत्यगृह्णं तदाऽस्त्राणि महान्ति विधिवद्विभो।
गृहीतास्त्रस्ततो देवैरनुज्ञातोऽस्मि भारत। अथ देवा ययुः सर्व्वे यथागतमरिन्दम।
मघवानपि देवेशो रथमारुह्य सुप्रभं। उवाच भगवान् स्वर्गं गन्तव्यं फाल्गुन त्वया। १२०१०
पुरैवागमनादस्मादेदाहं त्वां धनञ्जय। अतः परं त्वहं वै त्वां दर्शये भरतर्षभ।
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत्। तपश्चेदं महत्तप्तं स्वर्गं गन्ताऽसि पाण्डव।
भूयश्चैव च तप्तव्यं तपश्चरणमुत्तमं। स्वर्गं त्ववश्यं गन्तव्यं त्वया शत्रुनिसूदन।
मातलिर्म्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति। विदितस्त्वं हि देवानां मुनीनाञ्च महात्मनां।
ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम। आचार्य्यं वरयेऽहं त्वामस्त्रार्थं त्रिदशेश्वर। १२०१५
॥ इन्द्र उवाच ॥ क्रूरकर्म्माऽस्त्रवित्तात भविष्यसि परन्तप। यदर्थमस्त्राण्यीप्सुस्त्वं तं कामं पाण्डवाप्नुहि।
ततोऽहमब्रुवन्नाहं दिव्यान्यस्त्राणि शत्रुहन्। मानुषेषु प्रयोक्ष्यामि विनाऽस्त्रप्रतिघातनात्।
तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप। लोकांश्चास्त्रजितान् पश्चाल्लभेयं सुरपुङ्गव।
॥ इन्द्र उवाच ॥ परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनञ्जय। ममात्मजस्य वचनं सूपपन्नमिदं तव।
शिक्ष मे भवनं गत्वा सर्व्वाण्यस्त्राणि भारत। वायोरग्नेर्व्वसुभ्योऽपि वरुणात् समरुद्गणात्। १२०२०
साध्यं पैतामहञ्चैव गन्धर्व्वोरगरक्षसां। वैष्णवानि च सर्व्वाणि नैर्ऋतानि तथैव च।
मद्गतानि च जानीहि सर्व्वास्त्राणि कुरूद्वह। एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत।
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितं। दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप।

लोकपालेषु यातेषु मामुवाचाथ मातलिः । द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ।
संसिध्यस्व महाबाहो कुरु कार्य्यमनन्तरं । पश्य पुण्यकृतां लोकान् सशरीरो दिवं व्रज । १२०२५
देवराजः सहस्राक्षस्त्वां दिदृक्षति भारत । इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरं ।
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमं । चोदयामास स हयान् मनोमारुतरंहसः ।
मातलिर्हयतत्त्वज्ञो यथावद्भूरिदक्षिणः । अवैक्षत च मे वक्त्रं स्थितस्याथ स सारथिः ।
तथाभ्रान्ते रथे राजन् विस्मितश्चेदमब्रवीत् । अत्यद्भुतमिदं त्वद्य विचित्रं प्रतिभाति मे ।
यदास्थितो रथं दिव्यं पदान्न चलितः पदं । देवराजोऽपि हि मया नित्यमत्रोपलक्षितः । १२०३०
विचलन् प्रथमोत्पाते हयानां भरतर्षभ । त्वं पुनः स्थित एवात्र रथे भ्रान्ते कुरूद्वह ।
अतिशक्रमिदं सर्व्वं तवेति प्रतिभाति मे । इत्युक्त्वाकाशमाविश्य मातलिर्विबुधालयान् ।
दर्शयामास मे राजन् विमानानि च भारत । स रथो हरिभिर्युक्तो ह्यूर्द्ध्वमाचक्रमे ततः ।
ऋषयो देवताश्चैव पूजयन्ति नरोत्तम । ततः कामगमांल्लोकानपश्यं वै सुरर्षिणां ।
गन्धर्व्वाप्सरसाञ्चैव प्रभावममितौजसां । नन्दनादीनि देवानां वनान्युपवनानि च । १२०३५
दर्शयामास मे शीघ्रं मातलिः शक्रसारथिः । ततः शक्रस्य भवनमपश्यममरावतीं ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलङ्कृतां । न तत्र सूर्य्यस्तपति न शीतांशुर्न पावकः ।
न बाधते तत्र रजस्तत्रास्ति न जरा नृप । न तत्र शोको दैन्यं वा दौर्ब्बल्यं चोपलक्ष्यते ।
दिवौकसां महाराज न च ग्लानिररिन्दम । न क्रोधलोभौ तत्रास्तां सुरादीनां विशाम्पते ।
नित्यं तुष्टाश्च ते राजन् प्राणिनः सुरवेश्मनि । नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः । १२०४०
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः । शीतस्तत्र ववौ वायुः सुगन्धी जीवनः शुचिः ।
सर्व्वरत्नविचित्रा च भूमिः पुष्पविभूषिता । मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ।
विमानगामिनश्चात्र दृश्यन्ते बहवोऽमराः । ततोऽपश्यं वसून् रुद्रान् साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान् सर्व्वान् प्रत्यपूजयं । ते मां वीर्य्येण यशसा तेजसा च बलेन च ।
अस्त्रैश्चाप्यन्वजानन्त संग्रामे विजयेन च । प्रविश्य तां पुरीं दिव्यां देवगन्धर्व्वपूजितां । १२०४५
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः । ददावर्द्धासनं प्रीतः शक्रो मे ददतां वरः ।
बहुमानाच्च गात्राणि पस्पर्श मम वासवः । तत्राहं देवगन्धर्व्वैः सहितो भूरिदक्षिणैः ।
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत । विश्वावसोश्च वै पुत्रश्चित्रसेनोऽभवत् सखा ।
स च गान्धर्व्वमखिलं ग्राहयामास मां नृप । तत्राहमवसं राजन् गृहीतास्त्रः सुपूजितः ।
सुखं शक्रस्य भवने सर्व्वकामसमन्वितः । शृण्वन् वै गीतशब्दञ्च तूर्य्यशब्दञ्च पुष्कलं । १२०५०
पश्यंश्चाप्सरसः श्रेष्ठा नृत्यन्तीर्भरतर्षभ । तत्सर्व्वमनादृत्य तथ्यं विज्ञाय भारत ।
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः । ततोऽतुष्यत् सहस्राक्षस्तेन कामेन मे विभुः ।
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि । कृतास्त्रमभिविश्वस्तमथ मां हरिवाहनः ।

संस्पृश्य मूर्द्ध्नि पाणिभ्यामिदं वचनमब्रवीत्। न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि।
किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः। अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा। १२०५५
अथाब्रवीत् पुनर्देवः संप्रहृष्टतनूरुहः। अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति।
अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः। ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह।
अस्त्राणि समवाप्तानि त्वया दश च पञ्च च। पञ्चभिर्विधिभिः पार्थ विद्यते न त्वया समः।
प्रयोगमुपसंहारमावृत्तिञ्च धनञ्जय। प्रायश्चित्तञ्च वेत्थ त्वं प्रतिघातञ्च सर्व्वशः।।
ततो गुर्व्वर्थकालोऽयं समुत्पन्नः परन्तप। प्रतिजानीष्व तं कर्त्तुं ततो वेत्स्याम्यहं परं। १२०६०
ततोऽहमब्रुवं राजन् देवराजमिदं वचः। विषह्यं यन्मया कर्त्तुं कृतमेव निबोध तत्।
ततो मामब्रवीद्राजन् प्रहसन् बलवृत्रहा। नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किञ्चन।
निवातकवचा नाम दानवा मम शत्रवः। समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत।
तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः। तांस्तत्र जहि कौन्तेय गुर्व्वर्थस्ते भविष्यति।
ततो मातलिसंयुक्तं मयूरसमरोमभिः। हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभं। १२०६५
बबन्ध चैव मे मूर्द्ध्नि किरीटमिदमुत्तमं। स्वरूपसदृशञ्चैव प्रादादङ्गविभूषणं।
अभेद्यं कवचञ्चेदं स्पर्शरूपवदुत्तमं। अजरां ज्यामिमाञ्चापि गाण्डीवे समयोजयत्।
ततः प्रायामहन्तेन स्यन्दनेन विराजता। येनाजयद्देववरो बलिं वैरोचनिं पुरा।
ततो देवाः सर्व्व एव तेन घोषेण बोधिताः। मन्वाना देवराजं मां समाजग्मुर्विशाम्पते।
दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फाल्गुन। तानब्रुवं यथाभूतमिदं कर्त्ताऽस्मि संयुगे। १२०७०
निवातकवचानान्तु प्रस्थितं मां बधैषिणं। निबोधत महाभागाः शिवञ्चाशास्त मे ऽनघाः।
तुष्टुवुर्म्मां प्रसन्नास्ते यथादेवं पुरन्दरं। रथेनानेन मघवान् जितवान् शम्बरं युधि।
नमुचिं बलवृत्रौ च प्रह्लादनरकावपि। बहूनि च सहस्राणि प्रयुतान्यर्व्वुदान्यपि।
रथेनानेन दैत्यानां जितवान्मघवा युधि। त्वमप्यनेन कौन्तेय निवातकवचान्रणे।
विजेता युधि विक्रम्य पुरेव मघवान् वशी। अयञ्च शङ्खप्रवरो येन जेताऽसि दानवान्। १२०७५
अनेन विजिता लोकाः शक्रेणापि महात्मना। प्रदीयमानं देवैस्तं देवदत्तं जलोद्भवं।
प्रत्यगृह्णं जयायैनं स्तूयमानस्तदाऽमरैः। सशङ्खी कवची वाणी प्रगृहीतशरासनः।
दानवालयमत्युग्रं प्रयातोऽस्मि युयुत्सया।
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि अर्ज्जुनवाक्ये अष्टषष्ट्यधिकशतोऽध्यायः ॥ १६८ ॥
॥ अर्ज्जुन उवाच ॥ ततोऽहं स्तूयमानस्तु तत्र तत्र महर्षिभिः। अपश्यमुदधिं भीममपाम्पतिमथाऽव्ययं।
फेनवत्यः प्रकीर्णाश्च संहताश्च समुत्थिताः। उर्म्मयश्चात्र दृश्यन्ते वल्गन्त इव पर्व्वताः। १२०८०
नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः। तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः।
मकराश्चात्र दृश्यन्ते जले मग्ना इवाद्रयः। शङ्खानाञ्च सहस्राणि मग्नान्यप्सु समन्ततः।

दृश्यन्ते स्म यथा रात्रौ तारास्त्वभ्रसंवृताः। तथा सहस्रशस्तत्र रत्नसंघाः स्वच्युत।
वायुश्च घूर्णते भीमस्तदद्भुतमिवाभवत्। तमुदीक्ष्य महावेगं सर्व्वाम्भोनिधिमुत्तमं।
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात्। तत्रैव मातलिस्तूर्णं निपत्य पृथिवीतले। १२०८५
रथं तन्तु समाक्षिप्य प्राद्रवद्रथयोगवित्। नादयन्रथघोषेण तत्पुरं समुपाद्रवत्।
रथघोषन्तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे। मन्वाना देवराजं मामाविग्ना दानवाभवन्।
सर्व्वे संभ्रान्तमनसः शरचापधराः स्थिताः। तथाऽसिशूलपरशुगदामुषलपाणयः।
ततो द्वाराणि पिदधुर्द्दानवास्त्रस्तचेतसः। संविधाय पुरे रक्षां न स्म कश्चन दृश्यते।
ततः शङ्खमुपादाय देवदत्तं महास्वनं। परमां मुदमाश्रित्य प्राधमन्तं शनैरहं। १२०९०
स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत्। वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि।
ततो निवातकवचाः सर्व्व एव स्वलङ्कृताः। दंशिता विविधैस्त्राणैर्व्विचित्रायुधपाणयः।
आयसैश्च महाशूलैर्गदाभिर्मुषलैरपि। पट्टिशैः करवालैश्च रथचक्रैश्च भारत।
शतघ्नीभिर्भुशुण्डीभिः खड्गैश्चित्रैः स्वलङ्कृतैः। प्रगृहीतैर्द्दितेः पुत्राः प्रादुरासन् सहस्रशः।
ततो विचार्य्य बहुशो रथमार्गेषु तान् हयान्। प्राचोदयत् समे देशे मातलिर्भरतर्षभ। १२०९५
तेन तेषां प्रणुन्नानामाशुत्वाच्छीघ्रगामिनां। नान्वपश्यं तदा किञ्चित्तन्मेऽद्भुतमिवाभवत्।
ततस्ते दानवास्तत्र वादित्राणि सहस्रशः। विकृतस्वररूपाणि भृशं सर्व्वाण्यवादयन्।
तेन शब्देन सहसा समुद्रे पर्व्वतोपमाः। आप्लवन्त गतैः सत्त्वैर्मत्स्याः शतसहस्रशः।
ततो वेगेन महता दानवा मामुपाद्रवन्। विमुञ्चन्तः शितान् वाणान् शतशोऽथ सहस्रशः।
स संप्रहारस्तुमुलस्तेषाञ्च मम भारत। आवर्त्तत महाघोरो निवातकवचान्तकः। १२१००
ततो देवर्षयश्चैव दानवर्षिगणाश्च ये। ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महामृधे।
ते वै मामनुरूपाभिर्म्मधुराभिर्जयैषिणः। अस्तुवन् मुनयो वाग्भिर्यथेन्द्रं तारकामये।
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि निवातकवचवधे एकोनसप्तत्यधिकशततमोऽध्यायः॥१६९॥
॥ अर्ज्जुन उवाच॥ ततो निवातकवचाः सर्व्वे वेगेन भारत। अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे।
आच्छाद्य रथपन्थानमुत्क्रोशन्तो महारथाः। आवृत्य सर्व्वतस्ते मां शरवर्षैरवाकिरन्।
ततोऽपरे महावीर्य्याः शूलपट्टिशपाणयः। शूलानि च भुशुण्डीश्च मुमुचुर्द्दानवा मयि। १२१०५
तच्छूलवर्षं सुमहत् गदाशक्तिसमाकुलं। अनिशं सृज्यमानं तैरपतन्मद्रथोपरि।
अन्ये मामभ्यधावन्त निवातकवचा युधि। शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः।
तानहं विविधैर्व्वाणैर्व्वेगवद्भिरजिह्मगैः। गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे।
ते कृता विमुखाः सर्व्वे मत्प्रयुक्तैः शिलाशितैः। ततो मातलिना तूर्णं हयास्ते संप्रचोदिताः।
मार्गान् बहुविधांस्तत्र विचेरुर्व्वातरंहसः। सुसंयता मातलिना प्रामथ्नन्त दितेः सुतान्। १२११०
शतंशतास्ते हरयस्तस्मिन् युक्ता महारथे। तदा मातलिना यत्ता व्यचरन्नल्पका इव।

तेषामश्वरथपातेन रथनेमिस्वनेन च । मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ।
गतासवस्तथैवान्ये प्रगृहीतशरासनाः । हतसारथयस्तत्र व्यकृष्यन्त तुरङ्गमैः ।
ते दिशो विदिशः सर्व्वे प्रतिरुध्य प्रहारिणः । अभ्यघ्नन् विविधैः शस्त्रैस्ततो मे व्यथितं मनः ।
ततोऽहं मातलेर्वीर्य्यमपश्यं परमाद्भुतं । अश्वांस्तथा वेगवतो यदयत्नादधारयत् । १२११५
ततोऽहं लघुभिश्चित्रैरस्त्रैस्तानसुरान् रणे । चिच्छेद सायुधान् राजञ्छतशोऽथ सहस्रशः ।
एवं मे चरतस्तत्र सर्व्वयत्नेन शत्रुहन् । प्रीतिमानभवद्वीरो मातलिः शक्रसारथिः ।
वध्यमानास्ततस्ते तु हयैस्तेन रथेन च । अगमन् प्रक्षयं केचिन्न्यवर्त्तन्त तथा परे ।
स्पर्द्धमाना इवास्माभिर्निवातकवचा रणे । शरवर्षैः शरार्त्तं मां महद्भिः प्रत्यवारयन् ।
ततोऽहं लघुभिश्चित्रैर्ब्रह्मास्त्रपरिमन्त्रितैः । व्यधमं सायकैराशु शतशोऽथ सहस्रशः । १२१२०
ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः । अपीडयन्मां सहिताः शक्तिशूलासिवृष्टिभिः ।
ततोऽहमस्त्रमातिष्ठं परमं तिग्मतेजसं । दयितं देवराजस्य माधवं नाम भारत ।
ततः खड्गांस्त्रिशूलांश्च तोमरांश्च सहस्रशः । अस्त्रवीर्य्येण शतधा तैर्मुक्तानहमच्छिदं ।
छित्वा प्रहरणान्येषां ततस्तानपि सर्व्वशः । प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः ।
गाण्डीवाद्धि तदा संख्ये यथा भ्रमरपङ्क्तयः । निष्पतन्ति महाबाणास्तन्मातलिरपूजयत् । १२१२५
तेषामपि तु बाणास्ते तन्मातलिरपूजयत् । अवाकिरन्मां बलवत्तानहं व्यधमं शरैः ।
वध्यमानास्ततस्ते तु निवातकवचाः पुनः । शरवर्षैर्महद्भिर्मां समन्तात् पर्य्यवारयन् ।
शरवेगान्निहत्याहमस्त्रैर्वेगविघातिभिः । ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ।
तेषां छिन्नानि गात्राणि विसृजन्ति स्म शोणितं । प्रावृषीवाभिवृष्टानि शृङ्गाणीव धराभृतां ।
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः । मद्बाणैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः । १२१३०
शतधा भिन्नदेहास्ते क्षीणप्रहरणौजसः । ततो निवातकवचा मामयुध्यन्त मायया ।

इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि निवातकवचवधे सप्तत्यधिकशततोऽध्यायः ॥ १७० ॥

॥ अर्ज्जुन उवाच ॥ ततोऽश्मवर्षं सुमहत् प्रादुरासीत् समन्ततः । नगमात्रैः शिलाखण्डैस्तन्मां दृढमपीडयत् ।
तदहं वज्रसङ्काशैः शरैरिन्द्रास्त्रचोदितैः । अचूर्णयं वेगवद्भिः शतधैकैकमाहवे ।
चूर्ण्यमानेऽश्मवर्षे तु पावकः समजायत । तत्राश्मचूर्णान्यपतन् पावकप्रकरा इव ।
ततोऽश्मवर्षे विहते जलवर्षं महत्तरं । धाराभिरक्षमात्राभिः प्रादुरासीन्ममान्तिके । १२१३५
नभसः प्रच्युता धारास्तिग्मवीर्य्याः सहस्रशः । आवृण्वन् सर्व्वतो व्योम दिशश्चोपदिशस्तथा ।
धाराणाञ्च निपातेन वायोर्विस्फूर्ज्जितेन च । गर्ज्जितेन च दैत्यानां न प्राज्ञायत किञ्चन ।
धारा दिवि च सम्बद्धा वसुधायाञ्च सर्व्वशः । व्यामोहयन्त मां तत्र निपतन्त्योऽनिशं भुवि ।
तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणं । दीप्तं प्राहिणवं घोरमशुष्यत्तेन तज्जलं ।
हतेऽश्मवर्षे च मया जलवर्षे च शोषिते । मुमुचुर्दानवा मायामग्निं वायुञ्च भारत । १२१४०

ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्व्वशः । शैलेन च महास्त्रेण वायोर्व्वेगमधारयं ।
तस्यां प्रतिहतायान्ते दानवा युद्धदुर्म्मदाः । प्राकुर्व्वन् विविधा मायां यौगपद्येन भारत ।
ततो वर्षं प्रादुरभूत् सुमहल्लोमहर्षणं । अस्त्राणां घोररूपाणामम्बरेऽम्बायोस्तथाऽश्मनां ।
सा तु मायामयी वृष्टिः पीडयामास मां युधि । अथ घोरं तमस्तीव्रं प्रादुरासीत् समन्ततः ।
तमसा संवृते लोके घोरेण परुषेण च । हरयो विमुखाश्चासन् प्रास्खलच्चापि मातलिः । १२१४५
हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि । असकृच्चाह मां भीतः क्कासीति भरतर्षभ ।
माञ्च भीराविशत्तीव्रा तस्मिन् विगतचेतसि । स च मां विगतज्ञानः सन्त्रस्तमिदमब्रवीत् ।
सुराणामसुराणाञ्च संग्रामः सुमहानभूत् । अमृतार्थे पुरा पार्थ स च दृष्टो मयाऽनघ ।
शम्बरस्य वधे घोरः संग्रामः सुमहानभूत् । सारथ्यं देवराजस्य तत्रापि कृतवानहं ।
तथैव वृत्रस्य वधे संगृहीता हया मया । वैरोचनेर्महायुद्धं दृष्टञ्चापि सुदारुणं । १२१५०
एते मया महाघोराः संग्रामाः पर्य्युपासिताः । न चापि विगतज्ञानो भूतपूर्व्वोऽस्मि पाण्डव ।
पितामहेन संहारः प्रजानां विहितो ध्रुवं । नहि युद्धमिदं युक्तमन्यत्र जगतः क्षयात् ।
तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना । मोहयिष्यन् दानवानामहं मायाबलं महत् ।
अब्रुवं मातलिं भीतं पश्य मे भुजयोर्ब्बलं । अस्त्राणाञ्च प्रभावं वै धनुषो गाण्डिवस्य च ।
अद्यास्त्रमाययैतेषां मायामेतां सुदारुणां । विनिहन्मि तमश्चोग्रं मा भैः सूत स्थिरो भव । १२१५५
एवमुक्त्वाऽहमसृजमस्त्रमायां नराधिप । मोहनीं सर्व्वभूतानां हिताय त्रिदिवौकसां ।
पीड्यमानासु मायासु तासु तास्वसुरोत्तमाः । पुनर्ब्बहुविधा मायाः प्राकुर्व्वन्नमितौजसः ।
पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः । भवत्यदर्शनो लोकः पुनरप्सु निमज्जति ।
सुसंगृहीतैर्हरिभिः प्रकाशे सति मातलिः । व्यचरत् स्यन्दनाग्र्येण संग्रामे लोमहर्षणे ।
ततः पर्य्यपतन्नुग्रा निवातकवचा मयि । तानहं विवरं दृष्ट्वा प्राहिण्वं यमसादनं । १२१६०
वर्त्तमाने तथा युद्धे निवातकवचान्तके । नापश्यं सहसा सर्व्वान् दानवान् मायया वृतान् ।
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि मायायुद्धे एकसप्तत्यधिकशतोऽध्यायः ॥ १७१ ॥
॥ अर्ज्जुन उवाच ॥ अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया । अदृश्येनास्त्रवीर्य्येण तानप्यहमयोधयं ।
गाण्डीवमुक्ता विशिखाः सम्यगस्त्रप्रचोदिताः । अच्छिन्दन्नुत्तमाङ्गानि यत्र तत्र स्म तेऽभवन् ।
ततो निवातकवचा बध्यमाना मया युधि । संहृत्य मायां सहसा प्राविशन् पुरमात्मनः ।
व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने । अपश्यं दानवांस्तत्र हतान्शतसहस्रशः । १२१६५
विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च । शतशः स्म प्रदृश्यन्ते गात्राणि कवचानि च ।
हयानां नान्तरं ह्यासीत् पदाद्विचलितुं पदं । उत्पत्य सहसा तस्थुरन्तरीक्षगमास्ततः ।
ततो निवातकवचा व्योम संछाद्य केवलं । अदृश्या ह्यत्यवर्त्तन्त विसृजन्तः शिलोच्चयान् ।
अन्तर्भूमिगताश्चान्ये हयानां चरणान्यथ । व्यगृह्णन् दानवा घोरा रथचक्रे च भारत ।

विनिगृह्य हरीनश्वान्रथञ्च मम युध्यतः। सर्व्वतो मामविध्यन्त सरथं धरणीधरैः। १२१७०

पर्व्वतैरुपचीयद्भिः पतमानैस्तथा परैः। स देशो यत्र वर्त्ताम गुहेव समपद्यत।

पर्व्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः। अगच्छं परमामार्त्तिं मातलिस्तदलक्षयत्।

लक्षयित्वा च मां भीतमिदं वचनमब्रवीत्। अर्ज्जुनार्ज्जुन माभैस्त्वं वज्रमस्त्रमुदीरय।

ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदैरयं। देवराजस्य दयितं भीममस्त्रं नराधिप।

अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च। अमुञ्चं वज्रसंस्पर्शानायसान्निशितान् शरान्। १२१७५

ततो मायाश्च ताः सर्व्वा निवातकवचांश्च तान्। ते वज्रचोदिता वाणा वज्रभूताः समाविशन्।

ते वज्रवेगविहता दानवाः पर्व्वतोपमाः। इतरेतरमाश्लिष्य न्यपतन् पृथिवीतले।

अन्तर्भूमौ च येऽगृह्णन् दानवा रथवाजिनः। अनुप्रविश्य तान् वाणाः प्राहिण्वन् यमसादनं।

हतैर्निवातकवचैर्निरस्तैः पर्व्वतोपमैः। समाच्छाद्यत देशः स विकीर्णैरिव पर्व्वतैः।

न हयानां क्षतिः काचिन्न रथस्य न मातलेः। मम चादृश्यत तदा तदद्भुतमिवाभवत्। १२१८०

ततो मां प्रहसन्राजन् मातलिः प्रत्यभाषत। नैतदर्ज्जुन देवेषु त्वयि वीर्य्यं यदीक्ष्यते।

हतेष्वसुरसंघेषु दारास्तेषान्तु सर्व्वशः। प्राक्रोशन्नगरे तस्मिन् यथा शरदि सारसाः।

ततो मातलिना सार्द्धमहन्त्तत् पुरमभ्ययां। त्रासयन्रथघोषेण निवातकवचस्त्रियः।

तान् दृष्ट्वा दशसाहस्रान् मयूरसदृशान्हयान्। रथञ्च रविसङ्काशं प्राद्रवन् गणशः स्त्रियः।

ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः। शिलानामिव शैलेषु पतन्तीनामभूत्तदा। १२१८५

वित्रस्ता दैत्यनार्य्यस्ताः स्वानि वेश्मान्यथाविशन्। बहुरत्नविचित्राणि शातकुम्भमयानि च।

तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमं। विशिष्टं देवनगरादपृच्छं मातलिं ततः।

इदमेवंविधं कस्माद्देवा नावासयन्त्युत। पुरन्दरपुराद्धीदं विशिष्टमुपलक्षये।

॥ मातलिरुवाच ॥ आसीदिदं पुरा पार्थ देवराजस्य नः पुरं। ततो निवातकवचैरितः प्रच्याविताः सुराः।

तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहं। इदं वृतं निवासाय देवेभ्यश्चाभयं युधि। १२१९०

ततः शक्रेण भगवान् स्वयम्भूरिति चोदितः। विधत्तां भगवानन्तमात्मनो हितकाम्यया।

तत उक्तो भगवता दिष्टमत्रेति भारत। भविताऽन्तस्त्वमप्येषां देहेनान्येन शत्रुहन्।

तत एषां बधार्थाय शक्रोऽस्त्राणि ददौ तव। नहि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया।

कालस्य परिणामेन ततस्त्वमिह भारत। एषामन्तकरः प्राप्तस्तत्त्वया च कृतं तथा।

दानवानां विनाशाय अस्त्राणां परमं बलं। ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमं। १२१९५

॥ अर्ज्जुन उवाच ॥ ततः प्रशाम्य नगरं दानवांश्च निहत्य तान्। पुनर्मातलिना सार्द्धमगच्छं देवसद्म तत्।

इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि निवातकवचबधे द्विसप्तत्यधिकशततोऽध्यायः ॥ १७२ ॥

॥ अर्ज्जुन उवाच ॥ निवर्त्तमानेन मया महद्दृष्टं ततोऽपरं। पुरं कामचरं दिव्यं पावकार्कसमप्रभं।

रत्नद्रुममयश्चित्रैः सुस्वरैश्च पतत्रिभिः। पौलोमैः कालकञ्जैश्च नित्यहृष्टैरधिष्ठितं।

गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदं। सर्व्वरत्नमयं दिव्यमद्भुतोपमदर्शनं।

द्रुमैः पुष्पफलोपेतैः सर्व्वरत्नमयैर्वृतं। तथा पतत्रिभिर्द्दिव्यैरुपेतं सुमनोहरैः। १२२००

असुरैर्नित्यमुदितैः शूलर्ष्टिमुषलायुधैः। चापमुद्गरहस्तैश्च स्रग्विभिः सर्व्वतो वृतं।

तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनं। अपृच्छं मातलिं राजन् किमिदं वर्त्ततेऽद्भुतं।

॥ मातलिरुवाच ॥ पुलोमा नाम दैतेयी कालका च महासुरी। दिव्यं वर्षसहस्रन्ते चेरतुः परमं तपः।

तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददद्वरं। अगृह्णीतां वरन्ते तु सुतानामल्पदुःखतां।

अवध्यताञ्च राजेन्द्र सुरराक्षसपन्नगैः। पुरं सुरमणीयञ्च खचरं सुमहाप्रभं। १२२०५

सर्व्वरत्नैः समुदितं दुर्द्धर्षममरैरपि। महर्षियक्षगन्धर्व्वपन्नगासुरराक्षसैः।

सर्व्वकामगुणोपेतं वीतशोकमनामयं। ब्रह्मणा भरतश्रेष्ठ कालकेयकृते कृतं।

तदेतत् खपुरं दिव्यं चरत्यमरवर्ज्जितं। पौलोमाध्युषितं वीर कालकेयैश्च दानवैः।

हिरण्यपुरमित्येवं ख्यायते नगरं महत्। रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः।

त एते मुदिता राजन्नवध्याः सर्व्वदैवतैः। निवसन्त्यत्र राजेन्द्र गतोद्वेगा निरुत्सुकाः। १२२१०

मानुषान्मृत्युरेतेषां निर्द्दिष्टो ब्रह्मणा पुरा। एतानपि रणे पार्थ कालकञ्जान् दुरासदान्।

वज्रास्त्रेण नयस्वाशु विनाशं सुमहाबलान्॥ अर्ज्जुन उवाच॥ सुरासुरैरवध्यांस्तानहं ज्ञात्वा विशाम्पते।

अब्रुवं मातलिं हृष्टो याह्येतत् पुरमञ्जसा। त्रिदशेशद्विषो यावत् क्षयमस्त्रैर्नयाम्यहं।

न कथञ्चिद्धि मे पापा न वध्या ये सुरद्विषः। उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात्।

रथेन तेन दिव्येन हरियुक्तेन मातलिः। ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः। १२२१५

समुत्पेतुर्महावेगा रथानास्थाय दंशिताः। ततो नालीकनाराचैर्भल्लशक्त्यृष्टितोमरैः।

अभ्यघ्नन् दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः। तदहं शरवर्षेण महता प्रत्यवारयं।

शस्त्रवर्षं महद्राजन् विद्याबलमुपाश्रितः। व्यामोहयञ्च तान् सर्व्वान् रथमार्गैश्चरन् रणे।

तेऽन्योन्यमभिसम्मूढाः पातयन्ति स्म दानवान्। तेषामेवं विमूढानामन्योन्यमभिधावतां।

शिरांसि विशिखैर्दीप्तैर्व्यहनं शतशो रणे। ते वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः। १२२२०

खमुत्पेतुः सनगरा मायामास्थाय दानवीं। ततोऽहं शरवर्षेण महता कुरुनन्दन।

मार्गमावृत्य दैत्यानां गतिं चैषामवारयं। तत्पुरं खचरं दिव्यं कामगं सूर्य्यसप्रभं।

दैतेयैर्व्वरदानेन धार्य्यते स्म यथासुखं। अन्तर्भूमौ निपतितं पुनरूर्द्ध्वं प्रतिष्ठते।

पुनस्तिर्य्यक् प्रयात्याशु पुनरप्सु निमज्जति। अमरावतिसङ्काशं तत्पुरं कामगं महत्।

अहमस्त्रैर्बहुविधैः प्रत्यगृह्णं परन्तप। ततोऽहं शरजालेन दिव्यास्त्रमुदितेन च। १२२२५

न्यगृह्णं सह दैतेयैस्तत्पुरं पुरुषर्षभ। विक्षतं चायसैर्बाणैर्मज्जितैरजिह्मगैः।

महीमभ्यपतद्राजन् प्रभग्नं पुरमासुरं। ते वध्यमाना मद्बाणैर्व्वज्रवेगैरयस्मयैः।

पर्य्यभ्रमन्त वै राजन्नसुराः कालचोदिताः। ततो मातलिरप्याशु पुरस्तान्निपतन्निव।

महीमवातरन् क्षिप्रं रथेनादित्यवर्चसा। ततो रथसहस्राणि षष्टिस्तेषाममर्षिणां।
युयुत्सूनां मया सार्द्धं पर्य्यवर्त्तन्त भारत। तान्यहं निशितैर्व्वाणैर्व्यधमं गार्द्धराजितैः। १२२३०
ते युद्धे संन्यवर्त्तन्त समुद्रस्य यथोर्म्मयः। नेमे शक्या मनुष्येण युद्धेनेति प्रचिन्त्य तत्।
ततोऽहमानुपूर्व्येण दिव्यान्यस्त्राण्ययोजयं। ततस्तानि सहस्राणि रथिनां चित्रयोधिनां।
अस्त्राणि मम दिव्यानि प्रत्यघ्नञ्छनकैरिव। रथमार्गान् विचित्रांस्ते विचरन्तो महाबलाः।
प्रत्यदृश्यन्त संग्रामे शतशोऽथ सहस्रशः। विचित्रमुकुटापीडा विचित्रकवचध्वजाः।
विचित्राभरणाश्चैव नन्दयन्तीव मे मनः। अहन्तु शरवर्षैस्तानस्त्रप्रमुदितैरणे। १२२३५
नाशक्नुवं पीडयितुं ते तु मां प्रत्यपीडयन्। तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि।
व्यथितोऽस्मि महायुद्धे भयं चागान्महन्मम। ततोऽहं देवदेवाय रुद्राय प्रयतो रणे।
स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समचोदयं। यत्तद्रौद्रमिति ख्यातं सर्व्वामित्रविनाशनं।
ततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनं। त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्द्धजं।
लेलिहानैर्महानागैः कृतचीडममित्रहन्। विभीस्ततस्तदस्त्रन्तु घोरं रौद्रं सनातनं। १२२४०
दृष्ट्वा गाण्डीवसंयोगमानीय भरतर्षभ। नमस्कृत्वा त्रिनेत्राय शर्व्वायामिततेजसे।
मुक्तवान् दानवेन्द्राणामभावाय परन्तप। मुक्तमात्रे ततस्तस्मिन् रूपाण्यासन् सहस्रशः।
मृगाणामथ सिंहानां व्याघ्राणाञ्च विशाम्पते। ऋक्षाणां महिषाणाञ्च पन्नगानां तथा गवां।
शरभाणां गजानाञ्च वानराणाञ्च संघशः। ऋषभाणां वराहाणां मार्ज्जाराणां तथैव च।
शालावृकाणां प्रेतानां भुरुण्डानाञ्च सर्व्वशः। गृध्राणां गरुडानाञ्च चमराणां तथैव च। १२२४५
देवानाञ्च ऋषीणाञ्च गन्धर्व्वाणाञ्च सर्व्वशः। पिशाचानां सयक्षाणां तथैव च सुरद्विषां।
गुह्यकानाञ्च संग्रामे नैर्ऋतानां तथैव च। झषाणां गजवक्त्राणामुलूकानां तथैव च।
मीनवाजिस्वरूपाणां नानाशस्त्रासिपाणिनां। तथैव यातुधानानां गदामुद्गरधारिणां।
एतैश्चान्यैश्च बहुभिर्नानारूपधरैस्तथा। सर्व्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्ज्जिते।
त्रिशिरोभिश्चतुर्द्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः। अनेकरूपसंयुक्तैर्मांसमेदोवसाशिभिः। १२२५०
अभीक्ष्णं वध्यमानास्ते दानवा नाशमागताः। अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः।
अद्रिसारमयैश्चान्यैर्व्वाणैररिनिवर्हणैः। न्यहनं दानवान् सर्व्वान् मुहूर्त्तेनैव भारत।
गाण्डीवास्त्रप्रणुन्नांस्तान् गतासून्नभसश्च्युतान्। दृष्ट्वाऽहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे।
तथा रौद्रास्त्रनिष्पिष्टान् दिव्याभरणभूषितान्। निशाम्य परमं हर्षमगमद्देवसारथिः।
तदसह्यं कृतं कर्म्म देवैरपि दुरासदं। दृष्ट्वा मां पूजयामास मातलिः शक्रसारथिः। १२२५५
उवाच वचनञ्चेदं प्रीयमाणः कृताञ्जलिः। सुरासुरैरसह्यं हि कर्म्म यत् साधितं त्वया।
न ह्येतत् संयुगे कर्त्तुमपि शक्तः सुरेश्वरः। सुरासुरैरवध्यं हि पुरमेतत् खगं महत्।
त्वया विमथितं वीर स्ववीर्य्यतपसो बलात्। विध्वस्ते खपुरे तस्मिन् दानवेषु हतेषु च।

विनदन्त्यः स्त्रियः सर्व्वा निष्पेतुर्नगराद्बहिः । प्रकीर्णकेश्यो व्यथिताः कुरर्य्य इव दुःखिताः ।
पेतुः पुत्त्रान् पितॄन् भ्रातॄन् शोचमाना महीतले । रुदन्त्यो दीनकण्ठास्ता विनदन्त्यो हतेश्वराः । १२२६०
उरांसि परिनिघ्नन्त्यो विस्रस्तस्रग्विभूषणाः । तच्छोकयुक्तमश्रीकं दुःखदैन्यसमाहतं ।
न बभौ दानवपुरं हतत्विट्कं हतेश्वरं । गन्धर्व्वनगराकारं हतनागमिव ह्रदं ।
शुष्कवृक्षमिवारण्यमदृश्यमभवत् पुरं । मान्तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्म्माणमाहवात् । हिरण्यपुरमुत्सृज्य निहत्य च महासुरान् ।
निवातकवचांश्चैव ततोऽहं शक्रमागमं । मम कर्म्म च देवेन्द्रं मातलिर्व्विस्तरेण तत् । १२२६५
सर्व्वं विश्रावयामास यथाभूतं महाद्युते । हिरण्यपुरघातञ्च मायानाञ्च निवारणं ।
निवातकवचानाञ्च वधं सङ्ख्ये महौजसां । तच्छ्रुत्वा भगवान् प्रीतः सहस्राक्षः पुरन्दरः ।
मरुद्भिः सहितः श्रीमान् साधु साध्वित्यथाऽब्रवीत् । ततो मां देवराजो वै समाश्वास्य पुनः पुनः ।
अब्रवीद्विबुधैः सार्द्धमिदं सुमधुरं वचः । अतिदेवासुरं कर्म्म कृतमेव त्वया रणे ।
गुर्व्वर्थश्च कृतः पार्थ महाशत्रून् घ्नता मम । एवमेव सदा भाव्यं स्थिरेणाजौ धनञ्जय । १२२७०
असंमूढेन चास्त्राणां कर्त्तव्यं प्रतिपादनं । अविषह्यो रणे हि त्वं देवदानवराक्षसैः ।
सयक्षासुरगन्धर्व्वैः सपक्षिगणपन्नगैः । वसुधाञ्चापि कौन्तेय त्वद्बाहुबलनिर्ज्जितां ।
पालयिष्यति धर्म्मात्मा कुन्तीपुत्त्रो युधिष्ठिरः ।
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि हिरण्यपुरदैत्यवधे त्रिसप्तत्यधिकशतोऽध्यायः ॥ १७३ ॥
॥ अर्ज्जुन उवाच ॥ ततो मामभिविश्वस्तं संरूढशरविक्षतं । देवराजोऽनुगृह्येदं काले वचनमब्रवीत् ।
दिव्यान्यस्त्राणि सर्व्वाणि त्वयि तिष्ठन्ति भारत । न त्वाऽभिभवितुं शक्तो मानुषो भुवि कश्चन । १२२७५
भीष्मो द्रोणः कृपः कर्णः शकुनिः सह राजभिः । संग्रामस्थस्य ते पुत्त्र कलां नार्हन्ति षोडशीं ।
इदञ्च मे तनुत्राणं प्रायच्छन्मघवान् प्रभुः । अभेद्यं कवचं दिव्यं स्रजञ्चैव हिरण्मयीं ।
देवदत्तञ्च मे शङ्खं पुनः प्रादान्महारवं । दिव्यञ्चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ।
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च । प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ।
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप । इन्द्रस्य भवने पुण्ये गन्धर्व्वशिशुभिः सह । १२२८०
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह । समयोऽर्ज्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ।
एवमिन्द्रस्य भवने पञ्चवर्षाणि भारत । उषितानि मया राजन् स्मरता द्यूतजं कलिं ।
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितं । गन्धमादनपादस्य पर्व्वतस्यास्य मूर्द्धनि ।
॥ युधिष्ठिर उवाच ॥ दिष्ट्या धनञ्जयास्त्राणि त्वया प्राप्तानि भारत । दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ।
दिष्ट्या च भगवान् स्थाणुर्देव्या सह परन्तप । साक्षाद्दृष्टः सुयुद्धेन तोषितश्च त्वयाऽनघ । १२२८५
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ । दिष्ट्या वर्द्धामहे पार्थ दिष्ट्याऽसि पुनरागतः ।

अद्य कृत्स्नां महीं देवीं विजितां पुरमालिनीम्। मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान्।
इच्छामि तानि चास्त्राणि द्रष्टुं दिव्यानि भारत। यैस्तथावीर्य्यवन्तस्ते निवातकवचा हताः।
॥ अर्ज्जुन उवाच ॥ श्वः प्रभाते भवान् द्रष्टा दिव्यान्यस्त्राणि सर्व्वशः। निवातकवचा घोरा यैर्मया विनिपातिताः।
॥ वैशम्पायन उवाच ॥ एवमागमनं तत्र कथयित्वा धनञ्जयः। भ्रातृभिः सहितः सर्व्वैरजनीं तामुवास ह। १२२९०
इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि अर्ज्जुनदर्शने चतुःसप्तत्यधिकशततोऽध्यायः॥ १७४॥
॥ वैशम्पायन उवाच ॥ तस्यां रात्र्यां व्यतीतायां धर्म्मराजो युधिष्ठिरः। उत्थायावश्यकार्य्याणि कृतवान् भ्रातृभिः सह।
ततः सञ्चोदयामास सोऽर्ज्जुनं मातृनन्दनं। दर्शयास्त्राणि कौन्तेय यैर्ज्जिता दानवास्त्वया।
ततो धनञ्जयो राजन् देवैर्द्दत्तानि पाण्डवः। अस्त्राणि तानि दिव्यानि दर्शयामास भारत।
यथान्यायं महातेजाः शौचं परममास्थितः। गिरिकूवरपादाक्षं शुभवेणुत्रिवेणुमत्।
पार्थिवं रथमास्थाय शोभमानो धनञ्जयः। दिव्येन संवृतस्तेन कवचेन सुवर्च्चसा। १२२९५
धनुरादाय गाण्डीवं देवदत्तं स वारिजं। शोशुभ्यमानः कौन्तेय आनुपूर्व्व्या महाभुजः।
अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे। अथ प्रयोक्ष्यमाणेषु दिव्येष्वस्त्रेषु तेषु वै।
समाक्रान्ता मही पद्भ्यां समकम्पत सद्रुमा। क्षुभिताः सरितश्चैव तथैव च महोदधिः।
शैलाश्चापि व्यदीर्य्यन्त न ववौ च समीरणः। न बभासे सहस्रांशुर्न जज्वाल च पावकः।
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथञ्चन। अन्तर्भूमिगता ये च प्राणिनो जनमेजय। १२३००
पीड्यमानाः समुत्थाय पाण्डवं पर्य्यवारयन्। वेपमानाः प्राञ्जलयस्ते सर्व्वे विकृताननाः।
दह्यमानास्तदाऽस्त्रैस्ते याचन्ति स्म धनञ्जयं। ततो ब्रह्मर्षयश्चैव सिद्धा ये च महर्षयः।
जङ्गमानि च भूतानि सर्व्वाण्येवावतस्थिरे। देवर्षयश्च प्रवरास्तथैव च दिवौकसः।
यक्षराक्षसगन्धर्व्वास्तथैव च पतत्त्रिणः। खेचराणि च भूतानि सर्व्वाण्येवावतस्थिरे।
ततः पितामहश्चैव लोकपालाश्च सर्व्वशः। भगवांश्च महादेवः सगणोऽभ्याययौ तदा। १२३०५
ततो वायुर्म्महाराज दिव्यैर्म्माल्यैः समन्वितः। अभितः पाण्डवञ्चित्रैरवचक्रे समन्ततः।
जगुश्च गाथा विविधा गन्धर्व्वाः सुरचोदिताः। ननृतुः संघशश्चैव राजन्नप्सरसां गणाः।
तस्मिंश्च तादृशे काले नारदश्चोदितः सुरैः। आगम्याह वचः पार्थं श्रवणीयमिदं नृप।
अर्ज्जुनार्ज्जुन मायुङ्क्ष्व दिव्यान्यस्त्राणि भारत। नैतानि निरधिष्ठाने प्रयुज्यन्ते कथञ्चन।
अधिष्ठाने नचानार्त्तः प्रयुञ्जीत कदाचन। प्रयोगेषु महान् दोषो ह्यस्त्राणां कुरुनन्दन। १२३१०
एतानि रक्ष्यमाणानि धनञ्जय यथागमं। बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः।
अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव। भवन्ति स्म विनाशाय मैवं भूयः कृथाः क्वचित्।
अजातशत्रो त्वञ्चैव द्रक्ष्यसे तानि संयुगे। योज्यमानानि पार्थेन द्विषतामवमर्दने।
॥ वैशम्पायन उवाच ॥ निवार्य्याथ ततः पार्थं सर्व्वे देवा यथागतं। जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ।

तेषु सर्व्वेषु कौरव्य प्रतियातेषु पाण्डवाः । तस्मिन्नेव वने हृष्टास्ते ऊषुः सह कृष्णया । १२२१५

इति श्रीमहाभारते आरण्यपर्व्वणि निवातकवचयुद्धपर्व्वणि अस्त्रदर्शने पञ्चसप्तत्यधिकशतोऽध्यायः समाप्तञ्च निवातकवचयुद्धपर्व्व ॥ १७५ ॥

## ॥ अथ आजगरपर्व्व ॥ ९ ॥

॥ जनमेजय उवाच ॥ तस्मिन् कृतास्त्रे रथिनां प्रवीरे प्रत्यागते भवनाद्वृत्रहन्तुः । अतः परं किमकुर्व्वन्त पार्थाः समेत्य शूरेण धनञ्जयेन ।

॥ वैशम्पायन उवाच ॥ वनेषु तेष्वेव तु ते नरेन्द्राः सहार्ज्जुनेनेन्द्रसमेन वीराः । तस्मिंश्च शैलप्रवरे सुरम्ये धनेश्वराक्रीडगता विजह्रुः ।

वेश्मानि तान्यप्रतिमानि पश्यन् क्रीडांश्च नानाद्रुमसन्निबद्धाः । चचार धन्वी बहुधा नरेन्द्रः सोऽस्त्रेषु यत्तः सततं किरीटी

अवाप्य वासं नरदेवपुत्त्राः प्रसादजं वैश्रवणस्य राज्ञः । न प्राणिनां ते स्पृहयन्ति राजञ्छिवश्च कालः स बभूव तेषां ।

समेत्य पार्थेन यथैकरात्रमूषुः समास्तत्र तदा चतस्रः । पूर्व्वाश्च षट् ता दश पाण्डवानां शिवा बभूवुर्व्वसतां वनेषु । १२२२०

ततोऽब्रवीद्वायुसुतस्तरस्वी जिष्णुश्च राजानमुपोपविश्य । यमौ च वीरौ सुरराजकल्पावेकान्तमास्थाय हितं प्रियञ्च ।

तव प्रतिज्ञां कुरुराज सत्यां चिकीर्षमाणास्त्वदनुप्रियञ्च । ततो न गच्छाम वनान्यपास्य सुयोधनं सानुचरं निहन्तुं ।

एकादशं वर्षमिदं वसामः सुयोधनेनात्तसुखाः सुखार्हाः । तं वञ्चयित्वाऽधमबुद्धिशीलमज्ञातवासं सुखमाप्नुयामः ।

तवाज्ञया पार्थिव निर्व्विशङ्का विहाय मानं विचरन् वनानि । समीपवासेन विलोभितास्ते ज्ञास्यन्ति नास्मानपकृष्टदेशान् ।

सम्वत्सरं तच्च विहृत्य गूढं नराधमं तं सुखमुद्धरेम । निर्य्यात्य वैरं सफलं सपुष्पं तस्मै नरेन्द्राधमपूरुषाय । १२२२५

सुयोधनायानुचरैर्वृताय ततो महीमावह धर्म्मराज । स्वर्गोपमं देशमिमं चरद्भिः शक्यो विहन्तुं नरदेव शोकः ।

कीर्त्तिस्तु ते भारत पुण्यगन्धा नश्येद्धि लोकेषु चराचरेषु । तत्प्राप्य राज्यं कुरुपुङ्गवानां शक्यं महत्प्राप्तुमथ क्रियाश्च ।

इदन्तु शक्यं सततं नरेन्द्र प्राप्तुं त्वया यल्लभसे कुबेरात् । कुरुष्व बुद्धिं द्विषतां वधाय कृतागसां भारत निग्रहे च ।

तेजस्तवोग्रं न सहेत राजन् समेत्य साक्षादपि वज्रपाणिः । नहि व्यथां जातु करिष्यतस्तौ समेत्य देवैरपि धर्म्मराज ।

तवार्थसिद्ध्यर्थमभिप्रवृत्तौ सुपर्णकेतुश्च शिनेश्च नप्ता । तथैव कृष्णोऽप्रतिमो बलेन तथैव चाहं नरदेववर्य्य । १२२३०

तवार्थसिद्ध्यर्थमभिप्रपन्नो यथैव कृष्णः सह यादवैस्तैः । तथैव चाहं नरदेववर्य्य यमौ च वीरौ कृतिनौ प्रयोगे ।

त्वदर्थयोगप्रभवप्रधानाः शमं करिष्याम परान् समेत्य ॥ वैशम्पायन उवाच ॥ ततस्तदाज्ञाय मतं महात्मा तेषाञ्च धर्म्मस्य सुतो वरिष्ठः ।

प्रदक्षिणं वैश्रवणाधिवासं चकार धर्म्मार्थविदुत्तमौजाः । आमन्त्र्य वेश्मानि नदीः सरांसि सर्व्वाणि रक्षांसि च धर्म्मराजः ।

यथागतं मार्गमवेक्षमाणः पुनर्गिरिञ्चैव निरीक्षमाणः । ततो महात्मा स विशुद्धबुद्धिः संप्रार्थयामास नगेन्द्रवर्य्यं ।

समाप्तकर्म्मा सहितः सुहृद्भिर्ज्जित्वा सपत्नान् प्रतिलभ्य राज्यं । शैलेन्द्र भूयस्तपसे जितात्मा द्रष्टा तवास्मीति मतिञ्चकार । १२२३५

वृतश्च सर्व्वैरनुजैर्द्विजैश्च तेनैव मार्गेण पतिः कुरूणां । उवाह चैतान् गणशस्तथैव घटोत्कचः पर्व्वतनिर्झरेषु ।

तान् प्रस्थितान् प्रीतमना महर्षिः पितेव पुत्त्राननुशिष्य सर्व्वान् । स लोमशः प्रीतमना जगाम दिवौकसां पुण्यतमं निवासं ।

तेनार्ष्टिषेणेन तथाऽनुशिष्टास्तीर्थानि रम्याणि तपोवनानि । महान्ति चान्यानि सरांसि पार्थाः संपश्यमानाः प्रययुर्नराग्र्याः ।

इति श्रीमहाभारते आरण्यपर्व्वणि आजगरपर्व्वणि लोमशगमने षट्सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥

॥ वैशम्पायन उवाच । नगोत्तमं प्रस्रवणैरुपेतं दिशाङ्गजैः किन्नरपक्षिभिश्च । सुखं निवासं जहतां हि तेषां न प्रीतिरासीद्भरतर्षभाणां ।

ततस्तु तेषां पुनरेव हर्षः कैलासमालोक्य महान् बभूव । कुवेरकान्तं भरतर्षभाणां महीधरं वारिधरप्रकाशं । १२२४०

समुच्छ्रयान् पर्व्वतसन्निरोधान् गोष्ठान् हरीणां गिरिसेतुमालाः । बहून् प्रपातांश्च समीक्ष्य वीराः स्थलानि निम्नानि च तत्र तत्र ।

तथैव चान्यानि महावनानि मृगद्विजानेकपसेवितानि । आलोकयन्तोऽभिययुः प्रतीतास्ते धन्विनः खड्गधरा नराग्र्याः ।

वनानि रम्याणि नदीः सरांसि गुहा गिरीणां गिरिगह्वराणि । एते निवासाः सततं बभूवुर्निशानिशं प्राप्य नरर्षभाणां ।

ते दुर्गवासं बहुधा निरुष्य व्यतीत्य कैलासमचिन्त्यरूपं । आसेदुरत्यर्थमनोरमन्ते तमाश्रमाग्र्यं वृषपर्व्वणस्तु ।

समेत्य राज्ञा वृषपर्व्वणा ते प्रत्यर्च्चितास्तेन च वीतमोहाः । शशंसिरे विस्तरशः प्रवासं गिरौ यथावद्वृषपर्व्वणस्ते । १२२४५

सुखोषितास्तस्य त एकरात्रं पुण्याश्रमे देवमहर्षिजुष्टे । अभ्याययुस्ते वदरीं विशालां सुखेन वीराः पुनरेव वासं ।

ऊषुस्ततस्तत्र महानुभावा नारायणस्थानगताः समग्राः । कुवेरकान्तां नलिनीं विशोकाः संपश्यमानाः सुरसिद्धजुष्टां ।

तास्राथ दृष्ट्वा नलिनीं विशोकाः पाण्डोः सुताः सर्व्वनरप्रधानाः । ते रेमिरे नन्दनवासमेत्य द्विजर्षयो वीतमला यथैव ।

ततः क्रमेणोपययुर्नृवीरा यथाजवेनैव यथासमग्राः । विहृत्य मासं सुखिनो वदर्य्यां किरातराज्ञो विषयं सुबाहोः ।

चीनांस्तुषारान् दरदांश्च सर्व्वान् देशान् कुलिन्दस्य च भूरिरत्नान् । अतीत्य दुर्गं हिमवत् प्रदेशं पुरं सुबाहोर्ददृशुर्नृवीराः । १२२५०

श्रुत्वा च तान् पार्थिवपुत्त्रपौत्त्रान् प्राप्तान् सुबाहुर्व्विषये समग्रान् । प्रत्युद्ययौ प्रीतियुतः स राजा तञ्चाभ्यनन्दन् वृषभाः कुरूणां ।

समेत्य राज्ञा तु सुबाहुना ते सूतैर्व्विशोकप्रमुखैश्च सर्व्वे । महेन्द्रसेनैः परिचारकैश्च पौरोगवैर्य्यै च महानसस्थाः ।

सुखोसितास्तत्र त एकरात्रं सूतान् समादाय रथांश्च सर्व्वान् । घटोत्कचं सानुचरं विसृज्य ततोऽभ्ययुर्यामुनमद्रिराजं ।

तस्मिन् गिरौ प्रस्रवणोपपन्ने हिमोत्तरीयारुणपाण्डुसानौ । विशाखयूपं समुपेत्य चक्रुस्तदा निवासं पुरुषप्रवीराः ।

वराहनानामृगपक्षिजुष्टं महावनञ्चैत्ररथप्रकाशं । शिवेन यात्वा मृगयाप्रधानाः सम्वत्सरं तत्र वने विजह्रुः । १२२५५

तत्राससादातिवलं भुजङ्गं क्षुधार्दितं मृत्युमिवोग्ररूपं । वृकोदरः पर्व्वतकन्दरायां विषादमोहव्यथितान्तरात्मा ।

द्वीपोऽभवद्यत्र वृकोदरस्य युधिष्ठिरो धर्म्मभृतां वरिष्ठः । अमोचयद्यस्तमनन्ततेजा ग्राहेण संवेष्टितसर्व्वगात्रं ।

ते द्वादशं वर्षमुपोपयातं वने विहर्त्तुं कुरवः प्रतीताः । तस्माद्वनाच्चैत्ररथप्रकाशाच्छ्रिया ज्वलन्तस्तपसा च युक्ताः ।

ततश्च यात्वा मरुधन्वपार्श्वं सदाधनुर्व्वेदरतिप्रधानाः । सरस्वतीमेत्य निवासकामाः सरस्ततो द्वैतवनं प्रतीयुः ।

समीक्ष्य तान् द्वैतवने निविष्टान् निवासिनस्तत्र ततोऽभिजग्मुः । तपोदमाचारसमाधियुक्तास्तृणोदपात्राहरणाश्मकुट्टाः । १२२६०

प्लक्षाक्षरौहीतकवेतसाश्च तथा वदर्य्यः खदिराः शिरीषाः । विल्वेङ्गुदाः पीलुसमीकरीराः सरस्वतीतीररुहा बभूवुः ।

ता यक्षगन्धर्व्वमहर्षिकान्तामगारभूतामिव देवतानां । सरस्वतीं प्रीतियुताश्चरन्तः सुखं विजह्रुर्नरदेवपुत्त्राः ।

इति श्रीमहाभारते आरण्यपर्व्वणि आजगरपर्व्वणि पुनर्द्वैतवनप्रवेशे सप्तसप्तत्यधिकशततोऽध्यायः ॥ १७७ ॥

॥ जनमेजय उवाच ॥ कथं नागायुतप्राणो भीमो भीमपराक्रमः । भयमाहारयत्तीव्रं तस्मादजगरान्मुने ।

पौलस्त्यं धनदं युद्धे च आह्वयति दर्पितः । महिमा कदनं तत्र निहता यक्षराक्षसाः।
तं शंससि भयाविष्टमापन्नमरिसूदनं । एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे । १२२६५
॥ वैशम्पायन उवाच ॥ बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनां । आसमागमाद्राजन् राजर्षेर्वृषपर्व्वणः।
यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः । ददर्श तद्वनं रम्यं देवगन्धर्व्वसेवितं ।
स ददर्श शुभान् देशान् गिरेर्हिमवतस्तदा । देवर्षिसिद्धचरितानप्सरोगणसेवितान् ।
चकोरैश्चक्रवाकैश्च पक्षिभिर्जीवजीवकैः । कोकिलैर्भृङ्गराजैश्च तत्र तत्र निनादितान् ।
नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलैः । उपेतान् बहुलच्छायैर्मनोनयननन्दनैः । १२२७०
स सम्पश्यन् गिरिनदीर्वैदूर्य्यमणिसन्निभैः । सलिलैर्हिमसंस्पर्शैर्हंसकारण्डवाकुलैः ।
वनानि देवदारूणां मेघानामिव वागुराः । हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ।
मृगयां परिधावन् स समेषु मरुधन्वसु । विध्यन् मृगाञ्छरैः शुद्धैश्चचार सुमहाबलः ।
भीमसेनस्तु विख्यातो महान्तं दंष्ट्रिणं बलात् । निघ्नन्नागशतप्राणो वने तस्मिन् महाभुजः ।
मृगाणां सवराहाणां महिषाणां महाभुजः । विनिघ्नंश्च तथैव भीमो भीमपराक्रमः । १२२७५
स मातङ्गशतप्राणो मनुष्यशतवारणः । सिंहशार्दूलविक्रान्तो वने तस्मिन् महाबलः ।
वृक्षानुत्पाटयामास तरसा वै बभञ्ज च । पृथिव्याश्च प्रदेशान् वै नादयंश्च वनानि च ।
पर्व्वताग्राणि वै मृद्गन्नादयानश्च विस्मरः । प्रक्षिपन् पादपांश्चापि नादेनापूरयन् महीं ।
वेगेन न्यपतद्भीमो निर्भयश्च पुनःपुनः । आस्फोटयन् क्ष्वेडयंश्च तलतालांश्च वादयन् ।
चिरं सम्बद्धदर्प्पस्तु भीमसेनो वने तदा । गजेन्द्राश्च महाघस्य मृगेन्द्राश्च महाबलाः । १२२८०
भीमसेनस्य नादेन व्यमुञ्चन्त गुहा भयात् । क्वचित् प्रधावंस्तिष्ठंश्च क्वचिच्चोपविशंस्तथा ।
मृगप्रेप्सुर्महारौद्रे वने चरति निर्भयः । स तत्र मनुजव्याघ्रो वने वनचरोपमः ।
पद्भ्यामपि समापेदे भीमसेनो महाबलः । स प्रविष्टो महारण्ये नादाञ्चरति चाद्भुतान् ।
त्रासयन् सर्व्वभूतानि महाबलपराक्रमः । ततो भीमस्य शब्देन भीताः सर्प्पा गुहाश्रयाः ।
अतिक्रान्तस्तु वेगेन जगामानुसृतं शनैः । ततोऽमरवरप्रख्यो भीमसेनो महाबलः । १२२८५
स ददर्श महाकायं भुजङ्गं लोमहर्षणं । गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरं ।
पर्व्वताभोगवर्ष्माणमतिकायं महाबलं । चित्राङ्गमङ्गैश्चित्रैश्च हरिद्रासदृशच्छविं ।
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता । दीप्ताक्षेणातिताम्रेण लिहन्तं सृक्किणी मुहुः ।
त्रासनं सर्व्वभूतानां कालान्तकयमोपमं । निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिव स्थितं ।
स भीमं सहसाऽभ्येत्य पृदाकुः कुपितो भृशं । जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् । १२२९०
तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा । संज्ञा मुमोह सहसा वरदानेन तस्य हि ।
दशनागसहस्राणि धारयन्ति हि यद्बलं । तद्बलं भीमसेनस्य भुजयोरसमं परैः ।
स तेजस्वी तथा तेन भुजगेन वशीकृतः । विस्फुरन् शनकैर्भीमो न शशाक विचेष्टितुं ।

नागायुतसमप्राणः सिंहस्कन्धो महाभुजः । गृहीतो व्यसनं प्राप्तः स्वं वरदानविमोहितः ।
स हि प्रयत्नमकरोत्तीव्रमात्मविमोक्षणे । न चैनमशकद्वीरः कथञ्चित् प्रतिबाधितुं । १२३९५

इति श्रीमहाभारते आरण्यपर्व्वणि आजगरपर्व्वणि भीमस्याजगरग्रहणे अष्टसप्तत्यधिकशतोऽध्यायः ॥ १७८ ॥

॥ वैशम्पायन उवाच ॥ स भीमसेनस्तेजस्वी तथा सर्प्पवशङ्गतः । चिन्तयामास सर्प्पस्य वीर्य्यमत्यद्भुतं महत् ।
उवाच च महासर्प्पं कामया ब्रूहि पन्नग । कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि ।
पाण्डवो भीमसेनोऽहं धर्म्मराजादनन्तरः । नागायुतसमप्राणस्त्वया नीतः कथं वशं ।
सिंहाः केशरिणो व्याघ्रा महिषा वारणास्तथा । समागताश्च बहुशो निहताश्च मया युधि ।
राक्षसाश्च पिशाचाश्च पन्नगाश्च महाबलाः । भुजवेगमशक्ता मे सोढुं पन्नगसत्तम । १२४००
किन्नु विद्याबलं किन्नु वरदानमथो तव । उद्योगमपि कुर्व्वाणो वशगोऽस्मि कृतस्त्वया ।
असत्यो विक्रमो नृणामिति मे धीयते मतिः । यथेदं मे त्वया नाग बलं प्रतिहतं महत् ।
॥ वैशम्पायन उवाच ॥ इत्येवंवादिनं वीरं भीममक्लिष्टकारिणं । भोगेन महता गृह्य समन्तात् पर्य्यवेष्टयत् ।
निगृह्यैनं महाबाहुं ततः स भुजगस्तदा । विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ।
दिष्ट्या त्वं क्षुधितस्याद्य देवैर्भक्षो महाभुज । दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनां । १२४०५
यथा त्विदं मया प्राप्तं सर्प्परूपमरिन्दम । तथाऽवश्यं मया ख्याप्यं तवाद्य शृणु सत्तम ।
इमामवस्थां सम्प्राप्तो ह्यहं कोपान्महर्षिणां । शापस्यान्तं परिप्रेप्सुः सर्व्वं तत् कथयामि ते ।
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः । तवैव पूर्व्वः पूर्व्वेषामायोर्व्वंशकरः सुतः ।
सोऽहं शापादगस्त्यस्य ब्राह्मणानवमन्य च । इमामवस्थामापन्नः पश्य दैवमिदं मम ।
त्वाञ्चेदवध्यं दायादमतीव प्रियदर्शनं । अहमद्योपयोक्ष्यामि विधानं पश्य यादृशं । १२४१०
नहि मे मुच्यते कश्चित् कथञ्चित् ग्रहणं गतः । गजो वा महिषो वाऽपि षष्ठे काले नरोत्तम ।
नासि केवलसर्प्पेण तिर्य्यग्योनिषु वर्त्तता । गृहीतः कौरवश्रेष्ठ वरदानमिदं मम ।
पतता हि विमानाग्रान्मया शक्रासनाद्द्रुतं । कुरु शापान्तमित्युक्तो भगवान् मुनिसत्तमः ।
स मामुवाच तेजस्वी कृपयाऽभिपरिप्लुतः । मोक्षस्ते भविता राजन् कस्माच्चित् कालपर्य्ययात् ।
ततोऽस्मि पतितो भूमौ नच मामजहात् स्मृतिः । स्मार्त्तमस्ति पुराणं मे यथैवाधिगतं तथा । १२४१५
यस्तु ते व्याहृतान् प्रश्नान् प्रतिब्रूयाद्विभागवित् । स त्वं मोचयिता शापादिति मामब्रवीदृषिः ।
गृहीतस्य त्वया राजन् प्राणिनोऽपि बलीयसः । सत्त्वभ्रंशोऽधिकस्यापि सर्व्वस्याशु भविष्यति ।
इह चाप्यहमश्रौषं वचस्तेषां दयावतां । मयि सञ्जातहार्द्दानामथ तेऽन्तर्हिता द्विजाः ।
सोऽहं परमदुष्कर्म्मा वसामि निरये ऽशुचौ । सर्प्पयोनिमिमां प्राप्य कालाकाङ्क्षी महाद्युते ।
तमुवाच महाबाहुर्भीमसेनो भुजङ्गमं । नच कुप्ये महासर्प्प नचात्मानं विगर्हये । १२४२०
यस्मादभावी भावी वा मनुष्यः सुखदुःखयोः । आगमे यदि वाऽपाये न तत्र ग्लपयेन्मनः ।
दैवं पुरुषकारेण को वञ्चयितुमर्हति । दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ।

यस्य दैवोपपाताद्धि भुजयोर्बलमायतं । इमामवस्थां सम्प्राप्तमनिमित्तमिदाय मां ।
किन्तु नाद्यानुशोचामि तथात्मानं विनाशितं । यथा तु विपिने न्यस्तान् भ्रातृन् राज्यपरिच्युतान् ।
हिमवन्तञ्च दुर्गोऽयं यक्षराक्षससङ्कुलः । मां समुद्वीक्षमाणास्ते प्रपतिष्यन्ति विह्वलाः । १२८२५
विनष्टमथ मां श्रुत्वा भविष्यन्ति निरुद्यमाः । धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ।
अथवा नार्ज्जुनो धीमान् विषादमुपयास्यति । सर्व्वास्त्रविदनाधृष्यो देवगन्धर्व्वराक्षसैः ।
समर्थः स महाबाहुरेकोऽपि सुमहाबलः । देवराजमपि स्थानात् प्रच्यावयितुमञ्जसा ।
किंपुनर्धृतराष्ट्रस्य पुत्त्रं दुर्द्यूतदेविनं । विद्विष्टं सर्व्वलोकस्य दम्भमोहपरायणं ।
मातरञ्चैव शोचामि कृपणां पुत्त्रगृद्धिनीं । यास्माकं नित्यमाशास्ते महत्त्वमधिकं परैः । १२८३०
तस्याः कथं त्वनाथाया मद्विनाशाद्भुजङ्गम । अफलास्ते भविष्यन्ति मयि सर्व्वे मनोरथाः ।
नकुलः सहदेवश्च यमौ च गुरुवर्त्तिनौ । मद्बाहुबलसंगुप्तौ नित्यं पुरुषमानिनौ ।
भविष्यतो निरुत्साहौ भ्रष्टवीर्य्यपराक्रमौ । मद्विनाशात् परिद्यूनाविति मे वर्त्तते मतिः ।
एवंविधं बहु तदा विललाप वृकोदरः । भुजङ्गभोगसंरुद्धो नाशकच्च विचेष्टितुं ।
युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः । अनिष्टदर्शनान् घोरानुत्पातान् परिचिन्तयन् । १२८३५
दारुणं ह्यशिवं नादं शिवा दक्षिणतः स्थिता । दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह ।
एकपक्षाक्षिचरणा वर्त्तिका घोरदर्शना । रक्तं वमन्ती ददृशे प्रत्यादित्यमभासुरा ।
प्रववौ चानिलो रूक्षश्चण्डः शर्करकर्षणः । अपसव्यानि सर्व्वाणि मृगपक्षिरुतानि च ।
पृष्ठतो वायसः कृष्णो याहि याहीति वाशति । मुहुर्मुहुः स्फुरति च दक्षिणोऽस्य भुजस्तथा ।
हृदयं चरणश्चापि वामोऽस्य परिवर्त्तते । सव्यस्याक्ष्णो विकारश्चाप्यनिष्टः समपद्यत । १२८४०
धर्म्मराजोऽपि मेधावी मन्यमानो महद्भयं । द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ।
शशंस तस्मै पाञ्चाली चिरयातं वृकोदरं । स प्रतस्थे महाबाहुर्धौम्येन सहितो नृप ।
द्रौपद्या रक्षणं कार्य्यमित्युवाच धनञ्जयं । नकुलं सहदेवञ्च व्यादिदेश द्विजान् प्रति ।
स तस्य पदमुन्नीय तस्मादेवाश्रमात् प्रभुः । मृगयामास कौन्तेयो भीमसेनं महावने ।
स प्राचीं दिशमास्थाय महतो गजयूथपान् । ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्नितां । १२८४५
ततो मृगसहस्राणि मृगेन्द्राणां शतानि च । पतितानि वने दृष्ट्वा मार्गं तस्याविशन्नृपः ।
धावतस्तस्य वीरस्य मृगार्थं वातरंहसः । ऊरुवातविनिर्भग्ना द्रुमा व्यावर्त्तिताः पथि ।
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे । रूक्षमारुतभूयिष्ठे निष्पत्रद्रुमसङ्कुले ।
इरिणे निर्ज्जले देशे कण्टकिद्रुमसङ्कुले । अश्मस्थाणुक्षुपाकीर्णे सुदुर्गे विषमोत्कटे । गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तदा ।

इति श्रीमहाभारते आरण्यपर्व्वणि आजगरपर्व्वणि युधिष्ठिरभीमदर्शने एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितं । दयितं भ्रातरं धीमानिदं वचनमब्रवीत् । १२८५०
कुन्तीमातः कथमिमामापदं त्वमवाप्तवान् । कश्चायं पर्व्वताभोगप्रतिमः पन्नगोत्तमः ।

स धर्म्मराजमालक्ष्य भ्राता भ्रातरमच्युतं। कथयामास तत् सर्व्वं ग्रहणादिविचेष्टितं।
॥ भीमसेन उवाच ॥ अयमार्य्य महासत्त्वो भक्ष्यार्थं मां गृहीतवान्। नहुषो नाम राजर्षिः प्राणवानिव संस्थितः।
॥ युधिष्ठिर उवाच ॥ मुच्यतामयमायुष्मन् भ्राता मे ऽमितविक्रमः। वयमाहारमन्यन्ते दास्यामः क्षुन्निवारणं।
॥ सर्प उवाच ॥ आहारो राजपुत्त्रोऽयं मया प्राप्तो मुखागतः। गम्यतां नेह स्थातव्यं श्वो भवानपि मे भवेत्। १२४५५
व्रतमेतन्महाबाहो विषयं मम यो व्रजेत्। स मे भक्ष्यो भवेत्तात त्वञ्चापि विषये मम।
चिरेणाद्य मयाहारः प्राप्तोऽयमनुजस्तव। नाहमेनं विमोक्ष्यामि नचान्यमभिकाङ्क्षये।
॥ युधिष्ठिर उवाच ॥ देवो वा यदि वा दैत्य उरगो वा भवान् यदि। सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः।
किमर्थञ्च त्वया ग्रस्तो भीमसेनो भुजङ्गम। किमाहृत्य विदित्वा वा प्रीतिस्ते स्याद्भुजङ्गम।
किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमं ॥ सर्प्प उवाच ॥ नहुषो नाम राजाऽहमासं पूर्व्वस्तवानघ। १२४६०
प्रथितः पञ्चमः सोमादायोः पुत्त्रो नराधिप। क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च।
त्रैलोक्यैश्वर्य्यमव्यग्रं प्राप्तोऽहं विक्रमेन च। तदैश्वर्य्यं समासाद्य दर्पो मामगमत्तदा।
सहस्रं हि द्विजातीनामुवाह शिविकां मम। ऐश्वर्य्यमदमत्तो ऽहमवमन्य ततो द्विजान्।
इमामगस्त्येन दशामानीतः पृथिवीपते। न तु मामजहात् प्रज्ञा यावदद्येति पाण्डव।
तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः। षष्ठे काले मयाहारः प्राप्तोऽयमनुजस्तव। १२४६५
नाहमेनं विमोक्ष्यामि नचान्यदपि कामये। प्रश्नानुच्चरितानद्य व्याहरिष्यसि चेन्मम।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरं ॥ युधिष्ठिर उवाच ॥ ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः।
अपि चेच्छक्नुयां प्रीतिमाहर्त्तुं ते भुजङ्गम। वेद्यञ्च ब्राह्मणेनेह तद्भवान् वेत्ति केवलं।
सर्पराज ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः ॥ सर्प उवाच ॥ ब्राह्मणः को भवेद्राजन् वेद्यं किञ्च युधिष्ठिर।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ युधिष्ठिर उवाच ॥ सत्यं दानं क्षमा शीलमानृशंस्यन्तपो घृणा। १२४७०
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतिः। वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखञ्च यत्।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितं ॥ सर्प उवाच ॥ चातुर्व्वर्ण्यं प्रमाणञ्च सत्यञ्च ब्रह्म चैव हि।
शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च। आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर।
वेद्यं यच्चात्र निर्दुःखमसुखञ्च नराधिप। ताभ्यां हीनं पदञ्चान्यन्नतदस्तीति लक्षये।
॥ युधिष्ठिर उवाच ॥ शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो नच ब्राह्मणः। १२४७५
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः। यत्रैतन्न भवेत् सर्प तं शूद्रमिति निर्द्दिशेत्।
यत् पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च। ताभ्यां हीनमतो ऽन्यत्र पदं नास्तीति चेदपि।
एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते। यथा शीतोष्णयोर्म्मध्ये भवेन्नोष्णं न शीतता।
एवं वै सुखदुःखाभ्यां हीनं नास्ति पदं क्वचित्। एषा मम मतिः सर्प्प यथा वा मन्यते भवान्।
॥ सर्प्प उवाच ॥ यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः। वृथा जातिस्तदायुष्मन् कृतिर्यावन्न विद्यते। १२४८०
॥ युधिष्ठिर उवाच ॥ जातिरत्र महासर्प्प मनुष्यत्वे महामते। सङ्करात् सर्व्ववर्णानां दुष्परीक्ष्येति मे मतिः।

सर्व्वे सर्व्वास्वपत्यानि जनयन्ति सदा नराः । वाङ्मैथुनमथो जन्म मरणञ्च समं नृणां ।
इदमार्षं प्रमाणञ्च ये यजामह इत्यपि । तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ।
प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयते । तदाऽस्य माता सावित्री पिता त्वाचार्य्य उच्यते ।
तावच्छूद्रसमो ह्येष यावद्वेदे न जायते । तस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् । १२४८५
कृतकृत्याः पुनर्व्वर्णा यदि वृत्तं न विद्यते । सङ्करस्तत्र नागेन्द्र बलवान् प्रसमीक्षितः ।
यत्रेदानीं महासर्प्प संस्कृतं वृत्तमिष्यते । तं ब्राह्मणमहं पूर्व्वमुक्तवान् भुजगोत्तम ।
॥ सर्प्प उवाच ॥ श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर । भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरं ।
इति श्रीमहाभारते आरण्यपर्व्वणि आजगरपर्व्वणि अजगरयुधिष्ठिरसंवादेऽशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
॥ युधिष्ठिर उवाच ॥ भवानेतादृशो लोके वेदवेदाङ्गपारगः । ब्रूहि किं कुर्व्वतः कर्म्म भवेद्गतिरनुत्तमा ।
॥ सर्प उवाच ॥ पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत । अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम । १२४९०
॥ युधिष्ठिर उवाच ॥ दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते । अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यतां ।
॥ सर्प उवाच ॥ दानञ्च सत्यं तत्त्वं वा अहिंसा प्रियमेव च । एषां कार्य्यगरीयस्त्वाद्दृश्यते गुरुलाघवं ।
कस्माच्चिद्दानयोगाद्धि सत्यमेव विशिष्यते । सत्यवाक्याच्च राजेन्द्र किञ्चिद्दानं विशिष्यते ।
एवमेव महेष्वास प्रियवाक्यान्महीपते । अहिंसा दृश्यते गुर्व्वी ततश्च प्रियमिष्यते ।
एवमेतद्भवेद्राजन् कार्य्यापेक्षमनन्तरं । यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहं । १२४९५
॥ युधिष्ठिर उवाच ॥ कथं स्वर्गे गतिः सर्प कर्म्मणाञ्च फलं ध्रुवं । अशरीरस्य दृश्येत प्रब्रूहि विषयांश्च मे ।
॥ सर्प उवाच ॥ तिस्रो वै गतयो राजन् परिदिष्टाः स्वकर्म्मभिः । मानुष्यं स्वर्गवासश्च तिर्य्यग्योनिश्च तत्त्रिधा ।
तत्र वै मानुषाल्लोकाद्दानादिभिरतन्द्रितः । अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ।
विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत् । तिर्य्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ।
कामक्रोधसमायुक्तो हिंसालोभसमन्वितः । मनुष्यत्वात् परिभ्रष्टस्तिर्य्यग्योनौ प्रसूयते । १२५००
तिर्य्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते । गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ।
सोऽयमेता गतीस्तात जन्तुश्चरति कार्य्यवान् । नित्ये महति चात्मानमवस्थापयते द्विजः ।
जातो जातश्च बलवान् भुङ्क्ते चात्मा स देहवान् । फलार्थस्तात निस्पृहः प्रजालक्षणभावनः ।
॥ युधिष्ठिर उवाच ॥ शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः । तस्याधिष्ठानमव्यग्रो ब्रूहि सर्प यथातथं ।
किं न गृह्णासि विषयान् युगपत्त्वं महामते । एतावदुच्यतां चोक्तं सर्व्वं पन्नगसत्तम । १२५०५
॥ सर्प उवाच ॥ यदात्मद्रव्यमायुष्मन् देहसंश्रयणान्वितं । करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि ।
ज्ञानञ्चैवात्र बुद्धिश्च मनश्च भरतर्षभ । तस्य भोगाधिकरणे करणानि निबोध मे ।
मनसा तात पर्य्येति क्रमशो विषयानिमान् । विषयायतनस्थेन भूतात्मा क्षेत्रनिःसृतः ।
तत्र चापि नरव्याघ्र मनो जन्तोर्व्विधीयते । तस्माद्युगपदत्रास्य ग्रहणं नोपपद्यते ।
स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः । बुद्धिं द्रव्येषु सृजति विविधेषु परावरां । १२५१०

बुद्धेरुत्तरकालञ्च वेदना दृश्यते बुधैः । एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः ।
॥ युधिष्ठिर उवाच ॥ मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परं । एतदध्यात्मविदुषां परं कार्य्यं विधीयते ।
॥ सर्प उवाच ॥ बुद्धिरात्मानुगाऽतीव उत्पातेन विधीयते । तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत् ।
बुद्धिरुत्पद्यते कार्य्यात् मनस्तूत्पन्नमेव हि । बुद्धेर्गुणविधिर्नास्ति मनस्तु गुणवद्भवेत् ।
एतद्विशेषणं तात मनोबुद्ध्योर्यदन्तरं । त्वमप्यत्राभिसम्बुद्धः कथं वा मन्यते भवान् । १२१०५
॥ युधिष्ठिर उवाच ॥ अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव । विदितं वेदितव्यं ते कस्मात् समनुपृच्छसि ।
सर्व्वज्ञं त्वां कथं मोह आविशत् स्वर्गवासिनं । एवमद्भुतकर्म्माणमिति मे संशयो महान् ।
॥ सर्प्प उवाच ॥ सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरं । वर्त्तमानः सुखे सर्व्वो मुह्यतीति मतिर्मम ।
सोऽहमैश्वर्य्यमोहेन मदाविष्टो युधिष्ठिर । पतितः प्रतिसम्बुद्धस्त्वान्तु सम्बोधयाम्यहं ।
कृतं कार्य्यं महाराज त्वया मम परन्तप । क्षीणः शापः सुकृच्छ्रो मे त्वया सम्भाष्य साधुना । १२११०
अहं हि दिवि दिव्येन विमानेन चरन् पुरा । अभिमानेन मत्तः सन् कञ्चिन्नान्यमचिन्तयं ।
ब्रह्मर्षिदेवगन्धर्व्वयक्षराक्षसपन्नगाः । करान्मम प्रयच्छन्ति सर्व्वे त्रैलोक्यवासिनः ।
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते । तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ।
ब्रह्मर्षीणां सहस्रं हि उवाह शिविकां मम । स मामपनयो राजन् भ्रंशयामास वै श्रियः ।
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः । अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्प्पेति वै रुषा । १२११५
ततस्तस्माद्विमानाग्र्यात् प्रच्युतश्च्युतलक्षणः । प्रपतन् बुबुधे त्मानं व्यालीभूतमधोमुखं ।
अयाचन्तमहं विप्रं शापस्यान्तो भवेदिति । प्रमादात् संप्रमूढस्य भगवन् क्षन्तुमर्हसि ।
ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः । युधिष्ठिरो धर्म्मराजः शापात्त्वां मोक्षयिष्यति ।
अभिमानस्य घोरस्य पापस्य च नराधिप । फले क्षीणे महाराज फलं पुण्यमवाप्स्यसि ।
ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलं । ब्रह्म च ब्राह्मणत्वञ्च येन त्वाऽहमचूचुदं । १२१२०
सत्यं दमस्तपो दानमहिंसा धर्म्मनित्यता । साधकानि सदा पुंसां न जातिर्न कुलं नृप ।
अरिष्ट एष ते भ्राता भीमसेनो महाबलः । स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वाजगरं देहं मुक्त्वा स नहुषो नृपः । दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ।
युधिष्ठिरोऽपि धर्म्मात्मा भ्रात्रा भीमेन सङ्गतः । धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ।
ततो द्विजेभ्यः सर्व्वेभ्यः समेतेभ्यो यथातथं । कथयामास तत्सर्व्वं धर्म्मराजो युधिष्ठिरः । १२१२५
तच्छ्रुत्वा ते द्विजाः सर्व्वे भ्रातरश्चास्य ते त्रयः । आसन् सुव्रीडिता राजन् द्रौपदी च यशस्विनी ।
ते तु सर्व्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया । मैवमित्यब्रुवन् भीमं गर्हयन्तो ऽस्य साहसं ।
पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलं । हर्षमाहारयाञ्चक्रुर्विजह्रुश्च मुदा युताः ।
इति श्रीमहाभारते आरण्यपर्व्वणि आजगरपर्व्वणि भीमसेनमोक्षणे एकाशीत्यधिकशततमोऽध्यायः ॥ समाप्तञ्चाजगरपर्व्व ॥ १८१ ॥

## ॥ अथ मार्कण्डेयसमास्यापर्व्व ॥ ८ ॥

॥ वैशम्पायन उवाच ॥ निदाघान्तकरः कालः सर्व्वभूतसुखावहः । तत्रैव वसतां तेषां प्रावृट् समभिपद्यत ।
छादयन्तो महाघोषाः खं दिशश्च बलाहकाः । प्रववर्षुर्दिवारात्रमसिताः सततं तदा । १२५४०
तपात्ययनिकेताश्च शतशोऽथ सहस्रशः । अपेतार्कप्रभाजाला सविद्युद्विमलप्रभा ।
विरूढशष्पा धरणी मत्तदंशसरीसृपा । बभूव पयसा सिक्ता शान्ता सर्व्वमनोरमा ।
न स्म प्रज्ञायते किञ्चिदम्भसा समवस्तृते । समं वा विषमं वाऽपि नद्यो वा स्थावराणि च ।
क्षुब्धतोया महावेगा श्वसमाना इवाशुगाः । सिन्धवः शोभयाञ्चक्रुः काननानि तपात्यये ।
नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः । वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणां । १२५४५
स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह । मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ।
तथा बहुविधाकारा प्रावृण्मेघानुनादिता । अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ।
क्रौञ्चहंससमाकीर्णा शरत्प्रमुदिताऽभवत् । रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ।
विमलाकाशनक्षत्रा शरत्तेषां शिवाऽभवत् । मृगद्विजसमाकीर्णा पाण्डवानां महात्मनां ।
दृश्यन्ते शान्तरजसः क्षपा जलदशीतलाः । ग्रहनक्षत्रसङ्घैश्च सोमेन च विराजिताः । १२५५०
कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः । नदीः पुष्करिणीश्चैव ददृशुः समलङ्कृताः ।
आकाशनीकाशतटां तीरवानीरसङ्कुलां । बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीं ।
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवां । पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीं ।
तेषां पुण्यतमा रात्रिः पर्व्वसन्धौ स्म शारदी । तत्रैव वसतामासीत् कार्त्तिकी जनमेजय ।
पुण्यकृद्भिर्महासत्त्वैस्तापसैः सह पाण्डवाः । तत् सर्व्वं भरतश्रेष्ठाः समूहुर्योगमुत्तमं । १२५५५
तमिस्राभ्युदये तस्मिन् धौम्येन सह पाण्डवाः । सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्व्वनं ।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि काम्यकप्रत्यागमने द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
॥ वैशम्पायन उवाच ॥ काम्यकं प्राप्य कौरव्य युधिष्ठिरपुरोगमाः । कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया ।
ततस्तान् परिविश्वस्तान् वसतः पाण्डुनन्दनान् । ब्राह्मणा बहवस्तत्र समन्तात् पर्य्यवारयन् ।
अथाब्रवीद्द्विजः कश्चिदर्जुनस्य प्रियः सखा । स एष्यति महाबाहुर्व्वशी शौरिरुदारधीः ।
विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः । सदा हि दर्शनाकाङ्क्षी श्रेयोऽन्वेषी च वो हरिः । १२५६०
बहुवत्सरजीवी च मार्कण्डेयो महातपाः । स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान् समेष्यति ।
तथैव ब्रुवतस्तस्य प्रत्यदृश्यत केशवः । शैब्यसुग्रीवयुक्तेन रथेन रथिनाम्वरः ।
मघवानिव पौलोम्या सहितः सत्यभामया । उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ।
अवतीर्य्य रथात् कृष्णो धर्म्मराजं यथाविधि । ववन्दे मुदितो धीमान् भीमञ्च बलिनाम्वरं ।
पूजयामास धौम्यं स यमाभ्यामभिवादितः । परिष्वज्य गुडाकेशं द्रौपदीं पर्य्यसान्त्वयत् । १२५६५
स दृष्ट्वा फाल्गुनं वीरं चिरस्य प्रियमागतं । पर्य्यष्वजत दाशार्हः पुनः पुनररिन्दमः ।

तथैव सत्यभामाऽपि द्रौपदीं परिषस्वजे। पाण्डवानां प्रियां भार्य्यां कृष्णस्य महिषी प्रिया।

ततस्ते पाण्डवाः सर्व्वे सभार्य्याः सपुरोहिताः। आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्व्वशः।

कृष्णस्तु पार्थेन समेत्य विद्वान् धनञ्जयेनासुरतर्ज्जनेन। बभौ यथा भूतपतिर्म्महात्मा समेत्य साक्षाद्भगवान् गुहेन।

ततः समस्तानि किरीटमाली वनेषु वृत्तानि गदाग्रजाय। उक्त्वा यथावत् पुनरन्वपृच्छत् कथं सुभद्रा च स चाभिमन्युः। १२५७०

स पूजयित्वा मधुहा यथावत् पार्थञ्च कृष्णाञ्च पुरोहितञ्च। उवाच राजानमभिप्रशंसन् युधिष्ठिरं तत्र सहोपविश्य।

धर्म्मः परः पाण्डव राज्यलाभात्तस्यार्थमाहुस्तप एव राजन्। सत्यार्जवाभ्यां चरता स्वधर्म्मं जितस्त्वयाऽयञ्च परश्च लोकः।

अधीतमग्रे चरता व्रतानि सम्यग्धनुर्व्वेदमवाप्य कृत्स्नं। क्षात्त्रेण धर्म्मेण वसूनि लब्ध्वा सर्व्वे ह्यवाप्ताः क्रतवः पुराणाः।

न ग्राम्यधर्म्मेषु रतिस्तवास्ति कामान्न किञ्चित् कुरुषे नरेन्द्र। नचार्थलोभात् प्रजहासि धर्म्मं तस्मात् प्रभावादसि धर्म्मराजः।

दानञ्च सत्यञ्च तपश्च राजन् श्रद्धा च बुद्धिश्च क्षमा धृतिश्च। अवाप्य राष्ट्राणि वसूनि भोगानेषा परा पार्थ सदा रतिस्ते। १२५७५

यदा जनौघः कुरुजाङ्गलानां कृष्णां सभायामवशामपश्यत्। अपेतधर्म्मव्यवहारवृत्तं सहेत तत् पाण्डव कस्त्वदन्यः।

असंशयं सर्व्वसमृद्धकामः क्षिप्रं प्रजाः पालयिताऽसि सम्यक्। इमे वयं निग्रहणे कुरूणां यदि प्रतिज्ञा भवतः समाप्ता।

धौम्यञ्च भीमञ्च युधिष्ठिरञ्च यमौ च कृष्णाञ्च दशार्हसिंहः। उवाच दिष्ट्या भवतां शिवेन प्राप्तः किरीटी मुदितः कृतास्त्रः।

प्रोवाच कृष्णामपि याज्ञसेनीं दशार्हभर्त्ता सहितः सुहृद्भिः। दिष्ट्या समग्राऽसि धनञ्जयेन समागतेत्येवमुवाच कृष्णः।

कृष्णे धनुर्व्वेदरतिप्रधानास्तवात्मजास्ते शिशवः सुशीलाः। सद्भिः सदैवाचरितं सुहृद्भिश्चरन्ति पुत्त्रास्तव याज्ञसेनि। १२५८०

राज्येन राष्ट्रैश्च निमन्त्र्यमाणाः पित्रा च कृष्णे तव सोदरैश्च। न यज्ञसेनस्य न मातुलानां गृहेषु बाला रतिमाप्नुवन्ति।

आनर्त्तमेवाभिमुखाः शिवेन गत्वा धनुर्व्वेदरतिप्रधानाः। तवात्मजा वृष्णिपुरं प्रविश्य तदैव तेभ्यः स्पृहयन्ति कृष्णे।

यथात्वमेवार्हसि तेषु वृत्तं प्रयोक्तुमार्य्या च यथैव कुन्ती। तेष्वप्रमादेन तथा करोति तथैव भूयश्च तथा सुभद्रा।

यथाऽनिरुद्धस्य यथाऽभिमन्योर्यथासुनीथस्य यथैव भानोः। तथा विनेता च गतिश्च कृष्णे तवात्मजानामपि रौक्मिणेयः।

गदाऽसिचर्म्मग्रहणेषु शूरानस्त्रेषु शिक्षासु रथाश्वयाने। सम्यग्विनेता विनयेदतन्द्रीस्तांश्चाभिमन्युः सततं कुमारः। १२५८५

स चापि सम्यक् प्रणिधाय शिक्षां शस्त्राणि चैषां विधिवत् प्रदाय। तवात्मजानाञ्च तथाऽभिमन्योः पराक्रमैस्तुष्यति रौक्मिणेयः।

यथाविहारं प्रसमीक्ष्यमाणाः प्रयान्ति पुत्त्रास्तव याज्ञसेनि। एकैकमेषामनुयान्ति तत्र रथाश्वयानानि च दन्तिनश्च।

अथाब्रवीद्धर्म्मराजन्तु कृष्णो दशार्हयोधाः कुकुरान्धकाश्च। एते निदेशं तव पालयन्तस्तिष्ठन्तु यत्रेच्छसि तत्र राजन्।

आवर्त्ततां कार्म्मुकवेगवाता हलायुधप्रग्रहणा मधूनां। सेना तवार्थेषु नरेन्द्र यत्ता ससादिपत्यश्वरथा सनागा।

प्रस्थाप्यतां पाण्डव धार्त्तराष्ट्रः सुयोधनः पापकृतां वरिष्ठः। सहानुबन्धः ससुहृद्गणश्च भौमस्य सौभाधिपतेश्च मार्गं। १२५९०

कामं तथा तिष्ठ नरेन्द्र तस्मिन् यथाकृतस्ते समयः सभायां। दशार्हयोधैस्तु हतारियोधं प्रतीक्षतां नागपुरं भवन्तं।

व्यपेतमन्युर्व्यपनीतपाप्मा विहृत्य यत्रेच्छसि तत्र कामं। ततः प्रसिद्धं प्रथमं विशोकः प्रपत्स्यसे नागपुरं सुराष्ट्रं।

ततस्तदाज्ञाय मतं महात्मा यथावदुक्तं पुरुषोत्तमेन। प्रशस्य विप्रेक्ष्य च धर्म्मराजः कृताञ्जलिः केशवमित्युवाच।

असंशयं केशव पाण्डवानां भवान् गतिस्त्वच्छरणा हि पार्थाः। कालोदये तच्च ततश्च भूयः कर्त्ता भवान् कर्म्म न संशयोऽस्ति।

ततः कालान्तरेऽन्यस्मिन् पृथिवीतलचारिणः। कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः। १२१२५
लोभमोहाभिभूतास्ते त्यक्ता देहैस्ततो नराः। अशुभैः कर्म्मभिः पापास्तिर्य्यङ्निरयगामिनः।
संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः। मोघेष्टा मोघसङ्कल्पा मोघज्ञाना विचेतसः।
सर्व्वाभिशङ्किनश्चैव संवृत्ताः क्लेशभागिनः। अशुभैः कर्म्मभिश्चापि प्रायशः परिचिह्निताः।
दौष्कुल्या व्याधिबहुला दुरात्मानोऽप्रतापिनः। भवन्त्यल्पायुषः पापा रौद्रकर्म्मफलोदयाः।
नाथन्तः सर्व्वकामानां नास्तिका भिन्नसेतवः। जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्म्मभिः। १२१३०
प्राज्ञस्य हीनबुद्धेश्च कर्म्मकोशः क्व तिष्ठति। क्वस्थस्तत्समुपाश्नाति सुकृतं यदि वेतरत्।
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु। अयमादिशरीरेण देवसृष्टेन मानवः।
शुभानामशुभानाञ्च कुरुते सञ्चयं महत्। आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरं।
सम्भवत्येव युगपद्योनौ नास्त्यन्तराभवः। तत्रास्य स्वकृतं कर्म्म छायेवानुगतं सदा।
फलत्यथ सुखार्हो वा दुःखार्हो वाऽथ जायते। कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः। १२१३५
अशुभैर्व्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः। एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर।
अतः परं ज्ञानवतां निबोध गतिमुत्तमां। मनुष्यास्तप्ततपसः सर्व्वागमपरायणाः।
स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः। सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः।
शुचियोन्यन्तरगताः प्रायशः शुभलक्षणाः। जितेन्द्रियत्वाद्वशिनः शुक्लत्वान्मन्दरोगिणः।
अल्पाबाधपरित्रासाद्भवन्ति निरुपद्रवाः। च्यवन्तं जायमानञ्च गर्भस्थञ्चैव सर्व्वशः। १२१४०
स्वमात्मानं परञ्चैव बुध्यन्ते ज्ञानचक्षुषा। ऋषयस्ते महात्मानः प्रत्यक्षागमबुद्धयः।
कर्म्मभूमिमिमां प्राप्य पुनर्य्यान्ति सुरालयं। किञ्चिद्दैवाद्धठात् किञ्चित् किञ्चिदेव स्वकर्म्मभिः।
प्राप्नुवन्ति नरा राजन् मातेऽस्त्वन्या विचारणा। इमामत्रोपमाञ्चापि निबोध वदताम्बर।

मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर। इह वैकस्य नामुत्र अमुत्रैकस्य नो इह। इह चामुत्र चैकस्य नामुत्रैकस्य नो इह।
धनानि येषां विपुलानि सन्ति नित्यं रमन्ते सुविभूषिताङ्गाः। तेषामयं शत्रुवरघ्न लोको नासौ सदा देहसुखे रतानां। १२१४५
ये योगयुक्तास्तपसि प्रसक्ताः स्वाध्यायशीला जरयन्ति देहान्। जितेन्द्रियाः प्राणिवधे निवृत्तास्तेषामसौ नायमरिघ्न लोकः।
ये धर्म्ममेव प्रथमं चरन्ति धर्म्मेण लब्ध्वा च धनानि काले। दारानवाप्य क्रतुभिर्यजन्ते तेषामयञ्चैव परश्च लोकः।
ये नैव विद्यां न तपो न दानं नचापि मूढाः प्रजने यतन्ति। न चानुगच्छन्ति सुखानुभोगांस्तेषामयं नैव परश्च लोकः।
सर्व्वे भवन्तस्त्वतिवीर्य्यसत्त्वा दिव्यौजसः संहननोपपन्नाः। लोकादमुष्मादवनिं प्रपन्नाः स्वधीतविद्याः सुरकार्य्यहेतोः।
कृत्वैव कर्म्माणि महान्ति शूरास्तपोदमाचारविहारशीलाः। देवानृषीन् प्रेतगणांश्च सर्व्वान् सन्तर्प्पयित्वा विधिना परेण। १२१५०
स्वर्गं परं पुण्यकृतो निवासं क्रमेण सम्प्राप्स्यथ कर्म्मभिः स्वैः। माभूद्विशङ्का तव कौरवेन्द्र दृष्ट्वात्मनः क्लेशमिमं सुखार्हं।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि मार्कण्डेयकथायां त्र्यशीत्यधिकशतोऽध्यायः॥ १८३ ॥

॥ वैशम्पायन उवाच॥ मार्कण्डेयं महात्मानमूचुः पाण्डुसुतास्तदा। माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यतां।
एवमुक्तः स भगवान् मार्कण्डेयो महातपाः। उवाच सुमहातेजाः सर्व्वशास्त्रविशारदः।

॥ मार्कण्डेय उवाच ॥ हैहयानां कुलकरो राजा परपुरञ्जयः । कुमारो रूपसम्पन्नो मृगयां व्यचरद्बली ।
चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते । कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके । १२६५५
स तेन निहतोऽरण्ये मन्यमानेन वै मृगं । व्यथितः कर्म तत् कृत्वा शोकोपहतचेतनः ।
जगाम हैहयानां वै सकाशं प्रथितात्मनां । राज्ञां राजीवनेत्रोऽसौ कुमारः पृथिवीपतिः ।
तेषाञ्च तद्यथावृत्तं कथयामास वै तदा । तञ्चापि हिंसितं तात मुनिं मूलफलाशिनं ।
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः । कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ।
जग्मुश्चारिष्टनेमेऽथ तार्क्ष्यस्याश्रममञ्जसा । तेऽभिवाद्य महात्मानं तं मुनिं नियतव्रतं । १२६६०
तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् । ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ।
त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः । तानब्रवीत् स विप्रर्षिः कथं वो ब्राह्मणो हतः ।
क्वासौ ब्रूत सहिताः पश्यध्वं मे तपोबलं । ते तु तत् सर्वमखिलमाख्यायास्मै यथातथं ।
नापश्यन् तमृषिं तत्र गतासुन्ते समागताः । अन्विष्यमाणाः सव्रीडाः स्वप्नवद्गतचेतनाः ।
तानब्रवीत्तत्र मुनिस्तार्क्ष्यः परपुरञ्जय । स्यादयं ब्राह्मणः सोऽयं युष्माभिर्यो विनाशितः । १२६६५
पुत्रो ह्ययं मम नृपास्तपोबलसमन्वितः । ते च दृष्ट्वैव तमृषिं विस्मयं परमं गताः ।
महदाश्चर्यमिति वै ते ब्रुवाणा महीपते । मृतो ह्ययमुपानीतः कथं जीवितमाप्तवान् ।
किमेतत्तपसो वीर्यं येनायं जीवितः पुनः । श्रोतुमिच्छामहे विप्र यदि श्रोतव्यमित्युत ।
स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः । कारणं वः प्रवक्ष्यामि हेतुयोगसमासतः ।
सत्यमेवाभिजानीमो नानृते कुर्महे मनः । स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः । १२६७०
यद्ब्राह्मणानां कुशलं तदेषां कथयामहे । नैषां दुश्चरितं ब्रूमस्तस्मान्मृत्युभयं न नः ।
अतिथीनन्नपानेन भृत्यानत्यशनेन च । संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः ।
शान्ता दान्ताः क्षमाशीलास्तीर्थदानपरायणाः । पुण्यदेशनिवासाच्च तस्मान्मृत्युभयं न नः ।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः । एतद्वै लेशमात्रं वः समाख्यातं विमत्सराः ।
गच्छध्वं सहिताः सर्वे न पापाद्भयमस्ति वः । एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिं । १२६७५
स्वदेशमगमन् हृष्टा राजानो भरतर्षभ ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणमाहात्म्यकथने चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

॥ मार्कण्डेय उवाच ॥ भूय एव महाभाग्यं ब्राह्मणानां निबोध मे । वैन्यो नामेह राजर्षिरश्वमेधाय दीक्षितः ।
तमत्रिर्गन्तुमारेभे वित्तार्थमिति नः श्रुतं । भूयोऽर्थं नानुरुध्यत् स धर्म्मव्यक्तिनिदर्शनात् ।
स विचिन्त्य महातेजा वनमेवान्वरोचयत् । धर्म्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ।
प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवं । अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकं । १२६८०
तं भार्य्या प्रत्युवाचाथ धर्म्ममेवानुतन्वती । वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु ।
स ते दास्यति राजर्षिर्यजमानोऽर्थितो धनं । तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ।

भृत्यान् सुतान् संविभाज्य ततो व्रज यथेप्सितं । एष वै परमो धर्म्मो धर्म्मविद्भिरुदाहृतः ।
॥ अत्रिरुवाच ॥ कथितो मे महाभागे गौतमेन महात्मना । वैन्यो धर्म्मार्थसंयुक्तः सत्यव्रतसमन्वितः ।
किन्त्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः । यथा मे गौतमः प्राह ततो न व्यवसाम्यहं । १२६८५
तत्र स्म वाचं कल्याणीं धर्म्मकामार्थसंहितां । मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थिकां ।
गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव । गावो मे दास्यते वैन्यः प्रभूतञ्चार्थसञ्चयं ।
एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः । गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपं ।
वाक्यैर्मङ्गलसंयुक्तैः पूजयानोऽब्रवीद्वचः ॥ अत्रिरुवाच ॥ राजन् धन्यस्त्वमीशश्च भुवि त्वं प्रथमो नृपः ।
स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्म्मवित् । तमब्रवीदृषिः क्रुद्धो वचनं वै महातपाः । १२६९०
॥ गौतम उवाच ॥ मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता । अत्र नः प्रथमं स्थाता महेन्द्रो वै प्रजापतिः ।
अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत ॥ अत्रिरुवाच ॥ अयमेव विधाता हि यथैवेन्द्रः प्रजापतिः ।
त्वमेव मुह्यसे मोहात् प्रज्ञानन्तवास्ति ह ॥ गौतम उवाच ॥ जानामि नाहं मुह्यामि त्वमेवात्र विमुह्यसे ।
स्तौषि त्वं दर्शनप्रेप्सू राजानं जनसंसदि । न वेत्थ परमं धर्म्मं नचाबैषि प्रयोजनं ।
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ मार्कण्डेय उवाच ॥ विवदन्तौ तथा तौ तु मुनीनां दर्शने स्थितौ । १२६९५
ये तस्य यज्ञे संवृत्तास्ते ऽपृच्छन्त कथन्त्विमौ । प्रवेशः केन दत्तोऽयमुभयोर्वैन्यसंसदि ।
उच्चैः समभिभाषन्तौ केन कार्य्येण धिष्ठितौ । ततः परमधर्म्मात्मा काश्यपः सर्व्वधर्म्मवित् ।
विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् । अथाब्रवीत् सदस्यांस्तु गौतमो मुनिसत्तमान् ।
॥ गौतम उवाच ॥ आवयोर्व्याहृतं प्रश्नं शृणुत द्विजसत्तमाः । वैन्यं विधातेत्याहात्रिरत्र नौ संशयो महान् ।
॥ मार्कण्डेय उवाच ॥ श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन् द्रुतं । सनत्कुमारं धर्म्मज्ञं संशयच्छेदनाय वै । १२७००
स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः । प्रत्युवाचाथ तानेवं धर्म्मार्थसहितं वचः ।
॥ सनत्कुमार उवाच ॥ ब्रह्म क्षत्रेण सहितं क्षत्रञ्च ब्रह्मणा सह । संयुक्तौ दहतः शत्रून् वनानीवाग्निमारुतौ ।
राजा वै प्रथितो धर्म्मः प्रजानां पतिरेव च । स एव शक्रः शुक्रश्च स धाता च बृहस्पतिः ।
प्रजापतिर्व्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः । य एभिः स्तूयते शब्दैः कस्तं नार्च्चितुमर्हति ।
पुरायोनिर्य्युधाजिच्च अभिया मुदितो भवः । स्वर्णेता सहजिद्बभ्रुरिति राजाऽभिधीयते । १२७०५
सत्ययोनिः पुराविच्च सत्यधर्म्मप्रवर्त्तकः । अधर्म्मादृषयो भीता बलं क्षत्रे समादधन् ।
आदित्यो दिवि देवेषु तमो नुदति तेजसा । तथैव नृपतिर्भूमावधर्म्मान्नुदते भृशं ।
ततो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् । उत्तरः सिध्यते पक्षो येन राजेति भाषितं ।
॥ मार्कण्डेय उवाच ॥ ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः । तमत्रिमब्रवीत् प्रीतः पूर्व्वं येनाभिसंस्तुतः ।
यस्मात् पूर्व्वं मनुष्येषु ज्यायांसं मामिहाब्रवीः । सर्व्वदेवैश्च विप्रर्षे सम्मितं श्रेष्ठमेव च । १२७१०
तस्मात्तेऽहं प्रदास्यामि विविधं वसु भूरि च । दासीसहस्रं श्यामानां सुवस्त्राणामलङ्कृतं ।
दशकोटीर्हिरण्यस्य रुक्मभारांस्तथा दश । एतद्ददानि विप्रर्षे सर्व्वज्ञस्त्वं मतो हि मे ।

तदभिध्यायतः सर्व्वं प्रतिष्ठत्वाभिसंहतः । प्रत्युज्जगाम तेजस्वी ब्रह्माणमिव महातपाः ।

प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान् । तपः समभिसन्धाय वनमेवान्वपद्यत ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणमाहात्म्यकथने पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

॥ मार्कण्डेय उवाच ॥ अत्रैव च सरस्वत्या गीतं परपुरञ्जय । पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता । १२०१५

॥ तार्क्ष्य उवाच ॥ किन्नु श्रेयः पुरुषस्येह भद्रे कथं कुर्व्वन्न च्यवते स्वधर्म्मात् । आचक्ष्व मे चारुसर्व्वाङ्गि सर्व्वं त्वया शिष्टो न च्यवेयं स्वधर्म्मात् ।

कथं वाऽग्निं जुहुयां पूजये वा कस्मिन् काले केन धर्म्मो न नश्येत् । एतत् सर्व्वं सुभगे प्रब्रवीहि यथा लोकान् विरजाः सञ्चरेयं ।

॥ मार्कण्डेय उवाच ॥ एवं पृष्टा प्रीतियुक्तेन तेन शुश्रूषुमीक्ष्योत्तमबुद्धियुक्तं । तार्क्ष्यं विप्रं धर्म्मयुक्तं हितञ्च सरस्वती वाक्यमिदं बभाषे ।

॥ सरस्वत्युवाच ॥ यो ब्रह्म जानाति यथाप्रदेशं स्वाध्यायनित्यः शुचिरप्रमत्तः । स वै पारं देवलोकस्य गन्ता सहामरैः प्राप्नुयात् प्रीतियोगं ।

तत्र स्म रम्या विपुला विशोकाः सुपुष्पिताः पुष्करिण्यः सुपुण्याः । अकर्द्दमा मीनवत्यः सुतीर्था हिरण्मयैरावृताः पुण्डरीकैः । १२०२०

तासां तीरेष्वासते पुण्यभाजो महीयमानाः पृथगप्सरोभिः । सुपुण्यगन्धाभिरलङ्कृताभिर्हिरण्यवर्णाभिरतीव हृष्टाः ।

परं लोकं गोप्रदास्त्वाप्नुवन्ति दत्त्वाऽनडुहं सूर्य्यलोकं व्रजन्ति । वासो दत्त्वा चान्द्रमसन्तु लोकं दत्त्वा हिरण्यममरत्वमेति ।

धेनुं दत्त्वा सुप्रभां सुप्रदोहां कल्याणवत्सामपलायिनीञ्च । यावन्ति रोमाणि भवन्ति तस्यास्तावद्वर्षाण्यासते देवलोके ।

अनड्वाहं सुव्रतं यो ददाति हलस्य वोढारमनन्तवीर्य्यं । धुरन्धरं बलवन्तं युवानं प्राप्नोति लोकान् दशधेनुदस्य ।

ददाति यो वै कपिलां सचेलां कांस्योपदोहां द्रविणैरुत्तरीयैः । तैस्तैर्गुणैः कामदुहाऽस्य भूत्वा नरं प्रदातारमुपैति सा गौः । १२०२५

यावन्ति रोमाणि भवन्ति धेन्वास्तावत्फलं भवति गोप्रदाने । पुत्त्रांश्च पौत्त्रांश्च कुलञ्च सर्व्वमासप्तमं तारयते परत्र ।

सदक्षिणां काञ्चनचारुशृङ्गीं कांस्योपदोहां द्रविणैरुत्तरीयैः । धेनुं तिलानां ददतो द्विजाय लोका वसूनां सुलभा भवन्ति ।

स्वकर्म्मभिर्द्दानवसन्निरुद्धं तीव्रान्धकारे नरके पतन्तं । महार्णवे नौरिव वातयुक्ता दानं गवां तारयते परत्र ।

यो ब्रह्मदेयान्तु ददाति कन्यां भूमिप्रदानञ्च करोति विप्रे । ददाति दानं विधिना च यश्च स लोकमाप्नोति पुरन्दरस्य ।

यः सप्तवर्षाणि जुहोति तार्क्ष्य हव्यं त्वग्नौ नियतः साधुशीलः । सप्तावरान् सप्तपूर्व्वान् पुनाति पितामहानात्मना कर्म्मभिः स्वैः । १२०३०

॥ तार्क्ष्य उवाच ॥ किमग्निहोत्रस्य व्रतं पुराणमाचक्ष्व मे पृच्छतश्चारुरूपे । त्वयाऽनुशिष्टोऽहमिहाद्य विद्यां यदग्निहोत्रस्य व्रतं पुराणं ।

॥ सरस्वत्युवाच ॥ न चाशुचिर्नाप्यनिर्णिक्तपाणिर्नाब्रह्मविज्जुहुयान्नाविपश्चित् । बुभुक्षवः शुचिकामा हि देवा नाश्रद्दधानाद्धि हविर्ज्जुषन्ति ।

नाश्रोत्रियं देवहव्ये नियुञ्ज्यान्मोघं पुरा सिञ्चति तादृशो हि । अपूर्णमश्रोत्रियमाह तार्क्ष्य न वै तादृग्जुहुयादग्निहोत्रं ।

अध्याय ये जुह्वति श्रद्दधानाः सत्यव्रता हुतशिष्टाशिनश्च। गवां लोकं प्राप्यते पुण्यगन्धं पश्यन्ति देवं परमञ्चापि सत्यं।

॥ तार्क्ष्य उवाच ॥ क्षेत्रज्ञभूतां परलोकभावे कर्म्मोदये बुद्धिमतिप्रविष्टां। प्रज्ञाञ्च देवीं सुभगे विमृश्य पृच्छामि त्वां का ह्यसि चारुरूपे। १२०३५

॥ सरस्वत्युवाच ॥ अग्निहोत्रादहमभ्यागताऽस्मि विप्रर्षभाणां संशयच्छेदनाय। त्वत्संयोगादहमेतमब्रुवं भावे स्थिता तथ्यमर्थं यथावत्।

॥ तार्क्ष्य उवाच ॥ नहि त्वया सदृशी काचिदस्ति विभ्राजसेऽत्यतिमात्रं यथा श्रीः। रूपञ्च ते दिव्यमनन्तकान्ति प्रज्ञाञ्चदेवीं शुभगे बिभर्षि।

॥ सरस्वत्युवाच ॥ श्रेष्ठानि यानि द्विपदां वरिष्ठ यज्ञेषु विद्वन्नुपपादयन्ति। तैरेव चाहं सम्प्रवृद्धा भवामि चाप्यायिता रूपवती च विप्र।

यच्चापि द्रव्यमुपयुज्यते ह वानस्पत्यमायसं पार्थिवं वा। दिव्येन रूपेण च प्रज्ञया च तेनैव सिद्धिरिति विद्धि विद्वन्।

॥ तार्क्ष्य उवाच ॥ इदं श्रेयः परमं मन्यमाना व्यायच्छन्ते मुनयः सम्प्रतीताः। आचक्ष्व मे तं परमं विशोकं मोक्षं परं यं प्रविशन्ति धीराः। १२०४०

साङ्ख्या योगाः परमं यं विदन्ति परं पुराणं तमहं न वेद्मि॥ सरस्वत्युवाच॥ तं वै परं वेदविदः प्रपन्नाः परं परेभ्यः प्रथितं पुराणं।

स्वाध्यायवन्तो व्रतपुण्ययोगैस्तपोधना वीतशोका विमुक्ताः। तस्याथ मध्ये वेतसः पुण्यगन्धः सहस्रशाखो विपुलो विभाति।

तस्य मूलात् सरितः प्रस्रवन्ति मधूदकप्रस्रवणाः सुपुण्याः।

शाखां शाखां महानद्यः संयान्ति सिकताशयाः। धानापूपा मांसशाकाः सदा पायसकर्द्दमाः।

यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः। ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मम। १२०४५

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि सरस्वतीतार्क्ष्यसंवादे षडशीत्यधिकशतोऽध्यायः॥ १८६ ॥

॥ वैशम्पायन उवाच ॥ ततः स पाण्डवो विप्रं मार्कण्डेयमुवाच ह। कथयस्वेति चरितं मनोर्व्वैवस्वतस्य च।

॥ मार्कण्डेय उवाच ॥ विवस्वतःसुतो राजन् महर्षिः सुप्रतापवान्। बभूव नरशार्दूल प्रजापतिसमद्युतिः।

ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः। अतिचक्राम पितरं मनुः स्वञ्च पितामहं।

ऊर्द्ध्वबाहुर्व्विशालायां बदर्य्यां स नराधिपः। एकपादस्थितस्तीव्रं चचार सुमहत्तपः।

अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढं। सोऽतप्यत तपो घोरं वर्षाणाम् अयुतं तदा। १२०५०

तं कदाचित्तपस्यन्तमार्द्रचीरं जटाधरं। चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत्।

भगवन् क्षुद्रमत्स्योऽस्मि बलवद्भ्यो भयं मम। मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत।

दुर्ब्बलं बलवन्तो हि मत्स्या मत्स्यं विशेषतः। आस्वदन्ति सदा वृत्तिर्विहिता नः सनातनी।

तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः। त्रातुमर्हसि कर्त्तास्मि कृते प्रतिकृतं तव।

स मत्स्यवचनं श्रुत्वा कृपयाऽभिपरिप्लुतः। मनुर्व्वैवस्वतो ऽगृह्णात्तं मत्स्यं पाणिना स्वयं। १२०५५

उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः। अलिञ्जरे प्राक्षिपत्तं चन्द्रांशुसदृशप्रभे।

स तत्र ववृधे राजन्मत्स्यः परमसत्कृतः । पुत्रवत् स्वीकरोत्तस्मै मनुर्भावं विशेषतः ।
अथ कालेन महता स मत्स्यः सुमहानभूत् । अलिञ्जरे यथा चैव नासौ समभवत् किल ।
अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत । भगवन् साधु मेऽद्यान्यत् स्थानं सम्प्रतिपादय ।
उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान् मनुः । तं मत्स्यमनयद्वापीं महतीं स मनुस्तदा । १२७६०
तत्र तं प्राक्षिपच्चापि मनुः परपुरञ्जय । अथावर्द्धत मत्स्यः स पुनर्वर्षगणान् बहून् ।
द्वियोजनायता वापी विस्तृता चापि योजनं । तस्यां नासौ समभवन्मत्स्यो राजीवलोचनः ।
विचेष्टितुञ्च कौन्तेय मत्स्यो वाप्यां विशाम्पते । मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ।
नय मां भगवन् साधो समुद्रमहिषीं प्रियां । गङ्गां तत्र निवत्स्यामि यथा वा तात मन्यसे ।
निदेशे हि मया तुभ्यं स्थातव्यमनसूयता । वृद्धिर्हि परमा प्राप्ता त्वत्कृते हि मयाऽनघ । १२७६५
एवमुक्तो मनुर्मत्स्यमनयद्भगवान् वशी । नदीं गङ्गां तत्र चैनं स्वयं प्राक्षिपदच्युतः ।
स तत्र ववृधे मत्स्यः कञ्चित्कालमरिन्दम । ततः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् ।
गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो । समुद्रं नय मामाशु प्रसीद भगवन्निति ।
उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयं । समुद्रमनयत् पार्थ तत्र चैनमवासृजत् ।
सुमहानपि मत्स्यस्तु स मनोर्नयतस्तदा । आसीद्यथेष्टहार्य्यश्च स्पर्शगन्धसुखश्च वै । १२७७०
यदा समुद्रे प्रक्षिप्तः स मत्स्यो मनुना तदा । तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् ।
भगवन् हि कृता रक्षा त्वया सर्व्वा विशेषतः । प्राप्तकालन्तु यत्कार्य्यं त्वया तच्छ्रूयतां मम ।
अचिराद्भगवन् भौममिदं स्थावरजङ्गमं । सर्व्वमेव महाभाग प्रलयं वै गमिष्यति ।
संप्रक्षालनकालोऽयं लोकानां समुपस्थितः । तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमं ।
त्रसानां स्थावराणाञ्च यच्चेङ्गं यच्च नेङ्गति । तस्य सर्व्वस्य संप्राप्तः कालः परमदारुणः । १२७७५
नौश्च कारयितव्या ते दृढा युक्तवटारका । तत्र सप्तर्षिभिः सार्द्धमारुहेथा महामुने ।
वीजानि चैव सर्व्वाणि यथोक्तानि द्विजैः पुरा । तस्यामारोहयेर्नावि सुसङ्गुप्तानि भागशः ।
नौस्थश्च मां प्रतीक्षेथास्ततो मुनिजनप्रिय । आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ।
एवमेतत्त्वया कार्य्यमापृष्टोऽसि व्रजाम्यहं । ता न शक्या महत्यो वै आपस्तर्त्तुं मया विना ।
नाभिशङ्क्यमिदञ्चापि वचनं मे त्वया विभो । एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत । १२७८०
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परं । ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ।
वीजान्यादाय सर्व्वाणि सागरं पुप्लुवे तदा । नौकया शुभया वीर महोर्म्मिणमरिन्दम ।
चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते । स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरञ्जय ।
शृङ्गी तत्राजगामाशु तदा भरतसत्तम । तं दृष्ट्वा मनुजव्याघ्र मनुर्मत्स्यं जलार्णवे ।
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितं । वटारकमयं पाशमथ मत्स्यस्य मूर्द्धनि । १२७८५
मनुर्मनुजशार्दूल तस्मिन् शृङ्गे न्यवेशयत् । संयतस्तेन पाशेन मत्स्यः परपुरञ्जय ।

वेगेन महता नावं प्राकर्षल्लवणाम्भसि । स च तांस्तारयन्नावा समुद्रं मनुजेश्वर ।
नृत्यमानमिवोर्म्मीभिर्गर्जमानमिवाम्भसा । क्षोभ्यमाणा महावातैः सा नौस्तस्मिन् महोदधौ ।
घूर्णते चपलेव स्त्री मत्ता परपुरञ्जय । नैव भूमिर्न्न च दिशः प्रदिशो वा चकाशिरे ।
सर्व्वमाम्भसमेवासीत् खं द्यौश्च नरपुङ्गव । एवम्भूते तदा लोके सङ्कुले भरतर्षभ । १२७९०
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यस्तथैव च । एवं बहून् वर्षगणांस्तां नावं सोऽथ मत्स्यकः ।
चकर्षातन्द्रितो राजंस्तस्मिन् सलिलसञ्चये । ततो हिमवतः शृङ्गं यत्परं भरतर्षभ ।
तत्राकर्षत्ततो नावं स मत्स्यः कुरुनन्दन । अथाब्रवीत्तदा मत्स्यस्तानृषीन् प्रहसन् शनैः ।
अस्मिन् हिमवतः शृङ्गे नावं बध्नीत माचिरं । सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ ।
नौर्म्मत्स्यस्य वचः श्रुत्वा शृङ्गे हिमवतस्तदा । तच्च नौबन्धनं नाम शृङ्गं हिमवतः परं । १२७९५
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ । अथाब्रवीदनिमिषस्तानृषीन् सहितस्तदा ।
अहं प्रजापतिर्ब्रह्मा यत्परं नाधिगम्यते । मत्स्यरूपेण यूयञ्च मयाऽस्मान्मोक्षिता भयात् ।
मनुना च प्रजाः सर्व्वाः सदेवासुरमानुषाः । स्रष्टव्याः सर्व्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति ।
तपसा चापि तीव्रेण प्रतिभाऽस्य भविष्यति । मत्प्रसादात् प्रजासर्गे न च मोहं गमिष्यति ।
इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनङ्गतः । स्रष्टुकामः प्रजाश्चापि मनुर्व्वैवस्वतः स्वयं । १२८००
प्रमूढोऽभूत् प्रजासर्गे तपस्तेपे महत्ततः । तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे ।
सर्व्वाः प्रजा मनुः साक्षाद्यथावद्भरतर्षभ । इत्येतन्मात्स्यकं नाम पुराणं परिकीर्त्तितं ।
आख्यानमिदमाख्यातं सर्व्वपापहरं मया । य इदं शृणुयान्नित्यं मनोश्चरितमादितः ।
स सुखी सर्व्वपूर्णार्थः सर्व्वलोकमियान्नरः ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि वैवस्वतोपाख्याने सप्ताशीत्यधिकशततोऽध्यायः ॥ १८७ ॥

॥ वैशम्पायन उवाच ॥ ततः स पुनरेवाथ मार्कण्डेयं यशस्विनं । पप्रच्छ विनयोपेतो धर्म्मराजो युधिष्ठिरः । १२८०५
नैके युगसहस्रान्तास्त्वया दृष्टा महामुने । न चापीह समः कश्चिदायुष्मान् दृश्यते तव ।
वर्ज्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनं । न तेऽस्ति सदृशः कश्चिदायुषा ब्रह्मवित्तम ।
अनन्तरीक्षे लोकेऽस्मिन् देवदानववर्ज्जिते । त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसे ।
प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे । त्वमेकः सृज्यमानानि भूतानीह प्रपश्यसि ।
चतुर्व्विधानि विप्रर्षे यथावत् परमेष्ठिना । वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः । १२८१०
त्वया लोकगुरुः साक्षात् सर्व्वलोकपितामहः । आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ।
स्वप्रमाणमथो विप्र त्वया कृतमनेकशः । घोरेणाविश्य तपसा वेधसो निर्म्मितास्त्वया ।
नारायणाङ्कप्रख्यस्त्वं साम्परायेऽतिपद्यसे । भगवानेकशः कृत्वा त्वया विष्णोश्च विश्वकृत् ।
कर्णिकोद्धरणं दिव्यं ब्रह्मणः कामरूपिणः । एतावद्वारयोश्चाभ्यां दृष्टौ दृष्टस्त्वया पुरा ।
तस्मात्त्वान्तको मृत्युर्जरा वा देहनाशिनी । न त्वां विशति विप्रर्षे प्रसादात् परमेष्ठिनः । १२८१५

यदा नैव रविर्नाग्निर्न वायुर्न च चन्द्रमाः । नैवान्तरीक्षं नैवोर्व्वी शेषं भवति किञ्चन ।
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे समुत्सन्नमहोरगे ।
प्रधानममितात्मानं पद्मात्मकविकेतनं । त्वमेकः सर्व्वभूतेश ब्रह्माणमुपतिष्ठसि ।
एतत् प्रत्यक्षतः सर्व्वं पूर्व्ववृत्तं द्विजोत्तम । त्वत्प्रसादादिच्छाम्यहं श्रोतुं सर्व्वहेत्वात्मिकां कथां ।
अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम । न तेऽस्त्यविदितं किञ्चित् सर्व्वलोकेषु नित्यदा । १२८८०
॥ मार्कण्डेय उवाच ॥ हन्त ते वर्त्तयिष्यामि नमस्कृत्य स्वयम्भुवे । पुरुषाय पुराणाय शाश्वतायाव्ययाय च ।
अव्यक्ताय सुसूक्ष्माय गुणाय निर्गुणात्मने । य एष पुरुषव्याघ्र पीतवासा जनार्द्दनः ।
एष कर्त्ता विकर्त्ता च भूतात्मा भूतकृत् प्रभुः । अचिन्त्यञ्च महाश्चर्य्यं पवित्रमिति चोच्यते ।
अनादिनिधनं भूतं विश्वमव्ययमक्षयं । एष कर्त्ता न क्रियते कारणञ्चापि पौरुषे ।
यद्येष पुरुषो वेद वेदा अपि न तं विदुः । सर्व्वमाश्चर्य्यमेवैतन्निर्वृत्तं राजसत्तम । १२८८५
आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये । चत्वार्य्याहुः सहस्राणि वर्षाणां तत्कृतं युगं ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः । त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परं । तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः ।
तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः । सहस्रमेकं वर्षाणां तथा कलियुगं स्मृतं ।
तस्य वर्षशतं सन्धिः सन्ध्यांशश्च ततः परं । सन्धिसन्ध्यांशयोस्तुल्यं प्रमाणमुपधारय । १२८९०
क्षीणे कलियुगे चैव प्रवर्त्तति कृतं युगं । एषा द्वादशसाहस्री युगाख्या परिकीर्त्तिता ।
एतत् सहस्रपर्य्यन्तमहो ब्राह्ममुदाहृतं । विश्वं हि ब्रह्मभवने सर्व्वतः परिवर्त्तते ।
लोकानां मनुजव्याघ्र प्रलयं तं विदुर्बुधाः । अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ।
सहस्रान्ते नराः सर्व्वे प्रायशोऽनृतवादिनः । यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ।
व्रतप्रतिनिधिश्चैव तस्मिन् काले प्रवर्त्तते । ब्राह्मणाः शूद्रकर्म्माणस्तथा शूद्रा धनार्ज्जकाः । १२८९५
क्षत्रधर्म्मेण चाप्यत्र वर्त्तयन्ति गते युगे । निवृत्तयज्ञस्वाध्याया दण्डाजिनविवर्ज्जिताः ।
ब्राह्मणाः सर्व्वभक्ष्याश्च भविष्यन्ति कलौ युगे । अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ।
विपरीते तदा लोके पूर्व्वरूपं क्षयस्य तत् । बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ।
मृषानुशासिनः पापा मृषावादपरायणाः । आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ।
काम्बोजा वाह्लिकाः शूरास्तथाभीरा नरोत्तम । न तदा ब्राह्मणः कश्चित् स्वधर्म्ममुपजीवति । १२९००
क्षत्रियाश्चापि वैश्याश्च विकर्म्मस्था नराधिप । अल्पायुषः स्वल्पबलाः स्वल्पवीर्य्यपराक्रमाः ।
अल्पसाराल्पदेहाश्च तथा सत्याल्पभाषिणः । बहुशून्या जनपदा मृगव्यालावृता दिशः ।
युगान्ते समनुप्राप्ते वृथा च ब्रह्मवादिनः । भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्य्यवादिनः ।
युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः । न तथा घ्राणयुक्ताश्च सर्व्वगन्धा विशाम्पते ।
रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः । बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्ज्जिताः । १२९०५

मुखेभगाः स्त्रियो राजन् भविष्यन्ति युगक्षये। अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः।
केशशूलाः स्त्रियो राजन् भविष्यन्ति युगक्षये। अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप।
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः। ब्रह्मवध्यावलिप्तानां तथा मिथ्याभिशंसिनां।
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः। लोभमोहपरीताश्च मिथ्याधर्म्मध्वजावृताः।
भिक्षार्थं पृथिवीपाल चक्रुर्वन्तो दिशो द्विजैः। करभारभयाद्भीता गृहस्थाः परिमोषकाः। १२८५०
मुनिच्छद्मकृतिच्छन्ना वाणिज्यमुपजीविनः। मिथ्या च नखरोमाणि धारयन्ति तदा द्विजाः।
अर्थलोभान्नरव्याघ्र तथा च ब्रह्मचारिणः। आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः।
ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनं। बहुपाषण्डसंकीर्णाः परान्नगुणवादिनः।
आश्रमा मनुजव्याघ्र भविष्यन्ति युगक्षये। यथर्त्तुवर्षी भगवान् तथा पाकशासनः।
न चापि सर्व्वबीजानि सम्यग्रोहन्ति भारत। हिंसाभिरामश्च जनस्तथा सम्पद्यते ऽशुचिः। १२८५५
अधर्म्मफलमत्यर्थं तदा भवति चानघ। तदा च पृथिवीपाल यो भवेद्धर्म्मसंयुतः।
अल्पायुः स हि मन्तव्यो न हि धर्म्मोऽस्ति कश्चन। भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः।
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत। धर्म्मिष्ठाः परिहीयन्ते पापीयान् वर्द्धते जनः।
धर्म्मस्य बलहानिः स्यादधर्म्मश्च बली तथा। अल्पायुषो दरिद्राश्च धर्म्मिष्ठा मानवास्तथा।
दीर्घायुषः समृद्धाश्च विधर्म्माणो युगक्षये। नगराणां विहारेषु विधर्म्मिणो युगक्षये। १२८६०
अधर्म्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत। सञ्चयेन तथाऽल्पेन भवन्त्याढ्यमदान्विताः।
धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः। हर्त्तुं व्यवसिता राजन् पापाचारसमन्विताः।
नैतदस्तीति मनुजा वर्त्तन्ते निरपत्रपाः। पुरुषादानि सत्त्वानि पक्षिणोऽथ मृगास्तथा।
नगराणां विहारेषु चैत्येष्वपि च शेरते। सप्तवर्षाऽष्टवर्षाश्च स्त्रियो गर्भधरा नृप।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते। भवन्ति षोडशे वर्षे नराः पलितिनस्तथा। १२८६५
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते। क्षीणायुषो महाराज तरुणा वृद्धशीलिनः।
तरुणानाञ्च यच्छीलं तद्वृद्धेषु प्रजायते। विपरीतास्तदा नार्य्यो वञ्चयित्वाऽरहः पतीन्।
व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च। वीरपत्न्यस्तथा नार्य्यः संश्रयन्ति नरान्नृप।
भर्त्तारमपि जीवन्तमन्यान् व्यभिचरन्त्युत। तस्मिन् युगसहस्रान्ते सम्प्राप्ते चायुषः क्षये।
अनावृष्टिर्महाराज जायते बहुवार्षिकी। ततस्तान्यल्पसाराणि सत्त्वानि क्षुधितानि वै। १२८७०
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते। ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप।
पीयते सलिलं सर्व्वं समुद्रेषु सरित्सु च। यच्च काष्ठं तृणञ्चापि शुष्कञ्चार्द्रञ्च भारत।
सर्व्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ। ततः सम्वर्त्तको वह्निर्व्वायुना सह भारत।
लोकमाविशते पूर्व्वमादित्यैरुपशोषितं। ततः स पृथिवीं भित्त्वा प्रविश्य च रसातलं।
देवदानवयक्षाणां भयं जनयते महत्। निर्द्दहन्नागलोकञ्च यच्च किञ्चित् क्षिताविह। १२८७५

अधस्तात् पृथिवीपाल सर्व्वं नाशयते क्षणात्। ततो योजनविस्तीर्णं सहस्राणि शतानि च।
निर्द्दहत्यशिवो वायुः स च संवर्त्तकोऽनलः। सदेवासुरगन्धर्व्वं सयक्षोरगराक्षसं।
ततो दहति दीप्तः स सर्व्वमेव जगद्विभुः। ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः। केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः।
केचित् किञ्जल्कसंकाशाः केचित्पीताः पयोधराः। केचिद्धारिद्रसङ्काशाः काकाण्डकनिभास्तथा। १२८८०
केचित्कमलपत्राभाः केचिद्धिङ्गुलसप्रभाः। केचित्पुरवराकाराः केचिद्गजकुलोपमाः।
केचिदञ्जनसङ्काशाः केचिन्मकरसन्निभाः। विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः।
घोररूपा महाराज घोरस्वननिनादिताः। ततो जलधराः सर्व्वे व्याप्नुवन्ति नभस्तलं।
तैरियं पृथिवी सर्व्वा सपर्व्वतवनाकरा। आपूर्य्यते महाराज सलिलौघपरिप्लुता।
ततस्ते जलदा घोरा राविणः पुरुषर्षभ। सर्व्वतः प्लावयन्त्याशु चोदिताः परमेष्ठिना। १२८८५
वर्षमाणा महत्तोयं पूरयन्तो वसुन्धरां। सुघोरमशिवं रौद्रं नाशयन्ति च पावकं।
ततो द्वादशवर्षाणि पयोदास्त उपप्लवे। धाराभिः पूरयन्तो वै चोद्यमाना महात्मना।
ततः समुद्रः स्वां वेलामतिक्रामति भारत। पर्व्वताश्च विदीर्य्यन्ते मही चाप्सु निमज्जति।
सर्व्वतः सहसा भ्रान्तास्ते पयोदा नभस्तलं। संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः।
ततस्तं मारुतं घोरं स्वयम्भूर्मनुजाधिप। आदिः पद्मालयो देवः पीत्वा स्वपिति भारत। १२८९०
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे। नष्टे देवासुरगणे यक्षराक्षसवर्ज्जिते।
निर्म्मनुष्ये महीपाल निःश्वापदमहीरुहे। अनन्तरीक्षे लोकेऽस्मिन् भ्रमाम्येकोऽहमादृतः।
एकार्णवे जले घोरे विचरन् पार्थिवोत्तम। अपश्यन् सर्व्वभूतानि वैक्लव्यमगमं ततः।
ततः सुदीर्घं गत्वाऽहं प्लवमानो नराधिप। श्रान्तः क्वचिन्न शरणं लभाम्यहमतन्द्रितः।
ततः कदाचित्पश्यामि तस्मिन् सलिलसञ्चये। न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते। १२८९५
शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप। पर्य्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते।
उपविष्टं महाराज पूर्णेन्दुसदृशाननं। फुल्लपद्मविशालाक्षं बालं पश्यामि भारत।
ततो मे पृथिवीपाल विस्मयः सुमहानभूत्। कथन्त्वयं शिशुः शेते लोके नाशमुपागते।
तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये। भूतं भव्यं भविष्यच्च जानन्नपि नराधिप।
अतसीपुष्पवर्णाभः श्रीवत्सकृतभूषणः। साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे। १२९००
ततो मामब्रवीद्बालः स पद्मनिभलोचनः। श्रीवत्सधारी द्युतिमान् वाक्यं श्रुतिसुखावहं।
जानामि त्वां परिश्रान्तं ततो विश्रामकाङ्क्षिणं। मार्कण्डेय इहास्स्व त्वं यावदिच्छसि भार्गव।
अभ्यन्तरशरीरं मे प्रविश्य मुनिसत्तम। आस्स्व भो विहितो वासः प्रसादस्ते कृतो मया।
ततो बालेन तेनैवमुक्तस्यासीत्तदा मम। निर्व्वेदो जीविते दीर्घे मनुष्यत्वे च भारत।
ततो बालेन तेनास्यं सहसा विवृतं कृतं। तस्याहमवशो वक्त्रं दैवयोगात् प्रवेशितः। १२९०५

ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप। सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीं।
गङ्गां शतद्रुं सीताञ्च यमुनामथ कौशिकीं। चर्म्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीं।
सिन्धुञ्चैव विपाशाञ्च नदीं गोदावरीमपि। वस्वोकसारां नलिनीं नर्म्मदाञ्चैव भारत।
नदीं ताम्राञ्च वेणाञ्च पुण्यतोयां शुभावहां। सुवेणां कृष्णवेणाञ्च इरामाञ्च महानदीं।
वितस्ताञ्च महाराज कावेरीञ्च महानदीं। शोणञ्च पुरुषव्याघ्र विशल्यां किम्पुनामपि। १२९१०
एताश्चान्याश्च नद्योऽहं पृथिव्यां या नरोत्तम। परिक्रामन् प्रपश्यामि तस्य कुक्षौ महात्मनः।
ततः समुद्रं पश्यामि यादोगणनिषेवितं। रत्नाकरममित्रघ्न पयसोनिधिमुत्तमं।
तत्र पश्यामि गगनं चन्द्रसूर्य्यविराजितं। जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभं।
पश्यामि च महीं राजन् काननैरुपशोभितां। यजन्ते हि तदा राजन् ब्राह्मणा बहुभिर्मखैः।
क्षत्त्रियाश्च प्रवर्त्तन्ते सर्व्ववर्णानुरञ्जनैः। वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप। १२९१५
शुश्रूषायाञ्च निरता द्विजानां वृषलास्तदा। ततः परिपतन् राजंस्तस्य कुक्षौ महात्मनः।
हिमवन्तञ्च पश्यामि हेमकूटञ्च पर्व्वतं। निषधञ्चापि पश्यामि श्वेतञ्च रजतान्वितं।
पश्यामि च महीपाल पर्व्वतं गन्धमादनं। मन्दरं मनुजव्याघ्र नीलञ्चापि महागिरिं।
पश्यामि च महाराज मेरुं कनकपर्व्वतं। महेन्द्रञ्चैव पश्यामि विन्ध्यञ्च गिरिमुत्तमं।
मलयञ्चैव पश्यामि पारियात्रञ्च पर्व्वतं। एते चान्ये च बहवो यावन्तः पृथिवीधराः। १२९२०
तस्योदरे मया दृष्टाः सर्व्वे रत्नविभूषिताः। सिंहान् व्याघ्रान्वराहांश्च पश्यामि मनुजाधिप।
पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते। तानि सर्व्वाण्यहं तत्र पश्यन् पर्य्यचरं तदा।
कुक्षौ तस्य नरव्याघ्र प्रविष्टः सञ्चरन् दिशः। शक्रादींश्चापि पश्यामि कृत्स्नान् देवगणानहं।
साध्यान् रुद्रांस्तथादित्यान् गुह्यकान् पितरस्तथा। सर्प्पान्नागान् सुपर्णांश्च वसूनप्यश्विनावपि।
गन्धर्व्वाप्सरसो यक्षानृषींश्चैव महीपते। दैत्यदानवसङ्घांश्च कालेयांश्च नराधिप। १२९२५
सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः। यच्च किञ्चिन्मया लोके दृष्टं स्थावरजङ्गमं।
सर्व्वं पश्याम्यहं राजंस्तस्य कुक्षौ महात्मनः। चरमाणः फलाहारः कृत्स्नं जगदिदं विभो।
अन्तःशरीरे तस्याहं वर्षाणामधिकं शतं। न च पश्यामि तस्याहं देहस्यान्तं कदाचन।
सततं धावमानस्य चिन्तयानो विशाम्पते। आसादयामि नैवान्तं तस्य राजन्महात्मनः।
ततस्तमेव शरणं गतोऽस्मि विधिवत्तदा। वरेण्यं वरदं देवं मनसा कर्म्मणैव च। १२९३०
ततोऽहं सहसा राजन् वायुवेगेन निःसृतः। महात्मनो मुखात्तस्य विवृतात् पुरुषोत्तम।
ततस्तस्यैव शाखायां न्यग्रोधस्य विशाम्पते। आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत्।
तेनैव बालवेशेन श्रीवत्सकृतलक्षणं। आसीनं तं नरव्याघ्र पश्याम्यमिततेजसं।
ततो मामब्रवीद्बालः स प्रीतः प्रहसन्निव। श्रीवत्सधारी द्युतिमान् पीतवासा महाद्युतिः।
अपीदानीं शरीरेऽस्मिन्मामके मुनिसत्तम। उषितस्त्वं परिश्रान्तो मार्कण्डेय ब्रवीमि ते। १२९३५

मुहूर्त्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा । यया निर्मुक्तमात्मानमपश्यं लब्धचेतसं ।
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ । सुजातौ मृदुरक्ताभिरङ्गुलीभिर्व्विराजितौ ।
प्रयत्नेन मया मूर्द्ध्ना गृहीत्वा ह्यभिवन्दितौ । दृष्ट्वाऽपरिमितं तस्य प्रभावममितौजसः ।
विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य च । दृष्टो मया स भूतात्मा देवः कमललोचनः ।
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रुवं । ज्ञातुमिच्छामि देव त्वां मायाञ्चैतां तवोत्तमां । १२९४०
आस्येनानुप्रविष्टोऽहं शरीरे भगवंस्तव । दृष्टवानखिलान् सर्व्वान् समस्तान् जठरे हि ते ।
तव देव शरीरस्था देवदानवराक्षसाः । यक्षगन्धर्व्वनागाश्च जगत् स्थावरजङ्गमं ।
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते । द्रुतमन्तःशरीरे ते सततं परिवर्त्तिनः ।
निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो । इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वाऽहमनिन्दितं ।
इह भूत्वा शिशुः साक्षात् किं भवानवतिष्ठते । पीत्वा जगदिदं सर्व्वमेतदाख्यातुमर्हसि । १२९४५
किमर्थञ्च जगत् सर्व्वं शरीरस्थं तवानघ । कियन्तञ्च त्वया कालमिहस्थेयमरिन्दम ।
एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया । त्वत्तः कमलपत्राक्ष विस्तरेण यथातथं ।
महद्ध्येतदचिन्त्यञ्च यदहं दृष्टवान् प्रभो । इत्युक्तः स मया श्रीमान् देवदेवो महाद्युतिः ।
सान्त्वयन् मामिदं वाक्यमुवाच वदताम्वरः ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि मार्कण्डेयप्रश्ने अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

॥ देव उवाच ॥ कामं देवापि मां विप्र नहि जानन्ति तत्त्वतः । त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहं । १२९५०
पितृभक्तोऽसि विप्रर्षे माञ्चैव शरणङ्गतः । ततो दृष्टोऽस्मि ते साक्षात् ब्रह्मचर्य्यञ्च ते महत् ।
अपां नारा इति पुरा संज्ञाकर्म्म कृतं मया । तेन नारायणोऽप्युक्तो मम तत्त्वयनं सदा ।
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः । विधाता सर्व्वभूतानां संहर्त्ता च द्विजोत्तम ।
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः । अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ।
अहं शिवश्च सोमश्च काश्यपोऽथ प्रजापतिः । अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम । १२९५५
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने । द्यौर्मूर्द्धा खं दिशः श्रोत्रे तथापः स्वेदसम्भवाः ।
सदिशञ्च नभः कायो वायुर्मनसि मे स्थितः । मया क्रतुशतैरिष्टं बहुभिः स्वाप्तदक्षिणैः ।
यजन्ते वेदविदुषो मां देवयजने स्थितं । पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ।
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषवः । चतुःसमुद्रपर्य्यन्तां मेरुमन्दरभूषणां ।
शेषो भूत्वाऽहमेवैतां धारयामि वसुन्धरां । वाराहं रूपमास्थाय मयेयं जगती पुरा । १२९६०
मज्जमाना जले विप्र वीर्य्येणासीत् समुद्धृता । अग्निश्च वडवावक्त्रो भूत्वाऽहं द्विजसत्तम ।
पिवाम्यपः समाविद्धास्ताश्चैव विसृजाम्यहं । ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संस्थिता विशः ।
पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च । ऋग्वेदः सामवेदश्च यजुर्व्वेदोऽप्यथर्व्वणः ।
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च । यतयः शान्तिपरमा यतात्मानो बुभुत्सवः ।

कामक्रोधद्वेषमुक्ता निःसङ्गा वीतकल्मषाः। सत्त्वस्था निरहङ्कारा नित्यमध्यात्मकोविदाः। १२८९५
मामेव सततं विप्राश्चिन्तयन्त उपासते। अहं संवर्त्तको वह्निरहं संवर्त्तकोऽनिलः।
अहं संवर्त्तकः सूर्य्यस्त्वहं संवर्त्तकोऽनलः। तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले।
मम वै रोमकूपाणि विद्धि त्वं द्विजसत्तम। रत्नाकराः समुद्राश्च सर्व्व एव चतुर्द्दिशं।
वसनं शयनञ्चैव निलयञ्चैव विद्धि मे। मयैव सुविभक्तास्ते देवकार्य्यार्थसिद्धये।
कामं क्रोधञ्च हर्षञ्च भयं मोहं तथैव च। ममैव विद्धि रोमाणि सर्व्वाण्येतानि सत्तम। १२९००
प्राप्नुवन्ति नरा विप्र यत् कृत्वा कर्म्म शोभनं। सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु।
मद्विधानेन विहिता मम देहविहारिणः। मयाऽभिभूतविज्ञाना विचेष्टन्ते न कामतः।
सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः। शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः।
प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्म्मभिः। लोभाभिभूतैः कृपणैरनार्य्यैरकृतात्मभिः।
तस्मान्महाफलं विद्धि नराणां भावितात्मनां। सुदुष्प्रापं विमूढानां मार्गं योगैर्निषेवितं। १२९०५
यदा यदा च धर्म्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहं।
दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः। राक्षसाश्चापि लोकेऽस्मिन् यदोत्पत्स्यन्ति दारुणाः।
तदाऽहं संप्रसूयामि गृहेषु शुभकर्म्मणां। प्रविष्टो मानुषं देहं सर्व्वं प्रशमयाम्यहं।
सृष्ट्वा देवमनुष्यांस्तु गन्धर्व्वोरगराक्षसान्। स्थावराणि च भूतानि संहराम्यात्ममायया।
कर्म्मकाले पुनर्द्देहमनुचिन्त्य सृजाम्यहं। आविश्य मानुषं देहं मर्य्यादाबन्धकारणात्। १२९१०
श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम। रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा।
त्रयो भागा ह्यधर्म्मस्य तस्मिन् काले भवन्ति च। अन्तकाले च संप्राप्ते कालो भूत्वाऽतिदारुणः।
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमं। अहं त्रिवर्त्मा विश्वात्मा सर्व्वलोकसुखावहः।
अभिभूः सर्व्वगो ऽनन्तो हृषीकेश उरुक्रमः। कालचक्रं नयाम्येको ब्रह्मन्नहमरूपकं।
शमनं सर्व्वभूतानां सर्व्वलोककृतोद्यमं। एवं प्रणिहितः सम्यक् ममात्मा मुनिसत्तम। १२९१५
सर्व्वभूतेषु विप्रेन्द्र नच मां वेत्ति कश्चन। सर्व्वलोके च मां भक्ताः पूजयन्ति च सर्व्वशः।
यच्च किञ्चित् त्वया प्राप्तं मयि क्लेशात्मकं द्विज। सुखोदयाय तत्सर्व्वं श्रेयसे च तवानघ।
यच्च किञ्चित्त्वया लोके दृष्टं स्थावरजङ्गमं। विहितः सर्व्वथैवासौ ममात्मा भूतभावनः।
अर्द्धं मम शरीरस्य सर्व्वलोकपितामहः। अहं नारायणो नाम शङ्खचक्रगदाधरः।
यावद्युगानां विप्रर्षे सहस्रपरिवर्त्तनात्। तावत् स्वपिमि विश्वात्मा सर्व्वभूतानि मोहयन्। १२९२०
एवं सर्व्वमहं कालमिहास्से मुनिसत्तम। अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते।
मया च दत्तो विप्राग्र्य वरस्ते ब्रह्मरूपिणा। असकृत् परितुष्टेन विप्रर्षिगणपूजित।
सर्व्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमं। विक्लवोऽसि मया ज्ञातस्ततस्ते दर्शितं जगत्।
अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम। दृष्ट्वा लोकं समस्तञ्च विस्मितो नावबुध्यसे।

ततोऽसि वक्त्रादिप्रर्षे द्रुतं निःसारितो मया। आख्यातस्ते मया चात्मा दुर्ज्ञेयो हि सुरासुरैः। १२९९५
यावत्स भगवान् ब्रह्मा न बुध्येत महातपाः। तावत्त्वमिह विप्रर्षे विश्रब्धश्चर वै सुखं।
ततो विबुद्धे तस्मिंस्तु सर्व्वलोकपितामहे। एकीभूतो हि स्रक्ष्यामि शरीराणि द्विजोत्तम।
आकाशं पृथिवी ज्योतिर्वायुः सलिलमेव च। लोके यच्च भवेच्छेषमिह स्थावरजङ्गमं।
॥ मार्कण्डेय उवाच ॥ इत्युक्त्वाऽन्तर्हितस्तात स देवः परमाद्भुतः। प्रजाश्चेमाः प्रपश्यामि विचित्रा विविधाः कृताः।
एवं दृष्टं मया राजंस्तस्मिन् प्राप्ते युगक्षये। आश्चर्यं भरतश्रेष्ठ सर्व्वधर्म्मभृताम्वर। १३०००
यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः। स एष पुरुषव्याघ्रः सम्बन्धी ते जनार्द्दनः।
अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति मां। दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं मम।
स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः। आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः।
एष धाता विधाता च संहर्त्ता चैव शाश्वतः। श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः।
दृष्ट्वेमं वृष्णिप्रवरं स्मृतिर्मामियमागता। आदिदेवमजं विष्णुं पुरुषं पीतवाससं। १३००५
सर्व्वेषामेव भूतानां पिता माता च माधवः। गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः।
॥ वैशम्पायन उवाच ॥ एवमुक्तास्तु ते पार्था यमौ च भरतर्षभौ। द्रौपद्या सहिताः सर्व्वे नमश्चक्रुर्जनार्द्दनं।
स चैतान् पुरुषव्याघ्र साम्ना परमवल्गुना। सान्त्वयामास मानार्हो मन्यमानो यथाविधि।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि मार्कण्डेयनारायणसंवादे एकोननवत्यधिकशततमोऽध्यायः॥१८९॥
॥ वैशम्पायन उवाच ॥ युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिं। पुनः पप्रच्छ साम्राज्ये भविष्यां जगतो गतिं।
॥ युधिष्ठिर उवाच ॥ आश्चर्य्यभूतं भवतः श्रुतं नो वदताम्वर। मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययं। १३०१०
अस्मिन् कलियुगे त्वस्ति पुनः कौतूहलं मम। समाकुलेषु धर्म्मेषु किन्नु शेषं भविष्यति।
किंवीर्य्या मानवास्तत्र किमाहारविहारिणः। किमायुषः किंवसना भविष्यन्ति युगक्षये।
काञ्च काष्ठां समासाद्य पुनः सम्पत्स्यते कृतं। विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे।
इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत। रमयन् वृष्णिशार्दूलं पाण्डवांश्च महामुनिः।
॥ मार्कण्डेय उवाच ॥ शृणु राजन्मया दृष्टं यत्पुरा श्रुतमेव च। अनुभूतञ्च राजेन्द्र देवदेवप्रसादजं। १३०१५
भविष्यं सर्व्वलोकस्य वृत्तान्तं भरतर्षभ। कलुषं कालमासाद्य कथ्यमानं निबोध मे।
कृते चतुष्पात् सकलो निर्व्याजोपाधिवर्ज्जितः। वृषः प्रतिष्ठितो धर्म्मो मनुष्ये भरतर्षभ।
अधर्म्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः। त्रेतायां द्वापरेऽर्द्धेन व्यामिश्रो धर्म्म उच्यते।
त्रिभिरंशैरधर्म्मस्तु लोकानाक्रम्य तिष्ठति। तामसं युगमासाद्य तदा भरतसत्तम।
चतुर्थांशेन धर्म्मस्तु मनुष्यानुपतिष्ठति। आयुर्व्वीर्य्यमथो बुद्धिर्ब्बलं तेजश्च पाण्डव। १३०२०
मनुष्याणामनुयुगं ह्रसतीति निबोध मे। राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर।
व्याजैर्धर्म्मञ्चरिष्यन्ति धर्म्मवैतंसिका नराः। सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः।
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति। आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपजीवितुं।

विद्याहीनानविज्ञानाह्नोभोऽप्यभिभविष्यति। लोभक्रोधपरा मूढाः कामासक्ताश्च मानवाः।
वैरबद्धा भविष्यन्ति परस्परबधैषिणः। ब्राह्मणाः क्षत्रिया वैश्याः संकीर्य्यन्त परस्परं। १२०२६
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्ज्जिताः। अन्त्या मध्या भविष्यन्ति मध्याश्चान्त्या न संशयः।
ईदृशो भविता लोको युगान्ते पर्य्युपस्थिते। वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः।
भार्य्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये। मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकं।
गोषु नष्टासु पुरुषा येऽपि नित्यं धृतव्रताः। तेऽपि लोभसमायुक्ता भविष्यन्ति युगक्षये।
अन्योऽन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः। अजपा नास्तिकास्तेना भविष्यन्ति युगक्षये। १२०३०
सरित्तीरेषु कुद्दालैर्व्वापयिष्यन्ति चौषधीः। ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये।
श्राद्धे दैवेऽपि पुरुषा येऽपि नित्यं धृतव्रताः। तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परं।
पिता पुत्त्रस्य भोक्ता च पितुः पुत्त्रस्तथैव च। अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये।
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः। न यक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः।
निम्नेष्वीहां करिष्यन्ति हेतुवादविमोहिताः। निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः। १२०३५
एकहायनवत्सांश्च योजयिष्यन्ति मानवाः। पुत्त्रः पितृबधं कृत्वा पिता पुत्त्रबधं तथा।
निरुद्वेगो वृहद्वादी न निन्दामुपलप्स्यते। म्लेच्छभूतं जगत्सर्व्वं निष्क्रियं यज्ञवर्ज्जितं।
भविष्यति निरानन्दमनुत्सवमथो तथा। प्रायशः कृपणानां हि तथा बन्धुमतामपि।
विधवानाञ्च वित्तानि हरिष्यन्तीह मानवाः। स्वल्पवीर्य्यबलास्तब्धा लोभमोहपरायणाः।
तत्कथादानसन्तुष्टा दुष्टानामपि मानवाः। प्रतिग्रहं करिष्यन्ति मायाचारपरिग्रहाः। १२०४०
समाक्रयन्तः कौन्तेय राजानः पापबुद्धयः। परस्परबधोद्युक्ता मूर्खाः पण्डितमानिनः।
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः। अरक्षितारो लुब्धाश्च मानाहङ्कारदर्पिताः।
केवलं दण्डरुचयो भविष्यन्ति युगक्षये। आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च।
भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत। न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते।
स्वयंग्राहा भविष्यन्ति युगान्ते समुपस्थिते। राजानश्चाप्यसन्तुष्टाः परार्थान् मूढचेतसः। १२०४५
सर्व्वोपायैर्हरिष्यन्ति युगान्ते पर्य्युपस्थिते। म्लेच्छीभूतं जगत्सर्व्वं भविष्यति न संशयः।
हस्तो हस्तं परिमुषेद्युगान्ते समुपस्थिते। सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः।
स्थविरा बालमतयो बालाः स्थविरबुद्धयः। भीरुस्तथा शूरमानी शूरा भीरुविवादिनः।
न विश्वसन्ति चान्योऽन्यं युगान्ते पर्य्युपस्थिते। एकहार्य्यं युगं सर्व्वं लोभमोहव्यवस्थितं।
अधर्म्मो वर्द्धते तत्र न तु धर्म्मः प्रवर्त्तते। ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप। १२०५०
एकवर्णस्तदा लोको भविष्यति युगक्षये। न क्षंस्यति पिता पुत्त्रं पुत्त्रश्च पितरं तथा।
भार्य्याश्च पतिशुश्रूषां न करिष्यन्ति संक्षये। ये यवान्ना जनपदा गोधूमान्नास्तथैव च।
तान् देशान् संश्रयिष्यन्ति युगान्ते पर्य्युपस्थिते। स्वैराचाराश्च पुरुषा योषितश्च विशाम्पते।

अन्योऽन्यं न सहिष्यन्ति युगान्ते पर्य्युपस्थिते। म्लेच्छीभूतं जगत्सर्व्वं भविष्यति युधिष्ठिर।
न श्राद्धैस्तर्पयिष्यन्ति देवतानीह मानवाः। न कश्चित् कस्यचिच्छ्रोता न कश्चित् कस्यचिद्गुरुः। १२९५५
तमोग्रस्तस्तदा लोको भविष्यति जनाधिप। परमायुश्च भविता तदा वर्षाणि षोडश।
ततः प्राणान् विमोक्ष्यन्ति युगान्ते समुपस्थिते। पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते।
सप्तवर्षाऽष्टवर्षाश्च प्रजास्यन्ति नरास्तदा। पत्यौ स्त्री तु तदा राजन् पुरुषो वा स्त्रियं प्रति।
युगान्ते राजशार्दूल न तोषमुपयास्यति। अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति।
न कश्चित् कस्यचिद्दाता भविष्यति युगक्षये। अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः। १२९६०
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये। म्लेच्छाचाराः सर्व्वभक्षा दारुणाः सर्व्वकर्म्मसु।
भाविनः पश्चिमे काले मनुष्या नात्र संशयः। क्रयविक्रयकाले च सर्व्वः सर्व्वस्य वञ्चनं।
युगान्ते भरतश्रेष्ठ वित्तलोभात् करिष्यति। ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा।
आत्मच्छन्देन वर्त्तन्ते युगान्ते समुपस्थिते। स्वभावात् क्रूरकर्म्माणश्चान्योऽन्यमभिशंसिनः।
भवितारो जनाः सर्व्वे संप्राप्ते तु युगक्षये। आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः। १२९६५
भविता संशयो लोके जीवितस्य हि देहिनां। तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप।
ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः। हाहाकृता द्विजाश्चैव भयार्त्ता वृषलार्द्दिताः।
घातारमलभन्तो वै भ्रमिष्यन्ति महीमिमां। जीवितान्तकराः क्रूरा रौद्राः प्राणिविहिंसकाः।
यदा भविष्यन्ति नरास्तदा सङ्क्षेप्स्यते युगं। आश्रयिष्यन्ति च नदीः पर्व्वतान् विषमाणि च।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह। दस्युभिः पीडिता राजन् काका इव द्विजोत्तमाः। १२९७०
कुराजभिश्च सततं करभारप्रपीडिताः। धैर्य्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये।
विकर्म्माणि करिष्यन्ति शूद्राणां परिचारकाः। शूद्रा धर्म्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्य्युपासकाः।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः। विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः।
एडूकान् पूजयिष्यन्ति वर्ज्जयिष्यन्ति देवताः। शूद्राः परिचरिष्यन्ति न द्विजान् युगसंक्षये।
आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च। देवस्थानेषु चैत्येषु नागानामालयेषु च। १२९७५
एडूकचिह्ना पृथिवी न देवगृहभूषिता। भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणं।
यदा रौद्रा धर्म्महीना मांसादाः पानपास्तथा। भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगं।
पुष्पं पुष्पे यदा राजन् फले वा फलमाश्रितं। प्रजास्यति महाराज तदा सङ्क्षेप्स्यते युगं।
अकालवर्षी पर्ज्जन्यो भविष्यति गते युगे। अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रियाः।
विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह। मही म्लेच्छसमाकीर्णा भविष्यति ततोऽपरात्। १२९८०
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश। निर्व्विशेषा जनपदास्तदा विष्टिकरार्द्दिताः।
आश्रमानुपलप्स्यन्ति फलमूलोपजीविनः। एवं पर्य्याकुले लोके मर्य्यादा न भविष्यति।
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः। आचार्य्योऽपनिधिश्चैव भर्त्स्यते तदनन्तरं।

अर्थयुक्ता प्रवत्स्यन्ति मित्रसम्बन्धिबान्धवाः। अभावः सर्व्वभूतानां युगान्ते सम्भविष्यति।
दिशः प्रज्वलिताः सर्व्वा नक्षत्राण्यप्रभाणि च। ज्योतींषि प्रतिकूलानि वाताः पर्य्याकुलास्तथा। १२०८५
उल्कापाताश्च बहवो महाभयनिदर्शकाः। षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्व्वशः। कबन्धान्तर्हितो भानुरुदयास्तमने तदा।
अकालवर्षी भगवान् भविष्यति सहस्रदृक्। शस्यानि च न रोक्ष्यन्ति युगान्ते पर्य्युपस्थिते।
अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः। भर्तॄणां वचने चैव न स्थास्यन्ति तदा स्त्रियः।
पुत्त्राश्च मातापितरौ हनिष्यन्ति युगक्षये। सूदयिष्यन्ति च पतीन् स्त्रियः पुत्त्रानपाश्रिताः। १२०९०
अपर्व्वणि महाराज सूर्य्यं राहुरुपैष्यति। युगान्ते हुतभुक्चापि सर्व्वतः प्रज्वलिष्यति।
पानीयं भोजनञ्चापि याचमानास्तदाऽध्वगाः। न लप्स्यन्ते निवासञ्च निरस्ताः पथि शेरते।
निर्घातवायसा नागाः शकुनाः सम्मृगद्विजाः। रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्य्युपस्थिते।
मित्रं सम्बन्धिनश्चापि सन्त्यक्ष्यन्ति नरास्तदा। जनं परिजनञ्चापि युगान्ते पर्य्युपस्थिते।
अथ देशान् दिशश्चापि पत्तनानि पुराणि च। क्रमशः संश्रयिष्यन्ति युगान्ते पर्य्युपस्थिते। १२०९५
हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः। विक्रोशमानश्चान्योऽन्यं जनो गां पर्य्यटिष्यति।
ततस्तुमुलसङ्घाते वर्त्तमाने युगक्षये। द्विजातिपूर्व्वको लोकः क्रमेण प्रभविष्यति।
ततः कालान्तरेऽन्यस्मिन् पुनर्लोकविवृद्धये। भविष्यति पुनर्दैवमनुकूलं यदृच्छया।
यदा सूर्य्यश्च चन्द्रश्च तथा तिष्यबृहस्पती। एकराशौ समेष्यन्ति प्रवर्त्स्यति तदा कृतं।
कालवर्षी च पर्ज्जन्यो नक्षत्राणि शुभानि च। प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः। १२१००
क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयं। कल्की विष्णुयशा नाम द्विजः कालप्रचोदितः।
उत्पत्स्यते महावीर्य्यो महाबुद्धिपराक्रमः। सम्भूतः सम्भलग्रामे ब्राह्मणावसथे शुभे।
मनसा तस्य सर्व्वाणि वाहनान्यायुधानि च। उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च।
स धर्म्मविजयी राजा चक्रवर्त्ती भविष्यति। स चेमं सङ्कुलं लोकं प्रसादमुपनेष्यति।
उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः। संक्षेपको हि सर्व्वस्य युगस्य परिवर्त्तकः। १२१०५
स सर्व्वत्र गतान् क्षुद्रान् ब्राह्मणैः परिवारितः। उत्सादयिष्यति तदा सर्व्वम्लेच्छगणान् द्विजः।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि कलियुगकृत्यकथने नवत्यधिकशततोऽध्यायः ॥ १९० ॥

॥ मार्कण्डेय उवाच ॥ ततश्चौरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमां। वाजिमेधे महायज्ञे विधिवत् कल्पयिष्यति।
स्थापयित्वा च मर्य्यादाः स्वयम्भूविहिताः शुभाः। वनं पुण्ययशःकर्म्मा रमणीयं प्रवेक्ष्यति।
तच्छीलमनुवर्त्स्यन्ति मनुष्या लोकवासिनः। विप्रैश्चौरक्षयश्चैव कृते क्षेमं भविष्यति।
कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च। स्थापयन् द्विजशार्दूलो देशेषु विजितेषु च। १२११०
संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान्। कल्किश्चरिष्यति महीं सदा दस्युबधे रतः।
हा मातस्तात पुत्त्रेति तास्ता वाचः सुदारुणाः। विक्रोशमानान् सुभृशं दस्यून्नेष्यति संक्षयं।

ततोऽधर्म्मविनाशो वै धर्म्मवृद्धिश्च भारत । भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ।
आरामाश्चैव चैत्याश्च तडागावसथास्तथा । पुष्करिण्यश्च विविधा देवतायतनानि च ।
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे । ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः । १२९१५
आश्रमाः सहपाषण्डाः स्थिताः सत्यजनाः प्रजाः । प्रयन्ति सर्व्वबीजानि रोप्यमाणानि चैव ह ।
सर्व्वेष्वृतुषु राजेन्द्र सर्व्वं शस्यं भविष्यति । नरा दानेषु निरता व्रतेषु नियमेषु च ।
जपयज्ञपरा विप्रा धर्म्मकामा मुदा युताः । पालयिष्यन्ति राजानो धर्म्मेणेमां वसुन्धरां ।
व्यवहाररता वैश्या भविष्यन्ति कृते युगे । षट्कर्म्मनिरता विप्राः क्षत्रिया विक्रमे रताः ।
शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च । एष धर्म्मः कृतयुगे त्रेतायां द्वापरे तथा । १२९२०
पश्चिमे युगकाले च यः स ते संप्रकीर्त्तितः । सर्व्वलोकस्य विदिता युगसङ्ख्या च पाण्डव ।
एतत्ते सर्व्वमाख्यातमतीतानागतं तथा । वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतं ।
एवं संसारमार्गा मे बहुशश्चिरजीविनः । दृष्टाश्चैवानुभूताश्च तांस्ते कथितवानहं ।
इदञ्चैवापरं भूयः सह भ्रातृभिरच्युत । धर्म्मसंशयमोक्षार्थं निबोध वचनं मम ।
धर्म्मे त्वयात्मा संयोज्यो नित्यं धर्म्मभृतांवर । धर्म्मात्मा हि सुखं राजन् प्रेत्य चेह च विन्दति । १२९२५
निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ । न ब्राह्मणे परिभवः कर्त्तव्यस्ते कदाचन ।
ब्राह्मणः कुपितो हन्यादपि लोकान् प्रतिज्ञया ॥ वैशम्पायन उवाच ॥ मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो नृपः ।
उवाच वचनं धीमान् परमं परमद्युतिः ॥ युधिष्ठिर उवाच ॥ कस्मिन् धर्म्मे मया स्थेयं प्रजाः संरक्षता मुने ।
कथञ्च वर्त्तमानो वै न च्यवेयं स्वधर्म्मतः ॥ मार्कण्डेय उवाच ॥ दयावान् सर्व्वभूतेषु हितो रक्तोऽनसूयकः ।
सत्यवादी मृदुर्द्दान्तः प्रजानां रक्षणे रतः । चर धर्म्मं त्यजाधर्म्मं पितॄन् देवांश्च पूजय । १२९३०
प्रमादात् यत्कृतं तेऽभूत् सम्यग्दानेन तज्जय । अलन्ते मानमाश्रित्य सततं परवान् भव ।
विजित्य पृथिवीं सर्व्वां मोदमानः सुखी भव । एष भूतो भविष्यश्च धर्म्मस्ते समुदीरितः ।
न तेऽस्त्यविदितं किञ्चिदतीतानागतं भुवि । तस्मादिदं परिक्लेशं त्वं तात हृदि मा कृथाः ।
महात्मानो न मुह्यन्ति कालेनापि प्रपीडिताः । एष कालो महाबाहो अपि सर्व्वदिवौकसां ।
मुह्यन्ति हि प्रजास्तात कालेनापि प्रचोदिताः । मा च तत्र विशङ्का भूद्यन्मयोक्तं तवानघ । १२९३५
आशङ्क्य मद्वचो ह्येतद्धर्म्मलोपो भवेत्तव । जातोऽसि प्रथिते वंशे कुरूणां भरतर्षभ ।
कर्म्मणा मनसा वाचा सर्व्वमेतत् समाचर ॥ युधिष्ठिर उवाच ॥ यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरं ।
तथा करिष्ये यत्नेन भवतः शासनं विभो । न मे लोभोऽस्ति विप्रेन्द्र न भयं न च मत्सरः ।
करिष्यामि हि तत् सर्व्वमुक्तं यत्ते मयि प्रभो ॥ वैशम्पायन उवाच ॥ श्रुत्वा तु वचनं तस्य मार्कण्डेयस्य धीमतः ।
संहृष्टाः पाण्डवा राजन् सहिताः शार्ङ्गधन्वना । विप्रर्षभाश्च ते सर्व्वे ये तत्रासन् समागताः । १२९४०
तथा कथां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः । विस्मिताः समपद्यन्त पुराणस्य निवेदनात् ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि युधिष्ठिरानुशासने एकनवत्यधिकशततोऽध्यायः ॥ १९१ ॥

॥ जनमेजय उवाच ॥ भूय एव ब्राह्मणानां माहात्म्यं वक्तुमर्हसि । पाण्डवानां यथाचष्ट मार्कण्डेयो महातपाः ।

॥ वैशम्पायन उवाच ॥ भूय एव ब्राह्मणमहाभाग्यं वक्तुमर्हसीत्यब्रवीत् पाण्डवेयो मार्कण्डेयं ।

अथाचष्ट मार्कण्डेयोऽपूर्व्वमिदं श्रूयतां ब्राह्मणानां चरितं ।

॥ मार्कण्डेय उवाच ॥ अयोध्यायामिक्ष्वाकुकुलोद्वहः पार्थिवः परिक्षिन्नाम मृगयामगमत् । १२१४५

तमेकाश्वेन मृगमनुसरन्तं मृगो दूरमपाहरत् ।

अध्वनि जातश्रमः क्षुत्तृष्णाऽभिभूतश्चैकस्मिन्देशे नीलं गहनं वनषण्डमपश्यत् ।

तच्च विवेश ततस्तस्य वनषण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत ।

अथाश्वस्तः स बिसमृणालमश्वस्याग्रतो निक्षिप्य पुष्करिणीतीरे समाविशत् । ततः शयानो मधुरं गीतमशृणोत् ।

स श्रुत्वा चिन्तयन्नेह मनुष्यगतिं पश्यामि कस्य खल्वयं गीतशब्द इति । १२१५०

अथापश्यत् कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीञ्च । अथ सा राज्ञः समीपे पर्य्यक्रामत् ।

तामब्रवीद्राजा कस्यासि भद्रे का वा त्वमिति । सा प्रत्युवाच कन्याऽस्मीति तां राजोवाचार्थी त्वयाऽहमिति ।

अथोवाच कन्या समयेनाहं शक्या त्वया लब्धुं नान्यथेति राजा तां समयमपृच्छत् । कन्योवाच नोदकं मे दर्शयितव्यमिति ।

स राजा तां वाढमित्युक्त्वा तामुपयेमे कृतोद्वाहश्च राजा परीक्षित् क्रीडमानो मुदा परमया युक्तस्तूष्णीं सङ्गम्य तया सहास्ते ।

ततस्तत्रैवासीने राजनि सेनाऽन्वगच्छत् ।

सा सेनोपविष्टं राजानं परिवार्य्यातिष्ठत् । पर्य्याश्वस्तश्च राजा तयैव सह शिविकया प्रयाददवघोटितया स्वनगरमनुप्राप्य रहसि तया सहास्ते । १२१५५

तत्राभ्याशस्थोऽपि कश्चिन्नापश्यदथ प्रधानामात्योऽभ्याशचरास्तस्य स्त्रियोऽपृच्छत् ।

किमत्र प्रयोजनं वर्त्तत इत्यथाब्रुवंस्ताः स्त्रियः ।

अपूर्व्वमिव पश्याम उदकं नात्र नीयत इत्यथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुपुष्पफलमूलं तस्य मध्ये मुक्ताजालमयीं पार्श्वे वापीं सुगूढां सुधासलिललिप्तां । स रहस्युपगम्य राजानमब्रवीत् ।

वनमिदमुदारमनुदकं साध्वत्र रम्यतामिति ।

स तस्य वचनात्तयैव सह देव्या तद्वनं प्राविशत् । १२१६०

स कदाचित्तस्मिन् कानने रम्ये तयैव सह व्यहरत् । अथ क्षुत्तृष्णार्दितः श्रान्तोऽतिमुक्तकागारमपश्यत् प्रविश्य राजा प्रियया सुधाकृतां विमलां सलिलपूर्णां वापीमपश्यत् ।

दृष्ट्वैव तां तस्याश्च तीरे सहैव तया देव्याऽवतिष्ठत ।

अथ तां देवीं स राजाऽब्रवीत् साध्ववतर वापीसलिलमिति । सा तद्वचः श्रुत्वाऽवतीर्य्य वापीं न्यमज्जन्न पुनरुदमज्जत् ।

तां मृगयमाणो राजा नापश्यद्वापीमथ निःस्राव्य मण्डूकं श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास ।

स राजा सर्व्वत्र मण्डूकवधः क्रियतामिति यो मयाऽर्थी स मां मृतमण्डूकोपायनमादायोपतिष्ठेदिति । १२१६५

अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्व्वासु मण्डूकान् भयमाविशत् ते भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन् ।

ततो मण्डूकराट् तापसवेशधारी राजानमभ्यगच्छदुपेत्य चैनमुवाच ।

मा राजन् क्रोधवशं गमः प्रसादं कुरु नार्हसि मण्डूकानामनपराधिनां वधं कर्त्तुमिति श्लोकौ चात्र भवतः ।

मा मण्डूकान् जिघांस त्वं कोपं सन्धारयाच्युत । प्रक्षीयते धनोद्रेको जनानामविजानतां ।

प्रतिजानीहि नैतांस्त्वं प्राप्य क्रोधं विमोक्ष्यसि । अलं कृत्वा तवाधर्म्मं मण्डूकैः किं हतैर्हि ते । ११२७०

तमेवंवादिनमिष्टजनशोकपरीतात्मा राजाऽथोवाच ।

नहि क्षम्यते तन्मया हनिष्याम्येतानेतैर्दुरात्मभिः प्रिया मे भक्षिता सर्व्वथैव मे वध्या मण्डूका नार्हसि विद्वन्मामुपरोद्धुमिति ।

स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमनाः प्रोवाच प्रसीद राजन्नहमायुर्नाम मण्डूकराजो मम सा दुहिता सुशोभना नाम ।

तस्या हि दौःशील्यमेतद्बहवस्तया राजानो विप्रलब्धाः पूर्व्वा इति ।

तमब्रवीद्राजा तयाऽस्म्यर्थी सा मे दीयतामिति । अथैनां राज्ञे पिता ददावब्रवीच्चैनामेनं राजानं शुश्रूषस्वेति । ११२७५

स एवमुक्त्वा दुहितरं क्रुद्धः शशाप यस्मात्त्वया राजानो विप्रलब्धास्तस्मादब्रह्मण्यानि तवापत्यानि भविष्यन्तीत्यनृतकत्वात्तवेति ।

स च राजा तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो लोकत्रयैश्वर्य्यमिवोपलभ्य हर्षेण बाष्पकलया वाचा प्रणिपत्याभिपूज्य मण्डूकराजमब्रवीत् अनुगृहीतोऽस्मीति । स च मण्डूकराजो दुहितरमनुज्ञाप्य यथागतमगच्छत् ।

अथ कस्यचित् कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः सम्बभूवुः । शलो दलो बलश्चेति ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम । अथ कदाचित् शलो मृगयामनुचरन् मृगमासाद्य रथेनान्वधावत् ।

सूतञ्चोवाच शीघ्रं मां वहस्वेति स तथोक्तः सूतो राजानमब्रवीत् ।

न क्रियतामनुबन्धो नैष शक्यस्त्वया मृगोऽयं ग्रहीतुं । यद्यपि ते रथे युक्तौ वाम्यौ स्यातामिति । ततोऽब्रवीद्राजा सूतमाचक्ष्व मे वाम्यौ हन्मि वा त्वामिति । स एवमुक्तो राजभयभीतः सूतो वामदेवशापभीतश्च सन्नाचख्यौ राज्ञे । ततः पुनः स राजा खड्गमुद्यम्य शीघ्रं कथयस्वेति तमाह हनिष्ये त्वामिति । स तदाह राजभयभीतः सूतो वामदेवस्याश्वौ वाम्यौ मनोजवाविति । ११२८०

अथैनमेवं ब्रुवाणमब्रवीद्राजा वामदेवाश्रमं याहीति । स गत्वा वामदेवाश्रमं तमृषिमब्रवीत् ।

भगवन् मृगो मे विद्धः पलायते सम्भावयितुमर्हसि वाम्यौ दातुमिति । तमब्रवीदृषिर्ददानि ते वाम्यौ कृतकार्य्येण भवता मम वाम्यौ निर्य्यात्यौ क्षिप्रमिति । स च तावश्वौ प्रतिगृह्यानुज्ञाप्य ऋषिं प्रायाद्वाम्यसम्प्रयुक्तेन रथेन मृगं प्रति गच्छंश्चाब्रवीत् सूतमश्वरत्नाविमौ अयोग्यौ ब्राह्मणानां नैतौ प्रतिदेयौ वामदेवायेत्युक्त्वा मृगमवाप्य स्वनगरमेत्याश्वावन्तःपुरेऽस्थापयत् ।

अथर्षिश्चिन्तयामास तरुणो राजपुत्रः कल्याणं पत्रमासाद्य रमते । न मे प्रतिनिर्य्यातयत्यहो कष्टमिति ।

स मनसा विचिन्त्य मासि पूर्णे शिष्यमब्रवीत् । गच्छात्रेय राजानं ब्रूहि यदि पर्य्याप्तं तदा निर्य्यातयोपाध्यायवाम्याविति ।

स गत्वैव तं राजानमब्रवीत् तं राजा प्रत्युवाच राज्ञामेतद्वाहनमनर्हा ब्राह्मणा रत्नानामेवंविधानां किं ब्राह्मणानामश्वैः कार्य्यं साधु गम्यतां । ११२८५

स गत्वैतदुपाध्यायायाचष्ट तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव राजानमभिगम्याश्वार्थमचोदयन्न चाददद्राजा ।

॥ वामदेव उवाच ॥ प्रयच्छ वाम्यौ मम पार्थिव त्वं कृतं हि ते कार्य्यमाभ्यामशक्यं । मा त्वाऽवधीद्वरुणो घोरपाशैर्ब्रह्म क्षत्रस्यान्तरे वर्त्तमानं ।

॥ राजोवाच ॥ अनड्वाहौ सुव्रतौ साधुदान्तावेतद्विप्राणां वाहनं वामदेव । ताभ्यां याहि त्वं यत्र कामो महर्षे छन्दांसि वै त्वादृशं संवहन्ति ।

॥ वामदेव उवाच ॥ छन्दांसि वै मादृशं संवहन्ति लोकेऽमुष्मिन् पार्थिव यानि सन्ति । अस्मिंस्तु लोके मम यानमेतदस्मद्विधानामपरेषाञ्च राजन् ।

॥ राजोवाच ॥ चत्वारस्त्वां वा गर्द्दभाः संवहन्तु श्रेष्ठाश्वतर्य्यो हरयो वातरंहाः । तैस्त्वं याहि क्षत्रियस्यैष वाहो ममैव वाम्यौ न तवैतौ हि विद्धि । ११११०

॥ वामदेव उवाच ॥ घोरं व्रतं ब्राह्मणस्यैतदाहुरेतद्राजन् यदिह त्वं जीवमानः । अयस्मया घोररूपा महान्तश्चत्वारो वा यातुधानाः सुरौद्राः । मया प्रयुक्तास्त्वद्वधमीप्समाना वहन्तु त्वां शितशूलाश्चतुर्धा ।

॥ राजोवाच ॥ ये त्वां विदुर्ब्राह्मणं वामदेव वाचा हन्तुं मनसा कर्म्मणा वा । ते त्वां सशिष्यमिह पातयन्तु मद्वाक्यनुन्नाः शितशूलासिहस्ताः ।

॥ वामदेव उवाच ॥ ममैवैतौ वाम्यौ परिगृह्य राजन् पुनर्ददामीति प्रवदसि मे त्वं । प्रयच्छ शीघ्रं मम वाम्यौ त्वमद्य यद्या त्मानं जीवितुं ते क्षमं स्यात् ।

॥ राजोवाच ॥ न ब्राह्मणेभ्यो मृगया प्रसूता न त्वाऽनुशास्म्यद्यप्रभृति ह्यसत्यं । तवैवाज्ञां सम्प्रतिगृह्य सर्व्वां तथा ब्रह्मन् पुण्यलोकं लभेयं ।

॥ वामदेव उवाच ॥ नानुयोगा ब्राह्मणानां भवन्ति वाचा राजन् मनसा कर्म्मणा वा । यस्त्वेवं ब्रह्म तपसाऽन्वेति विद्वांस्तेन श्रेष्ठो भवति हि जीवमानः । ११११५

॥ मार्कण्डेय उवाच ॥ एवमुक्ते वामदेवेन राजन् समुत्तस्थू राक्षसा घोररूपाः । तैः शूलहस्तैर्वध्यमानः स राजा प्रोवाचेदं वाक्यमुच्चैस्तदानीं ।

इक्ष्वाकवो यदि ब्रह्मन् दलो वा विधेया मे यदि विशोऽपि । नोत्स्रक्ष्येऽहं वामदेवस्य वाम्यौ नैवंविधा धर्म्मशीला भवन्ति ।

एवंब्रुवन्नेव स यातुधानैर्हतो जगामाशु महीं क्षितीशः । ततो विदित्वा नृपतिं निपातितमिक्ष्वाकवो वै दलमभ्यषिञ्चन् ।

राज्ये तदा तत्र गत्वा स विप्रः प्रोवाचेदं वचनं वामदेवः । दलं राजानं ब्राह्मणानां हि देयमेवं राजन् सर्व्वधर्म्मेषु दृष्टं ।

बिभेषि चेत्त्वमधर्म्मान्नरेन्द्र प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ । एतच्छ्रुत्वा वामदेवस्य वाक्यं स पार्थिवः सूतमुवाच रोषात् । ११२००

एकं हि मे सायकञ्चित्ररूपं दिग्धं विषेणाहर सङ्गृहीतं । येन विद्धो वामदेवः शयीत सन्दृश्यमानः श्वभिरार्त्तरूपः ।

॥ वामदेव उवाच ॥ जानामि पुत्त्रं दशवर्षं तवाहं जातं महिष्यां श्येनजितं नरेन्द्र । तं जहि त्वं मद्वचनात् प्रणुन्नस्तूर्णं प्रियैः सायकैर्घोररूपैः ।

॥ मार्कण्डेय उवाच ॥ एवमुक्ते वामदेवेन राजन्नन्तःपुरे राजपुत्त्रं जघान । स सायकस्तिग्मतेजा विसृष्टः श्रुत्वा दलस्तत्र वाक्यं बभाषे ।

॥ राजोवाच ॥ इक्ष्वाकवो हन्त चरामि वः प्रियं निहन्मीमं विप्रमद्य प्रमथ्य। आनीयतामपरस्तिग्मतेजाः पश्यध्वं मे वीर्य्यमद्य क्षितीशाः।

॥ वामदेव उवाच॥ यमेनमेषं सायकं घोररूपं विषेण दिग्धं मम सन्दधासि। न त्वमेतं शरवर्य्यं विमोक्तुं सन्धातुं वा शक्ष्यसे मानवेन्द्र। १२२०५

॥ राजोवाच॥ इक्ष्वाकवः पश्यत मां गृहीतं न वै शक्नोम्येष शरं विमोक्तुं। न चास्य कर्त्तुं नाशमभ्युत्सहामि आयुष्मान् वै जीवतु वामदेवः।

॥ वामदेव उवाच॥ संस्पृशैनां महिषीं सायकेन ततस्तस्मादेनसो मोक्ष्यसे त्वं। ततस्तथा कृतवान् पार्थिवस्तु ततो मुनिं राजपुत्री बभाषे।

॥ राजपुत्र्युवाच ॥ यथायुक्तं वामदेवाहमेनं दिने दिने संविशन्ती नृशंसं। ब्राह्मणेभ्यो मृगयन्ती सूनृतानि तथा ब्रह्मन् पुण्यलोकं लभेयं।

॥ वामदेव उवाच ॥ त्वया त्रातं राजकुलं शुभेक्षणे वरं वृणीष्वाप्रतिमं ददामि ते। प्रशाधीमं स्वजनं राजपुत्रि इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये।

॥ राजपुत्र्युवाच॥ वरं वृणे भगवन्नेकमेव विमुच्यतां किल्बिषादस्य भर्त्ता। शिवेन चाध्याहि सपुत्रबान्धवं वरो वृतो ह्येष मया द्विजाग्र्य ॥ मार्कण्डेय उवाच ॥ श्रुत्वा वचः स मुनी राजपुत्र्यास्तथाऽस्त्विति प्राह कुरुप्रवीर। १२२१०

ततः स राजा मुदितो बभूव वाम्यौ चास्मै प्रददौ सम्प्रणम्य।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि वामदेवचरिते द्विनवत्यधिकशततोऽध्यायः ॥ १९२ ॥

॥ वैशम्पायन उवाच॥ मार्कण्डेयमृषयो ब्राह्मणा युधिष्ठिरश्च पर्य्यपृच्छन्नृषिः। केन दीर्घायुरासीद्बको मार्कण्डेयस्तु तान् सर्व्वानुवाच। महातपा दीर्घायुश्च बको राजर्षिर्नात्र कार्य्या विचारणा।

एतच्छ्रुत्वा तु कौन्तेयो भ्रातृभिः सह भारत। मार्कण्डेयं पर्य्यपृच्छद्धर्म्मराजो युधिष्ठिरः।

बकदाल्भ्यौ महात्मानौ श्रूयेते चिरजीविनौ। सखायौ देवराजस्य तावृषी लोकसम्मतौ।

एतदिच्छामि भगवन् बकशक्रसमागमं। सुखदुःखसमायुक्तं तत्त्वेन कथयस्व मे। १२२१५

॥ मार्कण्डेय उवाच॥ वृत्ते देवासुरे राजन् संग्रामे लोमहर्षणे। त्रयाणामपि लोकानामिन्द्रो लोकाधिपोऽभवत्।

सम्यग्वर्षति पर्ज्जन्यः शस्यसम्पद उत्तमाः। निरामयाः सुधर्म्मिष्ठाः प्रजा धर्म्मपरायणाः।

मुदितश्च जनः सर्व्वः स्वधर्म्मेषु व्यवस्थितः। ताः प्रजा मुदिताः सर्व्वा दृष्ट्वा बलनिसूदनः।

ततस्तु मुदितो राजन् देवराजः शतक्रतुः। ऐरावतं समास्थाय ताः पश्यन्मुदिताः प्रजाः।

आश्रमांश्च विचित्रांश्च नदीश्च विविधाः शुभाः। नगराणि समृद्धानि खेटान् जनपदांस्तथा। १२२२०

प्रजापालनदक्षांश्च नरेन्द्रान् धर्म्मचारिणः। उदपानं प्रपावापीतडागानि सरांसि च।

नानाब्रह्मसमाचारैः सेवितानि द्विजोत्तमैः। ततोऽवतीर्य्य रम्यायां पृथ्व्यां राजन् शतक्रतुः।

तत्र रम्ये शिवे देशे बहुवृक्षसमाकुले। पूर्व्वस्यान्दिशि रम्यायां समुद्राभ्यासतो नृप।

तत्राश्रमपदं रम्यं मृगद्विजनिषेवितं। तत्राश्रमपदे रम्ये बकं पश्यति देवराट्।

बकस्तु दृष्ट्वा देवेन्द्रं दृढं प्रीतमनाऽभवत् । पाद्यासनार्घ्यदानेन फलमूलैरथार्च्चयत् । १२२२५
सुखोपविष्टो वरदस्ततस्तु बलसूदनः । ततः प्रश्नं बकं देव उवाच त्रिदशेश्वरः ।
शतं वर्षसहस्राणि मुने जातस्य तेऽनघ । समाख्याहि मम ब्रह्मन् किं दुःखं चिरजीविनां ।
॥ बक उवाच ॥ अप्रियैः सह संवासः प्रियैश्चापि विनाभवः । असद्भिः सम्प्रयोगश्च तद्दुःखं चिरजीविनां ।
पुत्त्रदारविनाशोऽत्र ज्ञातीनां सुहृदामपि । परेष्वायत्तताकृच्छ्रं किन्नु दुःखतरं ततः ।
नान्यद्दुःखतरं किञ्चिल्लोकेषु प्रतिभाति मे । अर्थैर्विहीनः पुरुषः परैः सम्परिभूयते । १२२३०
अकुलानां कुले भावं कुलीनानां कुलक्षयं । संयोगं विप्रयोगञ्च पश्यन्ति चिरजीविनः ।
अपि प्रत्यक्षमेवैतत्तव देव शतक्रतो । अकुलानां समृद्धानां कथं कुलविपर्य्ययः ।
देवदानवगन्धर्व्वमनुष्योरगराक्षसाः । प्राप्नुवन्ति विपर्य्यासं किन्नु दुःखतरं ततः ।
कुले जाताश्च क्लिश्यन्ते दौष्कुलेयवशानुगाः । आढ्यैर्दरिद्राऽवमताः किन्नु दुःखतरं ततः ।
लोके वैधर्म्यमेतत्तु दृश्यते बहुविस्तरं । हीनज्ञानाश्च दृश्यन्ते क्लिश्यन्ते प्राज्ञकोविदाः । १२२३५
बहुदुःखपरिक्लेशं मानुष्यमिह दृश्यते ॥ इन्द्र उवाच ॥ पुनरेव महाभाग देवर्षिगणसेवित ।
समाख्याहि मम ब्रह्मन् किं सुखं चिरजीविनां ॥ बक उवाच ॥ अष्टमे द्वादशे वाऽपि शाकं यः पचते गृहे ।
कुमित्राण्यनपाश्रित्य किं वै सुखतरं ततः । यत्राहानि न गण्यन्ते नैनमाहुर्महाशनं ।
अपि शाकं पचानस्य सुखं वै मघवन् गृहे । अर्ज्जितं स्वेन वीर्य्येण नाप्यपाश्रित्य कञ्चन ।
फलं शाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे । परस्य तु गृहे भोक्तुः परिभूतस्य नित्यशः । १२२४०
सुमृष्टमपि न श्रेयो विकल्पोऽयमतः सतां । श्ववत् कीलालपो यस्तु परान्नं भोक्तुमिच्छति ।
धिगस्तु तस्य तद्भुक्तं कृपणस्य दुरात्मनः । यो दत्त्वाऽतिथिभूतेभ्यः पितृभ्यश्च द्विजोत्तमः ।
शिष्टान्यन्नानि यो भुङ्क्ते किं वै सुखतरं ततः । अतो मृष्टतरं नान्यत् पूतं किञ्चित् शतक्रतो ।
दत्त्वा यस्त्वतिथिभ्योऽन्नं भुङ्क्ते तेनैव नित्यशः । यावतो ह्यन्धसः पिण्डानश्नाति सततं द्विजः ।
तावतां गोसहस्राणां फलं प्राप्नोति दायकः । यदेनो यौवनकृतं तत्सर्व्वं नश्यते ध्रुवं । १२२४५
सदक्षिणस्य भुक्तस्य द्विजस्य तु करे गतं । यद्वारि वारिणा सिञ्चेत्तद्येनस्तरते क्षणात् ।
एतांश्चान्यांश्च वै बह्वीः कथयित्वा कथाः शुभाः । बकेन सह देवेन्द्र आपृच्छ्य त्रिदिवं गतः ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि बकशक्रसंवादे त्रिनवत्यधिकशततोऽध्यायः ॥ १९३ ॥

॥ वैशम्पायन उवाच ॥ ततः पाण्डवाः पुनर्मार्कण्डेयमूचुः कथितं महाब्राह्मणभाग्यं राजन्यमहाभाग्यमिदानीं शुश्रूषामह इति तानुवाच मार्कण्डेयो महर्षिः श्रूयतामिति इदानीं राजन्यानां महाभाग्यमिति ।

कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य निवृत्य रथस्थमेव राजानमौशीनरिं शिबिं ददर्शाभिमुखं तौ समेत्य परस्परेण यथावयः पूजां प्रयुज्य गुणसाम्येन परस्परेण तुल्यात्मानौ विदित्वा अन्योऽन्यस्य पन्थानं न ददतुस्तत्र नारदः प्रादुरासीत् किमिदं भवन्तौ परस्परस्य पन्थानमावृत्य तिष्ठत इति ।

तावूचतुर्नारदं नैतद्भगवन् पूर्व्वकर्म्माकर्म्मादिभिर्व्विशिष्टस्य पन्था उपदृश्यते समर्थाय वा भावाय वसेय परस्परेणोपगतौ ।

तच्चावधानतो युक्तमधरोत्तरं परिभ्रष्टं नारदस्त्वेवमुक्तः श्लोकत्रयमपठत् । १२२५०

क्रूरः कौरव्य मृदवे मृदुः क्रूरे च कौरव । साधुश्चासाधवे साधुः साधवे नाप्नुयात् कथं ।

कृतं शतगुणं कुर्य्यान्नास्ति देवेषु निश्चयः । औशीनरः साधुशीलो भवतो वै महीपतिः ।

जयेत् कदर्य्यं दानेन सत्येनानृतवादिनं । क्षमया क्रूरकर्म्माणमसाधुं साधुना जयेत् ।

तदुभाविव भवन्तावुदारौ च इदानीं भवन्तावन्यतमः सोऽपसर्पतु एतदै निदर्शनमित्युक्त्वा तूष्णीं नारदो बभूव ।

एतच्छ्रुत्वा तु कौरव्यः शिविं प्रदक्षिणं कृत्वा पन्थानं दत्त्वा बहुकर्म्मभिः प्रशस्य प्रययौ । तदेतद्राज्ञो महाभाग्यमित्युक्तवान् नारदः । १२२५५

इतिश्री महाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि शिविमहाभाग्यकथने चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

॥ मार्कण्डेय उवाच ॥ इदमन्यच्छ्रूयतां ययातिर्नाहुषो राजा राज्यस्थः पौरजनावृत आसाञ्चक्रे गुर्व्वर्थी ब्राह्मण उपेत्य अब्रवीत् भो राजन् गुर्व्वर्थं भिक्षेयं समयादिति ॥ राजोवाच ॥ ब्रवीतु भगवान् समयमिति ।

॥ ब्राह्मण उवाच ॥ विद्वेषणं परमं जीवलोके कुर्य्यान्नरः पार्थिव याच्यमानः । तत्त्वां पृच्छामि कथन्नु राजन् दद्याद्भवान् दयितञ्च मेऽद्य ।

॥ राजोवाच ॥ न चानुकीर्त्तये दत्त्वा दत्त्वा नयाच्यमर्थं न च संश्रृणोमि प्राप्यमर्थञ्च संश्रुत्य तथापि दत्त्वा सुसुखी भवामि ।

ददामि ते रोहिणीनां सहस्रं प्रियो हि मे ब्राह्मणो याच्यमानः । न मे मनः कुप्यति याच्यमाने दत्तं न शोचामि कदाचिदर्थं ।

इत्युक्त्वा ब्राह्मणाय राजा गोसहस्रं ददौ प्राप्तवांश्च सहस्रं ब्राह्मण इति । १२२६०

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि नाहुषचरिते पञ्चनवत्यधिकशततोऽध्यायः ॥ १९५ ॥

॥ वैशम्पायन उवाच ॥ भूय एव महाभाग्यं कथ्यतामित्यब्रवीत् पाण्डवः ।

अथाचष्ट मार्कण्डेयो महाराज वृषदर्भसेदुकनामानौ राजानौ नीतिमार्गरतौ अस्त्रोपास्त्रकृतिनौ ।

सेदुको वृषदर्भस्य बालस्यैव उपांशुव्रतमभ्यजानन् कुप्यमदेयं ब्राह्मणस्य ।

अथ तं सेदुकं ब्राह्मणः कश्चिद्वेदाध्ययनसम्पन्नः । आशिषं दत्त्वा गुर्व्वर्थी भिक्षितवान् ।

अश्वसहस्रं मे भवान् ददात्विति तं सेदुको ब्राह्मणमब्रवीत् । १२२६५

नास्ति सम्भवो गुर्व्वर्थं दातुमिति ।

स त्वं गच्छ वृषदर्भसकाशं राजा परमधर्म्मज्ञो ब्राह्मण तं भिक्षस्व । स ते दास्यति तस्यैतदुपांशुव्रतमिति ।

अथ ब्राह्मणो वृषदर्भसकाशं गत्वा अश्वसहस्रमयाचत । स राजा तं कशेनाताडयत् ।

तं ब्राह्मणोऽब्रवीत् किं हिंसस्यनागसं मामिति ।

एवमुक्त्वा तं शपन्तं राजाह विप्र किं यो न ददाति तुभ्यमुताहोस्वित् ब्राह्मण्यमेतत् । १२२७०

॥ ब्राह्मण उवाच ॥ राजाधिराज तव समीपं सेदुकेन प्रेषितो भिक्षितुमागतः । तेनानुशिष्टेन मया त्वं भिक्षितोऽसि ।

॥ राजोवाच ॥ पूर्व्वाह्णे ते दास्यामि यो मेऽद्य बलिरागमिष्यति । यो हन्यते कशया कथं मोघं क्षेपणं तस्य स्यात् ।

इत्युक्त्वा ब्राह्मणाय देवस्त्रियमुत्तमां प्रादात्। अधिकस्याधरस्य मूल्यमेवाददिति।

देवानां कथा संजाता महीतलं गत्वा महीपतिं शिबिमौशीनरं साध्वेनं शिबिं जिज्ञास्याम इति। एवं भो इत्युक्त्वा अग्नीन्द्रावुपतिष्ठेतां।

अग्निः कपोतरूपेण तमभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण। ११२७७

अथकपोतो राज्ञो दिव्यासनासीनस्य उत्सङ्गं न्यपतत्।

अथ पुरोहितो राजानमब्रवीत्। प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपन्नो।

वसु दद्यात् अस्मात् पार्थिवोऽस्य निष्कृतिं कुर्यात् घोरं कपोतस्य निपातमाहुः।

अथ कपोतो राजानमब्रवीत् प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्ये। अङ्गैरङ्गानि प्राप्यार्थी मुनिर्भूत्वा प्राणांस्त्वां प्रपद्ये।

स्वाध्यायेन कर्षितं ब्रह्मचारिणं मां विद्धि तपसा दमेन युक्तमाचार्य्यस्याप्रतिकूलभाषिणं एवं युक्तमपापं मां विद्धि। ११२८०

गदामि वेदान् विचिनोमि छन्दः सर्व्वे वेदा अक्षरशो मे अधीताः। न साधु दानं श्रोत्रियस्य प्रदानं मा प्रादाः श्येनाय न कपोतोऽस्मि अथ श्येनो राजानमब्रवीत्।

पर्य्यायेण वसतिर्भा भवेषु सर्गे जातः पूर्व्वमस्मात् कपोतात्। त्वमाददानोऽद्य कपोतमेनं मा त्वं राजन् विघ्नकर्त्ता भवेथाः।

॥ राजोवाच ॥ केनेदृशी जातु परा हि दृष्टा वागुच्यमाना शकुनेन संस्कृता। यो वै कपोतो वदते यश्च श्येन उभौ विदित्वा कथमस्तु साधु।

नास्य वर्षति वर्षकाले नास्य बीजं रोहति काल उप्तं। भीतं प्रपन्नं यो हि ददाति शत्रवे न त्राणं लभते त्राणमिच्छन् स काले।

जाता ह्रस्वा प्रजा प्रमीयते सदा न वै वासं पितरोऽस्य कुर्व्वते। भीतं प्रपन्नं यो हि ददाति शत्रवे नास्य देवाः प्रतिगृह्णन्ति हव्यं। ११२८५

मोघमन्नं विन्दति चाप्रचेताः स्वर्गाल्लोकाद्भ्रश्यति शीघ्रमेव। भीतं प्रपन्नं यो हि ददाति शत्रवे सेन्द्रा देवाः प्रहरन्त्यस्य वज्रं।

उक्षाणं पक्त्वा सह ओदनेन अस्मात् कपोतात् प्रति ते नयन्तु। यस्मिन् देशे रमसेऽतीव श्येन तत्र मांसं शिबयस्ते वहन्तु।

॥ श्येन उवाच ॥ नोक्षाणं राजन् प्रार्थयेयं नचान्यदस्मान्मांसमधिकं वा कपोतात्। देवैर्दत्तःसोऽद्य ममैष भक्षस्तन्मे ददस्व शकुनानामभावात्।

॥ राजोवाच ॥ उक्षाणं वेह तमनूनं नयन्तु ते पश्यन्तु पुरुषा ममैव। भयाहितस्य दाथं ममान्तिकात्त्वां प्रापयन्तु त्वं श्येनं मा हिंसीः।

त्यजे प्राणानेव दद्यां कपोतं सौम्यो ह्ययं किन्न जानासि श्येन। यथाक्लिश्यं माकुरुष्वेह सौम्य नाहं कपोतमर्पयिष्ये कथञ्चित्। ११२८९

यथा मां हि वै साधुवादैः प्रसन्नाः प्रशंसेयुः शिबयः कर्म्मणा तु। यथा श्येन प्रियमेव कुर्य्यां प्रशाधि मां यद्वदेस्तत्करोमि।

॥ श्येन उवाच ॥ ऊरोर्दक्षिणादुत्कृत्य स्वपिशितं तावद्राजन् यावन्मांसं कपोतेन समं। तथा त्वस्मात् साधु त्रातः कपोतः प्रशंसेयुः शिबयः कृतञ्च प्रियं स्यान्ममेति।

अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलया धारयन् गुरुतर एव कपोत आसीत्।

पुनरन्यमुच्चकर्त्त गुरुतर एव कपोतः। एवं सर्व्वं समधिकृत्य शरीरं तुलायामारोपयामास तत्तथापि गुरुतर एव कपोत आसीत्।

अथ राजा स्वयमेव तुलामारुरोह। न च व्यलीकमासीद्राज्ञ एतद्वृत्तान्तं दृष्ट्वा त्रात इत्युक्त्वा प्रालीयत श्येनः अथ राजा अब्रवीत्। १२२९९

कपोतं शिबिः शिबयस्त्वां कपोत पृच्छामि ते शकुने को नु श्येनः। नानीश्वर ईदृशं जातु कुर्य्यादेतं प्रश्नं भगवन्मे विचक्ष्व।

॥ कपोत उवाच ॥ वैश्वानरोऽहं ज्वलनो धूमकेतुरथैव श्येनो वज्रहस्तः शचीपतिः। साधु ज्ञातुं त्वामृषभं सौरथेयं नौ जिज्ञासया त्वत्सकाशं प्रपन्नौ।

यामेतां पेशीं मम निष्क्रयाय प्रादाद्भवानसिनोत्कृत्य राजन् एतद्वो लक्ष्म शिवं करोमि हिरण्यवर्णं रुचिरं पुण्यगन्धं।

एतासां प्रजानां पालयिता यशस्वी सुरर्षीणामथ सम्मतो भृशं एतस्मात् पार्श्वात् पुरुषो जनिष्यति कपोतरोमेति च तस्य नाम।

कपोतरोमाणं शिबिनोद्भिदं पुत्रं प्राप्स्यसि नृपवृष संहननं यशोदीप्यमानं द्रष्टाऽसि शूरमृषभं सौरथानां। १२३००

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि शिबिचरिते षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

॥ वैशम्पायन उवाच ॥ भूय एव महाभाग्यं कथ्यतामित्यब्रवीत् पाण्डवो मार्कण्डेयं। अथाचष्ट मार्कण्डेयः अष्टकस्य वैश्वामित्रेरश्वमेधे सर्व्वे राजानः प्रागच्छन्त।

भ्रातरश्चास्य प्रतर्द्दनो वसुमना शिबिरौशीनर इति स च समाप्तयज्ञो भ्रातृभिः सह रथेन प्रायात्ते च नारदमागच्छन्तं तमभिवाद्यारोहतु भवान् रथमित्यब्रुवन्।

तांस्तथेत्युक्त्वा रथमारुरोह अथ तेषामेकः सुरर्षिं नारदमब्रवीत्। प्रसाद्य भगवन्तं किञ्चिदिच्छेयं प्रष्टुमिति।

पृच्छेत्यब्रवीदृषिः सोऽब्रवीदायुष्मन्तः सर्व्वगुणसमुदिताः। अथायुष्मन्तं स्वर्गविशेषं चतुर्भिर्यातव्यं स्यात् कस्मादवतरेत्। अयमष्टकोऽवतरेदित्यब्रवीदृषिः।

किं कारणमित्यपृच्छन्। अथाचष्ट अष्टकस्य गृहे मया उषितं स मां रथेनानुप्रावहदथापश्यमनेकानि गोसहस्राणि वर्णशो विविक्तानि तमहमपृच्छं कस्येमा गाव इति सोऽब्रवीत्। १२३०५

मया निसृष्टा इत्येतानेव स्वयं श्लाघति कथितेन एषोऽवतरेदथ त्रिभिर्यातव्यं साम्प्रतं कोऽवतरेत्।

प्रतर्द्दन इत्यब्रवीदृषिः। तत्र किं कारणं प्रतर्द्दनस्यापि गृहे मयोषितं। स मां रथेनानुप्रावहत्।

अथैनं ब्राह्मणो भिक्षेताश्वं मम ददातु भवान्निवृत्तो दास्यामीत्यब्रवीत् ब्राह्मणं त्वरितमेव दीयतामित्यब्रवीत् ब्राह्मणस्त्वरितमेव ब्राह्मणस्यैवमुक्त्वा दक्षिणं पार्श्वमददत्।

अथान्योऽप्यश्वार्थी ब्राह्मण आगच्छत्। तथैव चैनमुक्त्वा वामपार्ष्णिमभ्यवहृत्य प्रायात् पुनरपि चान्योऽप्यश्वार्थी ब्राह्मण आगच्छत्। त्वरितोऽथ तस्मै अपनह्य वामं धूर्य्यमददत्।

अथ प्रायात् पुनरन्य आगच्छदश्वार्थी ब्राह्मणस्तमब्रवीदतियातो दास्यामि त्वरितमेव दीयतामित्यब्रवीद्ब्राह्मणस्तस्मै दत्त्वाऽश्वं रथधुरं गृहीत्वा व्याहृतं ब्राह्मणानां साम्प्रतं नास्ति किञ्चिदिति। १२३१०

स एष ददाति चाह्वयति च तेन श्राद्धेन तथाऽवतरेत्। अथ द्वाभ्यां यातव्यमिति कोऽवतरेत्।

वसुमना अवतरेदित्यब्रवीदृषिः। किं कारणमित्यपृच्छत्तदाचष्ट नारदः। अहं परिभ्रमन् वसुमनसो गृहमुपस्थितः।

स्वस्तिवाचनमासीत् पुष्परथस्य प्रयोजनेन तमहमभ्यगच्छं स्वस्तिवाचितेषु ब्राह्मणेषु रथो ब्राह्मणानां दर्शितः।

तमहं रथं प्राशंसमथ राजाऽब्रवीद्भगवता रथः प्रशस्तः एष भगवतो भवतो रथ इति।

अथ कदाचित् पुनरप्यहमुपस्थितः। पुनरेव रथप्रयोजनमासीत्। ११११५

सम्यगयमेव भगवत इत्येवं राजाऽब्रवीदिति। पुनरेव च तृतीयं स्वस्तिवाचनं समभवदथ राजा ब्राह्मणानां दर्शयन् मामभिप्रेक्ष्याब्रवीत्।

अथो भगवता पुष्परथस्य स्वस्तिवाचनानि सुष्ठु सम्भावितानि एतेन द्रोहवचनेनाऽवतरेत्।

अथैकेन यातव्यं स्यात् कोऽवतरेत् पुनर्नारद आह।

शिविर्यायादहमवतरेयं अथ किं कारणमित्यब्रवीत्। असावहं शिविना न समानोऽस्मि यतस्तं शिविं ब्राह्मणोऽभ्यागच्छत चैनमब्रवीत्।

शिवे अन्नार्थ्यस्मीति तमब्रवीच्छिबिः किं क्रियतामाज्ञापयतु भवानिति। १११२०

अथैनं ब्राह्मणोऽब्रवीत् य एष ते पुत्रो बृहद्गर्भो नाम एष प्रमातव्य इति तमेनं संस्कुरु।

अन्नं चोपपादय ततोऽहं प्रतीक्ष्य इति। ततः पुत्रं प्रमाप्य संस्कृत्य विधिना साधयित्वा पात्र्यामर्पयित्वा शिरसा प्रतिगृह्य ब्राह्मणममृगयत्।

अथास्य मृगयमाणस्य कश्चिदाचष्ट एष ते ब्राह्मणो नगरं प्रविश्य दहति ते गृहं कोषागारमायुधागारमश्वशालां हस्तिशालाञ्च क्रुद्ध इति।

अथ शिबिस्तथैवाविकृतमुखवर्णो नगरं प्रविश्य ब्राह्मणं तमब्रवीत् सिद्धं भगवन्नन्नमिति ब्राह्मणो न किञ्चिद्व्याजहार विस्मयादधोमुख आसीत्।

ततः प्रसादयद्ब्राह्मणं भगवन् भुज्यतामिति मुहूर्त्तादुद्वीक्ष्य शिबिमब्रवीत्। १११२५

त्वमेवैतदशानेति तथाह तथेति शिबिस्तथैवाविमना महित्वा कपालमभ्युद्धार्य्य भोक्तुमैच्छत्।

अथास्य ब्राह्मणो हस्तमग्रहीत्। अब्रवीच्चैनं जितक्रोधोऽसि न ते किञ्चिदपरित्याज्यं ब्राह्मणार्थे ब्राह्मणोऽपि तं महाभागं सभाजयत्।

स उदीक्षमाणः पुत्रमपश्यत् अग्रे तिष्ठन्तं देवकुमारमिव पुण्यगन्धान्वितमलङ्कृतं। सर्व्वञ्च तमर्थं विधाय ब्राह्मणोऽन्तरधीयत तस्य राजर्षेर्विधाता तेनैव वेशेन परीक्षार्थमागत इति तस्मिन्नन्तर्हिते अमात्या राजानमूचुः किं प्रेप्सुना भवता इदमेवं जानता कृतमिति।

॥ शिबिरुवाच ॥ नैवाहमेतद्यशसे ददानि न चार्थहेतोर्न च भोगतृष्णया। पापैरनासेवित एष मार्ग इत्येवमेतत् सकलं करोमि। सद्भिः सदाऽध्यासितन्तु प्रशस्तं तस्मात् प्रशस्तं श्रयते मतिर्मे। एतन्महाभाग्यवरं शिबेस्तु तस्मादहं वेद यथावदेतत्। १११३०

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि राजन्यमहाभाग्यकथने सप्तनवत्यधिकशततोऽध्यायः ॥ १९७ ॥

॥ वैशम्पायन उवाच ॥ मार्कण्डेयमृषयः पाण्डवाः पर्य्यपृच्छन्नस्ति कश्चिद्भवतश्चिरजाततर इति।

स तानुवाचास्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात् प्रच्युतः कीर्त्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठदथ प्रत्यभिजानाति मां भवानिति ।

तमहमब्रुवं न वयं रासायनिकाः कार्य्यचेष्टाकुलत्वाच्च प्रत्यभिजानाम्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मनः समारभामोऽर्थानामनुष्ठानं ।

स मामुवाचाप्यस्त्यन्यस्त्वत्तश्चिरजात इति तमहमब्रुवं अस्ति खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं यदि जानीयादितः प्रकृष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति ।

ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः अथैनं स राजा पप्रच्छ प्रत्यभिजानाति मां भवानिति । १२१२५

स मुहूर्त्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति । स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः ।

अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति । तत इन्द्रद्युम्नो मामुलूकञ्चादाय तत्सरोऽगच्छद्यत्रासौ नाडीजङ्घो नाम बको बभूव ।

सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एवं मुहूर्त्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति

ततः सोऽस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति ।

ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास । अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात् सरसः उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयं पृच्छामः भवानिममिन्द्रद्युम्नं राजानमभिजानातीति ।

स मुहूर्त्तं ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् । किमहमेनं न प्रत्यभिज्ञास्यामीह अनेन सहस्रकृत्वश्चितिषु यूपा आहिताः । १२१३०

सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतं । अत्र चाहं प्रतिवसामीति ।

अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति ।

भवन्ति चात्र श्लोकाः । दिवं स्पृशति भूमिञ्च शब्दः पुण्यस्य कर्म्मणः । यावत्स शब्दो भवति तावत् पुरुष उच्यते ।

अकीर्त्तिः कीर्त्त्यते लोके यस्य भूतस्य कस्यचित् । स पतत्यधमान् लोकान् यावच्छब्दः प्रकीर्त्त्यते ।

तस्मात् कल्याणवृत्तः स्यादनन्ताय नरः सदा । विहाय चित्तं पापिष्ठं धर्म्ममेव समाश्रयेत् । १२१३५

एतच्छ्रुत्वा स राजाऽब्रवीत्तिष्ठ तावद्यावदिमौ वृद्धौ यथास्थानं प्रतिपादयामीति ।

स मां प्रावारकर्णञ्चोलूकं यथोचिते स्थाने प्रतिपाद्य तेनैव यानेन संस्थितो यथोचितस्थानं प्रतिपेदे तन्मयाऽनुभूतं चिरजीविना दृष्टमिति पाण्डवानुवाच मार्कण्डेयः ।

पाण्डवाश्चोचुः साधु शोभनं भवता कृतं राजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं स्वस्थाने प्रतिपादयतेत्यथैतानब्रवीदसौ ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो राजर्षिर्नृगस्तस्मात् कृच्छ्रात् पुनः समुद्धृत्य स्वर्गं प्रापित इति ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि इन्द्रद्युम्नोपाख्याने अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ वैशम्पायन उवाच ॥ श्रुत्वा च राजा राजर्षेरिन्द्रद्युम्नस्य तत्तदा। मार्कण्डेयान्महाभागात् स्वर्गस्य प्रतिपादनं ।
युधिष्ठिरो महाराजः पुनः पप्रच्छ तं मुनिं। कीदृशीषु अवस्थासु दत्त्वा दानं महामुने। १२२९०
इन्द्रलोकं भवान् वेद पुरुषस्य ब्रवीहि मे। गार्हस्थ्येऽप्यथवा बाल्ये यौवने स्थाविरेऽपि वा।
यथा फलं समश्नाति तथा त्वं कथयस्व मे ॥ मार्कण्डेय उवाच ॥ वृथा जन्मानि चत्वारि वृथा दानानि षोडश।
वृथा जन्म ह्यपुत्रस्य ये च धर्मबहिष्कृताः। परपाकेषु येऽश्नन्ति आत्मार्थन्तु पचन्तु यः।
पर्य्यश्नन्ति वृथा यत्र तदसत्यं प्रकीर्त्यते। आरूढपतिते दत्तमन्यायोपचितञ्च यत्।
व्यर्थन्तु पतिते दानं ब्राह्मणे तस्करे तथा। गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके। १२२९५
वेदविक्रयिणे दत्तं तथा वृषलयाजके। ब्रह्मबन्धुषु यद्दत्तं यद्दत्तं वृषलीपतौ।
स्त्रीजनेषु च यद्दत्तं व्यालग्राहे तथैव च। परिचारकेषु यद्दत्तं वृथा दानानि षोडश।
तमोवृतस्तु यो दद्याद्भयात् क्रोधात् तथैव च। भुङ्क्ते च दानं तत्सर्वं गर्भस्थस्तु नरः सदा।
ददद्दानं द्विजातिभ्यो वृद्धभावेन मानवः। तस्मात् सर्व्वास्ववस्थासु सर्व्वदानानि पार्थिव।
दातव्यानि द्विजातिभ्यः स्वर्गमार्गजिगीषया ॥ युधिष्ठिर उवाच ॥ चातुर्व्वर्ण्यस्य सर्व्वस्य वर्त्तमानाः प्रतिग्रहे। १२३००
केन विप्रा विशेषेण तारयन्ति तरन्ति च ॥ मार्कण्डेय उवाच ॥ जपैर्मन्त्रैश्च होमैश्च स्वाध्यायाध्ययनेन च।
नावं वेदमयीं कृत्वा तारयन्ति तरन्ति च। ब्राह्मणांस्तोषयेद्यस्तु तुष्यन्ते तस्य देवताः।
वचनाच्चापि विप्राणां स्वर्गलोकमवाप्नुयात्। पितृदैवतपूजाभिर्ब्राह्मणाभ्यर्चनेन च।
अनन्तपुण्यलोकन्तु गन्ताऽसि त्वं न संशयः। श्लेष्मादिभिर्व्याप्ततनुर्म्रियमाणो विचेतनः।
ब्राह्मणा एव सम्पूज्याः पुण्यं स्वर्गमभीप्सता। श्राद्धकाले तु यत्नेन भोक्तव्या ह्यजुगुप्सिताः। १२३०५
दुर्व्वर्णः कुनखी कुष्ठी मायावी कुण्डगोलकौ। वर्ज्जनीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः।
जुगुप्सितं हि यच्छ्राद्धं दहत्यग्निरिवेन्धनं। ये ये श्राद्धे नियुज्यन्ते मूकान्धबधिरादयः।
तेऽपि सर्व्वे नियोक्तव्या मिश्रिता वेदपारगैः। प्रतिग्रहश्च वै देयः शृणु यस्य युधिष्ठिर।
प्रदातारं तथात्मानं यस्तारयति शक्तिमान्। तस्मिन् देयं द्विजे दानं सर्व्वागमविजानता।
प्रदातारं तथात्मानं तारयेद्यः स शक्तिमान्। न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः। १२३१०
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिभोजने। तस्मात्त्वं सर्व्वयत्नेन यतस्वातिथिभोजने।
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयं। प्रयच्छन्ति तु ये राजन् नोपसर्पन्ति ते यमं।
देवमाल्यापनयनं द्विजोच्छिष्टावमार्ज्जनं। आकल्पपरिचर्य्या च गात्रसंवाहनानि च।
अत्रैकैकं नृपश्रेष्ठ गोदानाद्व्यतिरिच्यते। कपिलायाः प्रदानात्तु मुच्यते नात्र संशयः।
तस्मादलङ्कृतां दद्यात् कपिलान्तु द्विजातये। श्रोत्रियाय दरिद्राय गृहस्थायाग्निहोत्रिणे। १२३१५
पुत्त्रदाराभिभूताय तथा ह्यनुपकारिणे। एवंविधेषु दातव्या न समृद्धेषु भारत।
को गुणो भरतश्रेष्ठ समृद्धेष्वभिवर्जितं। एकस्यैका प्रदातव्या न बहूनां कदाचन।
सा गौर्व्विक्रयमापन्ना हन्यात्त्रिपुरुषं कुलं। न तारयति दातारं ब्राह्मणं नैव नैव तु।

सुवर्णस्य विशुद्धस्य सुवर्णं यः प्रयच्छति। सुवर्णानां शतं तेन दत्तं भवति शाश्वतं।
अनड्वाहन्तु यो दद्याच्छक्तं धुरन्धरं। स निस्तरति दुर्गाणि स्वर्गलोकं च गच्छति। १२३८०
वसुन्धरान्तु यो दद्यात् द्विजाय विदुषात्मने। दातारं ह्यनुगच्छन्ति सर्वे कामाभिवाञ्छिताः।
पृच्छन्ति चान्नदातारं वदन्ति पुरुषा भुवि। अध्वनि क्षीणगात्राश्च पांशुपादावगुण्ठिताः।
तेषामेवं श्रमार्त्तानां यो ह्यन्नं कथयेद्बुधः। अन्नदातृसमः सोऽपि कीर्त्त्यते नात्र संशयः।
तस्मात्त्वं सर्व्वदानानि हित्वाऽन्नं सम्प्रयच्छ च। नहीदृशं पुण्यफलं विचित्रमिह दृश्यते।
यथाशक्ति च यो दद्यादन्नं विप्रेषु संस्कृतं। स तेन कर्म्मणा प्रेति प्रजापतिसलोकतां। १२३८५
अन्नमेव विशिष्टं हि यस्मात्परतरं न च। अन्नं प्रजापतिः प्रोक्तः स च संवत्सरो मतः।
संवत्सरस्तु यज्ञोऽसौ सर्व्वं यज्ञे प्रतिष्ठितं। तस्मात् सर्व्वाणि भूतानि स्थावराणि चराणि च।
तस्मादन्नं विशिष्टं हि सर्व्वेभ्य इति विश्रुतं।
येषां तडागानि महोदकानि वाप्यश्च कूपाश्च प्रतिश्रयाश्च। अन्नस्य दानं मधुरा च वाणी यमस्य ते निर्व्वचना भवन्ति।
धान्यं श्रमेणार्ज्जितवित्तसञ्चितं विप्रे सुशीले च प्रयच्छते यः। वसुन्धरा तस्य भवेत् सुतुष्टा धारां वसूनां प्रतिमुञ्चतीव। १२३९०
अन्नदाः प्रथमं यान्ति सत्यवाक् तदनन्तरं। अयाचितप्रदाता च समं यान्ति त्रयो जनाः।
॥ वैशम्पायन उवाच ॥ कौतूहलसमुत्पन्नः पर्य्यपृच्छद्युधिष्ठिरः। मार्कण्डेयं महात्मानं पुनरेव सहानुजः।
यमलोकस्य चाध्वानमन्तरं मानुषस्य च। कीदृशं किंप्रमाणं वा कथं वा तन्महामुने।
तरन्ति पुरुषाश्चैव येनोपायेन शंस मे ॥ मार्कण्डेय उवाच ॥ सर्व्वगुह्यतमं प्रश्नं पवित्रमृषिसंस्तुतं।
कथयिष्यामि ते राजन्धर्म्मं धर्म्मभृताम्बर। षडशीतिसहस्राणि योजनानां नराधिप। १२३९५
यमलोकस्य चाध्वानमन्तरं मानुषस्य च। आकाशं तदपानीयं घोरकान्तारदर्शनं। न तत्र वृक्षच्छाया वा पानीयं केतनानि च।
विश्रमेद्यत्र वै श्रान्तः पुरुषोऽध्वनकर्षितः। नीयन्ते यमदूतैस्तु यमस्याज्ञाकरैर्बलात्।
नराः स्त्रियस्तथैवान्ये पृथिव्यां जीवसंज्ञिताः। ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव।
हयादीनां प्रकृष्टानि तेऽध्वानं यान्ति वै नराः। सन्निवार्य्यातपं यान्ति छत्रेणैव हि छत्रदाः।
तृप्ताश्चैवान्नदातारो ह्यतृप्ताश्चाप्यनन्नदाः। वस्त्रिणो वस्त्रदा यान्ति अवस्त्रा यान्त्यवस्त्रदाः। १२४००
हिरण्यदाः सुखं यान्ति पुरुषास्त्वभ्यलङ्कृताः। भूमिदास्तु सुखं यान्ति सर्व्वकामैः सुतर्पिताः।
यान्ति चैवापरिक्लिष्टा नराः शस्यप्रदायकाः। नराः सुखतरं यान्ति विमानेषु गृहप्रदाः।
पानीयदा ह्यतृषिताः प्रहृष्टमनसो नराः। पन्थानं द्योतयन्तश्च यान्ति दीपप्रदाः सुखं।
गोप्रदास्तु सुखं यान्ति निर्म्मुक्ताः सर्व्वपातकैः। विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः।
तथा बर्हिप्रयुक्तैश्च षष्ठरात्रोपवासिनः। त्रिरात्रं क्षपते यस्तु एकभक्तेन पाण्डव। १२४०५
अन्तरा चैव नाश्नाति तस्य लोका ह्यनामयाः। पानीयस्य गुणा दिव्याः प्रेतलोकसुखावहाः।
तत्र पुष्पोदका नाम नदी तेषां विधीयते। शीतलं सलिलं तत्र पिबन्ति ह्यमृतोपमं।

ये च दुष्कृतकर्म्माणः पूर्वं तेषां विधीयते। एवं नदी महाराज सर्व्वकामप्रदा हि सा।
तस्मात्त्वमपि राजेन्द्र पूजयेथा यथाविधि। अध्वनि क्षीणगात्रश्च पथि पांशुसमन्वितः।
पृच्छते ह्यन्नदातारं गृहमायाति चाश्रया। तं पूजयेत् प्रयत्नेन सोऽतिथिर्ब्राह्मणश्च यः। १२४१०
तं यान्तमनुगच्छन्ति देवाः सर्व्वे सवासवाः। तस्मिन् संपूजिते प्रीता निराशा यान्त्यपूजिते।
तस्मात्त्वमपि राजेन्द्र पूजयेथा यथाविधि। एतत्ते शतशः प्रोक्तं किं भूयः श्रोतुमिच्छसि।
॥ युधिष्ठिर उवाच ॥ पुनः पुनरहं श्रोतुं कथां धर्म्मसमाश्रयां। पुनरिच्छामि धर्म्मज्ञ कथ्यमानां त्वया विभो।
॥ मार्कण्डेय उवाच ॥ धर्म्मान्तरं प्रति कथां कथ्यमानां मया नृप। सर्व्वपापहरां नित्यं शृणुष्वावहितो मम।
कपिलायान्तु दत्तायां यत्फलं ज्येष्ठपुष्करे। तत्फलं भरतश्रेष्ठ विप्राणां पादधावने। १२४१५
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी। तावत् पुष्करपर्णेन पिबन्ति पितरो जलं।
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः। पितरः पादशौचेन अन्नाद्येन प्रजापतिः।
यावद्वत्सस्य वै पादौ शिरश्चैव प्रदृश्यते। तस्मिन् काले प्रदातव्या प्रयतेनान्तरात्मना।
अन्तरीक्षगतो वत्सो यावद्योन्यां प्रदृश्यते। तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति।
यावन्ति तस्या रोमाणि वत्सस्य च युधिष्ठिर। तावद्युगसहस्राणि स्वर्गलोके महीयते। १२४२०
सुवर्णनाभां यः कृत्वा सखुरां कृष्णधेनुकां। तिलैः प्रच्छादितां दद्यात् सर्व्वरत्नैरलङ्कृतां।
प्रतिग्रहं गृहीत्वा यः पुनर्ददाति साधवे। फलानां फलमाप्नोति तदा दत्त्वा च भारत।
ससमुद्रगुहा तेन सशैलवनकानना। चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः।
अन्तर्जानुभुजो यस्तु भुङ्क्ते समभाजनः। यो द्विजः कण्ठरहितं स समस्तारणाय वै।
अपानपा न गदितास्तथाऽन्ये ये द्विजातयः। जपन्ति संहितां सम्यक् ते नित्यं तारणक्षमाः। १२४२५
हव्यं कव्यञ्च यत्किञ्चित् सर्व्वं तत् श्रोत्रियोऽर्हति। दत्तं हि श्रोत्रिये साधौ ज्वलितेऽग्नौ यथाहुतं।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रयोधिनः। निघ्नन्ति मन्युना विप्रा वज्रपाणिरिवासुरान्।
धर्म्माश्रितेयन्तु कथा कथितेयं तवानघ। यां श्रुत्वा मुनयः प्रीता नैमिषारण्यवासिनः।
वीतशोकभयक्रोधा विपाप्मानस्तथैव च। श्रुत्वेमान्तु कथां राजन् भवन्तीह मानवाः।
॥ युधिष्ठिर उवाच ॥ किन्तच्छौचं भवेद्येन विप्रः शुद्धः सदा भवेत्। तदिच्छामि महाप्राज्ञ श्रोतुं धर्म्मभृताम्बर। १२४३०
॥ मार्कण्डेय उवाच ॥ वाक्शौचं कर्म्मशौचञ्च यच्च शौचं जलात्मकं। त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः।
सायं प्रातश्च सन्ध्यां यो ब्राह्मणोऽभ्युपसेवते। प्रजपन् पावनीं देवीं गायत्रीं वेदमातरं।
स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः। न सीदेत् प्रतिगृह्णानो महीमपि ससागरां।
ये चास्य दारुणाः केचिद्ग्रहाः सूर्य्यादयो दिवि। ते चास्य सौम्या जायन्ते शिवाः शिवतराः सदा।
सर्व्वे नानुगतश्चैनं दारुणाः पिशिताशिनः। घोररूपा महाकाया धर्षयन्ति द्विजोत्तमं। १२४३५
नाध्यापनाद्याजनाद्वा अन्यस्माद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलिताग्निसमा द्विजाः।
दुर्व्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा। ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः।

यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति । एवं विद्वानविद्वान् वा ब्राह्मणो दैवतं महत् ।
प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः । नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः ।
वेदाढ्या वृत्तसम्पन्ना ज्ञानवन्तस्तपस्विनः । यत्र तिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप । १२४४०
व्रजे वाऽप्यथ वाऽरण्ये यत्र सन्ति बहुश्रुताः । तत्तन्नगरमित्याहुः पार्थ तीर्थञ्च तद्भवेत् ।
रक्षितारञ्च राजानं ब्राह्मणञ्च तपस्विनं । अभिगम्याभिपूज्याथ सद्यः पापात् प्रमुच्यते ।
पुण्यतीर्थाभिषेकञ्च पवित्राणाञ्च कीर्त्तनं । सद्भिः सम्भाषणञ्चैव प्रशस्तं कीर्त्त्यते बुधैः ।
साधुसङ्गमपूतेन वाक्सुभाषितवारिणा । पवित्रीकृतमात्मानं सन्तो मन्यन्ति नित्यशः ।
त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनं । वल्कलाजिनसंवेष्टं व्रतचर्य्याऽभिषेचनं । १२४४५
अग्निहोत्रं वने वासः शरीरपरिशोषणं । सर्व्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्म्मलः ।
न दुष्करमनाशित्वं सुकरं ह्यशनं विना । विशुद्धिश्चक्षुरादीनां षण्णामिन्द्रियगामिनां ।
विकारि तेषां राजेन्द्र सुदुष्करतरं मनः । ये पापानि न कुर्व्वन्ति मनोवाक्कर्म्मबुद्धिभिः ।
ते तपन्ति महात्मानो न शरीरस्य शोषणं । न ज्ञातिभ्यो दया यस्य शुक्लदेहोऽविकल्मषः ।
हिंसा सा तपसस्तस्य नानाशित्वं तपः स्मृतं । तिष्ठन् गृहे चैव मुनिर्नित्यं शुचिरलङ्कृतः । १२४५०
यावज्जीवं दयावांश्च सर्व्वपापैः प्रमुच्यते । नहि पापानि कर्म्माणि शुद्ध्यन्त्यनशनादिभिः ।
शीर्य्यत्यनशनादेव मांसशोणितलेपनः । अज्ञातं कर्म्म कृत्वा च क्लेशो नान्यत् प्रहीयते ।
नाग्निर्दहति कर्म्माणि भावशून्यस्य देहिनः । पुण्यादेव प्रजायन्ति शुद्ध्यन्त्यनशनानि च ।
न मूलफलभक्षित्वान्न मौनान्नानिलाशनात् । शिरसो मुण्डनाद्वापि न स्थानकुटिकाश्रयात् ।
न जटाधारणाद्वाऽपि न तु स्थण्डिलशय्यया । नित्यं ह्यनशनाद्वापि नाग्निशुश्रूषणादपि । १२४५५
न चोदकप्रवेशेन न च क्ष्माशयनादपि । ज्ञानेन कर्म्मणा वाऽपि जरा मरणमेव च ।
व्याधयश्च प्रहीयन्ते प्राप्यते चोत्तमं पदं । बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संयुज्यते पुनः । आत्मना विप्रहीणानि काष्ठकुड्योपमानि च ।
विनश्यन्ति न सन्देहः फेनानीव महार्णवे । आत्मानं विन्दते येन सर्व्वभूतगुहाशयं ।
श्लोकेन यदि वाऽर्द्धेन क्षीणं तस्य प्रयोजनं । द्व्यक्षराभिसन्धाय केचित् श्लोकपदाश्रितैः । १२४६०
शतैरन्ये सहस्रैश्च प्रत्ययो मोक्षलक्षणं । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।
अपुर्ज्ञानविदो वृद्धाः प्रत्ययो मोक्षलक्षणं । विदितार्थस्तु वेदानां परिवेदप्रयोजनं ।
उद्विजेत् स तु वेदेभ्यो दावाग्नेरिव मानवः । शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिं ।
एकाक्षराभिसम्बन्धं तत्त्वं हेतुभिरिच्छसि । बुद्धिर्न तस्य सिध्येत साधनस्य विपर्य्ययात् ।
वेदपूर्व्वं वेदितव्यं प्रयत्नात्तद्वै वेदस्तस्य वेदः शरीरं । वेदस्तत्त्वं तत्समाप्तोपलब्ध्यै क्लीवस्त्वात्मा तस्य वेद्यस्य वेद्यं । १२४६५
वेदोक्तमायुर्देवानामाशिषश्चैव कर्म्मणां । फलत्यनुयुगं लोके प्रभावश्च शरीरिणां ।
इन्द्रियाणां प्रसादेन तदेतत् परिवर्ज्जयेत् । तस्मादनशनं दिव्यं निरुद्धेन्द्रियगोचरं ।

ब्रह्म वेदाश्च वेद्यञ्च त्वया सृष्टं महाद्युते । शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ । ११४९५
निश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत । बाहवस्ते दिशः सर्व्वाः कुक्षिश्चापि महार्णवः ।
ऊरू ते पर्व्वता देव खं नाभिर्मधुसूदन । पादौ ते पृथिवी देवी रोमाण्योषधयस्तथा ।
इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः । प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैस्तवैः ।
त्वया व्याप्तानि सर्व्वाणि भूतानि भुवनेश्वर । योगिनः सुमहावीर्य्याः स्तुवन्ति त्वां महर्षयः ।
त्वयि तुष्टे जगत्स्वस्थं त्वयि क्रुद्धे महद्भयं । भयानामपनेताऽसि त्वमेकः पुरुषोत्तम । ११५००
देवानां मानुषाणाञ्च सर्व्वभूतसुखावहः । त्रिभिर्व्विक्रमणैर्देव त्रयो लोकास्त्वया हृताः ।
असुराणां समृद्धानां विनाशश्च त्वया कृतः । तव विक्रमणैर्देवा निर्व्वाणमगमन् परं ।
पराभवाश्च दैत्येन्द्राস্त्वयि क्रुद्धे महाद्युते । त्वं हि कर्त्ता विकर्त्ता च भूतानामिह सर्व्वशः । आराधयित्वा त्वां देवाः सुखमेधन्ति सर्व्वशः ।
एवं स्तुतो हृषीकेश उतङ्केन महात्मना । उतङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ।
॥ उतङ्क उवाच ॥ पर्य्याप्तो मे वरो ह्येष यदहं दृष्टवान् हरिं । पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुं । ११५०५
॥ विष्णुरुवाच ॥ प्रीतस्तेऽहमलौल्येन भक्त्या च तव सत्तम । अवश्यं हि त्वया ब्रह्मन् मत्तो प्राप्यो वरो द्विज ।
एवं संछन्द्यमानस्तु वरेण हरिणा तदा । उतङ्कः प्राञ्जलिर्व्वव्रे वरं भरतसत्तम ।
यदि मे भगवन् प्रीतः पुण्डरीकनिभेक्षण । धर्म्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ।
अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं महेश्वर ॥ श्रीभगवानुवाच ॥ सर्व्वमेतद्धि भविता मत्प्रसादात्तव द्विज ।
प्रतिभास्यति योगश्च येन युक्तो दिवौकसां । त्रयाणामपि लोकानां महत्कार्य्यं करिष्यसि । ११५१०
उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः । तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ।
राजा हि वीर्य्यवांस्तात इक्ष्वाकुरपराजितः । बृहदश्व इति ख्यातो भविष्यति महीपतिः ।
तस्य पुत्त्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः । स योगबलमास्थाय मामकं पार्थिवोत्तमः ।
शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति । एवमुक्त्वा तु तं विप्रं विष्णुरन्तरधीयत ।
इति श्री महाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि धुन्धुमारोपाख्याने द्विशततमोऽध्यायः ॥ २०० ॥
॥ मार्कण्डेय उवाच ॥ इक्ष्वाकौ संस्थिते राजन् शशादः पृथिवीमिमां । प्राप्तः परमधर्म्मात्मा सोऽयोध्यायां नृपोऽभवत् । ११५१५
शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान् । अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ।
विष्वगश्वः पृथोः पुत्त्रस्तस्मादद्रिश्च जज्ञिवान् । अद्रेश्च युवनाश्वस्तु श्रावस्तस्यात्मजोऽभवत् ।
तस्य श्रावस्तको ज्ञेयः श्रावस्ती येन निर्म्मिता । श्रावस्तकस्य दायादो बृहदश्वो महाबलः ।
बृहदश्वस्य दायादः कुवलाश्व इति स्मृतः । कुवलाश्वस्य पुत्त्राणां सहस्राण्येकविंशतिः ।
सर्व्वे विद्यासु निष्णाता बलवन्तः सुदारुणाः । कुवलाश्वश्च पितृतो गुणैरभ्यधिकोऽभवत् । ११५२०
समये तं पिता राज्ये बृहदश्वोऽभ्यषेचयत् । कुवलाश्वं महाराज शूरमुत्तमधार्म्मिकं ।
पुत्त्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः । जगाम तपसे धीमांस्तपोवनममित्रहा ।

॥ मार्कण्डेय उवाच ॥ अथ शुश्राव राजर्षिं तमुतङ्को नराधिप । वनं संप्रस्थितं राजन् बृहदश्वं द्विजोत्तमः ।
तमुतङ्को महातेजाः सर्व्वास्त्रविदुषाम्वरं । न्यवारयदमेयात्मा समासाद्य नरोत्तमं ।
॥ उतङ्क उवाच ॥ भवता रक्षणं कार्य्यं तत्तावत् कर्त्तुमर्हसि । निरुद्विग्ना वयं राजंस्त्वत्प्रसादाद्भवेमहि । १३५२५
त्वया हि पृथिवी राजन् रक्ष्यमाणा महात्मना । भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ।
पालने हि महान् धर्म्मः प्रजानामिह दृश्यते । न तथा दृश्यतेऽरण्ये माभूत्ते बुद्धिरीदृशी ।
ईदृशो नहि राजेन्द्र धर्म्मः क्व च न दृश्यते । प्रजानां पालने यो वै पुरा राजर्षिभिः कृतः ।
रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि । निरुद्विग्नस्तपश्चर्त्तुं नहि शक्नोमि पार्थिव ।
ममाश्रमसमीपे वै समेषु मरुधन्वसु । समुद्रो वालुकापूर्ण उज्जालक इति स्मृतः । १३५३०
बहुयोजनविस्तीर्णो बहुयोजनमायतः । तत्र रौद्रो दानवेन्द्रो महारौद्रपराक्रमः ।
मधुकैटभयोः पुत्त्रो धुन्धुर्नाम सुदारुणः । अन्तर्भूमिगतो राजन् वसत्यमितविक्रमः ।
तं निहत्य महाराज वनं त्वं गन्तुमर्हसि । शेते लोकविनाशाय तप आस्थाय दारुणं ।
त्रिदशानां विनाशाय लोकानाञ्चापि पार्थिव । अवध्यो देवतानां हि दैत्यानामथ रक्षसां ।
नागानामथ यक्षाणां गन्धर्व्वाणाञ्च सर्व्वशः । अवाप्य स वरं राजन् सर्व्वलोकपितामहात् । १३५३५
तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा । प्राप्स्यसे महतीं कीर्त्तिं शाश्वतीमव्ययां ध्रुवां ।
क्रूरस्य तस्य स्वपतो वालुकान्तर्हितस्य च । संवत्सरस्य पर्य्यन्ते निःश्वासः संप्रवर्त्तते ।
यदा तदा भूश्चलति सशैलवनकानना । तस्य निश्वासवातेन रज उद्धूयते महत् ।
आदित्यपथमाश्रित्य सप्ताहं भूमिकम्पनं । सविस्फुलिङ्गं सज्वालं धूममिश्रं सुदारुणं ।
तेन राजन्न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे । तं विनाशय राजेन्द्र लोकानां हितकाम्यया । १३५४०
लोकाः स्वस्था भविष्यन्ति तस्मिन् विनिहतेऽसुरे । त्वं हि तस्य विनाशाय पर्य्याप्त इति मे मतिः ।
तेजसा तव तेजश्च विष्णुराप्याययिष्यति । विष्णुना च वरो दत्तः पूर्व्वं मम महीपते ।
यस्तं महासुरं रौद्रं वधिष्यति महीपतिः । तेजस्तं वैष्णवमिति प्रवेक्ष्यति दुरासदं ।
तत्तेजस्त्वं समाधाय राजेन्द्र भुवि दुःसहं । तं निषूदय राजेन्द्र दैत्यं रौद्रपराक्रमं ।
नहि धुन्धुर्महातेजा तेजसाऽल्पेन शक्यते । निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि । १३५४५
इतिश्री महाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि धुन्धुमारोपाख्याने एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
॥ मार्कण्डेय उवाच ॥ स एवमुक्तो राजर्षिरुतङ्केनापराजितः । उतङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् ।
न तेऽभिगमनं ब्रह्मन् मोघमेतद्भविष्यति । पुत्त्रो ममायं भगवन् कुवलाश्व इति स्मृतः ।
धृतिमान् क्षिप्रकारी च वीर्य्येणाप्रतिमो भुवि । प्रियञ्च ते सर्व्वमेतत् करिष्यति न संशयः ।
पुत्त्रैः परिवृतः सर्व्वैः शूरैः परिघबाहुभिः । विसर्ज्जयस्व मां ब्रह्मन् न्यस्तशस्त्रोऽस्मि साम्प्रतं ।
तथाऽस्त्विति च तेनोक्तो मुनिनाऽमिततेजसा । स तमादिश्य तनयमुतङ्काय महात्मने । १३५५०
क्रियतामिति राजर्षिर्जगाम वनमुत्तमं ॥ युधिष्ठिर उवाच ॥ क एष भगवन् दैत्यो महावीर्य्यस्तपोधन ।

कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुं। एवं महाबलो दैत्यो न श्रुतो मे तपोधन।
एतदिच्छामि भगवन् याथातथ्येन वेदितुं। सर्व्वमेतन्महाप्राज्ञ विस्तरेण तपोधन।
॥ मार्कण्डेय उवाच॥ शृणु राजन्निदं सर्व्वं यथावृत्तं नराधिप। कथ्यमानं महाप्राज्ञ विस्तरेण यथातथं।
एकार्णवे तथा लोके नष्टे स्थावरजङ्गमे। प्रनष्टेषु च भूतेषु सर्व्वेषु भरतर्षभ। १२१५५
प्रभवं लोककर्त्तारं विष्णुं शाश्वतमव्ययं। यमाहुर्मुनयः सिद्धाः सर्व्वलोकमहेश्वरं।
सुष्वाप भगवान् विष्णुरप्सु योगत एव सः। नागस्य भोगे महति शेषस्यामिततेजसः।
लोककर्त्ता महाभाग भगवानच्युतो हरिः। नागभोगेन महता परिरभ्य महीमिमां।
स्वपतस्तस्य देवस्य पद्मं सूर्य्यसमप्रभं। नाभ्यां विनिःसृतं दिव्यं तत्रोत्पन्नः पितामहः।
साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्य्यसमप्रभे। चतुर्वेदश्चतुर्मूर्त्तिस्तथैव च चतुर्मुखः। १२१६०
स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः। कस्यचित्त्वथ कालस्य दानवौ वीर्य्यवत्तमौ।
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुं। शयानं शयने दिव्ये नागभोगे महाद्युतिं।
बहुयोजनविस्तीर्णे बहुयोजनमायते। किरीटकौस्तुभधरं पीतकौषेयवाससं।
दीप्यमानं श्रिया राजंस्तेजसा वपुषा तथा। सहस्रसूर्य्यप्रतिममद्भुतोपमदर्शनं।
विस्मयः सुमहानासीन्मधुकैटभयोस्तदा। दृष्ट्वा पितामहञ्चापि पद्मे पद्मनिभेक्षणं। १२१६५
वित्रासयेतामथ तौ ब्रह्माणममितौजसं। वित्रास्यमानो बहुशो ब्रह्मा ताभ्यां महायशाः।
अकम्पयत् पद्मनालं ततोऽबुध्यत केशवः। अथापश्यत गोविन्दो दानवौ वीर्य्यवत्तरौ।
दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ। ददामि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते।
तौ प्रहस्य हृषीकेशं महादर्पौ महाबलौ। प्रत्यब्रूतां महाराज सहितौ मधुसूदनं।
आवां वरय देव त्वं वरदौ स्वः सुरोत्तम। दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन्। १२१७०
॥ भगवानुवाच॥ प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम। युवां हि वीर्य्यसम्पन्नौ न वामस्ति समः पुमान्।
वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ। एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै।
॥ मधुकैटभावूचतुः॥ अनृतं नोक्तपूर्व्वं वै स्वैरेष्वपि कुतोऽन्यथा। सत्ये धर्म्मे च निरतौ विद्ध्यावां पुरुषोत्तम।
बले रूपे च सौन्दर्य्ये शमे च न समोऽस्ति नौ। धर्म्मे तपसि दाने च शीलसत्त्वदमेषु च।
उपप्लवो महानस्मानुपावर्त्तत केशव। उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः। १२१७५
आवामिच्छावहे देव कृतमेकं त्वया विभो। अनावृतेऽस्मिन्नाकाशे वधं सुरवरोत्तम।
पुत्रत्वमधिगच्छाव तव चापि सुलोचन। वर एष वृतो देव तद्विद्धि सुरसत्तम।
अनृतं मा भवेद्देव यद्धि नौ संश्रुतं तदा॥ श्रीभगवानुवाच॥ बाढमेवं करिष्यामि सर्व्वमेतद्भविष्यति।
विचिन्त्य त्वथ गोविन्दो नापश्यद्यदनावृतं। अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः।
स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा। मधुकैटभयो राजन् शिरसी मधुसूदनः। १२१८०
चक्रेण शितधारेण न्यकृन्तत महायशाः।

इतिश्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि धुन्धुमारोपाख्याने द्व्यधिकद्विशततोऽध्यायः॥ २०२॥

॥ मार्कण्डेय उवाच ॥ धुन्धुर्नाम महाराज तयोः पुत्त्रो महाद्युतिः । स तपोऽतप्यत महन्महावीर्य्यपराक्रमः ।
अतिष्ठदेकपादेन कृशो धमनिसन्ततः । तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुं ।
देवदानवयक्षाणां सर्पगन्धर्व्वरक्षसां । अवध्योऽहं भवेयं वै वर एष वृतो मया ।
एवं भवतु गच्छेति तमुवाच पितामहः । स एवमुक्तस्तत्पादौ मूर्द्ध्ना स्पृष्ट्वा जगाम ह । ११५८५
स तु धुन्धुर्व्वरं लब्ध्वा महावीर्य्यपराक्रमः । अनुस्मरन् पितृवधं द्रुतं विष्णुमुपागमत् ।
स तु देवान् सगन्धर्व्वान् जित्वा धुन्धुरमर्षणः । बबाध सर्व्वानसकृद्विष्णुं देवांश्च वै भृशं ।
समुद्रे वालुकापूर्णे उज्जालक इति श्रुते । आगम्य च स दुष्टात्मा तं देशं भरतर्षभ ।
बाधते स्म परं शक्त्या तमुतङ्काश्रमं विभो । अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तथा ।
मधुकैटभयोः पुत्त्रो धुन्धुर्भीमपराक्रमः । शेते लोकविनाशाय तपोबलमुपाश्रितः । ११५९०
उतङ्कस्याश्रमाभ्याशे निःश्वसन् पावकार्च्चिषः । एतस्मिन्नेव काले तु राजा सबलवाहनः ।
उतङ्कविप्रसहितः कुवलाश्वो महीपतिः । पुत्त्रैः सह महीपाल प्रययौ भरतर्षभ ।
सहस्रैरेकविंशत्या पुत्त्राणामरिमर्द्दनः । कुवलाश्वो नरपतिरन्वितो बलशालिनां ।
तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः । उतङ्कस्य नियोगेन लोकानां हितकाम्यया ।
तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत् । एष श्रीमानवध्योऽद्य धुन्धुमारो भविष्यति । ११५९५
दिव्यैश्च पुष्पैस्तं देवाः समन्तात् पर्य्यवाकिरन् । देवदुन्दुभयश्चापि नेदुः स्वयमनीरिताः ।
शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः । विपांशुलां महीं कुर्व्वन् ववर्ष च सुरेश्वरः ।
अन्तरीक्षे विमानानि देवतानां युधिष्ठिर । तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः ।
कुवलाश्वस्य धुन्धोश्च युद्धकौतूहलान्विताः । देवगन्धर्व्वसहिताः समवैक्षन्महर्षयः ।
नारायणेन कौरव्य तेजसाप्यायितस्तदा । स गतो नृपतिः क्षिप्रं पुत्त्रैस्तैः सर्व्वतो दिशं । ११६००
अर्णवं खानयामास कुवलाश्वो महीपतिः । कुवलाश्वस्य पुत्त्रैश्च तस्मिन् वै वालुकार्णवे ।
सप्तभिर्द्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः । आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत् ।
दीप्यमानं यथा सूर्य्यं तेजसा भरतर्षभ । ततो धुन्धुर्महाराज दिशमावृत्य पश्चिमां ।
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः । कुवलाश्वस्य पुत्त्रैस्तु सर्व्वतः परिवारितः ।
अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुषलैरपि । पट्टिशैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः । ११६०५
स बध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः । क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च ।
आस्याद्वमन् पावकं स संवर्त्तकसमं तदा । तान् सर्व्वान्नृपतेः पुत्त्रानदहत् स्वेन तेजसा ।
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्त्तयन्निव । क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ।
सगरस्यात्मजान् क्रुद्धस्तदद्भुतमिवाभवत् । तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरं । आससाद महातेजाः कुवलाश्वो महीपतिः । ११६१०
तस्य वारि महाराज सुस्राव बहु देहतः । तदापीयत तत्तेजो राजा वारिमयं नृप ।

योगी योगेन वह्निञ्च शमयामास वारिणा। ब्रह्मास्त्रेण च राजेन्द्र दैत्यं क्रूरपराक्रमं।
ददाह भरतश्रेष्ठ सर्व्वलोकाभयाय वै। सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरं।
सुरशत्रुममित्रघ्नं त्रैलोक्येश इवापरः। धुन्धोर्व्वधात्तदा राजा कुवलाश्वो महामनाः।
धुन्धुमार इति ख्यातो नाम्नाऽप्रतिरथोऽभवत्। प्रीतैश्च त्रिदशैः सर्व्वैर्महर्षिसहितैस्तदा। ११११५
वरं वृणीष्वेत्युक्तः स प्राञ्जलिः प्रणतस्तदा। अतीव मुदितो राजन्निदं वचनमब्रवीत्।
दद्यां वित्तं द्विजाग्र्येभ्यः शत्रूणाञ्चापि दुर्ज्जयः। सख्यञ्च विष्णुना मे स्याद्भूतेष्वद्रोह एव च।
धर्म्मे रतिश्च सततं स्वर्गे वासस्तथाऽक्षयः। तथाऽस्त्विति ततो देवैः प्रीतैरुक्तः स पार्थिवः।
ऋषिभिश्च सगन्धर्व्वैरुत्तङ्केन च धीमता। सम्भाष्य चैनं विविधैराशीर्व्वादैस्ततो नृप।
देवा महर्षयश्चापि स्वानि स्थानानि भेजिरे। तस्य पुत्रास्त्रयः शिष्टा युधिष्ठिर तदाऽभवन्। १११२०
दृढाश्वः कपिलाश्वश्च चन्द्राश्वश्चैव भारत। तेभ्यः परम्परा राजन्निक्ष्वाकूणां महात्मनां।
वंशस्य सुमहाभाग राज्ञाममिततेजसां। एवं स निहतस्तेन कुवलाश्वेन सत्तम।
धुन्धुर्नाम महादैत्यो मधुकैटभयोः सुतः। कुवलाश्वश्च नृपतिर्धुन्धुमार इति स्मृतः।
नाम्ना च गुणसंयुक्तस्तदाप्रभृति सोऽभवत्। एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि।
धौन्धुमारमुपाख्यानं प्रथितं यस्य कर्म्मणा। इदन्तु पुण्यमाख्यानं विष्णोः समनुकीर्त्तनं। १११२५
शृणुयाद्यः स धर्म्मात्मा पुत्रवांश्च भवेन्नरः। आयुष्मान् धृतिमांश्चैव श्रुत्वा भवति पर्व्वसु।
न च व्याधिभयं किञ्चित्प्राप्नोति विगतज्वरः।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि धुन्धुमारोपाख्याने त्र्यधिकद्विशततमोऽध्यायः॥ २०३॥

॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिं। पप्रच्छ भरतश्रेष्ठ धर्म्मप्रश्नं सुदुर्व्विदं।
श्रोतुमिच्छामि भगवन् स्त्रीणां माहात्म्यमुत्तमं। कथ्यमानं त्वया विप्र सूक्ष्मधर्म्मञ्च तत्त्वतः।
प्रत्यक्षेण हि दृश्यन्ते देवा विप्रर्षिसत्तम। सूर्य्याचन्द्रमसौ वायुः पृथिवी वह्निरेव च। १११३०
पिता माता च भगवन् गुरुरेव च सत्तम। यच्चान्यद्देवविहितं तच्चापि भृगुनन्दन।
मान्या हि गुरवः सर्व्वे एकपत्न्यस्तथा स्त्रियः। पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे।
पतिव्रतानां माहात्म्यं वक्तुमर्हसि नः प्रभो। निरुध्य चेन्द्रियग्रामं मनः संरुध्य चानघ।
पतिं दैवतवच्चापि चिन्तयन्त्यः स्थिता हि याः। भगवन् दुष्करं त्वेतत् प्रतिभाति मम प्रभो।
मातापित्रोश्च शुश्रूषा स्त्रीणां भर्त्तरि च द्विज। स्त्रीणां धर्म्मात् सुघोराद्धि नान्यं पश्यामि दुष्करं। १११३५
साध्वाचाराः स्त्रियो ब्रह्मन् यत् कुर्व्वन्ति सदादृताः। दुष्करं खलु कुर्व्वन्ति पितरं मातरञ्च वै।
एकपत्न्यश्च या नार्य्यो याश्च सत्यं वदन्त्युत। कुक्षिणा दशमासांश्च गर्भं सन्धारयन्ति याः।
नार्य्यः कालेन सम्भूय किमद्भुततरं ततः। संशयं परमं प्राप्य वेदनामतुलामपि।
प्रजायन्ते सुतान्नार्य्यो दुःखेन महता विभो। पुष्णन्ति चापि महता स्नेहेन द्विजपुङ्गव।
ये च क्रूरेषु सर्व्वेषु वर्त्तमाना जुगुप्सिताः। स्वकर्म्म कुर्व्वन्ति सदा दुष्करं तच्च मे मतं। १११४०

क्षत्रधर्म्मसमाचारं तत्त्वं चाख्याहि मे द्विज। धर्म्मः सुदुर्लभो विप्र नृशंसेन महात्मना।
एतदिच्छामि भगवन् प्रश्नं प्रश्नविदाम्बर। श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत।
॥ मार्कण्डेय उवाच ॥ हन्त ते सर्व्वमाख्यास्ये प्रश्नमेतं सुदुर्लभं। तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे।
मातृस्तु गौरवादन्ये पितृनन्ये तु मेनिरे। दुष्करं कुरुते माता विवर्द्धयति ताः प्रजाः।
तपसा देवतेज्याभिर्व्वन्दनेन तितिक्षया। अभिचारैरुपायैश्चापीहन्ते पितरः सुतान्। १३९५५
एवं कृच्छ्रेण महता पुत्त्रं प्राप्य सुदुर्लभं। चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति।
आशंसते हि पुत्त्रेषु पिता माता च भारत। यशः कीर्त्तिमथैश्वर्य्यं प्रजा धर्म्मं तथैव च।
तयोराशान्तु सफलां यः करोति स धर्म्मवित्। पिता माता च राजेन्द्र तुष्यतो यस्य नित्यशः।
इह प्रेत्य च तस्याथ कीर्त्तिर्धर्म्मश्च शाश्वतः। नैव यज्ञक्रियाः काश्चिन्न श्राद्धं नोपवासकं।
या तु भर्त्तरि शुश्रूषा तया स्वर्गं जयत्युत। एतत्प्रकरणं राजन्नधिकृत्य युधिष्ठिर। १३९६०
पतिव्रतानां नियतं धर्म्मञ्चावहितः शृणु।

इतिश्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि पतिव्रतोपाख्याने चतुरधिकद्विशततोऽध्यायः॥ २०४॥

॥ मार्कण्डेय उवाच ॥ कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः। तपस्वी धर्म्मशीलश्च कौशिको नाम भारत।
साङ्गोपनिषदो वेदानधीते द्विजसत्तमः। स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन् स्थितः।
उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत। तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि।
तामवेक्ष्य ततः क्रुद्धः समपध्यायत द्विजः। भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता। १३९६५
अपध्याता च विप्रेण न्यपतद्धरणीतले। बलाकां पतितां दृष्ट्वा गतसत्वामचेतनां।
कारुण्यादभिसन्तप्तः पर्य्यशोचत तां द्विजः। अकार्य्यं कृतवानस्मि रोषरागबलात्कृतः।
॥ मार्कण्डेय उवाच ॥ इत्युक्त्वा बहुशो विद्वान् ग्रामं भैक्ष्याय संश्रितः। ग्रामे शुचीनि प्रचरन् कुलानि भरतर्षभ।
प्रविष्टस्तत्कुलं यत्र पूर्व्वञ्चरितवांस्तु सः। देहीति याचमानोऽसौ तिष्ठेत्युक्तः स्त्रिया ततः।
शौचन्तु यावत् कुरुते भाजनस्य कुटुम्बिनी। एतस्मिन्नन्तरे राजन् क्षुधा सम्पीडितो भृशं। १३९७०
भर्त्ता प्रविष्टः सहसा तस्या भरतसत्तम। सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यवहाय तं।
पाद्यमाचमनीयं वै ददौ भर्त्तुस्तथासनं। प्रह्वा पर्य्यचरच्चापि भर्त्तारमसितेक्षणा।
आहारेणाथ भक्ष्यैश्च भोज्यैः सुमधुरैस्तथा। उच्छिष्टं भाविता भर्त्तुर्भुङ्क्ते नित्यं युधिष्ठिर।
दैवतञ्च पतिं मेने भर्त्तुश्चित्ताऽनुसारिणी। कर्म्मणा मनसा वाचा नान्यचिन्ताऽभ्यगात् पतिं।
तं सर्व्वभावोपगता पतिशुश्रूषणे रता। साध्वाचारा शुचिर्द्दक्षा कुटुम्बस्य हितैषिणी। १३९७५
भर्त्तुश्चापि हितं यत्तत् सततं साऽनुवर्त्तते। देवताऽतिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा।
शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया। सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्ष्यकाङ्क्षिणं।
कुर्व्वती पतिशुश्रूषां सस्माराऽथ शुभेक्षणा। व्रीडिता साऽभवत् साध्वी तदा भरतसत्तम।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी॥ ब्राह्मण उवाच॥ किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने।

उपरोधं कृतवती न विसर्ज्जितवत्यसि ॥ मार्कण्डेय उवाच ॥ ब्राह्मणं क्रोधसन्तप्तं ज्वलन्तमिव तेजसा। ११९००
दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्व्वं वचोऽब्रवीत् ॥ स्त्र्युवाच ॥ क्षन्तुमर्हसि मे विद्वन् भर्त्ता मे दैवतं महत्।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया ॥ ब्राह्मण उवाच ॥ ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः।
गृहस्थधर्म्मे वर्त्तन्ती ब्राह्मणानवमन्यसे। इन्द्रोऽप्येषां प्रणमते किं पुनर्मानवो भुवि।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया। ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि।
॥ स्त्र्युवाच ॥ नाहं बलाका विप्रेन्द्र त्यज क्रोधं तपोधन। अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसि। ११९०५
नावजानाम्यहं विप्रान् देवैस्तुल्यान् मनस्विनः। अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ।
जानामि तेजो विप्राणां महाभाग्यञ्च धीमतां। अपेयः सागरः क्रोधात् कृतो हि लवणोदकः।
तथैव दीप्ततपसां मुनीनां भावितात्मनां। येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति।
ब्राह्मणानां परिभवाद्वातापिः स दुरात्मवान्। अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः।
बहुप्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनां। क्रोधः सुविपुलो ब्रह्मन् प्रसादश्च महात्मनां। ११९१०
अस्मिंस्त्वतिक्रमे ब्रह्मन् क्षन्तुमर्हसि मेऽनघ। पतिशुश्रूषया धर्म्मो यः स मे रोचते द्विज।
दैवतेष्वपि सर्व्वेषु भर्त्ता मे दैवतं परं। अविशेषेण तस्याहं कुर्य्यां धर्म्मं द्विजोत्तम।
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशं। बलाका हि त्वया दग्धा रोषात्तद्विदितं मया।
क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम। यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः।
यो वदेदिह सत्यानि गुरुं सन्तोषयेत च। हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः। ११९१५
जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः। कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः।
यस्य चात्मसमो लोको धर्म्मज्ञस्य मनस्विनः। सर्व्वधर्म्मेषु च रतस्तं देवा ब्राह्मणं विदुः।
योऽध्यापयेदधीयीत यजेद्वा याजयेत वा। दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः।
ब्रह्मचारी च वेदान् योऽप्यधीयाद्द्विजपुङ्गवः। स्वाध्याये चाप्रमत्तो वै तं देवा ब्राह्मणं विदुः।
यद्ब्राह्मणानां कुशलं तदेषां परिकीर्त्तयेत्। सत्यं तथा व्याहरतां नानृते रमते मनः। ११९२०
धर्म्मन्तु ब्राह्मणस्याहुः स्वाध्यायं दममार्ज्जवं। इन्द्रियाणां निग्रहञ्च शाश्वतं द्विजसत्तम।
सत्यार्ज्जवं धर्म्ममाहुः परं धर्म्मविदो जनाः। दुर्ज्ञेयः शाश्वतो धर्म्मः स च सत्ये प्रतिष्ठितः।
श्रुतिप्रमाणो धर्म्मः स्यादिति वृद्धानुशासनं। बहुधा दृश्यते धर्म्मः सूक्ष्म एव द्विजोत्तम।
भगवानपि धर्म्मज्ञः स्वाध्यायनिरतः शुचिः। न तु तत्त्वेन भगवन् धर्म्मं वेत्सीति मे मतिः।
यदि विप्र न जानीषे धर्म्मं परमकं द्विज। धर्म्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीं। ११९२५
मातापितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः। मिथिलायां वसेद्व्याधः स ते धर्म्मान् प्रवक्ष्यति।
तत्र गच्छस्व भद्रन्ते यथाकामं द्विजोत्तम। अत्युक्तमपि मे सर्व्वं क्षन्तुमर्हस्यनिन्दित।
स्त्रियो ह्यवध्याः सर्व्वेषां ये धर्म्ममभिविन्दते ॥ ब्राह्मण उवाच ॥ प्रीतोऽस्मि तव भद्रन्ते गतः क्रोधश्च शोभने।
उपालम्भस्त्वयाऽप्युक्तो मम निःश्रेयसं परं। स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने।

॥ मार्कण्डेय उवाच ॥ तया विसृष्टो निर्गम्य स्वमेव भवनं ययौ। विनिन्दन् स स्वमात्मानं कौशिको द्विजसत्तमः। १३०००

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि पतिव्रतोपाख्याने पञ्चाधिकद्विशततोऽध्यायः॥ २०५॥

॥ मार्कण्डेय उवाच ॥ चिन्तयित्वा तदाश्चर्य्यं स्त्रिया प्रोक्तमशेषतः। विनिन्दन् स स्वमात्मानमागस्कृत इवाबभौ।

चिन्तयानः स धर्म्मस्य सूक्ष्मां गतिमवाप्नुयात्। श्रद्दधानेन वै भाव्यं गच्छामि मिथिलामहं।

कृतात्मा धर्म्मवित्तस्यां व्याधो निवसते किल। तं गच्छाम्यहमद्यैव धर्म्मं प्रष्टुं तपोधनं।

इति सञ्चिन्त्य मनसा श्रद्दधानः स्त्रिया वचः। बलाकाप्रत्ययेनासौ धर्म्म्यैश्च वचनैः शुभैः।

संप्रतस्थे स मिथिलां कौतूहलसमन्वितः। अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च। १३००५

ततो जगाम मिथिलां जनकेन सुरक्षितां। धर्म्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभां।

गोपुराट्टालकवतीं हर्म्म्यप्राकारशोभनां। प्रविश्य नगरीं रम्यां विमानैर्बहुभिर्युतां।

पण्यैश्च बहुभिर्युक्तां सुविभक्तमहापथां। अश्वैरथैस्तथा नागैर्योधैश्च बहुभिर्युतां।

हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलां। सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन्।

धर्म्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः। अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितं। १३०१०

मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनं। आकुलत्वाच्च क्रेतॄणामेकान्ते संस्थितो द्विजः।

स तु ज्ञात्वा द्विजं प्राप्तं सहसा सम्भ्रमोत्थितः। आजगाम यतो विप्रः स्थित एकान्तदर्शने।

॥ व्याध उवाच ॥ अभिवादये त्वां भगवन् स्वागतन्ते द्विजोत्तम। अहं व्याधो हि भद्रन्ते किं करोमि प्रशाधि मां।

एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति। जानाम्येतदहं सर्व्वं यदर्थं त्वमुपागतः।

श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः। द्वितीयमिदमाश्चर्य्यमित्यचिन्तयत द्विजः। १३०१५

अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीदिदं। गृहं गच्छाव भगवन् यदि ते रोचतेऽनघ।

॥ मार्कण्डेय उवाच ॥ बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत्। अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति।

प्रविश्य च गृहं रम्यमासनेनाभिपूजितः। पाद्यमाचमनीयञ्च प्रतिगृह्य द्विजोत्तमः।

ततः सुखोपविष्टस्तं व्याधं वचनमब्रवीत्। कर्म्मैतत्ते न सदृशं भवतः प्रतिभाति मे।

अनुतप्ये भृशं तात तव घोरेण कर्म्मणा॥ व्याध उवाच ॥ कुलोचितमिदं कर्म्म पितृपैतामहं परं। १३०२०

वर्त्तमानस्य मे धर्म्मे स्वे मन्युं मा कृथा द्विज। विधात्रा विहितं पूर्व्वं कर्म्म स्वमनुपालयन्।

प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम। सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च।

देवताऽतिथिभृत्यानामवशिष्टेन वर्त्तये। न कुत्सयाम्यहं किञ्चिन्न गर्हे बलवत्तरं।

कृतमन्वेति कर्त्तारं पुरा कर्म्म द्विजोत्तम। कृषिगोरक्षवाणिज्यमिह लोकस्य जीवनं।

दण्डनीतिस्त्रयी विद्या तेन लोको भवत्युत। कर्म्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः। १३०२५

ब्रह्मचर्य्यंतपोमन्त्राः सत्यञ्च ब्राह्मणे सदा। राजा प्रशास्ति धर्म्मेण स्वकर्म्मनिरताः प्रजाः।

विकर्म्माणश्च ये केचित्तान् युनक्ति स्वकर्म्मसु। भेतव्यं हि सदा राज्ञां प्रजानामधिपा हि ते।

वारयन्ति विकर्म्मस्थं नृपा मृगमिवेषुभिः। जनकस्येह विप्रर्षे विकर्म्मस्थो न विद्यते।

स्वकर्मनिरता वर्णाश्चत्वारोऽपि द्विजोत्तम । स एव जनको राजा दुर्वृत्तमपि चेत्सुतं ।
दण्ड्यं दण्डे निक्षिपति तथा न ग्लाति धार्मिकं । स युक्तचारो नृपतिः सर्व्वं धर्मेण पश्यति । १२७२०
श्रीश्च राज्यञ्च दण्डश्च क्षत्रियाणां द्विजोत्तम । राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीं ।
सर्व्वेषामेव वर्णानां त्राता राजा भवत्युत । परेण हि हतान् ब्रह्मन् वराहमहिषानहं ।
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदाऽप्यहं । न भक्षयामि मांसानि ऋतुगामी तथा ह्यहं ।
सदोपवासी च तथा नक्तं भोजी सदा द्विज । अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ।
प्राणिहिंसारतिश्चापि भवते धार्म्मिकः पुमान् । व्यभिचाराच्चरेन्द्राणां धर्म्मः संकीर्य्यते महान् । १२७२५
अधर्म्मो वर्त्तते चापि संकीर्य्यन्ते ततः प्रजाः । भेरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ।
क्लीवाश्चान्धाश्च बधिरा जायन्ते स्वल्पलोचनाः । पार्थिवानामधर्मत्वात् प्रजानामभवः सदा ।
स एव राजा जनकः प्रजा धर्मेण पश्यति । अनुगृह्णन् प्रजाः सर्व्वाः स्वधर्म्मे निरतः सदा ।
ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवाः । सर्व्वान् सुपरिणीतेन कर्मणा तोषयाम्यहं ।
ये जीवन्ति स्वधर्म्मेण संयुञ्जन्ति च पार्थिवाः । न किञ्चिदुपजीवन्ति दान्ता उत्थानशीलिनः । १२७३०
शक्त्याऽन्नदानं सततं तितिक्षा धर्म्मनित्यता । यथार्हं प्रतिपूजा च सर्व्वभूतेषु वै सदा ।
त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे । मृषावादं परिहरेत् कुर्य्यात् प्रियमयाचितः ।
न च कामान्न संरम्भान्न द्वेषाद्धर्म्ममुत्सृजेत् । प्रिये नातिभृशं हृष्येदप्रिये नच संज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु नच धर्मं परित्यजेत् । कर्म चेत् किञ्चिदन्यत् स्यादितरन्न तदाचरेत् ।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् । न पापे प्रतिपापः स्यात् साधुरेव सदा भवेत् । १२७३५
आत्मनैव हतः पापो यः पापं कर्त्तुमिच्छति । कर्म चैतदसाधूनां वृजिनानामसाधुवत् ।
न धर्म्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये । अश्रद्दधाना धर्म्मस्य ते नश्यन्ति न संशयः ।
महादृतिरिवाध्मातः पापो भवति नित्यदा । मूढानामवलिप्तानामसारं भाषितं भवेत् ।
दर्शयत्यन्तरात्मा तं दिवारूपमिवांशुमान् । न लोके राजते मूर्खः केवलात्मप्रशंसया ।
अपि चेह श्रिया हीनः कृतविद्यः प्रकाशते । अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयन् । १२७४०
न कश्चिद्गुणसम्पन्नः प्रकाशो भुवि दृश्यते । विकर्म्मणा तप्यमानः पापाद्धि परिमुच्यते ।
न तत् कुर्य्यां पुनरिति द्वितीयात् परिमुच्यते । कर्मणा येन तेनेह पापाद्द्विजवरोत्तम । एवं श्रुतिरियं ब्रह्मन् धर्मेषु परि
दृश्यते ।
पापान्यबुद्ध्वेह पुराकृतानि प्राग्धर्म्मशीलोऽपि विहन्ति पश्चात् । धर्म्मो राजन्नुदते पूरुषाणां यत्कुर्व्वते पापमिह प्रमादात् ।
पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः । तन्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः । वसनस्येव छिद्राणि साधूनां विवृणोति यः । १२७४५
पापञ्चेत् पुरुषः कृत्वा कल्याणमभिपद्यते । मुच्यते सर्व्वपापेभ्यो महाभ्रेणेव चन्द्रमाः ।
यथादित्यः समुद्यन् वै तमः पूर्व्वं व्यपोहति । एवं कल्याणमातिष्ठन् सर्व्वपापैः प्रमुच्यते ।

पापानां विद्ध्यधिष्ठानं लोभमेव द्विजोत्तम। लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः।
अधर्म्मा धर्म्मरूपेण तृणैः कूपा इवावृताः। तेषां दमः पवित्राणि प्रलापा धर्म्मसंश्रिताः। सर्व्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः।
मार्कण्डेय उवाच॥ स तु विप्रो महाप्राज्ञो धर्म्मव्याधमपृच्छत। शिष्टाचारं कथमहं विद्यामिति नरोत्तम।　　१२०६०
एतदिच्छामि भद्रन्ते श्रोतुं धर्म्मभृताम्बर। त्वत्तो महामते व्याध तद्ब्रवीहि यथातथं।
॥ व्याध उवाच॥ यज्ञो दानं तपो वेदाः सत्यञ्च द्विजसत्तम। पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा।
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवं। धर्म्ममित्येव सन्तुष्टास्ते शिष्टाः शिष्टसम्मताः।
न तेषां विद्यते वृत्तं यज्ञस्वाध्यायशीलिनां। आचारपालनञ्चैव द्वितीयं शिष्टलक्षणं।
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च। एतच्चतुष्टयं ब्रह्मन् शिष्टाचारेषु नित्यदा।　　१२०६५
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्व्वशः। यामयं लभते वृत्तिं सा न शक्या ह्यतोऽन्यथा।
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः। दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा।
ये तु धर्म्ममसूयन्ते बुद्धिमोहान्विता नराः। अपथा गच्छतां तेषामनुयाता च पीड्यते।
ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः। धर्म्मपन्थानमारूढाः सत्यधर्म्मपरायणाः।
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता जनाः। उपाध्यायमते युक्ताः स्थित्या धर्म्मार्थदर्शिनः।　　१२०७०
नास्तिकान् भिन्नमर्य्यादान् क्रूरान् पापमतौ स्थितान्। त्यज तान् ज्ञानमाश्रित्य धार्म्मिकानुपसेव्य च।
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीं। नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर।
क्रमेण सञ्चितो धर्म्मो बुद्धियोगमयो महान्। शिष्टाचारे भवेत् साधूरागः शुक्ले व वाससि।
अहिंसा सत्यवचनं सर्व्वभूतहितं परं। अहिंसा परमो धर्म्मः स च सत्ये प्रतिष्ठितः।
सत्ये कृत्वा प्रतिष्ठान्तु प्रवर्त्तन्ते प्रवृत्तयः। सत्यमेव गरीयस्तु शिष्टाचारनिषेवितं।　　१२०७५
आचारश्च सतां धर्म्मः सन्तश्चाचारलक्षणाः। यो यथाप्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते।
पापात्मा क्रोधकामादीन् दोषानाप्नोत्यनात्मवान्। आरम्भो न्याययुक्तो यः स हि धर्म्म इति स्मृतः।
अनाचारस्त्वधर्म्मेति एतत् शिष्टानुशासनं। अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः।
ऋजवः शमसम्पन्नाः शिष्टाचारा भवन्ति ते। त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः।
गुरुशुश्रूषवो दान्ता शिष्टाचारा भवन्त्युत। तेषामदीनसत्त्वानां दुष्कराचारकर्म्मणां।　　१२०८०
स्वैः कर्म्मभिः सत्कृतानां घोरत्वं सम्प्रणश्यति। तं सदाचारमाश्चर्य्यं पुराणं शाश्वतं ध्रुवं।
धर्म्मं धर्म्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः। आस्तिका मानहीनाश्च द्विजातिजनपूजकाः।
श्रुतवृत्तोपसम्पन्नाः सन्तः स्वर्गनिवासिनः। वेदोक्तः परमो धर्म्मो धर्म्मशास्त्रेषु चापरः।
शिष्टाचारश्च शिष्टानां त्रिविधं धर्म्मलक्षणं। पारणञ्चापि विद्यानां तीर्थानामवगाहनं।
क्षमा सत्यार्जवं शौचं सतामाचारदर्शनं। सर्व्वभूतदयावन्तो अहिंसानिरताः सदा।　　१२०८५
परुषञ्च न भाषन्ते सदा सन्तो द्विजप्रियाः। शुभानामशुभानाञ्च कर्म्मणां फलसञ्चये।

विपाकमभिजानन्तस्ते शिष्टाः शिष्टसम्मताः। न्यायोपेता गुणोपेताः सर्व्वलोकहितैषिणः।
सन्तः स्वर्गजितः शुक्लाः सन्निविष्टाश्च सत्पथे। दातारः संविभक्तारो दीनानुग्रहकारिणः।
सर्व्वपूज्याः श्रुतधनास्तथैव च तपस्विनः। सर्व्वभूतदयावन्तस्ते शिष्टाः शिष्टसम्मताः।
दाननिष्ठाः सुखाल्लोकानाप्नुवन्तीह च श्रियं। पीडया च कलत्रस्य भृत्यानाञ्च समाहिताः। ११७९०
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः। लोकयात्राञ्च पश्यन्तो धर्ममात्महितानि च।
एवं सन्तो वर्त्तमानास्त्वेधन्ते शाश्वतीः समाः। अहिंसा सत्यवचनमानृशंस्यमथार्ज्जवं।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः। धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः।
अकामद्वेषसंयुक्तास्ते सन्तो लोकसाक्षिणः। त्रीण्येव तु सतामाहुः सन्तः पदमनुत्तमं।
नचैव द्रुह्येद्याच सत्यञ्चैव सदा वदेत्। सर्व्वत्र च दयावन्तः सन्तः करुणवेदिनः। ११७९५
गच्छन्तीह सुसन्तुष्टा धर्मपन्थानमुत्तमं। शिष्टाचारा महात्मानो येषां धर्म्मः सुनिश्चितः।
अनसूया क्षमा शान्तिः सन्तोषः प्रियवादिता। कामक्रोधपरित्यागः शिष्टाचारनिषेवणं।
कर्म च श्रुतसम्पन्नं सतां मार्गमनुत्तमं। शिष्टाचारं निषेवन्ते नित्यं धर्ममनुव्रताः।
प्रज्ञाप्रासादमारुह्य मुच्यन्ते महतो भयात्। प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम।
अतिपुण्यानि पापानि तानि द्विजवरोत्तम। एतत्ते सर्व्वमाख्यातं यथाप्रज्ञं यथाश्रुतं। ११८००
शिष्टाचारं गुणं ब्रह्मन् पुरस्कृत्य द्विजर्षभ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणव्याधसंवादे षडधिकद्विशततोऽध्यायः॥ २०६ ॥

॥ मार्कण्डेय उवाच॥ स तु विप्रमथोवाच धर्म्मव्याधो युधिष्ठिर। यदहमाचरे कर्म्म घोरमेतदसंशयं।
विधिस्तु बलवान् ब्रह्मन् दुस्तरं हि पुराकृतं। पुराकृतस्य पापस्य कर्म्मदोषो भवत्ययं।
दोषस्यैतस्य वै ब्रह्मन् विघाते यत्नवानहं। विधिना हि हते पूर्व्वं निमित्तं घातको भवेत्।
निमित्तभूता हि वयं कर्म्मणोऽस्य द्विजोत्तम। येषां हतानां मांसानि विक्रीणामीह वै द्विज। ११८०५
तेषामपि भवेद्धर्म्म उपयोगेन भक्षणे। देवताऽतिथिभृत्यानां पितॄणाञ्चापि पूजनं।
ओषध्यो वीरुधश्चैव पशवो मृगपक्षिणः। अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः।
आत्ममांसप्रदानेन शिविरौशीनरो नृपः। स्वर्गञ्च दुष्करं प्राप्तः क्षमावान् द्विजसत्तम।
राज्ञो महानसे पूर्व्वं रन्तिदेवस्य वै द्विज। द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा।
अहन्यहनि वध्येते द्वे सहस्रे गवां तथा। समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः। ११८१०
अतुला कीर्त्तिरभवन्नृपस्य द्विजसत्तम। चातुर्म्मास्ये च पशवो वध्यन्त इति नित्यशः।
अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः। यज्ञेषु पशवो ब्रह्मन् वध्यन्ते सततं द्विजैः।
संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन्। यदि नैवाग्नयो ब्रह्मन् मांसकामाभवन् पुरा।
भक्ष्यं नैवाभवन्मांसं कस्यचिद्द्विजसत्तम। अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे।
देवतानां पितॄणाञ्च भुङ्क्ते दत्त्वाऽपि यः सदा। यथाविधि यथाश्राद्धं न प्रदुष्यति भक्षणात्। ११८१५

अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः । भार्य्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
सत्यानृते विनिश्चित्य अत्रापि विधिरिष्यते । सौदासेन तदा राज्ञा मानुषा भक्षिता द्विज ।
शापाभिभूतेन भृशमत्र किं प्रतिभाति मे । स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ।
पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा । स्वकर्म त्यजतो ब्रह्मन्नधर्म इति दृश्यते ।
स्वकर्मनिरतो यस्तु धर्मः स इति निश्चयः । पूर्वं हि विहितं कर्म देहिनं न विमुञ्चति । १३८२०
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये । द्रष्टव्या तु भवेत् प्रज्ञा क्रूरे कर्मणि वर्त्तता ।
कथं कर्म शुभं कुर्य्यां कथं मुच्ये पराभवात् । कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ।
दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा । द्विजातिपूजने चाहं धर्मे च निरतः सदा ।
अभिमानातिवादाभ्यां निवृत्तोऽस्मि द्विजोत्तम । कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ।
कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान् बहून् । जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते । १३८२५
धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम । सर्व्वाण्येतानि जीवानि तत्र किं प्रतिभाति ते ।
अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च । वृक्षांस्तथौषधींश्चापि छिन्दन्ति पुरुषा द्विज ।
जीवा हि बहवो ब्रह्मन् वृक्षेषु च फलेषु च । उदके बहवश्चापि तत्र किं प्रतिभाति ते ।
सर्व्वं व्याप्तमिदं ब्रह्मन् प्राणिभिः प्राणिजीवनैः । मत्स्यान् ग्रसन्ते मत्स्याश्च तत्र किं प्रतिभाति ते ।
सत्त्वैः सत्त्वानि जीवन्ति बहुधा द्विजसत्तम । प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते । १३८३०
चंक्रम्यमानान् जीवांश्च धरणीसंश्रितान् बहून् । पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ।
उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः । ज्ञानविज्ञानवन्तश्च तत्र किं प्रतिभाति ते ।
जीवैर्ग्रस्तमिदं सर्व्वमाकाशं पृथिवी तथा । अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ।
अहिंसेति यदुक्तं हि पुरुषैर्व्विस्मितैः पुरा । के न हिंसन्ति जीवान् वै लोकेऽस्मिन् द्विजसत्तम ।
बहु सञ्चिन्त्य इति वै नास्ति कश्चिदहिंसकः । अहिंसायान्तु निरता यतयो द्विजसत्तम । १३८३५
कुर्व्वन्त्येव हि हिंसान्ते यत्नादल्पतरा भवेत् । आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्म्माणि कृत्वा लज्जन्ति वै न च । सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ।
सम्यक् प्रवृत्तान् पुरुषान्न सम्यगनुपश्यतः । समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः । बहुलोके विपर्य्यस्तं दृश्यते द्विजसत्तम ।
धर्म्मयुक्तमधर्म्मञ्च तत्र किं प्रतिभाति ते । वक्तुं बहुविधं शक्यं धर्म्माधर्म्मेषु कर्म्मसु । १३८४०
स्वकर्म्मनिरतो यो हि स यशः प्राप्नुयान्महत् ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणव्याधसंवादे सप्ताधिकद्विशततोऽध्यायः ॥ २०७ ॥

॥ मार्कण्डेय उवाच ॥ धर्म्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर । विप्रर्षभमुवाचेदं सर्व्वधर्म्मभृतांवरः ।
॥ व्याध उवाच ॥ श्रुतिप्रमाणो धर्म्मोऽयमिति वृद्धानुशासनं । सूक्ष्मा गतिर्हि धर्म्मस्य बहुशाखा ह्यनन्तिका ।
प्राणान्तिके विवाहे च वक्तव्यमनृतं भवेत् । अनृतेन भवेत्सत्यं सत्येनैवानृतं भवेत् ।

यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा । विपर्य्ययकृतो धर्मः पश्य धर्मस्य सूक्ष्मतां । १३८७५
यत्करोत्यशुभं कर्म शुभं वा यदि सत्तम । अवश्यं तत् समाप्नोति पुरुषो नात्र संशयः ।
विषमाञ्च दशां प्राप्तो देवान् गर्हति वै भृशं । आत्मनः कर्मदोषाणि न विजानात्यपण्डितः ।
मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम । सुखदुःखविपर्य्यासान् सदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषं । योयमिच्छेद्यथा कामं तं तं कामं समाप्नुयात् ।
यदि स्यादपराधीनं पौरुषस्य क्रियाफलं । संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः । १३८८०
दृश्यन्ते निष्फलाः सन्तः प्रहीनाः सर्वकर्मभिः । भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायाञ्च लोकस्य स सुखी जीवते सदा । अचेष्टमपि चासीनं श्रीः कञ्चिदुपतिष्ठति ।
कश्चित् कर्माणि कुर्व्वन् हि न प्राप्यमधिगच्छति । देवानिष्ट्वा तपः कृत्वा कृपणैः पुत्रगृद्धिभिः ।
दशमासधृता गर्भे जायन्ते कुलपांसनाः । अपरे धनधान्यैश्च भोगैश्च पितृसञ्चितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः । कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः । १३८८५
आधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव । ते चापि कुशलैर्वैद्यैर्निपुणैः सम्भृतौषधैः ।
व्याधयो विनिवार्य्यन्ते मृगा व्याधैरिव द्विज । येषामस्ति च भोक्तव्यं ग्रहणीदोषपीडिताः ।
न शक्नुवन्ति ते भोक्तुं पश्य धर्मभृताम्बर । अपरे बाहुबलिनः क्लिश्यन्ति बहवो जनाः ।
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम । इति लोकमनाक्रन्दं मोहशोकपरिप्लुतं ।
स्रोतसाऽसकृदाक्षिप्तं ह्रियमाणं बलीयसा । न म्रियेयुर्न जीर्य्येयुः सर्व्वे स्युः सर्व्वकामिकाः । १३८९०
नाप्रियं प्रतिपश्येयुर्व्वशित्वं यदि वै भवेत् । उपर्य्युपरि लोकस्य सर्व्वो गन्तुं समीहते ।
यतते च यथाशक्ति नच तद्वर्त्तते तथा । बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महत्तु फलवैषम्यं दृश्यते कर्म्मसन्धिषु । न केचिदीशते ब्रह्मन् स्वयं ग्राह्यस्य सत्तम ।
कर्मणा प्राकृतानां हि इह सिद्धिः प्रदृश्यते । यथा श्रुतिरियं ब्रह्मन् जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्व्वेषां प्राणिनामिह । वध्यमाने शरीरे तु देहनाशो भवत्युत । १३८९५

जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ ब्राह्मण उवाच ॥ कथं कर्मविदां श्रेष्ठ जीवो भवति शाश्वतः । एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदताम्बर ।

॥ व्याध उवाच ॥ न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्रियतीति मूढाः । जीवस्तु देहान्तरितः प्रयाति दशार्द्धतैवास्य शरीरभेदः ।

अन्यो हि नाश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित् । यत्तेन किञ्चिद्धि कृतं हि कर्म तदश्नुते नास्ति कृतस्य नाशः ।
सुपुण्यशीला हि भवन्ति पुण्या नराधमाः पापकृतो भवन्ति । नरोऽनुजातस्त्विह कर्मभिः स्वैस्ततः समुत्पद्यति भावितस्तैः ।
॥ ब्राह्मण उवाच ॥ कथं संभवते योनौ कथं वा पुण्यपापयोः । जातीः पुण्यास्त्वपुण्याश्च कथं गच्छति सत्तम । १३९००
॥ व्याध उवाच ॥ गर्भाधानसमायुक्तं कर्म्मेदं सम्प्रदृश्यते । समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ।
यथासम्भृतसम्भारः पुनरेव प्रजायते । शुभकृत् शुभयोनीषु पापकृत् पापयोनिषु । शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।

मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषी । जातिमृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः । तिर्य्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्त्तन्ते कर्म्मबन्धनिबन्धनाः । जन्तुस्तु कर्म्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः । ११८७५
तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते । ततः कर्म्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वा पथ्यमिवातुरः । अजस्रमेव दुःखार्त्तोऽदुःखितः सुखसंज्ञकः ।
ततोऽनिवृत्तबन्धत्वात् कर्म्मणामुदयादपि । परिक्रामति संसारे चक्रवद्बहुवेदनः ।
स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्म्मभिः । तपोयोगसमारम्भं कुरुते द्विजसत्तम ।
कर्म्मभिर्बहुभिश्चापि लोकानश्नाति मानवः । स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्म्मभिः । ११८८०
प्राप्नोति सुकृताल्लोकान् यत्र गत्वा न शोचति । पापं कुर्व्वन् पापवृत्तः पापस्यान्तं न गच्छति ।
तस्मात् पुण्यं यतेत्कर्त्तुं वर्ज्जयीत च पापकं । अनसूयुः कृतज्ञश्च कल्याणानि च सेवते ।
सुखानि धर्म्ममर्थञ्च स्वर्गञ्च लभते नरः । संस्कृतस्य च दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च । सतां धर्म्मेण वर्त्तेत क्रियां शिष्टवदाचरेत् ।
असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज । सन्ति ह्यागमविज्ञानाः शिष्टाः शास्त्रे विचक्षणाः । ११८८५
स्वधर्म्मेण क्रिया लोके कर्म्मणः सोऽप्यसङ्करः । प्राज्ञो धर्म्मेण रमते धर्म्मञ्चैवोपजीवति ।
तस्माद्धर्म्मादवाप्तेन धनेन द्विजसत्तम । तस्यैव सिञ्चते मूलं गुणान् पश्यति यत्र वै ।
धर्म्मात्मा भवति ह्येवं चित्तञ्चास्य प्रसीदति । स मित्रजनसन्तुष्ट इह प्रेत्य च नन्दति ।
शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम । प्रभुत्वं लभते चापि धर्म्मस्यैतत् फलं विदुः ।
धर्म्मस्य च फलं लब्ध्वा न तुष्यति महाद्विज । अतृप्यमाणो निर्व्वेदमापेदे ज्ञानचक्षुषा । ११८९०
प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते । विरज्यते यथाकामं न च धर्म्मं विमुञ्चति ।
सर्व्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकं । ततो मोक्षे प्रयतते नानुपायादुपायतः ।
एवं निर्व्वेदमादत्ते पापं कर्म्म जहाति च । धार्म्मिकश्चापि भवति मोक्षञ्च लभते परं ।
तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः । तेन सर्व्वानवाप्नोति कामान् यान्मनसेच्छति ।
इन्द्रियाणां निरोधेन सत्येन च दमेन च । ब्रह्मणः पदमाप्नोति यत् परं द्विजसत्तम । ११८९५
॥ ब्राह्मण उवाच ॥ इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत । निग्रहश्च कथं कार्य्यो निग्रहस्य च किं फलं ।
कथञ्च फलमाप्नोति तेषां धर्म्मभृताम्वर । एतदिच्छामि तत्त्वेन धर्म्मं ज्ञातुं निबोध मे ।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याधसंवादे अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
॥ मार्कण्डेय उवाच ॥ एवमुक्तस्तु विप्रेण धर्म्मव्याधो युधिष्ठिर । प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ।
॥ व्याध उवाच ॥ विज्ञानार्थं मनुष्याणां मनः पूर्व्वं प्रवर्त्तते । तत् प्राप्य कामं भजते रोषञ्च द्विजसत्तम ।
ततस्तदर्थं यतते कर्म्म चारभते महत् । इष्टानां रूपगन्धानामभ्यासञ्च निषेवते । ११९००
ततो रागः प्रभवति द्वेषश्चैतदनन्तरं । ततो लोभः प्रभवति मोहश्च तदनन्तरं ।

ततो लोभाभिभूतस्य रागद्वेषहतस्य च। न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च।
व्याजेन चरते धर्ममर्थं व्याजेन रोचते। व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम।
तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति। सुहृद्भिर्वार्य्यमाणश्च पण्डितैश्च द्विजोत्तम।
उत्तरं श्रुतिसम्बद्धं ब्रवीत्यश्रुतियोजितं। अधर्मस्त्रिविधस्तस्य वर्त्तते रागदोषजः। १३९०५
पापञ्चिन्तयते चैव ब्रवीति च करोति च। तस्याधर्मे प्रविष्टस्य गुणा नश्यन्ति साधवः।
एकशीलैश्च मित्रत्वं भजन्ते पापकर्म्मिणः। स तेन दुःखमाप्नोति परत्र च विपद्यते।
पापात्मा भवति ह्येवं धर्म्मलाभन्तु मे शृणु। यस्त्वेतान् प्रज्ञया दोषान् पूर्व्वमेवानुपश्यति।
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते। तस्य साधुसमारम्भाद्बुद्धिर्धर्म्मेषु राजते।
॥ ब्राह्मण उवाच ॥ ब्रवीषि सूनृतं धर्म्म्यं यस्य वक्ता न विद्यते। दिव्यप्रभावः सुमहानृषिरेव मतोऽसि मे। १३९१०
॥ व्याध उवाच ॥ ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा। तेषां सर्व्वात्मना कार्य्यं प्रियं लोके मनीषिणा।
यत्तेषाञ्च प्रियं तत्ते वक्ष्यामि द्विजसत्तम। नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे।
इदं विश्वं जगत्सर्व्वमजय्यञ्चापि सर्व्वशः। महाभूतात्मकं ब्रह्म नातः परतरं भवेत्।
महाभूतानि खं वायुरग्निरापस्तथा च भूः। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः।
तेषामपि गुणाः सर्व्वे गुणवृत्तिः परस्परं। पूर्व्वपूर्व्वगुणाः सर्व्वे क्रमशो गुणिषु त्रिषु। १३९१५
षष्ठस्तु चेतना नाम मन इत्यभिधीयते। सप्तमी तु भवेद्बुद्धिरहङ्कारस्ततः परं।
इन्द्रियाणि च पञ्चात्मा रजः सत्वं तमस्तथा। इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः।
सर्व्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतैः। चतुर्व्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः।
एतत्ते सर्व्वमाख्यातं किं भूयः श्रोतुमिच्छसि।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याधसंवादे नवाधिकद्विशततोऽध्यायः॥ २०९॥
॥ मार्कण्डेय उवाच ॥ एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत। कथामकथयद्भूयो मनसः प्रीतिवर्द्धनीं। १३९२०
॥ ब्राह्मण उवाच ॥ महाभूतानि यान्याहुः पञ्च धर्मभृताम्बर। एकैकस्य गुणान् सम्यक् पञ्चानामपि मे वद।
॥ व्याध उवाच ॥ भूमिरापस्तथा ज्योतिर्व्वायुराकाशमेव च। गुणोत्तराणि सर्व्वाणि तेषां वक्ष्यामि ते गुणान्।
॥ भूमिः पञ्चगुणा ब्रह्मन्नुदकञ्च चतुर्गुणं। गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। एते गुणाः पञ्च भूमेः सर्व्वेभ्यो गुणवत्तराः।
शब्दः स्पर्शश्च रूपञ्च रसश्चापि द्विजोत्तम। अपामेते गुणा ब्रह्मन् कीर्त्तितास्तव सुव्रत। १३९२५
शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रयः। शब्दः स्पर्शश्च वायौ तु शब्द आकाश एव तु।
एते पञ्चदश ब्रह्मन् गुणा भूतेषु पञ्चसु। वर्त्तन्ते सर्व्वभूतेषु येषु लोकाः प्रतिष्ठिताः।
अन्योऽन्यं नातिवर्त्तन्ते सम्यक् च भवति द्विज। यदा तु विषमीभावमाचरन्ति चराचराः।
तदा देही देहमन्यं व्यतिरोहति कालतः। आनुपूर्व्व्या विनश्यन्ति जायन्ते चानुपूर्व्वशः।
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः। यैरावृतमिदं सर्व्वं जगत्स्थावरजङ्गमं। १३९३०

इन्द्रियैः सृज्यते यद्यत्तद्व्यक्तमिति स्मृतं। तदव्यक्तमिति ज्ञेयं लिङ्गग्राह्यमतीन्द्रियं।
यथास्वं ग्राहकाण्येषां शब्दादीनामिमानि तु। इन्द्रियाणि यदा देही धारयन्निव तप्यते।
लोके विततमात्मानं लोकञ्चात्मनि पश्यति। परापरज्ञः सक्तः सन सतु भूतानि पश्यति।
पश्यतः सर्व्वभूतानि सर्व्वावस्थासु सर्व्वदा। ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते।
ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजं। लोकबुद्धिप्रकाशेन ज्ञानमार्गेण गम्यते। ११९१५
अनादिनिधनं जन्तुमात्मयोनिं सदाऽव्ययं। अनौपम्यममूर्त्तञ्च भगवानाह बुद्धिमान्।
तपोमूलमिदं सर्व्वं यन्मां विप्रानुपृच्छसि। इन्द्रियाण्येव संयम्य तपो भवति नान्यथा।
इन्द्रियाण्येव तत्सर्व्वं यत्स्वर्गनरकावुभौ। निगृहीतविसृष्टानि स्वर्गाय नरकाय च।
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणं। एतन्मूलं हि तपसः कृत्स्नस्य नरकस्य च।
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयं। संनियम्य तु तान्येव ततः सिद्धिं समाप्नुयात्। ११९२०
षण्णामात्मनि नित्यानामैश्वर्य्यं योऽधिगच्छति। न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः।
रथः शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान्। तैरप्रमत्तः कुशलैः सदश्वैर्दान्तैः सुखं याति रथीव धीरः।
षण्णामात्मनि युक्तानामिन्द्रियाणां प्रमाथिनां। यो धीरो धारयेद्रश्मीन् स स्यात् परमसारथिः।
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु। धृतिं कुर्व्वीत सारथ्ये धृत्या तानि जयेद्ध्रुवं।
इन्द्रियाणां विचरतां यन्मनोऽनुविधीयते। तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि। ११९२५
येषु विप्रतिपद्यन्ते षट्सु मोहात्फलागमे। तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलं।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याधसंवादे दशाधिकद्विशतोऽध्यायः ॥ २१० ॥

॥ मार्कण्डेय उवाच ॥ एवन्तु सूक्ष्मे कथिते धर्म्मव्याधेन भारत। ब्राह्मणः स पुनः सूक्ष्मं पप्रच्छ सुसमाहितः।
॥ ब्राह्मण उवाच ॥ सत्त्वस्य रजसश्चैव तमसश्च यथातथं। गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः।
॥ व्याध उवाच ॥ हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि। एषां गुणान् पृथक्त्वेन निबोध गदतो मम।
मोहात्मकं तमस्तेषां रज एषां प्रवर्त्तकं। प्रकाशबहुलत्वाच्च सत्त्वं ज्याय इहोच्यते। ११९३०
अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः। दुर्हृषीकस्तमोध्वस्तः सक्रोधस्तामसोऽलसः।
प्रवृत्तवाक्यो मन्त्री च यो नराग्र्योऽनसूयकः। विधित्समानो विप्रर्षे स्तब्धो मानी स राजसः।
प्रकाशबहुलो धीरो निर्व्विधित्सोऽनसूयकः। अक्रोधनो नरो धीमान् दान्तश्चैव स सात्त्विकः।
सात्त्विकस्त्वथ संबुद्धो लोकवृत्तेन क्लिश्यते। यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते।
विरागस्य च रूपन्तु पूर्व्वमेव प्रवर्त्तते। मृदुर्भवत्यहङ्कारः प्रसीदत्यार्जवञ्च यत्। ११९३५
ततोऽस्य सर्व्वद्वन्द्वानि प्रशाम्यन्ति परस्परं। न चास्य संशयो नाम कचिद्भवति कश्चन।
शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः। वैश्यत्वं लभते ब्रह्मन् चत्रियत्वं तथैवच।
आर्ज्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते। गुणास्ते कीर्त्तिताः सर्व्वे किं भूयः श्रोतुमिच्छसि।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याधसंवादे एकादशाधिकद्विशतोऽध्यायः ॥ २११ ॥

॥ ब्राह्मण उवाच ॥ पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं प्रभो। अवकाशविशेषेण कथं वर्त्तयतेऽनिलः।

॥ मार्कण्डेय उवाच ॥ प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर। व्याधस्तु कथयामास ब्राह्मणाय महात्मने। ११९६०

॥ व्याध उवाच ॥ मूर्द्धानमाश्रितो वह्निः शरीरं परिपालयन्। प्राणो मूर्द्धनि चाग्नौ च वर्त्तमानो विचेष्टते।

भूतं भव्यं भविष्यच्च सर्व्वं प्राणे प्रतिष्ठितं। श्रेष्ठं तदेव भूतानां ब्रह्मयोनिमुपास्महे।

स जन्तुः सर्व्वभूतात्मा पुरुषः स सनातनः। महान् बुद्धिरहङ्कारो भूतानां विषयश्च सः।

एवन्त्विह स सर्व्वत्र प्राणेन परियाप्यते। पृष्ठतश्च समानेन स्वां स्वां गतिमुपाश्रितः।

वस्तिमूले गुदे चैव पावकं समुपाश्रितः। वहन्मूत्रं पुरीषं चाप्यपानः परिवर्त्तते। ११९६५

प्रयत्ने कर्म्मणि बले य एकस्त्रिषु वर्त्तते। उदान इति तं प्राहुरध्यात्मविदुषो जनाः।

सन्धौ सन्धौ सन्निविष्टः सर्व्वेष्वपि तथाऽनिलः। शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते।

धातुष्वग्निस्तु विततः स तु वायुसमीरितः। रसान् धातूंश्च दोषांश्च वर्त्तयन् परिधावति।

प्राणानां सन्निपातात्तु सन्निपातः प्रजायते। ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनां।

समानोदानयोर्मध्ये प्राणापानौ समाहितौ। समन्वितस्त्वधिष्ठानं सम्यक् पचति पावकः। ११९७०

तस्यापि पायुपर्य्यन्तस्तथा स्याद्गुदसंज्ञितः। स्रोतांसि तस्माज्जायन्ते सर्व्वप्राणेषु देहिनां।

अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते। स ऊर्द्ध्वमागम्य पुनः समुत्क्षिपति पावकं।

पक्वाशयस्त्वधो नाभ्यामूर्द्ध्वमामाशयः स्थितः। नाभिमध्ये शरीरस्य प्राणाः सर्व्वे प्रतिष्ठिताः।

प्रवृत्ता हृदयात् सर्व्वे तिर्य्यगूर्द्ध्वमधस्तथा। वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः।

योगिनामेष मार्गस्तु येन गच्छन्ति तत्परं। जितक्लमाः समा धीरा मूर्द्धन्यात्मानमादधुः। ११९७५

एवं सर्व्वेषु विततौ प्राणापानौ हि देहिषु। एकादशविकारात्मा कलासम्भारसम्भृतः।

मूर्त्तिमन्तं हि तं विद्धि नित्यं कर्म्मजितात्मकं। तस्मिन् यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः।

आत्मानं हि विजानीहि नित्यं योगजितात्मकं। देवो यः संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे।

क्षेत्रज्ञं तं विजानीहि नित्यं योगजितात्मकं। जीवात्मकानि जानीहि रजः सत्त्वं तमस्तथा।

जीवमात्मगुणं विद्धि तथात्मानं परात्मकं। ११९८०

सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्व्वं। ततः परं क्षेत्रविदो वदन्ति प्रावर्त्तयद्यो भुवनानि सप्त।

एवं भूतेषु सर्व्वेषु भूतात्मा संप्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः।

चित्तस्य हि प्रसादेन हन्ति कर्म्म शुभाशुभं। प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते।

लक्षणन्तु प्रसादस्य यथा तृप्तः सुखं स्वपेत्। निवाते वा यथा दीपो दीप्येत् कुशलदीपितः।

पूर्व्वरात्रे परे चैव युञ्जानः सततं मनः। लघ्वाहारो विशुद्धात्मा पश्यन्नात्मानमात्मनि। ११९८५

प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति। दृष्ट्वात्मानं निरात्मानं स तदा विप्र मुच्यते।

सर्व्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः। एतत् पवित्रं लोकानां तपो वै संक्रमो मतः।

नित्यं क्रोधात्तपो रक्षेत् धर्म्मं रक्षेच्च मत्सरात्। विद्यां मानापमानाभ्यामात्मानन्तु प्रमादतः।

आनृशंस्यं परो धर्म्मः क्षमा च परमं बलं । आत्मज्ञानं परं ज्ञानं सत्यं व्रतपरं व्रतं ।
सत्यस्य वचनं श्रेयः सत्ये ज्ञानं हितं भवेत् । यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतं । १३९९०
यस्य सर्व्वे समारम्भा निराशीर्ब्बन्धनाः सदा । त्यागे यस्य हुतं सर्व्वं स त्यागी च स बुद्धिमान् ।
यतो न गुरुरप्येनं आवयेदुपपादयेत् । तं विद्याद्ब्रह्मणो योगं वियोगं योगसंज्ञितं ।
न हिंस्यात् सर्व्वभूतानि मैत्रायणगतिश्चरेत् । नेदं जीवितमासाद्य वैरं कुर्व्वीत केनचित् ।
आकिञ्चन्यं सुसन्तोषो निराशित्वमचापलं । एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमं ।
परिग्रहं परित्यज्य भवेद्बुद्ध्या यतव्रतः । अशोकं स्थानमासाद्य निश्चलं प्रेत्य चेह च । १३९९५
तपोनित्येन दान्तेन मुनिना संयतात्मना । अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ।
गुणागुणमनासङ्गमेककार्य्यमनन्तरं । एतत्तु ब्रह्मणो वृत्तमाहुरेकपदं सुखं ।
परित्यजति यो दुःखं सुखञ्चाप्युभयं नरः । ब्रह्म प्राप्नोति सोऽत्यन्तमसङ्गेन च गच्छति ।
यथाश्रुतमिदं सर्व्वं समासेन द्विजोत्तम । एतत्ते सर्व्वमाख्यातं किं भूयः श्रोतुमिच्छसि ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि ब्राह्मणव्याधसंवादे द्वादशाधिकद्विशतोऽध्यायः ॥ २१२ ॥

॥ मार्कण्डेय उवाच ॥ एवं सङ्कथिते कृत्स्ने मोक्षधर्म्मे युधिष्ठिर । दृढं प्रीतमना विप्रो धर्म्मव्याधमुवाच ह । १४०००
न्याययुक्तमिदं सर्व्वं भवता परिकीर्त्तितं । न तेऽस्त्यविदितं किञ्चिद्धर्म्मेष्विह हि दृश्यते ।
॥ व्याध उवाच ॥ प्रत्यक्षं मम यो धर्म्मस्तञ्च पश्य द्विजोत्तम । येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ।
उत्तिष्ठ भगवन् क्षिप्रं प्रविश्याभ्यन्तरं गृहं । द्रष्टुमर्हसि धर्म्मज्ञ मातरं पितरञ्च मे ।
॥ मार्कण्डेय उवाच ॥ इत्युक्तः स प्रविश्याथ ददर्श परमार्च्चितं । सौधं हृद्यञ्चतुःशालमतीव च मनोरमं ।
देवतागृहसङ्काशं दैवतैश्च सुपूजितं । शयनासनसम्बाधं गन्धैश्च परमैर्युतं । १४००५
तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ । कृताहारौ सुसन्तुष्टावुपविष्टौ वरासने ।
धर्म्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसाऽपतत् ॥ वृद्धावूचतुः ॥ उत्तिष्ठोत्तिष्ठ धर्म्मज्ञ धर्म्मस्त्वामभिरक्षतु ।
प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि । गतिमिष्टां तथा ज्ञानं मेधाञ्च परमाङ्गतः ।
सत्पुत्त्रेण त्वया पुत्त्र नित्यं काले सुपूजितौ । न तेऽन्यद्दैवतं किञ्चिद्दैवतेष्वपि वर्त्तते ।
प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः । पितुः पितामहा ये च तथैव प्रपितामहाः । १४०१०
प्रीतास्ते सततं पुत्त्र दमेनावाञ्च पूजया । मनसा कर्म्मणा वाचा शुश्रूषा नैव हीयते ।
नचान्या हि तथाबुद्धिर्दृश्यते साम्प्रतं तव । जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।
तथा त्वया कृतं सर्व्वं तद्विशिष्टञ्च पुत्त्रक । ततस्तं ब्राह्मणं ताभ्यां धर्म्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं विप्रमर्च्चयामासतुस्तदा । प्रतिपूज्य च तां पूजां द्विजः पप्रच्छ तावुभौ ।
सपुत्त्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे । अनामयञ्च वां कच्चित् सदैवेह शरीरयोः । १४०१५
॥ वृद्धावूचतुः ॥ कुशलं नौ गृहे विप्र भृत्यवर्गे च सर्व्वशः । कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निति ।
॥ मार्कण्डेय उवाच ॥ वाढमित्येव तौ विप्रः प्रत्युवाच मुदाऽन्वितः । धर्म्मव्याधो निरीक्ष्याथ ततस्तं वाक्यमब्रवीत् ।

॥ व्याध उवाच ॥ पिता माता च भगवन्नेतौ मे दैवतं परं। यद्दैवतेभ्यः कर्त्तव्यं तदेताभ्यां करोम्यहं।
त्रयस्त्रिंशद्यथा देवाः सर्व्वे शक्रपुरोगमाः। संपूज्याः सर्व्वलोकस्य तथा वृद्धाविमौ मम।
उपहारानाहरन्तो देवतानां यथा द्विजाः। कुर्व्वन्ति तद्वदेताभ्यां करोम्यहमतन्द्रितः। १४०२०
एतौ मे परमं ब्रह्मन् पिता माता च दैवतं। एतौ पुष्पैः फलै रत्नैस्तोषयामि सदा द्विज।
एतावेवाग्नयो मह्यं यान् वदन्ति मनीषिणः। यज्ञा वेदाश्च चत्वारः सर्व्वमेतौ मम द्विज।
एतदर्थं मम प्राणा भार्य्या पुत्त्राः सुहृज्जनाः। सपुत्त्रदारः शुश्रूषां नित्यमेव करोम्यहं।
स्वयञ्च स्नापयाम्येतौ तथा पादौ प्रधावये। आहारं सम्प्रयच्छामि स्वयञ्च द्विजसत्तम।
अनुकूलं तथा वच्मि विप्रियं परिवर्ज्जये। अधर्म्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहं। १४०२५
धर्म्ममेव गुरुं ज्ञात्वा करोमि द्विजसत्तम। अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहं।
पञ्चैव गुरवो ब्रह्मन् पुरुषस्य बुभूषतः। पिता माताऽग्निरात्मा च गुरुश्च द्विजसत्तम।
एतेषु यस्तु वर्त्तेत सम्यगेव द्विजोत्तम। भवेयुरग्नयस्तस्य परिचीर्णास्तु नित्यशः।
गार्हस्थ्ये वर्त्तमानस्य एष धर्म्मः सनातनः।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याधसंवादे त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

॥ मार्कण्डेय उवाच ॥ गुरू निवेद्य विप्राय तौ मातापितरावुभौ। पुनरेव स धर्म्मात्मा व्याधो ब्राह्मणमब्रवीत्। १४०३०
प्रवृत्तचक्षुर्जातोऽस्मि संपश्य तपसो बलं। यदर्थमुक्तोऽसि तया गच्छस्व मिथिलामिति।
पतिशुश्रूषपरया दान्तया सत्यशीलया। मिथिलायां वसेद्व्याधः स ते धर्म्मान् प्रवक्ष्यति।
॥ ब्राह्मण उवाच ॥ पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत। संस्मृत्य वाक्यं धर्म्मज्ञ गुणवानसि मे मतः।
॥ व्याध उवाच ॥ यत्तदा त्वं द्विजश्रेष्ठ तयोक्तो मां प्रति प्रभो। दृष्टमेव तया सम्यगेकपत्न्या न संशयः।
त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया। वाक्यञ्च शृणु मे तात यत्ते वक्ष्ये हितं द्विज। १४०३५
त्वया विनिकृता माता पिता च द्विजसत्तम। अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित।
वेदोच्चारणकार्य्यार्थमयुक्तं तत्त्वया कृतं। तव शोकेन वृद्धौ तावन्धीभूतौ मनस्विनौ।
तौ प्रसादयितुं गच्छ मा त्वां धर्म्मोऽत्यगादयं। तपस्वी त्वं महात्मा च धर्म्मे च निरतः सदा।
सर्व्वमेतदपार्थन्ते क्षिप्रं तौ संप्रसादय। श्रद्धत्स्व मम ब्रह्मन्नान्यथा कर्त्तुमर्हसि।
गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहं ॥ ब्राह्मण उवाच ॥ यदेतदुक्तं भवता सर्व्वं सत्यमसंशयं। १४०४०
प्रीतोऽस्मि तव भद्रन्ते धर्म्माचारगुणान्वित ॥ व्याध उवाच ॥ दैवतप्रतिमो हि त्वं यस्त्वं धर्म्ममनुव्रतः।
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः। मातापित्रोः सकाशं हि गत्वा त्वं द्विजसत्तम।
अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनं। अतः परमहं धर्म्मं नान्यं पश्यामि कञ्चन।
॥ ब्राह्मण उवाच ॥ इहाहमागतो दिष्ट्या दिष्ट्या मे सङ्गतं त्वया। ईदृशा दुर्ल्लभा लोके नरा धर्म्मप्रदर्शकाः।
एको नरः सहस्रेषु धर्म्मविद्विद्यते न वा। प्रीतोऽस्मि तव सत्येन भद्रन्ते पुरुषर्षभ। १४०४५
पतमानोऽद्य नरके भवताऽस्मि समुद्धृतः। भवितव्यमथैवञ्च यद्दृष्टोऽसि मयाऽनघ।

राजा ययातिर्दौहित्रैः पतितस्तारितो यथा । सद्भिः पुरुषशार्दूल तथा त्वं भवता द्विजः ।
मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव । नाकृतात्मा वेदयति धर्म्माधर्म्मविनिश्चयं ।
दुर्ज्ञेयः शाश्वतो धर्म्मः शूद्रयोनौ हि वर्त्तते । न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणं ।
येन कर्म्मविशेषेण प्राप्तेयं शूद्रता त्वया । एतदिच्छामि विज्ञातुं तत्त्वेन हि महामते । १४०५०
कामया ब्रूहि मे सर्व्वं सत्येन प्रयतात्मना ॥ व्याध उवाच ॥ अनतिक्रमणीया वै ब्राह्मणा मे द्विजोत्तम ।
शृणु सर्व्वमिदं वृत्तं पूर्व्वदेहे ममानघ । अहं हि ब्राह्मणः पूर्व्वमासं द्विजवरात्मजः ।
वेदाध्यायी सुकुशलो वेदाङ्गानाञ्च पारगः । आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमां ।
कश्चिद्राजा मम सखा धनुर्व्वेदपरायणः । संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ।
एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः । सहितो योधमुख्यैश्च मन्त्रिभिश्च स संवृतः । १४०५५
ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति । अथ क्षिप्तः शरो घोरो मयाऽपि द्विजसत्तम ।
ताडितश्च ऋषिस्तेन शरेणानतपर्व्वणा । भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन् ।
नापराध्याम्यहं किञ्चित् केन पापमिदं कृतं । मन्वानस्तं मृगञ्चाहं संप्राप्तः सहसा विभो ।
अपश्यं तमृषिं विद्धं शरेणानतपर्व्वणा । अकार्य्यकरणाच्चापि भृशं मे व्यथितं मनः ।
तमुग्रतपसं विप्रं निष्टनन्तं महीतले । अजानता कृतमिदं मयेत्यहमथाब्रुवं । १४०६०
क्षन्तुमर्हसि मे सर्व्वमिति चोक्तो मया मुनिः । ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः ।
व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि द्विजव्याधसंवादे चतुर्दशाधिकद्विशततोऽध्यायः ॥ २१४ ॥

॥ व्याध उवाच ॥ एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम । अभिप्रसादयमृषिं गिरा त्राहीति मां तदा ।
अजानता मया कार्य्यमिदमद्य कृतं मुने । क्षन्तुमर्हसि तत्सर्व्वं प्रसीद भगवन्निति ।
॥ ऋषिरुवाच ॥ नान्यथा भविता शाप एवमेतदसंशयं । आनृशंस्यात्त्वहं किञ्चित् कर्त्ताऽनुग्रहमद्य ते । १४०६५
शूद्रयोन्यां वर्त्तमानो धर्म्मज्ञो हि भविष्यसि । मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ।
तया शुश्रूषया सिद्धिं महत्त्वं समवाप्स्यसि । जातिस्मरश्च भविता स्वर्गञ्चैव गमिष्यसि ।
शापक्षये तु निर्वृत्ते भविताऽसि पुनर्द्विजः । एवं शप्तः पुरा तेन ऋषिणाऽस्म्युग्रतेजसा ।
प्रसादश्च कृतस्तेन ममैव द्विपदाम्वर । शरञ्चोद्धृतवानस्मि तस्य वै द्विजसत्तम ।
आश्रमञ्च मया नीतो नच प्राणैर्व्ययुज्यत । एतत्ते सर्व्वमाख्यातं यथा मम पुराऽभवत् । १४०७०
अभितश्चापि गन्तव्यं मया स्वर्गं द्विजोत्तम ॥ ब्राह्मण उवाच ॥ एवमेतानि पुरुषा दुःखानि च सुखानि च ।
आप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्त्तुमर्हसि । दुष्करं हि कृतं कर्म्म जानता जातिमात्मनः ।
लोकवृत्तान्ततत्त्वज्ञ नित्यं धर्म्मपरायण । कर्म्मदोषश्च वै विद्वन्नात्मजातिकृतेन वै ।
कञ्चित्कालमुष्यतां वै ततोऽसि भविता द्विजः । साम्प्रतञ्च मतो मेऽसि ब्राह्मणो नात्र संशयः ।
ब्राह्मणः पतनीयेषु वर्त्तमानो विकर्म्मसु । दाम्भिको दुष्कृतः प्राज्ञः शूद्रेण सदृशो भवेत् । १४०७५

यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः । तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ।
कर्मदोषेण विषमां गतिमाप्नोति दारुणां । क्षीणदोषमहं मन्ये चाभितस्त्वां नरोत्तम ।
कर्त्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः । लोकवृत्तान्तवृत्तज्ञा नित्यं धर्मपरायणाः ।
॥ व्याध उवाच ॥ प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतद्धि ज्ञानसामर्थ्यं न बालैः समतामियात् ।
अनिष्टसंप्रयोगाच्च विप्रयोगात् प्रियस्य च । मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः । १४०८०
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च । सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ।
अनिष्टेनान्वितं पश्यंस्तथा क्षिप्रं विरज्यते । ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमात् ।
शोचतो न भवेत्किञ्चित् केवलं परितप्यते । परित्यजन्ति ये दुःखं सुखं वाऽप्युभयं नराः ।
त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः । असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः ।
असन्तोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखं । न शोचन्ति गताध्वानः पश्यन्तः परमां गतिं । १४०८५
न विषादे मनः कार्य्यं विषादो विषमुत्तमं । मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ।
यं विषादोऽभिभवति विक्रमे समुपस्थिते । तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते ।
अवश्यं क्रियमाणस्य कर्म्मणो दृश्यते फलं । न हि निर्वेदमागम्य किञ्चित् प्राप्नोति शोभनं ।
अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे । अशोचन्नारभेतैव मुक्तश्चाव्यसनी भवेत् ।
भूतेष्वभावं सञ्चिन्त्य ये तु बुद्धेः परङ्गताः । न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिं । १४०९०
न शोचामि च वै विद्वन् कालाकाङ्क्षी स्थितो ह्यहं । एतैर्निदर्शनैर्ब्रह्मन् नावसीदामि सत्तम ।
॥ ब्राह्मण उवाच ॥ कृतप्रज्ञोऽसि मेधावी बुद्धिश्च विपुला तव । नाहं भवन्तं शोचामि ज्ञानतृप्तोऽसि धर्म्मवित् ।
आपृच्छे त्वां स्वस्ति तेऽस्तु धर्म्मस्त्वां परिरक्षतु । अप्रमादस्तु कर्त्तव्यो धर्म्मे धर्म्मभृतांवर ।
॥ मार्कण्डेय उवाच ॥ बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह । प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः ।
स तु गत्वा द्विजः सर्व्वाः शुश्रूषाः कृतवांस्तदा । मातापितृभ्यां वृद्धाभ्यां यथान्यायं सुसंशितः । १४०९५
एतत्ते सर्व्वमाख्यातं निखिलेन युधिष्ठिर । पृष्टवानसि यत्तात धर्म्मं धर्म्मभृतांवर ।
पतिव्रतायां माहात्म्यं ब्राह्मणस्य च सत्तम । मातापित्रोश्च शुश्रूषा धर्म्मव्याधेन कीर्त्तिता ।
॥ युधिष्ठिर उवाच ॥ अत्यद्भुतमिदं ब्रह्मन् धर्म्माख्यानमनुत्तमं । सर्व्वधर्म्मविदां श्रेष्ठ कथितं मुनिसत्तम
सुखश्रव्यतया विद्वन् मुहूर्त्त इव मे गतः । न हि तृप्तोऽस्मि भगवन् शृण्वानो धर्म्ममुत्तमं ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि पतिव्रतोपाख्याने पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

॥ वैशम्पायन उवाच ॥ श्रुत्वेमां धर्म्मसंयुक्तां धर्म्मराजः कथां शुभां । पुनः पप्रच्छ तमृषिं मार्कण्डेयमिदं तदा । १४१००
॥ युधिष्ठिर उवाच ॥ कथमग्निर्वनं यातः कथञ्चाप्यङ्गिराः पुरा । नष्टेऽग्नौ हव्यमवहदग्निर्भूत्वा महाद्युतिः ।
अग्निर्यदा त्वेक एव बहुत्वञ्चास्य कर्म्मसु । दृश्यते भगवन् सर्व्वमेतदिच्छामि वेदितुं ।
कुमारश्च यथोत्पन्नो यथा चाग्नेः सुतोऽभवत् । यथा रुद्राच्च सम्भूतो गङ्गायां कृत्तिकासु च ।
एतदिच्छाम्यहं त्वत्तः श्रोतुं भार्गवसत्तम । कौतूहलसमाविष्टो याथातथ्यं महामुने ।

॥ मार्कण्डेय उवाच ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनं। यथा क्रुद्धो हुतवहस्तपस्तप्तुं वनङ्गतः। १४२०५
यथा च भगवानग्निः स्वयमेवाङ्गिराऽभवत्। सन्तापयंश्च प्रभया नाशयंस्तिमिराणि च।
पुराऽङ्गिरा महाबाहो चचार तप उत्तमं। आश्रमस्थो महाभागो हव्यवाहं विशेषयत्।
तथा स भूत्वा तु तदा जगत्सर्व्वं व्यकाशयत्। तपश्चरंस्तु हुतभुक् सन्तप्तस्तस्य तेजसा।
भृशं ग्लानश्च तेजस्वी न च किञ्चित् प्रजज्ञिवान्। अथ सञ्चिन्तयामास भगवान् हव्यवाहनः।
अन्योऽग्निरिह लोकानां ब्रह्मणा सम्प्रकल्पितः। अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः। १४२१०
कथमग्निः पुनरहं भवेयमिति चिन्त्य सः। अपश्यदग्निवल्लोकांस्तापयन्तं महामुनिं।
सोऽपासर्पच्छनैर्भीतस्तमुवाच तदाऽङ्गिराः। शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोकभावनः।
विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु। त्वमग्निः प्रथमं सृष्टो ब्रह्मणा तिमिरापहः।
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमोनुद ॥ अग्निरुवाच ॥ नष्टकीर्त्तिरहं लोके भवान् जातो हुताशनः।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः। निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव। १४२१५
भविष्यामि द्वितीयोऽहं प्राजापत्यक एव च ॥ अङ्गिरा उवाच ॥ कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः।
माञ्च देव कुरुष्वाग्ने प्रथमं पुत्त्रमञ्जसा ॥ मार्कण्डेय उवाच ॥ तच्छ्रुत्वाऽङ्गिरसो वाक्यं जातवेदास्तदाऽकरोत्।
राजन् बृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः। ज्ञात्वा प्रथमजं तन्तु वह्नेराङ्गिरसं सुतं।
उपेत्य देवाः पप्रच्छुः कारणं तत्र भारत। स तु पृष्टस्तदा देवैस्ततः कारणमब्रवीत्।
प्रत्यगृह्णंस्तु देवाश्च तद्वचोऽङ्गिरसस्तदा। तत्र नानाविधानग्नीन् प्रवक्ष्यामि महाप्रभान्। १४२२०
कर्म्मभिर्बहुभिः ख्यातान्नानार्थान् ब्राह्मणेष्विह।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसोपाख्याने षोडशाधिकद्विशततोऽध्यायः ॥ २१६ ॥

॥ मार्कण्डेय उवाच ॥ ब्रह्मणो यस्तृतीयस्तु पुत्त्रः कुरुकुलोद्वह। तस्याभवत् शुभा भार्य्या प्रजास्तस्याश्च मे शृणु।
बृहत्कीर्त्तिर्बृहज्ज्योतिर्बृहद्ब्रह्मा बृहन्मनाः। बृहन्मन्त्रो बृहद्भासस्तथा राजन् बृहस्पतिः।
प्रजासु तासु सर्व्वासु रूपेणाप्रतिमाऽभवत्। देवी भानुमती नाम प्रथमाऽङ्गिरसः सुता।
भूतानामिव सर्व्वेषां यस्यां रागस्तदाऽभवत्। रागाद्राकेति यामाहुर्द्वितीयाऽङ्गिरसः सुतां। १४२२५
यां कपर्द्दिसुतामाहुर्दृश्यादृश्येति देहिनः। तनुत्वात् सा सिनीवाली तृतीयाऽङ्गिरसः सुता।
पश्यत्यर्च्चिष्मती भाभिर्हविर्भिश्च हविष्मती। षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्महिष्मतीं।
महामखेष्वाङ्गिरसी दीप्तिमत्सु महामते। महामतीति विख्याता सप्तमी कथ्यते सुता।
यान्तु दृष्ट्वा भगवतीं जनः कुहुकुहायते। एकानंशेति तामाहुः कुहूमङ्गिरसः सुतां।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥

॥ मार्कण्डेय उवाच ॥ बृहस्पतेश्चान्द्रमसी भार्य्याऽभूद्या यशस्विनी। अग्नीन् साऽजनयत् पुण्यान् षडेकाञ्चापि पुत्त्रिकां। १४२३०
आहुतिष्वेव यस्याग्नेर्हविषाज्यं विधीयते। सोऽग्निर्बृहस्पतेः पुत्त्रः शंयुर्नाम महाव्रतः।
चातुर्म्मास्येषु यस्येष्ट्यामश्वमेधेऽग्रजः पशुः। दीप्तो ज्वालैरनेकाभैरग्निरेषोऽथ वीर्य्यवान्।

शंयोरप्रतिमा भार्या सत्या सत्याऽथ धर्मजा। अग्निस्तस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः।
प्रथमेनाज्यभागेन पूज्यते योऽग्निरध्वरे। अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते।
पौर्णमासेषु सर्व्वेषु हविषाज्यं स्रुगुद्यतं। भरतो नामतः सोऽग्निर्द्वितीयः शंयुतः सुतः। १४१३५
तिस्रः कन्या भवन्त्यन्या यासां स भरतः पतिः। भरतस्तु सुतस्तस्य भरत्येका च पुत्रिका।
भरतो भरतस्याग्नेः पावकस्तु प्रजापतेः। महानत्यर्थमहितस्तथा भरतसत्तम।
भरद्वाजस्य भार्य्या तु वीरा वीरश्च पिण्डदा। प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः।
हविषा यो द्वितीयेन सोमेन सह युज्यते। रथप्रभू रथध्वानः कुम्भरेताः स उच्यते।
सरय्वां जनयत् सिद्धं भानुं भाभिः समावृणोत्। आग्नेयं चावहन्नित्यमाह्वानेषु स उच्यते। १४१४०
यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया। अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलं।
विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्चिषा ज्वलन्। विपाप्मोऽग्निः सुतस्तस्य सत्यः समयकर्मसु।
आक्रोशतां हि भूतानां यः करोति हि निष्कृतिं। अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः।
अनुकूजन्ति येनेह वेदनार्त्ताः स्वयं जनाः। तस्य पुत्रः स्वनो नाम पावकः स रुजस्करः।
यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति। तं प्राहुरध्यात्मविदो विश्वजिन्नामपावकं। १४१४५
अन्तरग्निः श्रुतो यस्तु भुक्तं पचति देहिनां। स यज्ञे विश्वभुङ्नाम सर्व्वलोकेषु भारत।
ब्रह्मचारी यतात्मा च सततं विपुलव्रतः। ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकं।
प्रथिता गोमती नाम नदी यस्याऽभवत् प्रिया। तस्मिन् सर्व्वाणि कर्म्माणि क्रियन्ते धर्म्मकर्तृभिः।
वडवाग्निः पिबत्यम्भो योऽसौ परमदारुणः। ऊर्द्ध्वभागूर्द्ध्वभाङ्नाम कविः प्राणाश्रितस्तु यः।
उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते। ततः स्विष्टं भवेदाज्यं स्विष्टकृत् परमः स्मृतः। १४१५०
यः प्रशान्तेषु भूतेषु मन्युर्भवति पावकः। क्रोधस्य तु रसो जज्ञे मन्यती चाथ पुत्रिका।
स्वाहेति दारुणा क्रूरा सर्व्वभूतेषु तिष्ठति। त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन।
अतुल्यत्वात् कृतो देवैर्नाम्ना कामस्तु पावकः। संहर्षाद्धारयन् क्रोधं धन्वी स्रग्वी रथे स्थितः।
समरे नाशयेच्छत्रूनमोघो नाम पावकः। उक्थो नाम महाभाग त्रिभिरुक्थैरभिष्टुतः।
महावाचन्त्वजनयत् समाश्वासं हि यं विदुः। १४१५५

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसेऽष्टादशाधिकद्विशततमोऽध्यायः॥ २१८॥

॥ मार्कण्डेय उवाच॥ काश्यपो ह्यथ वाशिष्ठः प्राणश्च प्राणपुत्रकः। अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्चकः।
अचरत् स तपस्तीव्रं पुत्रार्थे बहुवार्षिकं। पुत्रं लभेयं धर्म्मिष्ठं यशसा ब्रह्मणा समं।
महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ। जज्ञे तेजो महार्चिष्मान् पञ्चवर्णः प्रभावनः।
समिद्धोऽग्निः शिरस्तस्य बाहू सूर्य्यनिभौ तथा। त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत।
पञ्चवर्णः स तपसा कृतस्तैः पञ्चभिर्जनैः। पाञ्चजन्यः श्रुतो देवः पञ्चवंशकरस्तु सः। १४१६०
दशवर्षसहस्राणि तपस्तप्त्वा महातपाः। जनयत् पावकं घोरं पितॄणां स प्रजाः सृजन्।

वृहद्रथन्तरं मूर्द्ध्नी वक्त्रादा तरसाहरौ । शिवं नाभ्यां बलादिन्द्रं वाय्वग्नी प्राणतोऽसृजत् ।
बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह । एतान् सृष्ट्वा ततः पञ्च पितॄणामसृजत् सुतान् ।
वृहद्रथस्य प्रणिधिः काश्यपस्य महत्तरः । भानुरङ्गिरसो धीरः पुत्त्रो वर्च्चस्य सौभरः ।
प्राणस्य चानुदात्तस्तु व्याख्याताः पञ्चविंशतिः । देवान् यज्ञमुषस्त्वान्यान् सृजत् पञ्चदशोत्तरान् । १४१६५
सुभीममतिभीमञ्च भीमं भीमबलाबलं । एतान् यज्ञमुषः पञ्च देवानां ह्यसृजत्तपः ।
**सुमित्रं मित्रवन्तञ्च मित्रघ्नं मित्रवर्द्धनं । मित्रधर्म्माणमित्येतान् देवानभ्यसृजत्तपः ।**
सुरप्रवीरं वीरञ्च सुवेशं सुरवर्च्चसं । सुराणामपि हन्तारं पञ्चैतानसृजत्तपः ।
त्रिविधं संस्थिता ह्येते पञ्च पञ्च पृथक् पृथक् । मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतो यज्ञयाजिनः ।
तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्भुवि । स्पर्द्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च । १४१७०
वहिर्व्वेद्यां तदा दानं कुशलैः संप्रवर्त्तितं । तदेते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत् ।
चिताग्नेरुद्वहन्नाज्यं पक्षाभ्यां तत् प्रवर्त्तितं । मन्त्रैः प्रशमिता ह्येते नेष्टं मुष्णन्ति यज्ञियं ।
वृहदुक्थस्तपस्यैव पुत्त्रो भूमिमुपाश्रितः । अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरिज्यते ।
रथन्तरश्च तपसः पुत्त्रोऽग्निः परिपठ्यते । मित्रविन्दाय वै तस्मै हविरध्वर्य्यवो विदुः ।
मुमुदे परमप्रीतः सह पुत्त्रैर्म्महायशाः । १४१७५

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे एकोनविंशत्यधिकद्विशततोऽध्यायः ॥ २१९ ॥

॥ मार्कण्डेय उवाच ॥ गुरुभिर्नियमैर्जातो भरतो नाम पावकः । अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति ।
भरत्येष प्रजाः सर्व्वास्ततो भरत उच्यते । अग्निर्यस्त्वाशिवो नाम शक्तिपूजापरश्च सः ।
दुःखार्त्तानाञ्च सर्व्वेषां शिवकृत् सततं शिवः । तपसस्तु फलं दृष्ट्वा सम्प्रवृद्धं तपो महत् ।
उद्धर्त्तुकामो मतिमान् पुत्त्रो जज्ञे पुरन्दरः । उष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते ।
अग्निश्चापि मनुर्नाम प्राजापत्यमकारयत् । शम्भुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः । १४१८०
आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभं । ऊर्ज्जस्करान् हव्यवाहान् सुवर्णसदृशप्रभान् ।
ततस्तपो ह्यजनयत् पञ्च यज्ञसुतानिह । प्रशान्तेऽग्निर्महाभाग परिश्रान्तो गवाम्पतिः ।
असुरान् जनयन् घोरान्मर्त्यांश्चैव पृथग्विधान् । तपसश्च मनुं पुत्त्रं भानुञ्चाप्यङ्गिराः सृजत् ।
वृहद्भानुन्तु तं प्राहुर्ब्राह्मणा वेदपारगाः । भानोर्भार्य्या सुप्रजा तु वृहद्भासा तु सूर्य्यजा ।
असृजेतान्तु षट् पुत्त्रान् शृणु तासां प्रजाविधिं । दुर्ब्बलानान्तु भूतानामसून् यः सम्प्रयच्छति । १४१८५
तमग्निं बलदं प्राहुः प्रथमं भानुतः सुतं । यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः ।
अग्निः स मन्युमान्नाम द्वितीयो भानुतः सुतः । दर्शे च पौर्णमासे च यस्येह हविरुच्यते ।
विष्णुर्नामेह योऽग्निस्तु धृतिमान् नाम सोऽङ्गिराः । इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतं ।
अग्निराग्रयणो नाम भानोरेवान्वयस्तु सः । चातुर्म्मास्येषु नित्यानां हविषां योनिरग्रहः ।

चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तुभः। निशा त्वजनयत् कन्यामग्नीषोमावुभौ तथा। १४१९०
भानोरेवाभवद्भार्य्या सुषुवे पञ्च पावकान्। पूज्यते हविषाऽग्रेण चातुर्मास्येषु पावकः।
पर्ज्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः। अस्य लोकस्य सर्व्वस्य यः प्रभुः परिपच्यते।
सोऽग्निर्व्विश्वपतिर्नाम द्वितीयो वै मनोः सुतः। ततः स्विष्टं भवेदाज्यं स्विष्टकृत् परमस्तु सः।
कन्या सा रोहिणी नाम हिरण्यकशिपोः सुता। कर्म्मणाऽसौ बभौ भार्य्या स वह्निः स प्रजापतिः।
प्राणानाश्रित्य यो देहं प्रवर्त्तयति देहिनां। तस्य संनिहितो नाम शब्दरूपस्य साधनः। १४१९५
शुक्लकृष्णगतिर्देवो यो बिभर्त्ति हुताशनं। अकल्मषः कल्मषाणां कर्त्ता क्रोधाश्रितस्तु सः।
कपिलं परमर्षिञ्च यम्प्राहुर्यतयः सदा। अग्निः स कपिलो नाम साङ्ख्ययोगप्रवर्त्तकः।
अग्रं यच्छन्ति भूतानां येन भूतानि नित्यदा। कर्म्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते।
इमानन्यान् समसृजत् पावकान् प्रथितान् भुवि। अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुल्वणान्।
संस्पृशेयुर्यदाऽन्योऽन्यं कथञ्चिद्वायुनाऽग्नयः। इष्टिरष्टाकपालेन कार्य्या वै शुचयेऽग्नये। १४२००
दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल। इष्टिरष्टाकपालेन कार्य्या वै वीतयेऽग्नये।
यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना। इष्टिरष्टाकपालेन कार्य्या तु शुचयेऽग्नये।
अग्निं रजस्वला वै स्त्री संस्पृशेदग्निहोत्रिकं। इष्टिरष्टाकपालेन कार्य्या दस्युमतेऽग्नये।
मृतः श्रूयेत यो जीवः परेयुः पशवो यदा। इष्टिरष्टाकपालेन कार्य्या सुरमतेऽग्नये।
आर्त्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः। इष्टिरष्टाकपालेन कार्य्या स्यादुत्तराग्नये। १४२०५
दर्शञ्च पौर्णमासञ्च यस्य तिष्ठेत् प्रतिष्ठितं। इष्टिरष्टाकपालेन कार्य्या पथिकृतेऽग्नये।
सूतिकाऽग्निर्यदा चाग्निं संस्पृशेदग्निहोत्रिकं। इष्टिरष्टाकपालेन कार्य्या चाग्निमतेऽग्नये।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे विंशत्यधिकद्विशततोऽध्यायः ॥ २२० ॥
॥ मार्कण्डेय उवाच ॥ आपस्य दुहिता भार्य्या सहस्य परमा प्रिया। भूपतिर्भुवभर्त्ता च जनयत् पावकं परं।
भूतानाञ्चापि सर्व्वेषां यं प्राहुः पावकं पतिं। आत्मा भुवनभर्त्तेति सान्वयेषु द्विजातिषु।
महताञ्चैव भूतानां सर्व्वेषामिह यः पतिः। भगवान् स महातेजा नित्यं चरति पावकः। १४२१०
अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते। हुतं वहति यो हव्यमस्य लोकस्य पावकः।
अपां गर्भो महाभागः सत्त्वभुग्यो महाद्युतः। भूपतिर्भुवभर्त्ता च महतः पतिरुच्यते।
दहन्मृतानि भूतानि तस्याग्निर्भरतोऽभवत्। अग्निष्टोमे च नियतः क्रतुश्रेष्ठो भरस्य तु।
स वह्निः प्रथमो नित्यं देवैरन्विष्यते प्रभुः। आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात्।
देवास्तत्राधिगच्छन्ति मार्गमाणा यथादिशं। दृष्ट्वा त्वग्निरथर्व्वाणं ततो वचनमब्रवीत्। १४२१५
देवानां वह हव्यं त्वमहं वीर सुदुर्ब्बलः। अथ त्वं गच्छ मध्वक्षं प्रियमेतत् कुरुष्व मे।
प्रेष्य चाग्निरथर्व्वाणमन्यं देशं ततोऽगमत्। मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत्।

भक्त्या वै विविधैर्भावैर्भविष्यथ शरीरिणां। अथर्व्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः।
अनुनीयमानो हि भृशं देववाक्याद्धि तेन सः। नैच्छद्वोढुं हविः सर्व्वं शरीरञ्चापि सोऽत्यजत्।
स तच्छरीरं सन्त्यज्य प्रविवेश धरान्तदा। भूमिं स्पृष्ट्वाऽसृजद्धातून् पृथक् पृथगतीव हि। १४२२०
पूयात् स गन्धं तेजश्च अस्थिभ्यो देवदारु च। श्लेष्मणः स्फाटिकं तस्य पित्तान्मारकतं तथा।
यकृत् कृष्णायसं तस्य त्रिभिरेव प्रभुः प्रजाः। नखास्तस्याभ्रपटलं शिराजालानि विद्रुमं।
शरीराद्विविधाश्चान्ये धातवोऽस्याभवन्नृप। एवं त्यक्त्वा शरीरञ्च परमे तपसि स्थितः।
भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा। भृशं जज्वाल तेजस्वी तपसाप्यायितः शिखी।
दृष्ट्वा ऋषिं भयाच्चापि प्रविवेश महार्णवं। तस्मिन्नष्टे जगद्भीतमथर्व्वाणमथाश्रितं॥ १४२२५
अर्चयामासुरेवैनमथर्व्वाणं सुरादयः। अथर्व्वा त्वसृजल्लोकानात्मनालोक्य पावकं।
मिषतां सर्व्वभूतानामुन्ममाथ महार्णवं। एवमग्निर्भगवता नष्टः पूर्व्वमथर्व्वणा।
आहूतः सर्व्वभूतानां हव्यं वहति सर्व्वदा। एवं त्वजनयद्धिष्ण्यान् वेदोक्तान् विविधान् बहून्।
विचरन् विविधान् देशान् भ्रममाणस्तु तत्र वै। सिन्धुं नदं पञ्चनदं देविकाऽथ सरस्वती।
गङ्गा च शतकुम्भा च शरयूर्गण्डसाह्वया। चर्म्मण्वती मही चैव मेध्या मेधातिथिस्तदा। १४२३०
ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी। तमसा नर्म्मदा चैव नदी गोदावरी तथा।
वेणोपवेणा भीमा च वडवा चैव भारत। भारती सुप्रयोगा च कावेरी मुर्म्मुरा तथा।
तुङ्गवेणा कृष्णवेणा कपिला शोण एव च। एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्त्तिताः।
अद्भुतस्य प्रिया भार्य्या तस्य पुत्रो विभूरसिः। यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव तु॥
अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः। अत्रिः पुत्रान् स्रष्टुकामांस्तानेवात्मन्यधारयत्। १४२३५
तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः। एवमेते महात्मानः कीर्त्तितास्तेऽग्नयो मया॥
अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः। अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्त्तितं।
तादृशं विद्धि सर्व्वेषामेको ह्येष हुताशनः। एक एवैष भगवान् विज्ञेयः प्रथमोऽङ्गिराः।
बहुधा निःसृतः कायात् ज्योतिष्टोमक्रतुर्यथा। इत्येष वंशः सुमहानग्नीनां कीर्त्तितो मया।
योऽर्च्चितो विविधैर्मन्त्रैर्हव्यं वहति देहिनां। १४२४०
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि आङ्गिरसे एकविंशत्यधिकद्विशततमोऽध्यायः॥ २२१॥
॥ मार्कण्डेय उवाच॥ अग्नीनां विविधा वंशाः कीर्त्तितास्ते मयाऽनघ। शृणु जन्म तु कौरव्य कार्त्तिकेयस्य धीमतः।
अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसं। जातं सप्तर्षिभार्य्याभिर्ब्रह्मण्यं कीर्त्तिवर्द्धनं।
देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परं। तत्राजयन् सदा देवान् दानवा घोररूपिणः।
बध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरन्दरः। स सैन्यनायकार्थाय चिन्तामाप भृशं तदा।
देवसेनां दानवैर्हि भग्नां दृष्ट्वा महाबलः। पालयेद्वीर्य्यमाश्रित्य स ज्ञेयः पुरुषो मया। १४२४५
स शैलं मानसं गत्वा ध्यायन्नर्थमिदं भृशं। शुश्रावार्त्तस्वरं घोरमथ मुक्तं स्त्रिया तदा।

अभिधावतु मां कश्चित् पुरुषस्त्रातु चैव ह । पतिश्च मे प्रदिशतु स्वयं वा पतिरस्तु मे ।
पुरन्दरस्तु तामाह माभैर्नास्ति भयं तव । एवमुक्त्वा ततोऽपश्यत् केशिनं स्थितमग्रतः ॥
किरीटिनं गदापाणिं धातुमन्तमिवाचलं । हस्ते गृहीत्वा कन्यां तामथैनं वासवोऽब्रवीत् ।
अनार्य्यकर्म्मन् कस्मात्त्वमिमां कन्यां जिहीर्षसि । वज्रिणं मां विजानीहि विरमास्याः प्रबाधनात् । १४२५०
॥ केश्युवाच ॥ विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया । क्षमन्ते जीवतो गन्तुं स्वपुरं पाकशासन ।
एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै । तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः ।
अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत् । तदापतन्तं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः ।
बिभेद राजन् वज्रेण भुवि तन्निपपात ह । पतता तु तदा केशी तेन शृङ्गेण ताडितः ।
हित्वा कन्यां महाभागां प्राद्रवद्भृशपीडितः । अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत् । १४२५५
कासि कस्यासि किञ्चेह कुरुषे त्वं शुभानने ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोत्पत्तौ द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

॥ कन्योवाच ॥ अहं प्रजापतेः कन्या देवसेनेति विश्रुता । भगिनी मे दैत्यसेना सा पूर्व्वं केशिना हृता ।
सदैवावां भगिन्यौ तु सखीभिः सह मानसं । आगच्छावेह रत्यर्थमनुज्ञाप्य प्रजापतिं ।
नित्यञ्चावां प्रार्थयते हर्त्तुं केशी महासुरः । इच्छत्येनं दैत्यसेना न चाहं पाकशासन ।
सा हृताऽनेन भगवन् मुक्ताऽहं त्वद्बलेन तु । त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्ज्जयं । १४२६०
॥ इन्द्र उवाच ॥ मम मातृष्वसेया त्वं माता दाक्षायणी मम । आख्यातन्त्वहमिच्छामि स्वयमात्मबलं त्वया ।
॥ कन्योवाच ॥ अबलाऽहं महाबाहो पतिस्तु बलवान्मम । वरदानात् पितुर्भावी सुरासुरनमस्कृतः ।
॥ इन्द्र उवाच ॥ कीदृशन्तु बलं देवि पत्युस्तव भविष्यति । एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ।
॥ कन्योवाच ॥ देवदानवयक्षाणां किन्नरोरगरक्षसां । जेता यो दुष्टदैत्यानां महावीर्य्यो महाबलः ।
यस्तु सर्व्वाणि भूतानि त्वया सह विजेष्यति । स हि मे भविता भर्त्ता ब्रह्मण्यः कीर्त्तिवर्द्धनः । १४२६५
॥ मार्कण्डेय उवाच ॥ इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्तयद्भृशं । अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते ।
अथापश्यत् स उदये भास्करं भास्करद्युतिः । सोमञ्चैव महाभागं विशमानं दिवाकरं ।
अमावास्यां प्रवृत्तायां मुहूर्त्ते रौद्र एव तु । देवासुरञ्च संग्रामं सोऽपश्यदुदये गिरौ ।
लोहितैश्च घनैर्युक्तां पूर्व्वां सन्ध्यां शतक्रतुः । अपश्यल्लोहितोदञ्च भगवान् वरुणालयं ।
भृगुभिश्चाङ्गिरोभिश्च हुतं मन्त्रैः पृथग्विधैः । हव्यं गृहीत्वा वह्निञ्च प्रविशन्तं दिवाकरं । १४२७०
पर्व्व चैव चतुर्विंशं तदा सूर्य्यमुपस्थितं । तथा धर्म्मगतं रौद्रं सोमं सूर्य्यगतञ्च तं ।
समालोक्यैकतामेवं शशिनो भास्करस्य च । समवायन्तु तं रौद्रं दृष्ट्वा शक्रोऽन्वचिन्तयत् ।
सूर्य्याचन्द्रमसोर्घोरं दृश्यते परिवेशनं । एतस्मिन्नेव रात्र्यन्ते महद्युद्धन्तु शंसति ।
सरित् सिन्धुरपीयन्तु प्रत्यसृग्वाहिनी भृशं । शृगालिन्यग्निवक्त्रा तु प्रत्यादित्यं विराविणी ।
एष रौद्रश्च सङ्घातो महान् युक्तस्तेजसा । सोमस्य वह्निसूर्य्याभ्यामद्भुतोऽयं समागमः । १४२७५

जनयेद्यं सुतं सोमः सोऽस्या देव्याः पतिर्भवेत् । अग्निश्चैतैर्गुणैर्युक्तः सर्व्वैरग्निश्च देवता ।
एष चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् । एवं सञ्चिन्त्य भगवान् ब्रह्मलोकं तदा गतः ।
गृहीत्वा देवसेनान्तामवन्दत् स पितामहं । उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिश ।
॥ ब्रह्मोवाच ॥ यथैव चिन्तितं कार्य्यं त्वया दानवसूदन । तथा स भविता गर्भो बलवानुरुविक्रमः ।
स भविष्यति सेनानीस्त्वया सह शतक्रतो । अस्या देव्याः पतिश्चैव स भविष्यति वीर्य्यवान् ॥ १४२८०
एतच्छ्रुत्वा नमस्तस्मै कृत्वाऽसौ सह कन्यया । तत्राभ्यगच्छद्देवेन्द्रो यत्र देवर्षयोऽभवन् ।
वसिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाव्रताः । भागार्थं तपसो धातुं तेषां सोमं तथाऽध्वरे ।
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः । इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने ।
जुहुवुस्ते महात्मानो हव्यं सर्व्वदिवौकसां । समाहूतो हुतवहः सोऽद्भुतः सूर्य्यमण्डलात् ।
विनिःसृत्य ययौ वह्निर्व्वाग्यतो विधिवत् प्रभुः । आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतं ॥ १४२८५
स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः । ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसां ।
निष्क्रामंश्चाप्यपश्यत् स पत्नीस्तेषां महात्मनां । स्वेष्वाश्रमेषूपविष्टाः स्नायन्तीश्च तथा सुखं ।
रुक्मवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः । हुताशनार्च्चिःप्रतिमाः सर्व्वास्तारा इवाद्भुताः ।
स तत्र तेन मनसा बभूव क्षुभितेन्द्रियः । पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ।
भूयः स चिन्तयामास न न्याय्यं क्षुभितो ह्यहं । साध्वीः पत्नीर्द्विजेन्द्राणामकामाः कामयाम्यहं ॥ १४२९०
नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाऽप्यनिमित्ततः । गार्हपत्यं समाविश्य तस्मात् पश्याम्यभीक्ष्णशः ।
॥ मार्कण्डेय उवाच ॥ संस्पृशन्निव सर्व्वास्ताः शिखाभिः काञ्चनप्रभाः । पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ।
निरुष्य तत्र सुचिरमेवं वह्निर्व्वशं गतः । मनस्तासु विनिःक्षिप्य कामयानो वराङ्गनाः ।
कामसन्तप्तहृदयो देहत्यागविनिश्चितः । अलाभे ब्राह्मणस्त्रीणामग्निर्व्वनमुपागमत् ।
स्वाहा तं दक्षदुहिता प्रथमं कामयत्तदा । सा तस्य छिद्रमन्वैच्छच्चिरात्प्रभृति भाविनी ॥ १४२९५
अप्रमत्तस्य देवस्य न च पश्यत्यनिन्दिता । सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतं ।
तत्त्वतः कामसन्तप्तं चिन्तयामास भाविनी । अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकं ।
कामयिष्यामि कामार्त्तं तासां रूपेण मोहितं । एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोत्पत्तौ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

॥ मार्कण्डेय उवाच ॥ शिवा भार्य्या त्वङ्गिरसः शीलरूपगुणान्विता । तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप ।
जगाम पावकाभ्याशं तञ्चोवाच वराङ्गना । मामग्ने कामसन्तप्तां त्वं कामयितुमर्हसि ॥ १४३००
करिष्यसि न चेदेवं मृतां मामुपधारय । अहमङ्गिरसो भार्य्या शिवानाम हुताशन ।
शिष्टाभिः प्रहिता प्राप्ता मन्त्रयित्वा विनिश्चयं ॥ अग्निरुवाच ॥ कथं मां त्वं विजानीषे कामार्त्तमितराः कथं ।
यास्त्वया कीर्त्तिताः सर्व्वाः सप्तर्षीणां प्रियाः स्त्रियः ॥ शिवोवाच ॥ अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव ।
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषिताऽस्मि तवान्तिकं । मैथुनायेह संप्राप्ता कामं प्राप्तुं द्रुतं चर ।

कामयो मां प्रतीक्षन्ते गमिष्यामि हुताशन ॥ मार्कण्डेय उवाच ॥ ततोऽग्निरुपयेमे तां शिवां प्रीतां मुदायुतः। १४२०५
प्रीत्या देवी समायुक्ता शुक्रं जग्राह पाणिना। अचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने।
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके। तस्मादेतद्रक्षमाणा गरुडी सम्भवाम्यहं।
वनान्निर्गमनञ्चैव सुखं मम भविष्यति ॥ मार्कण्डेय उवाच ॥ सुपर्णी सा तदा भूत्वा निर्जगाम महावनात्।
अपश्यत् पर्व्वतं श्वेतं शरस्तम्बैः सुसंवृतं। दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः।
रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा। राक्षसीभिश्च सम्पूर्णमनेकैश्च मृगद्विजैः। १४२१०
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमं। प्राक्षिपत् काञ्चने कुण्डे शुक्रं सा त्वरिता शुभा।
सप्तानामपि सा देवी सप्तर्षीणां महात्मनां। पत्नीसरूपतां कृत्वा कामयामास पावकं।
दिव्यरूपमरुन्धत्याः कर्त्तुं न शकितं तया। तस्यास्तपःप्रभावेण भर्त्तुः शुश्रूषणेन च।
षट्कृत्वस्तत्तु निःक्षिप्तमग्निरेतः कुरूत्तम। तस्मिन् कुण्डे प्रतिपदि कामिन्या स्वाहया तदा।
तत्स्कन्नं तेजसा तत्र संवृतं जनयत् सुतं। ऋषिभिः पूजितं स्कन्नमनयत् स्कन्दतां ततः। १४२१५
षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः। एकग्रीवैकजठरः कुमारः समपद्यत।
द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ। अङ्गप्रत्यङ्गसम्भूतश्चतुर्थ्यामभवद्गुहः।
लोहिताभ्रेण महता संवृतः सह विद्युता। लोहिताभ्रे सुमहति भाति सूर्य्य इवोदितः।
गृहीतन्तु धनुस्तेन विपुलं लोमहर्षणं। न्यस्तं यत्त्रिपुरघ्नेन सुरारिविनिकृन्तनं।
तद्गृहीत्वा धनुः श्रेष्ठं ननाद बलवांस्तदा। सम्मोहयन्निवेमान् स त्रीन् लोकान् सचराचरान्। १४२२०
तस्य तं निनदं श्रुत्वा महामेघौघनिस्वनं। उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह।
तावापतन्तौ सम्प्रेक्ष्य स बालोऽर्कसमद्युतिः। द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिञ्चान्येन पाणिना।
अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः। महाकायमुपश्लिष्टं कुक्कुटं बलिनाम्वरं।
गृहीत्वा व्यनदद्भीमं चिक्रीड च महाभुजः। द्वाभ्यां भुजाभ्यां बलवान् गृहीत्वा शङ्खमुत्तमं।
प्राध्मापयत भूतानां त्रासनं बलिनामपि। द्वाभ्यां भुजाभ्यामाकाशं बहुशोऽभिजघान ह। १४२२५
क्रीडन् भाति महासेनस्त्रीन् लोकान् वदनैः पिबन्। पर्व्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा।
स तस्य पर्व्वतस्याग्रे निषण्णोऽद्भुतविक्रमः। व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः।
स पश्यन् विविधान् भावांश्चकार निनदं पुनः। तस्य तं निनदं श्रुत्वा न्यपतन् बहुधा जनाः।
भीताश्चोद्विग्नमनसस्तमेव शरणं ययुः। ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः।
तानप्याहुः पारिषदान् ब्राह्मणान् सुमहाबलान्। स तूत्थाय महाबाहुरुपसान्त्व्य च तान् जनान्। १४२३०
धनुर्विकृष्य व्यसृजद्बाणान् श्वेते महागिरौ। बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतं।
तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्व्वतं। स विशीर्णोऽपतच्छैलो भृशमार्त्तस्वरान् रुवन्।
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं तदा। स तं नादं भृशार्त्तानां श्रुत्वाऽपि बलिनाम्वरः।
न प्राव्यथदमेयात्मा शक्तिमुद्यम्य चानदत्। सा तदा विमला शक्तिः क्षिप्ता तेन महात्मना।

बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः। स तेनाभिहतो दीर्घो गिरिः श्वेतोऽग्निजैः सह। १४३३५

उत्पपात महीं त्यक्त्वा भीतः स सुमहात्मभिः। ततः प्रव्यथिता भूमिर्व्यशीर्य्यत समन्ततः।

आर्त्ता स्कन्दं समासाद्य पुनर्बलवती बभौ। पर्व्वताश्च नमस्कृत्य तमेव पृथिवीं गताः।

अथैनमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीं।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोत्पत्तौ चतुर्व्विंशत्यधिकद्विशततमोऽध्यायः॥ २२४ ॥

॥ मार्कण्डेय उवाच ॥ तस्मिन् जाते महासत्त्वे महासेने महाबले। समुत्तस्थुर्महोत्पाता घोररूपाः पृथग्विधाः।

स्त्रीपुंसोर्व्विपरीतञ्च तथा द्वन्द्वानि यानि च। ग्रहा दीप्ता दिवं चैव रराস च मही भृशं। १४३४०

ऋषयश्च महाघोरान् दृष्ट्वोत्पातान् समन्ततः। अकुर्व्वन् शान्तिमुद्विग्ना लोकानां लोकभावनाः।

निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः। तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहितो महान्।

सङ्गम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स्म ह। अपरे गरुडीमाहुस्त्वयाऽनर्थोऽयमाहृतः।

यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती। न तु तत् स्वाहया कर्म्म कृतं जानाति वै जनः।

सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति। उपगम्य शनैः स्कन्दमाहाहं जननी तव। १४३४५

अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसं। तत्यजुः षट् तदा पत्नीर्व्विना देवीमरुन्धतीं।

षड्भिरेव तदा जातमाहुस्तद्वनवासिनः। सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत।

अहं जाने नैतदेवमिति राजन् पुनःपुनः। विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः।

पावकं कामसन्तप्तमदृष्टः पृष्ठतोऽन्वगात्। तत्तेन निखिलं सर्व्वमवबुद्धं यथातथं।

विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः। स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः। १४३५०

मङ्गलानि च सर्व्वाणि कौमाराणि त्रयोदश। जातकर्म्मादिकास्तस्य क्रियाश्चक्रे महामुनिः।

षड्वक्त्रस्य तु माहात्म्यं कुक्कुटस्य तु साधनं। शक्त्या देव्याः साधनञ्च तथा पारिषदामपि।

विश्वामित्रश्चकारैतत् कर्म्म लोकहिताय वै। तस्मादृषिः कुमारस्य विश्वामित्रोऽभवत् प्रियः।

अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः। अब्रवीच्च मुनीन् सर्व्वान्नापराध्यन्ति वै स्त्रियः।

श्रुत्वा तु तत्त्वतस्तस्मात्ते पत्नीः सर्व्वतोऽत्यजन्॥ मार्कण्डेय उवाच॥ स्कन्दं श्रुत्वा तदा देवा वासवं सहिताऽब्रुवन्। १४३५५

अविषह्यं बलं स्कन्दे जहि शक्राशु माचिरं। यदि वा न निहंस्येनं देवेन्द्रोऽयं भविष्यति।

त्रैलोक्यं सन्निगृह्यास्मांस्त्वाञ्च शक्र महाबलः। स तानुवाच व्यथितो बालोऽयं सुमहाबलः।

स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत्। न बालमुत्सहे हन्तुमिति शक्रः प्रभाषते।

तेऽब्रुवन्नास्ति ते वीर्य्यं यत एवं प्रभाषसे। सर्व्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः।

कामवीर्य्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः। तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः। १४३६०

अशक्योऽयं विचिन्त्यैवं तमेव शरणं ययुः। ऊचुश्चैनं त्वमस्माकं पुत्रो भव महाबल।

अभिनन्दस्व नः सर्व्वाः प्रस्नुताः स्नेहविक्लवाः। तासां तद्वचनं श्रुत्वा पातुकामस्तनान् प्रभुः।

ताः संपूज्य महासेनः कामांश्चासां प्रदाय सः। अपश्यदग्निमायान्तं पितरं बलिनं बली।

स तु संपूजितस्तेन सह मातृगणेन ह। परिवार्य्य महासेनं रक्षमाणः स्थितः शिवः।

सर्व्वासां या तु मातॄणां नारी क्रोधसमुद्भवा। धात्री सपुत्रवत् स्कन्दं शूलहस्ताऽभ्यरक्षत। १४२९५

लोहितस्योदधेः कन्या क्रूरा लोहितभोजना। परिष्वज्य महासेनं पुत्रवत्पर्य्यरक्षत।

अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः। रमयामास शैलस्थं बालं क्रीडनकैरिव।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोत्पत्तौ पञ्चविंशत्यधिकद्विशतोऽध्यायः ॥ २२५ ॥

॥ मार्कण्डेय उवाच ॥ ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा। हुताशनमुखाश्चैव दृप्ताः परिषदाङ्गणाः।

एते चान्ये च बहवो घोरास्त्रिदिववासिनः। परिवार्य्य महासेनं स्थिता मातृगणैः सह।

सन्दिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः। आरुह्यैरावतं स्कन्धं प्रययौ दैवतैः सह। १४३००

आदाय वज्रं बलवान् सर्व्वैर्देवगणैर्वृतः। विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ।

उग्रं तच्च महानादं देवानीकं महाप्रभं। विचित्रध्वजसन्नाहं नानावाहनकार्मुकं।

प्रवराम्बरसंवीतं श्रिया जुष्टमलङ्कृतं। विजिघांसुं तमायान्तं कुमारः शक्रमभ्ययात्।

विनदन् पथि देवेशो द्रुतं याति महाबलः। संहर्षयन् देवसेनां जिघांसुः पावकात्मजं।

संपूज्यमानस्त्रिदशैस्तथैव परमर्षिभिः। समीपमथ संप्राप्तः कार्त्तिकेयस्य वासवः। १४३०५

सिंहनादं ततश्चक्रे देवेशः सहितः सुरैः। गुहोऽपि शब्दं तं श्रुत्वा व्यनदत् सागरो यथा।

तस्य शब्देन महता समुद्धूतोदधिप्रभं। बभ्राम तत्र तत्रैव देवसैन्यमचेतनं।

जिघांसूनुपसम्प्राप्तान् देवान् दृष्ट्वा स पावकिः। विससर्ज्ज मुखात् क्रुद्धः प्रवृद्धाः पावकार्च्चिषः।

अदहद्देवसैन्यानि वेपमानानि भूतले। ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः

प्रच्युताः सहसा भान्ति व्यस्तास्तारागणा इव। दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजं। १४३१०

देवा वज्रधरं त्यक्त्वा ततः शान्तिमुपागताः। त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रो न्यपातयत्।

तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणं। बिभेद च महाराज पार्श्वं तस्य महात्मनः।

वज्रप्रहारात् स्कन्दस्य सञ्जातः पुरुषोऽपरः। युवा काञ्चनसन्नाहः शक्तिधृग्दिव्यकुण्डलः।

यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत्। सञ्जातमपरं दृष्ट्वा कालानलसमद्युतिं।

भयादिन्द्रस्तु तं स्कन्दं प्राञ्जलिः शरणं गतः। तस्याभयं ददौ स्कन्दः सहसैन्यस्य सत्तमः। १४३१५

ततः प्रहृष्टास्त्रिदशा वादित्राण्यभिवादयन्।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दशक्रसमागमे षड्विंशत्यधिकद्विशतोऽध्यायः ॥ २२६ ॥

॥ मार्कण्डेय उवाच ॥ स्कन्दपारिषदान् घोरान् शृणुष्वाद्भुतदर्शनान्। वज्रप्रहारात् स्कन्दस्य जज्ञुस्तत्र कुमारकाः।

ये हरन्ति शिशून् जातान् गर्भस्थांश्चैव दारुणाः। वज्रप्रहारात् कन्याश्च जज्ञिरेऽस्य महाबलाः॥

कुमारास्ते विशाखञ्च पितृत्वे समकल्पयन्। स भूत्वा भगवान् संख्ये रक्षंश्छागमुखस्तदा।

वृतः कन्यागणैः सर्व्वैरात्मीयैः सह पुत्रकैः। मातॄणां प्रेक्षतीनाञ्च भद्रशाखश्च कौशलः। १४३२०

ततः कुमारं पितरं स्कन्दमाहुर्जना भुवि। रुद्रमग्निमुमां स्वाहां प्रदेशेषु महाबलं।

यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः। यास्ताः स्वजनयत् कन्यास्तपो नाम हुताशनः।
किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषत। कुमार्य्य ऊचुः। भवेम सर्व्वलोकस्य मातरो वयमुत्तमाः।
प्रसादात्तव पूज्याश्च प्रियमेतत् कुरुष्व नः। सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथग्विधाः।
अशिवाश्च शिवाश्चैव पुनः पुनरुदारधीः। ततः सङ्कल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत्। १४३९५
काकी च हलिमा चैव मालिनी बृंहिता तथा। आर्य्या पलाला वैमित्रा सप्तैताः शिशुमातरः।
एतासां वीर्य्यसम्पन्नः शिशुर्नामाति दारुणः। स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयङ्करः।
एष वीराष्टकः प्रोक्तः स्कन्दमातृगणोद्भवः। छागवक्त्रेण सहितो नवकः परिकीर्त्त्यते।
षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत्। षट्शिरोऽभ्यन्तरं राजन् नित्यं मातृगणार्च्चितं।
षण्णान्तु प्रवरं तस्य शीर्षाणामिह शब्द्यते। शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह। १४४००
इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीं। तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोपाख्याने सप्तविंशत्यधिकद्विशततमोऽध्यायः॥ २२७॥
॥ मार्कण्डेय उवाच ॥ उपविष्टन्तु तं स्कन्दं हिरण्यकवचस्रजं। हिरण्यचूडमुकुटं हिरण्याक्षं महाप्रभं।
लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमं। सर्व्वलक्षणसम्पन्नं त्रैलोक्यस्यापि सुप्रियं।
ततस्तं वरदं शूरं युवानं मृष्टकुण्डलं। अभजत् पद्मरूपा श्रीः स्वयमेव शरीरिणी।
श्रिया जुष्टः पृथुयशाः सुकुमारवरस्तदा। निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी। १४४०५
अपूजयन्महात्मानो ब्राह्मणास्तं महाबलं। इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः।
॥ ऋषय ऊचुः ॥ हिरण्यगर्भ भद्रन्ते लोकानां शङ्करो भव। त्वया षड्रात्रजातेन सर्व्वलोका वशीकृताः।
अभयञ्च पुनर्दत्तं त्वयैवैषां सुरोत्तम। तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयङ्करः।
॥ स्कन्द उवाच ॥ किमिन्द्रः सर्व्वलोकानां करोतीह तपोधनाः। कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः।
॥ ऋषय ऊचुः ॥ इन्द्रो ददाति भूतानां बलं तेजः प्रजाः सुखं। तुष्टः प्रयच्छति तथा सर्व्वान् कामान् सुरेश्वरः। १४४१०
दुर्वृत्तानां संहरति वृत्तस्थानां प्रयच्छति। अनुशास्ति च भूतानि कार्य्येषु बलसूदनः।
असूर्य्ये च भवेत् सूर्य्यस्तथाऽचन्द्रे च चन्द्रमाः। भवत्यग्निश्च वायुश्च पृथिव्यापश्च कारणैः।
एतदिन्द्रेण कर्त्तव्यमिन्द्रे हि विपुलं बलं। त्वञ्च वीर बलिश्रेष्ठस्तस्मादिन्द्रो भवस्व नः।
॥ शक्र उवाच ॥ भवस्वेन्द्रो महाबाहो सर्व्वेषां नः सुखावहः। अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम।
॥ स्कन्द उवाच ॥ शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः। अहन्ते किङ्करः शक्र न ममेन्द्रत्वमीप्सितं। १४४१५
॥ शक्र उवाच ॥ बलं तवाद्भुतं वीर त्वं देवानामरीन् जहि। अवज्ञास्यन्ति मां लोका वीर्य्येण तव विस्मिताः।
इन्द्रत्वे तु स्थितं वीर बलहीनं पराजितं। आवयोश्च मिथो भेदः प्रयतिष्यन्त्यतन्द्रिताः।
भेदिते च त्वयि विभो लोको द्वैधमुपैष्यति। द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा।
विग्रहः संप्रवर्त्तेत भूतभेदान्महाबल। तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि।
तस्मादिन्द्रो भवानेव भविता मा विचारय॥ स्कन्द उवाच॥ त्वमेव राजा भद्रन्ते त्रैलोक्यस्य ममैव च। १४४२०
करोमि किञ्च ते शक्र शासनं तद्ब्रवीहि मे॥ इन्द्र उवाच॥ अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल।

यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया । यदि वा शासनं स्कन्द कर्त्तुमिच्छसि मे शृणु ।
अभिषिच्यस्व देवानां सेनापत्ये महाबल ॥ स्कन्द उवाच ॥ दानवानां विनाशाय देवानामर्थसिद्धये ।
गोब्राह्मणहितार्थाय सेनापत्येऽभिषिञ्च मां ॥ मार्कण्डेय उवाच ॥ सोऽभिषिक्तो मघवता सर्व्वैर्देवगणैः सह ।
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः । तत्र तत् काञ्चनं छत्रं ध्रियमाणं व्यरोचत । १४४२५
यथैव सुसमिद्धस्य पावकस्यात्ममण्डलं । विश्वकर्म्मकृता चास्य दिव्या माला हिरण्मयी ।
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना । आगम्य मनुजव्याघ्र सह देव्या परन्तप ।
अर्च्चयामास सुप्रीतो भगवान् गोवृषध्वजः । रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ।
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्व्वतोऽभवत् । पावकस्येन्द्रियं श्वेते कृत्तिकाभिः कृतं नगे ।
पूज्यमानन्तु रुद्रेण दृष्ट्वा सर्व्वे दिवौकसः । रुद्रसूनुं ततः प्राहुर्गुहं गुणवतां वरं । १४४३०
अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः । तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् ।
रुद्रस्य वह्नेः स्वाहायाः षण्णां स्त्रीणाञ्च भारत । जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ।
अजरे वाससी रक्ते वसानः पावकात्मजः । भाति दीप्तवपुः श्रीमान् रक्ताभ्राभ्यामिवांशुमान् ॥
कुक्कुटश्चाग्निना दत्तस्तस्य केतुरलङ्कृतः । रथे समुच्छ्रितो भाति कालाग्निरिव लोहितः ।
या चेष्टा सर्व्वभूतानां प्रभा शान्तिर्ब्बलं तथा । अग्रतस्तस्य सा शक्तिर्देवानां जयवर्द्धनी । १४४३५
विवेश कवचञ्चास्य शरीरे सहजन्तथा । युध्यमानस्य देवस्य प्रादुर्भवति तत्सदा ।
शक्तिर्धर्म्मो बलं तेजः कान्तत्वं सत्यमुन्नतिः । ब्रह्मण्यत्वमसम्मोहो भक्तानां परिरक्षणं ।
निकृन्तनञ्च शत्रूणां लोकानाञ्चाभिरक्षणं । स्कन्देन सह जातानि सर्व्वाण्येव जनाधिप ।
एवं देवगणैः सर्व्वैः सोऽभिषिक्तः स्वलङ्कृतः । बभौ प्रतीतः सुमनाः परिपूर्णेन्दुमण्डलः ।
इष्टैः स्वाध्यायघोषैश्च देवतूर्य्यरवैरपि । देवगन्धर्व्वगीतैश्च सर्व्वैरप्सरसाङ्गणैः । १४४४०
एतैश्चान्यैश्च बहुभिर्हृष्टैस्तुष्टैः स्वलङ्कृतैः । सुसंवृतः पिशाचानां गणैर्देवगणैस्तथा ।
क्रीडन् भाति तदा देवैरभिषिक्तश्च पावकिः । अभिषिक्तं महासेनमपश्यन्त दिवौकसः ॥
विनिहत्य तमः सूर्य्यं यथेहाभ्युदितं तथा । अथैनमभ्ययुः सर्व्वा देवसेनाः सहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्व्वतो दिशः । ताः समासाद्य भगवान् सर्व्वभूतगणैर्वृतः ।
अर्च्चितस्तु स्तुतश्चैव सान्त्वयामास ता अपि । शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा । १४४४५
सस्मार तां देवसेनां या सा तेन विमोक्षिता । अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयं ।
इति चिन्त्यानयामास देवसेनां स्वलङ्कृतां । स्कन्दं प्रोवाच बलभिदियं कन्या सुरोत्तम ।
अजाते त्वयि निर्द्दिष्टा तव पत्नी स्वयम्भुवा । तस्मात्त्वमस्या विधिवत् पाणिं मन्त्रपुरस्कृतं ।
गृहाण दक्षिणं देव्याः पाणिना पद्मवर्च्चसा । एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि ।
बृहस्पतिर्मन्त्रविद्धि जजाप च जुहाव च । एवं स्कन्दस्य महिषीं देवसेनां विदुर्ब्बुधाः । १४४५०
षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदां । सिनीवालीं कुहूञ्चैव सद्वृत्तिमपराजितां ।
यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया । तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी ।

श्रीजुष्टः पञ्चमीं स्कन्दस्तस्माच्छ्रीपञ्चमी स्मृता । षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात् षष्ठी महातिथिः ।

इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दोपाख्याने अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

॥ मार्कण्डेय उवाच ॥ श्रिया जुष्टं महासेनं देवसेनापतिं कृतं । सप्तर्षिपत्न्यः षड्देव्यस्तत्सकाशमथागमन् ।

ऋषिभिः संपरित्यक्ता धर्म्मयुक्ता महाव्रताः । द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुं । १४४५५

वयं पुत्त्र परित्यक्ता भर्त्तृभिर्देवसम्मितैः । अकारणाद्रुषा तैस्तु पुण्यस्थानात् परिच्युताः ।

अस्माभिः किल जातस्त्वमिति केनाप्युदाहृतं । तत्सत्यमेतत् संश्रुत्य तस्मात्त्वं त्रातुमर्हसि ।

अक्षयश्च भवेत् स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो । त्वां पुत्त्रञ्चाप्यभीप्सामः कृत्वैतदनृणो भव ।

॥ स्कन्द उवाच ॥ मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः । यच्चापीच्छत तत्सर्व्वं संभविष्यति वस्तथा ।

॥ मार्कण्डेय उवाच ॥ विवक्षन्तं ततः शक्रं किङ्कार्य्यमिति सोऽब्रवीत् । उक्तः स्कन्देन ब्रूहीति सोऽब्रवीद्वासवस्ततः । १४४६०

अभिजित् स्पर्द्धमाना तु रोहिण्याः कन्यसी स्वसा । इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ।

तत्र मूढोऽस्मि भद्रन्ते नक्षत्रं गगनाच्च्युतं । कालन्त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ।

धनिष्ठादिस्तथा कालो ब्रह्मणा परिकल्पितः । रोहिणी ह्यभवत् पूर्व्वमेवं संख्या समाऽभवत् ।

एवमुक्ते शक्रेण त्रिदिवं कृत्तिका गता । नक्षत्रं सप्तशीर्षाभं भाति तद्वह्निदैवतं ।

विनता चाब्रवीत् स्कन्दं मम त्वं पिण्डदः सुतः । इच्छामि नित्यमेवाहं त्वया पुत्त्र सहासितुं । १४४६५

॥ स्कन्द उवाच ॥ एवमस्तु नमस्तेऽस्तु पुत्त्रस्नेहात् प्रशाधि मां । स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा ॥

॥ मार्कण्डेय उवाच ॥ अथ मातृगणः सर्व्वः स्कन्दं वचनमब्रवीत् । वयं सर्व्वस्य लोकस्य मातरः कविभिःस्तुताः ।

इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ॥ स्कन्द उवाच ॥ मातरो हि भवत्यो मे भवतीनामहं सुतः ।

उच्यतां यन्मया कार्य्यं भवतीनामथेप्सितं ॥ मातर ऊचुः ॥ यास्तु ता मातरः पूर्व्वं लोकस्यास्य प्रकल्पिताः ।

अस्माकन्तु भवेत् स्थानं तासाञ्चैव न तद्भवेत् । भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ । १४४७०

प्रजास्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः ॥ स्कन्द उवाच ॥ दत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुं ।

अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ ॥ मातर ऊचुः ॥ इच्छाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः ।

त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥ स्कन्द उवाच ॥ प्रजा वो दद्मि कष्टन्तु भवतीभिरुदाहृतं ।

परिरक्षत भद्रं वः प्रजाः साधु नमस्कृताः ॥ मातर ऊचुः ॥ परिरक्षाम भद्रन्ते प्रजाः स्कन्द यथेच्छसि ।

त्वया नो रोचते स्कन्द सहवासश्चिरं प्रभो ॥ स्कन्द उवाच ॥ यावत् षोडशवर्षाणि भवन्ति तरुणाः प्रजाः । १४४७५

प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः । अहञ्च वः प्रदास्यामि रौद्रमात्मानमव्ययं ।

परमं तेन सहिताः सुखं वत्स्यथ पूजिताः ॥ मार्कण्डेय उवाच ॥ ततः शरीरात् स्कन्दस्य पुरुषः पावकप्रभः ।

भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाप्रभुः । अपतत् सहसा भूमौ विसंज्ञोऽथ क्षुधाऽर्द्दितः ।

स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः । स्कन्दापस्मारमित्याहुर्ग्रहन्तं द्विजसत्तमाः ।

विनता तु महारौद्रा कथ्यते शकुनिग्रहः । पूतनां राक्षसीं प्राहुस्तं विद्यात् पूतनाग्रहं । १४४८०

कष्टा दारुणरूपेण घोररूपा निशाचरी । पिशाची दारुणाकारा कथ्यते शीतपूतना ।

गर्भान् सा मानुषीणान्तु हरते घोरदर्शना । अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालान् महाघोरो बाधते वै महाग्रहः । दैत्यानां या दितिर्म्माता तामाहुर्मुखमण्डिकां ।
अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा । कुमाराश्च कुमार्य्यश्च ये प्रोक्ताः स्कन्दसम्भवाः ।
तेऽपि गर्भभुजः सर्व्वे कौरव्य सुमहाग्रहाः । तासामेव तु पत्नीनां पतयस्ते प्रकीर्त्तिताः । १४४८५
अज्ञायमाना गृह्णन्ति बालकान् रौद्रकर्म्मिणः । गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।
शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून् भुवि । सरमा नाम या माता शुनां देवी जनाधिप ।
साऽपि गर्भान् समादत्ते मानुषीणां सदैव हि । पादपानाञ्च या माता करञ्जनिलया हि सा ।
वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी । करञ्जे तां नमस्यन्ति तस्मात् पुत्रार्थिनो नराः ।
इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः । द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे । १४४९०
कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ । भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ।
गन्धर्व्वाणान्तु या माता सा गर्भं गृह्य गच्छति । ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ।
या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा । उपविष्टं ततो गर्भं कथयन्ति मनीषिणः ।
लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता । लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ।
पुरुषेषु यथा रुद्रस्तथार्य्या प्रमदास्वपि । आर्य्या माता कुमारस्य पृथक्कामार्थमिज्यते । १४४९५
एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः । यावत् षोडशवर्षाणि शिशूनां ह्यशिवास्ततः ।
ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः । सर्व्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ।
तेषां प्रशमनं कार्य्यं स्नानं धूपमथाञ्जनं । बलिकर्म्मोपहारांश्च स्कन्दस्येज्या विशेषतः ।
एवमभ्यर्च्चिताः सर्व्वे प्रयच्छन्ति शुभं नृणां । आयुर्व्वीर्य्यञ्च राजेन्द्र सम्यक् पूजानमस्कृताः ।
उर्द्ध्वन्तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणां । तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरं । १४५००
यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा । उन्मादयति स तु क्षिप्रं तन्तु देवग्रहं विदुः ।
आसीनश्च शयानश्च यः पश्यति नरः पितॄन् । उन्मादयति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ।
अवमन्यति यः सिद्धान् क्रुद्धाश्चापि शपन्ति यं । उन्मादयति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः ।
उपाघ्राति च यो गन्धान् रसांश्चापि पृथग्विधान् । उन्मादयति स तु क्षिप्रं स ज्ञेयो राक्षसग्रहः ।
गन्धर्व्वाश्चापि यं दिव्याः संविशन्ति नरं भुवि । उन्मादयति स तु क्षिप्रं ग्रहो गान्धर्व्व एव सः । १४५०५
अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति । उन्मादयति स तु क्षिप्रं ग्रहः पैशाच एव सः ।
आविशन्ति च यं यक्षाः पुरुषं कालपर्य्यये । उन्मादयति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः ।
यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः । उन्मादयति स तु क्षिप्रं साधनं तस्य शास्त्रतः ।
वैक्लव्याच्च भयाच्चैव घोराणाञ्चापि दर्शनात् । उन्मादयति स तु क्षिप्रं सान्त्वनस्य तु साधनं ।
कश्चित् क्रीडितुकामो वै भोक्तुकामस्तथाऽपरः । अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः । १४५१०
यावत्सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणां । अतः परं देहिनान्तु ग्रहतुल्यो भवेत् ज्वरः ।

आक्रोशैर्वेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितं । आस्तिकं श्रद्दधानञ्च वर्ज्जयन्ति सदा ग्रहाः ।
इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्त्तितः । न स्पृशन्ति ग्रहा भक्तान् नरान् देवं महेश्वरं ।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि मनुष्यग्रहकथने एकोनत्रिंशदधिकद्विशततोऽध्यायः ॥ २२९ ॥
॥ मार्कण्डेय उवाच ॥ यदा स्कन्देन मातृणामेवमेतत् प्रियं कृतं । तथैनमब्रवीत् स्वाहा मम पुत्त्रस्त्वमौरसः ।
इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभां । तामब्रवीत्ततः स्कन्दः प्रीतिमिच्छसि कीदृशीं । १४५१५
॥ स्वाहोवाच ॥ दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज । बाल्यात् प्रभृति नित्यञ्च जातकामा हुताशने ।
न स मां कामिनीं पुत्त्र सम्यग्जानाति पावकः । इच्छामि शाश्वतं वासं वस्तुं पुत्त्र सहाग्निना ।
॥ स्कन्द उवाच ॥ हव्यं कव्यञ्च यत्किञ्चिद्द्विजानां मन्त्रसंस्तुतं । होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्धृतं ।
अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः । एवमग्निस्त्वया सार्द्धं सदा वत्स्यति शोभने ।
॥ मार्कण्डेय उवाच ॥ एवमुक्ता ततः स्वाहा तुष्टा स्कन्देन पूजिता । पावकेन समायुक्ता भर्त्त्रा स्कन्दमपूजयत् । १४५२०
ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् । अभिगच्छ महादेवं पितरं त्रिपुरार्द्दनं ।
रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया । हितार्थं सर्व्वलोकानां जातस्त्वमपराजितः ।
उमायोन्याञ्च रुद्रेण शुक्रं सिक्तं महात्मना । अस्मिन् गिरौ निपतितं मिञ्जिकामिञ्जिकं यतः ।
सम्भूतं लोहितोदे तु शुक्रशेषमवापतत् । सूर्य्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि ।
आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधाऽपतत् । तत्र ते विविधाकारा गणा ज्ञेया मनीषिभिः । १४५२५
तव पारिषदा घोरा य एते पिशिताशिनः । एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरं ।
अपूजयदमेयात्मा पितरं पितृवत्सलः ॥ मार्कण्डेय उवाच ॥ अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धनार्थिभिः ।
व्याधिप्रशमनार्थञ्च तेषां पूजां समाचरेत् । मिञ्जिकामिञ्जिकञ्चैव मिथुनं रुद्रसम्भवं ।
नमस्कार्य्यं सदैवेह बालानां हितमिच्छता । स्त्रियो मानुषमांसादा वृद्धिका नाम नामतः ।
वृक्षेषु जातास्ता देव्यो नमस्कार्य्याः प्रजार्थिभिः । एवमेते पिशाचानामसङ्ख्येयगणाः स्मृताः । १४५३०
घण्टायाः सपताकायाः शृणु मे सम्भवं नृप । ऐरावतस्य घण्टे द्वे वैजयन्त्याविति श्रुते ।
गुहस्य ते स्वयं दत्ते शक्रेणानाय्य धीमता । एका तत्र विशाखस्य घण्टा स्कन्दस्य चापरा ।
पताका कार्त्तिकेयस्य विशाखस्य च लोहिता । यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा ।
तैरेव रमते देवो महासेनो महाबलः । स संवृतः पिशाचानां गणैर्देवगणैस्तथा ।
शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृतः । तेन वीरेण शुशुभे स शैलः शुभकाननः । १४५३५
आदित्येनेवांशुमता मन्दरस्यारुकन्दरः । सन्तानकवनैः फुल्लैः करवीरवनैरपि ।
पारिजातवनैश्चैव जवाशोकवनैस्तथा । कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ।
दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्व्वतः । तत्र देवगणाः सर्व्वे सर्व्वे देवर्षयस्तथा ।
मेघतूर्य्यरवाश्चैव क्षुब्धोदधिसमस्वनाः । तत्र दिव्याश्च गन्धर्व्वा नृत्यन्त्यप्सरसस्तदा ।
हृष्टानां तत्र भूतानां श्रूयते निनदो महान् । एवं सेन्द्रं जगत्सर्व्वं श्वेतपर्व्वतसंस्थितं । १४५४०

प्रहृष्टं प्रेक्षते स्कन्दं न च तृप्यति दर्शनात् ॥ मार्कण्डेय उवाच ॥ यदाऽभिषिक्तो भगवान् सेनापत्येन पावकिः ।
तदा संप्रस्थितः श्रीमान् हृष्टो भद्रवटं हरः । रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ।
सहस्रं तस्य सिंहानां तस्मिन् युक्तं रथोत्तमे । उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितं ।
ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान् । सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः ।
तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह । विद्युता सहितः सूर्य्यः सेन्द्रचापे घने यथा । १४३७५
अग्रतस्तस्य भगवान् धनेशो गुह्यकैः सह । आस्थाय रुचिरं याति पुष्पकं नरवाहनः ।
ऐरावतं समास्थाय शक्रश्चापि सुरैः सह । पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजं ।
जृम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलङ्कृतैः । यात्यमोघो महायक्षो दक्षिणं पक्षमास्थितः ।
तस्य दक्षिणतो देवा मरुतश्चित्रयोधिनः । गच्छन्ति वसुभिः सार्द्धं रुद्रैश्च सह सङ्गताः ।
यमश्च मृत्युना सार्द्धं सर्व्वतः परिवारितः । घोरैर्व्याधिशतैर्याति घोररूपवपुस्तथा । १४३८०
यमस्य पृष्ठतश्चैव घोरस्त्रिशिखरः शितः । विजयो नाम रुद्रस्य याति शूलः स्वलङ्कृतः ।
तमुग्रपाशो वरुणो भगवान् सलिलेश्वरः । परिवार्य्य शनैर्याति यादोभिर्व्विविधैर्वृतः ।
पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टिशः । गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः ।
पट्टिशन्त्वन्वगाद्राजन् छत्रं रौद्रं महाप्रभं । कमण्डलुश्चाप्यनु तं महर्षिगणसेवितः ।
तस्य दक्षिणतो भाति दण्डो गच्छन् श्रिया वृतः । भृग्वङ्गिरोभिः सहितो दैवतैश्चानुपूजितः । १४३८५
एषान्तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः । याति संहर्षयन् सर्व्वांस्तेजसा त्रिदिवौकसः ।
ऋषयश्चापि देवाश्च गन्धर्व्वा भुजगास्तथा । नद्यो ह्रदाः समुद्राश्च तथैवाप्सरसाङ्गणाः ।
नक्षत्राणि ग्रहाश्चैव देवानां शिशवश्च ये । स्त्रियश्च विविधाकारा यान्ति रुद्रस्य पृष्ठतः ।
सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः । पर्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनं ।
छत्रञ्च पाण्डुरं सोमस्तस्य मूर्द्धन्यधारयत् । चामरे चापि वायुश्च गृहीत्वाऽग्निश्च धिष्ठितौ । १४३९०
शक्रश्च पृष्ठतस्तस्य याति राजन् श्रिया वृतः । सह राजर्षिभिः सर्व्वैः स्तुवानो वृषकेतनं ।
गौरी विद्याऽथ गान्धारी केशिनी मित्रसाह्वया । सावित्र्या सह सर्व्वास्ताः पार्व्वत्या यान्ति पृष्ठतः ।
तत्र विद्यागणाः सर्व्वे ये केचित् कविभिः कृताः । यस्य कुर्व्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे ।
गृहीत्वा तु पताकां वै यात्यग्रे राक्षसो ग्रहः । व्यापृतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा ।
पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः । एभिश्च सहितो देवस्तत्र याति यथासुखं । १४३९५
अग्रतः पृष्ठतश्चैव नहि तस्य गतिर्ध्रुवा । रुद्रं सत्कर्म्मभिर्म्मर्त्याः पूजयन्तीह दैवतं ।
शिवमित्येव यं प्राहुरीशं रुद्रं पिनाकिनं । भावैस्तु विविधाकारैः पूजयन्ति महेश्वरं ।
देवसेनापतिस्त्वेवं देवसेनाभिरावृतः । अनुगच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः ।
अथाब्रवीन्महासेनं महादेवो बृहद्वचः । सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ।
॥ स्कन्द उवाच ॥ सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो । यदन्यदपि मे कार्य्यं देव तद्वद मा चिरं । १४४००

॥ रुद्र उवाच ॥ कार्य्येष्वहं त्वया पुत्त्र संद्रष्टव्यः सदैव हि। दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि।
॥ मार्कण्डेय उवाच ॥ इत्युक्त्वा विससर्ज्जैनं परिष्वज्य महेश्वरः। विसर्ज्जिते ततः स्कन्दे बभूवौत्पातिकं महत्।
सहसैव महाराज देवान् सर्व्वान् प्रमोहयत्। जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशं।
चचाल व्यनदच्चोर्व्वी तमोभूतं जगद्बभौ। ततस्तद्दारुणं दृष्ट्वा क्षुभितः शङ्करस्तदा।
उमा चैव महाभागा देवाश्च समहर्षयः। ततस्तेषु प्रमूढेषु पर्व्वताम्बुदसन्निभं। १४५७५
नानाप्रहरणं घोरमदृश्यत महद्बलं। तद्वै घोरमसंख्येयं गर्ज्जच्च विविधा गिरः।
अभ्यद्रवद्रणे देवान् भगवन्तञ्च शङ्करं। तैर्व्विसृष्टान्यनीकेषु बाणजालान्यनेकशः।
पर्व्वतांश्च शतघ्नीश्च प्रासासिपरिघागदाः। निपतद्भिश्च तैर्घोरैर्द्देवानीकं महायुधैः।
क्षणेन व्यद्रवत् सर्व्वं विमुखञ्चाप्यदृश्यत। निकृत्तयोधनागाश्वं कृत्तायुधमहारथं।
दानवैरर्द्दितं सैन्यं देवानां विमुखं बभौ। असुरैर्व्वध्यमानन्तत् पावकैरिव काननं। १४५८०
अपतद्दग्धभूयिष्ठं महाद्रुमवनं यथा। ते विभिन्नशिरोदेहाः प्राद्रवन्तो दिवौकसः।
न नाथमधिगच्छन्ति वध्यमाना महारणे। अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरन्दरः।
आश्वासयन्नुवाचेदं बलभिद्दानवार्द्दितं। भयं त्यजत भद्रं वः शूराः शस्त्राणि गृह्णत।
कुरुध्वं विक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत्। जयतैनान् सुदुर्वृत्तान् दानवान् घोरदर्शनान्।
अभिद्रवत भद्रं वो मया सह महासुरान्। शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः। १४५८५
दानवान् प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयं। ततस्ते त्रिदशाः सर्व्वे मरुतश्च महाबलाः।
प्रत्युद्ययुर्म्महाभागाः साध्याश्च वसुभिः सह। तैर्व्विसृष्टान्यनीकेषु क्रुद्धैः शस्त्राणि संयुगे।
शराश्च दैत्यकायेषु पिबन्ति रुधिरं बहु। तेषां देहं विनिर्भिद्य शरास्ते निशितास्तदा।
निष्पतन्तो ह्यदृश्यन्त नगेभ्य इव पन्नगाः। तानि दैत्यशरीराणि निर्भिन्नानि स्म सायकैः।
अपतन् भूतले राजन् छिन्नाभ्राणीव सर्व्वशः। ततस्तद्दानवं सैन्यं सर्व्वैर्द्देवगणैर्युधि। १४५९०
त्रासितं विविधैर्ब्बाणैः कृतञ्चैव पराङ्मुखं। अथोत्क्रुष्टं तदा हृष्टैः सर्व्वैर्द्देवैरुदायुधैः।
संहतानि च तूर्य्याणि प्रावाद्यन्त ह्यनेकशः। एवमन्योऽन्यसंसक्तं युद्धमासीत् सुदारुणं।
देवानां दानवानाञ्च मांसशोणितकर्द्दमं। अनयोर्द्देवलोकस्य सहसैवाभ्यदृश्यत।
तथाहि दानवा घोरा विनिघ्नन्ति दिवौकसः। ततस्तूर्य्यप्रणादाश्च भेरीणाञ्च महास्वनाः।
बभूवुर्द्दानवेन्द्राणां सिंहनादाश्च दारुणाः। अथ दैत्यबलाद्घोरान्निष्पपात महाबलः। १४५९५
दानवो महिषो नाम प्रगृह्य विपुलं गिरिं। ते तं घनैरिवादित्यं दृष्ट्वा संपरिवारितं।
तमुद्यतगिरिं राजन् व्यद्रवन्त दिवौकसः। अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिं।
पतता तेन गिरिणा देवसैन्यस्य पार्थिव। भीमरूपेण निहतमयुतं प्रापतद्भुवि।
अथ तैर्द्दानवैः सार्द्धं महिषस्त्रासयन् सुरान्। अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव।
तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः। व्यद्रवन्त रणे भीता विकीर्णायुधकेतनाः। १४६००

ततः स महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ । अभिद्रुत्य च जग्राह रुद्रस्य रथकूवरं ।
यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः । रेसतू रोदसी गाढं मुमुहुश्च महर्षयः ।
अनदंश्च महाकाया दैत्या जलधरोपमाः । आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ।
तथाभूते तु भगवान्नाहनन्महिषं रणे । सस्मार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ।
महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस्य चानदत् । देवान् संत्रासयंश्चापि दैत्यांश्चापि प्रहर्षयन् । १४९०५
ततस्तस्मिन् भये घोरे देवानां समुपस्थिते । आजगाम महासेनः क्रोधात् सूर्य इव ज्वलन् ।
लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः । लोहितास्यो महाबाहुर्हिरण्यकवचः प्रभुः ।
रथमादित्यसङ्काशमास्थितः कनकप्रभं । तं दृष्ट्वा दैत्यसेना सा व्यद्रवत् सहसा रणे ।
स चापि तां प्रज्वलितां महिषस्य विदारणीं । मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ।
सा मुक्ताऽभ्यहरत्तस्य महिषस्य शिरो महत् । पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः । १४९१०
पतता शिरसा तेन द्वारं षोडशयोजनं । पर्व्वतेनेव पिहितं तदगम्यं ततोऽभवत् ।
उत्तराः कुरवस्तेन गच्छन्त्यद्य यथासुखं । क्षिप्ता क्षिप्ता तु सा शक्तिर्हत्वा शत्रून् सहस्रशः ।
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः । प्रायः शरैर्विनिहता महासेनेन धीमता ।
शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः । स्कन्दपारिषदैर्हत्वा भक्षिताश्च सहस्रशः ।
दानवान् भक्षयन्तस्ते प्रपिबन्तश्च शोणितं । क्षणान्निर्दानवं सर्व्वमकार्षुर्भृशहर्षिताः । १४९१५
तमांसीव यथा सूर्य्यो वृक्षानग्निर्घनान् खगः । तथा स्कन्दोऽजयच्छत्रून् स्वेन वीर्य्येण कीर्त्तिमान् ।
सम्पूज्यमानस्त्रिदशैरभिवाद्य महेश्वरं । शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान् ।
नष्टशत्रुर्यदा स्कन्दः प्रयातस्तु महेश्वरं । तदाऽब्रवीन्महासेनं परिष्वज्य पुरन्दरः ।
ब्रह्मदत्तवरः स्कन्द त्वयाऽयं महिषो हतः । देवास्तृणसमा यस्य बभूवुर्जयतां वर ।
सोऽयं त्वया महाबाहो शमितो देवकण्टकः । शतं महिषतुल्यानां दानवानां महारणे । १४९२०
निहतं देवशत्रूणां यैर्वयं पूर्व्वतापिताः । तावकैर्भक्षिताश्चान्ये दानवाः शतसङ्घशः ।
अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः । एतत्ते प्रथमं देव ख्यातं कर्म्म भविष्यति ।
त्रिषु लोकेषु कीर्त्तिश्च तवाक्षय्या भविष्यति । वशगाश्च भविष्यन्ति सुरास्तव महाभुज ।
महासेनमेवमुक्त्वा निवृत्तः सह दैवतैः । अनुज्ञातो भगवता त्र्यम्बकेण शचीपतिः ।
गतो भद्रवटं रुद्रो निवृत्ताश्च दिवौकसः । उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव । १४९२५
स हत्वा दानवगणान् पूज्यमानो महर्षिभिः । एकाह्नैवाजयत् सर्व्वं त्रैलोक्यं वह्निनन्दनः ।
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः । स पुष्टिमिह सम्प्राप्य स्कन्दसालोक्यतामियात् ।
इति श्रीमहाभारते आरण्यपर्व्वणि मार्कण्डेयसमास्यापर्व्वणि स्कन्दयुद्धे त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

॥ युधिष्ठिर उवाच ॥ भगवन् श्रोतुमिच्छामि नामान्यस्य महात्मनः । त्रिषु लोकेषु यान्यस्य विख्यातानि द्विजोत्तम ।
॥ वैशम्पायन उवाच ॥ इत्युक्तः पाण्डवेयेन महात्मा ऋषिसन्निधौ । उवाच भगवांस्तत्र मार्कण्डेयो महातपाः ।

॥ मार्कण्डेय उवाच ॥ आग्नेयश्चैव स्कन्दश्च दीप्तकीर्त्तिरनामयः। मयूरकेतुर्धर्म्मात्मा भूतेशो महिषार्द्दनः। १४६२०
कामजित् कामदः कान्तः सत्यवाग्भुवनेश्वरः। शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः।
अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा। दीप्तशक्तिः प्रशान्तात्मा भद्रकृत् कूटमोहनः।
षष्ठीप्रियश्च धर्म्मात्मा पवित्रो मातृवत्सलः। कन्याभर्त्ता विभक्तश्च स्वाहेयो रेवतीसुतः।
प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः। सुव्रतो ललितश्चैव बालक्रीडनकप्रियः।
खचारी ब्रह्मचारी च शूरः शरवणोद्भवः। विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा। १४६२५
वासुदेवप्रियश्चैव प्रियः प्रियकृदेव तु। नामान्येतानि दिव्यानि कार्त्तिकेयस्य यः पठेत्। स्वर्गं कीर्त्तिं धनञ्चैव स लभेन्नात्र संशयः।

॥ मार्कण्डेय उवाच ॥ स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं शक्त्या गुहं नामभिरप्रमेयं। षडाननं शक्तिधरं सुवीरं निबोध चैतानि कुरुप्रवीर।

ब्रह्मण्यो वै ब्रह्मजो ब्रह्मविच्च ब्रह्मेशयो ब्रह्मवतां वरिष्ठः। ब्रह्मप्रियो ब्राह्मणसव्रती त्वं ब्रह्मज्ञो वै ब्राह्मणानाञ्च नेता।
स्वाहा स्वधा त्वं परमं पवित्रं मन्त्रस्तुतस्त्वं प्रथितः षडर्च्चिः। सम्वत्सरस्त्वं ऋतवश्च षड्वै मासार्द्धमासावयनं दिशश्च।
त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः सहस्रवक्त्रोऽसि सहस्रबाहुः। त्वं लोकपालः परमं हविश्च त्वं भावनः सर्व्वसुरासुराणां। १४६४०
त्वमेव सेनाधिपतिः प्रचण्डः प्रभुर्व्विभुश्चाप्यथ शत्रुजेता। सहस्रभूस्त्वं धरणी त्वमेव सहस्रतुष्टिश्च सहस्रभुक् च।
सहस्रशीर्षस्त्वमनन्तरूपः सहस्रपात्त्वं गुहशक्तिधारी। गङ्गासुतस्त्वं स्वमतेन देव स्वाहामहीकृत्तिकानान्तथैव।
त्वं क्रीडसे षण्मुख कुक्कुटेन यथेष्टनानाविधकामरूपी। दक्षोऽसि सोमो मरुतः सदैव धर्म्मोऽसि वायुरचलेन्द्र इन्द्रः।
सनातनानामपि शाश्वतस्त्वं प्रभुः प्रभूणामपि चोग्रधन्वा। ऋतस्य कर्त्ता दितिजान्तकस्त्वं जेता रिपूणां प्रवरः सुराणां।
सूक्ष्मं तपस्तत्परमं त्वमेव परावरज्ञोऽसि परावरस्त्वं। धर्म्मस्य कामस्य परस्य चैव तत्तेजसा कृत्स्नमिमं महात्मन्। १४६४५
व्याप्तं जगत् सर्व्वसुरप्रवीर शक्त्या मया संस्तुत लोकनाथ। नमोऽस्तु ते द्वादशनेत्रबाहो अतः परं वेद्मि गतिं न तेऽहं।
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः। श्रावयेद्ब्राह्मणेभ्यो यः शृणुयाद्वा द्विजेरितं।
धनमायुर्य्यशो दीप्तं पुत्त्रान् शत्रुजयन्तथा। स पुष्टितुष्टी संप्राप्य स्कन्दसालोक्यमाप्नुयात्।
इति श्रीमहाभारते आरण्यपर्व्वणि कार्त्तिकेयस्तवे एकत्रिंशदधिकद्विशततोऽध्यायः समाप्तश्च मार्कण्डेयसमास्यापर्व्व ॥ २३१ ॥

## ॥ अथ द्रौपदीसत्यभामासंवादपर्व्व॥

॥ वैशम्पायन उवाच ॥ उपासीनेषु विप्रेषु पाण्डवेषु महात्मसु। द्रौपदी सत्यभामा च विविशाते तदाश्रमं।
जाहस्यमाने सुप्रीते सुखं तत्र निषीदतुः। चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योऽन्यस्य प्रियंवदे। १४६५०
कथयामासतुश्चित्राः कथाः कुरुयदूत्थिताः। अथाब्रवीत् सत्यभामा कृष्णस्य महिषी प्रिया।
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा। केन द्रौपदि वृत्तेन पाण्डवानधितिष्ठसि।
लोकपालोपमान् वीरान् यूनः परमसंहतान्। कथञ्च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे।

तव वश्या हि सततं पाण्डवाः प्रियदर्शने । मुखप्रेक्षाश्च ते सर्व्वे तत्त्वमेतद्ब्रवीहि मे ।
व्रतचर्य्या तपो वाऽस्ति स्नानमन्त्रौषधानि वा । विद्यावीर्य्यं मूलवीर्य्यं जपहोमागदास्तथा । १४९५५
ममाद्याचक्ष्व पाञ्चालि यशस्यं भगदैवतं । येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ।
एवमुक्त्वा सत्यभामा विरराम यशस्विनी । पतिव्रता महाभागा द्रौपदी प्रत्युवाच तां ।
असत्स्त्रीणां समाचारं सत्ये मामनुपृच्छसि । असदाचरिते मार्गे कथं स्यादनुकीर्त्तनं ।
अनुप्रश्नः संशयो वा नैतत्त्वय्युपपद्यते । तथा ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया ।
यदैव भर्त्ता जानीयान्मन्त्रमूलपरां स्त्रियं । उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव । १४९६०
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखं । न जातु वशगो भर्त्ता स्त्रियाः स्यान्मन्त्रकर्म्मणा ।
अमित्रप्रहितांश्चापि गदान् परमदारुणान् । मूलप्रचारैर्हि विषं प्रयच्छन्ति जिघांसवः ।
जिह्वया यानि पुरुषस्त्वचा वाऽप्युपसेवते । तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयं ।
जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा । अपुमांसः कृताः स्त्रीभिर्जडान्धवधिरास्तथा ।
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत । न जातु विप्रियं भर्त्तुः स्त्रिया कार्य्यं कथञ्चन । १४९६५
वर्त्ताम्यहन्तु यां वृत्तिं पाण्डवेषु महात्मसु । तां सर्व्वां शृणु मे सत्यां सत्यभामे यशस्विनि ।
अहङ्कारं विहायाऽहं कामक्रोधौ च सर्व्वदा । सदारान् पाण्डवान्नित्यं प्रयतोपचराम्यहं ।
प्रणयं प्रतिसंहृत्य निधायात्मानमात्मनि । शुश्रूषुर्निरभीमाना पतीनां चित्तचारिणी ।
दुर्व्याहृताच्छङ्कमाना दुःस्थिता दुरवेक्षितात् । दुरासिताद्दुर्व्रजितादिङ्गिताध्यासितादपि ।
सूर्य्यवैश्वानरसमान् सोमकल्पान्महारथान् । सेवे चक्षुर्हनः पार्थानुग्रवीर्य्यप्रतापिनः । १४९७०
देवो मनुष्यो गन्धर्व्वो युवा चापि स्वलङ्कृतः । द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः ।
नाभुक्तवति नास्नाते नासंविष्टे च भर्त्तरि । न संविशामि नाश्नामि सदा कर्म्मकरेष्वपि ।
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्त्तारं गृहमागतं । अभ्युत्थायाभिनन्दामि आसनेनोदकेन च ।
प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी । संयता गुप्तधान्या च सुसंमृष्टनिवेशना ।
अतिरस्कृतसम्भाषा दुःस्त्रियो नानुसेवती । अनुकूलवती नित्यं भवाम्यनलसा सदा । १४९७५
अनर्म्म चापि हसितं द्वारि स्थानमभीक्ष्णशः । अवस्करे चिरं स्थानं निष्कुटेषु च वर्ज्जये ।
अतिहासातिरोषौ च क्रोधस्थानञ्च वर्ज्जये । निरताऽहं सदा सत्ये भर्त्तृणामुपसेवने ।
सर्व्वथा भर्त्तृरहितं न ममेष्टं कथञ्चन । यदा प्रवसते भर्त्ता कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता भवामि व्रतचारिणी   यच्च भर्त्ता न पिबति यच्च भर्त्ता न सेवते ।
यच्च नाश्नाति मे भर्त्ता सर्व्वं तद्वर्ज्जयाम्यहं । यथोपदेशं नियता वर्त्तमाना वराङ्गने । १४९८०
स्वलङ्कृता सुप्रयता भर्त्तुः प्रियहिते रता । ये च धर्म्माः कुटुम्बेषु श्वश्र्वा मे कथिताः पुरा ।
भिक्षाबलिः श्राद्धमिति स्थालीपाकाश्च पर्व्वसु । मान्यानां मानसत्कारा ये चान्ये विदिता मम ।
तान् सर्व्वाननुवर्त्तामि दिवारात्रमतन्द्रिता । विनयान्नियमांश्चैव सदा सर्व्वात्मना श्रिता ।

मृदून् सतः सत्यशीलान् सत्यधर्म्मानुपालिनः। आशीविषानिव क्रुद्धान् पतीन् परिचराम्यहं।
पत्याश्रयो हि मे धर्म्मो मतः स्त्रीणां सनातनः। स देवः सा गतिर्नान्या तस्य का विप्रियञ्चरेत्। १४६८५
अहं पतीन्नातिशये नात्यश्ने नातिभूषये। नापि परिवदे श्वश्रूं सर्व्वदा परियन्त्रिता।
अवधानेन सुभगे नित्योत्थिततयैव च। भर्त्तारो वशगा मह्यं गुरुशुश्रूषयैव च।
नित्यमार्य्यामहं कुन्तीं वीरसूं सत्यवादिनीं। स्वयं परिचराम्येतां पानाच्छादनभोजनैः।
नैतामतिशये जातु वस्त्रभूषणभोजनैः। नापि परिवदे चाहं तां पृथां पृथिवीसमां।
अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा। भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने। १४६९०
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः। त्रिंशद्दासीक एकैको यान् बिभर्त्ति युधिष्ठिरः।
दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतं। ह्रियते रुक्मपात्रीभिर्यतीनामूर्द्ध्वरेतसां।
तान् सर्व्वानग्रहारेण ब्राह्मणान् वेदवादिनः। यथाऽहं पूजयामि स्म पानाच्छादनभोजनैः।
शतं दासीसहस्राणि कौन्तेयस्य महात्मनः। कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः।
महार्हमाल्याभरणाः सुवर्णचन्दनोक्षिताः। मणीन् हेम च बिभ्रत्यो नृत्यगीतविशारदाः। १४६९५
तासां नाम च रूपञ्च भोजनाच्छादनानि च। सर्व्वासामेव वेदाहं कर्म्म चैव कृताकृतं।
शतं दासीसहस्राणि कुन्तीपुत्त्रस्य धीमतः। पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत।
शतमश्वसहस्राणि दश नागायुतानि च। युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः।
एतदासीत्तदा राज्ञो यन्महीं पर्य्यपालयत्। येषां सङ्ख्यां विधिञ्चैव प्रदिशामि शृणोमि च।
अन्तःपुराणां सर्व्वेषां भृत्यानाञ्चैव सर्व्वशः। आगोपालाविपालेभ्यः सर्व्वं वेद कृताकृतं। १४७००
सर्व्वं राज्ञः समुदयमायञ्च व्ययमेव च। एकाऽहं वेद्मि कल्याणि पाण्डवानां यशस्विनि।
मयि सर्व्वं समासज्य कुटुम्बं भरतर्षभाः। उपासनरताः सर्व्वे घटयन्ति वरानने।
तमहं भारमासक्तमनाधृष्यं दुरात्मभिः। सुखं सर्व्वं परित्यज्य रात्र्यहानि घटामि वै।
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिं। एकाऽहं वेद्मि कोषं वै पतीनां धर्म्मचारिणां।
अनिशायां निशायाञ्च सहाया क्षुत्पिपासयोः। आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे। १४७०५
प्रथमं प्रतिबुध्यामि चरमं संविशामि च। नित्यकालमहं सत्ये एतत् संवननं मम।
एतज्जानाम्यहं कर्त्तुं भर्त्तृसंवननं महत्। असत्स्त्रीणां समाचारन्नाहं कुर्य्यां न कामये।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा धर्म्मसहितं व्याहृतं कृष्णया तदा। उवाच सत्या सत्कृत्य पाञ्चालीं धर्म्मचारिणीं।
अभिपन्नाऽस्मि पाञ्चालि याज्ञसेनि क्षमस्व मे। कामकारः सखीनां हि सोपहासं प्रभाषितं।

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीसत्यभामासंवादपर्व्वणि द्रौपदीनिजकार्य्यकथने द्वात्रिंशदधिकद्विशततोऽध्यायः॥२३२॥

॥ द्रौपद्युवाच ॥ इमन्तु ते मार्गमपेतदोषं वक्ष्यामि चित्तग्रहणाय भर्त्तुः। अस्मिन् यथावत् सखि वर्त्तमाना भर्त्तारमाच्छेत्स्यसि कामिनीभ्यः। १४७१०
नैतादृशं दैवतमस्ति सत्ये सर्व्वेषु लोकेषु सदैवकेषु। यथा पतिस्तुष्यति सर्व्वकामा लभ्याः प्रसादात् कुपितश्च हन्यात्।

तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्युत्तमदर्शनानि । वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विपुला च कीर्त्तिः ।

सुखं सुखेनेह न जातु लभ्यं दुःखेन साध्वी लभते सुखानि । सा कृष्णमाराधय सौहृदेन प्रेम्णा च नित्यं प्रतिकर्म्मणा च ।

तथाऽशनैश्चारुभिरग्र्यमाल्यैर्दाक्षिण्ययोगैर्विविधैश्च गन्धैः । अस्याः प्रियोऽस्मीति यथा विदित्वा त्वामेव संश्लिष्यति तद्विधत्स्व ।

श्रुत्वा स्वरं द्वारगतस्य भर्त्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्वरितासनेन पाद्येन चैनं प्रतिपूजयस्व । १४०१५

सम्प्रेषितायामथ चैव दास्यामुत्थाय सर्व्वं स्वयमेव कार्य्यं । जानातु कृष्णस्तव भावमेतं सर्व्वात्मना मां भजतीति सत्ये ।

त्वत्सन्निधौ यत्कथयेत् पतिस्ते यद्यप्यगुह्यं परिरक्षितव्यं । काचित् सपत्नी तव वासुदेवं प्रत्यादिशेत्तेन भवेद्विरागः ।

प्रियांश्च रक्तांश्च हितांश्च भर्त्तुस्तान् भोजयेथा विविधैरुपायैः । द्वेष्यैरपक्षैरहितैश्च तस्य भिद्यस्व नित्यं कुहकोद्धतैश्च ।

मदं प्रमादं पुरुषेषु हित्वा संयच्छ भावं प्रतिगृह्य मौनं । प्रद्युम्नशाम्बावपि ते कुमारौ नोपासितव्यौ रहिते कदाचित् ।

महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्चपलाश्च वर्ज्याः । १४०२०

एतद्यशस्यं भगदैवतञ्च स्वर्ग्यं तथा शत्रुनिवर्हणञ्च । महार्हमाल्याभरणाङ्गरागा भर्त्तारमाराधय पुण्यगन्धा ।

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीसत्यभामासंवादपर्व्वणि द्रौपदीकर्त्तव्यकथने त्रयस्त्रिंशदधिकद्विशततोऽध्यायः ॥२३३॥

॥ वैशम्पायन उवाच ॥ मार्कण्डेयादिभिर्व्विप्रैः पाण्डवैश्च महात्मभिः । कथाभिरनुकूलाभिः सह स्थित्वा जनार्द्दनः ।

ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः । आरुरुक्षूरथं सत्यामाह्वयामास केशवः ।

सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजां । उवाच वचनं हृद्यं यथाभावं समाहितं ।

कृष्णे माभूत् तवोत्कण्ठा मा व्यथा मा प्रजागरः । भर्त्तृभिर्देवसङ्काशैर्जितां प्राप्स्यसि मेदिनीं । १४०२५

नह्येवं शीलसम्पन्ना नैवं पूजितलक्षणाः । प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे ।

अवश्यञ्च त्वया भूमिरियं निहतकण्टका । भर्त्तृभिः सह भोक्तव्या निर्द्वन्द्वेति श्रुतं मया ।

धार्त्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च । युधिष्ठिरस्थां पृथिवीं द्रक्ष्यसे द्रुपदात्मजे ।

यास्ताः प्रव्रजमानां त्वां प्राहसन् दर्पमोहिताः । ताः क्षिप्रं हतसङ्कल्पाः द्रक्ष्यसि त्वं कुरुस्त्रियः ।

तव दुःखोपपन्नाया यैराचरितमप्रियं । विद्धि संप्रस्थितान् सर्व्वास्तान् कृष्णे यमसादनं । १४०३०

पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथाविधः । श्रुतकर्म्मार्ज्जुनिश्चैव शतानीकश्च नाकुलिः ।

सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः । सर्व्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ।

अभिमन्युरिव प्रीता द्वारवत्यां रता भृशं । त्वमिवैषां सुभद्रा च प्रीत्या सर्व्वात्मना स्थिता ।

प्रीयते तव निर्द्वन्द्वा तेभ्यश्च विगतज्वरा । दुःखिता तेन दुःखेन सुखेन सुखिता तथा ।

भजेत् सर्व्वात्मना चैव प्रद्युम्नजननी तथा । भानुप्रभृतिभिश्चैतान् विशिनष्टि च केशवः । १४०३५

भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः । रामप्रभृतयः सर्व्वे भजन्त्यन्धकवृष्णयः ।

तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भाविनि । एवमादिप्रियं सत्यं हृद्यमुक्त्वा मनोऽनुगं ।

गमनाय मनश्चक्रे वासुदेवरथं प्रति । तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणं ।

आरुरोह रथं शौरेः सत्यभामाऽथ भाविनी। स्मयित्वा तु यदुश्रेष्ठा द्रौपदीं परिसान्त्व्य च।
उपावर्त्त्य ततः शीघ्रैर्हयैः प्रायात् पुरं स्वकं। १४०४०

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीसत्यभामासंवादपर्व्वणि सत्यभामागमने चतुस्त्रिंशदधिकद्विशततोऽध्यायः
॥ २३४ ॥ समाप्तञ्च द्रौपदीसत्यभामासंवादपर्व्व ॥

## अथ घोषयात्रापर्व्व ॥ १० ॥

॥ जनमेजय उवाच ॥ एवं वने वर्त्तमाना नराग्र्याः शीतोष्णवातातपकर्षिताङ्गाः। सरस्तदासाद्य वनञ्च पुण्यं ततः परं किमकुर्व्वन्त पार्थाः।

॥ वैशम्पायन उवाच ॥ सरस्तदासाद्य तु पाण्डुपुत्त्रा जनं समुत्सृज्य विधाय वेश्म। वनानि रम्याण्यथ पर्व्वतांश्च नदीप्रदेशांश्च तदा विचेरुः।

तथा वने तान् वसतः प्रवीरान् स्वाध्यायवन्तश्च तपोधनाश्च। अभ्याययुर्वेदविदः पुराणास्तान् पूजयामासुरथो नराग्र्याः।
ततः कदाचित् कुशलः कथासु विप्रोऽभ्यगच्छद्भुवि कौरवेयान्। स तैः समेत्याथ यदृच्छयैव वैचित्त्रवीर्य्यं नृपमभ्यगच्छत्।
अथोपविष्टः प्रतिसत्कृतश्च वृद्धेन राज्ञा कुरुसत्तमेन। प्रचोदितः संकथयाम्बभूव धर्म्मानिलेन्द्रप्रभवान् यमौ च। १४०४५
कृशांश्च वातातपकर्षिताङ्गान् दुःखस्य चोग्रस्य मुखे प्रपन्नान्। तां चाप्यनाथामिव वीरनाथां कृष्णां परिक्लेशगुणेन युक्तां।
ततः कथास्तस्य निशम्य राजा वैचित्त्रवीर्य्यः कृपयाऽभितप्तः। वने तथा पार्थिवपुत्त्रपौत्त्रान् श्रुत्वा तथा दुःखनदीं प्रपन्नान्।
प्रोवाच दैन्याभिहतान्तरात्मा निःश्वासवातोपहतस्तदानीं। वाचं कथञ्चित् स्थिरतामुपेत्य तत्सर्व्वमात्मप्रभवं विचिन्त्य।
कथन्नु सत्यः शुचिरार्य्यवृत्तो ज्येष्ठः सुतानां मम धर्म्मराजः। अजातशत्रुः पृथिवीतले स्म शेते पुरा राङ्कवकूटशायी।
प्रबोध्यते मागधसूतपूगैर्नित्यं स्तुवद्भिः स्वयमिन्द्रकल्पः। पतत्त्रिसंघैः स जघन्यरात्रे प्रबोध्यते नूनमिडातलस्थः। १४०५०
कथन्नु वातातपकर्षिताङ्गो वृकोदरः कोपपरिप्लुताङ्गः। शेते पृथिव्यामतथोचिताङ्गः कृष्णासमक्षं वसुधातलस्थः।
तथाऽर्जुनः सुकुमारो मनस्वी वशे स्थितो धर्म्मसुतस्य राज्ञः। विदूयमानैरिव सर्व्वगात्रैर्ध्रुवं न शेते वसतीरमर्षात्।
यमौ च कृष्णाञ्च युधिष्ठिरञ्च भीमञ्च दृष्ट्वा सुखविप्रयुक्तं। विनिःश्वसन् सर्प इवोग्रतेजा ध्रुवं न शेते वसतीरमर्षात्।
तथा यमौ चाप्यसुखौ सुखार्हौ समृद्धरूपावमरौ दिवीव। प्रजागरस्थौ ध्रुवमप्रशान्तौ धर्म्मेण सत्येन च वार्य्यमाणौ।
समीरणेनाथ समो बलेन समीरणस्यैव सुतो बलीयान्। स धर्म्मपाशेन सितोऽग्रजेन ध्रुवं विनिःश्वस्य सहत्यमर्षं। १४०५५
स चापि भूमौ परिवर्त्तमानो वधं सुतानां मम काङ्क्षमाणः। सत्येन धर्म्मेण च वार्य्यमाणः कालं प्रतीक्षत्यधिको रणेऽन्यैः।
अजातशत्रौ तु जिते निकृत्या दुःशासनो यत्परुषाण्यवोचत्। तानि प्रविष्टानि वृकोदराङ्गं दहन्ति कक्षाग्निरिवेन्धनानि।
न पापकं ध्यास्यति धर्म्मपुत्त्रो धनञ्जयश्चाप्यनुवत्स्यते तं। अरण्यवासेन विवर्द्धते तु भीमस्य कोपाग्निरिवानिलेन।
स तेन कोपेन विदह्यमानः करं करेणाभिनिपीड्य वीरः। विनिःश्वसत्युष्णमतीव घोरं दहन्निवेमान्मम पुत्त्रपौत्त्रान्।
गाण्डीवधन्वा च वृकोदरश्च संरम्भिणावन्तककालकल्पौ। न शेषयेतां युधि शत्रुसेनां शरान् किरन्तावशनिप्रकाशान्। १४०६०
दुर्य्योधनः शकुनिः सूतपुत्त्रो दुःशासनश्चापि सुमन्दचेताः। मधु प्रपश्यन्ति न तु प्रपातं यद्द्यूतमाश्रित्य हरन्ति राज्यं।
शुभाशुभं कर्म्म नरो हि कृत्वा प्रतीक्षते तस्य फलं स्म कर्त्ता। स तेन मुच्यत्यवशः फलेन मोक्षः कथं स्यात् पुरुषस्य तस्मात्।

क्षेत्रे सुकृष्टे ह्युपिते च बीजे देवे च वर्षत्यृतुकालयुक्तं। न स्यात् फलं तस्य कुतः प्रसिद्धिरन्यत्र दैवादिति चिन्तयामि।
कृतं मताक्षेण यथा न साधु साधुप्रवृत्तेन च पाण्डवेन। मया च दुर्बुद्धिवशानुगेन यस्मात् कुरूणामयमन्तकालः।
ध्रुवं प्रवास्यत्यसमीरितोऽपि ध्रुवं प्रजास्यत्युत गर्भिणी या। ध्रुवं दिनादौ रजनीप्रणाशस्तथा क्षपादौ च दिनप्रणाशः। १४०१२
क्रियेत कस्मादपरे च कुर्य्युर्वित्तं न दद्युः पुरुषाः कथञ्चित्। प्राप्यार्थकालञ्च भवेदनर्थः कथं नु तत् स्यादिति तत् कुतः स्यात्।
कथन्नु भिद्येत न च स्रवेत न च प्रसिच्येदिति रक्षितव्यं। अरक्ष्यमाणं शतधा प्रकीर्य्येत् ध्रुवं न नाशोऽस्ति कृतस्य लोके।
गतो ह्यरण्यादपि शक्रलोकं धनञ्जयः पश्यत वीर्य्यमस्य। अस्त्राणि दिव्यानि चतुर्विधानि ज्ञात्वा पुनर्लोकमिदं प्रपन्नः।
स्वर्गं हि गत्वा सशरीर एव को मानुषः पुनरागन्तुमिच्छेत्। अन्यत्र कालोपहताननेकान् समीक्षमाणस्तु कुरून् मुमू
र्षून्।
धनुर्ग्राहश्चार्ज्जुनः सव्यसाची धनुश्च तद्गाण्डिवं भीमवेगं। अस्त्राणि दिव्यानि च तानि तस्य त्रयस्य तेजः प्रसहेत
कोऽत्र। १४०२०
निशम्य तद्वचनं पार्थिवस्य दुर्य्योधनं रहिते सौबलोऽथ। अबोधयत् कर्णमुपेत्य सर्व्वं स चाप्यहृष्टोऽभवदल्पचेताः।
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि धृतराष्ट्रखेदवाक्ये पञ्चत्रिंशदधिकद्विशततमोऽध्यायः॥ २३५ ॥

॥ वैशम्पायन उवाच ॥ धृतराष्ट्रस्य तद्वाक्यं निशम्य शकुनिस्तदा। दुर्य्योधनमिदं काले कर्णेन सहितोऽब्रवीत्।
प्रव्राज्य पाण्डवान् वीरान् स्वेन वीर्य्येण भारत। भुङ्क्ष्वेमां पृथिवीमेको दिवि शम्बरहा यथा।
प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्यवासिनः। कृताः करप्रदाः सर्व्वे राजानस्ते नराधिप।
या हि सा दीप्यमानेव पाण्डवानभजत् पुरा। साऽद्य लक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिः सह। १४०२५
इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे। अपश्याम श्रियं राजन् दृश्यते सा तवाद्य वै।
शत्रवस्तव राजेन्द्र न चिरं शोककर्षिताः। सा तु बुद्धिबलेनेयं राजन्नाप्ता युधिष्ठिरात्।
त्वया चिरात् महाबाहो दीप्यमानेव दृश्यते। तथैव तव राजेन्द्र राजानः परवीरहन्।
शासनेऽधिष्ठिताः सर्व्वे किं कुर्म इतिवादिनः। तवेयं पृथिवी राजन् निखिला सागराम्बरा।
सपर्व्वतवना देवी सग्रामनगराकरा। नानावनोद्देशवती पर्व्वतैरुपशोभिता। १४०३०
वन्द्यमानो द्विजै राजन् पूज्यमानश्च राजभिः। पौरुषाद्दिवि देवेषु भ्राजसे रश्मिवानिव।
रुद्रैरिव यमो राजा मरुद्भिरिव वासवः। कुरुभिस्त्वं वृतो राजन् भासि नक्षत्रराडिव।
यैः स्म ते नाद्रियेताज्ञा न च ते शासने स्थिताः। पश्यामस्तान् श्रिया हीनान् पाण्डवान् वनवासिनः।
श्रूयते च महाराज सरो द्वैतवनं प्रति। वसन्तः पाण्डवाः सार्द्धं ब्राह्मणैर्वनवासिभिः।
स प्रयाहि महाराज श्रिया परमया युतः। तापयन् पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा। १४०३५
स्थितो राज्ये च्युतान् राज्याच्छ्रिया हीनाञ्छ्रियावृतः। असमृद्धान् समृद्धार्थः पश्य पाण्डुसुतान्नृप।
महाभिजनसम्पन्नं भद्रे महति संस्थितं। पाण्डवास्त्वाऽभिवीक्षन्तु ययातिमिव नाहुषं।
यां श्रियं सुहृदश्चैव दुर्हृदश्च विशाम्पते। पश्यन्ति पुरुषे दीप्तां सा समर्था भवत्युत।
समस्थो विषमस्थान् हि दुर्हृदो योऽभिवीक्षते। जगतीस्थानिवाद्रिस्थः किमतः परमं सुखं।

न पुत्रधनलाभेन न राज्येनापि विन्दति। प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात्। १४७९०
किन्तु तस्य सुखं न स्यादाश्रमे यो धनञ्जयं। अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससं।
सुवाससो हि ते भार्य्या वल्कलाजिनसंवृतां। पश्यन्तु दुःखितां कृष्णां सा च निर्व्विद्यतां पुनः।
विनिन्दतां तथात्मानं जीवितञ्च धनच्युतं। न तथा हि सभामध्ये तस्या भवितुमर्हति।
वैमनस्यं यथा दृष्ट्वा तव भार्य्याः स्वलङ्कृताः।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु राजानं कर्णः शकुनिना सह। तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय। १४७९५
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णशकुनिवाक्ये षट्त्रिंशदधिकद्विशतोऽध्यायः ॥ २३६ ॥
॥ वैशम्पायन उवाच ॥ कर्णस्य वचनं श्रुत्वा राजा दुर्य्योधनस्ततः। हृष्टो भूत्वा पुनर्दीन इदं वचनमब्रवीत्।
ब्रवीषि यदिदं कर्ण सर्व्वं मनसि मे स्थितं। न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः।
परिदेवति तान् वीरान् धृतराष्ट्रो महीपतिः। मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान्।
अथ वाऽप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितं। एवमप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति।
न हि द्वैतवने किञ्चिद्विद्यतेऽन्यत् प्रयोजनं। उत्सादनमृते तेषां वनस्थानां महाद्युते। १४८००
जानासि हि यथा क्षत्ता द्यूतकाल उपस्थिते। अब्रवीद्यच्च मां त्वाञ्च सौबलञ्च वचनं तदा।
तानि सर्व्वाणि वाक्यानि यच्चान्यत् परिदेवितं। विचिन्त्य नाधिगच्छामि गमनायेतराय वा।
ममापि हि महान् हर्षो यदहं भीमफाल्गुनौ। क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति।
न तथा प्राप्नुयां प्रीतिमवाप्य वसुधामिमां। दृष्ट्वा यथा पाण्डुसुतान् वल्कलाजिनवाससः।
किन्तु स्यादधिकं तस्माद्यदहं द्रुपदात्मजां। द्रौपदीं कर्ण पश्येयं काषायवसनां वने। १४८०५
यदि मां धर्म्मराजश्च भीमसेनश्च पाण्डवः। युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत्।
उपायं न तु पश्यामि येन गच्छेम तद्वनं। यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः।
स सौबलेन सहितस्तथा दुःशासनेन च। उपायं पश्य निपुणं येन गच्छेम तद्वनं।
अहमप्यद्य निश्चित्य गमनायेतराय च। कल्यमेव गमिष्यामि समीपं पार्थिवस्य ह।
मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे। उपायो यो भवेद्दृष्टस्तं ब्रूयाः सहसौबलः। १४८१०
वचो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति। व्यवसायं करिष्येऽहमनुनीय पितामहं।
तथेत्युक्त्वा तु ते सर्व्वे जग्मुरावसथान् प्रति। व्युषितायां रजन्यान्तु कर्णो राजानमभ्ययात्।
ततो दुर्य्योधनं कर्णः प्रहसन्निदमब्रवीत्। उपायः परिदृष्टोऽयं तन्निबोध जनेश्वर।
घोषा द्वैतवने सर्व्वे त्वत्प्रतीक्षा नराधिप। घोषयात्रापदेशेन गमिष्यामो न संशयः।
उचितं हि सदा गन्तुं घोषयात्रां विशाम्पते। एवञ्च त्वां पिता राजन् समनुज्ञातुमर्हति। १४८१५
तथा कथयमानौ तु घोषयात्राविनिश्चयं। गान्धारराजः शकुनिः प्रत्युवाच हसन्निव।
उपायोऽयं मया दृष्टो गमनाय निरामयः। अनुज्ञास्यति नो राजा चोदयिष्यति चाप्युत।
घोषा द्वैतवने सर्व्वे त्वत्प्रतीक्षा नराधिप। घोषयात्रापदेशेन गमिष्यामो न संशयः।

ततः प्रहर्षिताः सर्व्वे तेऽन्योन्यस्य तलान् ददुः। तदेव च विनिश्चित्य ददृशुः कुरुसत्तमं।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि घोषयात्रामन्त्रणे सप्तत्रिंशदधिकद्विशततमोऽध्यायः॥ २३७ ॥

॥ वैशम्पायन उवाच ॥ धृतराष्ट्रं ततः सर्व्वे ददृशुर्जनमेजय। पृष्ट्वा सुखमथो राज्ञः पृष्टा राज्ञा च भारत। १४८२०

ततस्तैर्विहितः पूर्व्वं समङ्गो नाम वल्लवः। समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत्।

अनन्तरञ्च राधेयः शकुनिश्च विशाम्पते। आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपं।

रमणीयेषु देशेषु घोषाः संप्रति कौरव। स्मारणे समयः प्राप्तो वत्सानामपि चाङ्कनं।

मृगया चोदिता राजन्नस्मिन् काले सुतस्य ते। दुर्य्योधनस्य गमनं समनुज्ञातुमर्हसि।

॥ धृतराष्ट्र उवाच ॥ मृगया शोभना तात गवां हि समवेक्षणं। विश्रम्भस्तु न गन्तव्यो वल्लवानामिति स्मरे। १४८२५

ते तु तत्र नरव्याघ्राः समीप इति नः श्रुतं। अतो नाभ्यनुजानामि गमनं तत्र वः स्वयं।

छद्मना निर्ज्जितास्ते तु कर्षिताश्च महावने। तपोनित्याश्च राधेय समर्थाश्च महारथाः।

धर्म्मराजो न संक्रुध्येद्भीमसेनस्त्वमर्षणः। यज्ञसेनस्य दुहिता तेज एव तु केवलं।

यूयञ्चाप्यपराध्येयुर्दर्पमोहसमन्विताः। ततो विनिर्द्दहेयुस्ते तपसा हि समन्विताः।

अथ वा सायुधा वीरा मन्युनाऽभिपरिप्लुताः। सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा। १४८३०

अथ यूयं बहुत्वात्तानाक्षिपन्तः कथञ्चन। अनार्य्यं परमं तत् स्यादशक्यं तच्च वै मतं।

उषितो हि महाबाहुरिन्द्रलोके धनञ्जयः। दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनं।

अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा। किं पुनः स कृतास्त्रोऽद्य न हन्याद्वो महारथः।

अथ वा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ। उद्विग्नवासो विश्रम्भाद्दुःखं तत्र भविष्यति।

अथवा सैनिकाः केचिदपकुर्य्युर्युधिष्ठिरं। तदबुद्धिकृतं कर्म्म दोषमुत्पादयेच्च वः। १४८३५

तस्माद्गच्छन्तु पुरुषाः स्मारणायाप्तकारिणः। न स्वयं तत्र गमनं रोचये तव भारत।

॥ शकुनिरुवाच ॥ धर्म्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातञ्च संसदि। तेन द्वादश वर्षाणि वस्तव्यानीति भारत।

अनुवृत्ताश्च ते सर्व्वे पाण्डवा धर्म्मचारिणः। युधिष्ठिरस्तु कौन्तेयो न नः कोपं करिष्यति।

मृगयाञ्चैव नो गन्तुमिच्छा संवर्त्तते भृशं। स्मारणन्तु चिकीर्षामो न तु पाण्डवदर्शनं।

न चानार्य्यसमाचारः कश्चित्तत्र भविष्यति। न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः। १४८४०

॥ वैशम्पायन उवाच ॥ एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः। दुर्य्योधनं सहामात्यमनुजज्ञे न कामतः।

अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा। निर्ययौ भरतश्रेष्ठो बलेन महता वृतः।

दुःशासनेन च तथा सौबलेन च धीमता। संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः।

तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः। पौराश्चानुययुः सर्व्वे सहदारा वनञ्च तत्।

अष्टौ रथसहस्राणि त्रीणि नागायुतानि च। पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः। १४८४५

शकटापणवेशाश्च वणिजो वन्दिनस्तथा। नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः।

ततः प्रयाणे नृपतेः सुमहानभवत् स्वनः। प्रावृषीव महावायोरुद्धतस्य विशाम्पते।

गव्यूतिमात्रे न्यवसद्राजा दुर्य्योधनस्तदा। प्रयातो वाहनैः सर्व्वैस्ततो द्वैतवनं सरः।
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनद्वैतवनगमने अष्टत्रिंशदधिकद्विशततोऽध्यायः॥२३८॥
॥ वैशम्पायन उवाच ॥ अथ दुर्य्योधनो राजा तत्र तत्र वने वसन्। जगाम घोषानभितस्तत्र चक्रे निवेशनं।
रमणीये समाज्ञाते सोदके समहीरुहे। देशे सर्व्वगुणोपेते चक्रुरावसथान्नराः। १४७५०
तथैव तत्समीपस्थान् पृथगावसथान् बहून्। कर्णस्य शकुनेश्चैव भ्रातॄणाञ्चैव सर्व्वशः।
ददर्श स तदा गावः शतशोऽथ सहस्रशः। अङ्कैर्लक्षैश्च ताः सर्व्वाः लक्षयामास पार्थिवः।
अङ्कयामास वत्सांश्च जज्ञे चोपसृतांस्त्वपि। बालवत्साश्च या गावः कालयामास ता अपि।
अथ संस्मारणं कृत्वा लक्षयित्वा त्रिहायणान्। वृतो गोपालकैः प्रीतो व्यहरत् कुरुनन्दनः।
स च पौरजनः सर्व्वः सैनिकाश्च सहस्रशः। यथोपजोषञ्चिक्रीडुर्व्वने तस्मिन् यथाऽमराः। १४७५५
ततो गोपाः प्रगातारः कुशला नृत्यवादने। धार्त्तराष्ट्रमुपातिष्ठन् कन्याश्चैव स्वलङ्कृताः।
स स्त्रीगणावृतो राजा प्रहृष्टः प्रददौ वसु। तेभ्यो यथाऽर्हमन्नानि पानानि विविधानि च।
ततस्ते सहिताः सर्व्वे तरक्षून् महिषान् मृगान्। गवयर्क्षवराहांश्च समन्तात् पर्य्यकालयन्।
स तान् शरैर्विनिर्भिद्य गजांश्च सुबहून् वने। रमणीयेषु देशेषु ग्राहयामास वै मृगान्।
गोरसानुपयुञ्जान उपभोगांश्च भारत। पश्यन् स रमणीयानि वनान्युपवनानि च। १४७६०
मत्तभ्रमरजुष्टानि वर्हिणाभिरुतानि च। अगच्छदानुपूर्व्व्येण पुण्यं द्वैतवनं सरः।
मत्तभ्रमरसंजुष्टं नीलकण्ठरवाकुलं। सप्तच्छदसमाकीर्णं पुन्नागवकुलैर्युतं।
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत्। यदृच्छया च तत्रस्थो धर्म्मपुत्त्रो युधिष्ठिरः।
ईजे राजर्षियज्ञेन साद्यस्केन विशाम्पते। दिव्येन विधिना चैव वन्येन कुरुसत्तम।
कृत्वा निवेशमभितः सरसस्तस्य कौरव। द्रौपद्या सहितो धीमान् धर्म्मपत्न्या नराधिपः। १४७६५
ततो दुर्य्योधनः प्रेष्यानादिदेश सहस्रशः। आक्रीडावसथाः क्षिप्रं क्रियन्तामिति भारत।
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः। चिकीर्षन्तस्तदाक्रीडान् जग्मुर्द्वैतवनं सरः।
प्रविशन्तं वनं द्वारि गन्धर्व्वाः समवारयन्। सेनाग्रं धार्त्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः।
तत्र गन्धर्व्वराजो वै पूर्व्वमेव विशाम्पते। कुवेरभवनाद्राजन्नाजगाम गणावृतः।
गणैरप्सरसाञ्चैव त्रिदशानां तथात्मजैः। विहारशीलः क्रीडार्थं तेन तत् संवृतं सरः। १४७७०
तेन तत् संवृतं दृष्ट्वा ते राजपरिचारकाः। प्रतिजग्मुस्ततो राजन् यत्र दुर्य्योधनो नृपः।
स तु तेषां वचः श्रुत्वा सैनिकान् युद्धदुर्म्मदान्। प्रेषयामास कौरव्य उत्सारयत तानिति।
तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः। सरो द्वैतवनं गत्वा गन्धर्व्वानिदमब्रुवन्।
राजा दुर्य्योधनो नाम धृतराष्ट्रसुतो बली। विजिहीर्षुरिहायाति तदर्थमुपसर्पत। १४७७५
एवमुक्तास्तु गन्धर्व्वाः प्रहसन्तो विशाम्पते। प्रत्यब्रुवंस्तान् पुरुषानिदं हि परुषं वचः।
न चेतयति वो राजा मन्दबुद्धिः सुयोधनः। योऽस्मानाज्ञापयत्येवं वैश्यानिव दिवौकसः।

यूयं मुमूर्षवश्चापि मन्दप्रज्ञा न संशयः । ये तस्य वचनादेवमस्मान् ब्रूत विचेतसः ।
गच्छध्वं त्वरिताः सर्व्वे यत्र राजा स कौरवः । न चेदद्यैव गच्छध्वं धर्म्मराजनिवेशनं ।
एवमुक्तास्तु गन्धर्व्वै राज्ञः सेनाग्रयायिनः । सम्प्राद्रवन् यतो राजा धृतराष्ट्रसुतोऽभवत् ।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि गन्धर्व्वदुर्य्योधनसेनासंवादे एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ‖ २३९ ‖

‖ वैशम्पायन उवाच ‖ ततस्ते सहिताः सर्व्वे दुर्य्योधनमुपागमन् । अब्रुवंश्च महाराज यदूचुः कौरवान् प्रति । १४८८०
गन्धर्व्वैर्व्वारिते सैन्ये धार्त्तराष्ट्रः प्रतापवान् । अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत ।
शासतैतानधर्म्मज्ञान्मम विप्रियकारिणः । यदि प्रक्रीडते सर्व्वैर्देवैः सह शतक्रतुः ।
दुर्य्योधनवचः श्रुत्वा धार्त्तराष्ट्रा महाबलाः । सर्व्व एवाभिसन्नद्धा योधाश्चापि सहस्रशः ।
ततः प्रमथ्य सर्व्वांस्तांस्तद्वनं विविशुर्ब्बलात् । सिंहनादेन महता पूरयन्तो दिशो दश ।
ततोऽपरैरवार्य्यन्त गन्धर्व्वैः कुरुसैनिकाः । ते वार्य्यमाणा गन्धर्व्वैः साम्नैव वसुधाधिप । १४८८५
ताननादृत्य गन्धर्व्वांस्तद्वनं विविशुर्म्महत् । यदा वाचा न तिष्ठन्ति धार्त्तराष्ट्राः सराजकाः ।
ततस्ते खेचराः सर्व्वे चित्रसेने न्यवेदयन् । गन्धर्व्वराजस्तान् सर्व्वानब्रवीत् कौरवान् प्रति ।
अनार्य्यान् शासतेत्येतांश्चित्रसेनो ह्यमर्षणः । अनुज्ञाताश्च गन्धर्व्वाश्चित्रसेनेन भारत ।
प्रगृहीतायुधाः सर्व्वे धार्त्तराष्ट्रानभिद्रवन् । तान् दृष्ट्वापततः शीघ्रान् गन्धर्व्वानुद्यतायुधान् ।
प्राद्रवंस्ते दिशः सर्व्वे धार्त्तराष्ट्रस्य पश्यतः । तान् दृष्ट्वा द्रवतः सर्व्वान् धार्त्तराष्ट्रान् पराङ्मुखान् । १४८९०
राधेयस्तु तदा वीरो नासीत्तत्र पराङ्मुखः । आपतन्तीन्तु संप्रेक्ष्य गन्धर्व्वाणां महाचमूं ।
महता शरवर्षेण राधेयः प्रत्यवारयत् । क्षुरप्रैर्व्विशिखैर्भल्लैर्व्वत्सदन्तैस्तथायसैः ।
गन्धर्व्वाञ्छतशोऽभिघ्नल्लघुत्वात् सूतनन्दनः । पातयन्नुत्तमाङ्गानि गन्धर्व्वाणां महारथः ।
क्षणेन व्यधमत् सर्व्वां चित्रसेनस्य वाहिनीं । ते वध्यमाना गन्धर्व्वाः सूतपुत्रेण धीमता ।
भूय एवाभ्यवर्त्तन्त शतशोऽथ सहस्रशः । गन्धर्व्वभूता पृथिवी क्षणेन समपद्यत । १४८९५
आपतद्भिर्म्महावेगैश्चित्रसेनस्य सैनिकैः । अथ दुर्य्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः । न्यहनंस्तत्तदा सैन्यं रथैर्गरुडनिःस्वनैः ।
भूयश्च योधयामासुः कृत्वा कर्णमथाग्रतः । महता रथसंघेन रथचारेण चाप्युत ।
वैकर्त्तनं परीप्सन्तो गन्धर्व्वान् समवाकिरन् । ततः संन्यपतन् सर्व्वे गन्धर्व्वाः कौरवैः सह ।
तदा सुतुमुलं युद्धमभवल्लोमहर्षणं । ततस्ते मृदवोऽभूवन् गन्धर्व्वाः शरपीडिताः । १४९००
उच्चुक्रुशुश्च कौरव्या गन्धर्व्वान् प्रेक्ष्य पीडितान् । गन्धर्व्वांस्त्रासितान् दृष्ट्वा चित्रसेनो ह्यमर्षणः ।
उत्पपातासनात् क्रुद्धो वधे तेषां समाहितः । ततो मायास्त्रमास्थाय युयुधे चित्रमार्गवित् ।
तयाऽमुह्यन्त कौरव्याश्चित्रसेनस्य मायया । एकैकश्च तदा योधा धार्त्तराष्ट्रस्य भारत ।
पर्य्यवर्त्तत गन्धर्व्वैर्दशभिर्दशभिः सह । ततः संपीड्यमानास्ते बलेन महता तदा ।

प्राद्रवन्त रणे भीता ये च राजन् जिजीषवः। भज्यमानेष्वनीकेषु धार्त्तराष्ट्रेषु सर्व्वशः। १४९०५
कर्णो वैकर्त्तनो राजंस्तस्थौ गिरिरिवाचलः। दुर्य्योधनश्च कर्णश्च शकुनिश्चापि सौबलः।
गन्धर्व्वान् योधयामासुः समरे भृशविक्षताः। सर्व्व एव तु गन्धर्व्वाः शतशोऽथ सहस्रशः।
जिघांसमानाः सहिताः कर्णमभ्यद्रवद्रणे। असिभिः पट्टिशैः शूलैर्गदाभिश्च महाबलाः।
सूतपुत्रं जिघांसन्तः समन्तात् पर्य्यवाकिरन्। अन्येऽस्य युगमच्छिन्दन् ध्वजमन्ये न्यपातयन्।
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन्। अन्ये छत्रं वरूथञ्च बन्धुरञ्च तथाऽपरे। १४९१०
गन्धर्व्वा बहुसाहस्रास्तिलशो व्यधमन्रथं। ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्म्मभृत्।
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत्।
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णरणभङ्गेचत्वारिंशदधिकद्विशततोऽध्यायः॥ २४०॥
॥ वैशम्पायन उवाच॥ गन्धर्व्वैस्तु महाराज भग्ने कर्णे महारथे। सम्प्राद्रवच्चमूः सर्व्वा धार्त्तराष्ट्रस्य पश्यतः।
तान् दृष्ट्वा द्रवतः सर्व्वान् धार्त्तराष्ट्रान् पराङ्मुखान्। दुर्य्योधनो महाराजो नासीत्तत्र पराङ्मुखः।
तामापतन्तीं सम्प्रेक्ष्य गन्धर्व्वाणां महाचमूं। महता शरवर्षेण सोऽभ्यवर्षदरिन्दमः। १४९१५
अचिन्त्य शरवर्षन्तु गन्धर्व्वास्तस्य तं रथं। दुर्य्योधनं जिघांसन्तः समन्तात् पर्य्यवारयन्।
युगमीषां वरूथञ्च तथैव ध्वजसारथी। अश्वांस्त्रिवेणुं तल्पञ्च तिलशो व्यधमञ्छरैः।
दुर्य्योधनं चित्रसेनो विरथं पतितं भुवि। अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत्।
तस्मिन् गृहीते राजेन्द्र स्थितं दुःशासनं रथे। पर्य्यगृह्णन्त गन्धर्व्वाः परिवार्य्य समन्ततः।
विविंशतिं चित्रसेनावादायान्ये विदुद्रुवुः। विन्दानुविन्दावपरे राजदारांश्च सर्व्वशः। १४९२०
सैन्यं तद्धार्त्तराष्ट्रस्य गन्धर्व्वैः समभिद्रुतं। पूर्व्वप्रभग्नाःसहिताः पाण्डवानभ्ययुस्तदा।
शकटापणवेशाश्च यानयुग्यञ्च सर्व्वशः। शरणं पाण्डवान् जग्मुर्ह्रियमाणे महीपतौ।
॥ सैनिका ऊचुः॥ प्रियदर्शी महाबाहो धार्त्तराष्ट्रो महाबलः। गन्धर्व्वैर्ह्रियते राजा पार्थास्तमनुधावत।
दुःशासनो दुर्व्विषहो दुर्म्मुखो दुर्ज्जयस्तथा। बद्धा ह्रियन्ते गन्धर्व्वै राजदाराश्च सर्व्वशः।
इति दुर्य्योधनामात्याः क्रोशन्तो राजगृद्धिनः। आर्त्ता दीनास्ततः सर्व्वे युधिष्ठिरमुपागमन्। १४९२५
तांस्तथा व्यथितान् दीनान् भिक्षमाणान् युधिष्ठिरं। वृद्धान् दुर्य्योधनामात्यान् भीमसेनोऽभ्यभाषत।
महता हि प्रयत्नेन सन्नह्य गजवाजिभिः। अस्माभिर्यदनुष्ठेयं गन्धर्व्वैस्तदनुष्ठितं।
अन्यथा वर्त्तमानानामर्थो जातोऽयमन्यथा। दुर्म्मन्त्रितमिदं तावद्राज्ञो दुर्द्यूतदेविनः।
द्वेष्टारमन्ये क्लीबस्य पातयन्तीति नः श्रुतं। इदं कृतन्नः प्रत्यक्षं गन्धर्व्वैरतिमानुषं।
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः। येनास्माकं हृतो भार आसीनानां सुखावहः। १४९३०
शीतवातातपसहांस्तपसा चैव कर्षितान्। समस्थो विषमस्थान् हि द्रष्टुमिच्छति दुर्म्मतिः।
अधर्म्मचारिणस्तस्य कौरव्यस्य दुरात्मनः। ये शीलमनुवर्त्तन्ते ते पश्यन्ति पराभवं।
अधर्म्मो हि कृतस्तेन येनैतदुपशिक्षितं। अनृशंसास्तु कौन्तेयास्तत्प्रत्यक्षं ब्रवीमि वः।

एवं ब्रुवाणं कौन्तेयं भीमसेनमपस्वरं । न कालः परुषस्यायमिति राजाऽभ्यभाषत ।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनपराभवे एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

॥ युधिष्ठिर उवाच ॥ अस्मानभिगतांस्तात भयार्त्ताञ्छरणैषिणः । कौरवान् विषमप्राप्तान् कथं ब्रूयास्त्वमीदृशं । १४९२५

भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर । प्रसक्तानि च वैराणि कुलधर्म्मो न नश्यति ।

यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलं । न मर्षयन्ति तत् सन्तो बाह्येनाभिप्रधर्षणं ।

जानात्येष हि दुर्ब्बुद्धिरस्मानिह चिरोषितान् । स एवं परिभूयास्मानकार्षीदिदमप्रियं ।

दुर्य्योधनस्य ग्रहणात् गन्धर्व्वेण बलात् प्रभो । स्त्रीणां बाह्याभिमर्षाच्च हतं भवति नः कुलं ।

शरणञ्च प्रपन्नानां त्राणार्थञ्च कुलस्य च । उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत माचिरं । १४९३०

अर्ज्जुनश्च यमौ चैव त्वञ्च वीरापराजितः । मोक्षयध्वं नरव्याघ्रा ह्रियमाणं सुयोधनं ।

एते रथा नरव्याघ्राः सर्व्वशस्त्रसमन्विताः । धृतराष्ट्रस्य पुत्त्राणां विमलाः काञ्चनध्वजाः ।

सम्पन्नानधिरोहध्वं नित्यसज्जानिमान् रथान् । इन्द्रसेनादिभिः सूतैः कृतास्त्रैरधिष्ठितान् ।

एतानास्थाय वै यत्ता गन्धर्व्वान् योद्धुमाहवे । सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ।

य एव कश्चिद्राजन्यः शरणार्थमिहागतं । परं शक्त्याऽभिरक्षेत किं पुनस्त्वं वृकोदर । १४९३५

क इहान्यो भवेत्त्राणमभिधावेति चोदितः । प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवं ।

वरदानञ्च राज्यञ्च पुत्त्रजन्म च पाण्डवाः । शत्रोश्च मोक्षणं क्लेशात् त्रीणि चैकञ्च तत्समं ।

किञ्चाप्यधिकमेतस्मात् यदापन्नः सुयोधनः । त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गते ।

स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर । विततो मे क्रतुर्व्वीर न हि मेऽत्र विचारणा ।

सान्त्वेनैव तु यथा भीम मोक्षयेथाः सुयोधनं । तथा सर्व्वैरुपायैस्त्वं यतेथाः कुरुनन्दन । १४९४०

न साम्ना प्रतिपद्येत यदि गन्धर्व्वराडसौ । पराक्रमेण मृदुना मोक्षयेथाः सुयोधन ।

अथासौ मृदुयुद्धेन न मुञ्चेद्भीम कौरवान् । सर्व्वोपायैर्व्विमोच्यास्ते निगृह्य परिपन्थिनः ।

एतावद्धि मया शक्यं सन्देष्टुं वै वृकोदर । वैताने कर्म्मणि तते वर्त्तमाने च भारत ।

॥ वैशम्पायन उवाच ॥ अजातशत्रोर्व्वचनं तच्छ्रुत्वा तु धनञ्जयः । प्रतिजज्ञे गुरोर्व्वाक्यं कौरवाणां विमोक्षणे ।

॥ अर्ज्जुन उवाच ॥ यदि साम्ना न मोक्ष्यन्ति गन्धर्व्वा धृतराष्ट्रजान् । अद्य गन्धर्व्वराजस्य भूमिः पास्यति शोणितं । १४९४५

अर्ज्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः । कौरवाणां तदा राजन् पुनः प्रत्यागतं मनः ।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनमोक्षणानुज्ञायां द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

॥ वैशम्पायन उवाच ॥ युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः । प्रहृष्टवदनाः सर्व्वे समुत्तस्थुर्नरर्षभाः ।

अभेद्यानि ततः सर्व्वे समनह्यन्त भारत । जाम्बूनदविचित्राणि कवचानि महारथाः ।

आयुधानि च दिव्यानि विविधानि समाददुः । ते दंशिता रथैः सर्व्वे ध्वजिनः सशरासनाः ।

पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः । तान् रथान् साधुसम्पन्नान् संयुक्तान् जवनैर्हयैः । १४९५०

आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः । ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः ।

गदाशक्त्यृष्टिवृष्टीस्तु निहत्य परमास्त्रवित्। गात्राणि चाहनद्भल्लैर्गन्धर्व्वाणां धनञ्जयः।
शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तथा। अश्मवृष्टिरिवाभाति परेषामभवद्भयं।
ते वध्यमाना गन्धर्व्वाः पाण्डवेन महात्मना। भूमिष्ठमन्तरीक्षस्थाः शरवर्षैरवाकिरन्।
तेषान्तु शरवर्षाणि सव्यसाची परन्तपः। अस्त्रैः संवार्य्य तेजस्वी गन्धर्व्वान् प्रत्यविध्यत।
स्थूणाकर्णेन्द्रजालञ्च सौरञ्चापि तथाऽर्ज्जुनः। आग्नेयञ्चापि सौम्यञ्च ससर्ज्ज कुरुनन्दनः। १४९९९
ते दह्यमाना गन्धर्व्वाः कुन्तीपुत्रस्य सायकैः। दैतेया इव शक्रेण विषादमगमन् परं।
ऊर्द्ध्वमाक्रममाणाश्च शरजालेन वारिताः। विसर्प्पमाणा भल्लैश्च वार्य्यन्ते सव्यसाचिना।
गन्धर्व्वांस्त्रासितान् दृष्ट्वा कुन्तीपुत्रेण भारत। चित्रसेनो गदां गृह्य सव्यसाचिनमाद्रवत्।
तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे। गदां सर्व्वायसीं पार्थः शरैश्चिच्छेद सप्तधा।
स गदां बहुधा दृष्ट्वा कृत्तां वाणैस्तरस्विना। संवृत्य विद्ययात्मानं योधयामास पाण्डवं। १५०००
अस्त्राणि तस्य दिव्यानि सम्प्रयुक्तानि सर्व्वशः। दिव्यैरस्त्रैस्तदा वीरः पर्य्यवारयदर्ज्जुनः।
स वार्य्यमाणस्तैरस्त्रैरर्ज्जुनेन महात्मना। गन्धर्व्वराजो बलवान् माययाऽन्तर्हितस्तदा।
अन्तर्हितं समालक्ष्य प्रहरन्तमथार्ज्जुनः। ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः।
अन्तर्धानवधञ्चास्य चक्रे क्रुद्धोऽर्ज्जुनस्तदा। शब्दवेधं समाश्रित्य बहुरूपो धनञ्जयः।
स वध्यमानस्तैरस्त्रैरर्ज्जुनेन महात्मना। ततोऽस्य दर्शयामास तदात्मानं प्रियः सखा। १५००५
चित्रसेनस्तथोवाच सखायं युधि विद्धि मां। चित्रसेनं समालक्ष्य सखायं युधि दुर्ब्बलं।
संजहारास्त्रमथ तत् प्रसृष्टं पाण्डवर्षभः। दृष्ट्वा तु पाण्डवाः सर्व्वे संहृतास्त्रं धनञ्जयं।
संजह्रुः प्रद्रुतानश्वान् शरवेगान् धनूंषि च। चित्रसेनश्च भीमश्च सव्यसाची यमावपि।
पृष्ट्वा कौशलमन्योऽन्यं रथेष्वेवावतस्थिरे।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि गन्धर्व्वपराभवे चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

॥ वैशम्पायन उवाच ॥ ततोऽर्ज्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत्। मध्ये गन्धर्व्वसैन्यानां महेष्वासो महाद्युतिः। १५०१०
किन्ते व्यवसितं वीर कौरवाणां विनिग्रहे। किमर्थञ्च सदारोऽयं निगृहीतः सुयोधनः।
॥ चित्रसेन उवाच ॥ विदितोऽयमभिप्रायस्तत्रस्थेन दुरात्मनः। दुर्य्योधनस्य पापस्य कर्णस्य च धनञ्जय।
वनस्थान् भवतो ज्ञात्वा क्लिश्यमानाननाथवत्। समस्थो विषमस्थांस्तान् द्रक्ष्यामीत्यनवस्थितान्
इमे च हसितुं प्राप्ता द्रौपदीञ्च यशस्विनीं। ज्ञात्वा चिकीर्षितञ्चैषां मामुवाच सुरेश्वरः।
गच्छ दुर्य्योधनं बद्ध्वा सहामात्यमिहानय। धनञ्जयश्च ते रक्ष्यः सह भ्रातृभिराहवे। १५०१५
स च प्रियसखा तुभ्यं शिष्यश्च तव पाण्डवः। वचनाद्देवराजस्य ततोऽस्मीहागतो द्रुतं।
अयं दुरात्मा बद्धश्च गमिष्यामि सुरालयं। नेष्याम्येनं दुरात्मानं पाकशासनशासनात्।
॥ अर्ज्जुन उवाच ॥ उत्सृज्यतां चित्रसेन भ्राताऽस्माकं सुयोधनः। धर्म्मराजस्य सन्देशान्मम चेदिच्छसि प्रियं।
॥ चित्रसेन उवाच ॥ पापोऽयं नित्यसन्तुष्टो न विमोक्षणमर्हति। प्रलब्धा धर्म्मराजस्य कृष्णायाश्च धनञ्जय।

नेदृश्चिकीर्षितं तस्य कुन्तीपुत्त्रो युधिष्ठिरः। जानाति धर्म्मराजो हि श्रुत्वा कुरु यथेच्छसि। १५०२०

॥ वैशम्पायन उवाच॥ ते सर्व्व एव राजानमभिजग्मुर्युधिष्ठिरं। अभिगम्य च तत्सर्व्वं शशंसुस्तस्य चेष्टितं।

अजातशत्रुस्तच्छ्रुत्वा गन्धर्व्वस्य वचस्तदा। मोचयामास तान् सर्व्वान् गन्धर्व्वान् प्रशशंस च।

दिष्ट्या भवद्भिर्ब्बलिभिः शक्तैः सर्व्वैर्न हिंसितः। दुर्वृत्तो धार्त्तराष्ट्रोऽयं सामात्यज्ञातिबान्धवः।

उपकारो महांस्तात कृतोऽयं मम खेचरैः। कुलं न परिभूतं मे मोक्षणेऽस्य दुरात्मनः।

आज्ञापयध्वमिष्टानि प्रीयामो दर्शनेन वः। प्राप्य सर्व्वानभिप्रायांस्ततो व्रजत मा चिरं। १५०२५

अनुज्ञातास्तु गन्धर्व्वाः पाण्डुपुत्त्रेण धीमता। सहाप्सरोभिः संहृष्टाश्चित्रसेनमुखा ययुः।

देवराडपि गन्धर्व्वान्मृतांस्तान् समजीवयत्। दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि।

ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्व्वशः। कृत्वा च दुष्करं कर्म्म प्रीतियुक्ताश्च पाण्डवाः।

सस्त्रीकुमारैः कुरुभिः पूज्यमाना महारथाः। बभ्राजिरे महात्मानः क्रतुमध्ये यथाऽग्नयः।

ततो दुर्य्योधनं मुक्तं भ्रातृभिः सहितस्तदा। युधिष्ठिरस्तु प्रणयादिदं वचनमब्रवीत्। १५०३०

मास्म तात पुनः कार्षीरीदृशं साहसं क्वचित्। न हि साहसकर्त्तारः सुखमेधन्ति भारत।

स्वस्तिमान् सहितः सर्व्वैर्भ्रातृभिः कुरुनन्दन। गृहान् व्रज यथाकामं वैमनस्यञ्च मा कृथाः।

॥ वैशम्पायन उवाच॥ पाण्डवेनाभ्यनुज्ञातो राजा दुर्य्योधनस्तदा। अभिवाद्य धर्म्मपुत्त्रं गतेन्द्रिय इवातुरः।

विदीर्य्यमाणो व्रीडावान् जगाम नगरं प्रति। तस्मिन् गते कौरवेये कुन्तीपुत्त्रो युधिष्ठिरः।

भ्रातृभिः सहितो वीरः पूज्यमानो द्विजातिभिः। तपोधनैश्च तैः सर्व्वैर्वृतः शक्र इवामरैः। १५०३५

तथा द्वैतवने तस्मिन् विजहार मुदायुतः।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनमोक्षणे पञ्चचत्वारिंशदधिकद्विशतोऽध्यायः॥ २४५॥

॥ जनमेजय उवाच॥ शत्रुभिर्जितबद्धस्य पाण्डवैश्च महात्मभिः। मोक्षितस्य युधा पश्चान्मानिनः सुदुरात्मनः।

कत्थनस्यावलिप्तस्य गर्व्वितस्य च नित्यशः। सदा च पौरुषौदार्य्यैः पाण्डवानवमन्यतः।

दुर्य्योधनस्य पापस्य नित्याहङ्कारवादिनः। प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे।

तस्य लज्जान्वितस्यैव शोकव्याकुलचेतसः। प्रवेशं विस्तरेण त्वं वैशम्पायन कीर्त्तय। १५०४०

॥ वैशम्पायन उवाच॥ धर्म्मराजनिसृष्टस्तु धार्त्तराष्ट्रः सुयोधनः। लज्जयाऽधोमुखः सीदन्नुपासर्पत् सुदुःखितः।

स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः। शोकोपहतया बुद्ध्या चिन्तयानः पराभवं।

विमुच्य पथि यानानि देशे सुयवसोदके। सन्निविष्टः शुभे रम्ये भूमिभागे यथेप्सितं।

हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत्। अथोपविष्टं राजानं पर्य्यङ्के ज्वलनप्रभे।

उपप्लुतं यथा सोमं राहुणा रात्रिसङ्क्षये। उपागम्याब्रवीत् कर्णो दुर्य्योधनमिदं तदा। १५०४५

दिष्ट्या जीवसि गान्धारे दिष्ट्या नः सङ्गमः पुनः। दिष्ट्या त्वया जिताश्चैव गन्धर्व्वाः कामरूपिणः।

दिष्ट्या समग्रान् पश्यामि भ्रातॄंस्ते कुरुनन्दन। विजिगीषून् रणे युक्तान् निर्जितारीन्महारथान्।

अहं त्वभिद्रुतः सर्व्वैर्गन्धर्व्वैः पश्यतस्तव। नाशक्नुवं स्थापयितुं दीर्य्यमाणाञ्च वाहिनीं।

शरजालावृतस्याथ भग्नं व्यपयातोऽभिपीडितः । इदन्त्वत्यद्भुतं मन्ये यद्युष्माभिरिह भारत ।
अरिष्टानक्षतांश्चापि सदारबलवाहनान् । विमुक्तान् सम्प्रपश्यामि युद्धात्तस्मादमानुषात् । १५०५०
नैतस्य कर्त्ता लोकेऽस्मिन् पुमान् विद्यति भारत । यत्कृतन्ते महाराज सह भ्रातृभिराहवे ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कर्णेन राजा दुर्य्योधनस्तदा । उवाच चाङ्गराजानं बाष्पगद्गदया गिरा ।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदुर्य्योधनसंवादे षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

॥ दुर्य्योधन उवाच ॥ अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः । जानासि त्वं जितान् शत्रून् गन्धर्व्वांस्तेजसा मया ।
आयोधितास्तु गन्धर्व्वाः सुचिरं सोदरैर्मम । मया सह महाबाहो कृतश्चोभयतः क्षयः ।
मायाधिकास्त्वयुध्यन्त यदा शूरा वियद्गताः । तदा नो न समं युद्धमभवत् खेचरैः सह । १५०५५
पराजयञ्च प्राप्ताः स्मो रणे बन्धनमेव च । सभृत्यामात्यपुत्राश्च सदारबलवाहनाः ।
उच्चैराकाशमार्गेण ह्रियमाणाः सुदुःखिताः । अथ नः सैनिकाः केचिदमात्याश्च महारथाः ।
उपगम्याब्रुवन् दीनाः पाण्डवान् शरणप्रदान् । एष दुर्य्योधनो राजा धार्त्तराष्ट्रः सहानुजः ।
सामात्यदारो ह्रियते गन्धर्व्वैर्दिवमाश्रितैः । तं मोचयत भद्रं वः सहदारं नराधिपं ।
परामर्शो माभविष्यत् कुरुदारेषु सर्व्वशः । एवमुक्ते तु धर्म्मात्मा ज्येष्ठः पाण्डुसुतस्तदा । १५०६०
प्रसाद्य पाण्डवान् सर्व्वानाज्ञापयत मोक्षणे । अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः ।
सान्त्वपूर्व्वमयाचन्त शक्ताः सन्तो महारथाः । यदा चास्मानमुञ्चन्त गन्धर्व्वाः सान्त्विता अपि ।
ततोऽर्ज्जुनश्च भीमश्च यमौ च बलोत्कटौ । मुमुचुः शरवर्षाणि गन्धर्व्वान् प्रत्यनेकशः ।
अथ सर्व्वे रणं मुक्त्वा प्रयाताः खेचरा दिवं । अस्मानेवाभिकर्षन्तो दीनान् मुदितमानसाः ।
ततः समन्तात् पश्यामः शरजालेन वेष्टितं । अमानुषाणि चास्त्राणि प्रयुञ्जन्तं धनञ्जयं । १५०६५
समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः । धनञ्जयसखात्मानं दर्शयामास वै तदा ।
चित्रसेनः पाण्डवेन समाश्लिष्य परस्परं । कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयं ।
ते समेत्य तथाऽन्योऽन्यं सन्नाहान् विप्रमुच्य च । एकीभूतास्ततो वीरा गन्धर्व्वाः सह पाण्डवैः ।
अपूजयेतामन्योऽन्यं चित्रसेनधनञ्जयौ ।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदुर्य्योधनसंवादे सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

॥ दुर्य्योधन उवाच ॥ चित्रसेनं समागम्य प्रहसन्नर्ज्जुनस्तदा । इदं वचनमक्लीवमब्रवीत् परवीरहा । १५०७०
भ्रातॄनर्हसि मे वीर मोक्तुं गन्धर्व्वसत्तम । अनर्हधर्षणा ह्येते जीवमानेषु पाण्डुषु ।
एवमुक्तस्तु गन्धर्व्वः पाण्डवेन महात्मना । उवाच यत् कर्ण वयं मन्त्रयन्तो विनिर्गताः ।
द्रष्टारः स्म सुखाद्धीनान् सदारान् पाण्डवानिति । तस्मिन्नुच्चार्य्यमाणे तु गन्धर्व्वेण वचस्तथा ।
भूमेर्व्विवरमन्वैच्छं प्रवेष्टुं व्रीडयाऽन्वितः । युधिष्ठिरमथागम्य गन्धर्व्वाः सह पाण्डवैः ।
अस्मद्दुर्म्मन्त्रितं तस्मै बद्धांश्चास्मान्न्यवेदयन् । स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशङ्गतः । १५०७५
युधिष्ठिरस्योपहृतः किन्नु दुःखमतः परं । ये मे निराकृता नित्यं रिपुर्येषामहं सदा ।

तैर्मोक्षितोऽहं दुर्बुद्धिर्दत्तं तैरेव जीवितं । प्राप्तः स्यां यद्यहं वीर वधं तस्मिन्महारणे ।
श्रेयस्तद्भविता मह्यं नैवम्भूतस्य जीवितं । भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ।
प्राप्ताश्च पुण्यलोकाः स्युर्महेन्द्रसदनेऽक्षयाः । यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ।
इह प्रायमुपाशिष्ये यूयं व्रजत वै गृहान् । भ्रातरश्चैव मे सर्व्वे यान्त्वद्य स्वपुरं प्रति । १५०८०
कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये । दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ।
न ह्यहं सम्प्रयास्यामि पुरं शत्रुनिराकृतः । शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा ।
स सुहृच्छोकदो जातः शत्रूणां हर्षवर्द्धनः । वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपं ।
भीष्मद्रोणौ कृपद्रौणी विदुरः सञ्जयस्तथा । वाह्लीकः सोमदत्तश्च ये चान्ये वृद्धसम्मताः ।
ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः । किं मां वक्ष्यन्ति किञ्चापि प्रतिवक्ष्यामि तानहं । १५०८५
रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि । आत्मदोषात् परिभ्रष्टः कथं वक्ष्यामि तानहं ।
दुर्व्विनीताः श्रियं प्राप्य विद्यामैश्वर्य्यमेव च । तिष्ठन्ति न चिरं भद्रे यथाहं मदगर्व्वितः ।
अहो नार्हमिदं कर्म्म कष्टं दुश्चरितं कृतं । स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोऽस्मि संशयं ।
तस्मात् प्रायमुपाशिष्ये न हि शक्ष्यामि जीवितुं । चेतयानो हि को जीवेत् कृच्छ्राच्छत्रुभिरुद्धृतः ।
शत्रुभिश्चावहसितो मानी पौरुषवर्ज्जितः । पाण्डवैर्विक्रमाढ्यैश्च सावमानमवेक्षितः । १५०९०
॥ वैशम्पायन उवाच ॥ एवं चिन्तापरिगतो दुःशासनमथाब्रवीत् । दुःशासन निबोधेदं वचनं मम भारत ।
प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव । प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालितां ।
भ्रातॄन् पालय विस्रब्धं मरुतो वृत्रहा यथा । बान्धवास्त्वोपजीवन्तु देवा इव शतक्रतुं ।
ब्राह्मणेषु सदा वृत्तिं कुर्व्वीथाश्चाप्रमादतः । बन्धूनां सुहृदाञ्चैव भवेथास्त्वं गतिः सदा ।
ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणान् यथा । गुरवः पालनीयास्ते गच्छ पालय मेदिनीं । १५०९५
नन्दयन् सुहृदः सर्व्वान् शात्रवांश्चावभर्त्सयन् । कण्ठे चैनं परिष्वज्य गम्यतामित्युवाच ह ।
तस्य तद्वचनं श्रुत्वा दीनो दुःशासनोऽब्रवीत् । अश्रुकण्ठः सुदुःखार्त्तः प्राञ्जलिः प्रणिपत्य च ।
सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः । प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ।
दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन् । उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ।
विदीर्य्येत् सकला भूमिर्द्यौश्चापि शकलीभवेत् । रविरात्मप्रभां जह्यात् सोमः शीतांशुतां त्यजेत् । १५१००
वायुः शैघ्र्यमथो जह्याद्धिमवांश्च परिव्रजेत् । शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ।
न चाहं त्वदृते राजन् प्रशासेयं वसुन्धरां । पुनः पुनः प्रसीदेति वाक्यञ्चेदमुवाच ह ।
त्वमेव नः कुले राजा भविष्यसि शतं समाः । एवमुक्त्वा स राजानं सुस्वरं प्ररुरोद ह ।
पादौ संस्पृश्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत । तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ ।
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत । विषीदथः किं कौरव्यौ बालिश्यात् प्राकृताविव । १५१०५
न शोकः शोचमानस्य विनिवर्त्तेत कर्हिचित् । यदा च शोचतः शोको व्यसनञ्चापकर्षति ।

सामर्थ्यं किं ततः शोके शोचमानो प्रपद्यसे । धृतिं गृहीत्वा भद्रं ते प्रकृत्या भव नष्टविस्मयः ।
कर्त्तव्यं हि कृतं राजन् पाण्डवैस्तव मोक्षणं । नित्यमेव प्रियं कार्य्यं राज्ञो विषयवासिभिः ।
पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः । नार्हस्येवङ्गते मन्युं कर्त्तुं प्राकृतवद्यथा ।
विषण्णास्तव सोदर्य्यास्त्वयि प्रायं समास्थिते । उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान् । १५११०

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदुर्य्योधनसंवादे अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

॥ कर्ण उवाच ॥ राजन्नद्यावगच्छामि तवेह लघुसत्वतां । किमत्र चित्रं यद्वीर मोक्षितः पाण्डवैरसि ।
सद्यो वशं समापन्नः शत्रूणां शत्रुकर्षण । सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ।
अज्ञातैर्यदि वा ज्ञातैः कर्त्तव्यं नृपतेः प्रियं । प्रायः प्रधानाः पुरुषाः क्षोभयन्त्यरिवाहिनीं ।
निगृह्यन्ते च युद्धेषु मोक्ष्यन्ते च स्वसैनिकैः । सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ।
तैः सङ्गम्य नृपार्थाय यतितव्यं यथातथं । यद्येवं पाण्डवै राजन् भवद्विषयवासिभिः । १५११५
यदृच्छया मोक्षितोऽसि तत्र का परिदेवना । न चैतत् साधु यद्राजन् पाण्डवास्त्वां नृपोत्तम ।
स्वसेनया सम्प्रयान्तं नानुयान्ति स्म पृष्ठतः । शूराश्च बलवन्तश्च संयुगेष्वपलायिनः ।
भवतस्ते सहाया वै प्रेष्यतां पूर्वमागताः । पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ।
सत्त्वस्थान् पाण्डवान् पश्य न ते प्रायमुपाविशन् । उत्तिष्ठ राजन् भद्रं ते न चिरं कर्त्तुमर्हसि ।
अवश्यमेव नृपते राज्ञो विषयवासिभिः । प्रियाण्याचरितव्यानि तत्र का परिदेवना । १५१२०
मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि । स्थास्यामीह भवत्पादौ शुश्रूषन्नरिमर्द्दन ।
नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभ । प्रायोपविष्टस्तु नृप राज्ञां हास्यो भविष्यसि ।
॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु कर्णेन राजा दुर्य्योधनस्तदा । नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदुर्य्योधनसंवादे एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

॥ वैशम्पायन उवाच ॥ प्रायोपविष्टं राजानं दुर्य्योधनममर्षणं । उवाच सान्त्वयन् राजञ्छकुनिः सौबलस्तदा ।
॥ शकुनिरुवाच ॥ सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया । मया हृतां श्रियं स्फीतां तां मोहादपहाय किं । १५१२५
त्वमबुद्ध्याऽद्य नृपते प्राणानुत्स्रष्टुमर्हसि । अद्य चाप्यवगच्छामि न वृद्धाः सेवितास्त्वया ।
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति । स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ।
अतिभीरुमतिक्लीवं दीर्घसूत्रं प्रमादिनं । व्यसनाद्विषयाक्रान्तं न भजन्ति नृपं प्रजाः ।
सत्कृतस्य हि ते शोको विपरीते कथं भवेत् । मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ।
यत्र हर्षस्त्वया कार्य्यः सत्कर्त्तव्याश्च पाण्डवाः । तत्र शोचसि राजेन्द्र विपरीतमिदं तव । १५१३०
प्रसीद मा त्यजात्मानं तुष्टश्च सुकृतं स्मर । प्रयच्छ राज्यं पार्थानां यशो धर्म्ममवाप्नुहि ।
क्रियामेतां समाज्ञाय कृतज्ञस्त्वं भविष्यसि । सौभ्रात्रं पाण्डवैः कृत्वा समवस्थाप्य चैव तान् ।
पित्र्यं राज्यं प्रयच्छैषां ततः सुखमवाप्स्यसि ॥ वैशम्पायन उवाच ॥ शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च ।
पादयोः पतितं वीरं विक्लवं भ्रातृसौहृदात् । बाहुभ्यां साधुजाताभ्यां दुःशासनमरिन्दमं ।

उत्थाप्य सम्परिष्वज्य प्रीत्याऽजिघ्रत मूर्द्धनि। कर्णसौबलयोश्चापि संश्रुत्य वचनान्यसौ। १५१३९
निर्वेदं परमं गत्वा राजा दुर्य्योधनस्तदा। व्रीडयाऽभिपरीतात्मा नैराश्यमगमत् परं।
तच्छ्रुत्वा सुहृदश्चैव समन्युरिदमब्रवीत्। न धर्म्मधनसौख्येन नैश्वर्य्येण न चाज्ञया।
नैव भोगैश्च मे कार्य्यं मा विहन्यत गच्छत। निश्चितेयं मम मतिः स्थिता प्रायोपवेशने।
गच्छध्वं नगरं सर्व्वे पूज्याश्च गुरवो मम। त एवमुक्ताः प्रत्यूचू राजानमरिमर्द्दनं।
या गतिस्तव राजेन्द्र साऽस्माकमपि भारत। कथं वा सम्प्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयं। १५१४०
॥ वैशम्पायन उवाच॥ स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च। बहुप्रकारमप्युक्तो निश्चयान्न विचाल्यते।
दर्भास्तरणमास्तीर्य्य निश्चयाद्धृतराष्ट्रजः। संस्पृश्यापः शुचिर्भूत्वा भूतले समुपस्थितः।
कुशचीराम्बरधरः परं नियममास्थितः। वाग्यतो राजशार्दूलः स स्वर्गगतिकाम्यया।
मनसोपचितिं कृत्वा निरस्य च बहिष्क्रियाः। अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवाः।
पातालवासिनो रौद्राः पूर्व्वं देवैर्व्विनिर्ज्जिताः। ते स्वपक्षक्षयन्तन्तु ज्ञात्वा दुर्य्योधनस्य वै। १५१४५
आह्वानाय तदा चक्रुः कर्म्म वैतानसम्भवं। बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः।
अथर्व्ववेदप्रोक्तैश्च याश्चोपनिषदि क्रियाः। मन्त्रजप्यसमायुक्तास्तास्तदा समवर्त्तयन्।
जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत् सुसमाहिताः। ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढव्रताः।
कर्म्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता। कृत्या समुत्थिता राजन् किङ्करोमीति चाब्रवीत्।
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना। प्रायोपविष्टं राजानं धार्त्तराष्ट्रमिहानय। १५१५०
तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा। निमेषादगमच्चापि यत्र राजा सुयोधनः।
समादाय च राजानं प्रविवेश रसातलं। दानवानां मुहूर्त्ताच्च तमानीतं न्यवेदयत्।
तमानीतं नृपं दृष्ट्वा रात्रौ संहत्य दानवाः। प्रहृष्टमनसः सर्व्वे किञ्चिदुत्फुल्ललोचनाः।
साभिमानमिदं वाक्यं दुर्य्योधनमथाब्रुवन्।
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनप्रायोपवेशे पञ्चाशदधिकद्विशतोऽध्यायः॥ २५०॥
॥ दानवा ऊचुः॥ भो सुयोधन राजेन्द्र भरतानां कुलोद्वह। शूरैः परिवृतो नित्यं तथैव च महात्मभिः। १५१५५
अकार्षीः साहसमिदं कस्मात् प्रायोपवेशनं। आत्मत्यागी ह्यधो याति वाच्यतां चायशस्करीं।
न हि कार्य्यविरुद्धेषु बहुपापेषु कर्म्मसु। मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः।
नियच्छैनां मतिं राजन् धर्म्मार्थसुखनाशिनीं। यशःप्रतापवीर्य्यघ्नीं शत्रूणां हर्षवर्द्धनीं।
श्रूयतां हि प्रभो तत्त्वं दिव्यताञ्चात्मनो नृप। निर्म्माणञ्च शरीरस्य ततो धैर्य्यमवाप्नुहि।
पुरा त्वं तपसाऽस्माभिर्लब्धो राजन्महेश्वरात्। पूर्व्वकायश्च सर्व्वस्ते निर्म्मितो वज्रसञ्चयः। १५१६०
अस्त्रैरभेद्यः शस्त्रैश्चाप्यधः कायश्च तेऽनघ। कृतः पुष्पमयो देव्या रूपतः स्त्रीमनोहरः।
एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम। देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः।
क्षत्रियाश्च महावीर्य्या भगदत्तपुरोगमाः। दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून्।

तदलन्ते विषादेन भयं तव न विद्यते। सहायार्थञ्च ते वीराः सम्भूता भुवि दानवाः।
भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः। यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः। १५१६५
नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान्। नैव शिष्यान्न च ज्ञातीन्न बालान् स्थविरान्न च।
युधि सम्प्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम। निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि।
प्रहरिष्यन्ति विवशाः स्नेहमुत्सृज्य दूरतः। हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः।
अविज्ञानविमूढाश्च दैवाच्च विधिनिर्म्मितात्। व्याभाषमाणाश्चान्योऽन्यं न मे जीवन् विमोक्ष्यसे।
सर्व्वे शस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः। श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयं। १५१७०
तेऽपि पञ्च महात्मानः प्रतियोत्स्यन्ति पाण्डवाः। वधञ्चैषां करिष्यन्ति दैवयुक्ता महाबलाः।
दैत्यरक्षोगणाश्चैव सम्भूताः क्षत्रयोनिषु। योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव।
गदाभिर्मुषलैः शूलैः शस्त्रैरुच्चावचैस्तथा। यच्च तेऽन्तर्गतं वीर भयमर्ज्जुनसम्भवं।
तत्रापि विहितोऽस्माभिर्व्वधोपायोऽर्ज्जुनस्य वै। हतस्य नरकस्यात्मा कर्णमूर्त्तिमुपाश्रितः।
तद्वैरं संस्मरन् वीर योत्स्यते केशवार्ज्जुनौ। स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यति। १५१७५
कर्णः प्रहरतां श्रेष्ठः सर्व्वांश्चारीन् महारथः। ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः।
कुण्डले कवचञ्चैव कर्णस्यापहरिष्यति। तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति। प्रख्यातास्तेऽर्ज्जुनं वीरं निहनिष्यन्ति मा शुचः।
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप। मा विषादं गमस्तस्मान्नैतत्त्वय्युपपद्यते।
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव। गच्छ वीर न ते बुद्धिरन्या कार्य्या कथञ्चन। १५१८०
त्वमस्माकं गतिर्नित्यं देवतानाञ्च पाण्डवाः॥ वैशम्पायन उवाच॥ एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरं।
समाश्वास्य च दुर्द्धर्षं पुत्रवद्दानवर्षभाः। स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत।
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ। तैर्व्विसृष्टं महाबाहुं कृत्या सैवानयत् पुनः।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत्। प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च।
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत। गतायामथ तस्यान्तु राजा दुर्य्योधनस्तदा। १५१८५
स्वप्नभूतमिदं सर्व्वमचिन्तयत भारत। विजेष्यामि रणे पाण्डूनिति तस्याभवन्मतिः।
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः। अमन्यत वधे युक्तान् समर्थांश्च सुयोधनः।
एवमाशा दृढा तस्य धार्त्तराष्ट्रस्य दुर्म्मतेः। विनिर्ज्जये पाण्डवानामभवद्भरतर्षभ।
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना। अर्ज्जुनस्य वधे क्रूरां करोति स्म तदा मतिं।
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः। रजस्तमोभ्यामाक्रान्ताः फाल्गुनस्य वधैषिणः। १५१९०
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः। न तथा पाण्डुपुत्राणां स्नेहवन्तो विशाम्पते।
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः। दुर्य्योधनं निशाऽन्ते च कर्णो वैकर्त्तनोऽब्रवीत्।
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः। न मृतो जयते शत्रून् जीवन् भद्राणि पश्यति।

यतस्ते भद्राणि कुतः कौरवेय कुतो जयः। न कालोऽयं विषादस्य भयस्य मरणस्य वा।
परिष्वज्याब्रवीच्चैनं भुजाभ्यां स महाभुजं।। उत्तिष्ठ राजन् किं शेषे कस्माच्छोचसि शत्रुहन्। ११९९९
शत्रून् प्रताप्य वीर्य्येण स कथं मृत्युमिच्छसि। अथ वा ते भयं जातं दृष्ट्वार्ज्जुनपराक्रमं।
सत्यन्ते प्रतिजानामि वधिष्यामि रणेऽर्ज्जुनं। गते त्रयोदशे वर्षे सत्येनायुधमालभे।
आनयिष्याम्यहं पार्थान् वशं तव जनाधिप। एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा।
प्रणिपातेन चान्येषामुदतिष्ठत् सुयोधनः। दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिं।
ततो मनुजशार्दूलो योजयामास वाहिनीं। रथनागाश्वकलिलां पदातिजनसङ्कुलां। ११२००
गङ्गौघप्रतिमा राजन् प्रयाता सा महाचमूः। श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डरैः।
रथैर्नागैः पदातैश्च शुशुभेऽतीव सङ्कुला। व्यपेताभ्रघने काले द्यौरिवाव्यक्तशारदी।
जयाशीर्भिर्द्विजेन्द्रैः स स्तूयमानोऽधिराजवत्। गृह्णन्नञ्जलिमालाश्च धार्त्तराष्ट्रो जनाधिपः।
सुयोधनो ययावग्रे श्रिया परमया ज्वलन्। कर्णेन सार्द्धं राजेन्द्र सौबलेन च देविना।
दुःशासनादयश्चास्य भ्रातरः सर्व्व एव ते। भूरिश्रवाः सोमदत्तो महाराजश्च वाह्लिकः। ११२०५
रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा। प्रयान्तं नृपसिंहन्तमनुजग्मुः कुरूद्वहाः।
कालेनाल्पेन राजेन्द्र स्वपुरं विविशुस्तदा।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनपुरप्रवेशे एकपञ्चाशदधिकद्विशतोऽध्यायः॥ २५१ ॥

॥ जनमेजय उवाच ॥ वसमानेषु पार्थेषु वने तस्मिन्महात्मसु। धार्त्तराष्ट्रा महेष्वासा किमकुर्व्वत सत्तमाः।
कर्णो वैकर्त्तनश्चैव शकुनिश्च महाबलः। भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि।
॥ वैशम्पायन उवाच ॥ एवं गतेषु पार्थेषु विसृष्टे च सुयोधने। आगते हास्तिनपुरं मोचिते पाण्डुनन्दनैः। ११२१०
भीष्मोऽब्रवीन्महाराज धार्त्तराष्ट्रमिदं वचः। उक्तं तात यथा पूर्व्वं गच्छतस्ते तपोवनं।
गमनं मे न रुचितं तव तच्च कृतञ्च ते। ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्ब्बलात्।
मोचितश्चासि धर्म्मज्ञैः पाण्डवैर्न च लज्जसे। प्रत्यक्षं तव गान्धारे ससैन्यस्य विशाम्पते।
सूतपुत्रोऽपयाद्भीतो गन्धर्व्वाणां तदा रणात्। क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज।
दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनां। कर्णस्य च महाबाहो सूतपुत्रस्य दुर्म्मते। ११२१५
न चापि पादभाक् कर्णः पाण्डवानां नृपोत्तम। धनुर्व्वेदे च शौर्य्ये च धर्म्मे वा धर्म्मवत्सल।
तस्मादहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः। सन्धिं सन्धिविदां श्रेष्ठ कुलस्यास्य विवृद्धये।
एवमुक्तस्तु भीष्मेण धार्त्तराष्ट्रो जनेश्वरः। प्रहस्य सहसा राजन् विप्रतस्थे ससौबलः।
तन्तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः। अनुजग्मुर्म्महेष्वासा धार्त्तराष्ट्रं महाबलं।
तांस्तु सम्प्रस्थितान् दृष्ट्वा भीष्मः कुरुपितामहः। लज्जया व्रीडितो राजन् जगाम स्वं निवेशनं। ११२२०
गते भीष्मे महाराज धार्त्तराष्ट्रो जनेश्वरः। पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः।
किमस्माकं भवेच्छ्रेयः किं कार्य्यमवशिष्यते। कथन्नु सुकृतं तत् स्यान्मन्त्रयामोऽद्य यद्धितं।

॥ कर्ण उवाच ॥ दुर्य्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव। भीष्मोऽस्मान्निन्दति सदा पाण्डवांश्च प्रशंसति।
त्वद्द्वेषाच्च महाबाहो ममापि द्वेष्टुमर्हति। विगर्हते च मां नित्यं त्वत्समीपे नरेश्वर।
सोऽहं भीष्मवचस्तद्वै न मृष्यामीह भारत। त्वत्समक्षं यदुक्तञ्च भीष्मेणामित्रकर्षण। १५२२५
पाण्डवानां यशो राजंस्तव निन्दाञ्च भारत। अनुजानीहि मां राजन् सभृत्यबलवाहनं।
जेष्यामि पृथिवीं राजन् सशैलवनकाननां। जिता च पाण्डवैर्भूमिश्चतुर्भिर्बलशालिभिः।
तामहन्ते विजेष्यामि एक एव न संशयः। सम्पश्यतु सुदुर्बुद्धिर्भीष्मः कुरुकुलाधमः।
अनिन्द्यं निन्दते यो हि अप्रशंस्यं प्रशंसति। स पश्यतु बलं मेऽद्य आत्मानन्तु विगर्हतु।
अनुजानीहि मां राजन् ध्रुवो हि विजयस्तव। प्रतिजानामि ते सत्यं राजन्नायुधमालभे। १५२३०
तच्छ्रुत्वा तु वचो राजन् कर्णस्य भरतर्षभ। प्रीत्या परमया युक्तः कर्णमाह नराधिपः।
धन्योऽहमनुगृहीतोऽस्मि यस्य मे त्वं महाबल। हितेषु वर्त्तसे नित्यं सफलं जन्म चाद्य मे।
यदा च मन्यसे वीर सर्व्वशत्रुनिबर्हणं। तदा निर्गच्छ भद्रन्ते अनुशाधि च मामिति।
एवमुक्तस्तदा कर्णो धार्त्तराष्ट्रेण धीमता। सर्व्वमाज्ञापयामास प्रायात्रिकमरिन्दम।
निर्य्ययौ च महेष्वासो नक्षत्रे शुभदैवते। शुभे तिथौ मुहूर्त्ते च पूज्यमानो द्विजातिभिः। १५२३५
मङ्गलैश्च शुभैः स्नातो वाग्भिश्चापि प्रपूजितः। नादयन् रथघोषेण त्रैलोक्यं सचराचरं।
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदिग्विजये द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥
॥ वैशम्पायन उवाच ॥ ततः कर्णो महेष्वासो बलेन महता वृतः। द्रुपदस्य पुरं रम्यं रुरोध भरतर्षभ।
युद्धेन महता चैनं चक्रे वीरं वशानुगं। सुवर्णं रजतञ्चापि रत्नानि विविधानि च।
करञ्च दापयामास द्रुपदं नृपसत्तम। तं विनिर्ज्जित्य राजेन्द्र राजानस्तस्य येऽनुगाः।
तान् सर्व्वान् वशगांश्चक्रे करञ्चैनानदापयत्। अथोत्तरां दिशं गत्वा वशे चक्रे नराधिपान्। १५२४०
भगदत्तञ्च निर्ज्जित्य राधेयो गिरिमारुहत्। हिमवन्तं महाशैलं युध्यमानश्च शत्रुभिः।
प्रयातश्च दिशः सर्व्वा नृपतीन् वशमानयत्। स हैमवतिकान् जित्वा करं सर्व्वानदापयत्।
अवतीर्य्य ततः शैलात् पूर्व्वां दिशमभिद्रुतः। अङ्गान् वङ्गान् कलिङ्गांश्च मण्डिकान् मिथिलानथ।
मागधान् कर्कखण्डांश्च निवेश्य विषये स्वकः। आवशीरांश्च योध्यांश्च अहिक्षत्रञ्च जोजयत्।
पूर्व्वां दिशं विनिर्ज्जित्य वत्सभूमिं तथागमत्। वत्सभूमिं विनिर्ज्जित्य केवलीं मृत्तिकावतीं। १५२४५
मोहनं पत्तनञ्चैव त्रिपुरां कोशलां तथा। एतान् सर्व्वान् विनिर्ज्जित्य करमादाय सर्व्वशः।
दक्षिणां दिशमास्थाय कर्णो जित्वा महारथान्। रुक्मिणं दाक्षिणात्येषु योधयामास सूतजः।
स युद्धन्तुमुलं कृत्वा रुक्मी प्रोवाच सूतजं। प्रीतोऽस्मि तव राजेन्द्र विक्रमेण बलेन च।
न ते विघ्नं करिष्यामि प्रतिज्ञां समपालयं। प्रीत्या चाहं प्रयच्छामि हिरण्यं यावदिच्छसि।
समेत्य रुक्मिणा कर्णः पाण्ड्यं शैलञ्च सोऽगमत्। स केरलं रणे चैव नीलञ्चापि महीपतिं। १५२५०
वेणुदारिसुतञ्चैव येचान्ये नृपसत्तमाः। दक्षिणस्यां दिशि नृपान् करान् सर्व्वानदापयत्।

शैवपालं ततो गत्वा विजिग्ये सूतनन्दनः। पार्वतीयांश्चापि नृपतीन् वशे चक्रे महाबलः।
आवन्त्यांश्च वशे कृत्वा साम्ना च भरतर्षभ। वृष्णिभिः सह सङ्गम्य पश्चिमामपि निर्जयत्।
वारुणीं दिशमागम्य यावनान् बर्ब्बरांस्तथा। नृपान् पश्चिमभूमिस्थान् दापयामास वै करान्।
विजित्य पृथिवीं सर्व्वां स पूर्व्वापरदक्षिणां। सम्लेच्छाटविकान् वीरः सपर्व्वतनिवासिनः। १५२१५
भद्रान् रोहितकांश्चैव आग्नेयान् मालवानपि। गणान् सर्व्वान् विनिर्ज्जित्य नीतिकृत् प्रहसन्निव।
शशकान् यवनांश्चैव विजिग्ये सूतनन्दनः। नग्नजित्प्रमुखांश्चैव गणान् जित्वा महारथान्।
एवं स पृथिवीं सर्व्वां वशे कृत्वा महारथः। विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत्।
तमागतं महेष्वासं धार्त्तराष्ट्रो जनाधिपः। प्रत्युद्गम्य महाराज सभ्रातृपितृबान्धवः।
अर्च्चयामास विधिना कर्णमाहवशोभिनं। आश्रावयच्च तत्कर्म्म प्रीयमाणो जनेश्वरः। १५२२०
यन्न भीष्मान्न च द्रोणान्न कृपान्न च वाह्लिकात्। प्राप्तवानस्मि भद्रन्ते त्वत्तः प्राप्तं मया हि तत्।
बहुना तु किमुक्तेन शृणु कर्ण वचो मम। सनाथोऽस्मि महाबाहो त्वया नाथेन सत्तम।
न हि ते पाण्डवाः सर्व्वे कलामर्हन्ति षोडशीं। अन्ये वा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः।
स भवान् धृतराष्ट्रं तं गान्धारीञ्च यशस्विनीं। पश्य कर्ण महेष्वास अदितिं वज्रभृद्यथा।
ततो हलहलाशब्दः प्रादुरासीद्विशाम्पते। हाहाकाराश्च बहवो नगरे नागसाह्वये। १५२२५
केचिदेनं प्रशंसन्ति निन्दन्ति स्म तथा परे। तूष्णीमासंस्तथा चान्ये नृपास्तत्र जनाधिप।
एवं विजित्य राजेन्द्र कर्णः शस्त्रभृताम्वरः। सपर्व्वतवनाकाशां ससमुद्रां सनिष्कुटां।
देशैरुच्चावचैः पूर्णां पत्तनैर्नगरैरपि। द्वीपैश्चानूपसम्पूर्णैः पृथिवीं पृथिवीपते।
कालेन नातिदीर्घेण वशे कृत्वा तु पार्थिवान्। अक्षयं धनमादाय सूतजो नृपमभ्ययात्।
प्रविश्य च गृहं राजन्नभ्यन्तरमरिन्दम। गान्धारीसहितं वीरो धृतराष्ट्रं ददर्श सः। १५२३०
पुत्रवच्च नरव्याघ्र पादौ जग्राह धर्म्मवित्। धृतराष्ट्रेण चाश्लिष्य प्रेम्णा चापि विसर्ज्जितः।
तदा प्रभृति राजा च शकुनिश्चापि सौबलः। जानते निर्ज्जितान् पार्थान् कर्णेन युधि भारत।
इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि कर्णदिग्विजये त्रिपञ्चाशदधिकद्विशततोऽध्यायः॥ २५३॥
॥ वैशम्पायन उवाच॥ जित्वा तु पृथिवीं राजन् सूतपुत्त्रो जनाधिप। अब्रवीत् परवीरघ्नो दुर्य्योधनमिदं वचः।
॥ कर्ण उवाच॥ दुर्य्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव। श्रुत्वा वाचं तथा सर्व्वं कर्त्तुमर्हस्यरिन्दम।
तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम। तां पालय यथा शक्रो हतशत्रुर्म्महामनाः। १५२३५
॥ वैशम्पायन उवाच॥ एवमुक्तस्तु कर्णेन कर्णं राजाऽब्रवीत् पुनः। न किञ्चिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ।
सहायश्चानुरक्तश्च मदर्थञ्च समुद्यतः। अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथं।
राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं महत्। मम स्पृहा समुत्पन्ना तां सम्पादय सूतज।
एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत्। तवाद्य पृथिवीपालाः वश्याः सर्व्वे नृपोत्तम।
आहूयन्तां द्विजवराः सम्भाराश्च यथाविधि। सम्भ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च। १५२४०

ऋत्विजश्च समाहूता यथोक्ता वेदपारगाः। क्रियां कुर्व्वन्तु ते राजन् यथाशास्त्रमरिन्दम।
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः। प्रवर्त्ततां महायज्ञस्तवापि भरतर्षभ।
एवमुक्तस्तु कर्णेन धार्त्तराष्ट्रो विशाम्पते। पुरोहितं समानाय्य वचनञ्चेदमब्रवीत्।
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणं। आहर त्वं मम कृते यथान्यायं यथाक्रमं।
स एवमुक्तो नृपतिमुवाच द्विजसत्तमः। न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे। १५२८८
आहर्त्तुं कौरवश्रेष्ठ कुले तव नृपोत्तमः। दीर्घायुर्जीवति च ते धृतराष्ट्रः पिता नृप।
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम। अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो।
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम। य इमे पृथिवीपालाः करदास्तव पार्थिव।
ते करान् संप्रयच्छन्तु सुवर्णञ्च कृताकृतं। तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम।
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत। तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः। १५२९०
प्रवर्त्ततां यथान्यायं सर्व्वतो ह्यनिवारितः। एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः।
एतेन नेष्टवान् कश्चिदृते विष्णुं पुरातनं। राजसूयं क्रतुश्रेष्ठं स्पर्द्धत्येष महाक्रतुः।
अस्माकं रोचते चैव श्रेयश्च तव भारत। निर्व्विघ्नश्च भवत्येष सफला स्यात् स्पृहा तव।
एवमुक्तस्तु तैर्विप्रैर्धार्त्तराष्ट्रो महीपतिः। कर्णञ्च सौबलञ्चैव भ्रातॄंश्चैवेदमब्रवीत्।
रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः। रोचते यदि युष्माकं तस्मात् प्रब्रूत माचिरं। १५२९५
एवमुक्तास्तु ते सर्व्वे तथेत्यूचुर्नराधिपं। सन्दिदेश ततो राजा व्यापारस्थान् यथाक्रमं।
हलस्य करणे चापि व्यादिष्टाः सर्व्वशिल्पिनः। यथोक्तञ्च नृपश्रेष्ठ कृतं सर्व्वं यथाक्रमं।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनयज्ञारम्भे चतुःपञ्चाशदधिकद्विशततमोऽध्यायः॥ २५४ ॥

॥ वैशम्पायन उवाच ॥ ततस्तु शिल्पिनः सर्व्वे अमात्यप्रवराश्च ये। विदुरश्च महाप्राज्ञो धार्त्तराष्ट्रे न्यवेदयत्।
सज्जं क्रतुवरं राजन् कालप्राप्तञ्च भारत। सौवर्णञ्च कृतं सर्व्वं लाङ्गलञ्च महाधनं।
एतच्छ्रुत्वा नृपश्रेष्ठो धार्त्तराष्ट्रो विशाम्पते। आज्ञापयामास नृप क्रतुराजप्रवर्त्तनं। १५३००
ततः प्रववृते यज्ञः प्रभूतार्थः सुसंस्कृतः। दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमं।
प्रहृष्टो धृतराष्ट्रश्च विदुरश्च महायशाः। भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी।
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान्। पार्थिवानाञ्च राजेन्द्र ब्राह्मणानां तथैव च।
ते प्रयाता यथोद्दिष्टा दूतास्त्वरितवाहनाः। तत्र कञ्चित् प्रयातन्तु दूतं दुःशासनोऽब्रवीत्।
गच्छ द्वैतवनं शीघ्रं पाण्डवान् पापपूरुषान्। निमन्त्रय यथान्यायं विप्रांस्तस्मिन् वने तदा। १५३०५
स गत्वा पाण्डवान् सर्व्वानुवाचाभिप्रणम्य च। दुर्य्योधनो महाराज यजते नृपसत्तमः।
स्ववीर्य्यार्ज्जितमर्थौघमवाप्य कुरुसत्तमः। तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः
अहन्तु प्रेषितो राजन् कौरवेण महात्मना। आमन्त्रयति वो राजा धार्त्तराष्ट्रो जनेश्वरः।
मनोऽभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ। ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितं।

अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः। यजते क्रतुमुख्येन पूर्व्वेषां कीर्त्तिवर्द्धनः। १५११०
वयमप्युपयास्यामो नत्विदानीं कथञ्चन। समयः परिपाल्योऽसौ यावद्वर्षं त्रयोदशं।
श्रुत्वैतद्धर्म्मराजस्य भीमो वचनमब्रवीत्। तदा तु नृपतिर्गन्ता धर्म्मराजो युधिष्ठिरः।
अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति। वर्षात्त्रयोदशादूर्द्ध्वं रणसत्रे नराधिपः।
यदा क्रोधहविर्म्मोक्ता धार्त्तराष्ट्रेषु पाण्डवः। आगन्ताऽहं तदाऽस्मीति वाच्यस्ते स सुयोधनः।
शेषास्तु पाण्डवा राजन्नैवोचुः किञ्चिदप्रियं। दूतश्चापि यथावृत्तं धार्त्तराष्ट्रे न्यवेदयत्। १५११५
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः। ब्राह्मणाश्च महाभाग धार्त्तराष्ट्रपुरं प्रति।
ते त्वर्च्चिता यथाशास्त्रं यथाविधि यथाक्रमं। मुदा परमया युक्ताः प्रीताश्चापि नरेश्वराः।
धृतराष्ट्रोऽपि राजेन्द्रः संवृतः सर्व्वकौरवैः। हर्षेण महता युक्तो विदुरं प्रत्यभाषत।
यथा सुखी जनः सर्व्वः क्षत्तः स्यादन्नसंयुतः। तुष्येच्च यज्ञसदने तथा क्षिप्रं विधीयतां।
विदुरस्तु तदाज्ञाय सर्व्ववर्णानरिन्दम। यथा प्रमाणतो विद्वान् पूजयामास धर्म्मवित्। १५१२०
भक्ष्यपेयान्नपानेन माल्यैश्चापि सुगन्धिभिः। वासोभिर्व्विविधैश्चैव योजयामास हृष्टवत्।
कृत्वा ह्यावसथान् वीरो यथाशास्त्रं यथाक्रमं। सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु।
विसर्ज्जयामास नृपान् ब्राह्मणांश्च सहस्रशः। विसृज्य च नृपान् सर्व्वान् भ्रातृभिः परिवारितः।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः।

इति श्रीमहाभारते आरण्यपर्व्वणि घोषयात्रापर्व्वणि दुर्य्योधनयज्ञसमाप्तौ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

॥ वैशम्पायन उवाच ॥ प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतं। जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमं। १५१२५
लाजैश्चन्दनचूर्णैश्च विकीर्य्य च जनास्तदा। ऊचुर्दिष्ट्या नृपाऽविघ्नः समाप्तोऽयं क्रतुस्तव।
अपरे त्वब्रुवंस्तत्र वातिकास्तं महीपतिं। युधिष्ठिरस्य यज्ञेन न समो ह्येष ते क्रतुः।
नैव तस्य क्रतोरेषा कलामर्हति षोडशीं। एवं तत्राब्रुवन् केचिद्वातिकास्तं जनेश्वरं।
सुहृदस्त्वब्रुवंस्तत्र अतिसर्व्वानयं क्रतुः। ययातिर्नहुषश्चापि मान्धाता भरतस्तथा।
क्रतुमेनं समाहृत्य पूताः सर्व्वे दिवं गताः। एता वाचः शुभाः शृण्वन् सुहृदां भरतर्षभ। १५१३०
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः। अभिवाद्य ततः पादौ मातापित्रोर्व्विशाम्पते।
भीष्मद्रोणकृपादीनां विदुरस्य च धीमतः। अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृनन्दनः।
निषसादासने मुख्ये भ्रातृभिः परिवारितः। तमुत्थाय महाराजं सूतपुत्रोऽब्रवीद्वचः।
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः। हतेषु युधि पार्थेषु राजसूये तथा त्वया।
आहृतेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः। तमब्रवीन्महाराजो धार्त्तराष्ट्रो महायशाः। १५१३५
सत्यमेतत्त्वयोक्तं हि पाण्डवेषु दुरात्मसु। निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ।
राजसूये पुनर्व्वीर त्वमेवं वर्द्धयिष्यसि। एवमुक्त्वा महाराज कर्णमाश्लिष्य भारतः।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः। सोऽब्रवीत् कौरवांश्चापि पार्श्वस्थान्नृपसत्तमः।

कदा नु तं क्रतुवरं राजसूयं महाधनं । निहत्य पाण्डवान् सर्व्वानाहरिष्यामि कौरवाः ।

तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर । पादौ न धावये तावद्यावन्न निहतोऽर्ज्जुनः । ११२४०

कीलालजं मयादेयं करिष्ये चासुरव्रतं । नास्तीति नैव वक्ष्यामि याचितो येन केनचित् ।

अथोत्क्रुष्टं महेष्वासैर्धार्त्तराष्ट्रैर्महारथैः । प्रतिज्ञाते फाल्गुनस्य वधे कर्णेन संयुगे ।

विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः । दुर्य्योधनोऽपि राजेन्द्रो विसृज्य नरपुङ्गवान् ।

प्रविवेश गृहं श्रीमान् यथा चैत्ररथं प्रभुः । तेऽपि सर्व्वे महेष्वासा जग्मुर्वेश्मानि भारत ।

पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः । चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् । ११२४५

भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता । प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ।

एतच्छ्रुत्वा धर्म्मसुतः समुद्विग्नो नराधिप । अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमं ।

अनुस्मरंश्च संक्लेशान्न शान्तिमुपयाति सः । तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।

बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनं । धार्त्तराष्ट्रोऽपि नृपतिः प्रशशास वसुन्धरां ।

भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा । सङ्गम्य सूतपुत्रेण कर्णेनाहवशोभिना । ११२५०

दुर्य्योधनः प्रिये नित्यं वर्त्तमानो महीभृतां । पूजयामास विप्रेन्द्रान् क्रतुभिर्भूरिदक्षिणैः ।

भ्रातृणाञ्च प्रियं राजन् स चकार परन्तपः । निश्चित्य मनसा वीरो दत्तभुक्तफलं धनं ।

इति श्रीमहाभारते आरण्यपर्व्वणि युधिष्ठिरचिन्तायां षट्पञ्चाशदधिकद्विशततोऽध्यायः । समाप्तञ्च घोषयात्रापर्व्व ॥ २५६ ॥

## ॥ अथ मृगस्वप्नोद्भवपर्व्व ॥ १० ॥

॥ जनमेजय उवाच ॥ दुर्य्योधनं मोचयित्वा पाण्डुपुत्रा महाबलाः । किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि ।

॥ वैशम्पायन उवाच ॥ ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः । स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरं ।

तानब्रवीत् स राजेन्द्रो वेपमानान् कृताञ्जलीन् । ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते । ११२५५

एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना । प्रत्यब्रुवन्मृगास्तत्र हतशेषा युधिष्ठिरं ।

वयं मृगा द्वैतवने हतशिष्टास्तु भारत । नोत्सीदेम महाराज क्रियतां वासपर्य्ययः ।

भवतो भ्रातरः शूराः सर्व्व एवास्त्रकोविदाः । कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसां ।

बीजभूता वयं केचिदवशिष्टा महामते । विवर्द्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ।

तान् वेपमानान् वित्रस्तान् बीजमात्रावशेषितान् । मृगान् दृष्ट्वा सुदुःखार्त्तो धर्म्मराजो युधिष्ठिरः । ११२६०

तांस्तथेत्यब्रवीद्राजा सर्व्वभूतहिते रतः । यथा भवन्तो ब्रुवते करिष्यामि च तत्तथा ।

इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः । अब्रवीत् सहितान् भ्रातॄन् दयापन्नो मृगान् प्रति ।

उक्तो रात्रौ मृगैरस्मिन् स्वप्नान्ते हतशेषितैः । तन्तुभूताः स्म भद्रन्ते दया नः क्रियतामिति ।

ते सत्यमाहुः कर्त्तव्या दयाऽस्माभिर्वनौकसां । साष्टमासं हि नो वर्षं यदेनानुपयुञ्ज्महे ।

पुनर्व्व्यूढमगं रम्यं काम्यकं काननोत्तमं। मरुभूमेः शिरः ख्यातं तृणबिन्दुसरः प्रति। १५१९९
तत्रेमां वसतिं शिष्टां विहरन्तो रमेमहि। ततस्ते पाण्डवाः शीघ्रं प्रययुर्द्धर्म्मकोविदाः।
ब्राह्मणैः सहिता राजन् ये च तत्र सहोषिताः। इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा।
ते यात्वाऽनुसृतैर्म्मार्गैः स्वन्नैः शुचिजलान्वितैः। ददृशुः काम्यकं पुण्यमाश्रमं तपसायुतं।
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा। तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा।

इति श्रीमहाभारते आरण्यपर्व्वणि युधिष्ठिरमृगस्वप्नदर्शने सप्तपञ्चाशदधिकद्विशततोऽध्यायः।समाप्तञ्च मृगस्वप्नोद्भवपर्व्व॥२५७॥

## ॥ अथश्रीहिद्रौणिकपर्व्व ॥ ११ ॥

॥ वैशम्पायन उवाच ॥ वने निवसतां तेषां पाण्डवानां महात्मनां। वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ। १५२००
फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमं। प्राप्तकालमनुध्यान्तः सेहिरे वरपूरुषाः।
युधिष्ठिरस्तु राजर्षिरात्मकर्म्मापराधजं। चिन्तयन् स महाबाहुर्भ्रातॄणां दुःखमुत्तमं।
न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः। दौरात्म्यमनुपश्यंस्तत् काले द्यूतोद्भवस्य हि।
संस्मरन् परुषा वाचः सूतपुत्रस्य पाण्डवः। निःश्वासपरमो दीनो बिभ्रत् कोपविषं महत्।
अर्ज्जुनो यमजौ चोभौ द्रौपदी च यशस्विनी। स च भीमो महातेजाः सर्व्वेषामुत्तमो बली। १५२०५
युधिष्ठिरमुदीक्षन्तः सेहुर्दुःखमनुत्तमं। अवशिष्टमल्पकालं मन्वानाः पुरुषर्षभाः।
वपुरन्यदिवाकार्षुरुत्साहामर्षचेष्टितैः। कस्यचित्त्वथ कालस्य व्यासः सत्यवतीसुतः।
आजगाम महायोगी पाण्डवानवलोककः। तमागतमभिप्रेक्ष्य कुन्तीपुत्रो युधिष्ठिरः।
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि। तमासीनमुपासीनः शुश्रूषुर्नियतेन्द्रियः।
तोषयन् प्रणिपातेन व्यासं पाण्डवनन्दनः। तानवेक्ष्य कृशान् पौत्रान् वने वन्येन जीवतः। १५२१०
महर्षिरनुकम्पार्थमब्रवीद्बाष्पगद्गदं। युधिष्ठिर महाबाहो शृणु धर्म्मभृताम्बर।
नातप्ततपसो लोके प्राप्नुवन्ति महत् सुखं। सुखदुःखे हि पुरुषः पर्य्यायेणोपसेवते।
न ह्यनन्तं सुखं कश्चित् प्राप्नोति पुरुषर्षभ। प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया।
उदयास्तमनज्ञो हि न हृष्यति न शोचति। सुखमापतितं सेवेद्दुःखमापतितं वहेत्।
कालप्राप्तमुपासीत शस्यानामिव कर्षकः। तपसो हि परं नास्ति तपसा विन्दते महत्। १५२१५
नासाध्यं तपसः किञ्चिदिति बुध्यस्व भारत। सत्यमार्ज्जवमक्रोधः संविभागो दमः शमः।
अनसूया विहिंसा च शौचमिन्द्रियसंयमः। पावनानि महाराज नराणां पुण्यकर्म्मणां।
अधर्म्मरुचयो मूढास्तिर्य्यग्गतिपरायणाः। कृच्छ्रां योनिमनुप्राप्य न सुखं विन्दते जनाः।
इह यत् क्रियते कर्म्म तत्परत्रोपभुज्यते। तस्माच्छरीरं युञ्जीत तपसा नियमेन च।
यथाशक्ति प्रयच्छेत संपूज्याभिप्रणम्य च। काले प्राप्ते च हृष्टात्मा राजन् विगतमत्सरः। १५२२०
सत्यवादी लभेतायुरनायासमथार्ज्जवं। अक्रोधनोऽनसूयश्च निर्वृतिं लभते परां।

दान्तः शमपरः शश्वत् परिक्लेशं न विन्दति। न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियं।
संविभक्ता च दाता च भोगवान् सुखवान्नरः। भवत्यहिंसकश्चैव परमारोग्यमश्नुते।
मान्यमानयिता जन्म कुले महति विन्दति। व्यसनैर्न तु संयोगं प्राप्नोति विजितेन्द्रियः।
शुभानुशयबुद्धिर्हि संयुक्तः कालधर्म्मणा। प्रादुर्भवति तद्योगात् कल्याणमतिरेव सः। १५२९९
॥ युधिष्ठिर उवाच ॥ भगवन्दानधर्म्माणां तपसो वा महामुने। किंस्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते।
॥ व्यास उवाच ॥ दानान्न दुष्करं तात पृथिव्यामस्ति किञ्चन। अर्थे च महती तृष्णा स च दुःखेन लभ्यते।
परित्यज्य प्रियान् प्राणान् धनार्थं हि महामते। प्रविशन्ति नरा वीराः समुद्रमटवीन्तथा।
कृषिगोरक्षमित्येके प्रतिपद्यन्ति मानवाः। पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः।
तस्य दुःखार्ज्जितस्यैव परित्यागः सुदुष्करः। न दुष्करतरं दानात्तस्माद्दानं मतं मम। १५३००
विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्ज्जितं धनं। पात्रे काले च देशे च साधुभ्यः प्रतिपादयेत्।
अन्यायात् समुपात्तेन दानधर्म्मो धनेन यः। क्रियते न स कर्त्तारं त्रायते महतो भयात्।
पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर। मनसा हि विशुद्धेन प्रेत्यानन्तफलं स्मृतं।
इति श्रीमहाभारते आरण्यपर्व्वणि व्रीहिद्रौणिकाख्यानपर्व्वणि दानकथनेऽष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनं। व्रीहिद्रोणपरित्यागात् यत् फलं प्राप मुद्गलः।
॥ युधिष्ठिर उवाच ॥ व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना। कस्मै दत्तश्च भगवन् विधिना केन चात्थ मे। १५३०५
प्रत्यक्षधर्म्मा भगवान् यस्य तुष्टो हि कर्म्मभिः। सफलं तस्य जन्माहं मन्ये सद्धर्म्मचारिणः।
॥ व्यास उवाच ॥ शिलोञ्छवृत्तिर्धर्म्मात्मा मुद्गलः संयतेन्द्रियः। आसीद्राजन् कुरुक्षेत्रे सत्यवागनसूयकः।
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः। सत्रमिष्टीकृतं नाम समुपास्ते महातपाः।
सपुत्रदारो हि मुनिः पक्षाहारो बभूव ह। कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्ज्जयत्।
दर्शञ्च पौर्णमासञ्च कुर्व्वन् विगतमत्सरः। देवताऽतिथिशेषेण कुरुते देहयापनं। १५३१०
तस्येन्द्रः सहितो देवैः साक्षात्त्रिभुवनेश्वरः। प्रत्यगृह्णन्महाराज भागं पर्व्वणि पर्व्वणि।
स पर्व्वकालं कृत्वा तु मुनिवृत्त्या समन्वितः। अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना।
व्रीहिद्रोणस्य तस्याथ ददतोऽन्नं महात्मनः। शिष्टं मात्सर्य्यहीनस्य वर्द्धत्यतिथिदर्शनात्।
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणां। मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति।
तन्तु शुश्राव धर्म्मिष्ठं मुद्गलं शंसितव्रतं। दुर्व्वासा नृप दिग्वासास्तमथाभ्याजगाम ह। १५३१५
बिभ्रच्चानियतं वेशमुन्मत्त इव पाण्डव। विकचः परुषा वाचो व्याहरन् विविधा मुनिः।
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः। अन्नार्थिनमनुप्राप्तं विद्धि मां द्विजसत्तम।
स्वागतन्तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत। पाद्यमाचमनीयञ्च प्रतिपाद्यान्नमुत्तमं।
प्रादात् स तापसायान्नं क्षुधितायातिथिव्रती। उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः।
ततस्तदन्नं रसवत् स एव क्षुधयाऽन्वितः। बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः। १५३२०

भुक्त्वा चान्नं ततः सर्व्वमुच्छिष्टेनात्मनस्ततः। अथाङ्गं लिलिपेऽङ्गानि यथागतमगाच्च सः।
एवं द्वितीये संप्राप्ते यथाकाले मनीषिणः। आगम्य बुभुजे सर्व्वमन्नमुञ्छोपजीविनः।
निराहारस्तु स मुनिरुञ्छं मार्गयते पुनः। न चैनं विक्रिया नेतुमशकन्मुद्गलं क्षुधा।
न क्रोधो न च मात्सर्य्यं नावमानो न सम्भ्रमः। सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम्।
तथा तमुञ्छधर्म्माणं दुर्व्वासा मुनिसत्तमम्। उपतस्थे यथा कालं षट्कृत्वः कृतनिश्चयः। १५४२५
न चास्य मनसः किञ्चिद्विकारं ददृशे मुनिः। शुद्धसत्त्वस्य शुद्धं स ददृशे निर्म्मलं मनः।
तमुवाच ततः प्रीतः स मुनिर्म्मुद्गलं ततः। त्वत्समो नास्ति लोकेऽस्मिन् दाता मात्सर्य्यवर्ज्जितः।
क्षुद्धर्म्मसंज्ञां प्रणुदत्याददत्ते धैर्य्यमेव च। रसानुसारिणी जिह्वा कर्षत्येव रसान् प्रति।
आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम्। मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं निश्चितं तपः।
श्रमेणोपार्ज्जितं त्यक्तुं दुःखं शुद्धेन चेतसा। तत्सर्व्वं भवता साधो यथावदुपपादितम्। १५४३०
प्रीताः स्मोऽनुगृहीताश्च समेत्य भवता सह। इन्द्रियाभिजयो धैर्य्यं संविभागो दमः शमः।
दया सत्यञ्च धर्म्मश्च त्वयि सर्व्वं प्रतिष्ठितम्। जितास्ते कर्म्मभिर्लोकाः प्राप्तोऽसि परमां गतिम्।
अहो दानं विघुष्टन्ते सुमहत् स्वर्गवासिभिः। सशरीरो भवान् गन्ता स्वर्गं सुचरितव्रत।
इत्येवं वदतस्तस्य तदा दुर्व्वाससो मुनेः। देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः।
हंससारसयुक्तेन किङ्किणीजालमालिना। कामगेन विचित्रेण दिव्यगन्धवता तथा। १५४३५
उवाच चैनं विप्रर्षिं विमानं कर्म्मभिर्ज्जितम्। समुपारोह संसिद्धिं प्राप्तोऽसि परमां मुने।
तमेवंवादिनमृषिर्देवदूतमुवाच ह। इच्छामि भवता प्रोक्तान् गुणान् स्वर्गनिवासिनाम्।
के गुणास्तत्र वसतां किं तपः कश्च निश्चयः। स्वर्गे तत्र सुखं किञ्च दोषो वा देवदूतक।
सतां साप्तपदं मित्रमाहुः सन्तः कुलोचिताः। मित्रताञ्च पुरस्कृत्य पृच्छामि त्वामहं विभो।
यदत्र तथ्यं पथ्यञ्च तद्ब्रवीह्यविचारयन्। श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव। १५४४०

इति श्रीमहाभारते आरण्यपर्व्वणि व्रीहिद्रौणिकाख्यानपर्व्वणि स्वर्गगुणप्रश्ने एकोनषष्ट्यधिकद्विशततमोऽध्यायः॥ २५९॥

॥ देवदूत उवाच॥ महर्षे आर्य्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम्। संप्राप्तं बहु मन्तव्यं विमृशस्यबुधो यथा।
उपरिष्टाच्च स्वर्लोको योऽयं स्वरिति संज्ञितः। ऊर्द्ध्वगः सत्पथः शश्वद्देवयानचरो मुने।
नातप्ततपसः पुंसो नामहायज्ञयाजिनः। नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल।
धर्म्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः। दानधर्म्मरताः पुंसः शूराश्चाहवलक्षणाः।
तत्र गच्छन्ति धर्म्माग्र्यं कृत्वा शमदमात्मकम्। लोकान् पुण्यकृतान् ब्रह्मन् सद्भिराचरितान् नृभिः। १५४४५
देवाः साध्यास्तथा विश्वे तथैव च महर्षयः। यामा धामाश्च मौद्गल्य गन्धर्व्वाप्सरसस्तथा।
एषां देवनिकायानां पृथक् पृथगनेकशः। भास्वन्तः कामसम्पन्ना लोकास्तेजोमयाः शुभाः।
त्रयस्त्रिंशत्सहस्राणि योजनानि हिरण्मयः। मेरुः पर्व्वतराड् यत्र देवोद्यानानि मुद्गल।
नन्दनादीनि पुण्यानि विहाराः पुण्यकर्म्मणाम्। न क्षुत्पिपासे न ग्लानिर्न शीतोष्णे भयं तथा।

बीभत्समशुभं वाऽपि तत्र किञ्चिन्न विद्यते। मनोज्ञाः सर्व्वतो गन्धाः सुखस्पर्शाश्च सर्व्वशः। १५३७०
शब्दाः श्रुतिमनोग्राह्याः सर्व्वतस्तत्र वै मुने। न शोको न जरा तत्र नायासपरिदेवने।
ईदृशः स मुने लोकः स्वकर्म्मफलहेतुकः। सुकृतैस्तत्र पुरुषाः सम्भवन्त्यात्मकर्म्मभिः।
तैजसानि शरीराणि भवन्त्यत्रोपपद्यतां। कर्म्मजान्येव मौद्गल्य न मातृपितृजान्युत।
न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च। तेषां न च रजो वस्त्रं बाधते तत्र वै मुने।
न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः। संयुज्यन्ते विमानैश्च ब्रह्मन्नेवंविधैश्च ते। १५३७५
ईर्षाशोकक्लमापेता मोहमात्सर्य्यवर्ज्जिताः। सुखं स्वर्गजितस्तत्र वर्त्तयन्ति महामुने।
तेषां तथाविधानान्तु लोकानां मुनिपुङ्गव। उपर्य्युपरि लोकस्य लोका दिव्या गुणान्विताः।
पुरस्ताद्ब्राह्मणास्तत्र लोकास्तेजोमयाः शुभाः। यत्र यान्त्यृषयो ब्रह्मन् पूताः स्वैः कर्म्मभिः शुभैः।
ऋभवो नाम तत्रान्ये देवानामपि देवताः। तेषां लोकाः परतरे यान् यजन्तीह देवताः।
स्वयम्प्रभास्ते भास्वन्तो लोकाः कामदुघाः परे। न तेषां स्त्रीकृतस्तापो न लोकैश्वर्य्यमत्सरः। १५३८०
न वर्त्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः। तथा दिव्यशरीरास्ते न च विग्रहमूर्त्तयः।
न सुखे सुखकामास्ते देवदेवाः सनातनाः। न कल्पपरिवर्त्तेषु परिवर्त्तन्ति ते तथा।
जरा मृत्युः कुतस्तेषां हर्षः प्रीतिः सुखं न च। न दुःखं न सुखञ्चापि रागद्वेषौ कुतो मुने।
देवानामपि मौद्गल्य काङ्क्षिता सा गतिः परा। दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः।
त्रयस्त्रिंशदिमे देवा येषां लोका मनीषिभिः। गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्व्वकैः। १५३८५
अयं दानकृता व्युष्टिरनुप्राप्ता सुखं त्वया। तां भुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः।
एतत्स्वर्गसुखं विप्र लोका नानाविधास्तथा। गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे।
कृतस्य कर्म्मणस्तत्र भुज्यते यत् फलं दिवि। न चान्यत् क्रियते कर्म्म मूलच्छेदेन भुज्यते।
सोऽत्र दोषो मम मतस्तस्यान्ते पतनञ्च यत्। सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल।
असन्तोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः। यद्भवत्यवरे स्थाने स्थितानां तत् सुदुष्करं। १५३९०
संज्ञा मोहश्च पततां रजसा च प्रधर्षणं। प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयं।
आब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः। नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणां।
अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने। शुभानुशययोगेन मनुष्येषूपजायते।
तत्रापि स महाभागः सुखभागभिजायते। न चेत् सम्बुध्यते तत्र गच्छत्यधमतां ततः।
इह यत् क्रियते कर्म्म तत्परत्रोपभुज्यते। कर्म्मभूमिरियं ब्रह्मन् फलभूमिरसौ मता। १५३९५
एतत्ते सर्व्वमाख्यातं यन्मां त्वं पृच्छसि मुद्गल। तवानुकम्पया साधो साधु गच्छाम माचिरं।
॥ व्यास उवाच ॥ एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया। विमृश्य च मुनिश्रेष्ठो देवदूतमुवाच ह।
देवदूत नमस्तेऽस्तु गच्छ तात यथासुखं। महादोषेण मे कार्य्यं न स्वर्गेण सुखेन वा।
पतनान्ते महद्दुःखं परितापः सुदारुणः। स्वर्गभाजश्चरन्तीह तस्मात् स्वर्गं न कामये।

यत्र गत्वा न शोचन्ति न व्यथन्ति चलन्ति च। तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलं। १५३८०
॥ मुद्गल उवाच ॥ महान्तस्तु अमी दोषास्त्वया स्वर्गस्य कीर्त्तिताः। निर्दोष एव यस्त्वन्यो लोकं तं प्रवदस्व मे।
॥ देवदूत उवाच ॥ ब्रह्मणः सदनादूर्द्ध्वं तद्विष्णोः परमं पदं। शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यं विदुः।
न तत्र विप्र गच्छन्ति पुरुषा विषयात्मकाः। दम्भलोभमहाक्रोधमोहद्रोहैरभिद्रुताः।
निर्म्ममा निरहङ्कारा निर्द्वन्द्वाः संयतेन्द्रियाः। ध्यानयोगपराश्चैव तत्र गच्छन्ति मानवाः।
इत्युक्त्वा स मुनिर्व्वाक्यं देवदूतं विसृज्य तं। शिलोञ्छवृत्तिर्धर्म्मात्मा शममातिष्ठदुत्तमं। १५३८५
तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः। ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह।
ध्यानयोगाद्बलं लब्ध्वा प्राप्य बुद्धिमनुत्तमां। जगाम शाश्वतीं सिद्धिं परां निर्व्वाणलक्षणां।
तस्मात्त्वमपि कौन्तेय न शोकं कर्त्तुमर्हसि। राज्यात् स्फीतात् परिभ्रष्टस्तपसा तदवाप्स्यसि।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं। पर्य्यायेणोपसर्पन्ते नरं नेमिमरा इव।
पितृपैतामहं राज्यं प्राप्स्यस्यमितविक्रम। वर्षात्त्रयोदशादूर्द्ध्वं व्येतु ते मानसो ज्वरः। १५३९०
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा स भगवान् व्यासः पाण्डवनन्दनं। जगाम तपसे धीमान् पुनरेवाश्रमं प्रति।
इति श्रीमहाभारते आरण्यपर्व्वणि मुद्गलज्ञानप्राप्तौ षष्ट्यधिकद्विशततमोऽध्यायः। समाप्तञ्च व्रीहिद्रौणिकाख्यानपर्व्व ॥ २६० ॥

## अथ द्रौपदीहरणपर्व्व॥ १२ ॥

॥ जनमेजय उवाच ॥ वसत्स्वेवं वने तेषु पाण्डवेषु महात्मसु। रममाणेषु चित्राभिः कथाभिर्मुनिभिः सह।
सूर्य्यदत्ताक्षयान्नेन कृष्णाया भोजनावधि। ब्राह्मणांस्तर्पमाणेषु ये चान्नार्थमुपागताः।
आरण्यानां मृगाणाञ्च मांसैर्नानाविधैरपि। धार्त्तराष्ट्रा दुरात्मानः सर्व्वे दुर्य्योधनादयः।
कथं तेष्वन्ववर्त्तन्त पापाचारा महामुने। दुःशासनस्य कर्णस्य शकुनेश्च मते स्थिताः। १५३९५
एतदाचक्ष्व भगवन् वैशम्पायन पृच्छतः ॥ वैशम्पायन उवाच ॥ श्रुत्वा तेषां तथा वृत्तिं नगरे वसतामिव।
दुर्य्योधनो महाराज तेषु पापमरोचयत्। तथा तैर्निकृतिप्रज्ञैः कर्णदुःशासनादिभिः।
नानोपायैरघं तेषु चिन्तयत्सु दुरात्मसु। अभ्यागच्छत् स धर्म्मात्मा तपस्वी सुमहायशाः।
शिष्यायुतसमोपेतो दुर्व्वासा नाम कामतः। तमागतमभिप्रेक्ष्य मुनिं परमकोपनं।
दुर्य्योधनो विनीतात्मा प्रश्रयेण दमेन च। सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत्। १५४००
विधिवत् पूजयामास स्वयं किङ्करवत् स्थितः। अहानि कतिचित्तत्र तस्थौ स मुनिसत्तमः।
तञ्च पर्य्यचरद्राजा दिवारात्रमतन्द्रितः। दुर्य्योधनो महाराज शापात्तस्य विशङ्कितः।
क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप। इत्युक्त्वा गच्छति स्नातुं प्रत्यागच्छति वै चिरात्।
न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वाप्यदर्शनं। अकस्मादेत्य च ब्रूते भोजयास्मांस्त्वराऽन्वितः।
कदाचिच्च निशीथे स उत्थाय निकृतौ स्थितः। पूर्व्ववत् कारयित्वाऽन्नं न भुङ्क्ते गर्हयन् स सः। १५४०५
वर्त्तमाने तथा तस्मिन् यदा दुर्य्योधनो नृपः। विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः।

आह चैनं दुराधर्षो वरदोऽस्मीति भारत ॥ दुर्व्वासा उवाच ॥ वरं वरय भद्रन्ते यत्ते मनसि वर्त्तते।
मयि प्रीते तु यद्धर्म्यं नालभ्यं विद्यते तव ॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः।
अमन्यत पुनर्जातमात्मानं स सुयोधनः। प्रागेव मन्त्रितञ्चासीत् कर्णदुःशासनादिभिः।
याचनीयं मुनेस्तुष्टादिति निश्चित्य दुर्म्मतिः। अतिहर्षान्वितो राजा वरमेवमयाचत। १५५१०
शिष्यैः सह मम ब्रह्मन् यथा जातोऽतिथिर्भवान्। अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः।
वने वसति धर्म्मात्मा भ्रातृभिः परिवारितः। गुणवान् शीलसम्पन्नस्तस्य त्वमतिथिर्भव।
यदा च राजपुत्त्री सा सुकुमारी यशस्विनी। भोजयित्वा द्विजान् सर्व्वान् पतींश्च वरवर्णिनी।
विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा। तदा त्वं तत्र गच्छेथा यद्यनुग्राह्यता मयि।
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनं। दुर्व्वासा अपि विप्रेन्द्रो यथागतमगात्ततः। १५५१५
कृतार्थमिव चात्मानं तदा मेने सुयोधनः। करेण च करं गृह्य कर्णस्य मुदितो भृशं।
कर्णोऽपि भ्रातृसहितमित्युवाच नृपं मुदा ॥ कर्ण उवाच ॥ दिष्ट्या कामः सुसंवृत्तो दिष्ट्या कौरव वर्द्धसे।
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे। दुर्व्वासःक्रोधजे वह्नौ पतिताः पाण्डुनन्दनाः।
स्वैरेव ते महापापैर्गता वै दुस्तरं तमः ॥ वैशम्पायन उवाच ॥ इत्थं ते निकृतिप्रज्ञा राजन् दुर्य्योधनादयः।
हसन्तः प्रीतमनसो जग्मुः स्वं स्वं निकेतनं। १५५२०

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि दुर्व्वाससआतिथ्ये एकषष्ट्यधिकद्विशतोऽध्यायः ॥२६१॥

॥ वैशम्पायन उवाच ॥ ततः कदाचिद्दुर्व्वासाः सुखासीनांस्तु पाण्डवान्। भुक्त्वा चावस्थितां कृष्णां ज्ञात्वा तस्मिन् वने मुनिः।
अभ्यागच्छत् परिवृतः शिष्यैरयुतसम्मितैः। दृष्ट्वायान्तं तमतिथिं स च राजा युधिष्ठिरः।
जगामाभिमुखः श्रीमान् सह भ्रातृभिरच्युतः। तस्मै बद्ध्वाऽञ्जलिं सम्यगुपवेश्य वरासने।
विधिवत् पूजयित्वा तमातिथ्येन न्यमन्त्रयत्। आह्निकं भगवन् कृत्वा शीघ्रमेहीति चाब्रवीत्।
जगाम च मुनिः सोऽपि स्नातुं शिष्यैः सहानघः। भोजयेत् सहशिष्यं मां कथमित्यविचिन्तयन्। १५५२५
न्यमज्जत् सलिले चापि मुनिसङ्घः समाहितः। एतस्मिन्नन्तरे राजन् द्रौपदी योषितां वरा।
चिन्तामवाप परमामन्नहेतोः पतिव्रता। सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत।
मनसा चिन्तयामास कृष्णं कंसनिसूदनं। कृष्ण कृष्ण महाबाहो देवकीनन्दनाव्यय।
वासुदेव जगन्नाथ प्रणतार्त्तिविनाशन। विश्वात्मन् विश्वजनक विश्वहर्त्तः प्रभोऽव्यय।
प्रपन्नपाल गोपाल प्रजापाल परात्पर। आकूतीनाञ्च चित्तीनां प्रवर्त्तक नताऽस्मि ते। १५५३०
वरेण्य वरदानन्त अगतीनां गतिर्भव। पुराणपुरुष प्राण मनोवृत्त्याद्यगोचर।
सर्व्वाध्यक्ष पराध्यक्ष त्वामहं शरणं गता। पाहि मां कृपया देव शरणागतवत्सल।
नीलोत्पलदलश्याम पद्मगर्भारुणेक्षण। पीताम्बरपरीधान लसत्कौस्तुभभूषण।
त्वमादिरन्तो भूतानां त्वमेव च परायणं। परात्परतरं ज्योतिर्व्विश्वात्मा सर्व्वतोमुखः।
त्वामेवाहुः परं बीजं निधानं सर्व्वसम्पदां। त्वया नाथेन देवेश सर्व्वापद्भ्यो भयं न हि। १५५३५

दुःशासनादहं पूर्व्वं सभायां मोचिता यथा । तथैव सङ्कटादस्मान्मामुद्धर्त्तुमिहार्हसि ।
॥ वैशम्पायन उवाच ॥ एवं स्तुतस्तदा देवः कृष्णया भक्तवत्सलः । द्रौपद्याः सङ्कटं ज्ञात्वा देवदेवो जगत्पतिः ।
पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः । तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः ।
ततस्तं द्रौपदी दृष्ट्वा प्रणम्य परया मुदा । अब्रवीद्वासुदेवाय मुनेरागमनादिकं ।
ततस्तामब्रवीत् कृष्णः क्षुधितोऽस्मि भृशातुरः । शीघ्रं भोजय मां कृष्णे पश्चात् सर्व्वं करिष्यसि । १५५४०
निशम्य तद्वचः कृष्णा लज्जिता वाक्यमब्रवीत् । स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि ।
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते । ततः प्रोवाच भगवान् कृष्णां कमललोचनः ।
कृष्णे न नर्म्मकालोऽयं क्षुच्छ्रमेणातुरे मयि । शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय ।
इति निर्ब्बन्धतः स्थालीमानाय्य स यदूद्वहः । स्थाल्याः कण्ठेऽथ संलग्नं शाकान्नं वीक्ष्य केशवः ।
उपयुज्याब्रवीदेनामनेन हरिरीश्वरः । विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभुक् । १५५४५
आकारय मुनीन् शीघ्रं भोजनायेति चाब्रवीत् । भीमसेनं महाबाहुः कृष्णः क्लेशविनाशनः ।
ततो जगाम त्वरितो भीमसेनो महायशाः । आकारितुन्तु तान् सर्व्वान् भोजनार्थं नृपोत्तम ।
स्नातुं गतान् देवनद्यां दुर्व्वासःप्रभृतीन् मुनीन् । ते चावतीर्णाः सलिले कृतवन्तोऽघमर्षणं ।
दृष्ट्वोद्गारान् सान्नरसान् तृप्त्या परमया युताः । उत्तीर्य्य सलिलात्तस्माद्दृष्टवन्तः परस्परं ।
दुर्व्वाससमभिप्रेक्ष्य सर्व्वे ते मुनयोऽब्रुवन् । राज्ञा हि कारयित्वाऽन्नं वयं स्नातुं समागताः । १५५५०
आकण्ठतृप्ता विप्रर्षे किंस्विद्भुञ्जामहे वयं । वृथा पाकः कृतोऽस्माभिस्तत्र किं करवामहे ।
॥ दुर्व्वासा उवाच ॥ वृथापाकेन राजर्षेरपराधः कृतो महान् । माऽस्मानधाक्षुर्दृष्ट्वैव पाण्डवाः क्रूरचक्षुषा ।
स्मृत्वाऽनुभावं राजर्षेरम्बरीषस्य धीमतः । बिभेमि सुतरां विप्रा हरिपादाश्रयाज्जनात् ।
पाण्डवाश्च महात्मानः सर्व्वे धर्म्मपरायणाः । शूराश्च कृतविद्याश्च व्रतिनस्तपसि स्थिताः ।
सदाचाररता नित्यं वासुदेवपरायणाः । क्रुद्धास्ते निर्द्दहेयुर्व्वै तूलराशिमिवानलः । १५५५५
तत एतानपृष्ट्वैव शिष्याः शीघ्रं पलायत ॥ वैशम्पायन उवाच ॥ इत्युक्तास्ते द्विजाः सर्व्वे मुनिना गुरुणा तदा ।
पाण्डवेभ्यो भृशं भीता दुद्रुवुस्ते दिशो दश । भीमसेनो देवनद्यामपश्यन्मुनिसत्तमान् ।
तीर्थेष्वितस्ततस्तस्या विचचार गवेषयन् । तत्रस्थेभ्यस्तापसेभ्यः श्रुत्वा तांश्चैव विद्रुतान् ।
युधिष्ठिरमथाभ्येत्य तं वृत्तान्तं न्यवेदयत् । ततस्ते पाण्डवाः सर्व्वे प्रत्यागमनकाङ्क्षिणः ।
प्रतीक्षन्तः कियत्कालं जितात्मानोऽवतस्थिरे । निशीथेऽभ्येत्य चाकस्मादस्मान् स च्छलयिष्यति । १५५६०
कथञ्च निस्तरेमास्मात् कृच्छ्राद्दैवोपसादितात् । इति चिन्तापरान् दृष्ट्वा निश्वसन्तो मुहुर्मुहुः ।
उवाच वचनं श्रीमान् कृष्णः प्रत्यक्षताङ्गतः ॥ श्रीकृष्ण उवाच ॥ भवतामापदं ज्ञात्वा ऋषेः परमकोपनात् ।
द्रौपद्या चिन्तितः पार्था अहं सत्वरमागतः । न भयं विद्यते तस्मादृषेर्दुर्व्वाससोऽल्पकं ।
तेजसा भवतां भीतः पूर्व्वमेव पलायितः । धर्म्मनित्यास्तु ये केचिन्न ते सीदन्ति कर्हिचित् ।
आपृच्छे वो गमिष्यामि नियतं भद्रमस्तु वः ॥ वैशम्पायन उवाच ॥ श्रुत्वेरितं केशवस्य बभूवुः स्वस्थमानसाः । १५५६५

द्रौपद्या सहिताः पार्थास्त्वमूर्विगतज्वराः । त्वया नाथेन गोविन्द दुस्तरामापदं विभो ।
तीर्णाः प्लवमिवासाद्य मज्जमाना महार्णवे । स्वस्ति साधय भद्रन्ते इत्याज्ञातो ययौ पुरीं ।
पाण्डवाश्च महाभाग द्रौपदीसहिताः प्रभो । ऊषुः प्रहृष्टमनसो विहरन्तो वनाद्वनं ।
इति तेऽभिहितं राजन् यत्पृष्टोऽहमिह त्वया । एवं विधान्यनीकानि धार्त्तराष्ट्रैर्दुरात्मभिः ।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाऽभवन् । ११५७०

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि कृष्णगमने द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन् बहुमृगेऽरण्ये अटमाना महारथाः । काम्यके भरतश्रेष्ठा विजह्रुस्ते यथाऽमराः ।
प्रेक्षमाणा बहुविधान् वनोद्देशान् समन्ततः । यथर्त्तुकालरम्याश्च वनराजीः सुपुष्पिताः ।
पाण्डवा मृगयाशीलाश्चरन्तस्तन्महद्वनं । विजह्रुरिन्द्रप्रतिमाः कञ्चित् कालमरिन्दम ।
ततस्ते यौगपद्येन ययुः सर्व्वे चतुर्द्दिशं । मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परन्तपाः ।
द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया । महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः । ११५७५
ततस्तु राजा सिन्धूनां वार्द्धक्षत्रिर्महायशाः । विवाहकामः शाल्वेयान् प्रयातः सोऽभवत्तदा ।
महता परिबर्हेण राजयोग्येन संवृतः । राजभिर्बहुभिः सार्द्धमुपायात् काम्यकञ्च सः ।
तत्रापश्यत् प्रियां भार्य्यां पाण्डवानां यशस्विनीं । तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्ज्जने वने ।
विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमं । भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतं ।
अप्सरा देवकन्या वा माया वा देवनिर्म्मिता । इति कृत्वाऽञ्जलिं सर्व्वे ददृशुस्तामनिन्दितां । ११५८०
ततः स राजा सिन्धूनां वार्द्धक्षत्रिर्जयद्रथः । विस्मितस्त्वनवद्याङ्गीं दृष्ट्वा तां दुष्टमानसः ।
स कोटिकास्यं राजानमब्रवीत् काममोहितः । कस्य त्वेषाऽनवद्याङ्गी यदि वाऽपि न मानुषी ।
विवाहार्थी न मे कश्चिदिमां प्राप्यातिसुन्दरीं । एतामेवाहमादाय गमिष्यामि स्वमालयं ।
गच्छ जानीहि सौम्यैनां कस्य वाऽत्र कुतोऽपि वा । किमर्थमागता सुभ्रूरिदं कण्टकितं वनं ।
अपि नाम वरारोहा मामेषा लोकसुन्दरी । भजेदद्यायतापाङ्गी सुदती तनुमध्यमा । ११५८५
अप्यहं कृतकामः स्यामिमां प्राप्य वरस्त्रियं । गच्छ जानीहि को न्वस्या नाथ इत्येव कोटिक ।
स कोटिकास्यस्तच्छ्रुत्वा रथात् प्रस्कन्द्य कुण्डली । उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव ।

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि कोटिकास्यप्रश्ने त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

॥ कोटिकास्य उवाच ॥ का त्वं कदम्बस्य विनाम्य शाखामेकाश्रमे तिष्ठसि शोभमाना । देदीप्यमानाऽग्निशिखेव नक्तं व्याधूयमाना पवनेन सुभ्रु ।
अतीव रूपेण समन्विता त्वं न चाप्यरण्येषु बिभेषि किन्नु । देवी नु यक्षी यदि दानवी वा वराप्सरा दैत्यवराङ्गना वा ।
वपुष्मती वोरगराजकन्या वनेचरी वा क्षणदाचरस्त्री । यद्येव राज्ञो वरुणस्य पत्नी यमस्य सोमस्य धनेश्वरस्य । ११५९०
धातुर्व्विधातुः सवितुर्व्विभोर्व्वा शक्रस्य वा त्वं सदनात् प्रपन्ना । न ह्येव नः पृच्छसि ये वयं स्म न चापि जानीम तवेह नाथं ।
वयं हि मानं तव वर्द्धयन्तः पृच्छाम भद्रे प्रभवं प्रभुञ्च । आचक्ष्व बन्धूंश्च पतिं कुलञ्च तत्त्वेन यच्चेह करोषि कार्य्यं ।

अहन्तु राज्ञः सुरथस्य पुत्त्रो यं कोटिकाश्येति विदुर्म्मनुष्याः। असौ तु तस्मिन् कनकाङ्गेऽथ रथे हुतोऽग्निश्चयने यथैव।
त्रिगर्त्तराज्ञः कमलायताक्षः क्षेमङ्करो नाम स एष वीरः। अस्मात् परस्त्वेष महाधनुष्मान् पुत्त्रः कुलिन्दाधिपतेर्व्वरिष्ठः।
निरीक्षते त्वां विपुलायताक्षः सुपुष्पितः पर्व्वतवासनित्यः। असौ तु यः पुष्करिणीसमीपे श्यामो युवा तिष्ठति दर्शनीयः।१५०९५
इक्ष्वाकुराज्ञः सुबलस्य पुत्त्रः स एष हन्ता द्विषतां सुगात्रि। यस्यानुयात्रा ध्वजिनः प्रयान्ति सौवीरका द्वादश राजपुत्त्राः।
शोणाश्वयुक्तेषु रथेषु सर्व्वे मखेषु दीप्ता इव हव्यवाहाः। अङ्गारकः कुञ्जरो गुप्तकश्च शत्रुञ्जयः सञ्जयसुप्रवृद्धौ।
भयङ्करोऽथ भ्रमरो रविश्च शूरः प्रतापः कुहनश्च नाम। यं षट्सहस्रा रथिनोऽनुयान्ति नागा हयाश्चैव पदातिनश्च।
जयद्रथो नाम यदि श्रुतस्ते सौवीरराजः सुभगे स एषः। तस्यापरे भ्रातरोऽदीनसत्त्वा बलाहकानीकविदारणाद्याः।
सौवीरवीराः प्रवरा युवानो राजानमेते बलिनोऽनुयान्ति। एतैः सहायैरुपयाति राजा मरुद्गणैरिन्द्र इवाभिगुप्तः। १५१००
अजानतां ख्यापय नः सुकेशि कस्यासि भार्य्या दुहिता च कस्य।
इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि कोटिकास्यप्रश्ने चतुःषष्ट्यधिकद्विशततोऽध्यायः॥ २६४ ॥
॥ वैशम्पायन उवाच ॥ अथाब्रवीद्द्रौपदी राजपुत्त्री पृष्टा शिवीनां प्रवरेण तेन। अवेक्ष्य मन्दं प्रविमुच्य शाखां संगृह्णती कौशिकमुत्तरीयं॥
बुद्ध्याऽभिजानामि नरेन्द्रपुत्त्र न मादृशी त्वामभिभाष्टुमर्हति। न त्वेव वक्ताऽस्ति तवेह वाक्यमन्यो नरो वाऽप्यथ वाऽपि नारी।
एका ह्यहं सम्प्रति तेन वाचं ददानि वै भद्र निबोध चेदं। अहं ह्यरण्ये कथमेकमेका त्वामालपेयं निरता स्वधर्म्मे।
जानामि च त्वां सुरथस्य पुत्त्रं यं कोटिकाश्येति विदुर्म्मनुष्याः। तस्मादहं शैब्य तथैव तुभ्यमाख्यामि बन्धून् प्रथितं कुलञ्च। १५१०५
अपत्यमस्मि द्रुपदस्य राज्ञः कृष्णेति मां शैब्य विदुर्म्मनुष्याः। साऽहं वृणे पञ्च जनान् पतित्वे ये खाण्डवप्रस्थगताः श्रुतास्ते।
युधिष्ठिरो भीमसेनार्ज्जुनौ च माद्र्याश्च पुत्त्रौ पुरुषप्रवीरौ। ते मां निवेश्येह दिशश्चतस्रो विभज्य पार्था मृगयां प्रयाताः।
प्राचीं राजा दक्षिणां भीमसेनो जयः प्रतीचीं यमजावुदीचीं। मन्ये तु तेषां रथसत्तमानां कालोऽभितः प्राप्त इहोपयातुं।
सम्मानिता यास्यथ तैर्यथेष्टं विमुच्य वाहानवरोहयध्वं। प्रियातिथिर्धर्म्मसुतो महात्मा प्रीतो भविष्यत्यभिवीक्ष्य युष्मान्।
एतावदुक्त्वा द्रुपदात्मजा सा शैब्यात्मजं चन्द्रमुखी प्रतीता। विवेश तां पर्णशालां प्रशस्तां सञ्चिन्त्य तेषामतिथित्वधर्म्मं।१५११०
इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि द्रौपदीवाक्ये पञ्चषष्ट्यधिकद्विशततोऽध्यायः॥ २६५ ॥
॥ वैशम्पायन उवाच ॥ तथासीनेषु सर्व्वेषु तेषु राजसु भारत। यदुक्तं कृष्णया सार्द्धं तत् सर्व्वं प्रत्यवेदयत्।
कोटिकास्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत्। यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः।
सीमन्तिनीनां मुख्यानां विनिवृत्तः कथं भवान्। एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः।
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते। दर्शनादेव हि मनस्तया मेऽपहृतं भृशं।
तां समाचक्ष्व कल्याणीं यदि स्यात् शैब्य मानुषी॥ कोटिक उवाच॥ एषा वै द्रौपदी कृष्णा राजपुत्त्री यशस्विनी। १५११५
पञ्चानां पाण्डुपुत्त्राणां महिषी सम्मता भृशं। सर्व्वेषाञ्चैव पार्थानां प्रिया बहुमता सती।
तया समेत्य सौवीर सौवीराभिमुखो व्रज॥ वैशम्पायन उवाच॥ एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति।
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः। स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा।

आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् । कुशलेन वरारोहे भर्त्तारस्तेऽप्यनामयाः ।
येषां कुशलकामाऽसि तेऽपि कच्चिदनामयाः ॥ द्रौपद्युवाच ॥ अपि ते कुशलं राज्ये राष्ट्रे कोषे बले तथा । १५६२५
कच्चिदेकः शिबीनाढ्यान् सौवीरान् सह सिन्धुभिः । अनुतिष्ठसि धर्म्मेण ये चान्ये विदितास्त्वया ।
कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः । अहञ्च भ्रातरश्चास्य यांश्चान्यान् परिपृच्छसि ।
पाद्यं प्रतिगृहाणेदमासनञ्च नृपात्मज । मृगान् पञ्चाशतञ्चैव प्रातराशं ददानि ते ।
ऐणेयान् पृषतान् न्यङ्कून् हरिणान् शरभान् शशान् । ऋष्यान् रुरून् शम्बरांश्च गवयांश्च मृगान् बहून् ।
वराहान्महिषांश्चैव याश्चान्या मृगजातयः । प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः । १५६३०
॥ जयद्रथ उवाच ॥ कुशलं प्रातराशस्य सर्व्वं मे दिष्टितं त्वया । एहि मे रथमारोह सुखमाप्नुहि केवलं ।
गतश्रीकान् हृतराज्यान् कृपणान् गतचेतसः । अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ।
न वै प्राज्ञा गतश्रीकं भर्त्तारमुपयुञ्जते । युञ्जानमनुयुञ्जीत न श्रियः संक्षये वसेत् ।
श्रिया विहीना राज्याच्च विनष्टाः शाश्वतीः समाः । अलन्ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुं ।
भार्य्या मे भव सुश्रोणि त्यजैनान् सुखमाप्नुहि । अखिलान् सिन्धुसौवीरानाप्नुहि त्वं मया सह । १५६३५
॥ वैशम्पायन उवाच ॥ इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनं । कृष्णा तस्मादपाक्रामद्देशात् सभ्रुकुटीमुखी ।
अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा । मैवमित्यब्रवीत् कृष्णा लज्जस्वेति च सैन्धवं ।
सा काङ्क्षमाणा भर्त्तॄणामुपयानमनिन्दिता । विलोभयामास परं वाक्यैर्व्वाक्यानि युञ्जती ।
इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि द्रौपदीवाक्ये षट्षष्ट्यधिकद्विशततोऽध्यायः ॥ २६६ ॥
॥ वैशम्पायन उवाच ॥ सरोषरागोपहतेन वल्गुना सरागनेत्रेण नतोन्नतभ्रुवा । मुखेन विस्फूर्य्य सुवीरराष्ट्रपं ततोऽब्रवीत्तं द्रुपदात्मजा पुनः ।
यशस्विनस्तीक्ष्णविषान्महारथानभिब्रुवन्मूढ न लज्जसे कथं । महेन्द्रकल्पान्निरतान् स्वकर्म्मसु स्थितान् समूहेष्वपि यक्षरक्षसां । १५६४०
न किञ्चिदीड्यं प्रवदन्ति पापं वनेचरं वा गृहमेधिनं वा । तपस्विनं सम्परिपूर्णविद्यं भषन्ति हैवं श्वनराः सुवीर ।
अहन्तु मन्ये तव नास्ति कश्चिदेतादृशे क्षत्रियसन्निवेशे । यस्त्वाद्य पातालमुखे पतन्तं पाणौ गृहीत्वा प्रतिसंहरेत ।
नागं प्रभिन्नं गिरिकूटकल्पमुपत्यकां हैमवतीं चरन्तं । दण्डीव यूथादपसेधसे त्वं यो जेतुमाशंससि धर्म्मराजं ।
बाल्यात् प्रसुप्तस्य महाबलस्य सिंहस्य पक्ष्माणि मुखाल्लुनासि । पदा समाहत्य पलायमानः क्रुद्धं यदा द्रक्ष्यसि भीमसेनं ।
महाबलं घोरतरं प्रवृद्धं जातं हरिं पर्व्वतकन्दरेषु । प्रसुप्तमुग्रं प्रपदेन हंसि यः क्रुद्धमायोत्स्यसि जिष्णुमुग्रं । १५६४५
कृष्णोरगौ तीक्ष्णमुखौ द्विजिह्वौ मत्तः पदा क्रामसि पुच्छदेशे । यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां जघन्यजाभ्यां प्रयुयुत्ससे त्वं ।
यथा च वेणुः कदली नलो वा फलत्यभावाय न भूतयेऽऽत्मनः । तथैव मां तैः परिरक्ष्यमाणामादास्यसे कर्कटकीव गर्भं ।
॥ जयद्रथ उवाच ॥ जानामि कृष्णे विदितं ममैतद्यथाविधास्ते नरदेवपुत्राः । न त्वेवमेतेन विभीषणेन शक्या वयं त्रासयितुं त्वयाऽद्य ।
वयं पुनः सप्तदशेषु कृष्णे कुलेषु सर्व्वेऽनवमेषु जाताः । षड्भ्यो गुणेभ्योऽभ्यधिका विहीनान्मन्यामहे द्रौपदि पाण्डुपुत्रान् ।

सा क्षिप्रमातिष्ठ गजं रथं वा न वाक्यमात्रेण वयं हि शक्याः । आशंस वा त्वं कृपणं वदन्ती सौवीरराजस्य पुनः प्रसादं । १५६९०
॥ द्रौपद्युवाच ॥ महाबला किन्त्विह दुर्ब्बलेव सौवीरराजस्य मताऽहमस्मि । नाहं प्रमाथादिह सम्प्रतीता सौवीरराजं कृपणं वदेयं ।
यस्या हि कृष्णौ पदवीञ्चरेतां समास्थितावेकरथे समेतौ । इन्द्रोऽपि तां नापहरेत् कथञ्चिन्मनुष्यमात्रः कृपणः कुतोऽन्यः ।
यथा किरीटी परवीरघाती निघ्नन् रथस्थो द्विषतां मनांसि । मदन्तरे त्वद्ध्वजिनीं प्रवेष्टा कक्षं दहन्नग्निरिवोष्णगेषु ।
जनार्द्दनः सान्धकवृष्णिवीरो महेष्वासाः कैकेयाश्चापि सर्व्वे । एते हि सर्व्वे मम राजपुत्त्राः प्रहृष्टरूपाः पदवीञ्चरेयुः ।
मौर्व्वीविसृष्टाः स्तनयित्नुघोषा गाण्डीवमुक्तास्त्वतिवेगवन्तः । हस्तं समाहत्य धनञ्जयस्य भीमाः शब्दं घोरतरं नदन्ति । १५६९५
गाण्डीवमुक्तांश्च महाशरौघान् पतङ्गसङ्घानिव शीघ्रवेगान् । यदा द्रष्टास्यर्जुनं वीर्य्यशालिनं तदा स्वबुद्धिं प्रति निन्दिताऽसि ।
सशङ्खघोषः सतलत्रघोषो गाण्डीवधन्वा मुहुरुद्वहंश्च । यदा शरानर्पयिता तवोरसि तदा मनस्ते किमिवाभविष्यत् ।
गदाहस्तं भीममभिद्रवन्तं माद्रीपुत्त्रौ सम्पतन्तौ दिशश्च । अमर्षजं क्रोधविषं वमन्तौ दृष्ट्वा चिरं तापमुपैष्यसेऽधम ।
यथा चाहं नातिचरे कथञ्चित् पतीन्महार्हान्मनसाऽपि जातु । तेनाद्य सत्येन वशीकृतं त्वां द्रष्टास्मि पार्थैः परिकृष्यमाणं ।
न सम्भ्रमं गन्तुमहं हि शक्ष्ये त्वया नृशंसेन विकृष्यमाणा । समागताऽहं हि कुरुप्रवीरैः पुनर्व्वनं काम्यकमागताऽस्मि । १५७००
॥ वैशम्पायन उवाच ॥ सा तानभिप्रेक्ष्य विशालनेत्रा जिघृक्षमाणा न च भर्त्सयन्ती । प्रोवाच मा मा स्पृशतेति भीता धौम्यं प्रचुक्रोश पुरोहितं सा ॥
जग्राह तामुत्तरवस्त्रदेशे जयद्रथस्तं समवाक्षिपत् सा । तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः ।
प्रगृह्यमाणा तु महाजवेन मुहुर्व्विनिश्वस्य च राजपुत्त्री । सा कृष्यमाणा रथमारुरोह धौम्यस्य पादावभिवाद्य कृष्णा ।

॥ धौम्य उवाच ॥ नेयं शक्या त्वया नेतुमविजित्य महारथान् । धर्म्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ ।
क्षुद्रं कृत्वा फलं पापं त्वं प्राप्स्यसि न संशयः । आसाद्य पाण्डवान् वीरान् धर्म्मराजपुरोगमान् । १५७०५
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा ह्रियमाणां तां राजपुत्त्रीं यशस्विनीं । अन्वगच्छत्तदा धौम्यः पदातिगणमध्यगः ।
इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि द्रौपदीहरणे सप्तषष्ट्यधिकद्विशततोऽध्यायः ॥ २६७ ॥

॥ वैशम्पायन उवाच ॥ ततो दिशः सम्प्रविहृत्य पार्था मृगान् वराहान् महिषांश्च हत्वा । धनुर्धराः श्रेष्ठतमाः पृथिव्यां पृथक् चरन्तः सहिता बभूवुः ।

ततो मृगव्यालगणानुकीर्णं महावनं तद्विहगोपघुष्टं । भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः श्रुत्वा गिरो व्याहरतां मृगाणां ।
आदित्यदीप्तां दिशमभ्युपेत्य मृगा द्विजाः क्रूरमिमे वदन्ति । आयासमुग्रं प्रतिवेदयन्तो महावनं शत्रुभिर्ब्बाध्यमानं ।
क्षिप्रं निवर्त्तध्वमलं मृगैर्नो मनो हि मे दूयति दह्यते च । बुद्धिं समाच्छाद्य च मे समन्युरुद्धूयते प्राणपतिः शरीरे । १५७१०
सरः सुपर्णेन हृतोरगं यथा राष्ट्रं यथाऽराजकमात्तलक्ष्मि । एवंविधं मे प्रतिभाति काम्यकं शौण्डैर्यथा पीतरसश्च कुम्भः ।
ते सैन्धवैरत्यनिलौघवेगैर्महाजवैर्व्वाजिभिरुह्यमानाः । युक्तैर्बृहद्भिः सुरथैर्नृवीरास्तदाश्रमायाभिमुखा बभूवुः ।
तेषान्तु गोमायुरनल्पघोषो निवर्त्ततां वाममुपेत्य पार्श्वं । प्रव्याहरत्तत् प्रविमृश्य राजा प्रोवाच भीमञ्च धनञ्जयञ्च ।
यथा वदत्येष विहीनयोनिः शालावृको वा समुपेत्य पार्श्वं । सुव्यक्तमस्मानवमन्य पापैः कृतोऽभिमर्द्दः कुरुभिः प्रसह्य ।

इत्येव ते तद्वनमाविशन्तो महत्यरण्ये मृगयाञ्चरित्वा । बालामपश्यन्त तदा रुदन्तीं धात्रेयिकां प्रेष्यवधूं प्रियायाः । ११६७५
तामिन्द्रसेनस्त्वरितोऽभिसृत्य रथादवप्लुत्य ततोऽभ्यधावत् । प्रोवाच चैनां वचनं नरेन्द्र धात्रेयिकामार्त्ततरस्तदानीं ।
किं रोदिषि त्वं पतिता धरण्यां किन्ते मुखं शुष्यति दीनवर्णं । कच्चिन्न पापैः सुनृशंसकृद्भिः प्रमाथिता द्रौपदी राजपुत्री ।
अचिन्त्यरूपा सुविशालनेत्रा शरीरतुल्या कुरुपुङ्गवानां । यद्येव देवी पृथिवीं प्रविष्टा दिवं प्रपन्नाऽप्यथवा समुद्रं ।
तस्या गमिष्यन्ति पदं हि पार्था यथा हि सन्तप्यति धर्म्मपुत्रः । को हीदृशानामरिमर्द्दनानां क्लेशक्षमाणामपराजितानां ।
प्राणैः समामिष्टतमां जिहीर्षेदनुत्तमं रत्नमिव प्रमूढः । न बुध्यते नाथवतीमिहाद्य बहिश्चरं हृदयं पाण्डवानां । ११६८०
कस्याद्य कायं प्रतिभिद्य घोरा महीं प्रवेक्ष्यन्ति शिताः शराग्र्याः । मा त्वं शुचस्तां प्रति भीरु विद्धि यथाऽद्य कृष्णा पुनरेष्यतीति ।
निहत्य सर्व्वान् द्विषतः समग्रान् पार्थाः समेष्यन्त्यथ याज्ञसेन्या । अथाब्रवीच्चारुमुखं प्रमृज्य धात्रेयिका सारथिमिन्द्रसेनं ।
जयद्रथेनापहृता प्रमथ्य पञ्चेन्द्रकल्पान् परिभूय कृष्णा । तिष्ठन्ति वर्त्मानि नवान्यमूनि वृक्षाश्च न म्लान्ति तथैव भग्नाः ।
आवर्त्तयध्वं ह्यनुयात शीघ्रं न दूरयातैव हि राजपुत्री । सन्नह्यध्वं सर्व्व एवेन्द्रकल्पा महान्ति चारूणि च दंशनानि ।
गृह्णीत चापानि महाधनानि शरांश्च शीघ्रं पदवीञ्चरध्वं । पुरा हि निर्भर्त्सनदण्डमोहिता प्रमूढचित्ता वदनेन शुष्यता । ११६८५
ददाति कस्मैचिदनर्हते तनुं वराज्यपूर्णामिव भस्मनि स्रुचं । पुरा तुषाग्नाविव हूयते हविः पुरा श्मशाने स्रगिवापविध्यते ।
पुरा च सोमोऽध्वरगोऽवलिह्यते शुना यथा विप्रजने प्रमोहिते । महत्यरण्ये मृगयाञ्चरित्वा पुरा शृगालो नलिनीं विगाहते ।
मा वः प्रियायाः सुनसं सुलोचनं चन्द्रप्रभाच्छं वदनं प्रसन्नं । स्पृश्याच्छुभं कश्चिदकृत्यकारी श्वा वै पुरोडाशमिवाध्वरस्थं ।
एतानि वर्त्मान्यनुयात शीघ्रं मा वः कालः क्षिप्रमिहात्यगाद्वै ॥ युधिष्ठिर उवाच ॥ भद्रे प्रतिक्राम नियच्छ वाचं माऽस्मत्सकाशे परुषाण्यवोचः । राजानो वा यदि वा राजपुत्रा बलेन मत्ता वञ्चनां प्राप्नुवन्ति ॥
॥ वैशम्पायन उवाच ॥ एतावदुक्त्वा प्रययुर्हि शीघ्रं तान्येव वर्त्मान्यनुवर्त्तमानाः । मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो ज्याविक्षिपन्तश्च महाधनुर्भिः । । ११६९०
ततोऽपश्यंस्तस्य सैन्यस्य रेणुमुद्धूतं वै वाजिखुरप्रणुन्नं । पदातीनां मध्यगतञ्च धौम्यं विक्रोशन्तं भीममभिद्रवेति ।
ते सान्त्व्य धौम्यं परिदीनसत्त्वाः सुखं भवानेत्विति राजपुत्राः । श्येना यथैवामिषसम्प्रयुक्ता जवेन तत्सैन्यमथाभ्यधावन् ।
तेषां महेन्द्रोपमविक्रमाणां संरब्धानां धर्षणाद्याज्ञसेन्याः । क्रोधः प्रजज्वाल जयद्रथञ्च दृष्ट्वा प्रियां तस्य रथे स्थिताञ्च ।
प्रचुक्रुशुश्चाप्यथ सिन्धुराजं वृकोदरश्चैव धनञ्जयश्च । यमौ च राजा च महाधनुर्द्धरास्ततो दिशः संमुमुहुः परेषां ।
इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि पार्थागमनेऽष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥
॥ वैशम्पायन उवाच ॥ ततो घोरतरः शब्दो वने समभवत्तदा । भीमसेनार्ज्जुनौ दृष्ट्वा क्षत्रियाणाममर्षिणां । ११६९५

तेषां ध्वजाग्राण्यभिवीक्ष्य राजा स्वयं दुरात्मा कुरुपुङ्गवानाम् । जयद्रथो याज्ञसेनीमुवाच रथे स्थितां भानुमतीं हतौजाः ।
आयान्तीमे पञ्च रथा महान्तो मन्ये च कृष्णे पतयस्तवैते । सा जानती आचक्ष्व नः सुकेशि परं परं पाण्डवानां रथस्थं ।

॥ द्रौपद्युवाच ॥ किन्ते ज्ञातैर्मूढ महाधनुष्मैरनायुष्यं कर्म्म कृत्वाऽतिघोरं । एते वीराः पतयो मे समेता न वः शेषः कश्चिदिहास्ति युद्धे ।
आख्यातव्यं त्वेव सर्व्वं मुमूर्षोर्मया तुभ्यं पृष्टया धर्म्म एषः । न मे व्यथा विद्यते त्वद्भयं वा संपश्यन्त्याः सानुजं धर्म्मराजं ।
यस्य ध्वजाग्रे नदतो मृदङ्गौ नन्दोपनन्दौ मधुरौ युक्तरूपौ । एतं स्वधर्म्मार्थविनिश्चयज्ञं सदा जनाः कृत्यवन्तोऽनुयान्ति । १५७००
य एष जाम्बूनदशुद्धगौरः प्रचण्डघोणस्तनुरायताक्षः । एतं कुरुश्रेष्ठतमं वदन्ति युधिष्ठिरं धर्म्मसुतं पतिं मे ।
अप्येष शत्रोः शरणागतस्य दद्यात् प्राणान् धर्म्मचारी नृवीरः । परैह्येनं मूढ जवेन भूतये त्वमात्मनः प्राञ्जलिर्न्यस्तशस्त्रः ।
अथाप्येनं पश्यसि यं रथस्थं महाभुजं शालमिव प्रवृद्धं । सन्दष्टौष्ठं भ्रुकुटीसंहतभ्रुवं वृकोदरो नाम पतिर्म्ममैषः ।
आजानेया बलिनः साधुदान्ता महाबलाः शूरमुदावहन्ति । एतस्य कर्म्माण्यतिमानुषाणि भीमेति शब्दोऽस्य गतः पृथिव्यां ।
नास्यापराद्धाः शेषमवाप्नुवन्ति नाथं वैरं विस्मरते कदाचित् । वैरस्यान्तं संविधायोपयाति पश्चाच्छान्तिं न च गच्छत्यतीव । १५७०५
धनुर्धराग्र्यो धृतिमान् यशस्वी जितेन्द्रियो वृद्धसेवी नृवीरः । भ्राता च शिष्यश्च युधिष्ठिरस्य धनञ्जयो नाम पतिर्म्ममैषः ।
यो वै न कामान्न भयान्न लोभात्त्यजेद्धर्म्मं न नृशंसञ्च कुर्य्यात् । स एष वैश्वानरतुल्यतेजाः कुन्तीसुतः शत्रुसहः प्रमाथी ।
यः सर्व्वधर्म्मार्थविनिश्चयज्ञो भयार्त्तानां भयहर्त्ता मनीषी । यस्योत्तमं रूपमाहुः पृथिव्यां यं पाण्डवाः परिरक्षन्ति सर्व्वे ।
प्राणैर्गरीयांसमनुव्रतं वै स एष वीरो नकुलः पतिर्म्मे । यः खड्गयोधी लघुचित्रहस्तो महांश्च धीमान् सहदेवो द्वितीयः ।
यस्याद्य कर्म्म द्रक्ष्यसे मूढसत्त्व शतक्रतोर्वा दैत्यसेनासु सङ्ख्ये । शूरः कृतास्त्रो मतिमान्मनस्वी प्रियङ्करो धर्म्मसुतस्य राज्ञः । १५७१०
य एष चन्द्रार्कसमानतेजा जघन्यजः पाण्डवानां प्रियश्च । बुद्ध्या समो यस्य नरो न विद्यते वक्ता तथा सत्सु विनिश्चयज्ञः ।
स एष शूरो नित्यममर्षणश्च धीमान् प्राज्ञः सहदेवः पतिर्म्मे । त्यजेत्प्राणान् प्रविशेद्धव्यवाहं न त्वेवैष व्याहरेद्धर्म्मबाह्यं ।
सदा मनस्वी क्षत्रधर्म्मे रतश्च कुन्त्याः प्राणैरिष्टतमो नृवीरः । विशीर्य्यन्तीं नावमिवार्णवान्ते रत्नाभिपूर्णां मकरस्य पृष्ठे ।
सेनाऽन्तरे मां हतसर्व्वयोधां विक्षोभितां द्रक्ष्यसि पाण्डुपुत्रैः । इत्येते वै कथिताः पाण्डुपुत्रा यांस्त्वं मोहादवमन्य प्रवृत्तः ।
यद्येतेभ्यो मुच्यसे रिष्टदेहः पुनर्जन्म प्राप्स्यसे जीव एव ॥ वैशम्पायन उवाच ॥ ततः पार्थाः पञ्च पञ्चेन्द्रकल्पास्त्यक्त्वा त्रस्तान् प्राञ्जलींस्तान् पदातीन् । रथानीकं शरवर्षान्धकारं चक्रुः क्रुद्धाः सर्व्वतः संनिगृह्य ॥ १५७११

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि पार्थयुद्धे एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

॥ वैशम्पायन उवाच ॥ सन्तिष्ठत प्रहरत तूर्णं विपरिधावत । इति स्म सैन्धवो राजा चोदयामास तान् नृपान् ।
ततो घोरतमः शब्दो रणे समभवत्तदा । भीमार्जुनयमान् दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ।
शिविसौवीरसिन्धूनां विषादश्चाप्यजायत । तान् दृष्ट्वा पुरुषव्याघ्रान् व्याघ्रानिव बलोत्कटान् ।
हेमचित्रसमुत्सेधां सर्व्वशैक्यायसीं गदां । प्रगृह्याभ्यद्रवद्भीमः सैन्धवं कालचोदितं ।
तदन्तरमथावृत्य कोटिकास्योऽभ्यहारयत् । महता रथवंशेन परिवार्य्य वृकोदरं । १५७२०
शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः । कीर्य्यमाणोऽपि बहुभिर्न स्म भीमोऽभ्यकम्पत ।
गजन्तु स गजारोहं पदातींश्च चतुर्द्दश । जघान गदया भीमः सैन्धवध्वजिनीमुखे ।
पार्थः पञ्चशतान् शूरान् पार्व्वतीयान् महारथान् । परीप्समानः सौवीरं जघान ध्वजिनीमुखे ।
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणां । निमेषमात्रेण शतं जघान समरे तदा ।
ददृशे नकुलस्तत्र रथात् प्रस्कन्द्य खड्गधृक् । शिरांसि पादरक्षाणां बीजवत् प्रवपन् मुहुः । १५७२५
सहदेवस्तु संयाय रथेन गजयोधिनः । पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ।
ततस्त्रिगर्त्तः सधनुरवतीर्य्य महारथात् । गदया चतुरो वाहान् राज्ञस्तस्य तदाऽवधीत् ।
तमभ्यासगतं राजा पदातिं कुन्तिनन्दनः । अर्द्धचन्द्रेण बाणेन विव्याधोरसि धर्म्मराट् ।
स भिन्नहृदयो वीरो वक्त्राच्छोणितमुद्वमन् । पपाताभिमुखः पार्थं छिन्नमूल इव द्रुमः ।
इन्द्रसेनद्वितीयस्तु रथात् प्रस्कन्द्य धर्म्मराट् । हताश्वः सहदेवस्य प्रतिपेदे महारथं । १५७३०
नकुलन्त्वभिसन्धाय क्षेमङ्करमहामुखौ । उभावुभयतस्तीक्ष्णैः शरवर्षैरवर्षतां ।
तोमरैरभिवर्षन्तौ जीमूताविव वार्षिकौ । एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ।
त्रिगर्त्तराजः सुरथस्तस्याथ रथधूर्गतः । रथमाक्षेपयामास गजेन गजयानवित् ।
नकुलस्त्वपभीस्तस्माद्रथाच्चर्म्मासिपाणिमान् । उद्भ्रान्तं स्थानमास्थाय तस्थौ गिरिरिवाचलः ।
सुरथस्तं गजवरं वधाय नकुलस्य तु । प्रेषयामास सक्रोधमत्युच्छ्रितकरं ततः । १५७३५
नकुलस्तस्य नागस्य समीपे परिवर्त्तिनः । सविषाणं भुजं मूले खड्गेन निरकृन्तत ।
स विनद्य महानादं गजः कङ्कणभूषणः । पतन्नवाक्शिरा भूमौ हस्त्यारोहानपातयत् ।
स तत् कर्म्म महत् कृत्वा शूरो माद्रवतीसुतः । भीमसेनरथं प्राप्य शर्म्म लेभे महारथः ।
भीमस्त्वापततो राज्ञः कोटिकास्यस्य सङ्गरे । सूतस्य नुदतो वाहान् क्षुरेणापाहरच्छिरः ।
न बुबोध हतं सूतं स राजा बाहुशालिना । तस्याश्वा व्यद्रवन् संख्ये हतसूतास्ततस्ततः । १५७४०
विमुखं हतसूतं तं भीमः प्रहरतांवरः । जघान तलयुक्तेन प्रासेनाभ्येत्य पाण्डवः ।
द्वादशानान्तु सर्व्वेषां सौवीराणां धनञ्जयः । चकर्त्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ।
शिबीनिक्ष्वाकुमुख्यांश्च त्रिगर्त्तान् सैन्धवानपि । जघानातिरथः संख्ये बाणगोचरमागतान् ।
सादिताः प्रत्यदृश्यन्त बहवः सव्यसाचिना । सपताकाश्च मातङ्गाः सध्वजाश्च महारथाः ।
प्रच्छाद्य पृथिवीं तस्थुः सर्व्वमायोधनं प्रति । शरीराण्यशिरस्काणि विदेहानि शिरांसि च । १५७४५

गृध्रकङ्कबककाकोलभासगोमायुवायसाः। अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः।
हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः। विमुच्य कृष्णां सन्त्रस्तः पलायनमनाऽभवत्।
स तस्मिन् सङ्कुले सैन्ये द्रौपदीमवतार्य्य तां। प्राणप्रेप्सुरुपाधावत् वनं येन नराधमः।
द्रौपदीं धर्म्मराजस्तु दृष्ट्वा धौम्यपुरस्कृतां। माद्रीपुत्त्रेण वीरेण रथमारोपयत्तदा।
ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे। आदिश्यादिश्य नाराचैराजघान वृकोदरः। १५७१०
सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथं। वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान्।
॥ अर्जुन उवाच ॥ यस्यापचारात् प्राप्तोऽयमस्मान् क्लेशो दुरासदः। तमस्मिन् समरोद्देशे न पश्यामि जयद्रथं।
तमेवान्विष भद्रन्ते किन्ते योधैर्निपातितैः। अनामिषमिदं कर्म्म कथं वा मन्यते भवान्।
॥ वैशम्पायन उवाच ॥ इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता। युधिष्ठिरमभिप्रेक्ष्य वाग्मी वचनमब्रवीत्।
हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः। गृहीत्वा द्रौपदीं राजन्निवर्त्ततु भवानितः। १५७१५
यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना। प्राप्याश्रमपदं राजन् द्रौपदीं परिसान्त्वय।
न हि मे मोक्ष्यते जीवन्मूढः सैन्धवको नृपः। पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः।
॥ युधिष्ठिर उवाच ॥ न हन्तव्यो महाबाहो दुरात्माऽपि स सैन्धवः। दुःशलामभिसंस्मृत्य गान्धारीञ्च यशस्विनीं।
॥ वैशम्पायन उवाच ॥ तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया। कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ।
कर्त्तव्यञ्चेत् प्रियं मह्यं वध्यः स पुरुषाधमः। सैन्धवापसदः पापो दुर्म्मतिः कुलपांसनः। १५७२०
भार्य्याऽभिहर्त्ता वैरी यो यश्च राज्यहरो रिपुः। याचमानोऽपि सङ्ग्रामे न मोक्तव्यः कथञ्चन।
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः। राजा निववृते कृष्णामादाय सपुरोहितः।
स प्रविश्याश्रमपदं व्यपविद्धवृषीमठं। मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह।
द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैः समाहितैः। समियाय महाप्राज्ञः सभार्य्यो भ्रातृमध्यगः।
ते स्म तं मुदिता दृष्ट्वा पुनः प्रत्यागतं नृपं। जित्वा तान् सिन्धुसौवीरान् द्रौपदीं चाहृतां पुनः। १५७२५
स तैः परिवृतो राजा तत्रैवोपविवेश ह। प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भाविनी।
भीमसेनार्ज्जुनौ चापि श्रुत्वा क्रोशगतं रिपुं। स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावतां।
इदमत्यद्भुतं चात्र चकार पुरुषोऽर्ज्जुनः। क्रोशमात्रगतानश्वान् सैन्धवस्य जघान यत्।
स हि दिव्यास्त्रसम्पन्नः कृच्छ्रकालेऽप्यसम्भ्रमः। अकरोद्दुष्करं कर्म्म शरैरस्त्रानुमन्त्रितैः।
ततोऽभ्यधावतां वीरावुभौ भीमधनञ्जयौ। हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसं। १५७३०
सैन्धवस्तु हतान् दृष्ट्वा तथाऽश्वान् स्वान् सुदुःखितः। अतिविक्रमकर्म्माणि कुर्व्वाणञ्च धनञ्जयं।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनं। सैन्धवं त्वभिसम्प्रेक्ष्य पराक्रान्तं पलायने।
अनुयाय महाबाहुः फाल्गुनो वाक्यमब्रवीत्। अनेन वीर्य्येण कथं स्त्रियं प्रार्थयसे बलात्।
राजपुत्त्र निवर्त्तस्व न ते युक्तं पलायनं। कथं ह्यनुचरान् हित्वा शत्रुमध्ये पलायसे।
इत्युच्यमानः पार्थेन सैन्धवो न न्यवर्त्तत। तिष्ठतिष्ठेति तं भीमः सहसाऽभ्यद्रवद्बली। १५७३५

मावधीरिति पार्थस्तं दयावान् प्रत्यभाषत ।

इति श्रीमहाभारते आरण्यपर्व्वणि द्रौपदीहरणपर्व्वणि जयद्रथपलायने सप्तत्यधिकद्विशततमोऽध्यायः समाप्तञ्च द्रौपदीहरणपर्व्व ॥ २७० ॥

## ॥ अथ जयद्रथविमोक्षणपर्व्व ॥ १३ ॥

॥ वैशम्पायन उवाच ॥ जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतायुधौ । प्राधावत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः ।
तं भीमसेनो धावन्तमवतीर्य्य रथाद्बली । अभिद्रुत्य निजग्राह केशपक्षेऽत्यमर्षणः ।
समुद्यम्य च तं भीमो निष्पिपेष महीतले । शिरो गृहीत्वा राजानं ताडयामास चैव ह ।
पुनः सञ्जीवमानस्य तस्योत्पतितुमिच्छतः । पदा मूर्द्ध्नि महाबाहुः प्राहरद्विलपिष्यतः । १५७८०
तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना । स मोहमगमद्राजा प्रहारवरपीडितः ।
विरोषं भीमसेनन्तु वारयामास फाल्गुनः । दुःशलायाः कृते राजा यत्तदाहेति कौरव ।
॥ भीम उवाच ॥ नायं पापसमाचारो मत्तो जीवितुमर्हति । कृष्णायास्तदनर्हायाः परिक्लेष्टा नराधमः ।
किन्नु शक्यं मया कर्त्तुं यद्राजा सततं घृणी । त्वञ्च बालिशया बुद्ध्या सदैवास्मान् प्रबाधसे ।
एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः । अर्द्धचन्द्रेण बाणेन किञ्चिदब्रुवतस्तदा । १५७८५
विकत्थयित्वा राजानं ततः प्राह वृकोदरः । जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ।
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च । एवं ते जीवितं दद्यामेष युद्धजितो विधिः ।
एवमस्त्विति तं राजा कृच्छ्रप्राणो जयद्रथः । प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनं ।
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः । रथमारोपयामास विसंज्ञं पांशुगुण्ठितं ।
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा । अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरं । १५७९०
दर्शयामास भीमस्तु तदवस्थं जयद्रथं । तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् ।
राजानञ्चाब्रवीद्भीमो द्रौपद्यै कथयेति वै । दासभावं गतो ह्येष पाण्डूनां पापचेतनः ।
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः । मुञ्चैनमधमाचारं प्रमाणं यदि ते वयं ।
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरं । दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चसटः कृतः ।
स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरं । ववन्दे विह्वलो राजा तांश्च सर्व्वान्मुनींस्तदा । १५७९५
तमुवाच घृणी राजा धर्म्मपुत्रो युधिष्ठिरः । तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना ।
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः पुनः क्वचित् । स्त्रीकामं वा धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान् ।
एवंविधं हि कः कुर्य्यात्त्वदन्यः पुरुषाधमः । गतसत्त्वमिव ज्ञात्वा कर्त्तारमशुभस्य तं ।
तं प्रेक्ष्य भरतश्रेष्ठ कृपाञ्चक्रे नराधिपः । धर्म्मे ते वर्द्धतां बुद्धिर्मा चाधर्म्मे मनः कृथाः ।
साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ । एवमुक्तस्तु सव्रीडं तूष्णीं किञ्चिदवाङ्मुखः । १५८००
जगाम राजन् दुःखार्त्तो गङ्गाद्वाराय भारत । स देवं शरणं गत्वा विरूपाक्षमुमापतिं ।

तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः। बलिं स्वयं प्रत्यगृह्णात् प्रीयमाणस्त्रिलोचनः।
वरञ्चास्मै ददौ देवः स जग्राह च तच्छृणु।
॥ जयद्रथ उवाच ॥ समस्तान् सरथान् पञ्च जयेयं युधि पाण्डवान्। इति राजाऽब्रवीद्देवं नेति देवस्तमब्रवीत्।
अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान् युधि। ऋतेऽर्ज्जुनं महाबाहुं नरं नाम सुरेश्वरं। १५७०५
बदर्य्यां तप्ततपसं नारायणसहायकं। अजितं सर्व्वलोकानां देवैरपि दुरासदं।
मया दत्तं पाशुपतं दिव्यमप्रतिमं शरं। अवाप लोकपालेभ्यो वज्रादीन् स महाशरान्।
देवदेवो ह्यनन्तात्मा विष्णुः सुरगुरुः प्रभुः। प्रधानपुरुषोऽव्यक्तो विश्वात्मा विश्वमूर्त्तिमान्।
युगान्तकाले संप्राप्ते कालाग्निर्दहते जगत्। सपर्व्वतार्णवद्वीपं सशैलवनकाननं।
निर्द्दहन्नागलोकांश्च पातालतलचारिणः। अथान्तरीक्षे सुमहन्नानावर्णाः पयोधराः। १५७१०
घोरस्वरा विनदिनस्तडिन्मालावलम्बिनः। समुत्तिष्ठन् दिशः सर्व्वा विवर्षन्तः समन्ततः।
ततोऽग्निं नाशयामासुः संवर्त्ताग्निनिवारकाः। वर्षमाणैश्च धाराभिस्तिष्ठन्त्यापूर्य्य सर्व्वशः।
एकार्णवे तदा तस्मिन्नुपशान्ते चराचरे। नष्टचन्द्रार्कपवने ग्रहनक्षत्रवर्ज्जिते।
चतुर्युगसहस्रान्ते सलिलेनावृता मही। ततो नारायणाख्यस्तु सहस्राक्षः सहस्रपात्।
सहस्रशीर्षा पुरुषः स्वप्तुकामस्त्वतीन्द्रियः। फटासहस्रविकटं शेषपर्य्यङ्कभोगिनं। १५७१५
सहस्रमिव तिग्मांशुसंघातममितद्युतिं। कुन्देन्दुहारगोक्षीरमृणालकुमुदप्रभं।
तत्रासौ भगवान् देवः स्वपन् जलनिधौ तदा। नैशेन तमसा व्याप्तां स्वां रात्रिं कुरुते विभुः।
सत्त्वोद्रेकात् प्रबुद्धस्तु शून्यं लोकमपश्यत। इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति।
आपो नारास्तु तनव इत्येवं नाम शुश्रुम। अयनं तेन चैवास्ते तेन नारायणः स्मृतः।
प्रध्यानसमकालन्तु प्रजाहेतोः सनातनः। ध्यानमात्रे तु भगवन्नाभ्यां पद्मः समुत्थितः। १५७२०
ततश्चतुर्मुखो ब्रह्मा नाभिपद्माद्विनिःसृतः। तत्रोपविष्टः सहसा पद्मे लोकपितामहः।
शून्यं दृष्ट्वा जगत् कृत्स्नं मानसानात्मनः समान्। ततो मरीचिप्रमुखान्महर्षीनसृजन्नव।
ते सृष्ट्वा सर्व्वभूतानि त्रस्तानि स्थावराणि च। यक्षराक्षसभूतानि पिशाचोरगमानुषान्।
सृजते ब्रह्ममूर्त्तिस्तु रचते पौरुषी तनुः। रौद्रीभावेन शमयेत्तिस्रोऽवस्थाः प्रजापतेः।
न श्रुतन्ते युधिष्ठिर विष्णोरद्भुतकर्म्मणः। कथ्यमानार्थं मुनिभिर्ब्राह्मणैर्वेदपारगैः। १५७२५
जलेन समनुप्राप्ते सर्व्वतः पृथिवीतले। तदा चैकार्णवे तस्मिन्नेकाकाशे प्रभुश्चरन्।
निशायामिव खद्योतः प्रावृट्काले समन्ततः। प्रतिष्ठानाय पृथिवीं मार्गमाणस्तदाऽभवत्।
जले निमग्नां गां दृष्ट्वा चोद्धर्त्तुं मनसेच्छति। किन्नु रूपमहं कृत्वा सलिलादुद्धरे महीं।
एवं सञ्चिन्त्य मनसा दृष्ट्वा दिव्येन चक्षुषा। जलक्रीडाभिरुचितं वाराहं रूपमस्मरत्।
कृत्वा वराहवपुषं वाङ्मयं वेदसम्मितं। दशयोजनविस्तीर्णमायतं शतयोजनं। १५७३०
महापर्व्वतवर्ष्माभं तीक्ष्णदंष्ट्रं प्रदीप्तिमत्। महामेघौघनिर्घोषं नीलजीमूतसन्निभं।

भूत्वा यज्ञवराहो वै अपः संप्राविशत् प्रभुः । दंष्ट्रैकेन चोद्धृत्य स्वे स्थाने न्यविशन्महीम् ।
पुनरेव महाबाहुरपूर्व्वां तनुमाश्रितः । नरस्य कृत्वाऽर्द्धतनुं सिंहस्यार्द्धतनुं प्रभुः ।
दैत्येन्द्रस्य सभां गत्वा पाणिं संस्पृश्य पाणिना । दैत्यानामादिपुरुषः सुरारिर्दितिनन्दनः ।
दृष्ट्वा चापूर्ववपुषं क्रोधात् संरक्तलोचनः । शूलोद्यतकरः स्रग्वी हिरण्यकशिपुस्तदा । १५८२५
मेघस्तनितनिर्घोषो नीलाभ्रचयसन्निभः । देवारिर्दितिजो वीरो नृसिंहं समुपाद्रवत् ।
समुपेत्य ततस्तीक्ष्णैर्मृगेन्द्रेण बलीयसा । नारसिंहेन वपुषा दारितः करजैर्भृशम् ।
एवं निहत्य भगवान् दैत्येन्द्रं रिपुघातिनम् । भूयोऽन्यः पुण्डरीकाक्षः प्रभुर्लोकहिताय च ।
कश्यपस्यात्मजः श्रीमानदित्या गर्भधारितः । पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमम् ।
दुर्द्दिनाम्भोदसदृशो दीप्ताक्षो वामनाकृतिः । दण्डी कमण्डलुधरः श्रीवत्सोरसि भूषितः । १५८३०
जटी यज्ञोपवीती च भगवान् बालरूपधृक् । यज्ञवाटं गतः श्रीमान् दानवेन्द्रस्य वै तदा ।
बृहस्पतिसहायोऽसौ प्रविष्टो बलिनो मखे । तं दृष्ट्वा वामनतनुं प्रहृष्टो बलिरब्रवीत् ।
प्रीतोऽस्मि दर्शने विप्र ब्रूहि त्वं किं ददामि ते । एवमुक्तस्तु बलिना वामनः प्रत्युवाच ह ।
स्वस्तीत्युक्त्वा बलिं देवः स्मयमानोऽभ्यभाषत । मेदिनीं दानवपते देहि मे विक्रमत्रयम् ।
बलिर्ददौ प्रसन्नात्मा विप्रायामिततेजसे । ततो दिव्याद्भुततमं रूपं विक्रमतो हरेः । १५८३५
विक्रमैस्त्रिभिरक्षोभ्यो जहाराशु स मेदिनीम् । ददौ शक्राय च महीं विष्णुर्देवः सनातनः ।
एष ते वामनो नाम प्रादुर्भावः प्रकीर्त्तितः । येन देवाः प्रादुरासन् वैष्णवञ्चोच्यते जगत् ।
असतां निग्रहार्थाय धर्म्मसंरक्षणाय च । अवतीर्णो मनुष्याणामजायत यदुक्षये ।
स एव भगवान् विष्णुः कृष्णेति परिकीर्त्यते । अनाद्यन्तमजं देवं प्रभुं लोकनमस्कृतम् ।
यं देवं विदुषो गान्ति तस्य कर्म्माणि सैन्धव । यमाहुरजितं कृष्णं शङ्खचक्रगदाधरम् । १५८४०
श्रीवत्सधारिणं देवं पीतकौषेयवाससम् । प्रधानं शस्त्रविदुषां तेन कृष्णेन रक्ष्यते ।
सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः । समानस्यन्दने पार्थमास्थाय परवीरहा ।
न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः । कः पुनर्मानुषो भावो रणे पार्थं विजेष्यते ।
तमेकं वर्ज्जयित्वा तु सर्व्वं यौधिष्ठिरं बलम् । चतुरः पाण्डवाञाजन् दिनैकं जेष्यसे रिपून् ।
॥ वैशम्पायन उवाच ॥ इत्येवमुक्त्वा नृपतिं सर्व्वपापहरो हरः । उमापतिः पशुपतिर्यज्ञहा त्रिपुरार्द्दनः । १५८४५
वामनैर्व्विकटैः कुब्जैरुग्रश्रवणदर्शनः । वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ।
त्र्यम्बको राजशार्दूल भगनेत्रनिपातनः । उमासहायो भगवांस्तत्रैवान्तरधीयत ।
जयद्रथोऽपि मन्दात्मा स्वमेव भवनं ययौ । पाण्डवाश्च वने तस्मिन्न्यवसन् काम्यके तथा ।

इति श्रीमहाभारते आरण्यपर्व्वणि जयद्रथवरप्राप्तौ एकसप्तत्यधिकद्विशततोऽध्यायः समाप्तञ्च जयद्रथविमोक्षणपर्व्व ॥ २७१ ॥

## ॥ अथ रामोपाख्यानपर्व्व १४ ॥

॥ जनमेजय उवाच ॥ एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमं । अत ऊर्द्धं नरव्याघ्राः किमकुर्व्वत पाण्डवाः ।
॥ वैशम्पायन उवाच ॥ एवं कृष्णां मोक्षयित्वा विनिर्ज्जित्य जयद्रथं । आसाञ्चक्रे मुनिगणैर्धर्म्मराजो युधिष्ठिरः । १५८९०
तेषां मध्ये महर्षीणां शृण्वतामनुशोचतां । मार्कण्डेयमिदं वाक्यमब्रवीत् पाण्डुनन्दनः ।
॥ युधिष्ठिर उवाच ॥ भगवन् देवर्षीणां त्वं ख्यातो भूतभविष्यवित् । संशयं परिपृच्छामि छिन्धि मे हृदि संस्थितं ।
द्रुपदस्य सुता ह्येषा वेदिमध्यात् समुत्थिता । अयोनिजा महाभागा स्नुषा पाण्डोर्महात्मनः ।
मन्ये कालश्च भगवान् दैवञ्च विधिनिर्म्मितं । भवितव्यञ्च भूतानां यस्य नास्ति व्यतिक्रमः ।
इमां हि पत्नीमस्माकं धर्म्मज्ञां धर्म्मचारिणीं । संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतं । १५८९५
न हि पापं कृतं किञ्चित् कर्म्म वा निन्दितं क्वचित् । द्रौपद्या ब्राह्मणेष्वेव धर्म्मः सुचरितो महान् ।
तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः । तस्याः संहरणात् पापः शिरसः केशपातनं ।
पराजयञ्च संग्रामे ससहायः समाप्तवान् । प्रत्याहृता तथाऽस्माभिर्हत्वा तत् सैन्धवं बलं ।
तद्दारहरणं प्राप्तमस्माभिरवितर्कितं । दुःखश्चायं वने वासो मृगयायाञ्च जीविका ।
हिंसा च मृगजातीनां वनौकोभिर्वनौकसां । ज्ञातिभिर्विप्रवासश्च मिथ्याव्यवसितैरयं । १५९००
अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः । भवता दृष्टपूर्व्वो वा श्रुतपूर्व्वोऽपि वा भवेत् ।
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि युधिष्ठिरप्रश्ने द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥
॥ मार्कण्डेय उवाच ॥ प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ । रक्षसा जानकी तस्य हृता भार्य्या बलीयसा ।
आश्रमाद्राक्षसेन्द्रेण रावणेन दुरात्मना । मायामास्थाय तरसा हत्वा गृध्रं जटायुषं ।
प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः । बद्ध्वा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः ।
॥ युधिष्ठिर उवाच ॥ कस्मिन् रामः कुले जातः किंवीर्य्यः किम्पराक्रमः । रावणः कस्य पुत्त्रो वा किं वैरं कस्य तेन ह । १५९०५
एतन्मे भगवन् सर्व्वं सम्यगाख्यातुमर्हसि । श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्म्मणः ।
॥ मार्कण्डेय उवाच ॥ अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः । तस्य पुत्त्रो दशरथः शश्वत्स्वाध्यायवान् शुचिः ।
अभवंस्तस्य चत्वारः पुत्त्रा धर्म्मार्थकोविदाः । रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ।
रामस्य माता कौशल्या कैकेयी भरतस्य तु । सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परन्तपौ ।
विदेहराजो जनकः सीता तस्यात्मजा विभो । यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियां । १५९१०
एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्त्तितं । रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर ।
पितामहो रावणस्य साक्षाद्देवः प्रजापतिः । स्वयम्भूः सर्व्वलोकानां प्रभुः स्रष्टा महातपाः ।
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः । तस्य वैश्रवणो नाम गविपुत्त्रोऽभवत् प्रभुः ।
पितरं स समुत्सृज्य पितामहमुपस्थितः । तस्य कोपात् पिता राजन् ससर्ज्जात्मानमात्मना ।
स जज्ञे विश्रवा नाम तस्यात्मार्द्धेन वै द्विजः । प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै । १५९१५

पितामहस्तु प्रीतात्मा ददौ वैश्रवणस्य ह । अमरत्वं धनेशत्वं लोकपालत्वमेव च ।
ईशानेन तथा सख्यं पुत्रञ्च नलकूवरं । राजधानीनिवेशञ्च लङ्कां रक्षोगणान्वितां ।
विमानं पुष्पकं नाम कामगञ्च ददौ प्रभुः । यक्षाणामाधिपत्यञ्च राजराजत्वमेव च ।
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि वैश्रवणोत्पत्तौ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥
॥ मार्कण्डेय उवाच ॥ पुलस्त्यस्य तु यः क्रोधादर्द्धदेहोऽभवन्मुनिः । विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ।
बुबुधे तन्तु सक्रोधं पितरं राक्षसेश्वरः । कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप । १५८९०
स राजराजो लङ्कायां न्यवसन्नरवाहनः । राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ।
ताः सदा तं महात्मानं सन्तोषयितुमुद्यताः । ऋषिं भरतशार्दूल नृत्यगीतविशारदाः ।
पुष्पोत्कटा च राका च मालिनी च विशाम्पते । अन्योऽन्यस्पर्द्धया राजन् श्रेयस्कामाः सुमध्यमाः ।
स तासां भगवांस्तुष्टो महात्मा प्रददौ वरान् । लोकपालोपमान् पुत्रानेकैकस्या यथेप्सितान् ।
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ । कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि । १५८९५
मालिनी जनयामास पुत्रमेकं विभीषणं । राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ।
विभीषणस्तु रूपेण सर्व्वेभ्योऽप्यधिकोऽभवत् । स बभूव महाभागो धर्म्मगोप्ता क्रियारतिः ।
दशग्रीवस्तु सर्व्वेषां श्रेष्ठो राक्षसपुङ्गवः । महोत्साहो महावीर्य्यो महासत्त्वपराक्रमः ।
कुम्भकर्णो बलेनासीत् सर्व्वेभ्योऽभ्यधिको युधि । मायावी रणशौण्डश्च रौद्रश्च रजनीचरः ।
खरो धनुषि विक्रान्तो ब्रह्मद्विट् पिशिताशनः । सिद्धविघ्नकरी चापि रौद्री शूर्पणखा तदा । १५९००
सर्व्वे वेदविदः शूराः सर्व्वे सुचरितव्रताः । ऊषुः पित्रा सह रता गन्धमादनपर्व्वते ।
ततो वैश्रवणं तत्र ददृशुर्नरवाहनं । पित्रा सार्द्धं समासीनमृद्ध्या परमया युतं ।
जातामर्षास्ततस्ते तु तपसे धृतनिश्चयाः । ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा ।
अतिष्ठदेकपादेन सहस्रं परिवत्सरान् । वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः ।
अधःशायी कुम्भकर्णो यताहारो यतव्रतः । विभीषणः शीर्णपर्णमेकमभ्यवहारयन् । १५९०५
उपवासरतिर्धीमान् सदा जप्यपरायणः । तमेव कालमातिष्ठत्तीव्रं तप उदारधीः ।
खरः शूर्पणखा चैव तेषां वै तप्यतां तपः । परिचर्य्याञ्च रक्षाञ्च चक्रतुर्हृष्टमानसौ ।
पूर्णे वर्षसहस्रे तु शिरश्छित्वा दशाननः । जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः ।
ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत् । प्रलोभ्य वरदानेन सर्व्वानेव पृथक् पृथक् ।
॥ श्रीब्रह्मोवाच ॥ प्रीतोऽस्मि वो निवर्त्तध्वं वरान् वृणुत पुत्रकाः । यद्यदिष्टमृते त्वेकममरत्वं तथाऽस्तु तत् । १५९१०
यद्यदग्नौ हुतं सर्व्वं शिरस्ते महदीप्सया । तथैव तानि ते देहे भविष्यन्ति यथेप्सया ।
वैरूप्यञ्च न ते देहे कामरूपधरस्तथा । भविष्यसि रणे ऽरीणां विजेता न च संशयः ।
॥ रावण उवाच ॥ गन्धर्व्वदेवासुरतो यक्षराक्षसतस्तथा । सर्पकिन्नरभूतेभ्यो न मे भूयात् पराभवः ।
॥ श्रीब्रह्मोवाच ॥ य एते कीर्त्तिताः सर्व्वे न तेभ्योऽस्ति भयन्तव । ऋते मनुष्याद्भद्रन्ते तथा तद्विहितं मया ।

॥ मार्कण्डेय उवाच ॥ एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा । अवमेने हि दुर्ब्बुद्धिर्मनुष्यान् पुरुषादकः । १५८१५
कुम्भकर्णमथोवाच तथैव प्रपितामहः । स वव्रे महतीं निद्रां तमसाग्रस्तचेतनः ।
तथा भविष्यतीत्युक्ता विभीषणमुवाचह । वरं वृणीष्व पुत्त्र त्वं प्रीतोऽस्मीति पुनः पुनः ।
॥ विभीषण उवच ॥ परमापद्गतस्यापि नाधर्म्मे मे मतिर्भवेत् । अशिक्षितञ्च भगवन् ब्रह्मास्त्रं प्रतिभातु मे ।
॥ ब्रह्मोवाच ॥ यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्षण । नाधर्म्मे धीयते बुद्धिरमरत्वं ददानि ते ।
॥ मार्कण्डेय उवाच ॥ राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशाम्पते । लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरं । १५८२०
हित्वा स भगवान् लङ्कामाविशद्गन्धमादनं । गन्धर्व्वयक्षानुगतो रक्षःकिंपुरुषैः सह ।
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः । शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ।
यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति । अवमन्य गुरुं माञ्च क्षिप्रं त्वं न भविष्यसि ।
विभीषणस्तु धर्म्मात्मा सतां मार्ग्गमनुस्मरन् । अन्वगच्छन्महाराज श्रिया परमया युतः ।
तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः । सेनापत्यं ददौ धीमान् यक्षराक्षससेनयोः । १५८२५
राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः । सर्व्वे समेत्य राजानमभ्यषिञ्चन् दशाननं ।
दशग्रीवश्च दैत्यानां देवानाञ्च बलोत्कटः । आक्रम्य रत्नान्यहरत् कामरूपी विहङ्गमः ।
रावयामास लोकान् यत् तस्माद्रावणउच्यते । दशग्रीवः कामबलो देवानां भयमादधत् ।
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि रावणादिवरप्राप्तौ चतुःसप्तत्यधिकद्विशततोऽध्यायः ॥ २७४ ॥
॥ मार्कण्डेय उवाच ॥ ततो ब्रह्मर्षयः सर्व्वे सिद्धा देवर्षयस्तथा । हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ।
॥ अग्निरुवाच ॥ योऽसौ विश्रवसः पुत्त्रोदशग्रीवोमहाबलः । अवध्यो वरदानेन कृतोभगवता पुरा । १५८३०
स बाधते प्रजाः सर्व्वा विप्रकारैर्महाबलः । ततो नस्त्रातु भगवान्नान्यस्त्राता हि विद्यते ।
॥ ब्रह्मोवाच ॥ न स देवासुरैः शक्योयुद्धे जेतुं विभावसो । विहितं तत्र यत् कार्य्यमभितस्तस्य निग्रहः ।
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः । विष्णुः प्रहरतां श्रेष्ठः स तत् कर्म्म करिष्यति ।
॥ मार्कण्डेय उवाच ॥ पितामहस्ततस्तेषां सन्निधौ शक्रमब्रवीत् । सर्व्वैर्देवगणैः सार्द्धं सम्भव त्वं महीतले ।
विष्णोः सहायानृक्षीषु वानरीषु च सर्व्वशः । जनयध्वं सुतान् वीरान् कामरूपबलान्वितान् । १५८३५
ततो भागानुभागेन देवगन्धर्व्वदानवाः । अवतर्त्तुं महीं सर्व्वे मन्त्रयामासुरञ्जसा ।
तेषां समक्षं गन्धर्व्वीं दुन्दुभीं नामनामतः । शशास वरदो देवो गच्छ कार्य्यार्थसिद्धये ।
पितामहवचः श्रुत्वा गन्धर्व्वी दुन्दुभी ततः । मन्थरा मानुषे लोके कुब्जा समभवत्तदा ।
शक्रप्रभृतयश्चैव सर्व्वे ते सुरसत्तमाः । वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ।
तेऽन्ववर्त्तन् पितॄन् सर्व्वे यशसा च बलेन च । भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः । १५८४०
वज्रसंहननाः सर्व्वे सर्व्वे चौघबलास्तथा । कामवीर्य्यधराश्चैव सर्व्वे युद्धविशारदाः ।
नागायुतसमप्राणा वायुवेगसमा जवे । यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः ।
एवं विधाय तत् सर्व्वं भगवान् लोकभावनः । मन्थरां बोधयामास यद्यत् कार्य्यं यथा यथा ।

सा तद्वचः समाज्ञाय तथा चक्रे मनोजवा । इतश्चेतश्च गच्छन्ती वैरसन्धुक्षणे रता ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि वानरकुलोत्पत्तौ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

॥ युधिष्ठिर उवाच ॥ उक्तं भगवता जन्म रामादीनां पृथक् पृथक् । प्रस्थानकारणं ब्रह्मन् श्रोतुमिच्छामि कथ्यतां । १५८४५

कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ । संप्रस्थितौ वने ब्रह्मन्मैथिली च यशस्विनी ।

॥ मार्कण्डेय उवाच ॥ जातपुत्रो दशरथः प्रीतिमानभवन्नृप । क्रियारतिर्धर्म्मरतः सततं वृद्धसेविता ।

क्रमेण चास्य ते पुत्रा व्यवर्द्धन्त महौजसः । वेदेषु सरहस्येषु धनुर्वेदेषु पारगाः ।

चरितब्रह्मचर्य्यास्ते कृतदाराश्च पार्थिव । यदा तदा दशरथः प्रीतिमानभवत् सुखी ।

ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः । मनोहरतया धीमान् पितुर्हृदयनन्दनः । १५८५०

ततः स राजा मतिमान् मत्वात्मानं वयोऽधिकं । मन्त्रयामास सचिवैर्धर्म्मज्ञैश्च पुरोहितैः ।

अभिषेकाय रामस्य यौवराज्येन भारत । प्राप्तकालञ्च ते सर्व्वे मेनिरे मन्त्रिसत्तमाः ।

लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनं । दीर्घबाहुं महोरस्कं नीलकुञ्चितमूर्द्धजं ।

दीप्यमानं श्रिया वीरं शक्रादनवरं रणे । पारगं सर्व्वधर्म्माणां बृहस्पतिसमं मतौ ।

सर्व्वानुरक्तप्रकृतिं सर्व्वविद्याविशारदं । जितेन्द्रियममित्राणामपि दृष्टिमनोहरं । १५८५५

नियन्तारमसाधूनां गोप्तारं धर्म्मचारिणां । धृतिमन्तमनाधृष्यं जेतारमपराजितं ।

पुत्रं राजा दशरथः कौशल्यानन्दवर्द्धनं । सन्दृश्य परमां प्रीतिमगच्छत् कुरुनन्दन ।

चिन्तयंश्च महातेजा गुणान् रामस्य वीर्य्यवान् । अभ्यभाषत भद्रन्ते प्रीयमाणः पुरोहितं ।

अद्य पुष्यो निशि ब्रह्मन् पुण्यं योगमुपैष्यति । सम्भाराः सम्भ्रियन्तां वै रामश्चोपनिमन्त्र्यतां ।

इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा । कैकेयीमभिगम्येदं काले वचनमब्रवीत् । १५८६०

अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत् । आशीविषस्त्वां संक्रुद्धश्चण्डो दशतु दुर्भगे ।

सुभगा खलु कौशल्या यस्याः पुत्रोऽभिषेक्ष्यते । कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् ।

सा तद्वचनमाज्ञाय सर्व्वाभरणभूषिता । वेदीविलग्नमध्येव बिभ्रती रूपमुत्तमं ।

विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता । प्रणयं व्यञ्जयन्तीव मधुरं वाक्यमब्रवीत् ।

सत्यप्रतिज्ञ यन्मे त्वं काममेकं निसृष्टवान् । उपाकुरुष्व तद्राजंस्तस्मान्मुच्यस्व सङ्कटात् । १५८६५

॥ राजोवाच ॥ वरं ददामि ते हन्त गृहाण यदिच्छसि । अवध्यो वध्यतां कोऽद्य वध्यः कोऽद्य विमुच्यतां ।

धनं ददानि कस्याद्य ह्रियतां कस्य वा पुनः । ब्राह्मणस्वादिहान्यत्र यत् किञ्चिद्वित्तमस्ति मे ।

पृथिव्यां राजराजोऽस्मि चातुर्व्वर्ण्यस्य रक्षिता । यस्तेऽभिलषितः कामो ब्रूहि कल्याणि मा चिरं ।

सा तद्वचनमाज्ञाय परिगृह्य नराधिपं । आत्मनो बलमाज्ञाय तत एनमुवाच ह ।

आभिषेचनिकं यत्ते रामार्थमुपकल्पितं । भरतस्तदवाप्नोतु वनं गच्छतु राघवः । १५८७०

स तद्राजा वचः श्रुत्वा विप्रियं दारुणोदयं । दुःखार्त्तो भरतश्रेष्ठ न किञ्चिद्व्याजहार ह ।

ततस्तथोक्तं पितरं रामो विज्ञाय वीर्य्यवान् । वनं प्रतस्थे धर्म्मात्मा राजा सत्यो भवत्विति ।

तमन्वगच्छल्लक्ष्मीवान् धनुष्माल्लक्ष्मणस्तदा । सीता च भार्य्या भद्रन्ते वैदेही जनकात्मजा ।
ततोवनगते रामे राजा दशरथस्तदा । समयुज्यत देहस्य कालपर्य्यायधर्म्मणा ।
रामन्तु गतमाज्ञाय राजानन्तु तथा गतं । आनाय्य भरतं देवी कैकेयी वाक्यमब्रवीत् । १५९७५
गतो दशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ । गृहाण राज्यं विपुलं क्षेमं निहतकण्टकं ।
तामुवाच स धर्म्मात्मा नृशंसं वत ते कृतं । पतिं हत्वा कुलच्छेदमुत्पाद्य धनलुब्धया ।
अयशः पातयित्वा मे मूर्द्ध्नि त्वं कुलपांसने । सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ।
स चारित्रं विशोध्याथ सर्व्वप्रकृतिसन्निधौ । अन्वयाद्भ्रातरं रामं विनिवर्त्तनलालसः ।
कौशल्याञ्च सुमित्राञ्च कैकेयीञ्च सुदुःखितः । अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितोययौ । १५९८०
वशिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः । पौरजानपदैः सार्द्धं रामानयनकाङ्क्षया ।
ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणं । तापसानामलङ्कारं धारयन्तं धनुर्द्धरं ।
विसर्ज्जितः स रामेण पितुर्व्वचनकारिणा । नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ।
रामस्तु पुनराशङ्क्य पौरजानपदागमं । प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ।
सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः । नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा । १५९८५
वसतस्तस्य रामस्य ततःशूर्पणखाकृतं । खरेणासीन्महद्वैरं जनस्थाननिवासिना ।
रक्षार्थं तापसानान्तु राघवो धर्म्मवत्सलः । चतुर्दशसहस्राणि जघान भुवि राक्षसान् ।
दूषणञ्च खरञ्चैव निहत्य सुमहाबलौ । चक्रे क्षेमं पुनर्धीमान् धर्म्मारण्यं स राघवः ।
हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः । ययौ निकृत्तनासौष्ठी लङ्कां भ्रातुर्निवेशनं ।
ततो रावणमभ्येत्य राक्षसी दुःखमूर्च्छिता । पपात पादयोर्भ्रातुः संशुष्करुधिरानना । १५९९०
तान्तथाविकृतां दृष्ट्वा रावणः क्रोधमूर्च्छितः । उत्पपातासनात् क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ।
स्वानमात्यान् विसृज्याथ विविक्ते तामुवाच सः । केनास्येवंकृता भद्रे मामचिन्त्यावमन्य च ।
कः शूलं तीक्ष्णमासाद्य सर्व्वगात्रैर्निषेवते । कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखं ।
आशीविषं घोरतरं पादेन स्पृशतीह कः । सिंहं केशरिणं कश्च दंष्ट्रायां स्पृश्य तिष्ठति ।
इत्येवं ब्रुवतस्तस्य स्रोतोभ्यस्तेजसोऽर्च्चिषः । निश्चेरुर्द्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः । १५९९५
तस्य तत्सर्व्वमाचख्यौ भगिनी रामविक्रमं । खरदूषणसंयुक्तं राक्षसानां पराभवं ।
स निश्चित्य ततः कृत्यं स्वसारमुपसान्त्व्य च । ऊर्द्ध्वमाचक्रमे राजा विधाय नगरे विधिं ।
त्रिकूटं समतिक्रम्य कालपर्व्वतमेव च । ददर्श मकरावासं गम्भीरोदं महोदधिं ।
तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः । दयितं स्थानमव्यग्रं शूलपाणेर्म्महात्मनः ।
तत्राभ्यगच्छन्मारीचं पूर्व्वामात्यं दशाननः । पुरा रामभयादेव तापस्यं समुपाश्रितं । १६०००
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि रावणगमने षट्सप्तत्यधिकद्विशततोऽध्यायः ॥ २७६ ॥
॥ मार्कण्डेय उवाच ॥ मारीचस्त्वथ संभ्रान्तो दृष्ट्वा रावणमागतं । पूजयामास सत्कारैः फलमूलादिभिस्ततः ।

विश्रान्तञ्चैनमासीनं मन्वासीनः स राक्षसः । उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदं ।
न ते प्रकृतिमान् वर्णः कच्चित् क्षेमं पुरे तव । कच्चित् प्रकृतयः सर्व्वा भजन्ते त्वां यथा पुरा ।
किमिहागमने चापि कार्य्यन्ते राक्षसेश्वर । कृतमित्येव तद्विद्धि यद्यपि स्यात् सुदुष्करं ।
शशंस रावणस्तस्मै तत् सर्व्वं रामचेष्टितं । समासेनैव कार्य्याणि क्रोधामर्षसमन्वितः । १६००५
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणं । अलन्ते राममासाद्य वीर्य्यज्ञो ह्यस्मि तस्य वै ।
बाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः । प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः ।
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना । तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन् ।
अकुर्व्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवं । मारीचश्चिन्तयामास विशिष्टान्मरणं वरं ।
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतं । ततस्तं प्रत्युवाचाथ मारीचो राक्षसेश्वरं । १६०१०
किन्ते साह्यं मया कार्य्यं करिष्याम्यवशोऽपि तत् । तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय ।
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः । ध्रुवं सीता समालक्ष्य त्वां रामं चोदयिष्यति ।
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति । तामादायापनेष्यामि ततः स न भविष्यति ।
भार्य्यावियोगाद्दुर्ब्बुद्धिरेतत् साह्यं कुरुष्व मे । इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः ।
रावणं पुरतो यान्तमन्वगच्छत् सुदुःखितः । ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्म्मणः । १६०१५
चक्रतुस्तत्तथा सर्व्वमुभौ यत् पूर्व्वमन्त्रितं । रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृक् ।
मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः । दर्शयामास मारीचो वैदेहीं मृगरूपधृक् ।
चोदयामास तस्यार्थे सा रामं विधिचोदिता । रामस्तस्याः प्रियं कुर्व्वन् धनुरादाय सत्वरः ।
रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया । स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा । सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसोऽव्रजत् । १६०२०
चकर्ष महदध्वानं रामस्तं बुबुधे ततः । निशाचरं विदित्वा तं राघवः प्रतिभानवान् ।
अमोघं शरमादाय जघान मृगरूपिणं । स रामबाणाभिहतः कृत्वा रामस्वरं तदा ।
हा सीते लक्ष्मणेत्येवं चुक्रोशार्त्तस्वरेण ह । शुश्राव तस्य वैदेही ततस्तां करुणां गिरं ।
सा प्राद्रवत यतः शब्दस्तामुवाचाथ लक्ष्मणः । अलन्ते शङ्कया भीरु को रामं प्रहरिष्यति ।
मुहूर्त्ताद्द्रक्ष्यसे रामं भर्त्तारं त्वं शुचिस्मिते । इत्युक्ता सा प्ररुदती पर्य्यशङ्कत लक्ष्मणं । १६०२५
हता वै स्त्रीस्वभावेन शुक्लचारित्रभूषणा । सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता ।
नैष कामो भवेन्मूढ यं त्वं प्रार्थयसे हृदा । अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना ।
पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनं । रामं भर्त्तारमुत्सृज्य न त्वहं त्वां कथञ्चन ।
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा । एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघवः ।
पिधाय कर्णौ सद्वृत्तः प्रस्थितो येन राघवः । स रामस्य पदं गृह्य प्रससार धनुर्द्धरः । १६०३०
अवीक्षमाणो बिम्बोष्ठीं प्रययौ लक्ष्मणस्तदा । एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।

अभक्ष्यो भक्ष्यरूपेण भस्मच्छन्न इवानलः। यतिवेशप्रतिच्छन्नो जिहीर्षुस्तामनिन्दितां।
सा तमालक्ष्य संप्राप्तं धर्म्मज्ञा जनकात्मजा। निमन्त्रयामास तदा फलमूलाशनादिभिः।
अवमन्य ततः सर्व्वं स्वरूपं प्रतिपद्य च। सान्त्वयामास वैदेहीमिति राक्षसपुङ्गवः।
सीते राक्षसराजोऽहं रावणो नाम विश्रुतः। मम लङ्का पुरी नाम्ना रम्या पारे महोदधेः। १६०२५
तत्र त्वं नरनारीषु शोभिष्यसि मया सह। भार्य्या मे भव सुश्रोणि तापसं त्यज राघवं।
एवमादीनि वाक्यानि श्रुत्वा तस्याथ जानकी। पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः।
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत्। शैत्यमग्निरियान्नाहं त्यजेयं रघुनन्दनं।
कथं हि भिन्नकरटं हस्तिनं वनगोचरं। उपस्थाय महाभागं करेणुः शूकरं स्पृशेत्।
कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीं। लोभं सौवीरके कुर्य्यान्नारी काचिदिति स्मरेत्। १६०३०
इति सा तं समाभाष्य प्रविवेशाश्रमं ततः। क्रोधात् प्रस्फुरमाणोष्ठी विधुन्वाना करौ मुहुः।
तामभिद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत्। भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनां।
मूर्द्धजेषु निजग्राह ऊर्द्धमाचक्रमे ततः। तां ददर्श ततो गृध्रो जटायुर्गिरिगोचरः।
रुदतीं रामरामेति ह्रियमाणां तपस्विनीं।
इति श्रीमहाभारते आरण्य पर्व्वणि रामोपाख्यानपर्व्वणि सीताहरणे सप्तसप्तत्यधिक द्विशततमोऽध्यायः॥ २७७ ॥
॥ मार्कण्डेय उवाच ॥ सखा दशरथस्यासीज्जटायुररुणात्मजः। गृध्रराजो महावीरः सम्पातिर्यस्य सोदरः। १६०३५
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषां। सक्रोधोऽभ्यद्रवत् पक्षी रावणं राक्षसेश्वरं।
अथैनमब्रवीद्गृध्रो मुञ्च मुञ्चस्व मैथिलीं। ध्रियमाणे मयि कथं हरिष्यसि निशाचर।
न हि मे मोक्ष्यसे जीवन् यदि नोत्सृजसे वधूं। उक्त्वैवं राक्षसेन्द्रं तं चकर्त्त नखैर्भृशं।
पक्षतुण्डप्रहारैश्च शतशो जर्ज्जरीकृतं। चक्षार रुधिरं भूरि गिरिः प्रस्रवणैरिव।
स वध्यमानो गृध्रेण रामप्रियहितैषिणा। खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः। १६०४०
निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमं। ऊर्द्धमाचक्रमे सीतां गृहीत्वाऽङ्केन राक्षसः।
यत्र यत्र तु वैदेही पश्यत्याश्रममण्डलं। सरो वा सरितो वापि तत्र मुञ्चति भूषणं।
सा ददर्श गिरिप्रस्थे पञ्चवानरपुङ्गवान्। तत्र वासो महद्दिव्यमुत्ससर्ज्ज मनस्विनी।
तत्तेषां वानरेन्द्राणां पपात पवनोद्धुतं। मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा।
अचिरेणातिचक्राम खेचरः खे चरन्निव। ददर्शाथ पुरीं रम्यां बहुद्वारां मनोरमां। १६०४५
प्राकारवप्रसम्बाधां निर्म्मितां विश्वकर्म्मणा। प्रविवेश पुरीं लङ्कां ससीतो राक्षसेश्वरः।
एवं हृतायां वैदेह्यां रामो हत्वा महामृगं। निवृत्तो ददृशे धीमान् भ्रातरं लक्ष्मणन्तदा।
कथमुत्सृज्य वैदेहीं वने राक्षससेविते। इति तं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत्।
मृगरूपधरेणाथ रक्षसा लोपकर्षणं। भ्रातुरागमनञ्चैव चिन्तयन् पर्य्यतप्यत।
गर्हयन्नेव रामस्तु त्वरितस्तं समासदत्। अपि जीवति वैदेही नेति पश्यामि लक्ष्मण। १६०५०

तस्य तत्सर्व्वमाचख्यौ सीताया लक्ष्मणो वचः। यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः।
दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमं। स ददर्श तदा गृध्रं निहतं पर्व्वतोपमं।
राक्षसं शङ्कमानस्तं विकृष्य बलवद्धनुः। अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः।
स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ। गृध्रराजोऽस्मि भद्रं वां सखा दशरथस्य वै।
तस्य तद्वचनं श्रुत्वा संगृह्य धनुषी शुभे। कोऽयं पितरमस्माकं नाम्नाहेत्यूचतुश्च तौ। १६०६५
ततो ददृशतुस्तौ तं छिन्नपक्षद्वयं खगं। तयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधं।
अपृच्छद्राघवो गृध्रं रावणः कान्दिशं गतः। तस्य गृध्रः शिरःकम्पैराचचक्षे ममार च।
दक्षिणामिति काकुत्स्थो विदित्वाऽस्य तदिङ्गितं। संस्कारं लम्भयामास सखायं पूजयन् पितुः।
ततो दृष्ट्वाश्रमपदं व्यपविद्धवृषीमठं। विध्वस्तकलशं शून्यं गोमायुबलसङ्कुलं।
दुःखशोकसमाविष्टौ वैदेहीहरणार्द्दितौ। जग्मतुर्दण्डकारण्यं दक्षिणेन परन्तपौ। १६०७०
वने महति तस्मिंस्तु रामः सौमित्रिणा सह। ददर्श मृगयूथानि द्रवमाणानि सर्व्वशः।
शब्दञ्च घोरं सत्त्वानां दावाग्नेरिव वर्द्धतः। अपश्यतां मुहूर्त्ताच्च कबन्धं घोरदर्शनं।
मेघपर्व्वतसङ्काशं शालस्कन्धं महाभुजं। उरोगतविशालाक्षं महोदरमहामुखं।
यदृच्छयाऽथ तद्रक्षः करे जग्राह लक्ष्मणं। विषादमगमत् सद्यः सौमित्रिरथ भारत।
स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखं। विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम। १६०७५
हरणञ्चैव वैदेह्या मम चायमुपप्लवः। राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा।
नाहं त्वां सह वैदेह्या समेतं कोशलागतं। द्रक्ष्यामि पृथिवीराज्ये पितृपैतामहे स्थितं।
द्रक्ष्यन्त्यार्य्यस्य धन्या ये कुशलाजशमीलवैः। अभिषिक्तस्य वदनं सोमं शान्तघनं यथा।
एवं बहुविधं धीमान् विललाप स लक्ष्मणः। तमुवाचाथ काकुत्स्थः सम्भ्रमेष्वप्यसम्भ्रमः।
मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते। छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः। १६०८०
इत्येवं वदता तस्य भुजो रामेण पातितः। खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत्।
ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान् बली। सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितं।
पुनर्जघान पार्श्वे वै तद्रक्षो लक्ष्मणो भृशं। गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः।
तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः। ददृशे दिवमास्थाय दिवि सूर्य्य इव ज्वलन्।
पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः। कामया किमिदं चित्रमाश्चर्य्यं प्रतिभाति मे। १६०८५
तस्याचचक्षे गन्धर्व्वो विश्वावसुरहं नृप। प्राप्तो ब्राह्मणशापेन योनिं राक्षससेवितां।
रावणेन हृता सीता राज्ञा लङ्काधिवासिना। सुग्रीवमभिगच्छस्व स ते सख्यं करिष्यति।
एषा पम्पा शिवजला हंसकारण्डवायुता। ऋष्यमूकस्य शैलस्य सन्निकर्षे तटाकिनी।
वसते तत्र सुग्रीवश्चतुर्भिः सचिवैः सह। भ्राता वानरराजस्य वालिनो हेममालिनः।
तेन त्वं सह सङ्गम्य दुःखमूलं निवेदय। समानशीलो भवतः साहाय्यं स करिष्यति। १६०९०

एतावच्छक्यमस्माभिर्व्वक्तुं द्रष्टाऽसि जानकीं । ध्रुवं वानरराजस्य विदिता रावणालयः ।

इत्युक्त्वान्तर्हितो दिव्यः पुरुषः स महाप्रभः । विस्मयं जग्मतुश्चोभौ प्रवीरौ रामलक्ष्मणौ ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि विश्वावसुमोक्षणेऽष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

॥ मार्कण्डेय उवाच ॥ ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलां । सीताहरणदुःखार्त्तः पम्पां रामः समासदत् ।

मारुतेन सुशीतेन सुखेनामृतगन्धिना । सेव्यमानो वने तस्मिन् जगाम मनसा प्रियां ।

विललाप स राजेन्द्रस्तत्र कान्तामनुस्मरन् । कामबाणाभिसन्तप्तः सौमित्रिस्तमथाब्रवीत् । १६०९५

न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद । आत्मवन्तमिव व्याधिः पुरुषं वृद्धशीलिनं ।

प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च । तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ।

अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवं । मयि शिष्ये च भृत्ये च सहाये च समाश्वस ।

एवं बहुविधैर्व्वाक्यैर्लक्ष्मणेन स राघवः । उक्तः प्रकृतिमापेदे कार्य्ये चानन्तरोऽभवत् ।

निषेव्य वारि पम्पायास्तर्पयित्वा पितॄनपि । प्रतस्थतुरुभौ वीरौ भ्रातरौ रामलक्ष्मणौ । १६१००

तावृष्यमूकमभ्येत्य बहुमूलफलद्रुमं । गिर्य्यग्रे वानरान् पञ्च वीरौ ददृशतुस्तदा ।

सुग्रीवः प्रेषयामास सचिवं वानरं तयोः । बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितं ।

तेन सम्भाष्य पूर्व्वन्तौ सुग्रीवमभिजग्मतुः । सख्यं वानरराजेन चक्रे रामस्तदा नृप ।

तद्वासो दर्शयामासुस्तस्य कार्य्ये निवेदिते । वानराणान्तु यत् सीता ह्रियमाणा व्यपासृजत् ।

तत्प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपं । पृथिव्यां वानरैश्वर्य्ये स्वयं रामोऽभ्यषेचयत् । १६१०५

प्रतिजज्ञे च काकुत्स्थः समरे वालिनो वधं । सुग्रीवश्चापि वैदेह्याः पुनरानयनं नृप ।

इत्युक्त्वा समयं कृत्वा विश्वास्य च परस्परं । अभ्येत्य सर्व्वे किष्किन्ध्यां तस्थुर्युद्धाभिकाङ्क्षिणः ।

सुग्रीवः प्राप्य किष्किन्ध्यां ननादौघनिभस्वनः । नास्य तं ममृषे वाली तारा तं प्रत्यषेधयत् ।

यथा नदति सुग्रीवो बलवानेष वानरः । मन्ये चाश्रयवान् प्राप्तो न त्वं निर्गन्तुमर्हसि ।

हेममाली ततो वाली तारां ताराधिपाननां । प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः । १६११०

सर्व्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता । केनापाश्रयवान् प्राप्तो ममैष भ्रातृगन्धिकः ।

चिन्तयित्वा मुहूर्त्तन्तु तारा ताराधिपप्रभा । पतिमित्यब्रवीत् प्राज्ञा शृणु सर्व्वं कपीश्वर ।

हृतदारो महासत्त्वो रामो दशरथात्मजः । तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्द्धरः ।

भ्राता चास्य महाबाहुः सौमित्रिरपराजितः । लक्ष्मणो नाम मेधावी स्थितः कार्य्यार्थसिद्धये ।

मैन्दश्च द्विविदश्चापि हनूमांश्चानिलात्मजः । जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिताः । १६११५

सर्व्वे एते महात्मानो बुद्धिमन्तो महाबलाः । अलन्तव विनाशाय रामवीर्य्यबलाश्रयात् ।

तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः । पर्य्यशङ्कत तामीर्षुः सुग्रीवगतमानसां ।

तारां परुषमुक्त्वा तु निर्ज्जगाम गुहामुखात् । स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोऽभ्यभाषत ।

असकृत्त्वं मया पूर्व्वं निर्ज्जितो जीवितप्रियः । मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः ।

इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः। प्राप्तकालममित्रघ्नो रामं सम्बोधयन्निव। १६११०
हृतदारस्य मे राजन् हृतराज्यस्य च त्वया। किं मे जीवितसामर्थ्यमिति विद्धि समागतं।
एवमुक्त्वा बहुविधं ततस्तौ सन्निपेततुः। समरे वालिसुग्रीवौ शालतालशिलायुधौ।
उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः। उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः।
उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ। शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ।
न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते। सुग्रीवस्य तदा मालां हनूमान् कण्ठ आसजत्। १६११५
स मालया तदा वीरः शुशुभे कण्ठसक्तया। श्रीमानिव महाशैलो मलयो मेघमालया।
कृतचिह्नन्तु सुग्रीवं रामो दृष्ट्वा महाधनुः। विचकर्ष धनुःश्रेष्ठं वालिमुद्दिश्य लक्ष्यवत्।
विस्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ। वितत्रास तदा वाली शरेणाभिहतो हृदि।
स भिन्नहृदयो वाली वक्त्राच्छोणितमुद्वमन्। ददर्शावस्थितं रामं ततः सौमित्रिणा सह।
गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्च्छितः। तारा ददर्श तं भूमौ तारापतिसमौजसं। १६१२०
हते वालिनि सुग्रीवः किष्किन्ध्यां प्रत्यपद्यत। तां च तारापतिमुखीं तारां निपतितेश्वरां।
रामस्तु चतुरो मासान् पृष्ठे माल्यवतः शुभे। निवासमकरोद्धीमान् सुग्रीवेणाभ्युपस्थितः।
रावणोऽपि पुरीं गत्वा लङ्कां कामबलात् कृतः। सीतां निवेशयामास भवने नन्दनोपमे।
अशोकवनिकाभ्याशे तापसाश्रमसन्निभे। भर्तृस्मरणतन्वङ्गी तापसीवेशधारिणी।
उपवासतपःशीला तत्र सा पृथुलेक्षणा। उवास दुःखवसतिं फलमूलकृताशना। १६१२५
दिदेश राक्षसीस्तत्र रक्षणे राक्षसाधिपः। प्रासासिशूलपरशुमुद्गरालातधारिणीः।
द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकां। त्रिस्तनीमेकपादाञ्च त्रिजटामेकलोचनां।
एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्द्धजाः। परिवार्यासते सीतां दिवारात्रमतन्द्रिताः।
तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वराः। तर्ज्जयन्ति सदा रौद्राः परुषव्यञ्जनस्वराः।
खादाम पाटयामैनां तिलशः प्रविभज्य तां। येयं भर्त्तारमस्माकमवमन्येह जीवति। १६१३०
इत्येवं परिभर्त्सन्तीस्त्रास्यमाना पुनःपुनः। भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः।
आर्य्याः खादत मां शीघ्रं न मे लोभोऽस्ति जीविते। विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्द्धजं।
अप्येवाहं निराहारा जीवितप्रियवर्ज्जिता। शोषयिष्यामि गात्राणि व्याली तालगता यथा।
न त्वन्यमभिगच्छेयं पुमांसं राघवादृते। इति जानीत सत्यं मे क्रियतां यदनन्तरं।
तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः। आख्यातुं राक्षसेन्द्राय जग्मुस्तत् सर्व्वमादितः। १६१३५
गतासु तासु सर्व्वासु त्रिजटा नाम राक्षसी। सान्त्वयामास वैदेहीं धर्म्मज्ञा प्रियवादिनी।
सीते वक्ष्यामि ते किञ्चिद्विश्वासं कुरु मे सखि। भयं त्वं त्यज वामोरु शृणु चेदं वचो मम।
अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः। स रामस्य हितान्वेषी त्वदर्थे हि समावदत्।
सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च। भर्त्ता ते कुशली रामो लक्ष्मणानुगतो बली।

सख्यं वानरराजेन शक्रप्रतिमतेजसा । कृतवान् राघवः श्रीमान् त्वदर्थे च समुद्यतः । १६१५०
मा च तेऽस्तु भयं भीरु रावणाल्लोकगर्हितात् । नलकूवरशापेन रक्षिता ह्यसि नन्दिनि ।
शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन् । न शक्नोत्यवशां नारीमुपैतुमजितेन्द्रियः ।
क्षिप्रमेष्यति ते भर्त्ता सुग्रीवेणाभिरक्षितः । सौमित्रिसहितो धीमांस्त्वाञ्चेतो मोक्षयिष्यति ।
स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः । विनाशायास्य दुर्बुद्धेः पौलस्त्यकुलघातिनः ।
दारुणो ह्येष दुष्टात्मा क्षुद्रकर्म्मा निशाचरः । स्वभावात् शीलदोषेण सर्व्वेषां भयवर्द्धनः । १६१५५
स्पर्द्धते सर्व्वदेवैर्यः कालोपहतचेतनः । असकृत् खरयुक्ते तु रथे नृत्यन्निव स्थितः ।
कुम्भकर्णादयश्चेमे नग्नाः पतितमूर्द्धजाः । गच्छन्ति दक्षिणामाशां रक्तमाल्यानुलेपनाः ।
श्वेतातपत्रः सोष्णीषः शुक्लमाल्यानुलेपनः । श्वेतपर्व्वतमारूढ एक एव विभीषणः ।
सचिवास्तस्य चत्वारः शुक्लमाल्यानुलेपनाः । श्वेतपर्व्वतमारूढा मोक्ष्यन्तेऽस्मान्महाभयात् ।
रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा । यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः । १६१६०
अस्थिसञ्चयमारूढो भुञ्जानो मधुपायसम् । लक्ष्मणश्च मया दृष्टो दिधक्षुः सर्व्वतो दिशः ।
रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता । असकृत् त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ।
हर्षमेष्यसि वैदेहि क्षिप्रं भर्त्त्रा समन्विता । राघवेण सह भ्रात्रा सीते त्वमचिरादिव ।
इत्येतन्मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः । बभूवाशावती बाला पुनर्भर्त्तृसमागमे ।
यावदभ्यागता रौद्राः पिशाच्यस्ताः सुदारुणाः । ददृशुस्तां त्रिजटया सहासीनां यथा पुरा । १६१६५
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि सीताशान्त्वने एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥
॥ मार्कण्डेय उवाच ॥ ततस्तां भर्त्तृशोकार्त्तां दीनां मलिनवाससम् । मणिशेषाभ्यलङ्कारां रुदतीञ्च पतिव्रताम् ।
राक्षसीभिरुपास्यन्तीं समासीनां शिलातले । रावणः कामबाणार्त्तो ददर्शोपससर्प च ।
देवदानवगन्धर्व्वयक्षकिम्पुरुषैर्युधि । अजितोऽशोकवनिकां ययौ कन्दर्पपीडितः ।
दिव्याम्बरधरः श्रीमान् सुमृष्टमणिकुण्डलः । विचित्रमाल्यमुकुटो वसन्त इव मूर्त्तिमान् ।
स कल्पवृक्षसदृशो यत्नादपि विभूषितः । श्मशानचैत्यद्रुमवद्भूषितोऽपि भयङ्करः । १६१७०
स तस्यास्तनुमध्यायाः समीपे रजनीचरः । ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ।
स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः । इदमित्यब्रवीद्बालां त्रस्तां रौहीमिवाबलाम् ।
सीते पर्य्याप्तमेतावत् कृतो भर्त्तुरनुग्रहः । प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म्म ते ।
भजस्व मां वरारोहे महार्हाभरणाम्बरा । भव मे सर्व्वनारीणामुत्तमा वरवर्णिनी ।
सन्ति मे देवकन्याश्च गन्धर्व्वाणाञ्च योषितः । सन्ति दानवकन्याश्च दैत्यानाञ्चापि योषितः । १६१७५
चतुर्दश पिशाचानां कोट्यो मे वचने स्थिताः । द्विस्तावत् पुरुषादानां रक्षसां भीमकर्म्मणाम् ।
ततो मे त्रिगुणा यक्षा ये मद्वचनकारिणः । केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः ।
गन्धर्व्वाप्सरसो भद्रे मामापानगतं सदा । उपातिष्ठन्ति वामोरु यथैव भ्रातरं मम ।

पुत्त्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः । पञ्चमो लोकपालानामिति मे प्रथितं यशः ।
दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च । यथैव त्रिदशेशस्य तथैव मम भामिनि । १६१८०
क्षीयतां दुष्कृतं कर्म्म वनवासकृतं तव । भार्य्या मे भव सुश्रोणि यथा मन्दोदरी तथा ।
इत्युक्ता तेन वैदेही परिवृत्य शुभाननं । तृणमन्तरितं कृत्वा तमुवाच निशाचरं ।
अशिवेनातिवामोरूरजस्रं नेत्रवारिणा । स्तनावपतितौ बाला संहतावभिवर्षती ।
उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता । असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर ।
विषादयुक्तमेतत्ते मया श्रुतमभाग्यया । तद्भद्र सुख भद्रन्ते मानसं विनिवर्त्त्यतां । १६१८५
परदाराऽस्म्यलभ्या च सततञ्च पतिव्रता । न चैवौपयिकी भार्य्या मानुषी कृपणा तव ।
विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि । प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ।
न च पालयसे धर्म्मं लोकपालसमः कथं । भ्रातरं राजराजानं महेश्वरसखं प्रभुं ।
धनेश्वरं व्यपदिशन् कथन्त्विह न लज्जसे । इत्युक्ता प्रारुदत् सीता कम्पयन्ती पयोधरौ ।
शिरोधराञ्च तन्वङ्गी मुखं प्रच्छाद्य वाससा । तस्या रुदत्या भामिन्या दीर्घवेणी सुसंयता । १६१९०
ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्द्धनि । श्रुत्वा तद्रावणो वाक्यं सीतयोक्तं सुनिष्ठुरं ।
प्रत्याख्यातोऽपि दुर्म्मेधाः पुनरेवाब्रवीद्वचः । काममङ्गानि मे सीते दुनोतु मकरध्वजः ।
न त्वामकामां सुश्रोणि समेष्ये चारुहासिनीं । किन्नु शक्यं मया कर्त्तुं यत्त्वमद्यापि मानुषं ।
आहारभूतमस्माकं राममेवानुरुध्यसे । इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसमहेश्वरः ।
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशं । राक्षसीभिः परिवृता वैदेही शोककर्षिता । १६१९५
सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि सीतारावणसंवादेऽशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

॥ मार्कण्डेय उवाच ॥ राघवः सहसौमित्त्रिः सुग्रीवेणाभिपालितः । वसन् माल्यवतः पृष्ठे ददर्श विमलं नभः ।
स दृष्ट्वा विमले व्योम्नि निर्म्मलं शशलक्षणं । ग्रहनक्षत्रताराभिरनुयातममित्रहा ।
कुमुदोत्पलपद्मानां गन्धमादाय वायुना । महीधरस्थः शीतेन सहसा प्रतिबोधितः ।
प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्म्मनाः । सीतां संस्मृत्य धर्म्मात्मा रुद्धां राक्षसवेश्मनि । १६२००
गच्छ लक्ष्मण जानीहि किष्किन्धायां कपीश्वरं । प्रमत्तं ग्राम्यधर्म्मेषु कृतघ्नं स्वार्थपण्डितं ।
योऽसौ कुलाधमो मूढो मया राज्येऽभिषेचितः । सर्व्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै ।
यदर्थं निहतो बाली मया रघुकुलोद्वह । त्वया सह महाबाहो किष्किन्धोपवने तदा ।
कृतघ्नं तमहं मन्ये वानरापसदं भुवि । यो मामेवं गतं मूढो न जानीतेऽद्य लक्ष्मण ।
असौ मन्ये न जानीते समयप्रतिपालनं । कृतोपकारं मां नूनमवमन्याल्पया धिया । १६२०५
यदि तावदनुद्युक्तः शेते कामसुखात्मकः । नेतव्यो वालिमार्गेण सर्व्वभूतगतिं त्वया ।
अथापि घटतेऽस्माकमर्थे वानरपुङ्गवः । तमादायैव काकुत्स्थ त्वरावान् भव मा चिरं ।

इत्युक्तो लक्ष्मणो भ्राता गुरुवाक्यहिते रतः। प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः।
किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः। सक्रोध इति तं मत्वा राजा प्रत्युद्ययौ हरिः।
तं सदारो विनीतात्मा सुग्रीवः प्लवगाधिपः। पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया। १६२१०
तमब्रवीद्रामवचः सौमित्रिरकुतोभयः। स तत् सर्व्वमशेषेण श्रुत्वा प्रह्वः कृताञ्जलिः।
सभृत्यदारो राजेन्द्र सुग्रीवो वानराधिपः। इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरं।
नास्मि लक्ष्मण दुर्म्मेधा नाकृतज्ञो न निर्घृणः। श्रूयतां यः प्रयत्नो मे सीतापर्य्येषणे कृतः।
दिशः प्रस्थापिताः सर्व्वे विनीता हरयो मया। सर्व्वेषाञ्च कृतः कालो मासेनागमनं पुनः।
यैरियं सवना साद्रिः सपुरा सागराम्बरा। विचेतव्या मही वीर सग्रामनगराकरा। १६२१५
समासः पञ्चरात्रेण पूर्णो भवितुमर्हति। ततः श्रोष्यसि रामेण सहितः सुमहत् प्रियं।
इत्युक्तो लक्ष्मणस्तेन वानरेन्द्रेण धीमता। त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्यपूजयत्।
स रामं सहसुग्रीवो माल्यवत्पृष्ठमास्थितं। अभिगम्योदयं तस्य कार्य्यस्य प्रत्यवेदयत्।
इत्येवं वानरेन्द्रास्ते समाजग्मुः सहस्रशः। दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः।
आचख्युस्तत्र रामाय महीं सागरमेखलां। विचितां न तु वैदेह्या दर्शनं रावणस्य वा। १६२२०
गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः। आशावांस्तेषु काकुत्स्थः प्राणानार्त्तोऽभ्यधारयत्।
द्विमासोपरमे काले व्यतीते प्लवगास्ततः। सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन्।
रक्षितं वालिना यत्तु स्फीतं मधुवनं महत्। त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः।
वालिपुत्त्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः। विचेतुं दक्षिणामाशां राजन् प्रस्थापितास्त्वया।
तेषां तत् प्रणयं श्रुत्वा मेने स कृतकृत्यतां। कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितं। १६२२५
स तद्रामाय मेधावी शशंस प्लवगर्षभः। रामश्चाप्यनुमानेन मेने दृष्टान्तु मैथिलीं।
हनूमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवङ्गमाः। अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसन्निधौ।
गतिञ्च मुखवर्णञ्च दृष्ट्वा रामो हनूमतः। अगमत् प्रत्ययं भूयो दृष्टा सीतेति भारत।
हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः। प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणन्तथा।
तानुवाचागतान् रामः प्रगृह्य सशरं धनुः। अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता। १६२३०
अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः। निहत्य समरे शत्रूनाहृत्य जनकात्मजां।
अमोक्षयित्वा वैदेहीमहत्वा च रणे रिपून्। हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे।
इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः। प्रियमाख्यामि ते राम दृष्टा सा जानकी मया।
विचित्य दक्षिणामाशां सपर्व्वतवनाकरां। श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहां।
प्रविशामो वयं तान्तु बहुयोजनमायतां। अन्धकारां सुविपिनां गहनां कीटसेवितां। १६२३५
गत्वा सुमहदध्वानमादित्यस्य प्रभान्ततः। दृष्टवन्तः स्म तत्रैव भवनं दिव्यमन्तरा।

मयस्य किल दैत्यस्य तदासीद्वेश्म राघव । तत्र प्रभावती नाम तपोऽतप्यत तापसी ।
तया दत्तानि भोज्यानि पानानि विविधानि च । भुक्त्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ।
निर्याय तस्मादुद्देशात् पश्यामो लवणाम्भसः । समीपे सह्यमलयौ दर्दुरञ्च महागिरिं ।
ततो मलयमारुह्य पश्यन्तो वरुणालयं । विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशं । १६२१०
अनेकशतविस्तीर्णं योजनानां महोदधिं । तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ।
तत्रानशनसङ्कल्पं कृत्वासीना वयं तदा । ततः कथान्ते गृध्रस्य जटायोरभवत् कथा ।
ततः पर्व्वतशृङ्गाभं घोररूपं भयावहं । पक्षिणं दृष्टवन्तः स्म वैनतेयमिवापरं ।
सोऽस्मानतर्कयत् भोक्तुमथाभ्येत्य वचोऽब्रवीत् । भोः क एष मम भ्रातुर्जटायोः कुरुते कथां ।
सम्पातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः । अन्योऽन्यस्पर्द्धयारूढावावामादित्यसंसदं । १६२१५
ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः । तदा मे चिरदृष्टः स भ्राता गृध्रपतिः प्रियः ।
निर्दग्धपक्षः पतितो ह्यहमस्मिन् महागिरौ । तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः ।
व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितं । स सम्पातिस्तदा राजन् श्रुत्वा सुमहदप्रियं ।
विषण्णचेताः पप्रच्छ पुनरस्मानरिन्दम । कः स रामः कथं सीता जटायुश्च कथं हतः ।
इच्छामि सर्व्वमेवैतत् श्रोतुं प्लवगसत्तमाः । तस्याहं सर्व्वमेवैतद्भवतो व्यसनागमं । १६२२०
प्रायोपवेशने चैव हेतुं विस्तरतोऽब्रुवं । सोऽस्मानुत्थापयामास वाक्येनानेन पक्षिराट् ।
रावणो विदितो मह्यं लङ्का चास्य महापुरी । दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे ।
भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा । इति तस्य वचः श्रुत्वा वयमुत्थाय सत्वराः ।
सागरप्लवने मन्त्रं मन्त्रयामः परन्तप । नाध्यवस्यद्यदा कश्चित् सागरस्य विलङ्घनं ।
ततः पितरमाविश्य पुप्लुवेऽहं महार्णवं । शतयोजनविस्तीर्णं निहत्य जलराक्षसीं । १६२२५
तत्र सीता मया दृष्टा रावणान्तःपुरे सती । उपवासतपःशीला भर्त्तृदर्शनलालसा ।
जटिला मलदिग्धाङ्गी कृशा दीना तपस्विनी । निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः ।
उपसृत्याब्रुवञ्चार्य्यामभिगम्य रहोगतां । सीते रामस्य दूतोऽहं वानरो मारुतात्मजः ।
त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो विहायसा । राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ।
सर्व्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ । कुशलं त्वाऽब्रवीद्रामः सीते सौमित्रिणा सह । १६२३०
सखिभावाच्च सुग्रीवः कुशलं त्वानुपृच्छति । क्षिप्रमेष्यति ते भर्त्ता सर्व्वशाखामृगैः सह ।
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः । मुहूर्त्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह ।
अवैमि त्वां हनूमन्तमविन्ध्यवचनादहं । अविन्ध्यो हि महाबाहो राक्षसो वृद्धसम्मतः ।
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः । गम्यतामिति चोक्त्वा मां सीता प्रादादिदं मणिं ।
धारिता येन वैदेही कालमेतमनिन्दिता । प्रत्ययार्थं कथाञ्चेमां कथयामास जानकी । १६२३५

चित्रामिषीकां काकाय चित्रकूटे महागिरौ । भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ।
ग्राहयित्वाऽहमात्मानं ततो दग्ध्वा च तां पुरीं । सम्प्राप्त इति तं रामः प्रियवादिनमार्च्चयत् ।
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यान पर्व्वणि हनूमत्प्रत्यागमने एकाशीत्यधिकद्विशतोऽध्यायः ॥ २८१ ॥
॥ मार्कण्डेय उवाच ॥ ततस्तत्रैव रामस्य समासीनस्य तैः सह । समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा ।
वृतः कोटिसहस्रेण वानराणां तरस्विनां । श्वशुरो वालिनः श्रीमान् सुषेणो राममभ्ययात् । १५२००
कोटीशतवृतो वाऽपि गयो गवय एवच । वानरेन्द्रौ महावीर्य्यौ पृथक्पृथगदृश्यतां ।
षष्टिकोटिसहस्राणि प्रकर्षन् प्रत्यदृश्यत । गोलाङ्गुलो महाराज गवाक्षो भीमदर्शनः ।
गन्धमादनवासी तु प्रथितो गन्धमादनः । कोटीशतसहस्राणि हरीणां समकर्षत ।
पनसो नाम मेधावी वानरः सुमहाबलः । कोटीर्दश द्वादश च त्रिंशतञ्च प्रकर्षति ।
श्रीमान् दधिमुखो नाम हरिवृद्धोऽतिवीर्य्यवान् । प्रचकर्ष महासैन्यं हरीणां भीमतेजसां । १५२०५
कृष्णानां मुखपाण्डूनामृक्षाणां भीमकर्म्मणां । कोटीशतसहस्रेण जाम्बवान् प्रत्यदृश्यत ।
एते चान्ये च बहवो हरियूथपयूथपाः । असंख्येया महाराज समीयू रामकारणात् ।
गिरिकूटनिभाङ्गानां सिंहानामिव गर्ज्जतां । श्रूयते तुमुलः शब्दस्तत्र तत्र प्रधावतां ।
गिरिकूटनिभाः केचित् केचिन्महिषसन्निभाः । शरदभ्रप्रतीकाशाः केचिद्धिङ्गुलकाननाः ।
उत्पतन्तः पतन्तश्च प्लवमानाश्च वानराः । उद्धुन्वन्तोऽपरे रेणून् समाजग्मुः समन्ततः । १५२१०
स वानरमहासैन्यः पूर्णसागरसन्निभः । निवेशमकरोत्तत्र सुग्रीवानुमते तदा ।
ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्व्वशः । तिथौ प्रशस्ते नक्षत्रे मुहूर्त्ते चाभिपूजिते ।
तेन व्यूढेन सैन्येन लोकानुद्वर्त्तयन्निव । प्रययौ राघवः श्रीमान् सुग्रीवसहितस्तदा ।
मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः । जघनं पालयामास सौमित्रिरकुतोभयः ।
बद्धगोधाङ्गुलित्राणौ राघवौ तत्र जग्मतुः । वृतौ हरिमहामात्यैश्चन्द्रसूर्य्यौ ग्रहैरिव । १५२१५
प्रबभौ हरिसैन्यन्तत् शालतालशिलायुधं । सुमहच्छालिभवनं यथासूर्य्योदयं प्रति ।
नलनीलाङ्गदक्राथमैन्दद्विविदपालिता । ययौ सुमहती सेना राघवस्यार्थसिद्धये ।
विविधेषु वनेष्वेव बहुमूलफलेषु च । प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च ।
निवसन्ती निराबाधा तथैव गिरिसानुषु । उपायाद्धरिसेना सा क्षीरोदमथ सागरं ।
द्वितीयसागरनिभं तद्बलं बहुलध्वजं । वेलावनं समासाद्य निवासमकरोत्तदा । १५२२०
ततो दाशरथिः श्रीमान् सुग्रीवं प्रत्यभाषत । मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ।
उपायः को नु भवतां मतः सागरलङ्घने । इयं हि महती सेना सागरश्चातिदुस्तरः ।
तत्रान्ये व्याहरन्ति स्म वानरा बहुमानिनः । समर्था लङ्घने सिन्धोर्न तु तत्कृत्स्नकारकं ।
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैः प्लवैः । नेति रामस्तु तान् सर्व्वान् सान्त्वयन् प्रत्यभाषत ।
शतयोजनविस्तारं न शक्ताः सर्व्ववानराः । क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः । १५२२५

नावो न सन्ति सेनाया बह्वयस्तारयितुं तथा । वणिजामुपघातञ्च कथमस्मद्विधश्चरेत् ।
विस्तीर्णञ्चैव नः सैन्यं हन्याच्छिद्रेण वै परः । प्लवोडुपप्रतारश्च नैवात्र मम रोचते ।
अहं त्विमं जलनिधिं समारप्स्याम्युपायतः । प्रतिशेष्याम्युपवसन् दर्शयिष्यति मान्ततः ।
न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः । महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः ।
इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः । प्रतिशिश्ये जलनिधिं विधिवत् कुशसंस्तरे । ११२००
सागरस्तु ततः स्वप्ने दर्शयामास राघवं । देवो नदनदीभर्त्ता श्रीमान् यादोगणैर्वृतः ।
कौशल्यामातरित्येवमाभाष्य मधुरं वचः । इदमित्याह रत्नानामाकरैः शतशो वृतः ।
ब्रूहि किन्ते करोम्यत्र साहाय्यं पुरुषर्षभ । ऐक्ष्वाकुर्ह्यस्मि ते ज्ञातिरिति रामस्तमब्रवीत् ।
मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते । येन गत्वा दशग्रीवं हन्यां पौलस्त्यपांसनं ।
यद्येवं याचतो मार्गं न प्रदास्यति मे भवान् । शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः । ११२०५
इत्येवं ब्रुवतः श्रुत्वा रामस्य वरुणालयः । उवाच व्यथितो वाक्यमिति बद्धाञ्जलिं स्थितः ।
नेच्छामि प्रतिघातन्ते नास्मि विघ्नकरस्तव । शृणु चेदं वचो राम श्रुत्वा कर्त्तव्यमाचर ।
यदि दास्यामि ते मार्गं सैन्यस्य व्रजतो ऽऽज्ञया । अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात् ।
अस्ति तत्र नलो नाम वानरः शिल्पिसम्मतः । त्वष्टुर्देवस्य तनयो बलवान् विश्वकर्म्मणः ।
स यत् काष्ठं तृणं वापि शिलां वा क्षेप्स्यते मयि । सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति । ११२१०
इत्युक्त्वान्तर्हिते तस्मिन् रामो नलमुवाच ह । कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम ।
तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत् । दशयोजनविस्तारमायतं शतयोजनं ।
नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि । रामस्याज्ञां पुरस्कृत्य निर्य्यातो गिरिसन्निभः ।
तत्रस्थं स तु धर्म्मात्मा समागच्छद्विभीषणः । भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ।
प्रतिजग्राह रामस्तं स्वागतेन महामनाः । सुग्रीवस्य तु शङ्काऽभूत् प्रणिधिः स्यादिति स्म ह । ११२१५
राघवः सत्यचेष्टाभिः सम्यक् सुचरितेङ्गितैः । यदा तत्त्वेन तुष्टोऽभूत् तत एनमपूजयत् ।
सर्व्वराक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणं । चक्रे च मन्त्रानुचरं सुहृदं लक्ष्मणस्य च ।
विभीषणमते चैव सोऽत्यक्रामन्महार्णवं । ससैन्यः सेतुना तेन मासेनैव नराधिप ।
ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः । भेदयामास कपिभिर्महान्ति च बहूनि च ।
तत्रास्तां रावणामात्यौ मन्त्रिणौ शुकसारणौ । चरौ वानररूपेण तौ जग्राह विभीषणः । ११२२०
प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ । दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ।
निवेश्योपवने सैन्यं तत्पुरः प्राज्ञवानरं । प्रेषयामास दौत्येन रावणस्य ततोऽङ्गदं ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि सेतुबन्धने द्व्यशीत्यधिकद्विशततोऽध्यायः ॥ २८२ ॥

॥ मार्कण्डेय उवाच ॥ प्रभूतान्नोदके तस्मिन् बहुमूलफले वने । सेनां निवेश्य काकुत्स्थो विधिवत् पर्य्यरक्षत ।
रावणः संविधिञ्चक्रे लङ्कायां शास्त्रनिर्म्मितां । प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणाः ।

अगाधतोयाः परिखा मीननक्रसमाकुलाः। बभूवुः सप्तदुर्द्धर्षाः खादिरैः शङ्कुभिश्चिताः। १६१२५
कपाटयन्त्रदुर्द्धर्षा बभूवुः सहुडोपलाः। साशीविषघटा योधाः ससर्ज्जरसपांशवः।
मुषलालातनाराचतोमरासिपरश्वधैः। अन्विताश्च शतघ्नीभिः समधूच्छिष्टमुद्गराः।
पुरद्वारेषु सर्व्वेषु गुल्माः स्थावरजङ्गमाः। बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः।
अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः। विदितो राक्षसेन्द्रस्य प्रविवेश गतव्यथः।
मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः। शुशुभे मेघमालाभिरादित्य इव संवृतः। १६१३०
स समासाद्य पौलस्त्यममात्यैरभिसंवृतं। रामसन्देशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे।
आह त्वां राघवो राजन् कोशलेन्द्रो महायशाः। प्राप्तकालमिदं वाक्यं तदादत्स्व कुरुष्व च।
अकृतात्मानमासाद्य राजानमनये रतं। विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च।
त्वयैकेनापराद्धं मे सीतामाहरता बलात्। वधायानपराद्धानामन्येषां तद्भविष्यति।
ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः। ऋषयो हिंसिताः पूर्व्वं देवाश्चाप्यवमानिताः। १६१३५
राजर्षयश्च निहताः रुदत्यश्च हृताः स्त्रियः। तदिदं समनुप्राप्तं फलं तस्यानयस्य ते।
हन्ताऽस्मि त्वां सहामात्यैर्युध्यस्व पुरुषो भव। पश्य मे धनुषो वीर्य्यं मानुषस्य निशाचर।
मुच्यतां जानकी सीता न मे मोक्ष्यसि कर्हिचित्। अराक्षसमिमं लोकं कर्त्तास्मि निशितैः शरैः।
इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः। श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्च्छितः।
इङ्गितज्ञास्ततो भर्त्तुश्चत्वारो रजनीचराः। चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः।
तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान्। आदायैव खमुत्पत्य प्रासादतलमाविशत्।
वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः। भुवि सम्भिन्नहृदयाः प्रहारवरपीडिताः।
संसक्तो हर्म्यशिखरात्तस्मात् पुनरवापतत्। लङ्घयित्वा पुरीं लङ्कां स्वबलस्य समीपतः।
कोशलेन्द्रमथागम्य सर्व्वमावेद्य वानरः। विशश्राम स तेजस्वी राघवेणाभिनन्दितः।
ततः सर्व्वाभिसारेण हरीणां वातरंहसां। भेदयामास लङ्कायाः प्राकारं रघुनन्दनः। १६१४५
विभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः। दक्षिणं नगरद्वारमवामृद्नाद्दुरासदं।
करभारुणगात्राणां हरीणां युद्धशालिनां। कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा।
प्रलम्बबाहूरुकरजङ्घान्तरविलम्बिनां। ऋक्षाणां धूम्रवर्णानां तिस्रः कोट्यो व्यवस्थिताः।
उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः। नादृश्यत तदा सूर्य्यो रजसा नाशितप्रभः।
शालिप्रसूनसदृशैः शिरीषकुसुमप्रभैः। तरुणादित्यसदृशैः शणगौरैश्च वानरैः। १६१५०
प्राकारं ददृशुस्ते तु समन्तात् कपिलीकृतं। राक्षसा विस्मिता राजन् सस्त्रीवृद्धाः समन्ततः।
बिभिदुस्ते मणिस्तम्भान् कर्णाटशिखराणि च। भग्नोन्मथितशृङ्गाणि यन्त्राणि च विचिक्षिपुः।
परिगृह्य शतघ्नीश्च सचक्राः सगुडोपलाः। चिक्षिपुर्भुजवेगेन लङ्कामध्ये महास्वनाः।
प्राकारस्थाश्च ये केचिन्निशाचरगणास्तथा। प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः।

ततस्तु राजवचनाद्राक्षसाः कामरूपिणः । निर्ययुर्विकृताकाराः सहस्रशतसङ्घशः । १६०८५

अस्त्रवर्षाणि वर्षन्तो द्रावयित्वा वनौकसः । प्राकारं शोभयन्तस्ते परं विक्रममास्थिताः ।

समाषराशिसदृशैर्बभूव क्षणदारचरैः । कृतो निर्व्वानरो भूयः प्राकारो भीमदर्शनैः ।

पेतुः शूलविभिन्नाङ्गा बहवो वानरर्षभाः । स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ।

केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह । नखैर्दन्तैश्च वीराणां खादतां वै परस्परं ।

निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः । हता निपतिता भूमौ न मुञ्चन्ति परस्परं । १६०९०

रामस्तु शरजालानि ववर्ष जलदो यथा । तानि लङ्कां समासाद्य जघ्नुस्तान् रजनीचरान् ।

सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः । आदिश्यादिश्य दुर्गस्थान् पातयामास राक्षसान् ।

ततः प्रत्यवहारोऽभूत् सैन्यानां राघवाज्ञया । कृते विमर्दे लङ्कायां लब्धलक्ष्यो जयोत्तरः ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि लङ्काप्रवेशे त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

॥ मार्कण्डेय उवाच ॥ ततो निविशमानांस्तान् सैनिकान् रावणानुगाः । अभिजग्मुर्गणानेके पिशाचक्षुद्ररक्षसां ।

पर्व्वणः पतनो जम्भः खरः क्रोधवशो हरिः । प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः । १६०९५

ततोऽभिपततां तेषामदृश्यानां दुरात्मनां । अन्तर्द्धानवधं तज्ज्ञश्चकार स विभीषणः ।

ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः । निहताः सर्व्वशो राजन् महीं अग्मुर्गतासवः ।

अमृष्यमाणः सबलो रावणो निर्ययावथ । राक्षसानां बलैर्घोरैः पिशाचानाञ्च संवृतः ।

युद्धशास्त्रविधानज्ञ उशना इव चापरः । व्यूह्य चौशनसं व्यूहं हरीनभ्यवहारयत् ।

राघवस्तु विनिर्यान्तं व्यूढानीकं दशाननं । बार्हस्पत्यं विधिं कृत्वा प्रत्यव्यूहन्निशाचरं । १६१००

समेत्य युयुधे तत्र ततो रामेण रावणः । युयुधे लक्ष्मणश्चापि तथैवेन्द्रजिता सह ।

विरूपाक्षेण सुग्रीवस्तारेण च निखर्व्वटः । तुण्डेन च नलस्तत्र पटुशः पनसेन च ।

विषह्यं यं हि यो मेने स स तेन समेयिवान् । युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ।

स संप्रहारो ववृधे भीरूणां भयवर्द्धनः । लोमसंहर्षणो घोरः पुरा देवासुरे यथा ।

रावणो राममानर्च्छच्छक्तिशूलासिवृष्टिभिः । निशितैरायसैस्तीक्ष्णैरावणञ्चापि राघवः । १६१०५

तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्म्मभेदिभिः । इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः ।

विभीषणः प्रहस्तञ्च प्रहस्तश्च विभीषणं । खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः ।

तेषां बलवतामासीन्महास्त्राणां समागमः । विव्यथुः सकला येन त्रयो लोकाश्चराचराः ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि रामरावणयुद्धे चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

॥ मार्कण्डेय उवाच ॥ ततः प्रहस्तः सहसा समभ्येत्य विभीषणं । गदया ताडयामास विनद्य रणकर्कशः ।

स तयाऽभिहतो धीमान् गदया भीमवेगया । नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः । १६११०

ततः प्रगृह्य विपुलां शतघण्टां विभीषणः । अनुमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ।

तस्याश तया वेगाद्राक्षसोऽशनिवेगया । हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ।

तं दृष्ट्वा निहतं संख्ये प्रहस्तं क्षणदाचरं । अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ।
तस्य मेघोपमं सैन्यमापतद्भीमदर्शनं । दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ।
ततस्तान् सहसा दीर्णान् दृष्ट्वा वानरपुङ्गवान् । निर्ययौ कपिशार्दूलो हनूमान्मारुतात्मजः । ११३८५
तं दृष्ट्वावस्थितं संख्ये हरयः पवनात्मजं । महत्या त्वरया राजन् संन्यवर्त्तन्त सर्व्वशः ।
ततः शब्दो महानासीत्तुमुलो लोमहर्षणः । रामरावणसैन्यानामन्योऽन्यमभिधावतां ।
तस्मिन् प्रवृत्ते संग्रामे घोरे रुधिरकर्द्दमे । धूम्राक्षः कपिसैन्यन्तत् द्रावयामास पत्रिभिः ।
तं राक्षस महामात्रमापतन्तं सपत्नजित् । प्रतिजग्राह हनुमांस्त्वरया पवनात्मजः ।
तयोर्युद्धमभूद्घोरं हरिराक्षसवीरयोः । जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव । ११३९०
गदाभिः परिघैश्चैव राक्षसो जघ्निवान् कपिं । कपिश्च जघ्निवान् रक्षः सस्कन्धविटपैर्द्रुमैः ।
ततस्तमतिकोपेन साश्वं सरथसारथिं । धूम्राक्षमवधीत् क्रुद्धो हनूमान् मारुतात्मजः ।
ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमं । हरयो जातविस्रम्भा जघ्नुरभ्येत्य सैनिकान् ।
ते वध्यमाना हरिभिर्बलिभिर्जितकाशिभिः । राक्षसा भग्नसङ्कल्पा लङ्कामभ्यपतन् भयात् ।
तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः । सर्व्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् । ११३९५
श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि । धूम्राक्षञ्च महेष्वासं ससैन्यं वानरर्षभैः ।
सुदीर्घमिव निश्वस्य समुत्पत्य वरासनात् । उवाच कुम्भकर्णस्य कर्म्मकालोऽयमागतः ।
इत्येवमुक्त्वा विविधैर्व्वादित्रैः सुमहास्वनैः । शयानमतिनिद्रालुं कुम्भकर्णमबोधयत ।
प्रबोध्य महता चैनं यत्नेनागतसाध्वसः । स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः ।
ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलं । धन्योऽसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी । ११४००
य इदं दारुणाकारं न जानीषे महाभयं । एष तीर्त्त्वार्णवं रामः सेतुना हरिभिः सह ।
अवमन्येह नः सर्व्वान् करोति कदनं महत् । मया त्वपहृता भार्य्या सीता नामास्य जानकी ।
तां नेतुं स इहायातो बद्ध्वा सेतुं महार्णवे । तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः ।
तस्य नान्यो निहन्तास्ति त्वामृते शत्रुकर्षण । संदंशितोऽभिनिर्य्याय त्वमद्य बलिनाम्बर ।
रामादीन् समरे सर्व्वान् जहि शत्रूनरिन्दम । दूषणावरजौ चैव वज्रवेगप्रमाथिनौ । ११४०५
तौ त्वां बलेन महता सहितावनुयास्यतः । इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनं ।
सन्दिदेशेतिकर्त्तव्ये वज्रवेगप्रमाथिनौ । तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ ।
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् ।
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि कुम्भकर्णरणगमने पञ्चाशीत्यधिकद्विशततोऽध्यायः ॥ २८५ ॥
॥ मार्कण्डेय उवाच ॥ ततो निर्य्याय स्वपुरात् कुम्भकर्णः सहानुगः । अपश्यत् कपिसैन्यन्तत् जितकाश्यग्रतः स्थितं ।
स वीक्षमाणस्तत् सैन्यं रामदर्शनकाङ्क्षया । अपश्यच्चापि सौमित्रिं धनुष्पाणिं व्यवस्थितं । ११४१०
तमभ्येत्याशु हरयः परिवव्रुः समन्ततः । अभ्यघ्नंश्च महाकायैर्बहुभिर्ज्जगतीरुहैः ।

करजैरतुदंश्चान्ये विहाय भयमुत्तमं । बहुधा कुम्भकर्णस्ते युद्धमार्गैः प्लवङ्गमाः ।
नानाप्रहरणैर्भीमैराक्षसेन्द्रमताडयन् । स ताड्यमानः प्रहसन् भक्षयामास वानरान् ।
बलं चण्डबलाख्यञ्च वज्रबाहुञ्च वानरं । तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य रक्षसः ।
उदक्रोशन् परित्रस्तास्तारप्रभृतयस्तदा । तानुच्चैः क्रोशतः सैन्यान् श्रुत्वा स हरियूथपान् । १६०१५
अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः । ततो निपत्य वेगेन कुम्भकर्णं महामनाः ।
शालेनाजघ्निवान् मूर्द्ध्नि बलेन कपिकुञ्जरः । स महात्मा महावेगः कुम्भकर्णस्य मूर्द्धनि ।
बिभेद शालं सुग्रीवो न चैवाव्यथयत् कपिः । ततो विनद्य सहसा शालस्पर्शविबोधितः ।
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् । ह्रियमाणन्तु सुग्रीवं कुम्भकर्णेन रक्षसा ।
अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः । सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरं । १६०२०
प्राहिणोत् कुम्भकर्णाय लक्ष्मणः परवीरहा । स तस्य देहावरणं भित्त्वा देहञ्च सायकः ।
जगाम दारयन् भूमिं रुधिरेण समुक्षितः । तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरं ।
कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः । अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलां ।
तस्याभिपततस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ । चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ।
तानप्यस्य भुजान् सर्व्वान् प्रगृहीतशिलायुधान् । क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् । १६०२५
स बभूवातिकायश्च बहुपादशिरोभुजः । तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिचयोपमं ।
स पपात महावीर्य्यो दिव्यास्त्राभिहतो रणे । महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ।
तं दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनं । गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयात् ।
तथा तान् द्रवतो योधान् दृष्ट्वा तौ दूषणानुजौ । अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावतां ।
तावाद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ । अभिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः । १६०३०
ततः सुतुमुलं युद्धमभवल्लोमहर्षणं । दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः ।
महता शरवर्षेण राक्षसौ सोऽभ्यवर्षत । तौ चापि वीरौ संक्रुद्धावुभौ तं समवर्षतां ।
मुहूर्त्तमेवमभवत् वज्रवेगप्रमाथिनोः । सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः ।
अथाद्रिशृङ्गमादाय हनूमान्मारुतात्मजः । अभिद्रुत्याददे प्राणान् वज्रवेगस्य रक्षसः ।
नीलश्च महता ग्राव्णा दूषणावरजं हरिः । प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः । १६०३५
ततः प्रावर्त्तत पुनः संग्रामः कटुकोदयः । रामरावणसैन्यानामन्योन्यमभिधावतां ।
शतशो नैरृतान् वन्या जघ्नुर्व्वन्याश्च नैरृताः । नैरृतास्तत्र बध्यन्ते प्रायेण न तु वानराः ।
इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि कुम्भकर्णादिवधे षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥
॥ मार्कण्डेय उवाच ॥ ततः श्रुत्वा हतं संख्ये कुम्भकर्णं सहानुगं । प्रहस्तञ्च महेष्वासं धूम्राक्षञ्चातितेजसं ।
पुत्त्रमिन्द्रजितं वीरं रावणः प्रत्यभाषत । जहि रामममित्रघ्न सुग्रीवञ्च सलक्ष्मणं ।
त्वया हि मम सत्पुत्त्र यशोदीप्तमुपार्ज्जितं । जित्वा वज्रधरं संख्ये सहस्राक्षं शचीपतिं । १६०४०

अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः । जहि शत्रूनमित्रघ्न मम शस्त्रभृताम्वर ।
रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ । समर्थाः प्रतिसोढुञ्च कुतस्तदनुयायिनः ।
न गता या प्रहस्तेन कुम्भकर्णेन चानघ । वैरस्यापचितिः संख्ये तां गच्छ त्वं महाभुज ।
त्वमद्य निशितैर्व्वाणैर्हत्वा शत्रून् ससैनिकान् । प्रतिनन्दय मां पुत्र पुराजित्वेव वासवं ।
इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशितः । प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं प्रति ।  ११००५
ततो विश्राव्य विस्पष्टं नाम राक्षसपुङ्गवः । आह्वयामास समरे लक्ष्मणं शुभलक्षणं ।
तं लक्ष्मणोऽभ्यधावच्च प्रगृह्य सशरं धनुः । त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगान् यथा ।
तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः । दिव्यास्त्रविदुषोस्तीव्रमन्योन्यस्पर्द्धिनोस्तदा ।
रावणिस्तु यदा नैवं विशेषयति सायकैः । ततो गुरुतरं यत्नमातिष्ठद्बलिनाम्वरः ।
तत एनं महावेगैरर्द्दयामास तोमरैः । तानागतान् स चिच्छेद सौमित्रिर्निशितैः शरैः ।  ११०१०
ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन् धरणीतले । तमङ्गदो वालिसुतः श्रीमानुद्यम्य पादपं ।
अभिद्रुत्य महावेगस्ताडयामास मूर्द्धनि । तस्येन्द्रजिदसंभ्रान्तः प्रासेनोरसि वीर्य्यवान् ।
प्रहर्त्तुमैच्छत्तस्यास्य प्रासं चिच्छेद लक्ष्मणः । तमभ्याशगतं वीरमङ्गदं रावणात्मजः ।
गदयाऽताडयत् सव्ये पार्श्वे वानरपुङ्गवं । तमचिन्त्यप्रहारं स बलवान् वालिनः सुतः ।
ससर्जेन्द्रजितः क्रोधात् शालस्कन्धं तथाङ्गदः । सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः ।  ११०१५
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिं । ततो हताश्वात् प्रस्कन्द्य रथात् स हतसारथिः ।
तत्रैवान्तर्दधे राजन् मायया रावणात्मजः । अन्तर्हितं विदित्वा तं बहुमायञ्च राक्षसं ।
रामस्तं देशमागम्य तत्सैन्यं पर्य्यरक्षत । स राममुद्दिश्य शरैस्ततोदत्तवरैस्तदा ।
विव्याध सर्व्वगात्रेषु लक्ष्मणञ्च महाबलं । तमदृश्यं शरैः शूरौ माययान्तर्हितं तदा ।
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ । स रुषा सर्व्वगात्रेषु तयोः पुरुषसिंहयोः ।  ११०२०
व्यसृजत् सायकान् भूयः शतशोऽथ सहस्रशः । तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान् ।
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः । तांश्च तौ चाप्यदृश्यः स शरैर्व्विव्याध राक्षसः ।
स भृशं ताडयन् वीरो रावणिर्मायया वृतः । तौ शरैराचितौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
पेततुर्गगनाद्भूमिं सूर्य्याचन्द्रमसाविव ।
इति श्री महाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणीन्द्रजिद्युद्धे सप्ताशीत्यधिकद्विशततोऽध्यायः ॥ २८७ ॥
॥ मार्कण्डेय उवाच ॥ तावुभौ पतितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ । बबन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा ।  ११०२५
तौ वीरौ शरबन्धेन बद्धाविन्द्रजिता रणे । रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे ।
तौ दृष्ट्वा पतितौ भूमौ शतशः सायकैश्चितौ । सुग्रीवः कपिभिः सार्द्धं परिवार्य्य ततः स्थितः ।
सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च । हनुमन्नीलतारैश्च नलेन च कपीश्वरः ।
ततस्तं देशमागम्य कृतकर्म्मा विभीषणः । बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रबोधितौ ।

विशल्यो चापि सुग्रीवः चक्रे नेत्रे चकार ह। विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया। १६४७०
तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठतां। गततन्द्रीक्लमौ चापि चक्षुष्मन्तौ महारथौ।
ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनं। उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः।
इदमम्भो गृहीत्वा तु राजराजस्य शासनात्। गुह्यकोऽभ्यागतः श्वेतात्त्वत्सकाशमरिन्दम।
इदमम्भः कुवेरस्ते महाराजः प्रयच्छति। अन्तर्हितानां भूतानां दर्शनार्थं परन्तप।
अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत। भवान् द्रक्ष्यति यस्मै च भवान् प्रदास्यति नरः स तु। १६४७५
तथेति रामस्तद्वारि प्रतिगृह्याभिसंस्कृतं। चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः।
सुग्रीवजाम्बवन्तौ च हनूमानङ्गदस्तथा। मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः।
तथा समभवच्चापि यदुवाच विभीषणः। चक्षुष्मतीन्द्रियाणेषां चक्षुर्गोचरं युधिष्ठिर।
इन्द्रजित् कृतकर्म्मा च पित्रे कर्म्म तदात्मनः। निवेद्य पुनरागच्छत् त्वरयाजिशिरः प्रति।
तमापतन्तं संक्रुद्धं पुनरेव युयुत्सया। अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः। १६४८०
अकृताह्निककर्माणं जिघांसुर्जितकाशिनं। शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः।
तयोः समभवद्युद्धं तदान्योन्यं जिगीषतोः। अतीव चित्रमाश्चर्य्यं शक्रप्रह्रादयोरिव।
अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्म्मभेदिभिः। सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः।
सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्च्छितः। असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान्।
तस्यासून्पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः। यथा निरहरद्वीरस्तन्मे निगदतः शृणु। १६४८५
एकेनास्य धनुष्मन्तं बाहुं देहादपातयत्। द्वितीयेन सनाराचं भुजं भूमौ न्यपातयत्।
तृतीयेन तु वाणेन पृथुधारेण भास्वता। जहार सुनसञ्चापि शिरो भ्राजिष्णुकुण्डलं।
विनिकृत्तभुजस्कन्धं कवन्धं भीमदर्शनं। तं हत्वा सूतमप्यस्त्रैर्जघान बलिनाम्बरः।
लङ्कां प्रवेशयामासु स्तं रथं वाजिनस्तदा। ददर्श रावणस्तञ्च रथं पुत्त्रविनाकृतं।
स पुत्त्रं निहतं दृष्ट्वा त्रासात् संभ्रान्तमानसः। रावणः शोकमोहार्त्तो वैदेहीं हन्तुमुद्यतः। १६४९०
अशोकवनिकास्थां तां रामदर्शनलालसां। खड्गमादाय दुष्टात्मा जवेनाभिपपात ह।
तं दृष्ट्वा तस्य दुर्ब्बुद्धेरविन्ध्यः पापनिश्चयं। शमयामास संक्रुद्धं श्रूयतां येन हेतुना।
महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि। हतैवैषा यदा स्त्री च बन्धनस्था च ते वशे।
न चैषा देहभेदेन हता स्यादिति मे मतिः। जहि भर्त्तारमेवास्या हते तस्मिन् हता भवेत्।
न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः। असकृद्धि त्वया सेन्द्रास्त्रासितास्त्रिदशा युधि। १६४९५
एवं बहुविधैर्व्वाक्यैरविन्ध्यो रावणं तदा। क्रुद्धं स शमयामास जगृहे स च तद्वचः।
निर्य्याणे स मतिं कृत्वा निधायाऽसिं क्षपाचरः। आज्ञापयामास तदा रथो वै कल्प्यतामिति।
इतिश्री महाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणीन्द्रजिद्वधेऽष्टाशीत्यधिकद्विशततोऽध्यायः॥ २८८ ॥
॥ मार्कण्डेय उवाच ॥ ततः क्रुद्धो दशग्रीवः प्रिये पुत्त्रे निपातिते। निर्य्ययौ रथमास्थाय हेमरत्नविभूषितं।

संवृतो राक्षसैर्घोरैर्विविधायुधपाणिभिः। अभिदुद्राव रामं स योधयन् हरियूथपान्।
तमाद्रवन्तं संक्रुद्धं मैन्दनीलनलाङ्गदाः। हनूमान् जाम्बवांश्चैव ससैन्याः पर्य्यवारयन्। १५९००
ते दशग्रीवसैन्यं तदृक्षवानरपुङ्गवाः। द्रुमैर्विध्वंसयाञ्चक्रुर्दशग्रीवस्य पश्यतः।
ततः स सैन्यमालोक्य वध्यमानमरातिभिः। मायावी व्यदधान्मायां रावणो राक्षसाधिपः।
तस्य देहाद्विनिष्क्रान्ताः शतशोऽथ सहस्रशः। राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः।
तान् रामो जघ्निवान् सर्व्वान् दिव्येनास्त्रेण राक्षसान्। अथ भूयोऽपि मायां स व्यदधाद्राक्षसाधिपः।
कृत्वा रामस्य रूपाणि लक्ष्मणस्य च भारत। अभिदुद्राव रामञ्च लक्ष्मणञ्च दशाननः। १५९०५
ततस्ते राममर्च्छन्तो लक्ष्मणञ्च क्षपाचराः। अभिपेतुस्तदा रामं प्रगृहीतशरासनाः।
तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः। उवाच रामं सौमित्रिरसंभ्रान्तो बृहद्वचः।
जहीमान् राक्षसान् पापानात्मनः प्रतिरूपकान्। जघान रामस्तांश्चान्यानात्मनः प्रतिरूपकान्।
ततो हर्य्यश्वयुक्तेन रथेनादित्यवर्च्चसा। उपतस्थे रणे रामं मातलिः शक्रसारथिः।
॥ मातलिरुवाच ॥ अयं हर्य्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः। अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान्। १५९१०
शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान्। तदनेन नरव्याघ्र मया यत्तेन संयुगे।
स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः। इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः।
मायैषा राक्षसस्येति तमुवाच विभीषणः। नेयं माया नरव्याघ्र रावणस्य दुरात्मनः।
तदातिष्ठ रथं शीघ्रमिममैन्द्रं महाद्युते। ततः प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणं।
रथेनाभिपपाताथ दशग्रीवं रुषान्वितः। हाहा कृतानि भूतानि रावणे समभिद्रुते। १५९१५
सिंहनादाः सपटहा दिवि दिव्यास्तथाऽनदन्। दशकन्धरराजस्न्वोस्तथा युद्धमभून्महत्।
अलब्धोपममन्यत्र तयोरेव तथाभवत्। स रामाय महाघोरं विससर्ज्ज निशाचरः।
शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतं। तच्छूलं सत्वरं रामश्चिच्छेद निशितैः शरैः।
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत्। ततः क्रुद्धः ससर्ज्जाशु दशग्रीवः शिताञ्छरान्।
सहस्रायुतशो रामे शस्त्राणि विविधानि च। ततो भुशुण्डीः शूलानि मुषलानि परश्वधान्। १५९२०
शक्तीश्च विविधाकाराः शतघ्नीश्च शिताञ्छरान्। तां मायां विकृतां दृष्ट्वा दशग्रीवस्य रक्षसः।
भयात् प्रदुद्रुवुः सर्व्वे वानराः सर्व्वतोदिशं। ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमं।
तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह। तं बाणवर्य्यं रामेण ब्रह्मास्त्रेणानुमन्त्रितं।
जहृषुर्देवगन्धर्व्वा दृष्ट्वा शक्रपुरोगमाः। अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः।
ब्रह्मास्त्रोदीरणाच्चैव देवदानवकिन्नराः। ततः ससर्ज्ज तं रामः शरमप्रतिमौजसं। १५९२५
रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतं। मुक्तमात्रेण रामेण दूराकृष्टेन भारत।
स तेन राक्षसश्रेष्ठः सरथः साश्वसारथिः। प्रजज्वाल महाज्वालेनाग्निनाभिपरिप्लुतः।
ततः प्रहृष्टास्त्रिदशाः सहगन्धर्व्वचारणाः। निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्म्मणा।

तत्प्रजुष्टं महाभागं पञ्चभूतानि रावणं । भेजिरे सर्व्वलोकेषु न हि अस्याज्ञातेऽभवत् ।
शरीरधातवो ह्यस्य मांसं रुधिरमेव च । नेशुर्ब्रह्मास्त्रनिर्द्दग्धा न च भस्माप्यदृश्यत । १६१३०

इति श्री महाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि रावणवधे एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

॥ मार्कण्डेय उवाच ॥ स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुरद्विषं । बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह ।
ततोहते दशग्रीवे देवाः सर्षिपुरोगमाः । आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजं ।
रामं कमलपत्राक्षं तुष्टुवुः सर्व्वदेवताः । गन्धर्व्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ।
पूजयित्वा यथा रामं प्रतिजग्मुर्यथागतं । तन्महोत्सवसङ्काशमासीदाकाशमच्युत ।
ततोहत्वा दशग्रीवं लङ्कां रामो महायशाः । विभीषणाय प्रददौ प्रभुः परपुरञ्जयः । १६१३५
ततः सीतां पुरस्कृत्य विभीषणपुरस्कृतां । अविन्ध्योनाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ।
उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितः । प्रतीच्छ देवीं सद्वृत्तां महात्मन् जानकीमिति ।
एतच्छ्रुत्वा वचस्तस्मादवतीर्य्य रथोत्तमात् । वाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः ।
तां दृष्ट्वा चारुसर्व्वाङ्गीं यानस्थां शोककर्षितां । मलोपचितसर्व्वाङ्गीं जटिलां कृष्णवाससं ।
उवाच रामोवैदेहीं परामर्शविशङ्कितः । गच्छ वैदेहि मुक्ता त्वं यत्कार्य्यं तन्मया कृतं । १६१४०
मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि । जरां व्रजेथा इति मे निहतोऽसौ निशाचरः ।
कथं ह्यस्मद्विधोजातु जानन् धर्म्मविनिश्चयं । परहस्तगतां नारीं मुहूर्त्तमपि धारयेत् ।
सुवृत्तामसुवृत्तां वाऽप्यहं त्वामद्य मैथिलि । नोत्सहे परिभोगाय श्वावलीढं हविर्य्यथा ।
ततः सा सहसा वाला तच्छ्रुत्वा दारुणं वचः । पपात देवी व्यथिता निकृत्ता कदली यथा ।
योऽप्यस्या हर्षसम्भूतोमुखरागस्तदाऽभवत् । क्षणेन स पुनर्नष्टोनिश्वास इव दर्पणे । १६१४५
ततस्ते हरयः सर्व्वे तच्छ्रुत्वा रामभाषितं । गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः ।
ततोदेवोविशुद्धात्मा विमानेन चतुर्म्मुखः । पद्मयोनिर्जगत्स्रष्टा दर्शयामास राघवं ।
शक्रश्चाग्निश्च वायुश्च यमोवरुणएव च । यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः ।
राजा दशरथश्चैव दिव्यभास्वरमूर्त्तिमान् । विमानेन महार्हेण हंसयुक्तेन भास्वता ।
ततोऽन्तरीक्षं तत्सर्व्वं देवगन्धर्व्वसङ्कुलं । शुशुभे तारकाचित्रं शरदीव नभस्तलं । १६१५०
तत उत्थाय वैदेही तेषां मध्ये यशस्विनी । उवाच वाक्यं कल्याणी रामं पृथुलवक्षसं ।
राजपुत्र न ते दोषं करोमि विदिता हि ते । गतिः स्त्रीणां नराणाञ्च शृणु चेदं वचोमम ।
अन्तश्चरति भूतानां मातरिश्वा सदागतिः । स मे विमुञ्चतु प्राणान् यदि पापं चराम्यहं ।
अग्निरापस्तथाकाशं पृथिवी वायुरेव च । विमुञ्चन्तु मम प्राणान् यदि पापं चराम्यहं ।
यथाऽहं त्वदृते वीर नान्यं स्वप्नेऽप्यचिन्तयं । तथा मे देवनिर्द्दिष्टस्त्वमेव हि पतिर्भव । १६१५५
ततोऽन्तरीक्षे वागासीत् सर्व्वा विश्रावयन् दिशः । पुण्या संहर्षणी तेषां वानराणां महात्मनां ।
॥ वायुरुवाच ॥ भो भो राघव सत्यं वै वायुरस्मि सदागतिः । अपापा मैथिली राजन् सङ्गच्छ सह भार्य्यया ।

॥ अग्निरुवाच ॥ अहमन्तः शरीरस्थो भूतानां रघुनन्दन। सुसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति।
॥ वरुण उवाच ॥ रसा वै मत्प्रसूताहि भूतदेहेषु राघव। अहं वै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यतां।
॥ ब्रह्मोवाच ॥ पुत्त्र नैतदिहाश्चर्य्यं त्वयि राजर्षिधर्म्मिणि। साधो सद्वृत्त काकुत्स्थ शृणु चेदं वचोमम। १६१९०
शत्रुरेष त्वया वीर देवगन्धर्व्वभोगिनां। यक्षाणां दानवानाञ्च महर्षीणाञ्च पातितः।
अवध्यः सर्व्वभूतानां मत्प्रसादात् पुराऽभवत्। कस्माच्चित् कारणात् पापः कञ्चित् कालमुपेक्षितः।
वधार्थमात्मनस्तेन हृता सीता दुरात्मना। नलकूवरशापेन रक्षा चास्याः कृता मया।
यदि ह्यकामामासेवेत् स्त्रियमन्यामपि ध्रुवं। शतधाऽस्य फलेन्मूर्द्धा इत्युक्तः सोऽभवत् पुरा।
नात्र शङ्का त्वया कार्य्या प्रतीच्छेमां महाद्युते। कृतं त्वया महत् कार्य्यं देवानाममरप्रभ। १६१९५
॥ दशरथ उवाच ॥ प्रीतोऽस्मि वत्स भद्रन्ते पिता दशरथोऽस्मि ते। अनुजानामि राज्यञ्च प्रशाधि पुरुषोत्तम।
॥ राम उवाच ॥ अभिवादये त्वां राजेन्द्र यदि त्वं जनकोमम। गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव।
॥ मार्कण्डेय उवाच ॥ तमुवाच पिता भूयः प्रहृष्टोभरतर्षभ। गच्छायोध्यां प्रशाधीति रामं रक्तान्तलोचनं।
सम्पूर्णानीह वर्षाणि चतुर्द्दश महाद्युते। ततोदेवान्नमस्कृत्य सुहृद्भिरभिनन्दितः।
महेन्द्रइव पौलोम्या भार्य्यया स समेयिवान्। ततोवरं ददौ तस्मै अविन्ध्याय परन्तपः। १६२००
त्रिजटाञ्चार्थमानाभ्यां योजयामास राक्षसीं। तमुवाच ततोब्रह्मा देवैः शक्रपुरोगमैः।
कौशल्यामातरिष्टांस्ते वरानद्य ददानि कान्। वव्रे रामः स्थितिं धर्म्मे शत्रुभिश्चापराजयं।
राक्षसैर्निहतानाञ्च वानराणां समुद्भवं। ततस्ते ब्रह्मणा प्रोक्ते तथेतिवचने तदा।
समुत्तस्थुर्महाराज वानरा लब्धचेतसः। सीता चापि महाभागा वरं हनुमते ददौ।
रामकीर्त्त्या समं पुत्त्र जीवितं ते भविष्यति। दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा। १६२०५
उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन। ततस्ते प्रेक्ष्यमाणानां तेषामक्लिष्टकर्म्मणां।
अन्तर्द्धानं ययुर्देवाः सर्व्वे शक्रपुरोगमाः। दृष्ट्वा रामन्तु जानक्या सङ्गतं शक्रसारथिः।
उवाच परमप्रीतः सुहृन्मध्य इदं वचः। देवगन्धर्व्वयक्षाणां मानुषासुरभोगिनां।
अपनीतं त्वया दुःखमिदं सत्यपराक्रम। सदेवासुरगन्धर्व्वा सयक्षराक्षसपन्नगाः।
कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति। इत्येवमुक्त्वाऽनुज्ञाप्य रामं शस्त्रभृताम्वरं। १६२१०
सम्पूज्याऽपाक्रमत्तेन रथेनादित्यवर्च्चसा। ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह।
सुग्रीवप्रमुखैश्चैव सहितः सर्व्ववानरैः। विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः।
सन्ततार पुनस्तेन सेतुना मकरालयं। पुष्पकेण विमानेन खेचरेण विराजता।
कामगेन यथामुख्यैरमात्यैः संवृतोवशी। ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः।
तत्रैवोवास धर्म्मात्मा सहितः सर्व्ववानरैः। अथैनान् राघवः काले समानीयाभिपूज्य च। १६२१५
विसर्ज्जयामास तदा रत्नैः सन्तोष्य सर्व्वशः। गतेषु तेषु सर्व्वेषु गोपुच्छर्क्षेषु तेषु च।
सुग्रीवसहितोरामः किष्किन्धां पुनराविशत्। विभीषणेनानुगतः सुग्रीवसहितस्तदा।
पुष्पकेण विमानेन वैदेह्या दर्शयन् वनं। किष्किन्धान्तु समासाद्य रामः प्रहरताम्वरः।

अङ्गदं कृतकर्म्माणं यौवराज्येऽभ्यषेचयत् । ततस्तैरेव सहितो रामः सौमित्रिणा सह ।
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति । अयोध्यां स समासाद्य पुरीं राष्ट्रपतिस्ततः । १६५८०
भरताय हनूमन्तं दूतं प्रास्थापयत्तदा । लक्षयित्वेङ्गितं सर्व्वं प्रियं तस्मै निवेद्य वै ।
वायुपुत्रे पुनः प्राप्ते नन्दिग्राममुपागमत् । स तत्र मलदिग्धाङ्गं भरतञ्चीरवाससं ।
अग्रतः पादुके कृत्वा ददर्शासीनमासने । सङ्गतो भरतेनाथ शत्रुघ्नेन च वीर्य्यवान् ।
राघवः सह सौमित्रिर्म्मुमुदे भरतर्षभ । ततोभरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्यादर्शनेनोभौ प्रहर्षं समवापतुः । तस्मै तद्भरतोराज्यमागतायातिसत्कृतं । १६५८५
न्यासं निर्यातयामास युक्तः परमया मुदा । ततस्तं वैष्णवे शूरं नक्षत्रेऽभिमतेऽहनि ।
वसिष्ठोवामदेवश्च सहितावभ्यषिञ्चतां । सोऽभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनं ।
विभीषणञ्च पौलस्त्यमन्वजानाद्गृहान् प्रति । अभ्यर्च्य विविधैर्भोगैः प्रीतियुक्तौ मुदा युतौ ।
समाधायेतिकर्त्तव्यं दुःखेन विससर्ज्ज ह । पुष्पकञ्च विमानं तत् पूजयित्वा स राघवः ।
प्रादाद्वैश्रवणायैव प्रीत्या स रघुनन्दनः । ततोदेवर्षिसहितः सरितं गोमतीमनु । १६५९०
दशाश्वमेधानाजह्रे जारूथ्यान् स निरर्गलान् ।

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि रामराज्याभिषेके नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

॥ मार्कण्डेय उवाच ॥ एवमेतन्महाबाहो रामेणामिततेजसा । प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ।
मा शुचः पुरुषव्याघ्र क्षत्रियोऽसि परन्तप । बाहुवीर्य्याश्रिते मार्गे वर्त्तसे दीप्तनिर्णये ।
न हि ते वृजिनं किञ्चिद्वर्त्तते परमण्वपि । अस्मिन्मार्गे विषीदेयुः सेन्द्रा अपि सुरासुराः ।
संहत्य निहतोवृत्रोमरुद्भिर्व्वज्रपाणिना । नमुचिश्चैव दुर्द्धर्षो दीर्घजिह्वा च राक्षसी । १६५९५
सहायवति सर्व्वार्थाः सन्तिष्ठन्तीह सर्व्वशः । किन्नु तस्याजितं संख्ये यस्य भ्राता धनञ्जयः ।
अयञ्च बलिनां श्रेष्ठोभीमोभीमपराक्रमः । युवानौ च महेष्वासौ वीरौ माद्रवतीसुतौ ।
एभिः सहायैः कस्मात्त्वं विषीदसि परन्तप । य इमे वज्रिणः सेनां जयेयुः समरुद्गणां ।
त्वमप्येभिर्म्महेष्वासैः सहायैर्द्देवरूपिभिः । विजेष्यसि रणे सर्व्वानमित्रान् भरतर्षभः ।
इतश्च त्वमिमां पश्य सैन्धवेन दुरात्मना । बलिना वीर्य्यमत्तेन हृतामेभिर्म्महात्मभिः । १६६००
आनीतां द्रौपदीं कृष्णां कृत्वा कर्म्म सुदुष्करं । जयद्रथञ्च राजानं विजितं वशमागतं ।
असहायेन रामेण वैदेही पुनराहृता । हत्वा संख्ये दशग्रीवं राक्षसं भीमविक्रमं ।
यस्य शाखामृगा मित्रा ऋक्षाः कालमुखास्तथा । जात्यन्तरगता राजन्नेतद्बुद्ध्याऽनुचिन्तय ।
तस्मात्सर्व्वं कुरुश्रेष्ठ मा शुचो भरतर्षभ । त्वद्विधा हि महात्मानो न शोचन्ति परन्तप ।
॥ वैशम्पायन उवाच ॥ एवमाश्वासितोराजा मार्कण्डेयेन धीमता । त्यक्त्वा दुःखमदीनात्मा पुनरेवेदमब्रवीत् । १६६०५

इति श्रीमहाभारते आरण्यपर्व्वणि रामोपाख्यानपर्व्वणि युधिष्ठिराश्वासे एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥ समाप्तञ्च रामोपाख्यानपर्व्व ॥

---

## अथ पतिव्रतामाहात्म्यपर्व्व ॥ १४ ॥

॥ युधिष्ठिर उवाच ॥ नात्मानमनुशोचामि नेमान् भ्रातॄन् महामुने । हरणञ्चापि राज्यस्य यथेमां द्रुपदात्मजां ।
द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयं । जयद्रथेन च पुनर्व्वनाच्चापि हृता बलात् ।
अस्ति सीमन्तिनी काचिद्दृष्टपूर्व्वाऽपि वा श्रुता । पतिव्रता महाभागा यथेयं द्रुपदात्मजा ।
॥ मार्कण्डेय उवाच ॥ शृणु राजन् कुलस्त्रीणां महाभाग्यं युधिष्ठिर । सर्व्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ।
आसीन्मद्रेषु धर्म्मात्मा राजा परमधार्म्मिकः । ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः । १६६२०
यज्वा दानपतिर्दक्षः पौरजानपदप्रियः । पार्थिवोऽश्वपतिर्नाम सर्व्वभूतहिते रतः ।
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः । अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ।
अपत्योत्पादनार्थञ्च तीव्रं नियममास्थितः । काले नियमिताहारो ब्रह्मचारी जितेन्द्रियः ।
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम । षष्ठे षष्ठे तदा काले बभूव मितभोजनः ।
एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु । पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् । १६६२५
रूपिणी तु तदा राजन् दर्शयामास तं नृपं । अग्निहोत्रात् समुत्थाय हर्षेण महताऽन्विता ।
उवाच चैनं वरदा वचनं पार्थिवं तदा । सावित्र्युवाच ॥ ब्रह्मचर्य्येण शुद्धेन दमेन नियमेन च ।
सर्व्वात्मना च भक्त्या च तुष्टाऽस्मि तव पार्थिव । वरं वृणीष्वाश्वपते मद्रराज यदीप्सितं ।
न प्रमादश्च धर्म्मेषु कर्त्तव्यस्ते कथञ्चन ॥ अश्वपतिरुवाच ॥ अपत्यार्थः समारम्भः कृतो धर्म्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः । तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहं । १६६३०
सन्तानं परमो धर्म्म इत्याहुर्म्मां द्विजातयः ॥ सावित्र्युवाच ॥ पूर्व्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः । प्रसादाच्चैव तस्मात्ते स्वयम्भुविहिताद्भुवि ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति । उत्तरञ्च न ते किञ्चिद्व्याहर्त्तव्यं कथञ्चन ।
पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ॥ मार्कण्डेय उवाच ॥ स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति । अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः । १६६३५
स्वराज्ये चावसद्वीरः प्रजा धर्म्मेण पालयन् । कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्म्मचारिण्यां महिष्यां गर्भमादधे । राजपुत्र्यास्तु गर्भः स मालव्या भरतर्षभ ।
व्यवर्द्धत तदा शुक्ले तारापतिरिवाम्बरे । प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनां ।
क्रियाश्च तस्या मुदितश्चक्रे स नृपसत्तमः । सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता । सा विग्रहवतीव श्रीर्व्यवर्द्धत नृपात्मजा । १६६४०
कालेन चापि सा कन्या यौवनस्था बभूव ह । तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः । तान्तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः । अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ।
हुत्वाऽग्निं विधिवद्विप्रान् वाचयामास पर्व्वणि । ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।

पितुः समीपमगमद्देवी श्रीरिव रूपिणी। साऽभिवाद्य पितुः पादौ शेषाः पूर्व्वं निवेद्य च। १६६४८

कृताञ्जलिर्व्वरारोहा नृपतेः पार्श्वमास्थिता। यौवनस्थान्तु तां दृष्ट्वा स्वां सुतां देवरूपिणीं।

अयाच्यमानाञ्च वरैर्नृपतिर्दुःखितोऽभवत्॥ राजोवाच॥ पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति मां।

स्वयमन्विच्छ भर्त्तारं गुणैः सदृशमात्मनः। प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम।

विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितं। श्रुतं हि धर्म्मशास्त्रेषु पठ्यमानं द्विजातिभिः।

तथा त्वमपि कल्याणि गदतो मे वचः शृणु। अप्रदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः। १६६५०

मृते भर्त्तरि पुत्रश्च वाच्यो मातुररक्षिता। इदं मे वचनं श्रुत्वा भर्त्तुरन्वेषणे त्वर।

देवतानां यथा वाच्यो न भवेयं तथा कुरु॥ मार्कण्डेय उवाच॥ एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः।

व्यादिदेशानुयात्रञ्च गम्यतामित्यचोदयत्। साऽभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी।

पितुर्व्वचनमाज्ञाय निर्ज्जगामाविचारितं। सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता।

तपोवनानि रम्याणि राजर्षीणां जगाम ह। मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनं। १६६५५

वनानि क्रमशस्तात सर्व्वाण्येवाभ्यगच्छत। एवं तीर्थेषु सर्व्वेषु धनोत्सर्गं नृपात्मजा।

कुर्व्वती द्विजमुख्यानां तं तं देशं जगाम ह।

इति श्री महाभारते आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि साविव्युपाख्याने द्विनवत्यधिकद्विशततमोऽध्यायः॥ २९२ ॥

॥ मार्कण्डेय उवाच॥ अथ मद्राधिपो राजा नारदेन समागतः। उपविष्टः सभामध्ये कथायोगेन भारत।

ततोऽभिगम्य तीर्थानि सर्व्वाण्येवाश्रमांस्तथा। आजगाम पितुर्व्वेश्म सावित्री सह मन्त्रिभिः।

नारदेन सहासीनं सा दृष्ट्वा पितरं तदा। उभयोरेव शिरसा चक्रे पादाभिवादनं। १६६६०

॥ नारद उवाच॥ क्व गताऽभूत् सुतेयन्ते कुतश्चैवागता नृप। किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि।

॥ अश्वपतिरुवाच॥ कार्य्येण खल्वनेनैव प्रेषिताऽद्यैव चागता। एतस्याः शृणु देवर्षे भर्त्तारं योऽनया वृतः।

॥ मार्कण्डेय उवाच॥ सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा। दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत्।

॥ सावित्र्युवाच॥ आसीच्छाल्वेषु धर्म्मात्मा क्षत्रियः पृथिवीपतिः। द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह।

विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः। सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्व्ववैरिणा। १६६६५

स बालवत्सया सार्द्धं भार्य्यया प्रस्थितो वनं। महारण्ये गतश्चापि तपस्तेपे महाव्रतः।

तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने। सत्यवाननुरूपो मे भर्त्तेति मनसा वृतः।

॥ नारद उवाच॥ अहो बत महत्पापं सावित्र्या नृपते कृतं। अजानन्त्या यदनया गुणवान् सत्यवान् वृतः।

सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते। ततोऽस्य ब्राह्मणाश्चक्रुर्नामैतत् सत्यवानिति।

बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृण्मयान्। चित्रेऽपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते। १६६७०

॥ राजोवाच॥ अपीदानीं स तेजस्वी बुद्धिमान् वा नृपात्मजः। क्षमावानपि वा शूरः सत्यवान् पितृवत्सलः।

॥ नारद उवाच॥ विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ। महेन्द्र इव वीरश्च वसुधेव क्षमाऽन्वितः।

॥ अश्वपतिरुवाच॥ अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान्। रूपवानप्युदारो वाऽप्यथवा प्रियदर्शनः।

॥ नारद उवाच ॥ सांकृतेरन्तिदेवस्य स शक्त्या दानतः समः। ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा।
ययातिरिव चोदारः सोमवत् प्रियदर्शनः। रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली। १११७५
स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः। स मैत्रः सोऽनसूयश्च स ह्रीमान् धृतिमांश्च सः।
नित्यशश्चार्जवं तस्मिन् स्थितिस्तस्यैव च ध्रुवा। संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते।
॥ अश्वपतिरुवाच ॥ गुणैरुपेतं सर्व्वैस्तं भगवन् प्रब्रवीषि मे। दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन।
॥ नारद उवाच ॥ एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति। स च दोषः प्रयत्नेन न शक्यमतिवर्त्तितुं।
एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान्। संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति। १११८०
॥ राजोवाच ॥ एहि सावित्रि गच्छस्व अन्यं वरय शोभने। तस्य दोषो महानेको गुणानाक्रम्य च स्थितः।
यथा मे भगवानाह नारदो देवसत्कृतः। संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति।
॥ सावित्र्युवाच ॥ सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत्।
दीर्घायुरथ वाऽल्पायुः सगुणो निर्गुणोऽपि वा। सकृद्वृतो मया भर्त्ता न द्वितीयं वृणोम्यहं।
मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते। क्रियते कर्म्मणा पश्चात् प्रमाणं मे मनस्ततः। १११८५
॥ नारद उवाच ॥ स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव। नैषा वारयितुं शक्या धर्म्मादस्मात् कथञ्चन।
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः। प्रदानमेव तस्मान्मे रोचते दुहितुस्तव।
॥ राजोवाच ॥ अविचाल्यमेतदुक्तं तथ्यञ्च भवता वचः। करिष्याम्येतदेवञ्च गुरुर्हि भगवान्मम।
॥ नारद उवाच ॥ अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव। साधयिष्यामहे तावत् सर्व्वेषां भद्रमस्तु वः।
॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवं गतः। राजाऽपि दुहितुः सर्व्वं वैवाहिकमकारयत्। १११९०
इति श्रीमहाभारते आरण्यपर्व्वणि पतिव्रतामहात्म्यपर्व्वणि सावित्र्युपाख्याने नारदानुमतौ त्रिनवत्यधिकद्विशततमोऽध्यायः॥२९३॥
॥ मार्कण्डेय उवाच ॥ अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन्। समानिन्ये च तत्सर्व्वं भाण्डं वैवाहिकं नृपः।
ततो वृद्धान् द्विजान् सर्व्वानृत्विजः सपुरोहितान्। समाहूय दिने पुण्ये प्रययौ सह कन्यया।
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः। पद्भ्यामेव द्विजैः सार्द्धं राजर्षिन्तमुपागमत्।
तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितं। कौश्यां वृष्यां समासीनं चक्षुर्हीनं नृपं तदा।
स राजा तस्य राजर्षेः कृत्वा पूजां यथाऽर्हतः। वाचा सुनियतो भूत्वा चकारात्मनिवेदनं। १११९५
तस्यार्घ्यमासनञ्चैव गाञ्चावेद्य स धर्म्मवित्। किमागमनमित्येवं राजा राजानमब्रवीत्।
तस्य सर्व्वमभिप्रायमितिकर्त्तव्यताञ्च तां। सत्यवन्तं समुद्दिश्य सर्व्वमेव न्यवेदयत्।
॥ अश्वपतिरुवाच ॥ सावित्री नाम राजर्षे कन्येयं मम शोभना। तां स्वधर्म्मेण धर्म्मज्ञ स्नुषार्थे त्वं गृहाण मे।
॥ द्युमत्सेन उवाच ॥ च्युताः स्म राज्याद्वनवासमाश्रिताश्चराम धर्म्मं नियतास्तपस्विनः। कथं त्वनर्हा वनवासमाश्रमे निवत्स्यते क्लेशमिमं सुता तव।
॥ अश्वपतिरुवाच ॥ सुखञ्च दुःखञ्च भवाभवात्मकं यदा विजानाति सुताहमेव च। न मद्विधे युज्यति वाक्यमीदृशं विनिश्चयेनाभिगतोऽस्मि ते नृप। ११२००

आशा नार्हसि मे हन्तुं सौहृदात् प्रणतस्य च । अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि ।
अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च । स्नुषां प्रतीच्छ मे कन्यां भार्य्यां सत्यवतः सतः ।
॥ द्युमत्सेन उवाच ॥ पूर्व्वमेवाभिलषितः सम्बन्धो मे त्वया सह । भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितं ।
अभिप्रायस्त्वयं यो मे पूर्व्वमेवाभिकाङ्क्षितः । स निर्व्वर्त्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ।
ततः सर्व्वान् समानाय्य द्विजानाश्रमवासिनः । यथाविधि समुद्वाहं कारयामासतुर्नृपौ । १६००५
दत्त्वा त्वश्वपतिः कन्यां यथार्हं सपरिच्छदं । ययौ स्वमेव भवनं युक्तः परमया मुदा ।
सत्यवानपि तां भार्य्यां लब्ध्वा सर्व्वगुणान्वितां । मुमुदे सा च तं लब्ध्वा भर्त्तारं मनसेप्सितं ।
गते पितरि सर्व्वाणि सन्न्यस्याभरणानि सा । जगृहे वल्कलान्येव वस्त्रं काषायमेव च ।
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च । सर्व्वकामक्रियाभिश्च सर्व्वेषां तुष्टिमादधे ।
श्वश्रूं शरीरसत्कारैः सर्व्वैराच्छादनादिभिः । श्वशुरं देवसत्कारैर्व्वाचः संयमनेन च । १६०१०
तथैव प्रियवादेन नैपुणेन शमेन च । रहश्चैवोपचारेण भर्त्तारं पर्य्यतोषयत् ।
एवं तत्राश्रमे तेषां तदा निवसतां सतां । कालस्तपस्यतां कश्चिदपाक्रामत भारत ।
सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशं । नारदेन यदुक्तं तद्वाक्यं मनसि वर्त्तते ।
इति श्रीमहाभारते आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि सावित्र्युद्वाहे चतुर्नवत्यधिकद्विशततोऽध्यायः ॥ २९४ ॥
॥ मार्कण्डेय उवाच ॥ ततः काले बहुतिथे व्यतिक्रान्ते कदाचन । प्राप्तः स कालो मर्त्तव्यं यत्र सत्यवता नृप ।
गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते । यद्वाक्यं नारदेनोक्तं वर्त्तते हृदि नित्यशः । १६०१५
चतुर्थेऽहनि मर्त्तव्यमिति सञ्चिन्त्य भामिनी । व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ।
तं श्रुत्वा नियमं तस्या भृशं दुःखान्वितो नृपः । उत्थाय वाक्यं सावित्रीमब्रवीत् परिसान्त्वयन् ।
॥ द्युमत्सेन उवाच ॥ अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे । तिसृणां वसतीनां हि स्थानं परमदुष्करं ।
॥ सावित्र्युवाच ॥ न कार्य्यस्तात सन्तापः पारयिष्याम्यहं व्रतं । व्यवसायकृतं हीदं व्यवसायश्च कारणं ।
॥ द्युमत्सेन उवाच ॥ व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथञ्चन । पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् । १६०२०
॥ मार्कण्डेय उवाच ॥ एवमुक्त्वा द्युमत्सेनो विरराम महामनाः । तिष्ठन्ती चैव सावित्री काष्ठभूतेव लक्ष्यते ।
श्वोभूते भर्त्तृमरणे सावित्र्या भरतर्षभ । दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्त्तत ।
अद्य तद्दिवसञ्चेति हुत्वा दीप्तं हुताशनं । युगमात्रोदिते सूर्य्ये कृत्वा पौर्व्वाह्णिकीः क्रियाः ।
ततः सर्व्वान् द्विजान् वृद्धान् श्वश्रूं श्वशुरमेव च । अभिवाद्यानुपूर्व्व्येण प्राञ्जलिर्नियता स्थिता ।
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः । ऊचुस्तपस्विनः सर्व्वे तपोवननिवासिनः । १६०२५
एवमस्त्विति सावित्री ध्यानयोगपरायणा । मनसा ता गिरः सर्व्वाः प्रत्यगृह्णात्तपस्विनां ।
तं कालं तं मुहूर्त्तञ्च प्रतीक्षन्ती नृपात्मजा । यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ।
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजां । एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ।
॥ श्वशुरावूचतुः ॥ व्रतं यथोपदिष्टं तत्तथा तत् पारितं त्वया । आहारकालः संप्राप्तः क्रियतां यदनन्तरं ।

॥ सावित्र्युवाच ॥ अस्तं गते मयादित्ये भोक्तव्यं कृतकामया । एष मे हृदि सङ्कल्पः समयश्च कृतो मया । १६७१०
॥ मार्कण्डेय उवाच ॥ एवं सम्भाषमाणायाः सावित्र्या भोजनं प्रति । स्कन्धे परशुमादाय सत्यवान् प्रस्थितो वनं ।
सावित्री त्वाह भर्त्तारं नैकस्त्वं गन्तुमर्हसि । सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ।
॥ सत्यवानुवाच ॥ वनं न गतपूर्व्वं ते दुःखः पन्थाश्च भाविनि । व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ।
॥ सावित्र्युवाच ॥ उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः । गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ।
॥ सत्यवानुवाच ॥ यदि ते गमनोत्साहः करिष्यामि तव प्रियं । मम त्वामन्त्रय गुरू न मां दोषः स्पृशेदयं । १६७१५
॥ मार्कण्डेय उवाच ॥ साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरञ्च महाव्रता । अयं गच्छति मे भर्त्ता फलाहारो महावनं ।
इच्छेयमभ्यनुज्ञाता आर्य्यया श्वशुरेण च । अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ।
गुर्व्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव । न निवार्य्यो निवार्य्यः स्यादन्यथा प्रस्थितो वनं ।
संवत्सरः किञ्चिदूनो न निष्क्रान्ताऽस्म्याश्रमात् । वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ।
॥ द्युमत्सेन उवाच ॥ यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम । नानयाऽभ्यर्थनायुक्तमुक्तपूर्व्वं स्मराम्यहं । १६७२०
तदेषा लभतां कामं यथा ऽभिलषितं वधूः । अप्रमादश्च कर्त्तव्यः पुत्त्रि सत्यवतः पथि ।
॥ मार्कण्डेय उवाच ॥ उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी । सह भर्त्रा हसन्तीव हृदयेन विदूयता ।
सा वनानि विचित्राणि रमणीयानि सर्व्वशः । मयूरगणजुष्टानि ददर्श विपुलेक्षणा ।
नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् । सत्यवानाह पश्येति सावित्रीं मधुरं वचः ।
निरीक्षमाणा भर्त्तारं सर्व्वावस्थमनिन्दिता । मृतमेव हि भर्त्तारं काले मुनिवचः स्मरन् । १६७२५
अनुव्रजन्ती भर्त्तारं जगाम मृदुगामिनी । द्विधेव हृदयं कृत्वा तञ्च कालमवेक्षती ।

इति श्रीमहाभारते आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि सावित्र्या वनगमने पञ्चनवत्यधिकद्विशततोऽध्यायः ॥ २९५ ॥

॥ मार्कण्डेय उवाच ॥ अथ भार्य्यासहायः स फलान्यादाय वीर्य्यवान् । कठिनं पूरयामास ततः काष्ठान्यपाटयत् ।
तस्य पाटयतः काष्ठं स्वेदो वै समजायत । व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ।
सोऽभिगम्य प्रियां भार्य्यामुवाच श्रमपीडितः ॥ सत्यवानुवाच ॥ व्यायामेन ममानेन जाता शिरसि वेदना ।
अङ्गानि चैव सावित्रि हृदयं दूयतीव च । अस्वस्थमिव चात्मानं लक्षये मितभाषिणि । १६७३०
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहं । तत् स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ।
सा समासाद्य सावित्री भर्त्तारमुपगम्य च । उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ।
ततः सा नारदवचो विमृशन्ती तपस्विनी । तं मुहूर्त्तं क्षणं वेलां दिवसञ्च युयोज ह ।
मुहूर्त्तादेव चापश्यत् पुरुषं रक्तवाससं । बद्धमौलिं वपुष्मन्तमादित्यसमतेजसं ।
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहं । स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च । १६७३५
तं दृष्ट्वा सहसोत्थाय भर्त्तुर्न्यस्य शनैः शिरः । कृताञ्जलिरुवाचार्त्ता हृदयेन प्रवेपती ।
॥ सावित्र्युवाच ॥ दैवतं त्वाऽभिजानामि वपुरेतद्ध्यमानुषं । कामया ब्रूहि देवेश कस्त्वं किञ्च चिकीर्षसि ।
॥ यम उवाच ॥ पतिव्रताऽसि सावित्रि तथैव च तपोऽन्विता । अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमं ।

अयं ते सत्यवान् भर्त्ता क्षीणायुः पार्थिवात्मजः । नेष्यामि तमहं बद्धा विद्ध्येतन्मे चिकीर्षितं ।

॥ सावित्र्युवाच ॥ श्रूयते भगवन् दूतास्तवागच्छन्ति मानवान् । नेतुं किल भवान् कस्मादागतोऽसि स्वयं प्रभो । १६७१०

॥ मार्कण्डेय उवाच ॥ इत्युक्तः पितृराजस्तां भगवान् स्वचिकीर्षितं । यथावत् सर्व्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ।

अयञ्च धर्म्मसंयुक्तो रूपवान् गुणसागरः । नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः ।

ततः सत्यवतः कायात् पाशबद्धं वशङ्गतं । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ।

ततः समुद्धृतप्राणं गतश्वासं हतप्रभं । निर्व्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनं ।

यमस्तु तं ततो बद्धा प्रयातो दक्षिणामुखः । सावित्री चैव दुःखार्त्ता यममेवान्वगच्छत । १६७१५

नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ यम उवाच ॥ निवर्त्त गच्छ सावित्रि कुरुष्वास्यौर्द्ध्वदेहिकं ।

कृतं भर्त्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया ॥ सावित्र्युवाच ॥ यत्र मे नीयते भर्त्ता स्वयं वा यत्र गच्छति ।

मया च तत्र गन्तव्यमेष धर्म्मः सनातनः । तपसा गुरुभक्त्या च भर्त्तुः स्नेहाद्व्रतेन च ।

तव चैव प्रसादेन न मे प्रतिहता गतिः । प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।

मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु । १६७२०

नानात्मवन्तस्तु वने चरन्ति धर्म्मञ्च वासञ्च परिश्रमञ्च । विज्ञानतो धर्म्ममुदाहरन्ति तस्मात् सन्तो धर्म्ममाहुः प्रधानं ।

एकस्य धर्म्मेण सतां मतेन सर्व्वे स्म तं मार्गमनुप्रपन्नाः । मा वै द्वितीयं मा तृतीयञ्च वाञ्छे तस्मात सन्तो धर्म्ममाहुः प्रधानं ।

॥ यम उवाच ॥ निवर्त्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया । वरं वृणीष्वेह विनाऽस्य जीवितं ददानि ते सर्व्वमनिन्दिते वरं ।

॥ सावित्र्युवाच ॥ च्युतः स राज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे । स लब्धचक्षुर्बलवान् भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभः ।

॥ यम उवाच ॥ ददानि तेऽहं तमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा । तवाध्वना ग्लानिमिवोपलक्षये निवर्त्त गच्छस्व न ते श्रमो भवेत् । १६७२५

॥ सावित्र्युवाच ॥ श्रमः कुतो भर्त्तृसमीपतो हि मे यतो हि भर्त्ता मम सा गतिर्ध्रुवा । यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ।

सतां सकृत् सङ्गतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते । न चाफलं सत्पुरुषेण सङ्गतं ततः सतां सन्निवसेत् समागमे ।

॥ यम उवाच ॥ मनोऽनुकूलं बुधबुद्धिवर्द्धनं त्वया यदुक्तं वचनं हिताश्रयं । विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ।

॥ सावित्र्युवाच ॥ हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः । जह्यात् स्वधर्म्मान्न च मे गुरुर्यथा द्वितीयमेतद्वरयामि ते वरं ।

॥ यम उवाच ॥ स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्म्मात् परिहास्यते नृपः । कृतेन कामेन मया नृपात्मजे निवर्त्त गच्छस्व न ते श्रमो भवेत् । १६७३०

॥ सावित्र्युवाच ॥ प्रजास्त्वयैता नियमेन संयता नियम्य चैता नयसे निकामया। ततो यमत्वं तव देव विश्रुतं निबोध चेमां गिरमीरितां मया।

अद्रोहः सर्व्वभूतेषु कर्म्मणा मनसा गिरा। अनुग्रहश्च दानञ्च सतां धर्म्मः सनातनः।

एवम्प्रायश्च लोकोऽयं मनुष्याभक्तिपेशलाः। सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्व्वते।

॥ यम उवाच ॥ पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितं। विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि।

॥ सावित्र्युवाच ॥ ममानपत्यः पृथिवीपतिः पिता भवेत् पितुः पुत्रशतं तथौरसं। कुलस्य सन्तानकरञ्च यद्भवेत्तृतीयमेतद्वरयामि ते वरं। १६०८६

॥ यम उवाच ॥ कुलस्य सन्तानकरं सुवर्च्चसं शतं सुतानां पितुरस्तु ते शुभे। कृतेन कामेन नराधिपात्मजे निवर्त्त दूरं हि पथस्त्वमागता।

॥ सावित्र्युवाच ॥ न दूरमेतन्मम भर्त्तृसन्निधौ मनो हि मे दूरतरं प्रधावति। अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च।

विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः। समेन धर्म्मेण चरन्ति ताः प्रजास्ततस्तवेहेश्वर धर्म्मराजता।

आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः। तस्मात् सत्सु विशेषेण सर्व्वः प्रणयमिच्छति।

सौहृदात् सर्व्वभूतानां विश्वासो नाम जायते। तस्मात् सत्सु विशेषेण विश्वासं कुरुते जनः। १६०९०

॥ यम उवाच ॥ उदाहृतं ते वचनं यदङ्गने शुभे न तादृक् त्वहते श्रुतं मया। अनेन तुष्टोऽस्मि विनाऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ च।

॥ सावित्र्युवाच ॥ ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्वहं। शतं सुतानां बलवीर्य्यशालिनामिदं चतुर्थं वरयामि ते वरं।

॥ यम उवाच ॥ शतं सुतानां बलवीर्य्यशालिनां भविष्यति प्रीतिकरं तवाबले। परिश्रमस्ते न भवेन्नृपात्मजे निवर्त्त दूरं हि पथस्त्वमागता।

॥ सावित्र्युवाच ॥ सतां सदा शाश्वतधर्म्मवृत्तिः सन्तो न सीदन्ति न च व्यथन्ति। सतां सद्भिर्नाफलः सङ्गमोऽस्ति सद्भ्यो भयं नानुवर्त्तन्ति सन्तः।

सन्तो हि सत्येन नयन्ति सूर्य्यं सन्तो भूमिं तपसा धारयन्ति। सन्तो गतिर्भूतभव्यस्य राजन् सतां मध्ये नावसीदन्ति सन्तः। १६०९५

आर्य्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतं। सन्तः परार्थं कुर्व्वाणा नावेक्षन्ति परस्परं।

न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः। यस्मादेतन्नियतं सत्सु नित्यं तस्मात् सन्तो रक्षितारो भवन्ति।

॥ यम उवाच ॥ यथा यथा भाषसि धर्म्मसंहितं मनोऽनुकूलं सुपदं महार्थवत्। तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते।

॥ सावित्र्युवाच ॥ न तेऽपवर्गः सुकृताद्विनाकृतस्तथा यथाऽन्येषु वरेषु मानद। वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना।

न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवं। न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुं। १६८१०

वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः। वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति।

॥ मार्कण्डेय उवाच ॥ तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः। धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत्।

एष भद्रे मया मुक्तो भर्त्ता ते कुलनन्दिनि। अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति।

चतुर्वर्षशतायुश्च त्वया सार्द्धमवाप्स्यति। इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति।

त्वयि पुत्रशतञ्चैव सत्यवान् जनयिष्यति। ते चापि सर्व्वे राजानः क्षत्रियाः पुत्रपौत्रिणः। १६८१५

ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः। पितुश्च ते पुत्रशतं भविता तव मातरि।

मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः। भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः।

एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान्। निवर्त्तयित्वा सावित्रीं स्वमेव भवनं ययौ।

सावित्र्यपि यमे याते भर्त्तारं प्रतिलभ्य च। जगाम तत्र यत्रास्य भर्त्तुः शावं कलेवरं।

सा भूमौ प्रेक्ष्य भर्त्तारमुपसृत्योपगुह्य च। उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह। १६८२०

संज्ञाञ्च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत। प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै।

॥ सत्यवानुवाच ॥ सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः। क्व चासौ पुरुषः श्यामो योऽसौ मां सञ्चकर्ष ह।

॥ सावित्र्युवाच ॥ सुचिरं त्वं प्रसुप्तोऽसि ममाङ्के पुरुषर्षभ। गतः स भगवान् देवः प्रजासंयमनो यमः।

विश्रान्तोऽसि महाभाग विनिद्रश्च नृपात्मज। यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्व्वरीं।

॥ मार्कण्डेय उवाच ॥ उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः। दिशः सर्व्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान्। १६८२५

फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे। ततः पाटयतः काष्ठं शिरसो मे रुजाऽभवत्।

शिरोऽभितापसन्तप्तः स्थातुं चिरमशक्नुवन्। तवोत्सङ्गे प्रसुप्तोऽस्मि इति सर्व्वं स्मरे शुभे।

त्वयोपगूढस्य च मे निद्रयोपहृतं मनः। ततोऽपश्यन्तमो घोरं पुरुषञ्च महौजसं।

तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे। स्वप्नेन यदि वा दृष्टो मयि वा सत्यमेव तत्।

तमुवाचाथ सावित्री रजनी व्यवगाहते। श्वस्ते सर्व्वं यथावृत्तमाख्यास्यामि नृपात्मज। १६८३०

उत्तिष्ठोत्तिष्ठ भद्रन्ते पितरौ पश्य सुव्रत। विगाढा रजनी चेयं निवृत्तश्च दिवाकरः।

नक्तञ्चराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः। श्रूयन्ते पर्णशब्दाश्च मृगाणाञ्चरतां वने।

एतान् घोराञ्छिवानादान् दिशं दक्षिणपश्चिमां। आस्थाय विरुवन्त्युग्राः कम्पयन्तो मनो मम।

॥ सत्यवानुवाच ॥ वनं प्रतिभयाकारं घनेन तमसा वृतं। न विज्ञास्यसि पन्थानं गन्तुञ्चैव न शक्ष्यसि।

॥ सावित्र्युवाच ॥ अस्मिन्नद्य वने दग्धे शुष्कवृक्षः स्थितो ज्वलन्। वायुना धम्यमानोऽत्र दृश्यतेऽग्निः क्वचित् क्वचित्। १६८३५

ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्व्वतः। काष्ठानीमानि सन्तीह यदि सन्तापमात्मनः।
यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये। न च ज्ञास्यसि पन्थानं तमसा संवृते वने।
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव। वसावेह क्षपामेकां रुचितं यदि तेऽनघ।
॥ सत्यवानुवाच॥ शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये। मातापितृभ्यामिच्छामि सङ्गमं त्वत्प्रसादजं।
न कदाचिद्विकाले हि गतपूर्व्वो मया श्रमः। अनागतायां सन्ध्यायां माता मे प्ररुणद्धि मां। १६८२०
दिवाऽपि मयि निष्क्रान्ते सन्तप्येते गुरू मम। विचिनोति हि मां तातः सहैवाश्रमवासिभिः।
मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा। उपालब्धश्च बहुशश्चिरेणागच्छसीति हि।
का त्ववस्था तयोरद्य मदर्थमिति चिन्तये। तयोरदृश्ये मयि च महद्दुःखं भविष्यति।
पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ। भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ।
त्वया हीनौ न जीवाव मुहूर्त्तमपि पुत्रक। यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवं। १६८२५
वृद्धयोरन्धयोर्यष्टिस्त्वयि वंशः प्रतिष्ठितः। त्वयि पिण्डश्च कीर्त्तिश्च सन्तानश्चावयोरिति।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी। अहञ्च संशयं प्राप्तः कृच्छ्रामापदमास्थितः।
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे। व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम।
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनं। नात्मानमनुशोचामि यथाऽहं पितरं शुभे।
भर्त्तारञ्चाप्यनुगतां मातरं परिदुर्ब्बलां। मत्कृतेन हि तावद्य सन्तापं परमेष्यतः। १६८३०
जीवन्तावनुजीवामि भर्त्तव्यौ तौ मयेति ह। तयोः प्रियं मे कर्त्तव्यमिति जानामि चाप्यहं।
॥ मार्कण्डेय उवाच ॥॥ एवमुक्त्वा स धर्म्मात्मा गुरुभक्तो गुरुप्रियः। उच्छ्रित्य बाहू दुःखार्त्तः सुस्वरं प्ररुरोद ह।
ततोऽब्रवीत्तथा दृष्ट्वा भर्त्तारं शोककर्षितं। प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्म्मचारिणी।
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि। श्वश्रूश्वशुरभर्त्तॄणां मम पुण्याऽस्तु शर्व्वरी।
न स्मराम्युक्तपूर्व्वां वै स्वैरेष्वप्यनृतां गिरं। तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम। १६८३५
॥ सत्यवानुवाच॥ कामये दर्शनं पित्रोर्याहि सावित्रि मा चिरं। पुरा मातुः पितुर्व्वाऽपि यदि पश्यामि विप्रियं।
न जीविष्ये वरारोहे सत्येनात्मानमालभे। यदि धर्म्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि।
मम प्रियं वा कर्त्तव्यं गच्छावाश्रममन्तिकात्॥ मार्कण्डेय उवाच॥ सावित्री तत उत्थाय केशान् संयम्य भाविनी।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै। उत्थाय सत्यवांश्चापि विमृज्याङ्गानि पाणिना।
सर्व्वा दिशः समालोक्य कठिने दृष्टिमादधे। तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि। १६८४०
योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहं। कृत्वा कठिनभारं सा वृक्षशाखाऽवलम्बिनं।
गृहीत्वा परशुं भर्त्तुः सकाशे पुनरागमत्। वामे स्कन्धे तु वामोरुर्भर्त्तुर्बाहुं निवेश्य च।
दक्षिणेन परिष्वज्य जगाम गजगामिनी॥ सत्यवानुवाच॥ अभ्यासगमनाद्भीरु पन्थानो विदिता मम।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये। आगतौ स्वः पथा येन फलान्यवचितानि च।
यथागतं शुभे गच्छ पन्थानं मा विचारय। पलाशखण्डे चैतस्मिन् पन्था व्यावर्त्तते द्विधा। १६८४५

तथोत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च। स्वस्थोऽस्मि गमनेऽस्मि दिदृक्षुः पितरावुभौ।
ब्रुवन्नेव त्वरायुक्तः संप्रायादाश्रमं प्रति।

इति श्रीमहाभारते आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि सत्यवदाश्रमागमने षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

॥ मार्कण्डेय उवाच ॥ एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः। लब्धचक्षुः प्रसन्नात्मा दृष्ट्या सर्व्वं ददर्श ह।
स सर्व्वानाश्रमान् गत्वा शैव्यया सह भार्य्यया। पुत्त्रहेतोः परामार्त्तिं जगाम भरतर्षभ।
तावाश्रमान्नदीश्चैव वनानि च सरांसि च। तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः। ११८६०
श्रुत्वा शब्दन्तु यं कञ्चिदुन्मुखौ सुतशङ्कया। सावित्र्या सहितोऽभ्येति सत्यवानित्यधावतां।
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः। कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः।
ततोऽभिसृत्य तैर्व्विप्रैः सर्व्वैराश्रमवासिभिः। परिवार्य्य समाश्वास्य तावानीतौ स्वमाश्रमं।
तत्र भार्य्यासहायः स वृतो वृद्धैस्तपोधनैः। आश्वासितो विचित्रार्थैः पूर्व्वराज्ञां कथाश्रयैः।
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्त्रदिदृक्षया। बाल्ये वृत्तानि पुत्त्रस्य स्मरन्तौ भृशदुःखितौ। ११८६५
पुनरुक्त्वा च करुणां वाचं तौ शोककर्षितौ। हा पुत्त्र हा साध्वि वधु क्वासि क्वासीत्यरोदतां।
ब्राह्मणः सत्यवाक् तेषामुवाचेदं तयोरन्तिके ॥ सुवर्च्चा उवाच ॥ यथाऽस्य भार्य्या सावित्री तपसा च दमेन च।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ गौतम उवाच ॥ वेदाः साङ्गा मयाऽधीतास्तपो मे सञ्चितं महत्।
कौमारं ब्रह्मचर्य्यञ्च गुरवोऽग्निश्च तोषिताः। समाहितेन चीर्णानि सर्व्वाण्येव व्रतानि मे।
वायुभक्षोपवासश्च कृतो मे विधिवत् सदा। अनेन तपसा वेद्मि सर्व्वं परचिकीर्षितं। ११८७०
सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ॥ शिष्य उवाच ॥ उपाध्यायस्य मे वक्त्राद् यथा वाक्यं विनिःसृतं।
नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ ऋषय ऊचुः ॥ यथाऽस्य भार्य्या सावित्री सर्व्वैरेव सुलक्षणैः।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ भरद्वाज उवाच ॥ यथाऽस्य भार्य्या सावित्री तपसा च दमेन च।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ दाल्भ्य उवाच ॥ यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतं।
गताहारमकृत्वा च तथा जीवति सत्यवान् ॥ आपस्तम्ब उवाच ॥ यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः। ११८७५
पार्थिवीं च प्रवृत्तिन्ते तथा जीवति सत्यवान् ॥ धौम्य उवाच ॥ सर्व्वैर्गुणैरुपेतस्ते यथा पुत्त्रो जनप्रियः।
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ॥ मार्कण्डेय उवाच ॥ एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः।
तांस्तान् विगणयन् सर्व्वांस्ततः स्थिर इवाभवत्। ततो मुहूर्त्तात् सावित्री भर्त्त्रा सत्यवता सह।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ ब्राह्मणा ऊचुः ॥ पुत्त्रेण सङ्गतं त्वान्तु चक्षुष्मन्तं निरीक्ष्य च।
सर्व्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते। समागमेन पुत्त्रस्य सावित्र्या दर्शनेन च। ११८८०
चक्षुषश्चात्मनो लाभात् त्रिभिर्द्दिष्ट्या विवर्द्धसे। सर्व्वैरस्माभिरुक्तं यत् तथा तन्नात्र संशयः।
भूयो भूयः समृद्धिस्ते क्षिप्रमेव भविष्यति। ततोऽग्निं तत्र सञ्ज्वाल्य द्विजास्ते सर्व्व एव हि।
उपासाञ्चक्रिरे पार्थ द्युमत्सेनं महीपतिं। शैव्या च सत्यवांश्चैव सावित्री चैकतः स्थिता।
सर्व्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन्। ततो राज्ञा सहासीनाः सर्व्वे ते वनवासिनः।

जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतं ॥ ऋषय ऊचुः ॥ प्रागेव नागतं कस्मात् सभार्य्येण त्वया विभो । ११८८५
विरात्रे चागतं कस्मात् कोऽनुबन्धस्तवाभवत् । सन्तापितः पिता माता वयञ्चैव नृपात्मज ।
कस्मादिति न जानीमस्तत् सर्व्वं वक्तुमर्हसि ॥ सत्यवानुवाच ॥ पित्राऽहमभ्यनुज्ञातः सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः । सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं न च मया सुप्तपूर्व्वं कदाचन । सर्व्वेषामेव भवतां सन्तापो मा भवेदिति ।
अतो विरात्रागमनं नान्यदस्तीह कारणं ॥ गौतम उवाच ॥ अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः । ११८९०
नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति । श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरं ।
त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा । त्वमत्र हेतुं जानीषे तस्मात् सत्यं निरुच्यतां ।
रहस्यं यदि ते नास्ति किञ्चिदत्र वदस्व नः ॥ सावित्र्युवाच ॥ एवमेतद्यथा वेत्थ सङ्कल्पो नान्यथा हि वः ।
न हि किञ्चिद्रहस्यं मे श्रूयतां तथ्यमेव तत् । मृत्युर्म्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहं । सुप्तञ्चैनं यमः साक्षादुपागच्छत्सकिङ्करः । ११८९५
स एनमनयद्बद्धा दिशं पितृनिषेवितां । अस्तौषं तमहं देवं सत्येन वचसा विभुं ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम । चक्षुषी च स्वराज्यञ्च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्त्रशतं पुत्त्राणाञ्चात्मनः शतं । चतुर्व्वर्षशतायुर्म्मे भर्त्ता लब्धश्च सत्यवान् ।
भर्त्तुर्हि जीवितार्थन्तु मया चीर्णमिदं व्रतं । एतत् सर्व्वं मयाख्यातं कारणं विस्तरेण वः । यथावृत्तं सुखोदर्कमिदं दुःखं
महन्मम ।
॥ ऋषय ऊचुः ॥ निमज्जमानं व्यसनैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदे । त्वया सुशीलव्रतपुण्यया कुलं समुद्धृतं साध्वि
पुनः कुलीनया । ११९००
॥ मार्कण्डेय उवाच ॥ तथा प्रशस्य ह्यभिपूज्य चैव वरस्त्रियं तामृषयः समागताः । नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा शिवेन जग्मुर्मु
दिताः स्वमालयं ।
इति श्रीमहाभारते आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि सावित्रीकथायां सप्तनवत्यधिकद्विशतोऽध्यायः ॥ २९७ ॥
॥ मार्कण्डेय उवाच ॥ तस्यां रात्र्यां व्यतीतायामुदिते सूर्य्यमण्डले । कृतपूर्व्वाह्णिकाः सर्व्वे समेयुस्ते तपोधनाः ।
तदेव सर्व्वं सावित्र्या महाभाग्यं महर्षयः । द्युमत्सेनाय नातृप्यन् कथयन्तः पुनः पुनः ।
ततः प्रकृतयः सर्व्वाः शाल्वेभ्योऽभ्यागता नृप । आचख्युर्निहतञ्चैव स्वेनामात्येन तं द्विषं ।
तं मन्त्रिणा हतं श्रुत्वा ससहायं सबान्धवं । न्यवेदयन् यथावृत्तं विद्रुतञ्च द्विषद्बलं । ११९०५
ऐकमत्यञ्च सर्व्वस्य जनस्याथ नृपं प्रति । सचक्षुर्व्वाऽप्यचक्षुर्व्वा स नो राजा भवत्विति ।
अनेन निश्चयेनेह वयं प्रस्थापिता नृप । प्राप्तानीमानि यानानि चतुरङ्गञ्च ते बलं ।
प्रयाहि राजन् भद्रन्ते घुष्टस्ते नगरे जयः । अध्यास्स्व चिररात्राय पितृपैतामहं पदं ।
चक्षुष्मन्तञ्च तं दृष्ट्वा राजानं वपुषाऽन्वितं । मूर्द्ध्ना निपतिताः सर्व्वे विस्मयोत्फुल्ललोचनाः ।
ततोऽभिवाद्य तान् वृद्धान् द्विजानाश्रमवासिनः । तैश्चाभिपूजितः सर्व्वैः प्रययौ नगरं प्रति । ११९१०

शैव्या च सह सावित्र्या यानेनाग्र्येण सुवर्चसा । नरयुक्तेन यानेन प्रययौ सेनया वृता ।
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः । पुत्रञ्चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ।
ततः कालेन महता सावित्र्याः कीर्त्तिवर्द्धनं । तद्वै पुत्रशतं जज्ञे शूराणामनिवर्त्तिनां ।
भ्रातृणां सोदराणाञ्च तथैवास्याभवत् शतं । मद्राधिपस्याश्वपतेर्मालव्यां सुमहद्बलं ।
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च । भर्त्तुः कुलञ्च सावित्र्या सर्व्वं कृच्छ्रात् समुद्धृतं । ११९१५
तथैवैषाऽपि कल्याणी द्रौपदी शीलसम्मता । तारयिष्यति वः सर्व्वान् सावित्रीव कुलाङ्गना ।
॥ वैशम्पायन उवाच ॥ एवं स पाण्डवस्तेन अनुनीतो महात्मना । विशोको विज्वरो राजन् काम्यके न्यवसत्तदा ।
यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमं । स सुखी सर्व्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ।
इति श्रीमहाभारते आरण्यपर्व्वणि पतिव्रतामाहात्म्यपर्व्वणि द्युमत्सेनराज्यलाभेऽष्टनवत्यधिकद्विशततोऽध्यायः समाप्तञ्च पतिव्रतामाहात्म्यपर्व्व ॥ २९८ ॥

---

## अथ कुण्डलाहरणपर्व्व ॥ १५ ॥

॥ जनमेजय उवाच ॥ यत्तत्तदा महद्ब्रह्मन् लोमशो वाक्यमब्रवीत् । इन्द्रस्य वचनादेव पाण्डुपुत्रं युधिष्ठिरं ।
यच्चापि ते भयं तीव्रं न च कीर्त्तयसे क्वचित् । तच्चाप्यपहरिष्यामि धनञ्जय इतो गते । ११९२०
किन्तु तज्जपतां श्रेष्ठ कर्णं प्रति महद्भयं । आसीन्न च स धर्म्मात्मा कथयामास कस्यचित् ।
॥ वैशम्पायन उवाच ॥ अहं ते राजशार्दूल कथयामि कथामिमां । पृच्छतो भरतश्रेष्ठ शुश्रूषस्व गिरं मम ।
द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे । पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ।
अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः । कुण्डलार्थे महाराज सूर्य्यः कर्णमुपागतः ।
महार्हे शयने वीरं स्पर्द्ध्यास्तरणसंवृते । शयानमतिविश्वस्तं ब्रह्मण्यं सत्यवादिनं । ११९२५
स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् । कृपया परयाविष्टः पुत्रस्नेहाच्च भारत ।
ब्राह्मणो वेदविद्भूत्वा सूर्य्यो योगर्द्धिरूपवान् । हितार्थमब्रवीत् कर्णं सान्त्वपूर्व्वमिदं वचः ।
कर्ण मद्वचनं तात शृणु सत्यभृताम्वर । ब्रुवतोऽद्य महाबाहो सौहृदात् परमं हितं ।
उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया । ब्राह्मणच्छद्मना कर्ण कुण्डलोपजिहीर्षया ।
विदितं तेन शीलन्ते सर्व्वस्य जगतस्तथा । यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे । ११९३०
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितं । वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कस्यचित् ।
त्वान्तु चैवंविधं ज्ञात्वा स्वयं वै पाकशासनः । आगन्ता कुण्डलार्थाय कवचञ्चैव भिक्षितुं ।
तस्मै प्रयाचमानाय न देये कुण्डले त्वया । अनुनेयः परं शक्त्या श्रेय एतद्धि ते परं ।
कुण्डलार्थे ब्रुवंस्तात कारणैर्ब्बहुभिस्त्वया । अन्यैर्ब्बहुविधैर्वित्तैः स निवार्य्यः पुनःपुनः ।
रत्नैस्त्रीभिस्तथा गोभिर्धनैर्ब्बहुविधैरपि । निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरन्दरः । ११९३५
यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे । आयुषः प्रक्षयं गत्वा मृत्योर्व्वशमुपेष्यसि ।

कवचेन समायुक्तः कुण्डलाभ्याञ्च मानद । अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ।
अमृतादुत्थितं ह्येतदुभयं रत्नसम्भवं । तस्माद्रक्ष्यं त्वया कर्ण जीवितञ्चेत् प्रियं तव ।
॥ कर्ण उवाच ॥ को मामेवं भवान् प्राह दर्शयन् सौहृदं परं । कामया भगवन् ब्रूहि को भवान् द्विजवेशधृक् ।
॥ ब्राह्मण उवाच ॥ अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये । कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते ।
॥ कर्ण उवाच ॥ श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः । प्रवक्ताऽद्य हितान्वेषी शृणु चेदं वचो मम ।
प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहं । न निवार्य्यो व्रतादस्मादहं यद्यस्मि ते प्रियः ।
व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नं विभावसो । यथाऽहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवं ।
यद्यागच्छति मां शक्रो ब्राह्मणच्छद्मना वृतः । हितार्थं पाण्डुपुत्त्राणां खेचरोत्तम भिक्षितुं ।
दास्यामि विबुधश्रेष्ठ कुण्डले वर्म्म चोत्तमं । न मे कीर्त्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता ।    १९९०५
मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणं । युक्तं हि यशसा युक्तं मरणं लोकसम्मतं ।
सोऽहमिन्द्राय दास्यामि कुण्डले सह वर्म्मणा । यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति ।
हितार्थं पाण्डुपुत्त्राणां कुण्डले मे प्रयाचितुं । तन्मे कीर्त्तिकरं लोके तस्याकीर्त्तिर्भविष्यति ।
वृणोमि कीर्त्तिं लोके हि जीवितेनापि भानुमन् । कीर्त्तिमानश्नुते स्वर्गं हीनकीर्त्तिस्तु नश्यति ।
कीर्त्तिर्हि पुरुषं लोके सञ्जीवयति मातृवत् । अकीर्त्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः ।    १९९१०
अयं पुराणः श्लोको हि स्वयं गीतो विभावसो । धात्रा लोकेश्वर यथा कीर्त्तिरायुर्नरस्य ह ।
पुरुषस्य परे लोके कीर्त्तिरेव परायणं । इह लोके विशुद्धा च कीर्त्तिरायुर्व्विवर्द्धिनी ।
सोऽहं शरीरजे दत्त्वा कीर्त्तिं प्राप्स्यामि शाश्वतीं । दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ।
हुत्वा शरीरं सङ्ग्रामे कृत्वा कर्म्म सुदुष्करं । विजित्य च परानाजौ यशः प्राप्स्यामि केवलं ।
भीतानामभयं दत्त्वा सङ्ग्रामे जीवितार्थिनां । वृद्धान् बालान् द्विजातींश्च मोचयित्वा महाभयात् ।    १९९१५
प्राप्स्यामि परमं लोके यशः स्वर्ग्यमनुत्तमं । जीवितेनापि मे रक्ष्या कीर्त्तिस्तद्विद्धि मे व्रतं ।
सोऽहं दत्त्वा मघवते भिक्षामेतामनुत्तमां । ब्राह्मणच्छद्मिने देवलोके गन्ता परां गतिं ।
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि सूर्य्यकर्णसंवादे एकोनशताधिकद्विशततोऽध्यायः ॥ २९९ ॥
॥ सूर्य्य उवाच ॥ माऽहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा । पुत्त्राणामथ भार्य्याणामथो मातुरथो पितुः ।
शरीरस्याविरोधेन प्राणिभिः प्राणभृद्वर । इष्यते यशसः प्राप्तिः कीर्त्तिश्च त्रिदिवे स्थिरा ।
यस्त्वं प्राणविरोधेन कीर्त्तिमिच्छसि शाश्वतीं । सा ते प्राणान् समादाय गमिष्यति न संशयः ।    १९९२०
जीवतां कुरुते कार्य्यं पिता माता सुतस्तथा । ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन् पुरुषर्षभ ।
राजानश्च नरव्याघ्र पौरुषेण निबोध तत् । कीर्त्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते ।
मृतस्य कीर्त्त्या किं कार्य्यं भस्मीभूतस्य देहिनः । मृतः कीर्त्तिं न जानीते जीवन् कीर्त्तिं समश्नुते ।
मृतस्य कीर्त्तिर्मर्त्त्यस्य यथा माला गतायुषः । अहन्तु त्वां ब्रवीम्येतद्भक्तोऽसीति हितेप्सया ।
भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना । भक्तोऽयं परया भक्त्या मामित्येव महाभुज ।    १९९२५

ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम। अस्ति चात्र परं किञ्चिदध्यात्मं देवनिर्म्मितं।
अतश्च त्वां ब्रवीम्येतत् क्रियतामविशङ्कया। देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ।
तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान्। पुनरुक्तञ्च वक्ष्यामि त्वं राधेय निबोध तत्।
माऽस्मै ते कुण्डले दास्त्वं भिक्षिते वज्रपाणिना। शोभसे कुण्डलाभ्याञ्च रुचिराभ्यां महाद्युते।
विशाखयोर्म्मध्यगतः शशीव विमले दिवि। कीर्त्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत्। १६९७०
प्रत्याख्येयस्त्वया तात कुण्डलार्थे सुरेश्वरः। शक्या बहुविधैर्व्वाक्यैः कुण्डलेप्सा त्वयाऽनघ।
विहन्तुं देवराजस्य हेतुयुक्तैः पुनः पुनः। हेतुमदुपपन्नार्थैर्म्माधुर्य्यकृतभूषणैः।
पुरन्दरस्य कर्ण त्वं बुद्धिमेतामपानुद। त्वं हि नित्यं नरव्याघ्र स्पर्द्धसे सव्यसाचिना।
सव्यसाची त्वया चेह युधि शूरः समेष्यति। न तु त्वामर्ज्जुनः शक्तः कुण्डलाभ्यां समन्वितं।
विजेतुं युधि यद्यस्य स्वयमिन्द्रः सखा भवेत्। तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे। १६९७५
सङ्ग्रामे यदि निर्ज्जेतुं कर्ण कामयसेऽर्ज्जुनं।

इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि सूर्य्यकर्णसंवादे त्रिशतोऽध्यायः ॥ ३०० ॥

॥ कर्ण उवाच ॥ भगवन्तमहं भक्तो यथा मां वेत्थ गोपते। तथा परमतिग्मांशो नान्यद्दैवं कथञ्चन।
न मे दारा न मे पुत्रा न चात्मा सुहृदो न च। तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम।
इष्टानाञ्च महात्मानो भक्तानाञ्च न संशयः। कुर्व्वन्ति भक्तिमिष्टाञ्च जानीषे त्वञ्च भास्कर।
इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि। जानीत इति वै कृत्वा भगवानाह मद्धितं। १६९८०
भूयश्च शिरसा याचे प्रसाद्य च पुनःपुनः। इति ब्रवीमि तिग्मांशो त्वन्तु मे क्षन्तुमर्हसि।
बिभेमि न तथा मृत्योर्य्यथा बिभ्येऽनृतादहं। विशेषेण द्विजातीनां सर्व्वेषां सर्व्वदा सतां।
प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा। यच्च मामात्थ देव त्वं पाण्डवं फाल्गुनं प्रति।
व्येतु सन्तापजं दुःखं तव भास्कर मानसं। अर्ज्जुनं प्रति मां चैव विजेष्यामि रणेऽर्ज्जुनं।
तवापि विदितं देव ममाप्यस्त्रबलं महत्। जामदग्न्यादुपात्तं यत् तथा द्रोणान्महात्मनः। १६९८५
इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम। भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः।
॥ सूर्य्य उवाच ॥ यदि तात ददास्येते वज्रिणे कुण्डले शुभे। त्वमप्येनमथो ब्रूया विजयार्थे महाबल।
नियमेन प्रदद्यास्ते कुण्डले वै शतक्रतो। अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः।
अर्ज्जुनेन विनाशं हि तव दानवसूदनः। प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति।
स त्वमप्येनमाराध्य सूनृताभिः पुनःपुनः। अभ्यर्थयेथा देवेशममोघार्थं पुरन्दरं। १६९९०
अमोघां देहि मे शक्तिममित्रविनिबर्हिणीं। दास्यामि ते सहस्राक्ष कुण्डले वर्म्म चोत्तमं।
इत्येव नियमेन त्वं दद्याः शक्राय कुण्डले। तया त्वं कर्ण सङ्ग्रामे हनिष्यसि रणे रिपून्।
नाहत्वा हि महाबाहो शत्रूनेति करं पुनः। सा शक्तिर्द्देवराजस्य शतशोऽथ सहस्रशः।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा सहस्रांशुः सहसाऽन्तरधीयत। ततः सूर्य्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत्।

यथादृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि । तत्सर्व्वमानुपूर्व्व्येण शशंसास्मै वृषस्तदा । ९९९९

तच्छ्रुत्वा भगवान् देवो भानुः स्वर्भानुसूदनः । उवाच तं तथेत्येव कर्णं सूर्य्यः स्मयन्निव ।

ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा । शक्तिमेवाभिकाङ्क्षन् वै वासवं प्रत्यपालयत् ।

इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि सूर्य्यकर्णसंवादे एकाधिकद्विशततोऽध्यायः ॥ ३०१ ॥

॥ जनमेजय उवाच ॥ किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना । कीदृशे कुण्डले ते च कवचञ्चैव कीदृशं ।

कुतश्च कवचं तस्य कुण्डले चैव सत्तम । एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ।

॥ वैशम्पायन उवाच ॥ अथ राजन् ब्रवीम्येतद्यत्तद्गुह्यं विभावसोः । यादृशे कुण्डले ते च कवचञ्चैव यादृशं । १००००

कुन्तिभोजं पुरा राजन् ब्राह्मणः पर्य्युपस्थितः । तिग्मतेजा महाप्रांशुः श्मश्रुदण्डजटाधरः ।

दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव । मधुपिङ्गो मधुरवाक् तपःस्वाध्यायभूषणः ।

स राजानं कुन्तिभोजमब्रवीत् सुमहातपाः । भिक्षामिच्छामि वै भोक्तुं तव गेहे विमत्सर ।

न मे व्यलीकं कर्त्तव्यं त्वया वा तव चानुगैः । एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ।

यथाकामञ्च गच्छेयमागच्छेयं तथैव च । शय्यासने च मे राजन्नापराध्येत कश्चन । १०००५

तमब्रवीत् कुन्तिभोजः प्रीतियुक्तमिदं वचः । एवमस्तु परञ्चेति पुनश्चैनमथाब्रवीत् ।

मम कन्या महाप्राज्ञ पृथा नाम यशस्विनी । शीलवृत्तान्विता साध्वी नियता चैव भाविनी ।

उपस्थास्यति सा त्वां वै पूजयाऽनवमन्य च । तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ।

एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि । उवाच कन्यामभ्येत्य पृथां पृथुललोचनां ।

अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति । मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतं । १००१०

त्वयि वत्से पराश्वस्य ब्राह्मणस्याभिराधनं । तन्मे वाक्यमभिथ्या त्वं कर्त्तुमर्हसि कर्हिचित् ।

अयं तपस्वी भगवान् स्वाध्यायनियतो द्विजः । यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात् ।

ब्राह्मणो हि परं तेजो ब्राह्मणो हि परन्तपः । ब्राह्मणानां नमस्कारैः सूर्य्यो दिवि विराजते ।

अमानयन् हि मानार्हान् वातापिश्च महासुरः । निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ।

सोऽयं वत्से महाभाग आहितस्त्वयि साम्प्रतं । त्वं सदा नियता कुर्य्या ब्राह्मणस्याभिराधनं । १००१५

जानामि प्रणिधानन्ते बाल्यात् प्रभृति नन्दिनि । ब्राह्मणेष्विह सर्व्वेषु गुरुबन्धुषु चैव ह ।

तथा प्रेष्येषु सर्व्वेषु मित्रसम्बन्धिमातृषु । मयि चैव यथावत्त्वं सर्व्वमादृत्य वर्त्तसे ।

न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते । सम्यग्वृत्त्याऽनवद्याङ्गि तव भृत्यजनेष्वपि ।

सन्देष्टव्यान्तु मन्ये त्वां द्विजातिं कोपनं प्रति । पृथे बालेति कृत्वा वै सुता चासि ममेति च ।

वृष्णीनाञ्च कुले जाता शूरस्य दयिता सुता । दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयं । १००२०

वसुदेवस्य भगिनी सुतानां प्रवरा मम । अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ।

तादृशे हि कुले जाता कुले चैव विवर्द्धिता । सुखात् सुखमनुप्राप्ता ह्रदात् ह्रदमिवागता ।

दौष्कुलेया विशेषेण कथञ्चित् प्रग्रहं गताः । बालभावाद्विकुर्व्वन्ति प्रायशः प्रमदाः शुभे ।

पृथे राजकुले जन्म रूपञ्चापि तवाद्भुतं। तेन तेनासि सम्पन्ना समुपेता च भाविनी।
सा त्वं दर्पं परित्यज्य दम्भं मानञ्च भाविनि। आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे। १७०२५
एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवं। कोपिते च द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलं।
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथोपदेशे द्व्यधिकत्रिशततमोऽध्यायः॥ ३०२॥
॥ कुन्त्युवाच ॥ ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया। यथाप्रतिज्ञं राजेन्द्र नच मिथ्या ब्रवीम्यहं।
एष चैव स्वभावो मे पूजयेयं द्विजानिति। तव चैव प्रियं कार्य्यं श्रेयश्च परमं मम।
यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि। यद्यर्द्धरात्रे भगवान्न मे कोपं करिष्यति।
लाभो ममैष राजेन्द्र यद्वै पूजयती द्विजान्। आदेशे तव तिष्ठन्ती हितं कुर्य्यां नरोत्तम। १७०३०
विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः। वसन् प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते।
यत् प्रियञ्च द्विजस्यास्य हितञ्चैव तवानघ। यतिष्यामि तथा राजन् व्येतु ते मानसो ज्वरः।
ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते। तारणाय समर्थाः स्युर्विपरीते वधाय च।
साऽहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमं। न मत्कृते व्यथां राजन् प्राप्स्यसि द्विजसत्तमात्।
अपराधेऽपि राजेन्द्र राज्ञामश्रेयसे द्विजाः। भवन्ति च्यवनो यद्वत् सुकन्यायाः कृते पुरा। १७०३५
नियमेन परेणाहमुपस्थास्ये द्विजोत्तमं। यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति।
एवं ब्रुवन्तीं बहुशः परिष्वज्य समर्थ्य च। इति चेति च कर्त्तव्यं राजा सर्व्वमथादिशत्।
॥ राजोवाच ॥ एवमेतत्त्वया भद्रे कर्त्तव्यमविशङ्कया। मद्धितार्थं तथात्मार्थं कुलार्थञ्चाप्यनिन्दिते।
एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः। पृथां परिददौ तस्मै द्विजाय द्विजवत्सलः।
इयं ब्रह्मन् मम सुता बाला सुखविवर्द्धिता। अपराध्येत यत् किञ्चिन्न कार्य्यं हृदि तत्त्वया। १७०४०
द्विजातयो महाभागा वृद्धबालतपस्विषु। भवन्त्यक्रोधनाः प्रायो ह्यपराधेषु नित्यदा।
सुमहत्यपराधेऽपि क्षान्तिः कार्य्या द्विजातिभिः। यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम।
तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः। हंसचन्द्रांशुसङ्काशं गृहमस्मै न्यवेदयत्।
तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत्। आहारादि च सर्व्वं तत् तथैव प्रत्यवेदयत्।
निक्षिप्य राजपुत्त्री तु तन्द्रीं मानं तथैव च। आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने। १७०४५
तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती। विधिवत् परिचारार्हं देववत् पर्य्यतोषयत्।
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथाद्विजपरिचर्य्यायां त्र्यधिकत्रिशततमोऽध्यायः॥ ३०३॥
॥ वैशम्पायन उवाच ॥ सा तु कन्या महाराज ब्राह्मणं संशितव्रतं। तोषयामास शुद्धेन मनसा संशितव्रता।
प्रातरेष्याम्यथेत्युक्त्वा कदाचिद्द्विजसत्तमः। तत आयाति राजेन्द्र सायं रात्रावथो पुनः।
तञ्च सर्व्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः। पूजयामास सा कन्या वर्द्धमानैस्तु सर्व्वदा।
अन्नादिसमुदाचारः शय्यासनकृतस्तथा। दिवसे दिवसे तस्य वर्द्धते न तु हीयते। १७०५०
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा। ब्राह्मणस्य पृथा राजन्नचकाराप्रियन्तदा।

व्यस्ते काले पुनश्चेति नचेति बहुशो द्विजः। सुदुर्लभमपि ह्यन्नं दीयतामिति सोऽब्रवीत्।
कृतमेव च तत्सर्व्वं तथा तस्मै न्यवेदयत्। शिष्यवत् पुत्त्रवच्चैव स्वसृवच्च सुसंयता।
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा। प्रीतिमुत्पादयामास कन्या रत्नमनिन्दिता।
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः। अवधानेन भूयोऽस्याः परं यत्नमथाकरोत्। १७०५५
तां प्रभाते च सायञ्च पिता पप्रच्छ भारत। अपि तुष्यति ते पुत्त्रि ब्राह्मणः परिचर्य्यया।
तं सा परममित्येव प्रत्युवाच यशस्विनी। ततः प्रीतिमवापाग्र्यां कुन्तिभोजो महामनाः।
ततः सम्वत्सरे पूर्णे यदाऽसौ जपतांवरः। नापश्यद्दुष्कृतं किञ्चित् पृथायाः सौहृदे रतः।
ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत्। प्रीतोऽस्मि परमं भद्रे परिचारेण ते शुभे।
वरान् वृणीष्व कल्याणि दुरापां मानुषैरिह। यैस्त्वं सीमन्तिनीः सर्व्वा यशसाऽभिभविष्यसि। १७०६०
॥ कुन्त्युवाच॥ कृतानि मम सर्व्वाणि यस्या मे वेदवित्तम। त्वं प्रसन्नः पिता चैव कृतं विप्रवरैर्मम।
॥ ब्राह्मण उवाच ॥ यदि नेच्छसि मत्तस्त्वं वरं भद्रे शुचिस्मिते। इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसां।
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि। तेन तेन वशे भद्रे स्थातव्यन्ते भविष्यति।
अकामो वा सकामो वा स समेष्यति ते वशं। विबुधो मन्त्रसंशान्तो भवेद्भृत्य इवानतः।
॥ वैशम्पायन उवाच ॥ न शशाक द्वितीयं सा प्रत्याख्यातुमनिन्दिता। तं वै द्विजातिप्रवरं तदा शापभयान्नृप। १७०६५
ततस्तामनवद्याङ्गीं ग्राहयामास स द्विजः। मन्त्रग्रामं तदा राजन्नथर्व्वशिरसि श्रुतं।
तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह। उषितोऽस्मि सुखं राजन् कन्यया परितोषितः।
तव गेहेषु विहितं सदा सुप्रतिपूजितः। साधयिष्यामहे तावदित्युक्त्वाऽन्तरधीयत।
स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा। बभूव विस्मयाविष्टः पृथाञ्च समपूजयत्।
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथामन्त्रप्राप्तौ चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

॥ वैशम्पायन उवाच ॥ गते तस्मिन् द्विजश्रेष्ठे कस्मिंश्चित्कारणान्तरे। चिन्तयामास सा कन्या मन्त्रग्रामबलाबलं। १७०७०
अयं वै कीदृशस्तेन मम दत्तो महात्मना। मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिति।
एवं सञ्चिन्तयन्ती सा ददर्शर्त्तुं यदृच्छया। व्रीडिता साऽभवद्बाला कन्याभावे रजस्वला।
ततो हर्म्म्यतलस्था सा महार्हशयनोचिता। प्राच्यां दिशि समुद्यन्तं ददर्शादित्यमण्डलं।
तत्र बद्धमनोदृष्टिरभवत् सा सुमध्यमा। न चातप्यत रूपेण भानोः सन्ध्यागतस्य सा।
तस्या दृष्टिरभूद्दिव्या साऽपश्यद्दिव्यदर्शनं। आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितं। १७०७५
तस्याः कौतूहलं त्वासीन्मन्त्रं प्रति नराधिप। आह्वानमकरोत् साऽथ तस्य देवस्य भाविनी।
प्राणानुपस्पृश्य तदा आजुहाव दिवाकरं। आजगाम ततो राजंस्त्वरमाणो दिवाकरः।
मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव। अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव।
योगात् कृत्वा द्विधात्मानमाजगाम तताप च। आबभाषे ततः कुन्तीं साम्ना परमवल्गुना।
आगतोऽस्मि वशं भद्रे तव मन्त्रबलात्कृतः। किङ्करोम्यवशो राज्ञि ब्रूहि कर्त्ता तदस्मि ते। १७०८०

॥ कुन्त्युवाच ॥ गम्यतां भगवंस्तत्र यत एवागतो ह्यसि । कौतूहलात् समाहूतः प्रसीद भगवन्निति ।
॥ सूर्य्य उवाच ॥ गमिष्येऽहं यथा मां त्वं ब्रवीषि तनुमध्यमे । नतु देवं समाहूय न्याय्यं प्रेषयितुं वृथा ।
तवाभिसन्धिः सुभगे सूर्य्यात् पुत्रो भवेदिति । वीर्य्येणाप्रतिमो लोके कवची कुण्डलीति च ।
सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि । उत्पत्स्यति हि पुत्रस्ते यथासङ्कल्पमङ्गने ।
अथ गच्छाम्यहं भद्रे त्वया सङ्गम्य सुस्मिते । यदि त्वं वचनं नाद्य करिष्यसि मम प्रियं । १७०८६
शपिष्ये त्वामहं क्रुद्धो ब्राह्मणं पितरञ्च ते । त्वत्कृते तान् प्रधक्ष्यामि सर्व्वानपि न संशयः ।
पितरञ्चैव ते मूढं यो न वेत्ति तवानयं । तस्य च ब्राह्मणस्याद्य योऽसौ मन्त्रमदात्तव ।
शीलवृत्तमविज्ञाय धास्यामि विनयं परं । एते हि विबुधाः सर्व्वे पुरन्दरमुखा दिवि ।
त्वया प्रलब्धं पश्यन्ति स्मयन्त इव भाविनि । पश्य चैनान् सुरगणान् दिव्यञ्चक्षुरिदं हि ते । पूर्व्वमेव मया दत्तं दृष्टवत्यसि येन मां ।
॥ वैशम्पायन उवाच ॥ ततोऽपश्यत्त्रिदशान् राजपुत्री सर्व्वानेव स्वेषु धिष्ण्येषु खस्थान् । प्रभासन्तं भानुमन्तं महान्तं यथादित्यं रोचमानांस्तथैव । १७०९०
सा तान् दृष्ट्वा व्रीडमानेव बाला सूर्य्यं देवी वचनं प्राह भीता । गच्छ त्वं वै गोपते स्वं विमानं कन्याभावाद्दुःख एवोपचारः ।
पिता माता गुरवश्चैव येऽन्ये देहस्यास्य प्रभवन्ति प्रदाने । नाहं धर्म्मं लोपयिष्यामि लोके स्त्रीणां वृत्तं पूज्यते देहरक्षा ।
मया मन्त्रबलं ज्ञातुमाहूतस्त्वं विभावसो । बाल्याद्बालेति तत् कृत्वा क्षन्तुमर्हसि मे विभो ।
॥ सूर्य्य उवाच ॥ बालेति कृत्वाऽनुनयं तवाहं ददानि नान्याऽनुनयं लभेत । आत्मप्रदानं कुरु कुन्ति कन्ये शान्तिस्तवैवं हि भवेच्च भीरु ।
न चापि गन्तुं युक्तं हि मया मिथ्याकृतेन वै । असमेत्य त्वया भीरु मन्त्राहूतेन भाविनि । १७०९५
गमिष्याम्यनवद्याङ्गि लोके समवहास्यतां । सर्व्वेषां विबुधानाञ्च वक्तव्यः स्यां तथा शुभे ।
सा त्वं मया समागच्छ पुत्रं लप्स्यसि मादृशं । विशिष्टा सर्व्वलोकेषु भविष्यसि न संशयः ।
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथासूर्य्याह्वाने पञ्चाधिकत्रिशततोऽध्यायः ॥ ३०५ ॥
॥ वैशम्पायन उवाच ॥ सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः । अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ।
न शशाक यदा बाला प्रत्याख्यातुं तमोनुदं । भीता शापात्ततो राजन् दध्यौ दीर्घमथान्तरं ।
अनागसः पितुः शापो ब्राह्मणस्य तथैव च । मन्निमित्तः कथं न स्यात् क्रुद्धादस्माद्विभावसोः । १७१००
बालेनापि सता मोहाद्भृशं पापकृतान्यपि । नाभ्यासादयितव्यानि तेजांसि च तपांसि च ।
साऽहमद्य भृशं भीता गृहीता च करे भृशं । कथन्त्वकार्य्यं कुर्य्यां वै प्रदानं ह्यात्मनः स्वयं ।
॥ वैशम्पायन उवाच ॥ सा वै शापपरित्रस्ता बहु चिन्तयती हृदा । मोहेनापि परीताङ्गी स्मयमाना पुनः पुनः ।
तं देवमब्रवीद्भीता बन्धूनां राजसत्तम । व्रीडाविह्वलया वाचा शापत्रस्ता विशाम्पते ।
॥ कुन्त्युवाच ॥ पिता मे ध्रियते देव माता चाऽन्ये च बान्धवाः । न तेषु ध्रियमाणेषु विधिलोपो भवेदयं । १७१०५
त्वया तु सङ्गमो देव यदि स्याद्विधिवर्जितः । मन्निमित्तं कुलस्यास्य लोके कीर्त्तिर्नशेत्ततः ।

अथ वा धर्म्ममेतं त्वं मन्यसे तपताम्वर। ऋते प्रदानाद्वन्धुभ्यस्तव कामं करोम्यहं।
आत्मप्रदानं दुर्द्धर्ष तव कृत्वा सती त्वहं। त्वयि धर्म्मो यशश्चैव कीर्त्तिरायुश्च देहिनां।
॥ सूर्य्य उवाच॥ न ते पिता न ते माता गुरवो वा शुचिस्मिते। प्रभवन्ति वरारोहे भद्रन्ते शृणु मे वचः।
सर्व्वान् कामयते यस्मात् कमेर्द्धातोश्च भाविनि। तस्मात् कन्येह सुश्रोणि स्वतन्त्रा वरवर्णिनि। १७११०
नाधर्म्मश्चरितः कश्चित्त्वया भवति भाविनि। अधर्म्मं कुत एवाहं चरेयं लोककाम्यया।
अनावृताः स्त्रियः सर्व्वा नराश्च वरवर्णिनि। स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः।
सा मया सह सङ्गम्य पुनः कन्या भविष्यसि। पुत्त्रश्च ते महाबाहुर्भविष्यति महायशाः।
॥ कुन्त्युवाच ॥ यदि पुत्त्रो मम भवेत्ततः सर्व्वतमोनुद। कुण्डली कवची शूरो महाबाहुर्म्महाबलः।
॥ सूर्य्य उवाच ॥ भविष्यति महाबाहुः कुण्डली दिव्यवर्म्मभृत्। उभयञ्चामृतमयं तस्य भद्रे भविष्यति। १७११५
॥ कुन्त्युवाच॥ यद्येतदमृतादस्ति कुण्डले वर्म्म चोत्तमं। मम पुत्त्रस्य यं वै त्वं मत्त उत्पादयिष्यसि।
अस्तु मे सङ्गमो देव यथोक्तं भगवंस्त्वया। त्वद्वीर्य्यरूपसत्त्वौजा धर्म्मयुक्तो भवेत् स च।
॥ सूर्य्य उवाच ॥ अदित्या कुण्डले राज्ञि दत्ते मे मत्तकाशिनि। तेऽस्य दास्यामि वै भीरु वर्म्म चैवेदमुत्तमं।
॥ कुन्त्युवाच ॥ परमं भगवन्नेवं सङ्गमिष्ये त्वया सह। यदि पुत्त्रो भवेदेवं यथा वदसि गोपते।
॥ वैशम्पायन उवाच ॥ तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहङ्गमः। स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव तां। १७१२०
ततः सा विह्वलेवासीत् कन्या सूर्य्यस्य तेजसा। पपात चाथ सा देवी शयने मूढचेतना।
॥ सूर्य्य उवाच ॥ साधयिष्यामि सुश्रोणि पुत्त्रं वै जनयिष्यसि। सर्व्वशस्त्रभृतां श्रेष्ठं कन्या चैव भविष्यसि।
॥ वैशम्पायन उवाच ॥ ततः सा व्रीडिता बाला तदा सूर्य्यमथाब्रवीत्। एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्च्चसं।
इति स्मोक्ता कुन्तिराजात्मजा सा विवस्वन्तं याचमाना सलज्जा। तस्मिन् पुण्ये शयनीये पपात मोहाविष्टा भज्यमाना लतेव।
तिग्मांशुस्तां तेजसा मोहयित्वा योगेनाविश्यात्मसंस्थाञ्चकार। न चैवैनां दूषयामास भानुः संज्ञां लेभे भूय एवाथ बाला। १७१२५
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथासूर्य्यसङ्गमे षडधिकत्रिशततोऽध्यायः॥ ३०६ ॥
॥ वैशम्पायन उवाच ॥ ततो गर्भः समभवत् पृथायाः पृथिवीपते। शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्वरे।
सा बान्धवभयाद्बाला गर्भं तं विनिगूहती। धारयामास सुश्रोणी न चैनां बुबुधे जनः।
नहि तां वेद नार्य्यन्या काचिद्धात्रेयिकामृते। कन्यापुरगतां बालां निपुणां परिरक्षते।
ततः कालेन सा गर्भं सुषुवे वरवर्णिनी। कन्यैव तस्य देवस्य प्रसादादमरप्रभं।
तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलं। हर्य्यक्षं वृषभस्कन्धं यथाऽस्य पितरं तथा। १७१३०
जातमात्रञ्च तं गर्भं धात्र्या सम्मन्त्र्य भाविनी। मञ्जूषायां समाधाय स्वास्तीर्णायां समन्ततः।
मधूच्छिष्टस्थितायां सा सुखायां रुदती तथा। श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत्।
जानती चाप्यकर्त्तव्यं कन्याया गर्भधारणं। पुत्त्रस्नेहेन राजेन्द्र करुणं पर्य्यदेवयत्।
समुत्सृजन्ती मञ्जूषामश्वनद्यास्तदा जले। उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु।
स्वस्ति ते चान्तरीक्षेभ्यः पार्थिवेभ्यश्च पुत्त्रक। दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये। १७१३५

शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः। आगताश्च तथा पुत्र भवन्त्वद्रोहचेतसः।
पातु त्वां वरुणो राजा सलिले सलिलेश्वरः। अन्तरीक्षेऽन्तरीक्षस्थः पवनः सर्वगस्तथा।
पिता त्वां पातु सर्वत्र तपनस्तपतां वरः। येन दत्तोऽसि मे पुत्र दिव्येन विधिना किल।
आदित्या वसवो रुद्राः साध्या विश्वे च देवताः। मरुतश्च महेन्द्रेण दिशश्च सदिगीश्वराः।
रक्षन्तु त्वां सुराः सर्वे समेषु विषमेषु च। वेत्स्यामि त्वां विदेशेऽपि कवचेनाभिसूचितं। १७०४०
धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः। यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतं।
धन्या सा प्रमदा या त्वं पुत्रत्वे कल्पयिष्यति। यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज।
को नु स्वप्नस्तया दृष्टो या त्वामादित्यवर्चसं। दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितं।
पद्मायतविशालाक्षं पद्मताम्रदलोज्ज्वलं। सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति।
धन्या द्रक्ष्यन्ति पुत्र त्वां भूमौ संसर्पमाणकं। अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितं। १७०४५
धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगोचरं। हिमवद्वनसम्भूतं सिंहं केसरिणं यथा।
एवं बहुविधं राजन् विलप्य करुणं पृथा। अवासृजत मञ्जूषामश्वनद्यास्तदा जले।
रुदती पुत्रशोकार्त्ता निशीथे कमलेक्षणा। धात्र्या सह पृथा राजन् पुत्रदर्शनलालसा।
विसर्जयित्वा मञ्जूषां सम्बोधनभयात् पितुः। विवेश राजभवनं पुनः शोकातुरा ततः।
मञ्जूषा त्वश्वनद्याः सा ययौ चर्मण्वतीं नदीं। चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह। १७०५०
गङ्गायाः सूतविषयं चम्पामनु ययौ पुरीं। स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः।
अमृतादुत्थितं दिव्यं तत्तु वर्म सकुण्डलं। धारयामास तं गर्भं दैवञ्च विधिनिर्मितं।
इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि पृथामञ्जूषाक्षेपणे सप्ताधिकत्रिशततमोऽध्यायः॥ ३०७॥
॥ वैशम्पायन उवाच॥ एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा। सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ।
तस्य भार्य्याऽभवद्राजन् रूपेणासदृशी भुवि। राधा नाम महाभागा न सा पुत्रमविन्दत।
अपत्यार्थे परं यत्नमकरोच्च विशेषतः। सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया। १७०५५
दत्तरक्षाप्रतिसरामन्वालभनशोभितां। ऊर्म्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरं।
सा तां कौतूहलात् प्राप्तां ग्राहयामास भामिनी। ततो निवेदयामास सूतस्याधिरथस्य वै।
स तामुद्धृत्य मञ्जूषामुत्साद्य जलमन्तिकात्। यन्त्रैरुद्घाटयामास सोऽपश्यत्तत्र बालकं।
तरुणादित्यसङ्काशं हेमवर्मधरं तथा। मृष्टकुण्डलयुक्तेन वदनेन विराजता।
स सूतो भार्य्यया सार्द्धं विस्मयोत्फुल्ललोचनः। अङ्कमारोप्य तं बालं भार्य्यां वचनमब्रवीत्। १७०६०
इदमत्यद्भुतं भीरु यतो जातोऽस्मि भाविनि। दृष्टवान् देवगर्भोऽयं मन्येऽस्माकमुपागतः।
अनपत्यस्य पुत्रोऽयं देवैर्दत्तो ध्रुवं मम। इत्युक्त्वा तं ददौ पुत्रं राधायै स महीपते।
प्रतिजग्राह तं राधा विधिवद्दिव्यरूपिणं। पुत्रं कमलगर्भाभं देवगर्भं श्रियावृतं।
पुपोष चैनं विधिवद्ववृधे स च वीर्य्यवान्। ततः प्रभृति चाप्यन्ये प्राभवन्नौरसाः सुताः।

वसुवर्म्मधरं दृष्ट्वा तं बालं हेमकुण्डलं। नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः। १७१६५

एवं स सूतपुत्रत्वं जगामामितविक्रमः। वसुषेण इति ख्यातो वृष इत्येव च प्रभुः।

सूतस्य ववृधेऽङ्गेषु श्रेष्ठः पुत्रः स वीर्य्यवान्। चारेण विदितश्चासीत् पृथया दिव्यवर्म्मभृत्।

सूतस्त्वधिरथः पुत्रं विवृद्धं समयेन तं। दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयं।

तत्रोपसदनञ्चक्रे द्रोणस्येष्वस्त्रकर्म्मणि। सख्यं दुर्य्योधनेनैवमगमत् स च वीर्य्यवान्।

द्रोणात् कृपाच्च रामाच्च सोऽस्त्रग्रामञ्चतुर्व्विधं। लब्ध्वा लोकेऽभवत् ख्यातः परमेष्वासतां गतः। १७१७०

सन्धाय धार्त्तराष्ट्रेण पार्थानां विप्रिये रतः। योद्धुमाशंसते नित्यं फाल्गुनेन महात्मना।

सदा हि तस्य स्पर्द्धासीदर्ज्जुनेन विशाम्पते। अर्ज्जुनस्य च कर्णेन यतो दृष्टो बभूव सः।

एतद्गुह्यं महाराज सूर्य्यस्यासीन्न संशयः। यः सूर्य्यसम्भवः कर्णः कुन्त्यां सूतकुले तदा।

तन्तु कुण्डलिनं दृष्ट्वा वर्म्मणा च समन्वितं। अवध्यं समरे मत्वा पर्य्यतप्यद्युधिष्ठिरः।

यदा च कर्णो राजेन्द्र भानुमन्तं दिवाकरं। स्तौति मध्यन्दिने प्राप्ते प्राञ्जलिः सलिलोत्थितः। १७१७५

तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतुना। नादेयं तस्य तत्काले किञ्चिदस्ति द्विजातिषु।

तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः। स्वागतञ्चेति राधेयस्तमथ प्रत्यभाषत।

इति श्रीमहाभारते आरण्यपर्व्वणि कुण्डलाहरणपर्व्वणि राधाकर्णप्राप्तौ अष्टाधिकत्रिशततोऽध्यायः॥ ३०८॥

॥ वैशम्पायन उवाच॥ देवराजमनुप्राप्तं ब्राह्मणच्छद्मना वृतं। दृष्ट्वा स्वागतमित्याह न बुबोधास्य मानसं।

हिरण्यकण्ठीः प्रमदा ग्रामान् वा बहुगोकुलान्। किं ददानीति तं विप्रमुवाचाधिरथिस्ततः।

॥ ब्राह्मण उवाच॥ हिरण्यकण्ठ्यः प्रमदा यच्चान्यत् प्रीतिवर्द्धनं। नाहं दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयतां। १७१८०

यदेतत् सहजं वर्म्म कुण्डले च तवानघ। एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान्।

एतदिच्छाम्यहं क्षिप्रं त्वया दत्तं परन्तप। एष मे सर्व्वलाभानां लाभः परमको मतः।

॥ कर्ण उवाच॥ अवनिं प्रमदा गाश्च निवापं बहुवार्षिकं। तत्ते विप्र प्रदास्यामि न तु वर्म्म सकुण्डलं।

॥ वैशम्पायन उवाच॥ एवं बहुविधैर्व्वाक्यैर्याच्यमानः स तु द्विजः। कर्णेन भरतश्रेष्ठ नान्यं वरमयाचत।

सान्त्वितश्च यथाशक्ति पूजितश्च यथाविधि। न चान्यं स द्विजश्रेष्ठः कामयामास वै वरं। १७१८५

यदा नान्यं प्रवृणुते वरं वै द्विजसत्तमः। तदैनमब्रवीद्भूयो राधेयः प्रहसन्निव।

सहजं वर्म्म मे विप्र कुण्डले चामृतोद्भवे। तेनावध्योऽस्मि लोकेषु ततो नैतज्जहाम्यहं।

विशालं पृथिवीराज्यं क्षेमं निहतकण्टकं। प्रतिगृह्णीष्व मत्तस्त्वं साधु ब्राह्मणपुङ्गव।

कुण्डलाभ्यां विमुक्तोऽहं वर्म्मणा सहजेन च। गमनीयो भविष्यामि शत्रूणां द्विजसत्तम।

॥ वैशम्पायन उवाच॥ यदाऽन्यं न वरं वव्रे भगवान् पाकशासनः। ततः प्रहस्य कर्णस्तं पुनरित्यब्रवीद्वचः। १७१९०

विदितो देवदेवेश प्रागेवासि मम प्रभो। न तु न्याय्यं मया दातुं तव शक्र वृथा वरं।

त्वं हि देवेश्वरः साक्षात् त्वया देयो वरो मम। अन्येषाञ्चैव भूतानामीश्वरो ह्यसि भूतकृत्।

यदि दास्यामि ते देव कुण्डले कवचन्तथा। वध्यतामुपयास्यामि त्वञ्च शक्रावहास्यतां।

तस्मादिनिमयं कृत्वा कुण्डले वर्म्म चोत्तमं । हरस्व शक्र कामं मे न दद्यामहमन्यथा ।

॥ शक्र उवाच ॥ विदितोऽहं रवेः पूर्व्वमायानेव तवान्तिकं । तेन ते सर्व्वमाख्यातमेवमेतन्न संशयः । १०१९५

काममस्तु तथा तात तव कर्ण यथेच्छसि । वर्ज्जयित्वा तु मे वज्रं प्रवृणीष्व यदिच्छसि ।

॥ वैशम्पायन उवाच ॥ ततः कर्णः प्रहृष्टस्तु उपसङ्गम्य वासवं । अमोघां शक्तिमभ्येत्य वव्रे सम्पूर्णमानसः ।

॥ कर्ण उवाच ॥ वर्म्मणा कुण्डलाभ्याञ्च शक्तिं मे देहि वासव । अमोघां शत्रुसङ्घानां घातिनीं पृतनामुखे ।

ततः सञ्चिन्त्य मनसा मुहूर्त्तमिव वासवः । शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् ।

कुण्डले मे प्रयच्छस्व वर्म्म चैव शरीरजं । गृहाण कर्ण शक्तिन्त्वमनेन समयेन च । १०२००

अमोघा हन्ति शतशः शत्रून् मम करच्युता । पुनश्च पाणिमभ्येति मम दैत्यान् विनिघ्नतः ।

सेयं तव करप्राप्ता हत्वैकं रिपुमूर्ज्जितं । गर्ज्जन्तं प्रतपन्तञ्च मामेवैष्यति सूतज ।

॥ कर्ण उवाच ॥ एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे । गर्ज्जन्तं प्रतपन्तञ्च यतो मम भयं भवेत् ।

॥ इन्द्र उवाच ॥ एवं हनिष्यसि रिपुं गर्ज्जन्तं बलिनं रणे । त्वन्तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ।

यमाहुर्व्वेदविद्वांसो वराहमपराजितं । नारायणमचिन्त्यञ्च तेन कृष्णेन रक्ष्यते । १०२०५

॥ कर्ण उवाच ॥ एवमप्यस्तु भगवन्नेकवीरवधे मम । अमोघां देहि मे शक्तिं यथा हन्यां प्रतापिनं ।

उत्कृत्य तु प्रदास्यामि कुण्डले कवचञ्च ते । निकृत्तेषु तु गात्रेषु न मे बीभत्सता भवेत् ।

॥ इन्द्र उवाच ॥ न ते बीभत्सता कर्ण भविष्यति कथञ्चन । व्रणश्चैव न गात्रेषु यस्त्वं नानृतमिच्छसि ।

यादृशस्ते पितुर्व्वर्णस्तेजश्च वदताम्बर । तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः ।

विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये । प्रमत्तो मोक्ष्यसे चापि त्वय्येवैषा पतिष्यति । १०२१०

॥ कर्ण उवाच ॥ संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमां । यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ।

॥ वैशम्पायन उवाच ॥ ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशाम्पते । शस्त्रं गृहीत्वा निशितं सर्व्वगात्राण्यकृन्तत ।

ततो देवा मानवा दानवाश्च निकृन्तन्तं कर्णमात्मानमेवं । दृष्ट्वा सर्व्वे सिंहनादान् प्रणेदुर्न ह्यस्यासीन्मुखजो वै विकारः ।

ततो दिव्या दुन्दुभयः प्रणेदुः पपातोच्चैः पुष्पवर्षञ्च दिव्यं । दृष्ट्वा कर्णं शस्त्रसङ्कृत्तगात्रं मुहुश्चापि स्मयमानं नृवीरं ।

ततश्छित्त्वा कवचं दिव्यमङ्गात्तथैवार्द्रं प्रददौ वासवाय । तथोत्कृत्य प्रददौ कुण्डले ते कर्णात्तस्मात् कर्म्मणा तेन कर्णः । १०२१५

ततः शक्रः प्रहसन् वञ्चयित्वा कर्णं लोके यशसा योजयित्वा । कृतं कार्य्यं पाण्डवानां हि मेने ततः पश्चाद्दिवमेवोत्पपात ।

श्रुत्वा कर्णं मुषितं धार्त्तराष्ट्रा दीनाः सर्व्वे भग्नदर्पा इवासन् । ताञ्चावस्थां गमितं सूतपुत्रं श्रुत्वा पार्था जहृषुः काननेषु ।

॥ जनमेजय उवाच ॥ क्वस्था वीराः पाण्डवास्ते बभूवुः कुतश्चैते श्रुतवन्तः प्रियं तत् । किं वाऽकार्षुर्द्वादशेऽब्दे व्यतीते तन्मे सर्व्वं भगवान् व्याकरोतु ।

॥ वैशम्पायन उवाच ॥ लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा विप्रैः सार्द्धं काम्यकादाश्रमात्ते । मार्कण्डेयात् श्रुतवन्तः पुराणं देवर्षीणाञ्चरितं विस्तरेण ।

प्रत्याजग्मुः सरथाः सानुयात्राः सर्व्वैः सार्द्धं सूतपौरोगवैश्च । ततः पुण्यं द्वैतवनं नृवीरा निस्तीर्य्यैवं वनवासं समग्रं । १०२२०

इति श्रीमहाभारते आरण्यपर्व्वणि कर्णस्य वर्मकुण्डलदाने नवाधिकत्रिशततमोऽध्यायः समाप्तञ्च कुण्डलाहरणपर्व्व ॥ ३०९ ॥

---

## अथ आरणेयपर्व्व॥ १६ ॥

॥ जनमेजय उवाच ॥ एवं हृतायां भार्य्यायां प्राप्य क्लेशमनुत्तमं। प्रतिपद्य ततः कृष्णां किमकुर्व्वत पाण्डवाः।

॥ वैशम्पायन उवाच ॥ एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमं। विहाय काम्यकं राजा सह भ्रातृभिरच्युत।

पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः। स्वादुमूलफलं रम्यं विचित्रबहुपादपं।

अनुभुक्तफलाहाराः सर्व्व एव मिताशनाः। न्यवसन् पाण्डवास्तत्र कृष्णया सह भार्य्यया।

वसन् द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः। भीमसेनोऽर्ज्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ। १०२२५

ब्राह्मणार्थे पराक्रान्ता धर्म्मात्मानो यतव्रताः। क्लेशमार्च्छन्त विपुलं सुखोदर्कं परन्तपाः।

तस्मिन् प्रतिवसन्तस्ते यत् प्रापुः कुरुसत्तमाः। वने क्लेशं सुखोदर्कं तत् प्रवक्ष्यामि ते शृणु।

अरणीसहितं मन्थं ब्राह्मणस्य तपस्विनः। मृगस्य घर्षमाणस्य विषाणे समसज्जत।

तदादाय गतो राजंस्त्वरमाणो महामृगः। आश्रमान्तरितः शीघ्रं प्लवमानो महाजवः।

ह्रियमाणन्तु तं दृष्ट्वा स विप्रः कुरुसत्तम। त्वरितोऽभ्यागमत्तत्र अग्निहोत्रपरीप्सया। १०२३०

अजातशत्रुमासीनं भ्रातृभिः सहितं वने। आगम्य ब्राह्मणस्तूर्णं सन्तप्तश्चेदमब्रवीत्।

अरणीसहितं मन्थं समासक्तं वनस्पतौ। मृगस्य घर्षमाणस्य विषाणे समसज्जत।

तमादाय गतो राजंस्त्वरमाणो महामृगः। आश्रमान्तरितः शीघ्रं प्लवमानो महाजवः।

तस्य गत्वा पदं राजन्नासाद्य च महामृगं। अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः।

ब्राह्मणस्य वचः श्रुत्वा सन्तप्तोऽथ युधिष्ठिरः। धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह। १०२३५

सन्नद्धा धन्विनः सर्व्वे प्राद्रवन्नरपुङ्गवाः। ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन्मृगं।

कर्णिनालीकनाराचानुत्सृजन्तो महारथाः। नाविध्यन् पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात्।

तेषां प्रयतमानानां नादृश्यत महामृगः। अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः।

शीतलच्छायमागम्य न्यग्रोधं गहने वने। क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन्।

तेषां समुपविष्टानां नकुलो दुःखितस्तदा। अब्रवीत् भ्रातरं श्रेष्ठममर्षात् कुरुनन्दनं। १०२४०

नास्मिन् कुले जातु ममज्ज धर्म्मो न चालस्यादर्थलोपो बभूव। अनुत्तराः सर्व्वभूतेषु भूयः सम्प्राप्ताः स्मः संशयं किन्नु राजन्।

इति श्रीमहाभारते आरण्यपर्व्वणि आरणेयपर्व्वणि पाण्डवमृगान्वेषणे दशाधिकत्रिशतोऽध्यायः॥ ३१०॥

॥ युधिष्ठिर उवाच ॥ नापदामस्ति मर्य्यादा न निमित्तं न कारणं। धर्म्मस्तु विभजत्यर्थमुभयोः पुण्यपापयोः।

॥ भीम उवाच ॥ प्रातिकाम्यनयत् कृष्णां सभायां प्रेष्यवत्तदा। न मया निहतस्तत्र तेन प्राप्ताः स्म संशयं।

॥ अर्ज्जुन उवाच ॥ वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्त्रेण भाषिताः। अतितीव्रा मया क्षान्तास्तेन प्राप्ताः स्म संशयं।

॥ सहदेव उवाच ॥ शकुनिस्त्वां यदाऽजैषीदक्षद्यूतेन भारत। स मया न हतस्तत्र तेन प्राप्ताः स्म संशयं। १०२४५

॥ वैशम्पायन उवाच ॥ ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत्। आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश।

पानीयमन्तिके पश्य वृक्षांश्चाप्युदकाश्रितान्। एते हि भ्रातरः श्रान्तास्तव तात पिपासिताः।

नकुलस्तं तथेत्युक्त्वा शीघ्रमारुह्य पादपं । अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ।
पश्यामि बहुलान् राजन् वृक्षानुदकसंश्रयान् । सारसानाञ्च निर्ह्रादमत्रोदकमसंशयं ।
ततोऽब्रवीत् सत्यधृतिः कुन्तीपुत्त्रो युधिष्ठिरः । गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय । १७२१०
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् । प्राद्रवद्यत्र पानीयं शीघ्रञ्चैवान्वपद्यत ।
स दृष्ट्वा विमलं तोयं सारसैः परिवारितं । पातुकामस्ततो वाचमन्तरीक्षात् स शुश्रुवे ।
॥ यक्ष उवाच ॥ मा तात साहसं कार्षीर्मम पूर्ब्बपरिग्रहः । प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ।
अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः । अपिबत् शीतलं तोयं पीत्वा च निपपात ह ।
चिरायमाणे नकुले कुन्तीपुत्त्रो युधिष्ठिरः । अब्रवीत् भ्रातरं वीरं सहदेवमरिन्दम । १७२१५
भ्राता हि चिरयातो नः सहदेव तवाग्रजः । तथैवानय सोदर्य्यं पानीयञ्च त्वमानय ।
सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत । ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ।
भ्रातृशोकाभिसन्तप्तस्तृषया च प्रपीडितः । अभिदुद्राव पानीयं तदा वागभ्यभाषत ।
मा तात साहसं कार्षीर्मम पूर्ब्बपरिग्रहः । प्रश्नानुक्त्वा यथाकामं पिबस्व च हरस्व च ।
अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः । अपिबत् शीतलं तोयं पीत्वा च निपपात ह । १७२२०
अथाब्रवीत् स विजयं कुन्तीपुत्त्रो युधिष्ठिरः । भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्षण ।
तौ चैवानय भद्रन्ते पानीयञ्च त्वमानय । त्वं हि नस्तात सर्व्वेषां दुःखितानामुपाश्रयः ।
एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः । आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ।
ततः पुरुषशार्दूलौ पानीयहरणे गतौ । तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः ।
प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः । धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनं । १७२२५
नापश्यत्तत्र किञ्चित् स भूतमस्मिन्महावने । सव्यसाची ततः श्रान्तः पानीयं सोऽभ्यधावत ।
अभिधावंस्ततो वाक्यमन्तरीक्षात् स शुश्रुवे । किमासीदसि पानीयं नैतच्छक्यं बलात्त्वया ।
कौन्तेय यदि प्रश्नांस्तान्मयोक्तान् प्रतिपत्स्यसे । ततः पास्यसि पानीयं हरिष्यसि च भारत ।
वारितस्त्वब्रवीत् पार्थो दृश्यमानो निवारय । यावद्बाणैर्व्विनिर्भिन्नः पुनर्नैवं वदिष्यसि ।
एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः । प्रववर्ष दिशः कृत्स्नाः शब्दविद्धञ्च दर्शयन् । १७२३०
कर्णिनालीकनाराचानुत्सृजन् भरतर्षभ । स त्वमोघानिषून्मुक्त्वा तृष्णयाऽभिप्रपीडितः । अनेकैरिषुसङ्घातैरन्तरीक्षे ववर्ष ह ।
॥ यक्ष उवाच ॥ किं विधानेन ते पार्थ प्रश्नानुक्त्वा ततः पिब । अनुक्त्वा च पिबन् प्रश्नान् पीत्वैव न भविष्यसि ।
एवमुक्तस्ततः पार्थः सव्यसाची धनञ्जयः । अवज्ञायैव तां वाचं पीत्वैव निपपात ह ।
अथाब्रवीद्भीमसेनं कुन्तीपुत्त्रो युधिष्ठिरः । नकुलः सहदेवश्च बीभत्सुश्च परन्तप ।
चिरङ्गतास्तोयहेतोर्न चागच्छन्ति भारत । तांश्चैवानय भद्रन्ते पानीयञ्च त्वमानय । १७२३५
भीमसेनस्तथेत्युक्त्वा तं देशं प्रत्यपद्यत । यत्र ते पुरुषव्याघ्रा भ्रातरोऽस्य निपातिताः ।
तान् दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः । अमन्यत महाबाहुः कर्म्म तद्यक्षरक्षसां ।

स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य वै । पास्यामि तावत् पानीयमिति पार्थो वृकोदरः ।
ततोऽभ्यधावत् पानीयं पिपासुर्भरतर्षभः ।
॥ यक्ष उवाच ॥ मा तात साहसं कार्षीर्म्मम पूर्व्वपरिग्रहः । प्रश्नानुक्त्वा तु कौन्तेय ततः पिव हरस्व च । १०२८०
एवमुक्तस्तदा भीमो यक्षेणामिततेजसा । अनुक्त्वैव तु तान् प्रश्नान् पीत्वैव निपपात ह ।
ततः कुन्तीसुतो राजा प्रचिन्त्य पुरुषर्षभः । समुत्थाय महाबाहुर्दह्यमानेन चेतसा ।
व्यपेतजननिर्घोषं प्रविवेश महावनं । रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितं ।
नीलभास्वरवर्णैश्च पादपैरुपशोभितं । भ्रमरैरुपगीतञ्च पक्षिभिश्च महायशाः ।
स गच्छन् कानने तस्मिन् हेमजालपरिष्कृतं । ददर्श तत्सरः श्रीमान् विश्वकर्म्मकृतं यथा । १०२८५
उपेतं नलिनीजालैः सिन्धुवारैः सुवेतसैः । केतकैः करवीरैश्च पिप्पलैश्चैव संवृतं ।
श्रमार्त्तस्तदुपागम्य सरो दृष्ट्वाऽथ विस्मितः ।
इति श्रीमहाभारते आरण्यपर्व्वणि आरणेयपर्व्वणि युधिष्ठिरसरोदर्शने एकादशाधिकत्रिशततोऽध्यायः ॥ ३११ ॥
॥ वैशम्पायन उवाच ॥ स ददर्श हतान् भ्रातॄन् लोकपालानिव च्युतान् । युगान्ते समनुप्राप्ते शक्रप्रतिमगौरवान् ।
विनिकीर्णधनुर्व्वाणं दृष्ट्वा निहतमर्ज्जुनं । भीमसेनं यमौ चैव निर्व्विचेष्टान् गतायुषः ।
स दीर्घमुष्णं निश्वस्य शोकवाष्पपरिप्लुतः । तान् दृष्ट्वा पतितान् भ्रातॄन् सर्व्वांश्चिन्तासमन्वितः । १०२९०
धर्म्मपुत्त्रो महाबाहुर्व्विललाप सुविस्तरं । ननु त्वया महाबाहो प्रतिज्ञातं वृकोदर ।
सुयोधनस्य भेत्स्यामि गदया सक्थिनी रणे । व्यर्थं तदद्य मे सर्व्वं त्वयि वीरे निपातिते ।
महात्मनि महाबाहौ कुरूणां कीर्त्तिवर्द्धन । मनुष्यसम्भवा वाचो विधर्म्मिण्यः प्रतिश्रुताः ।
भवतां दिव्यवाचस्तु ता भवन्ति कथं मृषा । देवाश्चापि यदाऽवोचन् सूतके त्वां धनञ्जय ।
सहस्राक्षादनवरः कुन्ति पुत्त्रस्तवेति वै । उत्तरे पारिपात्रे च जगुर्भूतानि सर्व्वशः । १०२९५
विप्रनष्टां श्रियञ्चैषामाहर्त्ता पुनरञ्जसा । नास्य जेता रणे कश्चिदजेता नैष कस्यचित् ।
सोऽयं मृत्युवशं यातः कथं जिष्णुर्म्महाबलः । अयं ममाशां संहत्य शेते भूमौ धनञ्जयः ।
आश्रित्य यं वयं नाथं दुःखान्येतानि सेहिम । रणे प्रमत्तौ वीरौ च सदा शत्रुनिवर्हणौ ।
कथं रिपुवशं यातौ कुन्तीपुत्त्रौ महाबलौ । यौ सर्व्वास्त्राप्रतिहतौ भीमसेनधनञ्जयौ ।
अश्मसारमयं नूनं हृदयं मम दुर्हृदः । यमौ यदेतौ दृष्ट्वाऽद्य पतितौ नावदीर्य्यते । १०३००
शास्त्रज्ञा देशकालज्ञास्तपोयुक्ताः क्रियाऽन्विताः । अकृत्वा सदृशं कर्म्म किं शेध्वं पुरुषर्षभाः ।
अविक्षतशरीराश्चाप्यप्रमृष्टशरासनाः । असंज्ञा भुवि सङ्गम्य किं शेध्वमपराजिताः ।
सानूनिवाद्रेः संसुप्तान् दृष्ट्वा भ्रातॄन्महामतिः । सुखं प्रसुप्तान् प्रस्विन्नः खिन्नः कष्टां दशाङ्गतः ।
एवमेवेदमित्युक्त्वा धर्म्मात्मा स नरेश्वरः । शोकसागरमध्यस्थो दध्यौ कारणमाकुलः ।
इतिकर्त्तव्यताञ्चेति देशकालविभागवित् । नाभिपेदे महाबाहुश्चिन्तयानो महामतिः । १०३०५
अथ संस्तभ्य धर्म्मात्मा तदात्मानं तपःसुतः । एवं विलप्य बहुधा धर्म्मपुत्त्रो युधिष्ठिरः ।

युद्धा विविधशस्त्राश्च वीराः केन निपातिताः । तेषां प्रहरणाकारो ऽस्ति पदं नेहास्ति कस्यचित् ।

भूतं महदिदं मन्ये भ्रातरो येन मे हताः । एकाग्रं चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलं ।

स्यात्तु दुर्य्योधनेनेदमुपांशुविहितं कृतं । गान्धारराजरचितं सततं जिह्मबुद्धिना ।

यस्य कार्य्यमकार्य्यं वा सममेव भवत्युत । कस्तस्य विश्वसेद्वीरो दुष्कृतेरकृतात्मनः । १७३१०

अथ वा पुरुषैर्गूढैः प्रयोगो ऽयं दुरात्मनः । भवेदिति महाबुद्धिर्बहुधा तदचिन्तयत् ।

तस्यासीन्न विषेणेदमुदकं दूषितं यथा । मृतानामपि चैतेषां विकृतं नैव जायते ।

मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् । एकैकशश्चौघबलानिमान् पुरुषसत्तमान् ।

को ऽन्यः प्रतिसमासेत कालान्तकयमादृते । एतेन व्यवसायेन तत्तोयं व्यवगाढवान् । गाहमानश्च तत्तोयमन्तरीक्षात् स शुश्रुवे ।

॥ यक्ष उवाच ॥ अहं बकः शैवलमत्स्यभक्षो नीता मया प्रेतवशं तवानुजाः । त्वं पञ्चमो भविता राजपुत्र न चेत् प्रश्नान् पृच्छतो व्याकरोषि । १७३१५

मा तात साहसं कार्षीर्मम पूर्व्वपरिग्रहः । प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ।

॥ युधिष्ठिर उवाच ॥ रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक् । पृच्छामि को भवान् देवो नैतच्छकुनिना कृतं ।

हिमवान् पारियात्रश्च विन्ध्यो मलय एव च । चत्वारः पर्व्वताः केन पातिता भूरितेजसः । अतीव ते महत् कर्म्म कृतञ्च बलिनां वर ।

यान्न देवा न गन्धर्व्वा नासुराश्च न राक्षसाः । विषहेरन् महायुद्धे कृतं ते तन्महाद्भुतं ।

न ते जानामि यत् कार्य्यं नाभिजानामि काङ्क्षितं । कौतूहलं महज्जातं साध्वसञ्चागतं मम । १७३२०

येनास्म्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः । पृच्छामि भगवंस्तस्मात् को भवानिह तिष्ठति ।

॥ यक्ष उवाच ॥ यक्षो ऽहमस्मि भद्रन्ते नास्मि पक्षी जलेचरः । मयैते निहताः सर्व्वे भ्रातरस्ते महौजसः ।

॥ वैशम्पायन उवाच ॥ ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षरां । यक्षस्य ब्रुवतो राजन्नुपक्रम्य तदा स्थितः ।

विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयं । ज्वलनार्कप्रतीकाशमधृष्यं पर्व्वतोपमं ।

वृक्षमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः । मेघगम्भीरनादेन तर्ज्जयन्तं महास्वनं । १७३२५

॥ यक्ष उवाच ॥ इमे ते भ्रातरो राजन् वार्य्यमाणा मया ऽसकृत् । बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया ।

न पेयमुदकं राजन् प्राणानिह परीप्सता । पार्थ मा साहसं कार्षीर्मम पूर्व्वपरिग्रहः । प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ।

॥ युधिष्ठिर उवाच ॥ न चाहं कामये यक्ष तव पूर्व्वपरिग्रहं । कामं नैतत् प्रशंसन्ति सन्तो हि पुरुषाः सदा ।

यदात्मना स्वमात्मानं प्रशंसेत् पुरुषर्षभ । यथाप्रज्ञन्तु ते प्रश्नान् प्रतिवक्ष्यामि पृच्छ मां ।

॥ यक्ष उवाच ॥ किं स्विदादित्यमुन्नयति के च तस्याभितश्चराः । कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति । १७३३०

॥ युधिष्ठिर उवाच ॥ ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः । धर्म्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति ।

॥ यक्ष उवाच ॥ केन स्वित् श्रोत्रियो भवति केन स्विद्विन्दते महत् । केन स्विद्द्वितीयवान् भवति राजन् केन च बुद्धिमान् ।

॥ युधिष्ठिर उवाच ॥ श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् । धृत्या द्वितीयवान् भवति बुद्धिमान् वृद्धसेवया ।

॥ यक्ष उवाच ॥ किं ब्राह्मणानां देवत्वं कश्च धर्म्मः सतामिव । कश्चैषां मानुषो भावः किमेषामसतामिव ।

॥ युधिष्ठिर उवाच ॥ स्वाध्याय एषां देवत्वं तप एषां सतामिव । मरणं मानुषो भावः परीवादोऽसतामिव । १७३३५

॥ यक्ष उवाच ॥ किं क्षत्रियाणां देवत्वं कश्च धर्म्मः सतामिव । कश्चैषां मानुषो भावः किमेषामसतामिव ।

॥ युधिष्ठिर उवाच ॥ इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव । भयं वै मानुषो भावः परित्यागोऽसतामिव ।

॥ यक्ष उवाच ॥ किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः । का चैका वृणुते यज्ञं कां यज्ञो नातिवर्त्तते ।

॥ युधिष्ठिर उवाच ॥ प्राणो वै यज्ञियं साम मनो वै यज्ञियं यजुः । वागेका वृणुते यज्ञं तां यज्ञो नातिवर्त्तते ।

॥ यक्ष उवाच ॥ किं स्विदावपतां श्रेष्ठं किं स्विन्निवपतां वरं । किं स्वित् प्रतिष्ठमानानां किं स्वित् प्रसवतां वरं । १७३४०

॥ युधिष्ठिर उवाच ॥ वर्षमावपतां श्रेष्ठं बीजं निवपतां वरं । गावः प्रतिष्ठमानानां पुत्रः प्रसवतां वरः ।

॥ यक्ष उवाच ॥ इन्द्रियार्थाननुभवन् बुद्धिमान् लोकपूजितः । सम्मतः सर्व्वभूतानामुच्छ्वसन् को न जीवति ।

॥ युधिष्ठिर उवाच ॥ देवतातिथिभृत्यानां पितॄणामात्मनश्च यः । न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ।

॥ यक्ष उवाच ॥ किं स्विद्गुरुतरं भूमेः किं स्विदुच्चतरञ्च खात् । किं स्विच्छीघ्रतरं वायोः किं स्विद्बहुतरं तृणात् ।

॥ युधिष्ठिर उवाच ॥ माता गुरुतरा भूमेः खात् पितोच्चतरस्तथा । मनः शीघ्रतरं वाताच्चिन्ता बहुतरी तृणात् । १७३४५

॥ यक्ष उवाच ॥ किं स्वित् सुप्तं न निमिषति किं स्विज्जातं न चोपति । कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्द्धते ।

॥ युधिष्ठिर उवाच ॥ मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति । अश्मनो हृदयं नास्ति नदी वेगेन वर्द्धते ।

॥ यक्ष उवाच ॥ किं स्वित् प्रवसतो मित्रं किं स्विन्मित्रं गृहे सतः । आतुरस्य च किं मित्रं किं स्विन्मित्रं मरिष्यतः ।

॥ युधिष्ठिर उवाच ॥ सार्थः प्रवसतो मित्रं भार्य्या मित्रं गृहे सतः । आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ।

॥ यक्ष उवाच ॥ कोऽतिथिः सर्व्वभूतानां किं स्विद्धर्म्मः सनातनः । अमृतं किं स्विद्राजेन्द्र किं स्वित् सर्व्वमिदं जगत् । १७३५०

॥ युधिष्ठिर उवाच ॥ अतिथिः सर्व्वभूतानामग्निः सोमो गवामृतं । सनातनोऽमृतो धर्म्मो वायुः सर्व्वमिदं जगत् ।

॥ यक्ष उवाच ॥ किं स्विदेको विचरते जातः को जायते पुनः । किं स्विद्धिमस्य भैषज्यं किं स्विदावपनं महत् ।

॥ युधिष्ठिर उवाच ॥ सूर्य्य एको विचरते चन्द्रमा जायते पुनः । अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ।

॥ यक्ष उवाच ॥ किं स्विदेकपदं धर्म्यं किं स्विदेकपदं यशः । किं स्विदेकपदं स्वर्ग्यं किं स्विदेकपदं सुखं ।

॥ युधिष्ठिर उवाच ॥ दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः । सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखं । १७३५५

॥ यक्ष उवाच ॥ किं स्विदात्मा मनुष्यस्य किं स्विद्दैवकृतः सखा । उपजीवनं किं स्विदस्य किं स्विदस्य परायणं ।

॥ युधिष्ठिर उवाच ॥ पुत्र आत्मा मनुष्यस्य भार्य्या दैवकृतः सखा । उपजीवनञ्च पर्ज्जन्यो दानमस्य परायणं ।

॥ यक्ष उवाच ॥ धन्यानामुत्तमं किं स्विद्धनानां स्यात् किमुत्तमं । लाभानामुत्तमं किं स्यात् सुखानां स्यात् किमुत्तमं ।

॥ युधिष्ठिर उवाच ॥ धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतं । लाभानां श्रेष्ठमारोग्यं सुखानां तुष्टिरुत्तमा ।

॥ यक्ष उवाच ॥ कश्च धर्म्मः परो लोके कश्च धर्म्मः सदाफलः । किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्य्यते । १७३६०

॥ युधिष्ठिर उवाच ॥ आनृशंस्यं परो धर्म्मस्त्रयीधर्म्मः सदाफलः । मनो यम्य न शोचन्ति सद्भिः सन्धिर्न जीर्य्यते ।

॥ यक्ष उवाच ॥ किन्नु हित्वा प्रियो भवति किन्नु हित्वा न शोचति । किन्नु हित्वाऽर्थवान् भवति किन्नु हित्वा सुखी भवेत् ।

॥ युधिष्ठिर उवाच ॥ मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति । कामं हित्वाऽर्थवान् भवति लोभं हित्वा सुखी भवेत् ।

॥ यक्ष उवाच ॥ किमर्थं ब्राह्मणे दानं किमर्थं नटनर्त्तके । किमर्थं चैव भृत्येषु किमर्थं चैव राजसु ।

॥ युधिष्ठिर उवाच ॥ धर्म्मार्थं ब्राह्मणे दानं यशोऽर्थं नटनर्त्तके । भृत्येषु भरणार्थं वै भयार्थं चैव राजसु । १७३६५

॥ यक्ष उवाच ॥ केन स्विदावृतो लोकः केन स्विन्न प्रकाशते । केन त्यजति मित्राणि केन स्वर्गं न गच्छति ।

॥ युधिष्ठिर उवाच ॥ अज्ञानेनावृतो लोकस्तमसा न प्रकाशते । लोभात्त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति ।

॥ यक्ष उवाच ॥ मृतः कथं स्यात् पुरुषः कथं राष्ट्रं मृतं भवेत् । श्राद्धं मृतं कथं वा स्यात् कथं यज्ञो मृतो भवेत् ।

॥ युधिष्ठिर उवाच ॥ मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकं । मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ।

॥ यक्ष उवाच ॥ का दिक् किमुदकं प्रोक्तं किमन्नं किञ्च वै विषं । श्राद्धस्य कालमाख्याहि ततः पिव हरस्व च । १७३७०

॥ युधिष्ठिर उवाच ॥ सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषं । श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ।

॥ यक्ष उवाच ॥ तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्त्तितः । क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्त्तिता ।

॥ युधिष्ठिर उवाच ॥ तपः स्वधर्म्मवर्त्तित्वं मनसो दमनं दमः । क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्य्यनिवर्त्तनं ।

॥ यक्ष उवाच ॥ किं ज्ञानं प्रोच्यते राजन् कः शमश्च प्रकीर्त्तितः । दया च का परा प्रोक्ता किञ्चार्ज्जवमुदाहृतं ।

॥ युधिष्ठिर उवाच ॥ ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता । दया सर्व्वसुखैषित्वमार्ज्जवं समचित्तता । १७३७५

॥ यक्ष उवाच ॥ कः शत्रुर्द्दुर्ज्जयः पुंसां कश्च व्याधिरनन्तकः । कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ।

॥ युधिष्ठिर उवाच ॥ क्रोधः सुदुर्ज्जयः शत्रुर्लोभो व्याधिरनन्तकः । सर्व्वभूतहितः साधुरसाधुर्निर्द्दयः स्मृतः ।

॥ यक्ष उवाच ॥ को मोहः प्रोच्यते राजन् कश्च मानः प्रकीर्त्तितः । किमालस्यञ्च विज्ञेयं कश्च शोकः प्रकीर्त्तितः ।

॥ युधिष्ठिर उवाच ॥ मोहो हि धर्म्ममूढत्वं मानस्त्वात्माभिमानिता । धर्म्मनिष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते ।

॥ यक्ष उवाच ॥ किं स्थैर्य्यमृषिभिः प्रोक्तं किं च धैर्य्यमुदाहृतं । स्नानञ्च किं परं प्रोक्तं दानञ्च किमिहोच्यते । १७३८०

॥ युधिष्ठिर उवाच ॥ स्वधर्म्मे स्थिरता स्थैर्य्यं धैर्य्यमिन्द्रियनिग्रहः । स्नानं मनोमलत्यागो दानं वै भूतरक्षणं ।

॥ यक्ष उवाच ॥ कः पण्डितः पुमान् ज्ञेयो नास्तिकः कश्च उच्यते । को मूर्खः कश्च कामः स्यात् को मत्सर इति स्मृतः ।

॥ युधिष्ठिर उवाच ॥ धर्म्मज्ञः पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते । कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः ।

॥ यक्ष उवाच ॥ कोऽहङ्कार इति प्रोक्तः कश्च दम्भः प्रकीर्त्तितः । किन्तद्दैवं परं प्रोक्तं किन्तत् पैशुन्यमुच्यते ।

॥ युधिष्ठिर उवाच ॥ महाज्ञानमहङ्कारो दम्भो धर्म्मध्वजोच्छ्रयः । दैवं दानफलं प्रोक्तं पैशुन्यं परदूषणं । १७३८५

॥ यक्ष उवाच ॥ धर्म्मश्चार्थश्च कामश्च परस्परविरोधिनः । एषां नित्यविरुद्धानां कथमेकत्र सङ्गमः ।

॥ युधिष्ठिर उवाच ॥ यदा धर्म्मश्च भार्य्या च परस्परवशानुगौ । तदा धर्म्मार्थकामानां त्रयाणामपि सङ्गमः ।

॥ यक्ष उवाच ॥ अक्षयो नरकः केन प्राप्यते भरतर्षभ । एतन्मे पृच्छतः प्रश्नं तत् शीघ्रं वक्तुमर्हसि ।

॥ युधिष्ठिर उवाच ॥ ब्राह्मणं स्वयमाहूय याचमानमकिञ्चनं । पश्चान्नास्तीति यो ब्रूयात् सोऽक्षयं नरकं व्रजेत् ।

वेदेषु धर्म्मशास्त्रेषु मिथ्या यो वै द्विजातिषु । देवेषु पितृधर्म्मेषु सोऽक्षयं नरकं व्रजेत् । १७३९०

विद्यमाने धने लोभाद्दानभोगविवर्ज्जितः । पश्चान्नास्तीति यो ब्रूयात् सोऽक्षयं नरकं व्रजेत् ।

॥ यक्ष उवाच ॥ राजन् कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा । ब्राह्मण्यं केन भवति प्रब्रूह्येतत् सुनिश्चितं ।

॥ युधिष्ठिर उवाच ॥ शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतं । कारणं हि द्विजत्वे च वृत्तमेव न संशयः ।

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः । अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ।

पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्व्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः । १०३९९

चतुर्व्वेदोऽपि दुर्व्वृत्तः स शूद्रादतिरिच्यते । योऽग्निहोत्रपरो दान्तः स ब्राह्मण इतिस्मृतः ।

॥ यक्ष उवाच॥ प्रियवचनवादी किं लभते विमृशितकार्य्यकरः किं लभते । बहुमित्रकरः किं लभते धर्म्मे रतः किं लभते कथय।

॥ युधिष्ठिर उवाच ॥ प्रियवचनवादी प्रियो भवति विमृशितकार्य्यकरोऽधिकं जयति । बहुमित्रकरः सुखं वसते यश्च धर्म्म रतः स गतिं लभते ।

॥ यक्ष उवाच ॥ को मोदते किमाश्चर्य्यं कः पन्थाः का च वार्त्तिका । वद मे चतुरः प्रश्नान् मृता जीवन्तु बान्धवाः ।

॥ युधिष्ठिर उवाच ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे । अनृणी चाप्रवासी च स वारिचर मोदते । १०४००

अहन्यहनि भूतानि गच्छन्तीह यमालये । शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्य्यमतः परं ।

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य मतं प्रमाणं । धर्म्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ।

अस्मिन्महामोहमये कटाहे सूर्य्याग्निना रात्रिदिनेन्धनेन । मासर्त्तुदर्व्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता ।

॥ यक्ष उवाच॥ व्याख्याता मे त्वया प्रश्ना याथातथ्यं परन्तप । पुरुषन्त्विदानीं व्याख्याहि यश्च सर्व्वधनी नरः ।

॥ युधिष्ठिर उवाच ॥ दिवं स्पृशति भूमिञ्च शब्दः पुण्येन कर्म्मणा । यावत् स शब्दो भवति तावत् पुरुष उच्यते । १०४०५

तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च । अतीतानागते चोभे स वै सर्व्वधनी नरः ।

॥ यक्ष उवाच ॥ व्याख्यातः पुरुषो राजन् यश्च सर्व्वधनी नरः । तस्मात्त्वमेकं भ्रातॄणां यमिच्छसि स जीवतु ।

॥ युधिष्ठिर उवाच ॥ श्यामो य एष रक्ताक्षो बृहच्छाल इवोत्थितः । व्यूढोरस्को महाबाहुर्नकुलो यक्ष जीवतु ।

॥ यक्ष उवाच ॥ प्रियस्ते भीमसेनोऽयमर्ज्जुनो वः परायणं । स कस्मान्नकुलं राजन् सापत्नं जीवमिच्छसि ।

यस्य नागसहस्रेण दशसंख्येन वै बलं । तुल्यं तं भीममुत्सृज्य नकुलं जीवमिच्छसि । १०४१०

तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव । अथ केनानुभावेन सापत्नं जीवमिच्छसि ।

यस्य बाहुबलं सर्व्वे पाण्डवाः समुपासते । अर्ज्जुनं तमपाहाय नकुलं जीवमिच्छसि ।

॥ युधिष्ठिर उवाच ॥ धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः । तस्माद्धर्म्मं न त्यजामि मा नो धर्म्मो हतोऽवधीत् ।

आनृशंस्यं परो धर्म्मः परमार्थाच्च मे मतं । आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ।

धर्म्मशीलः सदा राजा इति मां मानवा विदुः । स्वधर्म्मान्न चलिष्यामि नकुलो यक्ष जीवतु । १०४१५

कुन्ती चैव तु माद्री च द्वे भार्य्ये तु पितुर्मम । उभे सपुत्रे स्यातां वै इति मे धीयते मतिः ।

यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः । मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ।

॥ यक्ष उवाच ॥ यस्य तेऽर्थाच्च कामाच्च आनृशंस्यं परं मतं । तस्मात्ते भ्रातरः सर्व्वे जीवन्तु भरतर्षभ ।

इति श्रीमहाभारते आरण्यपर्व्वणि आरणेयपर्व्वणि यक्षयुधिष्ठिरप्रश्नोत्तरे द्वादशाधिकत्रिशततोऽध्यायः ॥ ३१२ ॥

॥ वैशम्पायन उवाच ॥ ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवाः । क्षुत्पिपासे च सर्व्वेषां क्षणेन व्यपगच्छतां ।

॥ युधिष्ठिर उवाच ॥ सरस्येकेन पादेन तिष्ठन्तमपराजितं । पृच्छामि को भवान् देवो न मे यक्षो मतो भवान् । १०४२०

वसूनां वा भवानेको रुद्राणामथ वा भवान् । अथवा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ।

मम हि भ्रातर इमे सहस्रशतयोधिनः । तं योगं न प्रपश्यामि येन सर्व्वे निपातिताः ।

उषिताश्च वने कृच्छ्रं वयं द्वादशवत्सरान्। अज्ञातवाससमयं शेषं वर्षं त्रयोदशं।
तद्वसामो वयं छन्नास्तदनुज्ञातुमर्हथ। सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः।
जानन्तो विषमं कुर्य्युरस्मास्वत्यन्तवैरिणः। युक्ताचाराश्च युक्ताश्च पौरस्य स्वजनस्य च।
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह। समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेम हि। १७४५५
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा दुःखशोकार्त्तः शुचिर्धर्म्मसुतस्तदा। संमूर्च्छितोऽभवद्राजा साश्रुकण्ठो युधिष्ठिरः।
तमथाश्वासयन् सर्व्वे ब्राह्मणा भ्रातृभिः सह। अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा।
राजन् विद्वान् भवान् दान्तः सत्यसन्धो जितेन्द्रियः। नैवंविधाः प्रमुह्यन्ते नराः कस्याञ्चिदापदि।
देवैरप्यापदः प्राप्ताश्छन्नैश्च बहुशस्तथा। तत्र तत्र सपत्नानां निग्रहार्थं महात्मभिः।
इन्द्रेण निषधं प्राप्य गिरिप्रस्थाश्रमे तदा। छन्नेनोष्य कृतं कर्म्म द्विषतान्तु विनिग्रहे। १७४६०
विष्णुनाऽश्वशिरः प्राप्य तथाऽदित्यां निवस्यता। गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरं।
प्राप्य वामनरूपेण प्रच्छन्नं ब्रह्मरूपिणा। बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतं।
हुताशनेन यच्चापः प्रविश्य च्छन्नमासता। विबुधानां कृतं कर्म्म तच्च सर्व्वं श्रुतं त्वया।
प्रच्छन्नञ्चापि धर्म्मज्ञ हरिणाऽरिविनिग्रहे। वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतं।
और्व्वेण वसता च्छन्नमूरौ ब्रह्मर्षिणा तदा। यत्कृतं तात देवेषु कर्म्म तत्ते ऽनघ श्रुतं। १७४६५
एवं विवस्वता तात च्छन्नेनोत्तमतेजसा। निर्द्दग्धाः शत्रवः सर्व्वे वसता भुवि सर्व्वशः।
विष्णुना वसता चापि गृहे दशरथस्य वै। दशग्रीवो हतश्छन्नं संयुगे भीमकर्म्मणा।
एवमेव महात्मानः प्रच्छन्नास्तत्र तत्र ह। अजयञ्छात्रवान् युद्धे तथा त्वमपि जेष्यसि।
तथा धौम्येन धर्म्मज्ञो वाक्यैः संपरितोषितः। शास्त्रबुद्ध्या स्वबुद्ध्या च न चचाल युधिष्ठिरः।
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः। राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन्। १७४७०
अवेक्षया महाराज तव गाण्डीवधन्वना। धर्म्मानुगतया बुद्ध्या न किञ्चित् साहसं कृतं।
सहदेवो मया नित्यं नकुलश्च निवारितौ। शक्तौ विध्वंसने तेषां शत्रूणां भीमविक्रमौ।
न वयं तत्प्रहास्यामो यस्मिन् योक्ष्यति नो भवान्। भवान् विधत्तां तत् सर्व्वं क्षिप्रं जेष्यामहे रिपून्।
इत्युक्ते भीमसेनेन ब्राह्मणाः परमाशिषः। प्रयुज्यापृच्छ्य भरतान् यथा स्वान् स्वान् ययुर्गृहान्।
सर्व्वे वेदविदो मुख्या यतयो मुनयस्तथा। आसेदुस्ते यथान्यायं पुनर्दर्शनकाङ्क्षया। १७४७५
सह धौम्येन विद्वांसस्तथा पञ्च च पाण्डवाः। उत्थाय प्रययुर्वीराः कृष्णामादाय धन्विनः।
क्रोशमात्रमुपागम्य तस्माद्देशान्निमित्ततः। श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः।
पृथक्शास्त्रविदः सर्व्वे सर्व्वे मन्त्रविशारदाः। सन्धिविग्रहकालज्ञा मन्त्राय समुपाविशन्।
इति श्रीमहाभारते आरण्यपर्व्वणि आरणेयपर्व्वणि अज्ञातवासोद्योगे चतुर्द्दशाधिकत्रिशततोऽध्यायः ॥
समाप्तमारणेयं पर्व्व आरण्यपर्व्व समाप्तञ्च ॥ ३१४ ॥ यद्यपि वनपर्व्वणि एकोनसप्तत्यधिकद्विशताध्यायाः
पूर्व्वं संग्रहाध्याये लिखितास्तथापि लिपिकरप्रमादादध्यायवृद्धिर्जाता कुत्र वृद्धिर्न तन्निश्चयो भवतीति ज्ञेयं ॥

---